# ॥ प्रासादवास्तुमंडल चतुःषष्टिपद ॥

पू.

ईशानायनमः ६१ | इंद्रायनमः ५४ | अग्नयेनमः ५५

चरक्यैनमः ४६ | स्कंदायनमः ५० | विदार्यैनमः ४७

शिखिनेनमः १ / दित्यैनमः ३२

२ पर्जन्यायनमः

३ जयंतायनमः

४ कुलिशायुधायनमः

५ सूर्यायनमः

६ सत्यायनमः

७ भृशायनमः

८ आकाशाय० / ९ वायवेनमः

१० पूष्णेनमः

११ वितथायनमः

१२ गृहक्षतायनमः

१३ यमायनमः

१४ गंधर्वायनमः

१५ भृंगराजायनमः

मृगायनमः १६ / पितृभ्योनमः १७

१८ दौवारिकायनमः

१९ सुग्रीवायनमः

२० पुष्पदंतायनमः

२१ वरुणायनमः

२२ असुरायनमः

२३ शोषायनमः

पापायनमः २४ / रोगायनमः २५

२६ अहयेनमः

२७ मुख्यायनमः

२८ भल्लाटायनमः

२९ सोमायनमः

३० सर्पायनमः

३१ अदित्यैनमः

आपायनमः ३३ / आपवत्साय नमः ३४

सावित्रायनमः ३५ / सावित्रेनमः ३६

३७ अर्यम्णेनमः

३८ विवस्वतेनमः

जयायनमः ३९ / विबुधाधिपायनमः ४०

४१ मित्रायनमः

राजयक्ष्मणेनं० ४२ / रुद्रायनमः ३५

४३ [illegible]रायनमः

पापराक्षस्यैनमः ४९ | जृंभकायनमः ५२ | पूतनायैनमः ४८

वायवेनमः | वरुणायनमः | निर्ऋतयेनमः

## ॥ द्वादशलिंगतोभद्रं हरिहरमंडलं ॥



# अथेदमीषत्प्रास्ताविकं प्रस्तूयते—

अतीन्द्रियमुनीश्वरप्रमुखमीडितं तापसैरनेकनिगमागमाखिलरहस्यसंवेदिनम् ।
विदेहजनकप्रभुप्रणतमूर्धवन्द्याङ्घ्रिकं नुमो धवलयाजुषाद्यगुरुयाज्ञवल्क्यं मुनिम् ॥ १ ॥

महीमण्डले प्रायो विदितमेव सामान्यजानपदैरपि शुक्लयजुर्वेदीयमाध्यन्दिनवाजसनेयशाखायाः प्रवक्ता ब्रह्मविद्याविन्मुनिजनसामन्तचक्रवर्ती श्रविष्ठत्वसद्यशोधवलीकृतभूमण्डल आचारव्यवहारादिसदाचाररहस्यप्रदीपो योगीश्वरो याज्ञवल्क्यो महर्षिरासीदिति । तस्य पुण्यश्लोकस्य महात्मनो महर्षेः शिष्यपरम्परायां कात्यायनोऽपरनाम पारस्करइत्यभिधानः प्रसिद्धोऽलौकिकतपोबलो महामुनिरभूत् । तेन वाजसनेयमाध्यन्दिनशाखिनां श्रौताग्नि-स्मार्ताग्निसाधनपद्धतिद्योतकानि सूत्राणि अष्टादशपरिशिष्टसूत्राणि चोपनिबद्धानि । तेषु स्मार्ताग्निविषयकसूत्रं गृह्यसूत्रमित्यभिधीयते । पारस्करगृह्यसूत्रानुरोधेनैवेदानीं वाजसनेयिनां गर्भाधानादिषोडशसंस्कारविधानानि प्रवर्तन्ते—“जन्मना जायते शूद्रः संस्कारैर्द्विज उच्यते । वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम् । कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च ॥” इत्यादिना गर्भाधानादिसंस्कारास्त्रैवर्णिकानां विशेषतो ब्राह्मणानां ब्रह्मवर्चोभ्युदयार्थं बुद्धिबलोत्कर्षायारोग्यसहितदीर्घायुष्ट्वसिद्ध्यर्थं पुरुषार्थचतुष्टयसंपादनमूलकैहिकामुष्मिकश्रेयःसुखावाप्त्या मनुजजन्मनः सार्थक्यलाभार्थं संस्काराणामत्यन्तावश्यकत्वमुक्तम् ।

परमपुण्यतमभारतखण्डमण्डलेऽभ्यर्हितविप्रान्ववायजनुषां न केवलसंस्कारसंस्करणेनैवालं किंत्वभ्युदयनिःश्रेयसापादकान्यन्यानिचाहरहरनुसवनमखिलैराचरणीयानि नित्य-नैमित्तिक-काम्यादिभेदविभिन्नानि महानुभावमहर्षिनिर्दिष्टानि तत्तच्छाखीयकर्माण्यप्यावश्यकान्येव । तानिच

श्रुतिस्मृतिधर्मशास्त्रप्रमाणप्रमितान्येव तत्तदालोडनपूर्वकं यथावदनुष्ठितानि भवन्ति सर्वेषां श्रेयसे, न पुनरश्रद्धावत्कर्तृकैः पुम्भिर्यथाकथंचिदप्रमाणपारितानीति न तिरोहितं सुधियाम् । तदर्थमेव च लोकोद्दिधीर्षाव्यसनैः परमकारुणिकैः श्रुत्यादिपारावारपारीणैर्नैकशो महानिबन्धा लघवश्च सप्रमाणाः प्रणीता दृश्यन्ते विश्वस्मिंस्तत्रतत्र । परं न ते सर्वैरपि सर्वे लभ्याः संग्राह्याश्चेति सत्स्वपि तेषु तदलाभनिदानभूता आपत्तिस्तावत्सुस्थैवेतिकृत्वा केषांचित्कर्मकाण्डास्तिकवराणां नितरां कर्मस्वादराङ्कुरोद्गमेऽपि तत्प्रतिपादकप्रमाणभूतनिबन्धाऽलाभाच्छ्रेयोजनकेष्वपि नानाविधेषु कर्मसूदासते क्लिश्यन्ति च । माध्यन्दिनशाखिनस्तु सुतराम् । विश्वग्विसृत्वरायामप्यस्यां शाखायां बहुत्र विसृमराणामपि तदध्येतृमहाशयानामवश्यानुष्ठेयाऽखिलकर्मकाण्डनिर्वाहकः सप्रमाणकः कृत्स्नविप्रसंघसंग्राह्यश्च कोऽपि निबन्धोऽद्यत्वे नोपलभ्यते । अतस्तादृशो ग्रन्थः प्रणेयः प्रकाशनीयश्चेति चिरायास्मदन्तःकरणेऽङ्कुरः समारुरोह बहुवारम् । परं नैःस्व्येनाहर्दिवं दुष्पूरसंसारयात्रातिवाहनव्यापृतिपारवश्यादालस्याच्चान्तःकरणविरूढोपि हेतुः "उत्पद्यन्ते विलीयन्ते दरिद्राणां मनोरथाः" इति प्राचीनानुभवसिद्धवाक्यानुगुणमन्तःकरण एवैतावन्तं कालं विलीन आसीत् । निर्दिष्टापत्त्यादिना यत्किमप्यपि नाकरवम् ।

बह्वृचांतु तादृशाखिलकर्मकाण्डनिर्वाहकेषु सत्स्वप्यनेकशो विद्वत्प्रणीतेषु प्रमाणग्रन्थेषु स्वल्पमूल्यलभ्येन लघुनैकेनैव ग्रन्थसंग्रहेण प्रायोऽखिलयाज्ञिकसंघस्य सर्वांशेन चारितार्थ्यं भूयादिति कतिचनवत्सरेभ्यः पूर्वं विविधप्रमाणभूतग्रन्थेभ्यो विविधकुसुमाकरान्मधुलिडाहृतसारसंग्रहमिव विविधान्केवलप्रयोगानपूर्वशास्त्रार्थांश्चोद्धृत्य-आह्निकाचार-संस्कार-मिश्रा-न्त्येष्टीति चतुःप्रकरणविभागकल्पनेन तत्रतत्र तांस्तान्विषयान्सुव्यवस्थया संयोज्य ऋग्वेदब्रह्मकर्मसमुच्चयसंज्ञोऽभिनवो ग्रन्थो निर्णयसागराख्यमुद्रणालयसंस्थायामानङ्कि । सच सर्वविप्रवृन्दादरपात्रत्वेनाखिलसंग्राह्यत्वाद्भूयोभूयः पञ्चषोवारान्मुद्रितो मुद्येत चेतःपरमपि । हिरण्यकेशीयार्थमप्यन्यस्तादृश एवापूर्वो ग्रन्थोऽङ्कितस्तेन चाङ्कयिता तज्जन्यलाभेन तत्तद्विप्रप्रदत्ताशीर्भिः परं मोदमुदिर आसीदात्मानं धन्यंमन्यश्च ।

अथैतदुभयवर्गीयब्राह्मणनिकरैः सबहुमानमभीक्ष्णं प्रशंसितं धरामण्डले सर्वत्र विसृमरमभिनवं निबन्धद्वयमालोच्याऽहमदनगरादिनानापुरवासिभिः शुक्लयजुर्माध्यन्दिनशाखीयैः सप्रश्रयानुनयं "यथा श्रीमद्भिस्तत्रभवद्भिः समुच्चयात्मकनिबन्धद्वयमुद्रणेनोपकृतं तथैव माध्यन्दिनवाजसनेयार्थमपरो बहुलसंग्रहो ग्रन्थः सप्रमाणो मुद्रितश्चेत्तर्हि माध्यन्दिनमहीवृन्दारकोपरि बहूपकृतं स्यादथ चानेनोपकारकव्यापारेण भवतामपि महाँल्लाभो भवेदिति विज्ञापितेन मुम्बापुरस्थनिर्णयसागराङ्कनालयाधिपेन श्रीमता तुकाराम जावजीइत्यभिधानेन श्रेष्ठिना, तदीयमुद्रणालयगतसंस्कृतनिबन्धशोधनाधिकृतेन विद्वद्वरेण पणशीकरोपाह्ववासुदेवशास्त्रिणा च वर्षत्रयात्पूर्वमस्मिन्स्वीयप्रारिप्सितकर्मणि प्रेरितोऽहं कार्यबाहुल्यादवसराभावेऽपि स्वीयचिरन्तनहृच्छयस्य फलेग्रहिः समयोऽयमीशकृपयाऽनायासेन समापतित इति तदीयप्रार्थनां सबहुमानमूरीकृत्य शनैः शनैस्तादृशनिबन्धगुम्भनोपकारकान्—कातीयश्रौतसूत्रम्, पारस्करगृह्यसूत्रम्, कर्कभाष्यम्, रेणुकारिकाः, काशीदीक्षितभाष्यम्, वासुदेवीपद्धतिं, हरिहरभाष्यम्, गदाधरभाष्यम्, अनन्तदेव-देवयाज्ञिक-मिश्रभाष्यम्, रुद्रकल्पद्रुमं, निर्णयसिन्धुं, धर्मनौकां, श्रीमद्देवीभागवतं, मन्त्रमहोदधिं, प्रवरमञ्जर्यादिगोत्रप्रवरनिर्णयान्, उवट-महीधर-सायनाचार्यभाष्याणि, अन्त्येष्टिपद्धतिं, संन्यासपद्धतिं चेत्याद्यनेकप्राचीननिबन्धानालोच्य विचार्य, तद्बहिर्भूतानपि नानाविधकर्मस्वावश्यकान्कांश्चित्प्रयोगान् शास्त्रार्थांश्चैकीकृत्य शुक्लयजुर्वेदमाध्यन्दिनशाखीयकर्मप्रदीपनामानं परिभाषा-संस्कार-स्वाह्निकाचार-मिश्रा-न्त्येष्टीति पञ्चप्रकरणात्मकं प्रत्यग्रममुं निबन्धमरीरचम् ।

अत्र निबन्धे तत्तत्प्रकरणानुगुणा अलभ्याः शास्त्रार्था महतायासेन संपाद्य यावद्बुद्धिबलं परिशोध्य परिष्कृत्य चात्र संयोजिताः सन्ति । तत्रतत्रोपस्थितबहुलशास्त्रार्थसमावेशनेन संकल्पादधिकपिचण्डिलेऽस्मिन्ग्रन्थेऽवश्यसंग्राह्या जननशान्त्यादिप्रयोगाः सुरप्रतिष्ठाङ्गोपाङ्गविस्तरो विविधसुरपूजापुरश्चरणानुष्ठानाद्या बहवः प्रयोगा अवशिष्टा विद्यन्ते येऽस्मिन्प्रथमावर्तने विस्तरभियाऽलब्धावसरास्तेऽप्यस्य परिशिष्टरूपेण पृथगनुपदमेवानयैव परिपाट्या मुद्रिताः स्युरिति परं विश्वसिमो यत्संग्रहे प्रायो याज्ञिकद्विजवर्यैप्सिता अनेके विषयाःप्रकाशनेन सुलभीकृताःस्युः ।

अभ्यर्थये चाखिलविदुषः सविनयं मामकीने नवीनेऽस्मिन् निबन्धनिबन्धनपरिकरसाहसेपि यथाकथंचित्प्रयोगादिनिवेशनपूर्वापरीभावेन क्वचिद्व्यत्यासे लब्धग्रन्थानामप्यशुद्धिवैपुल्यादस्मद्दृग्दोषान्मतिमान्द्याच्चोर्वरितानि स्खलितानि चेत्तत्रभवतां विपश्चितां दृष्टिसरणिमापतेयुस्तर्हि निर्मत्सरानसूयं संशोध्य करुणार्द्रदृशा मांप्रति निवेदनीयानि । येनेशानुकम्पया पुनरस्याङ्कनावसरलाभेऽशुद्धिसूचकविद्वन्नामनिर्देशपुरःसरं संशोधितानि स्युरहमपि संशोधयेयेति ।

एतन्निबन्धसंबन्धिविषयेषु सुहृत्तया कृतसाहाय्यानां वेदशास्त्रपारावारपारीणानां नासिकक्षेत्रस्थ नारायणदेव घनपाठी तथा पुण्यपत्तनस्थ श्रीधरशास्त्री पाहोळकर–प्रभृत्यनेकविदुषां महत उपकारानभीक्ष्णं स्मरामि । तन्मध्ये विशेषतो मुम्बापुरस्थनिर्णयसागरतः प्रचार्यमाणसंस्कृतग्रन्थशोधनाधिकृतेन पणशीकरोपाह्वविद्वद्वरलक्ष्मणशर्मसूनुना वासुदेवशास्त्रिणा, तथाच श्रीमच्छिवगंगापीठाधीश्वरश्रीमच्छङ्कराचार्यैर्दत्त "धर्मकार्यधुरंधर" पदवीसमलंकृतेन गोदातटनिकटवर्तिनासिकक्षेत्रस्थेन आंग्लभौमभाषाकोविदत्वाद्भिन्नव्यवसायिनापि सनातनधर्मीयसद्विद्योत्कर्षाभिमानिना शौचे इत्युपनामकेन आबाजीशर्मणः सूनुना गोविन्दाभिधेन प्रकृतनिबन्धान्तर्गतप्रकरणानां संस्करणादिषु प्रत्यवसरं सोत्कण्ठं सुष्ठु साहाय्यं दत्वा ममोपरि बहूपकृतं तदियत्तां वक्तुं नाहं समर्थोऽस्मि ।

गुणदोषौ बुधो गृह्णन्निन्दुक्ष्वेडाविवेश्वरः । शिरसा श्लाघते पूर्वं परं कण्ठे नियच्छति ॥ १ ॥

इति मुहुरेकदा विद्वद्वर्यप्रार्थनां कृत्वा यत्किंचित्प्रस्तावः परिसमाप्यतेऽत्रेति शम् ।

विद्वद्वशंवदः वारे इत्युपनामक आत्याजीशर्मणः सूनुः वैदिकतिलकपदसंभूषितः

**अण्णाशास्त्री ।**

# शुक्लयजुःशाखीयकर्मकाण्डप्रदीपस्थविषयक्रमः ।

## आह्निकाचारप्रकरणम् ॥३॥

# शुक्लयजुर्वेदकर्मप्रदीपगतमन्त्रकोशः ।

# ॥ शुक्लयजुःशाखीयकर्मकाण्डप्रदीपः ॥

## परिभाषाप्रकरणम् ॥ १ ॥

श्रीगणेशाय नमः ॥ ॐनमः श्रीवेदपुरुषाय ॥ मङ्गलमुपोद्घातश्च ॥ व्याप्तं यद्भुवनत्रयस्थिरचरान्तर्वस्तुजातेऽपि यत्ख्यातं पञ्चवटीकृतास्पदमिति श्रीनासिके गौतमी ॥ यत्सान्निध्यवशादलं जनिमतां भोगापवर्गप्रदा मूर्ताऽऽस्ते समुपास्महे किमपि तद्रामाभिधानं महः ॥ १ ॥ प्रारम्भे कुलदेवतामपि महालक्ष्मीयुतां रेणुकां भक्ताभीष्टकरीं मतिस्मृतियशोर्थायुःपरानन्ददाम् ॥ प्रत्यूहौघविदारणक्षममथो द्वैमातुरं शारदां सूर्यं शुक्लयजुःप्रवर्तकमृषिं श्रीयाज्ञवल्क्यं नुमः ॥ २ ॥ नत्वा कात्यायनर्ष्यादीन्नूत्नोऽयं तन्यतेऽधुना ॥ वाजिमाध्यन्दिनीशाखिब्रह्मकर्मसमुच्चयः ॥ ३ ॥ पुराणमित्येव न साधु सर्वं नूत्नं गुणाढ्यं किमु नाऽदरार्हम् ॥ यद्यस्ति नूत्नेऽपि हि दोषलेशो न गृह्यते शैवलतः किमम्बु ॥४॥ ग्रन्थेषु सत्स्वपि बहुप्रतनेषु कोऽयमाडम्बरो नवकृताविति चेद्वदामः ॥ कस्तेषु भूरिविषयः सुलभोऽखिलानां दृग्गोचरीभवति नो किमु चेद्गुणाढ्यः ॥ ५ ॥ मीमांसाधर्मशास्त्रक्रतुविधिनिपुणाः प्राक्तनैर्ये निबन्धैरच्छिद्रं पारयन्ति स्वमतिविभवतस्तत्कृते नैष यत्नः ॥ हीना ये प्राङ्निबन्धैरतिलघुधिषणाः साधितुं कर्मकाण्डमिच्छन्त्यद्धा तदर्थं विविधविधियुतो ग्रथ्यते संग्रहोऽयम् ॥ ६ ॥ क्रमोऽत्र परिभाषाथ संस्काराश्चाह्निकं ततः ॥ इष्टापूर्तं ततोऽन्त्येष्टिः संन्यासान्ता प्रयुज्यते ॥ ७ ॥

**अथ परिभाषा** ॥ ॥ **अथात्र वक्ष्यमाणानां सर्वेषामपि कर्मणाम्** ॥ **परिभाषानिघ्नसिद्धेस्तदर्थो दश्यते क्वचित्** ॥ १ ॥—स्नातः कुर्वीतोपवीती सर्वं कर्म पवित्रवान् ॥ आचान्तः पुनराचामेत्तिलकी बद्धचूडकः ॥ श्रद्धया कर्म कुर्वीत धौतवस्त्रधरो भवेत् ॥ अव्यग्रोऽलंकृतो मौनी दम्भासूयादिवर्जितः ॥ आपद्युक्तोऽपि शुद्धः सन्नेव कर्म समाचरेत् ॥ जपहोमादिषु नरमन्यं नाकारणात्स्पृशेत् ॥ अबुद्धिपूर्वसंस्पर्शश्चेत्तदा वार्युपस्पृशेत् ॥ बुद्धिपूर्वकसंस्पर्शे प्राणायामत्रयं चरेदित्यादि ॥ ॥ **तत्रादौ शुचित्वविचारः** ॥ सर्वत्र शुचिः कर्म समाचरेदित्युक्तं ॥ तत्र शुचित्वं तावदधिकारितावच्छेदकम् ॥ सदा कुर्याद्धर्मकार्यमापद्यपि शुचिर्नर इति **टोडरानन्दे ससर्षिस्मृतेः** ॥ श्रुतिस्मृत्युदितं कर्म न कुर्यादशुचिः क्वचिदिति **प्रयोगपारिजाते भृगूक्तेश्च** ॥ ॥ **शक्तितारतम्यम्** ॥ शक्तिश्चाधिकारिविशेषणम् ॥ आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणीति न्यायात् ॥ तदभावेऽन्येन करणीयम् षाष्ठन्यायात् ॥ **माधवीये बौधायनोऽपि**—यथाकथंचिन्नित्यानि शक्त्यवस्थानुरूपतः ॥ येनकेनापि कार्याणि नैव नित्यानि लोपयेदिति ॥ यथाकथंचित् केनचिदङ्गेन हीनानीत्यर्थः ॥ येनकेनापि स्वतः परतो वेत्यर्थः ॥ नित्यानीति नैमित्तिककाम्योपलक्षणम् ॥ नैमित्तिकस्याप्यकरणे प्रत्यवायात् ॥ समाप्तेः शास्त्रार्थत्वेन प्रारब्धं काम्यमपि नित्यायत इति षाष्ठन्यायात् ॥ आरम्भान्नियमो दोषश्चासमाप्तौ स्यात्सामान्यदर्शनाच्चेति **कात्यायनसूत्राच्च** ॥ ॥ **कर्मणि प्रतिनिधिविचारः** ॥ **यत्तु**—काम्ये प्रतिनिधिर्नास्ति नित्ये नैमित्तिके च स इति, तदनारब्धकाम्यपरम् । अन्येनाप्यसंभवे न दोषः ॥ **तदुक्तं माधवीये**—अत्यन्तरोगयुक्तेऽङ्गे राजचोरभयादिषु ॥ गुर्वग्निदेवकृत्येषु नित्यहानौ न पापभागिति ॥ अत्र नित्यपदेन न प्रारब्धकाम्यग्रहणं, औपदेशिकनित्यग्रहणेनैव सिद्धावातिदेशिकनित्यग्रहणे मानाभावात् ॥ ॥ **उपवासवता कर्तव्यानि** ॥ उपवासोऽप्यधिकारिविशेषणम् ॥ स्नानं संध्या तर्पणादि जपहोमामरार्चनम् ॥ उपवासवता कार्यं सायंसन्ध्याहुतीर्विनेति **वाराहात्** ॥

जलस्यापि नरश्रेष्ठ प्राशनाद्भेषजादृते ॥ नित्यक्रिया निवर्तेत काम्यनैमित्तिकैः सहेति **कालिकापुराणाच्च** ॥ **यत्तु**—इक्षुरापः पयो मूलं फलं ताम्बूलमौषधम् ॥ भक्षयित्वापि कुर्वीत स्नानदानादिकाः क्रियाः इति **चतुर्विंशतिमते स्मृत्यर्थसारे च** इक्ष्वादिपरिगणनं तदशक्तविषयं भक्षयित्वापीत्यपिशब्दादिति ॥

**स्नातस्यैव कर्माधिकारकथनम्** ॥ स्नानमप्यधिकारितावच्छेदकम् ॥ **तदुक्तम्**—स्नातोऽधिकारी भवति दैवे पित्र्ये च कर्मणि ॥ पवित्राणां तथा जाप्ये दाने च विधिचोदित इति ॥ पवित्राणि मन्त्राः । मन्त्रः पवित्रमुच्यत इति **निरुक्तात्** ॥ **आग्नेये**—स्नानानामपि सर्वेषां वारुणेन च मानवः ॥ कर्तुमर्हति कर्माणि विधिवत्सर्वदा द्विज इति ॥ **दानहेमाद्रौ वाराहेऽपि**—सुस्नातः सम्यगाचान्तः कृतसंध्यादिकक्रियः ॥ कामक्रोधविहीनश्च पाखण्डस्पर्शवर्जितः ॥ जितेन्द्रियः सत्यवादी सर्वकर्मसु शस्यत इति ॥ **मार्कण्डेयपुराणे**—शिरस्स्नातस्तु कुर्वीत दैवं पित्र्यमथापि वा ॥ प्राङ्मुखोदङ्मुखो[1] वापि श्मश्रुकर्म च कारयेदिति ॥ तत्रादौ श्मश्रुकर्म ततः स्नानम् । अन्यथाऽशुचित्वापत्त्या पुनः स्नानापत्तेः ॥

**अथ मङ्गलस्नानप्रकारः** ॥ तच्च स्नानं मङ्गलकृत्यादौ तिलामलकादिनोद्वर्त्याभ्यङ्गस्नानं वा कार्यम् । **आद्यकल्पस्तु रुद्रपद्धतौ परशुरामेणोक्तः**—ततः स्वगृहमागत्य मङ्गलस्नानमाचरेत् ॥ सर्वौषधीगन्धचूर्णयुक्तैः कृष्णतिलामलैः ॥ उद्वर्त्याङ्गानि तैलेन चम्पकादिसुगन्धिना ॥ माङ्गल्ये मङ्गलस्नानं कुर्वीत ब्राह्मणैः सहेति ॥ अत्र सर्वशब्दस्यौषधिगन्धचूर्णशब्देन कर्मधारयः ॥ सहैव दशभिः पुत्रैर्भारं वहति गर्दभी इत्यत्र गर्दभ्या भारवाहकत्वेन पुत्राणामिव ब्राह्मणानां साहित्यमात्रमेव न पुनस्तेषां कर्तृत्वम् ॥ **अन्यस्तु निर्णय-**

१ आर्षोऽयं संधिः प्राङ्मुखोदङ्मुख इति ।

**सिन्धौ कात्यायनेनोक्तः**—माङ्गल्यं विद्यते स्नानं वृद्धिपूर्वोत्सवेषु च ॥ स्नेहमात्रसमायुक्तं मध्याह्नात्प्राक्तदिष्यत इति ॥ **बृहन्नारदीये**—शिरोभ्यङ्गावशिष्टेन तैलेनाङ्गं न लेपयेदिति ॥ ॥ **सर्वगन्धास्तु मदनरत्ने**—कुङ्कुमागरुकर्पूरकस्तूरी चन्दनं तथा ॥ जातीफलमिति प्रोक्ताः सर्वगन्धाः सदा बुधैरिति ॥ **हेमाद्रौ गारुडे**—कर्पूरं चन्दनं दर्पः कुङ्कुमं च समांशकम् ॥ सर्वगन्धमिह प्रोक्तं समस्तसुरवल्लभमिति ॥ दर्पः कस्तूरी । इह स्नाने ॥

**अहतवासोधारणम्** ॥ अहतयोरधरीयोत्तरीययोः परिधानमप्यधिकारितावच्छेदकम् ॥ अधौते कारुधौते च परिदध्यान्न वाससी ॥ अहते तु परीदध्यात्सर्वकर्मसु संयत इति **हेमाद्रौ वाराहोक्तेः** ॥ **पारस्करगृह्येऽपि**—अहतं वासो धौतं वाऽमौत्रेणाच्छादयीत परिधास्या इत्यथोत्तरीयं यशसा मेत्येकं चेत्पूर्वस्योत्तरवर्गेण प्रच्छादयीतेति ॥ अमौत्रेण अरजकधौतेनेत्यर्थः ॥ ॥ **अहतवासोलक्षणमुक्तं स्मृतिरत्नावल्यां नागदेवाह्निके रेणुकारिकायां च कात्यायनेन**—ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम् ॥ अहतं तद्विजानीयात्सर्वकर्मसु पावनमिति ॥ ईषद्धौतं रजकादिना सकृद्धौतमिति **नागदेवाह्निके** व्याख्यातम् ॥ **कश्यपेन त्वन्यथोक्तम्**—अहतं यन्त्रनिर्मुक्तं वासः प्रोक्तं स्वयंभुवा ॥ शस्तं तन्माङ्गलिक्येषु तावत्कालं न सर्वदेति ॥ **अत्रैवं व्यवस्था**—विवाहादिमङ्गलकर्मसु यन्त्रनिर्मुक्तमेवाहतं ग्राह्यम् । शस्तं तन्माङ्गलिक्येषु तावत्कालमिति वदता तत्रैव तावत्कालं तस्य शस्तत्वाभिधानात् ॥ अन्यत्र यज्ञादौ त्वीषद्धौतमिति ॥ नच यज्ञादिकमपि माङ्गलिक्यमेवेत्याशङ्कनीयम् । विवाहोत्सवादेरैहिकसुखदस्याभ्युदयदस्यच माङ्गलिकत्वात् । यज्ञादेस्तु धर्मरूपादृष्टफलदत्वेन माङ्गलिकत्वाभावात् ॥ क्षौमे वस्तेऽहते पत्नी चेति सूत्रे श्रीमद्भिरनन्तयाज्ञिकैरप्येवमेव व्याख्यातम् ॥ **हेमाद्रौ वृद्धमनुः**—स्वयंधौतेन कर्तव्या क्रिया धर्म्या विपश्चिता ॥ नतु तेजकधौतेन

नोपभुक्तेन वा क्वचिदिति ॥ तेजको रजकः ॥ ॥ **धौतवासःप्रसारणप्रकारः** ॥ **व्रतहेमाद्रौ**—प्रागग्रमुदगग्रं वा धौतं वासः प्रसारयेत् ॥ पश्चिमाग्रं दक्षिणाग्रं पुनः प्रक्षालनाच्छुचीति ॥ **तत्रैव मार्कण्डेयः**—अन्यदेव भवेद्वासः शयनीये नराधिप ॥ अन्यद्रथ्यासु देवानामर्चायामन्यदेव हि ॥ अन्यच्च लोकयात्रायामन्यदीश्वरदर्शन इति ॥ ॥ **शाणक्षौमाविकादिवस्त्रविचारः** ॥ **योगियाज्ञवल्क्यः**—अभावे धौतवस्त्रस्य शाणक्षौमाविकानि च ॥ कुतपं योगपट्टं वा द्विवासा येन वै भवेदिति ॥ कुतपो नेपालकम्बलः ॥ ॥ **आर्द्रवस्त्रनिषेधः** ॥ **आपस्तम्बः**—आर्द्रवासास्तु यः कुर्याज्जपहोमप्रतिग्रहान् ॥ सर्वं तद्राक्षसं विद्याद्बहिर्जानु च यत्कृतम् ॥ यज्जले शुष्कवस्त्रेण स्थले चैवार्द्रवाससा ॥ जपो होमस्तथा दानं तत्सर्वं निष्फलं भवेदिति ॥ ॥ **काषायादिनिषेधः** ॥ **बौधायनः**—काषायवासाः कुरुते जपहोमप्रतिग्रहान् ॥ न तद्देवगमं कर्म हव्यकव्येष्वथो हविरिति ॥ भवेदिति शेषः ॥ **आचारादर्शे नरसिंहपुराणे**—न रक्तमुल्बणं वासो न नीलं च प्रशस्यते ॥ मलाक्तं च सदा हीनं वर्जयेदम्बरं बुध इति ॥ उल्बणं व्यक्तं । एतच्च रक्तविशेषणम् । नात्यन्तरक्तमित्यर्थः ॥ उल्बणमञ्चलमिति केचित् ॥ ॥ **निषिद्धवस्त्राण्याह व्याघ्रपादः**—काषायं कृष्णवस्त्रं वा मलिनं केशदूषितम् ॥ जीर्णं नीलं संधितं च पारक्यं मैथुने धृतम् ॥ छिन्नाग्रमुपवस्त्रं च कुत्सितं धर्मतो विदुरिति ॥ अयं च निषेधः सतिसंभवे बोध्यः ॥ **अतएवाह गौतमः**—सतिविभवे न जीर्णमलवद्वासाः स्यान्न रक्तमुल्बणमन्यधृतं वासो बिभृयादिति ॥ ॥ **एकवस्त्रनिषेधः** ॥ **व्याघ्रपादः**—नैकवस्त्रो द्विजः कुर्याद्भोजनं च सुरार्चनम् ॥ तत्सर्वमसुरेन्द्राणां ब्रह्मा भागमकल्पयदिति ॥ **विष्णुपुराणे**—होमे देवार्चनाद्यासु क्रियास्वाचमने तथा ॥ नैकवस्त्रः प्रवर्तेत द्विजवाचनके जप इति ॥ द्विजवाचनके द्विजस्वस्तिवाचनादौ ॥ ॥ **दक्षिणबाहूद्धारस्थलानि** ॥ **आपस्तम्बः**—देवागारे तथा श्राद्धे गवां गोष्ठे तथाऽध्वरे ॥

संध्ययोश्च द्वयोः साधुसंगमे गुरुसन्निधौ ॥ अग्न्यगारे विवाहे च स्वाध्याये भोजने तथा ॥ उद्धरेद्दक्षिणं पाणिं ब्राह्मणाना क्रियापथ इति ॥ उद्धरेद्दक्षिणं पाणिमिति सव्यांसे वस्त्रं निधाय दक्षिणं बाहुमुत्तरीयाद्बहिः कुर्यादित्यर्थः ॥ ॥ **एकवस्त्रलक्षणम्** ॥ **शातातपः**—सव्यादंसात्परिभ्रष्टकटिदेशधृताम्बरः ॥ एकवस्त्रं तु तं विद्याद्दैवे पित्र्ये च वर्जयेदिति ॥

**नीवीलक्षणं** ॥ **दानहेमाद्रौ श्लोकगौतमः**—स्नाने दाने जपे होमे दैवे पित्र्ये च कर्मणि ॥ बध्नीयान्नासुरीं कक्षां रोषकाले यथारुचि ॥ **तत्रैव याज्ञवल्क्यः**—परिधानाद्बहिः कक्षा निबद्धा चासुरी मता ॥ धर्मकर्मणि विद्वद्भिर्वर्जनीया प्रयत्नत इति ॥ बहिः-कक्षा बहिर्निर्गता कक्षेत्यर्थः ॥ कक्षा पश्चादञ्चलम् ॥ प्रान्तद्वयमित्यन्ये ॥ ॥ **त्रिकच्छलक्षणम्** ॥ **संग्रहे**—वामे पृष्ठे तथा नाभौ कच्छत्रयमुदाहृतम् ॥ त्रिभिः कच्छैः परिज्ञेयो विप्रो यः स शुचिर्भवेत् ॥ आदौ कच्छस्तथा नीवी नाभिमध्ये च वाससी ॥ नीवी दक्षिणतः स्थाप्या एतत्त्रिकच्छलक्षणम् ॥ ॥ **कर्मसु वर्ज्यवस्त्राणि**—शयनं चार्द्रपादेन शुष्कपादेन भोजनम् ॥ नोत्तरीयमधः कुर्याद्रात्रिवासस्तथा दिने ॥ कटिवेष्टयं तु यद्वस्त्रं पुरीषं येन वा कृतम् ॥ मूत्रमैथुनकृद्वस्त्रं धर्मकार्ये विवर्जयेदिति ॥

**मङ्गलतिलकलक्षणम्** ॥ मङ्गलतिलकश्चायं माङ्गलिकारम्भात् कृताभ्यङ्गस्नानस्य गोपीचन्दनभस्मादेरधार्यत्वात् गन्धकुङ्कुमकेशरसिन्दू-राद्यन्यतमेन माङ्गलिकद्रव्येण कार्यः ॥ **तदुक्तमाचाररत्ने हारीतेन**—अभ्यङ्गे सूतके चैव विवाहे पुत्रजन्मनि ॥ माङ्गल्येषु च सर्वेषु न धार्यं गोपिचन्दनमिति ॥ ॥ **मङ्गलद्रव्याण्यपि**—रोचनं चन्दनं गन्धं-इत्यादिकात्यायनपरिगणितेभ्यो ललाटधार्याण्येवात्र योज्यानि ॥ **मदनपारिजाते ब्रह्माण्डपुराणे तिलकं प्रक्रम्य**—[श्यामं शान्तिकरं प्रोक्तं रक्तं वश्यकरं तथा ॥ श्रीकरं पीतमित्याहुः श्वेतं मोक्ष-प्रदायकम् ॥ इति कामनाभेदेन व्यवस्था कृतास्ति । तत्र श्यामं मृगमदादेः । रक्तं कुङ्कुमसिन्दूरादेः । पीतं गोरोचनादेरित्याचाररत्नम् ॥]

**उपवीतित्वबद्धशिखित्वविचारः** ॥ उपवीतित्वं बद्धशिखित्वं चाधिकारिविशेषणम् ॥ **तथाच छन्दोगपरिशिष्टे कात्यायनः**—सदोपवीतिना भाव्यं सदा बद्धशिखेन च ॥ विशिखो व्युपवीतिश्च यत्करोति न तत्कृतमिति ॥ अनेन हि दधिखदिरादिवदुपवीतित्वस्य बद्धशिखित्वस्य च क्रतुपुरुषोभयार्थत्वमवगम्यते ॥ तेन विशिखेन व्युपवीतिना च कर्मणि क्रियमाणे कर्मणोऽपि वैगुण्यं भवति ॥ एवंच सति क्रतुपुरुषोभयार्थापचारप्रयुक्तं प्रायश्चित्तद्वयमत्र बोध्यम् ॥ **आचारादर्शे गोभिलः**—दक्षिणं बाहुमुद्धृत्य शिरोऽवधाय सव्येंऽसे प्रतिष्ठापयति दक्षिणं कक्षमनवलम्बं भवत्येवं यज्ञोपवीती भवति सव्यबाहुमुद्धृत्य शिरोवधाय दक्षिणेंऽसे प्रतिष्ठापयति सव्यं कक्षमनवलम्बं भवत्येवं प्राचीनावीती भवतीति ॥ **मनुः**—निवीती कण्ठसज्जन इति ॥ **हेमाद्रौ भरद्वाजः**—दक्षिणं बाहुमुद्धृत्य वामस्कन्धे निवेशितम् ॥ यज्ञोपवीतमित्युक्तं देवकार्येषु शस्यते ॥ कण्ठावलम्बितं चैव ब्रह्मसूत्रं यदा भवेत् ॥ तन्निवीतमिति ख्यातं शस्तं कर्मणि मानुषे ॥ उत्क्षिप्ते वामबाहौ तु दक्षिणस्कन्धमाश्रितम् ॥ प्राचीनावीतमित्युक्तं तत्पित्र्येष्वेव कर्मस्विति ॥ **निगमपरिशिष्टेऽपि**—वामस्कन्धकक्षयोरक्षणया यज्ञोपवीतं दैवे प्राचीनावीतमितरथा पितृयज्ञे । नाभ्यां द्विकण्ठासक्तमुत्सर्गे निवीतं पृष्ठे दशावलम्बि ग्राम्यधर्मेष्विति ॥ ग्राम्यधर्मः स्त्रीसंयोग इति **हेमाद्रिः** ॥ यत्र निवीतप्राचीनावीतयोर्न विधिः श्रूयते तत्र सर्वत्रोपवीतित्वमेव ॥ एवंच यत्र देवकार्योद्देशेनोपवीतित्वं श्रूयते तत्रापि दैवमुपलक्षणम् ॥ पितृमनुष्यकार्यातिरिक्तं सर्वमेव दैवमित्या**चारादर्शे** व्याख्यातम् ॥ ॥ **शूद्रस्योपवीतविचारः** ॥ उपवीतं द्विधा—नवसूत्रं संस्थानविशेषश्च ॥ तत्राद्यं शूद्रस्य नेत्युक्तं **मिताक्षरायाम्** ॥ अन्त्यं शूद्रस्यापि भवति ॥ उपवीतिना कर्म कर्तव्यमित्यस्य सर्वकर्मशेषत्वेन शूद्रस्याप्यदृष्टार्थे कर्मण्युपवीत्यवश्यंभावात् ॥ उपवीताद्युत्तरीयवस्त्रेणापीति **पारिजातकल्पतरू** ॥ **यत्तु शूद्रं प्रकृत्य**—न शिखी नोपवीती स्यान्नोच्चरेत्संस्कृतां गिरमिति **पाद्मं तदसच्छूद्रपरमकर्मकालपरं**

नवसूत्रपरं वा ॥ ॥ **यज्ञोपवीते क्षौमगोवालशाणादिभेदाः** ॥ **हरिहरभाष्ये देवलः**—कार्पासक्षौमगोवालशाणवल्कतृणादिकम् ॥ सदा संभवतो धार्यमुपवीतं द्विजातिभिरिति ॥ **गोभिलोऽपि**—यज्ञोपवीतं कुरुते सूत्रं वस्त्रं वापिवा कुशरज्जुं वेति ॥ **बौधायनः**—कौशं सौत्रं त्रिस्त्रिवृतमानाभेरिति ॥ कौशं कृमिकोशोत्थं त्रसरपदसूत्रादिमयम् । सौत्रं कार्पासम् । त्रिस्त्रिवृतं नवगुणं त्रिसरीकृतमित्यर्थः ॥ नव वै त्रिवृदिति श्रुतेः ॥ तच्च सूत्रं कार्पासं कौशेयं वा ब्राह्मणस्य ॥ **तथाच मनुः**—कार्पासमुपवीतं स्याद्विप्रस्योर्ध्ववृतं त्रिवृत् ॥ शणसूत्रमयं राज्ञो वैश्यस्याविकसूत्रकमिति ॥ यत्तु **हरिहरभाष्योदाहृतं देवलवचनं** तत्पूर्वासंभवे उत्तरोत्तरविधानार्थम् ॥ **छन्दोगपरिशिष्टे कात्यायनः**—त्रिवृदूर्ध्ववृतं कार्यं तन्तुत्रयमधोवृतम् ॥ त्रिवृतं चोपवीतं स्यात्तस्यैको ग्रन्थिरिष्यत इति ॥ **ऊर्ध्ववृतमाह संग्रहकारः**—करेण दक्षिणेनोर्ध्वं गतेन त्रिगुणीकृतम् ॥ वलितं मानवैः सूत्रं शास्त्रे ऊर्ध्ववृतं स्मृतमिति ॥ वामावर्तं त्रिगुणं कृत्वा प्रदक्षिणावर्तं नवगुणं विधाय तदेव त्रिसरं कृत्वा ग्रन्थिमेकं विदध्यात् ॥ **यत्तु**—यज्ञोपवीतं कुर्वीत सूत्राणि नवतन्तवः ॥ एकेन ग्रन्थिना तन्तुर्द्विगुणस्त्रिगुणोऽथवेति ॥ सच द्विगुणो द्विसरस्त्रिसराऽसंभवे ज्ञेय इत्युक्तं **नारायणवृत्तौ** ॥ **यच्च पैठीनसिवचनं**—कार्पासमुपवीतं षट्तन्तु त्रिवृतं ब्राह्मणस्य क्षौमेयं राजन्यस्य आविकं वैश्यस्येति तदपि नवतन्त्वसंभवे तन्तुषट्कं विधत्ते ॥ त्रिवृतं त्रिसरमित्यर्थः ॥ अथवा नवगुणत्रिसरद्वयेन षड्रज्जुकमित्यर्थः ॥ क्षौमेयमतसीभवम् ॥ अत्रच कुशसरगोवालादिषु न त्रिगुणत्रिसरादिनियमः ॥ सूत्रएव तन्नियमोपदेशात् ॥ अवघातादयस्तु व्रीहिधर्मत्वात्तत्कार्यकारिष्वपि विधेयाः ॥ अत्र त्रिगुणत्रिसरादेर्यज्ञोपवीतान्तर्गतत्वेऽपि न तद्धर्मत्वमिति व्यक्तं **नारायणवृत्तौ** ॥

**यज्ञोपवीतकरणप्रकारः** ॥ **यज्ञोपवीतरचनाप्रकारस्तु स्मृत्यर्थसारे हरिहरभाष्ये च**—शुचौ देशे शुचिः सूत्रं संह-

ताङ्गुलिमूलके ॥ आवेष्टय षण्णवत्या तत्रिगुणीकृत्य यत्नतः ॥ अब्लिङ्गकैस्त्रिभिः सम्यक्प्रक्षाल्योर्ध्ववृतं च तत् ॥ अप्रदक्षिणमावृत्तं सावित्र्या त्रिगुणीकृतम् ॥ अधः प्रदक्षिणावृत्तं समं स्यान्नवसूत्रकम् ॥ त्रिरावेष्टय दृढं बध्वा हरिब्रह्मेश्वरान्नमेत् ॥ यज्ञोपवीतं परमं पवित्रमिति धारयेत् ॥ सूत्रं सलोमकं चेत्स्यात्ततः कृत्वा विलोमकम् ॥ सावित्र्या दशकृत्वोऽद्भिर्मन्त्रिताभिस्तदुक्षयेत् ॥ त्रिश्छिन्नं वाप्यधोयातं भुक्त्वा निर्मितमुत्सृजेत् ॥ अनध्यायेऽपराह्णे च ब्रह्मसूत्रं न तद्भवेदिति ॥ ॥ **यज्ञोपवीतस्य परिमाणान्तरमप्युक्तं स्मृत्यर्थसारे** ॥ **यद्वेत्युपक्रम्य छन्दोगपरिशिष्टे कात्यायनः**—पृष्ठवंशे च नाभ्यां च धृतं यद्विन्दते कटिम् ॥ तद्धार्यमुपवीतं स्यान्नातो लम्बं नचोच्छ्रितमिति ॥ वामस्कन्धे कृतं नाभिपृष्ठवंशयोर्धृतं सद्यथा कटिपर्यन्तं प्राप्नोति तावत्परिमाणं कर्तव्यमित्यर्थः ॥ नातो लम्बं नचोच्छ्रितमित्यस्य त्वयमर्थः—अतोऽस्मादुक्तान्मानादुच्छ्रितं ह्रस्वमिति यावत् ॥ अस्मिन्पक्षे न षण्णवत्या आवेष्टनं किंतु यावता उक्तमानमुपवीतं संपद्यते तादृशं सूत्रमानं कल्पनीयम् ॥ **अत्राह नारायणवृत्तिकृत्**—एतच्च गोभिलीयानां कात्यायनानां च । अन्येषां तु—स्तनादूर्ध्वमधो नाभेर्न धार्यं तत्कथंचनेति **देवलोक्तं** प्रमाणमिति ॥ यज्ञोपवीतमानाभेरिति **बौधायनोक्तस्या**प्येषैव व्यवस्था ॥

**यज्ञोपवीतस्य कण्ठादुत्तारणनिषेधं प्रक्षालनार्थं च शाखाविशेषेण तदपवादं चाह भृगुः**—मन्त्रपूतं स्थितं काये यस्य यज्ञोपवीतकम् ॥ नोद्धरेच्च ततः प्राज्ञो य इच्छेच्छ्रेय आत्मनः ॥ सकृदुत्तारणात्तस्य प्रायश्चित्ती भवेद्द्विजः ॥ तैत्तिरीयाः कठाः काण्वाश्चरका वाजसनेयिनः ॥ कण्ठादुत्तार्य सूत्रं तु कुर्युर्वै क्षालनं द्विजाः ॥ बह्वृचाः सामगाश्चैव ये चान्ये यजुःशाखिनः ॥ कण्ठादुत्तार्य सूत्रं तु पुनरर्हन्ति सत्क्रियामिति ॥ पुनःसंस्क्रिया मन्त्रेणोपवीतान्तरधारणमेव ॥ अभ्यङ्गे चोदधिस्नाने मातापित्रोर्मृतेऽहनि ॥ कण्ठादुत्तार्य सूत्रं तु कुर्युर्वै क्षालनं द्विजा इति ॥ एतद्वाक्यबोधितविषयेष्वेवोक्तव्यवस्था बोध्या ॥ **केचित्तु** नित्यस्नानविधौ विहितयज्ञोपवीतप्रक्षालनविषये

इयं व्यवस्थेत्याहुः । एतच्च सूत्रमयोपवीतं वस्त्रोपवीताभावे ज्ञेयम् ॥ **तदुक्तं निगमपरिशिष्टे**—वाससा यज्ञोपवीतानि कुर्यात्तदभावे त्रिवृता सूत्रेण कुशमुञ्जवालप्रतिसरारज्जुभिर्वा इति ॥ वालोत्र देवलवचनात् ॥ **नारायणवृत्तौ वसिष्ठः**—स्नातकानां हि नित्यं स्यादन्तर्वासस्तथोत्तरम् ॥ यज्ञोपवीते द्वे यष्टिः सोदकश्च कमण्डलुरिति ॥ **हरिहरभाष्ये**—ब्रह्मचारिण एकं स्यात्स्नातस्य द्वे बहूनि वा ॥ तृतीयमुत्तरीयार्थे वस्त्राभावे तदिष्यत इति ॥ एतच्च वस्त्रोत्तरीयाभावे तृतीयोपवीतधारणं कर्माङ्गम् ॥ बहूनि वेति तु काम्यम् ॥ बहूनि चायुःकामस्येति **देवलोक्तेः** ॥ **विश्वामित्रः**—यज्ञोपवीते द्वे धार्ये श्रौते स्मार्ते च कर्मणि ॥ तृतीयमुत्तरीयार्थे वस्त्राभावे तदिष्यत इति ॥ अत्र यद्यपि तृतीयोपवीतधारणमुत्तरीयकार्थे विधानादुत्तरीयमन्त्रेण प्रतिभाति तथापि–मन्त्रेणैव स्मृतं कर्म कर्तव्यमभिधानात्प्रकृते च मन्त्रस्योपवीतधारणस्यैव स्मरणीयत्वादुपवीतमन्त्रेणैव युक्तम् ॥ तृतीयमुत्तरीयार्थे इत्येतावतैवानुकल्पत्वे सिद्धे वस्त्राभाव इत्युक्तिरुत्तरीयाभाव एवानुकल्पत्वार्थेति न तृतीये धृते उत्तरीयलाभे तदपि धार्यमिति केचित् । तन्नेत्यन्ये । एकस्यैव कदाचिदनुकल्पत्वे प्राधान्ये च विरोधात् ॥ **वृद्धास्त्वाहुः**—उत्तरीयस्य सर्वकर्मार्थत्वात्प्रतिकर्मधारणानुपपत्तेस्तदुपवीतवत्सर्वार्थं सकृदेव धार्यम् । एवं तृतीयोपवीतमपि ॥ तदङ्गीकारेण कर्मविशेषारम्भोत्तरं मुख्योत्तरीयलाभेऽपि तद्ग्रहणं षाष्ठन्यायात् ॥ कर्मानारम्भे तु तृतीयसत्वेऽपि तद्ग्रहणम् । नच तृतीयत्यागापत्तिः । सर्वार्थत्वेन धृतत्वात् । उत्तरीयस्य सर्वदा सत्वासंभवादिति युक्तमुत्पश्यामः ॥ शिष्टाचारोऽप्येवम् । तृतीयमुत्तरीयार्थे एकं तु प्रथमाश्रमीति **मदनपारिजाते पाठः** ॥ **पारस्करगृह्ये**—एकं चेत्पूर्वस्योत्तरवर्गेण प्रच्छादयीतेति ॥ एकवस्त्रत्वेनोत्तरार्धस्योत्तरीयत्वेनोपादाने–यशसामेत्युत्तरीयमन्त्रः प्रवर्तत एव क्रियान्तरत्वात् ॥ **जातूकर्ण्यः**—वस्त्रोत्तरीयाभावे द्व्यङ्गुलं त्र्यङ्गुलं चतुरङ्गुलं वा सूत्रैः परिमण्डलं कुर्यादिति ॥

**शिखाबन्धविचारः** ॥ शिखाबन्धस्तु दक्षिणपार्श्वे कार्यः ॥ **तदुक्तं चतुर्विंशतिमते**—मध्ये तु बह्वृचाश्चैव निबध्नीयुः शिखां ततः ॥ माध्यन्दिनाश्च ये विप्राः पार्श्वे दक्षिणतः क्रमात् ॥ वामपार्श्वे च बध्नीयुर्ये विप्राः सामगायिन इति ॥ माध्यन्दिनग्रहणं वाजसनेयिमात्रोपलक्षणम् । यत्तु कात्यायनेन शिखाबन्धस्य पुरुषार्थत्वं कर्मार्थत्वं च स्मर्यते तत्प्रायश्चित्तद्वयार्थमनृतवदनवन्न तु शिखाबन्धद्वयं यज्ञोपवीतेऽपि भेदापत्तेरित्युक्तं **प्रयोगरत्ने नारायणभट्टैः** ॥ **वर्धमानोऽप्येवम्** ॥ एतेन प्रतिकर्म शिखाबन्धः परास्तः ॥ यत्तु कुशोपग्रहो बद्धशिखो यज्ञोपवीत्याचम्येति **कात्यायनेन** स्नानकाले शिखाबन्धनमुक्तं तद्दैवान्मानुषाद्वा मुक्तशिखस्य बन्धनार्थं नतु विमुच्य बन्धनीयेत्येतदर्थमित्युक्तम**ाचारादर्शे** ॥ शूद्रस्य त्वनियताः केशा इति **वसिष्ठोक्तेः** शिखाविकल्पः । सच सदसच्छूद्रविषयत्वेन व्यवस्थित इति शिखाबन्धेऽपि विकल्प इति **शूद्राचारशिरोमणिः** ॥ **कर्मकौमुद्यां तु**—अकर्मकाले शूद्रस्य न शिखाबन्धनियम इत्युक्तम् ॥ सर्वेषां शिरसि यत्र क्वचित्केशसत्वे तत्रैव शिखाबन्धः ॥ ॥ **खल्वाटत्वेन सर्वथा केशाभावे विशेष उक्तः काठकगृह्ये**—अथ चेत्प्रमादान्न शिखा स्यात्तदा कौशीं शिखां ब्रह्मग्रन्थियुतां दक्षिणकर्णे निदध्यादिति ॥ ॥ **शिखाभिन्नकेशानामपि कर्मकाले बन्धः** ॥ **तदाह वृद्धवसिष्ठः**—मुक्तकेशैर्न कर्तव्यं प्रेतस्नानं विना क्वचित् ॥ स्नानं दानं जपं होमं मुक्तकेशैर्न कारयेदिति ॥ नच पूर्वार्धे प्रेतस्नानभिन्नस्नान एव मुक्तकेशत्वनिषेधः । उत्तरार्धे स्नानपदवैयर्थ्यापत्तेः ॥ स्नाने तदनुवादे दानादौ तद्विधौ वैरूप्यापत्तेः ॥ उत्तरार्धे एव सर्वत्र मुक्तकेशत्वनिषेधे वाक्यभेदापत्तेः पूर्वार्धवैयर्थ्यापत्तेश्च ॥ नच प्रेतस्नानपर्युदासार्थं पूर्वार्धं आद्यपादवैयर्थ्यापातात् ॥ तेनोत्तरार्धैकवाक्यतया प्रेतस्नानान्यकर्मसु मुक्तकेशत्वं निषिध्यत इति ॥

**अथासनविचारः** ॥ **तत्र हेमाद्रौ कौशिकः**—कुशासनं सदा पूतं यतीनां तु विशेषतः ॥ कुशासनोपविष्टस्य सिध्यते योग

उत्तम इति ॥ **विष्णुपुराणे**—कुशोपरि निविष्टेन तथा यज्ञोपवीतिना ॥ सर्वं कर्म प्रकर्तव्यमन्यथा विफलं भवेदिति ॥ कुशोपरि निविष्टेनेति कुशासनोपादानं कर्मार्हासनोपलक्षणम् ॥ ॥ **आसनान्याह श्राद्धकारिकायां स्मृतिकारः**—शमीकाश्मर्यशल्लाश्च कदम्बो वारणस्तथा ॥ पञ्चासनानि शस्तानि श्राद्धे देवार्चने तथेति ॥ श्राद्धे देवार्चने इति दैवपित्र्यकर्ममात्रोपलक्षणम् ॥ ॥ **प्रौढपादनिषेधः** ॥ **दानहेमाद्रौ शाङ्खायनः**—दानमाचमनं होमं भोजनं देवतार्चनम् ॥ प्रौढपादो न कुर्वीत स्वाध्यायं पितृतर्पणम् ॥ आसनारूढपादस्तु जान्वोर्वा जङ्घयोस्तथा ॥ कृतावसक्थिको यस्तु प्रौढपादः स उच्यत इति ॥ ॥ **आसनोपकरणवस्तूनि** ॥ **व्यासः**—कौशेयं कम्बलं चैव अजिनं पट्टमेव च ॥ दारुजं तालपत्रं वा आसनं परिकल्पयेदिति ॥ **कालिकापुराणे**—चतुर्विंशत्यङ्गुलैस्तु दैर्घ्यं काष्ठासने मतम् ॥ षोडशाङ्गुलविस्तीर्णमुत्सेधे चतुरङ्गुलम् ॥ पञ्चाङ्गुलं वा कुर्यात्तु नोच्छ्रितं कारयेत्ततः ॥ आसने वस्त्रं द्विहस्तान्नो दीर्घं सार्धहस्तान्न विस्तृतं कार्यम् । त्र्यङ्गुलं तु तथोच्छ्रायं पूजाकर्मणि संश्रयेत् ॥ सर्वेषां तैजसानां च आसनं श्रेष्ठमुच्यत इति ॥ **भद्रासनप्रकारः**—क्वचिद्भद्रासन उपविश्येत्यपि दृश्यते । भद्रासनशब्दश्चानर्घमण्यादिखचितनृपासनवाचकः । तस्यच सर्वेषामसुलभत्वात्तथासनाभावापत्तेर्नृपासनवद्यावच्छक्यं सर्वतः शोभनमासनं विधेयमिति प्रतीयत इति ॥

**पवित्रधारणप्रकारः** ॥ मन्त्रेण पवित्रधारणं चाधिकारितावच्छेदकम् ॥ **तदुक्तं प्रयोगपारिजाते**—मन्त्रेण धारयेद्विप्रः पवित्रं सर्वकर्मसु ॥ मन्त्रं विना धृतं यत्तु पवित्रमफलं भवेत् ॥ **हेमाद्रावत्रिः**—उभाभ्यामेव पाणिभ्यां विप्रैर्दर्भपवित्रके ॥ धारणीये प्रयत्नेन ब्रह्मग्रन्थिसमन्विते ॥ ब्रह्मयज्ञे जपे चैव ब्रह्मग्रन्थिर्विधीयते ॥ भोजने वर्तुलः प्रोक्त एवं धर्मो न हीयत इति ॥ ॥ **वृत्तग्रन्थिमत्पवित्रलक्षणमुक्तं गारुडे**—अर्ध प्रदक्षिणीकृत्य शिखायां संप्रवेशयेत् ॥ वैष्णवेनैव मार्गेण वृत्तग्रन्थौ पवित्रक इति ॥ वैष्णवो मार्गः

पश्चाद्भागः ॥ द्विगुणीकृतानां दर्भशिखानां पाशः प्रदक्षिणमर्धावेष्टनं विधाय पश्चाद्भागेन यदा प्रवेश्यते तदा वर्तुलो ग्रन्थिरित्यर्थः ॥ ॥ **ब्रह्मग्रन्थिमत्पवित्रलक्षणमपि तत्रैवोक्तम्**—संत्यज्य वैष्णवं मार्गं ब्रह्ममार्गविनिःसृतम् ॥ सकृत्प्रदक्षिणीकृत्य पवित्रमभिधीयते ॥ तद्ब्रह्मग्रन्थिमत्प्रोक्तं पवित्रं वेदवादिभिरिति ॥ पवित्रकर्तुरभिमुखप्रदेशो ब्रह्ममार्गः ॥ यदा स एव पाशः प्रादक्षिण्येन समग्रवेष्टन विधाय पुरोभागेन प्रवेश्यते तदा ब्रह्मग्रन्थिरित्यर्थः ॥ ॥ **पवित्रदर्भशिखासंख्यापि तत्रैवोक्ता**—सप्तभिर्दर्भपिञ्जूलैः कुर्याद्ब्राह्मं पवित्रकम् ॥ पञ्चभिः क्षत्रियस्यैव चतुर्भिस्तु तथा विशः ॥ द्वाभ्यां शूद्रस्य विहितमन्तराणां तथैवचेति ॥ **मार्कण्डेयस्तु**—चतुर्भिर्दर्भपिञ्जूलैर्ब्राह्मणस्य पवित्रकम् ॥ एकैकन्यूनमुद्दिष्टं वर्णे वर्णे यथाक्रमम् ॥ सर्वेषां वा भवेद्द्वाभ्यां पवित्रं ग्रन्थितं नवेत्याह ॥ एतच्च संख्याविशिष्टं पवित्रलक्षणं ग्रन्थिमत्पवित्रपक्षे ॥ तदभावपक्षेतु—अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेवच ॥ प्रादेशमात्रं विज्ञेयं पवित्रं यत्रकुत्रचिदिति **छन्दोगपरिशिष्टे कात्यायनोक्तं** लक्षणं ज्ञयेम् ॥ द्विदलमखण्डैकपत्रात्मकमित्यर्थः ॥ केचिद्द्विदलं पत्रद्वयात्मकमिति व्याचक्षते तत् पवित्रे करोति कुशौ समावप्रशीर्णाग्रावनन्तर्गर्भौ कुशैश्छिनत्ति पवित्रेस्थ इति **शतपथश्रुतिकात्यायनसूत्रकर्कदेवभाष्या**द्यखिलग्रन्थविरुद्धमित्युपेक्षणीयम् ॥ **हारीतः**—आचामेत्प्रयतो नित्यं पवित्रेण द्विजोत्तमः ॥ नैवोच्छिष्टं भवेत्तच्च भुक्तशेषं तु वर्जयेदिति ॥ पवित्रेण सह पवित्रयुक्तपाणिरित्यर्थः ॥ ॥ **पवित्रत्यागहेतवः**—येनतु पवित्रेण सह भोजनं कृतं तदेवोच्छिष्टतया त्याज्यं नान्यत् ॥ एतच्च ग्रन्थिरहितपवित्रविषयम् । न ब्रह्मग्रन्थिनाऽऽचामेदिति **हेमाद्रावादित्यस्मरणात्** ॥ एतच्च शुचेराचामतो वेदितव्यं प्रयत इति वचनात् ॥ अन्येतु कर्माङ्गाचमनविषयमेतदित्याहुः ॥ **तथाच हेमाद्रौ कात्यायनः**—सपवित्रः सदर्भो वा कर्माङ्गे पितृकर्मणि ॥ अशून्यं तु करं कृत्वा सर्वत्राचमनं चरेत् ॥ नोच्छिष्टं तत्सदर्भश्च भुक्तोच्छिष्टं तु वर्जयेदिति ॥ अत्र पवित्रशब्देन ग्रन्थिमत्प-

वित्रमित्येके ॥ ॥ **ग्रन्थिविमोकेन पवित्रत्यागः** ॥ **प्रयोगपारिजाते**—नित्ये नैमित्तिके वापि कर्मोपक्रमणे द्विजः ॥ धृतं पवित्रं कर्मान्ते ग्रन्थिं मुक्त्वा तु तत्त्यजेदिति ॥ **हेमाद्रौ शातातपः**—जपे होमे तथा दाने स्वाध्याये पितृतर्पणे ॥ अशून्यं तु करं कुर्यात्सुवर्णरजतैः कुशैरिति ॥ **तत्रैव कश्यपः**—स्नाने होमे जपे दाने स्वाध्याये पितृतर्पणे ॥ सपवित्रौ सदर्भौ वा करौ कुर्वीत नान्यथेति ॥ उभावपि करौ सपवित्रौ सदर्भौ वा कर्माङ्गत्वेन संपादनीयौ ॥ अत्र करयोः पवित्रवत्ता च ग्रन्थिमद्भ्यामग्रन्थिमद्भ्यां वा पवित्राभ्यामित्येकः पक्षः ॥ द्वौ दर्भौ दक्षिणे हस्ते सव्ये त्रीनासने सकृदिति वचनोक्तरीत्या च सदर्भता **इति द्वितीयः** ॥ सव्ये पाणौ कुशान्कृत्वा कुर्यादाचमनक्रियाम् ॥ सव्यः सोपग्रहः कार्यो दक्षिणः सपवित्रक इति **कात्यायनोक्तेः** सव्ये पाणौ त्रीन्कुशान्दक्षिणे पवित्रं धारयेदिति **तृतीयः** ॥ ॥ **स्वर्णपवित्रलक्षणं तत्प्रशंसाच**—सर्वाण्येव पवित्राणि कुशकाशमयानिच ॥ तानि हेमपवित्रस्य कलां नार्हन्ति षोडशीमिति ॥ इदंच शास्त्रीयपञ्चगुञ्जारूपमाषमानेन षोडशमाषमितमशीतिगुञ्जात्मकं ब्रह्मग्रन्थियुतं धार्यं न न्यूनाधिकमिति प्रमाणविदः ॥

॥ **अयातयामवस्तूनि** ॥ **हेमाद्रौ गृह्यपरिशिष्टे**—दर्भाः कृष्णाजिनं मन्त्रा ब्राह्मणा हविरग्नयः ॥ अयातयामान्येतानि नियोज्यानि पुनःपुनरिति ॥ यातयामत्वं अनेकत्र प्रयोगानर्हत्वम् ॥ अयातयामत्वं तु एकत्र विनियुक्तस्याप्यनेकक्रियान्तरोपयोगयोग्यत्वम् ॥ हविरत्राज्यमेव । नाज्यादशेषादिति **कात्यायनेनाज्यस्य** शेषत्वाभावप्रतिपादनेन यातयामत्वाभावात् पुनःपुनर्विनियोज्यत्वस्य तत्रैव सत्वात् ॥ पुरोडाशौदनादेस्तु शेषत्वेन पर्युषितत्वेन च यातयामत्वात्पुनःपुनर्विनियोज्यत्वस्यासंभवात् कोशादावाज्यनामसु हविश्शब्दपरामर्शाच्च ॥ ॥ **दर्भग्रहणकालः** ॥ **अत्र दर्भाणामयातयामत्वं तु नभोमासीयामावास्यागृहीतदर्भविषयम् । तदाह हारीत**—मासे नभस्यमावास्या तस्यां दर्भोच्चयो मतः ॥ अयातयामास्ते दर्भा नियोक्तव्याः पुनःपुनरिति ॥ नभाः श्रावणः । अमा अमावास्यान्तमा-

सेनैव बोद्धव्या । ततश्चैते उपयुक्ता अप्यपवादवर्जं क्रियान्तरेऽपि पुनःपुनरुपयोज्याः । कालान्तरगृहीतास्तु एकत्र विनियुक्ताश्चेद्यातयामत्वात्क्रियान्तरेषु न विनियोज्याः ॥ ॥ **त्याज्या दर्भाः** ॥ **अत्रापवादमाह हेमाद्रौ लघुहारीतः**—चितौ दर्भाः पथि दर्भा ये दर्भा यज्ञभूमिषु ॥ स्तरणासनपिण्डेषु षट् कुशान्परिवर्जयेत् ॥ पिण्डार्थं ये धृता दर्भा यैः कृतं पितृतर्पणम् ॥ मूत्रोच्छिष्टधृता ये च तेषां त्यागो विधीयते ॥ नीवीमध्येषु ये दर्भा ब्रह्मसूत्रे च ये कृताः ॥ पवित्रांस्तान्विजानीयाद्यथा कायस्तथा कुशा इति ॥ **गृह्यपरिशिष्टेऽपि**—अमेध्यलिप्ता ये दर्भास्तेषां त्यागो विधीयत इति ॥

**दर्भलक्षणं हेमाद्रौ कौशिकेनोक्तम्**—सप्तपत्राः शुभा दर्भास्तिलक्षेत्रसमुद्भवाः ॥ ते प्रशस्ता द्विजातीनां दैवे पित्र्ये च कर्मणि ॥ अप्रसूताः स्मृता दर्भाः प्रसूतास्तु कुशाः स्मृताः ॥ समूलाः कुतपाः प्रोक्ताश्छिन्नाग्रास्तृणसंज्ञिताः इति ॥ अप्रसूता असंजातप्रसवाः अपुष्पिता इत्यर्थः ॥ ॥ **रत्निप्रमाणताच दर्भाणाम्**—रत्निमात्राः प्रमाणेन पितृतीर्थेन संस्तृता इति **छन्दोगपरिशिष्टे कात्यायनोक्तेः** ॥ एतच्च पिण्डाधस्तरणार्थानामेव ॥ **तदुक्तं वायुपुराणे**—रत्निप्रमाणाः शस्ता वै पितृतीर्थेन संस्तृताः ॥ उपमूले तथा लूनाः प्रस्तरार्थे कुशोत्तमा इति ॥ कृतमुष्टिहस्तो रत्निः ॥ **अन्येषां तु गोकर्णप्रमाणता** ॥ **तदुक्तं ब्रह्मपुराणे**—हरिताश्च सपिञ्जूलाः स्निग्धाः पुष्टाः समा हिताः ॥ गोकर्णदीर्घास्तु कुशाः सकृच्छिन्नाः समूलका इति ॥ गोकर्णपरिमाणंतु दशाङ्गुलप्रमाणं प्रादेशसंज्ञं । प्रादेशतालगोकर्णा इत्यभिधानकोशप्रतिपादितम् ॥

**अथाचमनविचारः** ॥ आचमनं चाधिकारितावच्छेदकम् ॥ **तदुक्तं मार्कण्डेयेन**—देवार्चनादिकार्याणि तथा गुर्वभिवादनम् ॥ कुर्वीत सम्यगाचम्य प्रयतोऽपि सदा द्विज इति ॥ आचान्तस्य प्रयतस्यापि कर्मारम्भप्रयुक्तमाचमनमनेनोक्तं भवति ॥ **अथाचमन-**

प्रयोगः ॥ बद्धशिख उपवीती प्राङ्मुख उदङ्मुख ऐशान्यभिमुखो वा आजानुक्षालितपादयुग्म आमणिबन्धं प्रक्षालितहस्तद्वयो येनकेनापि सिद्धद्विवासा अन्तरूर्वोररत्नीकृत्वा शुचौ देशेऽप्रसारितसमस्थितपादयुगः सुमनास्तन्मनाः प्रणतो भूमिष्ठपादोऽनासनस्थो भुक्त्वासनस्थोऽपि अजलस्थो जानूर्ध्वजले तिष्ठन्वा अनपावृतशिरःकण्ठः केशनीव्यधःकायधरणीरस्पृशन् तत्स्पर्शेतु प्रक्षालितहस्तः अजल्पन्नहसन्नगच्छन्नप्रौढपादः कमप्यस्पृशन्नचलन् क्वचिदप्यनावर्जितदेहो दिश आत्मानं चावलोकयन्नरथ्यास्थोऽत्वरो वामहस्तास्पृष्टमफेनमविवर्णमविरसमदुर्गन्धि अबुद्बुदं शूद्राशुच्येकपाण्यनावर्जितं वर्षधारातिरिक्तं पादप्रक्षालनशेषातिरिक्तं उच्छेषं चेत्तदा भूमिस्राविताग्रं अक्षिप्रोक्षणार्थजलशेषातिरिक्तं हस्तेनालोलितं अप्रदरप्रभवं प्रदरप्रभवमपि गोतृप्तिक्षमं अतप्तं रोगिणस्तप्तमपि अकलुषं घनाङ्गुलिना गोकर्णाकृतिना दक्षिणहस्तेन त्रिश्चतुर्वा ब्राह्मेण क्षतादिना तदवरोधे कायेन तदवरोधे दैवेन ब्राह्मणो हृद्गामि क्षत्रियः कण्ठगामि वैश्यस्तालुगामि जलमाचामेत् ॥ शूद्रः सर्वैरेवच त्रिर्मुखाभ्यन्तरप्राप्तिक्षमं यथोक्तमेव जलं सकृदाचामेत् ॥ ततः संवृतश्यावान्ताधरोष्ठं मुखमङ्गुष्ठमूलेन द्विःपरिमृज्य पाणिं प्रक्षाल्य तर्जनीमध्यमानामिकाभिस्ताद्दशमेव मुखमोष्ठश्मश्रुतोधःश्यावादुपरि द्विरुपस्पृश्य पुनः पाणी प्रक्षाल्य वामपाणिं पादौ शिरश्चाभ्युक्ष्य तर्जन्यङ्गुष्ठाभ्यां सोदकाभ्यां नासापुटे ततोऽङ्गुष्ठानामिकाभ्यां सोदकाभ्यामक्षिणी । [ छन्दोगश्चेत्तदादावक्षिणी इति विशेषः ] । परिमार्जनोपस्पर्शनयोर्मध्ये पाण्याद्यभ्युक्षणमिति च विशेषः ॥ ततोऽङ्गुष्ठानामिकाभ्यां श्रोत्रे । ततः कनिष्ठाङ्गुष्ठाभ्यां नाभिं स्पृष्ट्वा पाणिं प्रक्षाल्य करतलेन हृदयं सर्वाङ्गुलीभिः शिर अङ्गुल्यग्रेणांसद्वयं स्पृशेत् ॥ ततः शेषं जलं किंचिद्वामहस्ते देयम् ॥ इतीदमाचमनं ॥ **द्विराचमने** तु पादप्रक्षालनवर्जमखिलमावर्तते ॥ भोजनोपक्रमाचमने सकृदेवौष्ठस्पर्शः ॥ तथा द्विजातीनामपि पुनराचमने ओष्ठस्पर्शमात्रं प्रत्युपस्पृश्यात्ततः शुचिर्भवतीति **गोभिलगृह्या**दिति केचित् ॥ इत्याचमनप्रयोगः ॥ ॥ **गौणाचमनम्** ॥

अशक्तौ त्रिःपीत्वा हस्तौ प्रक्षाल्य मुखं प्रमृज्य खानि स्पृशेत् ॥ अत्यशक्तौ हि त्रिःपीत्वा हस्तं प्रक्षाल्य श्रोत्रं स्पृशेदिति ॥ अत्र मूलं **मिताक्षरायां स्मृत्यर्थसारे आचारादर्शे आचारचिन्तामणौ** च ज्ञेयम् ॥

**प्राणायामविचारः** ॥ प्राणायामश्चाधिकारिताविशेषणम् ॥ **तदाह वृद्धमनुः**—प्राणानायम्य कुर्वीत सर्वकर्माण्यसंयतः ॥ प्राणायामैस्त्रिभिः पूतस्तत ॐकारमर्हतीति ॥ ॥ **प्राणायामलक्षणं छन्दोगपरिशिष्टे कात्यायनेनाभिहितम्**—भूराद्यास्तिस्र एवैता महाव्याहृतयोऽव्ययाः ॥ महर्जनस्तपः सत्यं गायत्री च शिरस्तथा ॥ आपोज्योतीरसोऽमृतं ब्रह्मभूर्भुवःस्वरिति शिरः ॥ प्रतिप्रतीकं प्रणवमुच्चारयेदन्ते च शिरसः ॥ एता एतां सहानेन तथैभिर्दशभिः सह ॥ त्रिर्जपेदायतप्राणः प्राणायामः स उच्यत इति ॥ **अस्यार्थः**—मुक्तिफलकत्वादव्ययाः । एताः सप्त व्याहृतयः । एतां गायत्रीं । अनेन शिरसा सह । तथैभिर्दशभिः प्रणवैः सह । आयतप्राणो निरुद्धप्राणस्त्रिर्जपेदिति ॥ अयमेकः प्राणायाम इत्यर्थः ॥ **योगियाज्ञवल्क्योऽपि**—सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ॥ त्रिःपठेदायतप्राणः प्राणायामः स उच्यत इति ॥ **कूर्मपुराणे ईश्वरगीतासु**—प्राणः स्वदेहजो वायुरायामस्तन्निरोधनमिति ॥ **दाल्भ्यपरिशिष्टे**—ब्रह्मयज्ञो जपो होमो देवर्षिपितृकर्म च ॥ अनोंकृत्य कृतं सर्वं न भवेत्सिद्धिकारकमिति ॥ **शाट्यायनोऽपि**—दानयज्ञतपःस्वाध्यायजपध्यानसंध्योपासनप्राणायामहोमदैवपित्र्यमन्त्रोच्चारणब्रह्मारम्भादीनि प्रणवमुच्चार्य प्रवर्तयेदिति ॥ अतश्च मन्त्रमात्रोच्चारणे आदावोंकारः कार्य इति सर्वानुक्रमसूत्रभाष्ये ॥ केचित्तु प्रवर्तयेदिति वचनात्प्रारम्भ एव युक्तः ॥ ॥ **प्राणायामे प्रणवोच्चारव्यवस्था** ॥ **तथाच छन्दोगपरिशिष्टे कात्यायनः**—नोंकुर्याद्धोममन्त्राणां पृथगादिषु कुत्रचित् ॥ अन्येषां च विकृष्टानां कालेनाचमनादिनेति ॥ **अस्यार्थः**—**गोभिलगृह्यप्रसिद्धषडाहुतिविंशत्याहुतिमन्त्रेषु** प्रतिमन्त्रमादौ ॐकारप्रयोगं क्वचिदपि न कुर्यात् किंतु प्रथ-

ममेव ॥ अन्येषां जपाद्यर्थानां रुद्राध्यायादीनां मध्ये अप्रायत्ये सति आचमनादिना काले ॐकारेण सह व्यवधानेनाचमनानन्तरं पठ्यमानस्य मन्त्रस्यादावोंकारप्रयोगः कर्तव्यः ॥ होममन्त्रेष्वेवं व्यवधाने ॐकारः कर्तव्य एवेति ॥ अतएव शाखान्तरीया न कुर्वन्तीत्याहुः ॥ **सच त्रिमात्रः** ॥ तादृशस्यैव विनियोगात् ॥ **मदनरत्ने व्यासः**—त्रिमात्रस्तु प्रयोक्तव्यः कर्मारम्भेषु सर्वश इति ॥ ॐमित्यधिकृत्य **आपस्तम्बोऽपि**—त्रिमात्रस्तु प्रयोक्तव्यः कर्मारम्भेषु सर्वदेति ॥ अस्य पृथग्विधत्वान्मन्त्रेण सह न सन्धिः । पृथग्विधाने सह सन्धिर्न भवतीत्युपपादितं त्विषिमान्भूयासमिति सूत्रे **कर्कोपाध्यायैः** ॥ अध्याहारस्य तु लौकिकत्वान्मन्त्रेण सह संध्यभाव इत्यपि प्रतिपादितं पशुं पूर्वं ऌसमनक्तीत्यधिकृत्य सन्त इति प्रतिमन्त्रप्रतिसूत्रे **कर्कोपाध्यायैः** ॥

**ऋषिच्छन्दोदेवताविचारः** ॥ **दानहेमाद्रौ मदनरत्ने च याज्ञवल्क्यः**—आर्षं छन्दश्च दैवत्यं विनियोगस्तथैव च ॥ वेदितव्यं प्रयत्नेन ब्राह्मणेन विशेषतः ॥ अविदित्वा तु यः कुर्याद्याजनाध्ययनं जपम् ॥ होममन्तर्जलादीनि तस्य चाल्पं फलं भवेदिति ॥ ब्राह्मणं च विशेषत इति **मदनरत्ने दानकाण्डे पाठः** ॥ **तथा**—यश्च जानाति तत्त्वेन आर्षं छन्दश्च दैवतम् ॥ विनियोगं ब्राह्मणं च मन्त्रार्थज्ञानमेव च ॥ एकैकस्य ऋषेः सोऽपि वन्द्यो ह्यतिथिवद्भवेत् ॥ एकैकस्य ऋषेः एकैकस्य मन्त्रस्येत्यर्थः ॥ देवतायाश्च सायुज्यं गच्छत्यत्र न संशयः ॥ पूर्वोक्तेन प्रकारेण ऋष्यादीन्वेत्ति यो द्विजः ॥ अधिकारो भवेत्तस्य रहस्यादिषु कर्मसु ॥ ॥ **आर्षच्छन्दोदैवतनिर्वचनम्** ॥ येन यन्त्रर्षिणा दृष्टं सिद्धिः प्राप्ता च येन वै ॥ मन्त्रेण तस्य तत्प्रोक्तमृषेर्भावस्तदार्षकम् ॥ छादनाच्छन्द उद्दिष्टं वाससी इव चाकृतेः ॥ आत्मा संछादितो देवैर्मृत्योर्भीतैस्तु वै पुरा ॥ आदित्यैर्वसुभी रुद्रैस्तेन छन्दांसि तानि वै ॥ यस्य यस्य तु मन्त्रस्य उद्दिष्टा देवता तु या ॥ तदाकारं भवेत्तस्य देवत्वं देवतोच्यते ॥ पुराकल्पे समुत्पन्ना मन्त्राः कर्मार्थमेव च ॥ अनेन चेदं कर्तव्यं विनियोगः

स उच्यते ॥ तैरुक्तं यच्च मन्त्रस्य विनियोगप्रयोजनम् ॥ प्रतिष्ठानं स्तुतिश्चैव ब्राह्मणं तदिहोच्यते ॥ एवं पञ्चविधं योगं जपकाले ह्यनुस्मरेत् ॥ होमे चान्तर्जले योगे स्वाध्याये योजने तथेति ॥ **सर्वानुक्रमसूत्रे कात्यायनोऽपि**—ऋषिदैवतच्छन्दांस्यनुक्रमिष्याम इति प्रकृत्याह—एतान्यविदित्वा योऽधीतेऽनुब्रूते जपति जुहोति यजते याजयते वा तस्य ब्रह्म निर्वीर्यं यातयामं भवत्यथान्तरा श्वगर्तं वा पद्यते स्थाणुं वर्च्छति प्रमीयते वा पापीयान्भवत्यथ विज्ञायैतानि योऽधीते तस्य वीर्यवत्तरं भवति जपति हुत्वेष्ट्वा तत्फलेन युज्यत इति ॥ अत्र ऋषिच्छन्दोदैवतेत्येव क्रमः स्वीकार्यः ॥ आर्षं छन्दश्च दैवत्यं विनियोगस्तथैवच ॥ वेदितव्यं प्रयत्नेन ब्राह्मणेन विशेषत इति वाक्ये वेदितव्यमिति विधिस्थानीयतव्यप्रत्ययश्रवणात् । अत्र हि ऋष्यादिज्ञानपदार्थः कर्तव्यतया विधीयते ॥ तस्मिंश्च विधीयमाने पाठानुपूर्व्यावगम्यमानः क्रमोऽपि तदाश्रितो विधीयते ॥ क्रमान्तरपरिग्रहे विनिगमनाविरहात् ॥ **यत्तु कात्यायनेन**—ऋषिदैवतच्छन्दांस्यनुक्रमिष्याम इति सर्वानुक्रमसूत्रे ऋषिदैवतच्छन्दांसीति क्रम उक्तः स न ज्ञानार्थत्वेन किंतु अनुक्रमिष्याम इत्युक्तेरनुक्रमार्थत्वेन वेदितव्य इतिवदत्र ऋष्यादिज्ञानकर्तव्यतायाः साक्षाद्विध्यश्रवणात् क्लृप्तकल्प्ययोर्मध्ये क्लृप्तविधेरेव बलीयस्त्वाच्च ॥ **अतएव योगियाज्ञवल्क्येन**—प्रजापतेर्मुखोत्पन्नस्तपःसिद्धस्य वै पुरा ॥ तेनोपात्तस्ततस्तस्य ब्रह्मार्षं च स्वयंभुवः ॥ गायत्री च भवेच्छन्दो ह्यग्निर्दैवतमुच्यते ॥ आदौ सर्वत्र युञ्जीत विविधेष्वपि कर्मस्वित्यादिना प्रणवव्याहृत्यादिमन्त्राणामृषिश्छन्दोदेवता इत्यनेनैव क्रमेणार्षादिकमभिहितम् ॥ **गृह्यगङ्गाधरपद्धतावपि**—ऋषिमादौ प्रयुञ्जीत छन्दो मध्ये नियोजयेत् ॥ देवतामवसाने च मन्त्रज्ञो मन्त्रसिद्धय इति ॥ एतेन ऋषिदैवतच्छन्दांसीतिक्रमं वदन्तो देवयाज्ञिकादयः परास्ताः ॥ **आचारादर्शे योगियाज्ञवल्क्यः** संध्यामधिकृत्याघमर्षणसूक्तस्याऽपोहिष्ठेति सूक्तस्य द्रुपदायाश्च ऋष्यादिकमभिधायाह—एवं ज्ञात्वा तु मन्त्राणां प्रयोगं वै द्विजोत्तमाः ॥ संध्यामुपासयेद्यद्वद्यथावत्तन्निबोधतेति ॥ अत्रच संध्या-

ग्रहणं कर्ममात्रोपलक्षणार्थम् । पूर्वोक्तकात्यायनयोगियाज्ञवल्क्यवचनैकवाक्यतया तथैवावगमात् ॥ **अत्र केचिदाहुः**—सर्वेषामेव मन्त्राणामादावृष्यादीनि स्मृत्वा ततः संध्याप्रयोग इति । तन्नातीव युक्तम् । एवंह्यङ्गभूतेन ऋष्यादिस्मरणेन सह सर्वेषां मन्त्राणामानन्तर्यं न्यायगतं बोध्यते ॥ ॐकारस्य ससव्याहृतीनां गायत्र्याः शिरसश्च ऋष्यादीनि स्थलान्तरे **योगियाज्ञवल्क्येना**भिहितानीति कथं न तत्पूर्वभावः ॥ **किंच**—अघमर्षणसूक्तस्य ऋष्यादेः प्रथममभिधानात्तदेव प्रथमं स्यात् । तस्माज्ज्ञात्वेति प्रयोगाद्बहिर्ज्ञानं प्रयोगकालसौकर्यार्थं ॥ अथवा ज्ञात्वोपासयेदिति प्रत्येकमभिसंबध्यते । तेन तन्मन्त्रस्य ऋष्यादिकं तत्तन्मन्त्रप्रयोगात्प्राग्ज्ञातव्यमित्यर्थः सिध्यति ॥ अयमेव पक्षो बहुसंमतः ॥ ॥ **अनेकमन्त्राणामप्येकस्मिन्सह विनियोगे ऋष्यादिव्यवस्था** ॥ प्रणवव्याहृतिशिरसां च मिलितानामेव प्राणायामे विनियोगात्तेषां च मिलितानामेव ऋष्यादिकं स्मृत्वा प्राणायामः कार्यः ॥ अन्यत्रापि यत्रैकस्यां क्रियायामनेकमन्त्राणां विनियोगस्तत्राप्येवमेव रुद्रजपरुद्राभिषेकादौ । एवं पञ्चविधं योगमिति ब्राह्मणान्तर्भावेन पञ्चविधत्वं प्रकारान्तरं अधिकफलार्थं वा । आर्षं छन्दश्च दैवत्यं विनियोगस्तथैव चेत्यादिनानास्थानेषु चतुर्णामेवाभिधानात् ॥ एवं ज्ञात्वा तु मन्त्राणामिति **योगियाज्ञवल्क्येन** ऋष्यादिज्ञानस्यैवाङ्गत्वाभिधानादर्थज्ञानवत्तज्ज्ञानमेवाङ्गं न तु ऋष्याद्युच्चारणं मानाभावादसंबद्धव्यवायापत्तेश्चेत्युक्त**माचारचिन्तामणौ वाचस्पतिमिश्रैः** ॥ इदंच ऋष्यादिस्मरणं यत्र मन्त्रे प्रामाणिकं ततः प्राक् प्रयोग एव कर्तव्यम् ॥ ॥ **आर्षादेर्वैकल्पिकत्वम्** ॥ इदंच ऋष्यादिज्ञानं वैकल्पिकम् ॥ एतान्यविदित्वेत्युपक्रम्य तस्य ब्रह्म निर्वीर्यं यातयामं भवतीत्युक्तत्वात् ॥ अथ विज्ञायैतानि योऽधीते तस्य वीर्यवदित्युक्तेः सर्वमेतच्छन्दोदैवतमार्षं च विज्ञाय यत्किंचिज्जपहोमादि करोति स तस्य फलमश्नुते इत्युक्तेश्चेति दर्शपूर्णमासपद्धतौ तट्टीकायां च वैद्यनाथमिश्राः ॥ **प्राच्यग्रन्थेतु**—अध्ययनाध्यापनान्तर्जलजपेषु नियमः । अन्यत्र पुरुषार्थता न

कर्मवैगुण्यमिति दर्शपूर्णमासपद्धतिवैद्यनाथमिश्रटीकायाम् ॥ अतएव कृष्णभट्टीये—नच स्मरेदृषिच्छन्दः श्राद्धे वैतानिके मखे ॥ अग्निहोत्रे वैश्वदेवे विवाहादिविधौ तथेत्युक्तम् ॥

**आदौ नारायणनत्यादि** ॥ नारायणनतिश्चाधिकारिताविशेषणम् ॥ **तदुक्तं वामनपुराणे**—सर्वमङ्गलमङ्गल्यं वरेण्यं वरदं विभुम् ॥ नारायणं नमस्कृत्य सर्वकर्माणि कारयेदिति ॥ नारायणग्रहणं गणेशोमामहेश्वराद्युपलक्षणम् । कारयेदिति स्वार्थे णिच् ॥ नारायणेष्टदेवतोच्चारणक्रमस्त्वग्रे प्रयोगे दर्शयिष्यते ॥

**संकल्पविचारः** ॥ **मार्कण्डेयपुराणे**—संकल्प्य विधिवत्कुर्यात्स्नानदानव्रतादिकमित्युक्तम् । तत्र कृतसंध्येन कृतसंकल्पत्वमप्यधिकारितावच्छेदकम् ॥ **तिथितत्वे भविष्ये**—संकल्पेन विना विप्र यत्किंचित्कुरुते नरः ॥ फलं चाल्पाल्पकं तस्य धर्मस्यार्धक्षयो भवेदिति ॥ **संवत्सरप्रदीपे दक्षः**—प्रातःसंध्यां ततः कृत्वा संकल्पं बुध आचरेत् ॥ संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ॥ यदन्यत्कुरुते कर्म न तस्य फलमश्नुत इति ॥ संकल्पशब्देनेदं कर्मामुकफलार्थमहं करिष्य इत्याकारकं मानसं कर्मोच्यते ॥ **तदुक्तं भट्टाचार्यैः**—संकल्पः कर्म मानसमिति ॥ ॥ **अनेकदिनसाध्ये कर्मणि तिथ्याद्यूहनिर्णयः** ॥ **तत्र विशेषमाह देवलः**—मासपक्षतिथीनां च निमित्तानां च सर्वशः ॥ उल्लेखनमकुर्वाणो न तस्य फलभाग्भवेदिति ॥ असौ च संकल्पः केवलमदृष्टार्थएव नानुसंधानरूपदृष्टफलार्थः ॥ अनुसंधानोत्तरमेव तस्य कर्तव्यत्वेन तत्फलत्वानुपपत्तेः ॥ मासपक्षतिथयः प्रयोगाधिकरणभूताः सर्वेऽपि ॥ यत्तु—अनेकदिनसाध्ये कर्मण्याद्यदिने संकल्पकालिनीं तिथिमधिकरणत्वेनोलिख्य ज्योतिष्टोमेनाहं यक्ष्ये इत्यादिवाक्यं प्रयुञ्जते यायजूकाः तत्तु पदानामन्वयायोगादनादर्तव्यमिति **नीलकण्ठभट्टाः** ॥ यदपि केचित्तेन रूपेण प्रयोगाङ्गतया विहितानामेव मासादीनामुल्लेख इत्यूचुः ।

तदपि न ॥ अविहितमासादिके आधानादौ मासपक्षतिथीनां ज्योतिष्टोमे एकादशीव्रतादौ च मासपक्षयोरुल्लेखाभावप्रसङ्गाच्च ॥ अतो ज्योतिष्टोमादावेकादश्यादिपूर्णिमान्तानामुल्लेखः । एवमन्यत्रापीति दिक् ॥ **अत्र केचिदाहुः**—ग्रहणादिनिमित्तस्य मासपक्षतिथीनां प्रयागादेर्देशविशेषमात्रस्योल्लेखः कार्यो नतु व्यापकानामुत्तरायणमध्यदेशादीनामिति ॥ **अपरेत्वाहुः**—प्रयागादिषु तीर्थेषु पुण्येष्वायतनेषु चेति **मात्स्यवाक्याद्यथा** प्रयागादितीर्थविशेषस्याङ्गत्वं एवमार्यावर्तः पुण्यभूमिर्मध्यं विन्ध्यहिमालयोरित्यादिवाक्येनार्यावर्तादिसामान्यस्याप्यङ्गत्वावगमात् निमित्तानां च सर्वश इति सर्वशःपदस्वारस्याच्च सर्वपदानामुल्लेखः कार्यः ॥ नच विनैव सिद्धेर्मासपक्षतिथीनामित्यनर्थकमिति वाच्यम् । विधिस्पृष्टानां कार्तिकमाघादीनामुल्लेखासिद्धावपि तदस्पृष्टसाधारणमासाद्युल्लेखप्राप्त्यर्थत्वात् ॥ तेन व्यापकानां व्याप्यानां च सर्वेषामुल्लेखः कार्य इति ॥ संकल्पे च मुख्यचान्द्रमासातिरिक्तगौणमासप्रयुक्तकर्मस्वपि विन्ध्यदक्षिणे शुक्लादेस्तदुत्तरे कृष्णादेश्चान्द्रमासस्यैवोल्लेखो नतु गौणानामित्युक्तं **कालतत्त्वविवेचने** ॥ कर्माङ्गतिथ्यन्यतिथेः संकल्पकालसत्वे तु संकल्पकालवर्तमानतिथिमेव कर्मतिथियुक्तत्वेन रूपेणाधिकरणतयोल्लिख्य संकल्पः कार्यः ॥ ॥ **संकल्पोहविचारः** ॥ **संकल्पवाक्यं तु हेमाद्रौ श्राद्धकाण्डे प्रदर्शितम्**—ॐ इह पृथिव्यां जम्बूद्वीपे भारतवर्षे कुमारिकाखण्डे प्रजापतिक्षेत्रे दण्डकारण्येऽमुकस्मिन्प्रदेशे इत्यादिदेशं समनुकीर्त्य, ब्रह्मणो द्वितीये परार्धे श्वेतवाराहकल्पे वैवस्वतमन्वन्तरेऽष्टाविंशतितमस्य कलियुगस्य प्रथमचरणे इत्यभिधाय प्रभवादिसंवत्सरपञ्चकात्मकमवान्तरयुगमनुकीर्तयेत् ॥ **तानिच युगानि द्वादशैवमाहुः**—वैष्णवं प्रथमं तत्र बार्हस्पत्यमतःपरम् ॥ ऐन्द्रमाग्नेयमेतस्मादाहिर्बुध्न्यं च पैतृकम् ॥ वैश्वदेवं च सौम्यं च प्राजापत्यं च मारुतम् ॥ आश्विनं भाग्यमित्येवं युगानि द्वादशैव हीति ॥ प्रभवादिषष्टिसंवत्सरनामानि प्रसिद्धत्वान्नेहोच्यन्ते ॥ ततश्च संवत्सरपरिवत्सरेडावत्सरानुवत्सरेद्वत्सरेषु वर्तमानं युगावयवमनुकीर्त्य वर्तमानसंवत्सरायनर्तुमासपक्षतिथि-

वारनक्षत्रयोगकरणरौद्रादिकालनामानि सप्तम्यन्तानि कीर्तयेत् ॥ **स्मार्तानि रौद्रादिकालनामानि कालमाधवे दर्शितानि ।** तथा दिवामुहूर्तरात्रिमुहूर्तनामानि च विस्तरभिया न संगृहीतानि ॥ एवं देशकालाधिकरणतया समनुकीर्त्यामुकफलार्थममुककर्म करिष्य इति संकल्पः कार्यः ॥ ॥ **प्रयोगाङ्गभूतस्थले विचारः** ॥ **अत्र कैश्चित्**—मातृपूजादीनां प्रयोगबहिर्भूताङ्गत्वं वदद्भिर्दर्शपूर्णमासावारप्स्यमाणोऽन्वारम्भणीयया यक्ष्य इति, वाजपेयेन यक्ष्यमाणो बृहस्पतिसवेन यक्ष्य इति संकल्पवत् करिष्यमाणामुककर्माङ्गत्वेन मातृपूजादीनि करिष्य इत्येवं मातृपूजादीनां संकल्प उक्तः ॥ **अन्यैस्तु**—प्रयोगान्तःपातिगुणत्वं वदद्भिरमुककर्म करिष्ये तदङ्गत्वेन मातृपूजादीनि करिष्य इत्येवं प्रधानसंकल्पोत्तरमेवैषां संकल्प उक्तः ॥ **वस्तुतस्तु**—कर्मादिषु च सर्वेषु मातरः सगणाधिपा इत्यादिवक्ष्यमाणवचननिचयान्मातृपूजादीनां स्वस्तिवाचनान्तानां कर्मणां प्रयोगबहिर्भूताङ्गत्वमेव युक्तं प्रतिभाति ॥ **अतएवामुककर्मारम्भनिमित्तं** मातृपूजादीनि करिष्य इत्येवं संकल्पवाक्यं प्राञ्चः शिष्टाः प्रयुञ्जते इति ॥

**अथ शारीरकभाष्यप्रतिपादितपथानुवृत्त्या संकल्पविचारः पारिजाते**—जन्माद्यस्य यतः इति सूत्रे यतोवेत्यादिविषयव्याख्याने ब्रह्मणःसकाशादेव प्रपञ्चजातमुत्पन्नं यथा मृदःसकाशादुत्पन्नो घटः स्वोपादानं मृदमत्यक्त्वा जीवति, प्रलीयमानोऽपि मृद्येव प्रलीयते एवं ब्रह्मणो जातं जगदपि ब्रह्माऽत्यक्त्वा जीवति प्रलीयमानं च ब्रह्मण्येव प्रलीयते इत्युक्तोत्तरशास्त्रसंदर्भेण ब्रह्मणि समन्वयादिकं प्रतिपाद्य ब्रह्मार्पणबुद्ध्यैव कर्माणि कर्तव्यानीत्युक्तं ॥ **श्रुत्यन्तरमपि**—एष एव साधु कर्म कारयति यमूर्ध्वं निनीषते एष एवाऽसाधु कर्म कारयति तं यमेभ्योऽधो निनीषत इति ॥ **भणितंच भगवद्गीतायां**—यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ॥ यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥ **उक्तंच कूर्मपुराणेऽपि**—ब्रह्मण्याधाय कर्माणि निःसङ्गः कामवर्जितः ॥ प्रसन्नेनैव कुर्वाणो

याति तत्परमं पदम् ॥ ब्रह्मणा दीयते देयं ब्रह्मणा संप्रदीयते ॥ ब्रह्मैव दीयते चेति ब्रह्मार्पणमिदं परम् ॥ नाहं कर्ता सर्वमेतद्ब्रह्मैव कुरुते तथा ॥ एतद्ब्रह्मार्पणं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः ॥ प्रीणातु भगवानीशः कर्मणानेन शाश्वतः ॥ करोति सततं बुद्ध्या ब्रह्मार्पणमिदं परम् ॥ कार्यमित्येव यत्कर्म नियतं सङ्गवर्जितम् ॥ क्रियते विदुषा कार्यं तद्भवेद्वापि मोक्षदम् ॥ अथवा यदि कर्माणि कुर्यान्नित्यान्यपि द्विजः ॥ अकृत्वा फलसंन्यासं बध्यते तत्फलेन तु ॥ तस्मात्सर्वप्रयत्नेन त्यक्त्वा कर्माणि तत्फलम् ॥ अविद्वानपि कुर्वीत कर्मणाप्नोति तत्फलमिति ॥ **अपिच—ब्रह्मार्पणबुद्ध्या कर्मकरणे फलबाहुल्यमपि भवति ॥ तदुक्तं व्यासेन**—वासुदेवे मनो यस्य जपहोमार्चनादिषु ॥ तस्यान्तरायो मैत्रेय देवेन्द्रत्वादिकं फलमिति ॥ तस्माच्चतुर्विधपुरुषार्थः सर्वोऽपि परमेश्वरप्रीत्यै भवति ॥ ततश्च परमेश्वरप्रीत्यर्थं प्रातःसंध्यामुपासिष्ये ज्योतिष्टोमेन यक्ष्ये इति स्वाभीष्टदेवताप्रीत्युद्देशेन संकल्पः कार्य इत्यलमतिविस्तरेणेति ॥

**दक्षिणहस्तादिनियमः ॥ छन्दोगपरिशिष्टे कात्यायनः**—यत्रोपदिश्यते कर्म कर्तुरङ्गं नतूच्यते ॥ दक्षिणस्तत्र विज्ञेयः कर्मणां पारगः करः ॥ यत्र दिङ्नियमो न स्याज्जपहोमादिकर्मसु ॥ तिस्रस्तत्र दिशः प्रोक्ता ऐन्द्री सौम्याऽपराजितेति ॥ ऐन्द्री पूर्वा । सौम्या उदीची । अपराजिता ऐशानी ॥ ॥ **आसनस्थितिनियमः** ॥ तिष्ठन्नासीनः प्रह्वो वा नियमो यत्र नेदृशः ॥ तदासीनेन कर्तव्यं न प्रह्वेण न तिष्ठतेति ॥ प्रह्वो नम्रः ॥ ॥ **उदकोपस्पर्शस्थानानि ॥ कात्यायनः**—रौद्रꣳराक्षसमासुरपित्र्यमाभिचारिकं मन्त्रमुक्त्वा स्नानं चालभ्योपस्पृशेदप इति ॥ अत्र चशब्दात्तद्दैवत्यं कर्म कृत्वेति **कर्कोपाध्यायानन्तदेवयाज्ञिकादयो** भाष्यकारा व्याचख्युः ॥ **हेमाद्रौ याज्ञवल्क्योऽपि**—रौद्रपित्र्यासुरान्मन्त्रांस्तथा चैवाभिचारिकान् ॥ व्याहृत्यालभ्य चात्मानमपः स्पृष्ट्वाऽन्यदाचरेदिति ॥ **छन्दोगपरिशिष्टे कात्यायनोऽपि**—पित्र्यमन्त्रानुद्रवणे आत्मालम्भे अवेक्षणे ॥ अधोवायुसमुत्सर्गे प्रहासेऽनृतभाषणे ॥ मार्जारमूषकस्पर्शे

आक्रुष्टे क्रोधसंभवे ॥ निमित्तेष्वेषु सर्वत्र कर्म कुर्वन्नपः स्पृशेदिति ॥ अनुद्रवणं उच्चारणम् ॥ आत्मालम्भो हृदयस्पर्शः ॥ अवेक्षणमपि तस्यैव ॥ अत्र पित्र्यमन्त्रोच्चारणात्मालम्भावेक्षणानि यज्ञादौ विहितान्येव ग्राह्याणि न लौकिकानि ॥ प्रहासे महति हासे न स्मितमात्रे । मार्जारस्पर्शो मार्जारकृतएव । स्वयं कृते तु स्नानस्योक्तत्वादित्युक्त**माचारादर्शे** । आक्रुष्टे परुषभाषणे । क्रोधसंभवो मानसिकोऽपि ॥ अत्रापः स्पृशेदित्यनेनापां स्पर्शनमेव विवक्षितं नत्वाचमनम् ॥ इत्थमेव **भर्तृयज्ञपितृभूतिककोपाध्यायवासुदेवगर्गश्रीअनन्तदेवयाज्ञिकादयो** भाष्यकारा व्याख्यातवन्तः प्रायः संप्रदायविदः पद्धतिकाराश्च ॥ ॥ **उदकोपस्पर्शे निमित्तान्तराणि** ॥ **हेमाद्रौ बृहस्पतिः**—अधोवायुसमुत्सर्गे आक्रन्दे क्रोधसंभवे ॥ मार्जारमूषकस्पर्शे प्रहासेऽनृतभाषणे ॥ निमित्तेष्वेषु धर्मार्थं कर्म कुर्वन्नपः स्पृशेदिति ॥ अत्र सर्वेषु वाक्येष्वपः स्पृशेदिति पाठादपःस्पर्शो जलस्पर्श एव याज्ञिकसंप्रदायाऽविरुद्धः ॥ येषु तूपस्पृशेदिति पाठस्तत्रोपस्पर्शनमाचमनमित्या**चारादर्शे** उक्तम् ॥ **आपस्तम्बः**—स्वप्ने क्षवथौ सिङ्घाणिकायाश्चालम्भे लोहितस्य केशानामग्नेर्गवां ब्राह्मणस्य स्त्रियाश्चालम्भे महापथं गत्वाऽमेध्यं चोपस्पृश्याऽप्रयतं च मनुष्यं नीवीं च परिधायाऽप उपस्पृशेदिति ॥ क्षवथुः क्षुतम् । सिङ्घाणिका नासिकामलः । अश्रु नेत्रजलं । अत्रापःस्पर्शनमिति **हेमाद्रिणा** व्याख्यातम् ॥ **तत्रैव मार्कण्डेयपुराणे**—क्षुतादौ सम्यगाचामेत्स्पृशेद्वार्द्रतृणादिकम् ॥ कुर्वीतालम्भनं वापि दक्षिणश्रवणस्य वै ॥ यथाविभवतो ह्येतत्पूर्वालाभे ततः परम् ॥ न विद्यमाने पूर्वत्र उत्तरप्राप्तिरिष्यत इति ॥ **तत्रैव वसिष्ठः**—क्षुते निष्ठीविते सुप्ते परिधानेऽश्रुपातने ॥ पञ्चस्वेतेषु चाचामेच्छ्रोत्रं वा दक्षिणं स्पृशेदिति ॥ **पराशरः**—क्षुते निष्ठीविते चैव दन्तश्लिष्टे तथाऽनृते ॥ पतितानां च संभाषे दक्षिणं श्रवणं स्पृशेत् ॥ प्रभासादीनि तीर्थानि गङ्गाद्याः सरितस्तथा ॥ विप्रस्य दक्षिणे कर्णे नित्यं तिष्ठन्ति देवता इति ॥ ॥ **अक्रियालक्षणम्** ॥ **छन्दोगपरिशिष्टे** काल्या-

यनः—अक्रिया त्रिविधा प्रोक्ता विद्वद्भिः कर्मकारिणाम् ॥ अक्रिया च परोक्ता च तृतीया चाऽयथाक्रिया इति ॥

**स्वशाखोपयोगावश्यकता** ॥ स्वशाखाश्रयमुत्सृज्य परशाखाश्रयं तु यः ॥ कर्तुमिच्छति दुर्मेधा मोघं तत्तस्य चेष्टितम् ॥ ॥ **क्वचिदन्यशाखोक्तग्रहणाभ्यनुज्ञा** ॥ यन्नाम्नातं स्वशाखायां परोक्तमविरोधि यत् ॥ विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवदिति ॥ यथा छन्दोगादिभिः स्वशाखानुक्तमपि यजुर्वेदशाखासु विहितमग्निहोत्रादिकर्म अविरुद्धत्वादनुष्ठीयते, यद्वा स्वशाखोक्तस्याकाङ्क्षापूरकत्वेन स्वरूपतो वा यत् अविरोधि, यथा **मनुनोक्तस्य**—मेखलामजिनं दण्डमुपवीतं कमण्डलुम् ॥ अप्सु प्रास्य विनष्टानि गृह्णीतान्यानि मन्त्रवदित्यस्य मन्त्राकाङ्क्षापूरकं यद्गृह्यान्तरे मन्त्राभिधानं तद्धर्मज्ञैः कर्तव्यमेव ॥ पौराणादि तु साधारणत्वान्न पारक्यमिति तदपि स्वशाखोक्तादधिकमनुष्ठेयमेव, यथा देवताभ्य इति मन्त्रजपादि ॥ **यत्तु गृह्यपरिशिष्टं**—बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म प्रकीर्तितम् ॥ तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेदिति तत्साधारणानां परोक्तानां च नावश्यकमनुष्ठानमित्येवंपरं नतु स्वगृह्योक्तमात्रमेवानुष्ठेयमिति ॥ अन्यथा गृह्यानुक्तानां साधारणानामुपदेशानर्थक्यापत्तेः शाखान्तराधिकरणन्यायविरोधाच्च ॥ ॥ **प्रारब्धकर्ममध्येऽन्यथात्वे विचारः** ॥ **तत्रैव**—प्रवृत्तमन्यथा कुर्याद्यदि मोहात्कथंचन ॥ यतस्तदन्यथाभूतं ततएव समापयेदिति ॥ प्रवृत्तं प्रारब्धं कर्माऽन्यथा क्रमान्यत्वेन कुर्यात्तत्र यस्मात्पदार्थादारभ्य यत्कर्माऽन्यथा जातं तत एवारभ्य पुनर्यथोक्तप्रकारेण कुर्यात् ॥ यथा गन्धोत्सर्गगन्धदानयोः क्रमान्यत्वेनानुष्ठाने अन्यथाकरणकाले ज्ञातयोस्तत एवारभ्य पुनरनुष्ठानम् ॥ ॥ **कर्मणोऽन्यथात्वे तस्य पुनरनुष्ठानकालः** ॥ **तत्रैव**—समाप्ते यदि जानीयान्मयैतदयथा कृतम् ॥ तावदेव पुनः कुर्यान्नावृत्तिः सर्वकर्मण इति ॥ समाप्ते अन्यथाकृते अन्यथाकरणज्ञाने सति यत्पदार्थान्यथाकरणं जातं तमेव यथोक्तप्रकारेण पुनः कुर्यान्न तत आरभ्य सर्वं कर्मकाण्डम् ॥ एतच्च पुनरनुष्ठानमविलम्बे सु-

करत्वे च कर्तव्यम् । यत्र तु विलम्बो दुष्करत्वं वा तत्र विष्णुस्मरणमेव नावृत्तिः ॥ यथा कृतोत्सर्गस्यान्नस्य ब्राह्मणैर्भोजने पुनरन्नान्तरोपादानेनोत्सर्गः ॥ अन्यथा ब्राह्मणोपरोधसहत्वबाधापत्तेरित्युक्तं **नारायणवृत्तौ** ॥ **तत्रैव**—प्रधानस्याऽक्रिया यत्र साङ्गं तत्क्रियते पुनः ॥ तदङ्गस्याऽक्रियायां तु नावृत्तिर्नच तत्क्रियेति ॥ यत्र प्रधानस्य कर्मणो दानादेरकरणमुत्सर्गश्च तदङ्गभूतः कृतस्तत्पुनरङ्गानुष्ठानसहितं कर्तव्यं, अङ्गमात्रस्य तूत्सर्गस्याकरणे कृतस्य प्रधानस्य नावृत्तिः ॥ नापि तावदङ्गमात्रकरणं किंतु तत्समाधानार्थं—अज्ञानाद्यदि वा मोहात्प्रच्यवेताध्वरेषु यत् ॥ स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिरिति **याज्ञवल्क्योक्तं प्रायश्चित्तमनुष्ठेयम्** ॥ एवं समाप्ते प्रयोगे अकरणज्ञानेऽप्येतदेव समाधानमिति ॥ अन्येतु तदङ्गस्य साङ्गप्रधानाङ्गस्य चोपवीतित्वादेरकरणे न साङ्गप्रधानस्यावृत्तिः ॥ नाप्युपवीतित्वादेः करणं किंतु तत्समाधानार्थं विष्णुस्मरणमेव प्रायश्चित्तमित्याहुः ॥ इति श्रीमद्द्विवेद्युद्धवसून्वनन्तदेवकृते श्रीरुद्रकल्पद्रुमे सर्वकर्मसाधारणस्मार्ताङ्गनिर्णयः ॥

अथ **पारिभाषिकान्कांश्चित्पदार्थान्संग्रहीष्यामः** ॥ ॥ **तत्रादौ मङ्गलद्रव्याणि मदनरत्ने स्कान्दे**—हरिद्रा कुङ्कुमं चैव सिन्दूरं कज्जलं तथा ॥ कूर्पासकं[1] च ताम्बूलं माङ्गल्याभरणं शुभम् ॥ ॥ **रङ्गवल्लीद्रव्याणि**—रजांसि पञ्चवर्णानि मण्डलार्थं तु कारयेत् ॥ शालितण्डुलचूर्णेन शुक्लं वा यवसंभवम् ॥ रक्तं कुसुम्भसिन्दूरगैरिका[2]दिसमुद्भवम् ॥ हरितालोद्भवं पीतं रजनी[3]संभवं तु वा ॥ कृष्णं दग्धयवैश्चापि हरितं पीतमिश्रितम् ॥ ॥ **पञ्चगव्यं स्मृतिदर्पणे**—गायत्र्यादाय गोमूत्रं गन्धद्वारेति गोमयम् ॥ आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि ॥ तेजोसि शुक्रमित्याज्यं देवस्यत्वा कुशोदकम् ॥ एभिस्तु पञ्चभिर्युक्तं पञ्चगव्यमिति स्मृतम् ॥

---

१ कूर्पासकं कञ्चुकी । २ गैरिकं सोनगेरु इति प्रसिद्धम् । ३ रजनी हरिद्रा ।

तच्च ताम्रपात्रे पलाशपत्रपुटे वा ताम्राया गोमूत्रं अष्टमाषप्रमाणम् ॥ श्वेतगोः शकृत् चतुर्माषम् ॥ पीतगोः क्षीरं षोडशमाषं ॥ नीलाया दधि द्वादशमापं ॥ कृष्णाया गोर्घृतं अष्टमाषं ॥ कुशोदकं चतुर्माषम् ॥ अत्र माषः पञ्चगुञ्जात्मको ज्ञेयः ॥ ॥ **पञ्चामृतम्** ॥ **मदनरत्ने कात्यायनः**—पयो दधि घृतं चैव मधु शर्करया युतम् ॥ पञ्चामृतमिदं प्रोक्तं सर्वदेवप्रसादकृत् ॥ ॥ **मधुरत्रितयम्**—आज्यं क्षीरं मधु तथा मधुरत्रयमुच्यते ॥ ॥ **पञ्चपल्लवाः** ॥ **ब्राह्मे**—अश्वत्थोदुम्बरप्लक्ष[1]चूतन्यग्रोधपल्लवाः ॥ पञ्चभङ्गा इति प्रोक्ताः सर्वकर्मसु शोभनाः ॥ पञ्चत्वचोऽप्येषामेव ॥ ॥ **पञ्चरत्नानि** ॥ **स्मृत्यन्तरे**—कनकं कुलिशं[2] नीलं पद्मरागं च मौक्तिकम् ॥ एतानि पञ्चरत्नानि रत्नशास्त्रविदो विदुः ॥ **विष्णुधर्मोत्तरे तु**—वज्रमाणिक्यवैडूर्यपुष्परागेन्द्रनीलकम् ॥ पञ्चरत्नमिति ख्यातं नारदेन महर्षिणा ॥ ॥ **सप्तमृदः**—अश्वस्थानाद्गजस्थानाद्वल्मीकात्सङ्गमाद्ध्रदात् ॥ राजद्वाराच्च गोष्ठाच्च मृदमानीय निक्षिपेत् ॥ ॥ **सप्तधान्यानि षट्त्रिंशन्मते**—यवगोधूमधान्यानि तिलाः कङ्गु[3]श्च मुद्गकाः ॥ श्यामाकाश्चणकाश्चैव सप्तधान्यमुदाहृतम् ॥

**कलशप्रमाणं विष्णुधर्मोत्तरे**—हेमराजतताम्राश्च मृण्मया लक्षणान्विताः ॥ यात्रोद्वाहप्रतिष्ठासु कुम्भाः स्युरभिषेचने ॥ पञ्चाशाङ्गुलवैपुल्यमुत्सेधः षोडशाङ्गुलः ॥ द्वादशाङ्गुलमूलं स्यान्मुखमष्टाङ्गुलं भवेत् । पञ्च च आशाश्च पञ्चाशाः । आशा दश । पञ्चाधिकशतमङ्गुलानि वैपुल्यमिति केचित् । पञ्चदशतावान्वैपुल्यव्यास इति तु युक्तम् ॥ धातुजं मृण्मयं वापि कलशं यत्प्रतिष्ठितम् ॥ तद्वत्प्रादेशदीर्घं च चतुरङ्गुलमुच्छ्रितम् ॥ सिततण्डुलपूर्णेन पात्रेण पिहिताननमिति ॥ ॥ **सर्वौषध्यः**—कुष्ठं मांसी[4] हरिद्रे द्वे मुरा शैलेयचन्दनम् ॥ वचा-

१ प्लक्ष' पिपरी । २ कुलिशं हीरक । ३ कङ्गु काग इति राळे इति च प्रसिद्धः । ४ मासी जटामांसी । हरिद्रे द्वे हळद व आबीहळद । मुरा मोरवेल । शैलेयं शिलाजित । वचा वेखंड । मुस्ता भद्रमोथ इति भाषाया प्रसिद्धानि ।

चम्पकसुता च सर्वौषध्यो दश स्मृताः ॥ ॥ **सप्तधातवः भविष्यपुराणे**—सुवर्णं रजतं ताम्रमार[1]कूटं तथैव च ॥ लोहं त्रपु तथा सीसं धातवः सप्त कीर्तिताः ॥ ॥ **अष्टार्घः भविष्ये**—आपः क्षीरं कुशाग्राणि दध्यक्षततिलास्तथा । यवाः सिद्धार्थकाश्चैव अर्घोऽष्टाङ्गः प्रकीर्तितः ॥ ॥ **यक्षकर्दमो गारुडे**—कर्पूरमगुरुश्चैव कस्तूरी चन्दनं तथा ॥ कङ्कोलं च भवेदेभिः पञ्चभिर्यक्षकर्दमः ॥ **तथा**—कर्पूरं चन्दनं द[2]र्पं कुं[3]कुमं च समांशकम् ॥ सर्वगन्धमिति प्रोक्तं समस्तसुरवल्लभम् ॥ ॥ **दशाङ्गधूपः मदनरत्ने**—षड्भागकुष्ठं द्विगुणो गुडश्च ला[4]क्षा त्रयं पञ्च न[5]खस्य भागाः ॥ हरीतकी सर्ज[6]रसं समांशं भागैकमेकं त्रिलवं शिलाजम् ॥ घ[7]नस्य चत्वारि पु[8]रस्य चैको धूपो दशाङ्गः कथितो मुनीन्द्रैः ॥

**अथ द्रव्यमानम्** ॥ **याज्ञवल्क्यः**—जालसूर्यमरीचिस्थं त्रसरेणुरजः स्मृतम्॥ तेऽष्टौ लिक्षा तु तास्तिस्रो राजसर्षप उच्यते ॥ १ ॥ गौरस्तु ते त्रयः षट् ते यवो मध्यश्च ते त्रयः॥ कृष्णलः पञ्च ते माषस्ते सुवर्णस्तु षोडश ॥२॥ पलं सुवर्णाश्चत्वारः पञ्च वापि प्रकीर्तिताः ॥ द्वे कृष्णलो रूप्यमाषो धरणं षोडशैव ते ॥ ३ ॥ शतमानं तु दशभिर्धरणैः पलमेव तु ॥ निष्कं सुवर्णाश्चत्वार इति ॥ ॥ **ताम्रस्योन्मानम्** ॥ पलचतुर्थांशेन कर्षेणोन्मितः कार्षिकस्ताम्रसंबन्धी पणो भवति ॥ कर्षसंज्ञा निघण्टौ—ते षोडशाक्षः कर्षोऽस्त्री पलं कर्षचतुष्टयमिति । ते षोडशमाषा अक्षः सएव कर्ष इत्यर्थः ॥ ॥ **कार्षापणश्च नारदेनोक्तः**—कार्षापणो दक्षिणस्यां दिशि रौप्यः प्रवर्तते ॥ पणैर्निबद्धः पूर्वस्यां षोडशैव पणः स तु ॥ ॥ **लीलावत्याम्** ॥ वराटकानां दशकद्वयं यत्सा काकिणी ताश्च पणश्चतस्रः ॥ ते षोडश द्रम्म इहावगम्यो द्रम्मैस्तथा षोडशभिश्च निष्कः ॥ अशीतिगुञ्जात्मकः कर्षः ॥ चत्वारः कर्षा निष्क इति सिन्धौ ॥ ॥ **धान्यमानं**

१ आरकूट सोनपितळ । त्रपु कथील । २ दर्प. कस्तूरी । ३ कुङ्कुम केशरम् । ४ लाक्षा लाख । ५ नख नखला । ६ सर्जरस राळ । ७ घन नागरमोथा । ८ पुरः गुग्गुल इति प्रसिद्ध ।

**भविष्ये** ॥ पलद्वयं तु प्रसृतं द्विगुणं कुडवं मतम् ॥ चतुर्भिः कुडवैः प्रस्थः प्रस्थाश्चत्वार आढकः ॥ आढकैस्तैश्चतुर्भिश्च द्रोणस्तु कथितो बुधैः ॥ कुम्भो द्रोणद्वयं शूर्पः खारी द्रोणास्तु षोडश ॥ ॥ **गोपथे**—पञ्चकृष्णलको माषस्तैश्चतुःषष्टिभिः पलम् ॥ पलैर्द्वादशभिः प्रस्थो मागधेषु प्रकीर्तितः ॥ १ ॥ आढकस्तैश्चतुर्भिश्च द्रोणः स्याच्चतुराढकः ॥ ॥ **विष्णुधर्मोत्तरे**—पलं च कुडवः प्रस्थ आढको द्रोण एवच ॥ धान्यमानेषु बोद्धव्याः क्रमशोऽमी चतुर्गुणाः ॥ १ ॥ द्रोणैः षोडशभिः खारी विंशत्या कुम्भ उच्यते ॥ विंशत्येत्यत्र द्रोणैरिति संबध्यते ॥ ॥ **तथाच**—कुम्भो द्रोण इति पक्षाद्विंशतिद्रोणमितः कुम्भ इति पक्षान्तरम् ॥ पलसहस्रमितः कुम्भ इति पक्षान्तरम् ॥ **वाराहे**—पलद्वयं तु प्रसृतं मुष्टिरेकपलं स्मृतम् ॥ अष्टमुष्टि भवेत्किंचित्किंचिदष्टौ तु पुष्कलम् ॥ पुष्कलानि च चत्वारि आढकः परिकीर्तितः ॥ चतुराढको भवेद्द्रोण इत्येतन्मानलक्षणम् ॥ एतत्पक्षाणां शक्तिकालाद्यपेक्षया व्यवस्था ॥

**होमे मन्त्रोहप्रकारः** ॥ **विष्णुधर्मोत्तरे**—मन्त्रेणोङ्कारपूतेन स्वाहान्तेन विचक्षणः ॥ स्वाहावसाने जुहुयाद्ध्यायन्वै मन्त्रदेवताम् ॥ मन्त्रान्ते या वह्निजाया सा तु मन्त्रस्वरूपिणी ॥ तदन्तेऽन्यां प्रयुञ्जीत सा कर्माङ्गतया स्मृता ॥ आदौ द्रव्यपरित्यागः पश्चाद्धोमो विधीयते ॥ इति देवयाज्ञिकः ॥ ॥ **मन्त्रोच्चारक्रममाह बृहद्याज्ञवल्क्यः**—वर्णः स्पष्टतरः कार्यो नासाश्वासावधीति वा ॥ मुखश्वासावधि शृण्वन्नभिषेकार्चनेषु चेति ॥ ॥ **उपांशुलक्षणम्**—विनाशब्दं जपो यस्तु चलज्जिह्वाद्विजच्छदः ॥ उपांशुं तं जपं प्राहुर्मनसा मानसं बुधा इति ॥ ॥ **मूलमन्त्रस्वरूपम्**—प्रणवादिनमोन्तं च चतुर्थ्यन्तं च सत्तम ॥ देवतायाः स्वकं नाम मूलमन्त्र उदाहृत इति ॥ ॥ **समिधां वृक्षाः**—शमीपलाशन्यग्रोधप्लक्षवैकङ्कतोद्भवाः ॥ अश्वत्थोदुम्बरौ बिल्वश्चन्दनः सरलस्तथा ॥ शालश्च देवदारुश्च खादिरश्चेति यज्ञियाः ॥ ॥ **समिधां लक्षणम्**—नाङ्गुष्ठादधिका कार्या समित्स्थूलतरा क्वचित् ॥ न वियुक्ता त्वचा चैव न सटीका

न स्फाटिता ॥ प्रादेशमात्रादधिका न तथा स्याद्विशाखिका ॥ न सपर्णा समित्कार्या होमकर्मसु जानता ॥ प्रागग्राः समिधो ग्राह्या अखर्वा नैव स्फाटिताः ॥ नेत्रं जटा मूलं च कथितं ॥ काम्येषु वश्यकर्मादौ विपरीता जिघांसतः ॥ विशीर्णा विफला ह्रस्वा वक्रा बहुशिखाः कृशाः ॥ दीर्घाः स्थूला घुणैर्जुष्टाः कर्मसिद्धिविनाशकाः ॥ होतव्या मधुसर्पिर्भ्यां दध्ना क्षीरेण संयुताः ॥ प्रादेशमात्राः समिध अशाखा अपलाशिनीः ॥ ॥ **समित्पुष्पादीनां स्वयमाहरणम्** ॥ **शङ्खः**—समित्पुष्पकुशादीनि ब्राह्मणः स्वयमाहरेत् ॥ शूद्रानीतैः क्रयक्रीतैः कर्म कुर्वन्व्रजत्यधः ॥ ॥ **कण्डनादिव्यवस्था** ॥ **वायुपुराणे**—कण्डनं पेषणं चैव तथैवोल्लेखनं च यत् ॥ सकृदेव पितॄणां स्याद्देवानां तत्रिरुच्यते ॥ ॥ **समिद्धेऽग्नौ होतव्यम्** ॥ **कात्यायनः**—योऽनर्चिषि जुहोत्यग्नौ व्यङ्गारिणि च मानवः ॥ मन्दाग्निरामयावी च दरिद्रश्चैव जायते ॥ तस्मात्समिद्धे होतव्यं नासमिद्ध कथंचन ॥ ॥ **अग्निधमनसाधनानि** ॥ न वस्त्रवायुना कुर्यात्पाणिशूर्पस्रुवादिभिः ॥ न कुर्यादग्निधमनं न कुर्याद्व्यजनादिना ॥ मुखेनैव धमेदग्निं मुखदेशाद्ध्यजायत ॥ अन्धो बुधः सधूमे तु जुहुयाद्यो हुताशने ॥ यजमानो भवेदन्धः सपुत्र इति च श्रुतिः ॥ ॥ **ग्रहहोमसंख्या मात्स्ये**—होमादिग्रहपूजायां शतमष्टोत्तरं भवेत् ॥ अष्टाविंशतिरष्टौ वा यथाशक्ति विधीयत इति ॥

**यथोक्तद्रव्यालाभे** ॥ **ब्राह्मे**—यथोक्तवस्त्वसंपत्तौ ग्राह्यं तदनुकारि यत् ॥ यवानामिव गोधूमा व्रीहिणामिव शालयः ॥ ॥ **अनादेशे ग्राह्यद्रव्यादि** ॥ आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते ॥ मन्त्रस्य देवतायाश्च प्रजापतिरिति स्थितिः ॥ अनादेशे अविधाने प्रजापतिः प्राजापत्यो मन्त्रः समस्तव्याहृतय इति ॥ ॥ **द्रव्याणां प्रतिनिधयः** ॥ **विष्णुधर्मोत्तरे**—दध्यलाभे पयो ग्राह्यं मध्वलाभे तथा गुडः ॥ घृतप्रतिनिधिं कुर्यात्पयो वा दधि वा नृप ॥ **बौधायनः**—आज्यहोमेषु सर्वेषु गव्यमेव घृतं भवेत् ॥ तदभावे महिष्यास्तु

आजमाविकमेवच ॥ तदभावे तु तैलं स्यात्तदभावे तु जार्तिलम्[1] ॥ तदभावे च कौसुम्भं तदभावे च सार्षपम् ॥ ॥ **हस्तस्थतीर्थानि याज्ञवल्क्यः**—कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च ॥ प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् ॥ देशिनी तर्जनी ॥ ॥ **आहुतिप्रकारः** ॥ पाण्याहुतिर्द्वादशपर्वपूरिका रसादिना चेत्स्रुचिपर्वपूरिका ॥ दैवेन तीर्थेन च हूयते हविः स्वङ्गारिणि स्वर्चिषि तत्र पावके ॥ आज्यपयआदिद्रवद्रव्याणि स्रुवेण जुहुयात् ॥ समिधो मूलतो द्व्यङ्गुलं विहाय मध्यमानामिकाङ्गुष्ठैर्जुहुयात् ॥ चरुं ग्राससमं पाणिनैव जुहुयात् ॥ आज्यं स्रुवेणैव जुहुयात् ॥ तदभावे यज्ञियवृक्षपर्णेन ॥ पालाशस्य तु मध्यपर्णेनैव जुहुयात् ॥ ॥ **द्रव्यभेदेनाहुतिमानं सिद्धान्तशेखरे**—कर्षप्रमाणमाज्यं स्यान्मधु क्षीरं च तत्समम् ॥ तण्डुलानां शुक्तिमात्रं पायसं प्रसृतः समम् ॥ कर्षमात्राणि भक्ष्याणि लाजा मुष्टिमिता मताः ॥ अन्नं ग्राससमं ग्राह्यं शाकं ग्रासार्धमात्रकम् ॥ मूलानां तु त्रिभागः स्यात्कन्दानामष्टमांशकः ॥ इक्षोः पर्वप्रमाणं स्यादङ्गुलद्वितयं लता ॥ प्रादेशमात्राः समिधो व्रीहीणामञ्जलेः समम् ॥ तिलसक्तुकणादीनां मृगीमुद्रा प्रमाणतः ॥ पत्रपुष्पफलादीनां समानाहुतिरुच्यते ॥ चन्दनश्रीखण्डकस्तूरीकुङ्कुमागरुकर्दमाः ॥ हरिमन्थसमाः प्रोक्ता गुग्गुलुर्बदरीसमः ॥ आहुतीनामिदं मानं कथितं वेदवादिभिः ॥ हरिमन्थश्चणकः ॥ तिसृभिर्दूर्वाभिरेकाहुतिः । कुशानामपि पत्त्रत्रयेणैकेति ॥ ॥ **मृगीमुद्रालक्षणम्**—मीलितानामिकाङ्गुष्ठमध्यमाङ्गुलीर्योजयेत् ॥ शेषाङ्गुली उच्छ्रितेति मृगीमुद्रेयमीरिता ॥

अथ **धनिकादिप्रदेयदक्षिणार्थद्रव्येयत्ताव्यवस्थामाह** ॥ **तत्रादौ धनिकादिलक्षणं वाराहे**—वर्धयित्वा धनं यस्तु तस्माद्ग्रासमपीह यः ॥ न खादेत्संग्रहपरो धनिकः स उदाहृतः ॥ पोषणीयकुटुम्बस्य निर्वाहो यावता भवेत् ॥ तावदेव सुखं यस्तु लभते प्रतिवार्षिकम् ॥ ऋणं यस्य तु नास्त्येव स मध्यम उदाहृतः ॥ धनं पूर्वापरं यस्य वर्तते बहुसंख्यया ॥ अधिकस्यार्जको यः स्यात्स महा-

[1] जार्तिलं तारळे इति खुरासानीति वा प्रसिद्धम् ।

धन उच्यते ॥ सदाचाररतो विप्रो धनार्जनपराङ्मुखः ॥ कुटुम्बयत्नमतिकः स दरिद्र इति स्मृतः ॥ यस्य स्यादशनाभावः सदाचाररतस्य हि ॥ महादरिद्रः स भवेद्वासोधान्यविवर्जितः ॥ वर्धयित्वा धनं यस्तु ग्रासं वार्षिकमर्जयेत् ॥ स वै धन्य इति प्रोक्तश्चैकवर्षेण यः पुमान् ॥ वर्षद्वयमितं ग्रासं स हि धन्यतरः स्मृतः ॥ अधिकस्यार्जको यः स्यात्स धन्यतम ईरितः ॥ धनेनैव विना यस्तु ग्रासं वार्षिकमर्जयेत् ॥ स वै धीर इति प्रोक्तस्तारतम्यं च पूर्ववदिति ॥ ॥ **अथैतेषु मध्ये केन कियद्देयमित्याकाङ्क्षायां वाराहे लक्षनमस्कारहोमं प्रकृत्य**—व्याहृतीनां सहस्रस्य होमे शुल्कं द्विजेऽर्पयेत् ॥ माषमात्रं सुवर्णं तु लक्षहोमे शतं यवा इत्युक्तम् ॥ धनिको द्विगुणं दद्यात्त्रिगुणं तु महाधनः ॥ यवार्धं तु दरिद्रेण दातव्यं पुण्यलब्धये ॥ दद्यान्महादरिद्रस्तु तदर्धं शुल्कमेवचेति ॥ मध्यमादिभिस्तु धनिकाद्यपेक्षया किंचिन्न्यूनं दरिद्राद्यपेक्षया किंचिदधिकं देयमित्यर्थात्तारतम्येन कल्पनीयम् ॥ धीरेणापि दरिद्रतोऽपि न्यूनं समं वा लाभानुसारेण कल्पनीयम् ॥ एतच्च सुवर्णादिद्रव्यविषयमेव नतु गवादिविषयम् ॥ सुवर्णं प्रकृत्यैव द्वैगुण्यादेरुक्तत्वात् ॥ एतत्सर्वं नित्यकर्मविषयं अनुक्तपरिमाणविषयं च ज्ञेयम् ॥ काम्ये कर्मणि उक्तपरिमाणे तु यथावदेव देयम् ॥ ॥ **वित्तशाठ्ये फलाभावः** ॥ धनिकादिस्तु दारिद्र्यमिति प्रख्यापयन्यथावन्न ददाति स कर्मफलं नैवाप्नोति ॥ **तथाच मनुः**—प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते ॥ स नाप्नोति फलं तस्य परत्रेति श्रुतिस्मृतिरिति ॥ ॥ **पुराणान्तरेऽपि**—वित्तशाठ्यं नरो यस्तु धने सति करोति हि ॥ स नाप्नोति फलं तत्र चौर एव प्रकीर्तित इति ॥ एवं स्वल्पकालसाध्यबहुकालसाध्यकर्मसु श्रमाद्यनुरोधेन द्रव्येयत्ता कल्पनीया ॥ **भारते**—वेदोपनिषदे चैव सर्वकर्मसु दक्षिणा ॥ सर्वत्रैव तु चोद्दिष्टा भूमिर्गावोऽथ काञ्चनम् ॥ ॥ **दक्षिणायां रौप्यनिषेधः** ॥ **बैजवापः**—शिवनेत्रोद्भवं यस्मात्तस्मात्तत्पितृवल्लभम् ॥ अमङ्गलं तद्यत्नेन देवकार्ये विवर्जयेदिति ॥

स्वशाखानाम्नातं परशाखीयं ग्राह्यमित्युक्तं छन्दोगपरिशिष्टे—यन्नाम्नातं स्वशाखायां पारक्यमविरोधि यत् ॥ विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत् ॥ ॥ **कर्मभेदेन कर्माङ्गदेवनानामानि** ॥ विवाहस्याग्निर्देवता । तेन विवाहाङ्गभूतस्वस्तिवाचनाद्यन्ते कर्माङ्गदेवताग्निः प्रीयतामिति वदेत् ॥ औपासनेऽग्निसूर्यप्रजापतयः ॥ स्थालीपाकेऽग्निः ॥ गर्भाधाने ब्रह्मा ॥ पुंसवने प्रजापतिः ॥ सीमन्ते धाता ॥ जातकर्मणि मृत्युः ॥ नामकर्मनिष्क्रमणान्नप्राशनेषु सविता ॥ चूडायां केशिनः ॥ उपनयने इन्द्रश्रद्धामेधाः ॥ अन्ते सुश्रवाः ॥ पुनरुपनयनेऽग्निः ॥ समावर्तने इन्द्रः ॥ उपाकर्मणि व्रतेषु च सविता ॥ वास्तुहोमे वास्तोष्पतिरन्ते प्रजापतिः ॥ तडागादीनां वरुणः ॥ ग्रहयज्ञे नवग्रहाः ॥ कूष्माण्डहोमे चान्द्रायणेऽग्न्याधाने चाग्न्यादयः ॥ अग्निष्टोमस्याग्निः ॥ अन्येष्विष्टिकर्मसु प्रजापतिरिति ॥ ॥

॥ **कर्मभेदेनाग्निनामानि** ॥ लौकिके पावको वह्निः प्रथमः परिकीर्तितः ॥ अग्निस्तु मारुतो नाम गर्भाधाने प्रकीर्तितः ॥ पुंसवे पवमानस्तु शोभनः शुभकर्मसु ॥ सीमन्ते मङ्गलो नाम प्रबलो जातकर्मणि ॥ पार्थिवो नामकरणे प्राशनेऽन्नस्य वै शुचिः ॥ सभ्यनामा तु चूडायां व्रतादेशे समुद्भवः ॥ गोदाने सूर्यनामा स्याद्विवाहे योजकः स्मृतः ॥ आवसथ्ये द्विजो ज्ञेयो वैश्वदेवे तु रुक्मकः ॥ प्रायश्चित्ते विटश्चैव पाकयज्ञेषु पावकः ॥ देवानां हव्यवाहश्च पितॄणां कव्यवाहनः ॥ शान्तिके वरदः प्रोक्तः पौष्टिके बलवर्धनः ॥ पूर्णाहुत्यां मृडो नाम क्रोधोऽग्निश्चाभिचारिके ॥ वश्यार्थे कामदो नाम वनदाहे तु दूषकः ॥ कुक्षौ तु जाठरो नाम क्रव्यादो मृतदाहने ॥ वह्निनामा लक्षहोमे कोटिहोमे हुताशनः ॥ वृषोत्सर्गेऽध्वरो नाम शुचये(?)ब्राह्मणः स्मृतः ॥ समुद्रे वाडवो ह्यग्निः क्षये संवर्तकस्तथा ॥ ब्रह्मा वै गार्हपत्यश्च ईश्वरो दक्षिणस्तथा ॥ विष्णुराहवनीयः स्यादग्निहोत्रे त्रयोऽग्नयः ॥ ज्ञात्वैवमग्निनामानि गृह्यकर्म समारभेत् ॥ इमान्यग्निनामानि सकलसंस्कारशान्तिकपौष्टिकाद्यनुष्ठानोपयुक्तानि तत्रतत्र योज्यानीति ॥

**पात्राणां शुद्धिप्रकारः**[1] ॥ **अथ संक्षेपेण पात्राणां द्रव्याणां च शुद्धिप्रकारः** ॥ तत्र लेपरहितानां दारुमयाणामश्ममयानां च लेपंविनोच्छिष्टपुरुषादिस्पृष्टानां जलेन प्रक्षालनाच्छुद्धिः । सलेपानामेतेषां सलेपोच्छिष्टादिपुरुषस्पृष्टानां तक्षणात्प्रक्षालनाच्च शुद्धिः । सलेपानामेतेषां लेपंविनोच्छिष्टपुरुषादिस्पृष्टानामुष्णोदकेन प्रक्षालनाच्छुद्धिः । शूर्पस्य तु तक्षणासंभवात्परित्याग एव । लेपसहितानां दारुमयाणामश्ममयानां च काकादिमुखावमृष्टानां तक्षणाच्छुद्धिः । लेपरहितानां तूष्णोदकेन प्रक्षालनात् । एवं मार्जारव्यतिरिक्तश्वापदमुखावमृष्टानामपि । चण्डालादिस्पर्शविण्मूत्राद्युपहत्योस्तु सर्वत्र परित्याग एव । सलेपानां सौवर्णराजतकांस्यमयताम्रमयाणां यथाक्रममुष्णोदकगोशकृद्भस्माम्लैः शुद्धिः । सलेपानां सौवर्णराजतव्यतिरिक्तानां पात्राणां काकादिमुखावमृष्टानां शूद्रसंस्पृष्टानां च तक्षणात्प्रक्षालनाच्च शुद्धिः । एवं शूद्रोपभुक्तानामलेपानामपि । सौवर्णराजतानां तु दाहादुष्णोदकेन प्रक्षालनाच्च शुद्धिः । एतेषां चण्डालादिस्पर्शे विण्मूत्राद्युपहतौ च पुनःकरणम् । अथवा गोमूत्रे सप्तरात्रं संस्थापनाद्दाहादुष्णोदकेन प्रक्षालनाच्च शुद्धिः । नूतनानां मृण्मयानां विनालेपमुच्छिष्टपुरुषादिस्पृष्टानां जलेन प्रक्षालनम् । आज्यलिप्तानामुच्छिष्टपुरुषादिस्पृष्टानां पुनर्दाहः । सलेपानामुच्छिष्टपुरुषादिस्पृष्टानां मूत्रपुरीषाद्युपहतानां च परित्याग एव ।

**द्रव्याणां शुद्धिप्रकारः** ॥ कृष्णाजिनस्य लेपंविनोच्छिष्टस्पर्शे गोमयोदकेन प्रक्षालनम् । सलेपोच्छिष्टस्पर्शे गौरसर्षपपिष्टैर्गोमयेन मृदोष्णोदकेन च शुद्धिः । विण्मूत्राद्युपहतावप्येवम् । घनाया भूमेर्विण्मूत्राद्युपहतौ गोमयेनोपलेपनम् । ससुषिरायाः कर्षणम् । आर्द्राया मेध्यमृदा प्रच्छादनम् । अशुद्धायां भूमौ न्यस्तानां प्रक्षालनम् । पुरुषवाह्यानां काष्ठशिलेष्टकानां चाण्डालादिस्पृष्टानां प्रक्षाल्यावशोषणम् ।

---

१ पात्रप्रमाणानि तत्तदाकृतिसहितान्यन्यत्र यथावकाशं संग्रहीष्याम ।

यज्ञार्थं शूद्रादिभिराहृतानां दर्भकाष्ठादीनां पवमानानुवाकेन प्रोक्षणाच्छुद्धिः । एकपुरुषाहारपरिमितानां व्रीहियवगोधूमादीना विण्मूत्राद्युपहतौ परित्यागः ।अधिकानां तु यावत उपहतिर्भवति तावतएवोत्सर्गं कृत्वाऽवशिष्टानां प्रोक्षणकण्डनक्षालनानि कार्याणि । फलीकृतानां तण्डुलानां पाणिभ्यां निर्मलीकरणप्रोक्षणप्रक्षालनानि । होमार्थस्य चर्वादेः केशकीटपतङ्गादिभिरुपघाते परित्यागएव । सर्पिषस्तैलस्य चोच्छिष्टस्पर्शे उदके तत्पात्रं निधायोद्धृत्योपयोजयेत् । मधुपयोदध्यादीनां तस्मात्पात्रादन्यस्मिन्पात्र उद्धृत्योपयोगः कार्यः । एतेषां लेपसंबन्धे परित्याग एव । परित्यागव्यतिरिक्ते सर्वत्र पवमानानुवाकप्रोक्षणस्य समुच्चयः । सर्पिरादीनां क्षुद्रकेशकीटादिभिः संसर्गे तमुद्धृत्य पर्यग्निकरणं वस्त्रादिभिर्गालनं पवित्राभ्यां तूष्णीमुत्पवनं च कार्यम् । एवं काकादिभिरवघ्रातेष्वपि । विण्मूत्राद्युपहतौ तु परित्याग एव । एतन्मूलभूतानि वचनानि तु हेमाद्रिविज्ञानेश्वरमदनपारिजातादिषु द्रष्टव्यानि ॥

सर्वकर्मसु ब्राह्मणभोजनसंख्यामाह गदाधरः—गर्भाधानादिसंस्कारे ब्राह्मणान्भोजयेद्दश ॥ शतं विवाहसंस्कारे पञ्चाशन्मेखलाविधौ ॥ आवसथ्ये त्रयस्त्रिंशच्छ्रौताधाने शतात्परम् ॥ अष्टकं भोजयेद्भक्त्या तत्तत्संस्कारसिद्धये ॥ आग्रयणे प्रायश्चित्ते ब्राह्मणान्दशपञ्चचेति ॥ कृतं कर्म ईश्वरार्पणं कार्यमित्युक्तं बृहन्नारदीये ॥ विष्णवर्पितानि कर्माणि सफलानि भवन्ति हि ॥ अनर्पितानि कर्माणि भस्मनीव हुतं हविः ॥ नित्यं नैमित्तिकं काम्यं यच्चान्यन्मोक्षसाधनम् ॥ विष्णोः समर्पितं सर्वं सात्विकं फलदं भवेत् ॥ इति परिभाषाप्रकरणम् ॥

## इति शुक्लयजुःशाखीयकर्मकाण्डप्रदीपे परिभाषाप्रकरणम् ॥ १ ॥

# अथ संस्कारप्रकरणम् ॥ २ ॥

**श्रीः ॥ अथ संस्काराः कथ्यन्ते ॥ तेच द्विविधाः ब्राह्मा दैवाश्च । तत्र ब्राह्मा गर्भाधानाद्याः । पाकयज्ञाद्या दैवाः । अत्रतु ब्राह्मा गर्भाधानाद्या अनुष्ठेयरूपेणोच्यन्ते । तेच षोडश**—गर्भाधानं पुंसवनं सीमन्तो जातकर्म च ॥ नामक्रिया निष्क्रमोऽन्नप्राशनं वपनक्रिया ॥ कर्णवेधो व्रतादेशो वेदारम्भक्रियाविधिः ॥ केशान्तः स्नानमुद्वाहो विवाहाग्निपरिग्रहः ॥ त्रेताग्निसंग्रहश्चैव संस्काराः षोडश स्मृताः ॥ नवैताः कर्णवेधान्ता मन्त्रवर्जं क्रियाः स्त्रियाः ॥ विवाहो मन्त्रवत्तस्याः शूद्रस्यामन्त्रतो दश इति व्यासोक्ताः ॥ **गृह्यकारिकायां तु**—गर्भाधानं पुंसवनं सीमन्तोन्नयनं ततः ॥ जातकर्माभिधानं च निष्क्रमः प्राशनं क्रमात् ॥ चूडोपनयनं वेदव्रतानां च चतुष्टयम् ॥ गोदानमेखलोन्मोकौ विवाहः षोडश क्रिया इत्युक्ताः ॥ त्रयोदशानामाद्यानामधिकारी पिता भवेत् ॥ इतरेषां त्रयाणां स्यादधिकारी स्वयं सुतः ॥ गर्भाधानादिसंस्कारैर्विवाहान्तैः समानताम् ॥ गच्छेत्सायुज्यतां विप्रो मुनीनां च सलोकताम् ॥ वैदिकैः कर्मभिः पुण्यैर्निषेकाद्यैर्द्विजन्मनाम् ॥ कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह चेति ॥ अत्र स ब्रह्मणा सायुज्यमाप्नोतीत्यादिगौतमादिवाक्ये मूलमनुसंधेयम् ॥ कन्यकायास्तु गर्भाधानादिचौलान्ता अष्टसंस्कारा अमन्त्रकाः । विवाहस्तु पुंस्त्र्युभयसंयोगे वर्णन्यायेन यथाविधि कार्यः ॥ **तथाच स्मृत्यन्तरम्**—स्त्रीणां चौलान्तसंस्काराः प्रकर्तव्या अमन्त्रकाः ॥ पुंस्त्रियोरुभयोर्योगो विवाहः स यथाविधीति ॥ ॥ **अथ संस्कारफलानि स्मृतिसंग्रहे**—निषेकाद्बैजिकं चैनो गार्भिकं चापमृज्यते ॥ क्षेत्रसंस्कारसिद्धिश्च गर्भाधानफलं स्मृतम् ॥ गर्भाद्भवेच्च पुंसूतेः पुंस्त्वस्य प्रतिपादनम् ॥ पुंसूतिः पुंसवनम् ॥ निषेकफलवज्ज्ञेयं फलं सीमन्तकर्मणः ॥

निषेको गर्भाधानम् ॥ गर्भाम्बुपानजो दोषो जातात्सर्वोऽपि नश्यति ॥ जाताज्ञातकर्मानुष्ठानात् ॥ अपिशब्दस्य दोषशब्देनान्वयः ॥ आयुर्वर्चोऽभिवृद्धिश्च सिद्धिर्व्यवहृतेस्तथा ॥ व्यवहृतिर्व्यवहारस्तस्य सिद्धिरित्यर्थः ॥ नामकर्मफलं त्वेतत्समुद्दिष्टं मनीषिभिः ॥ सूर्यावलोकनादायुरभिवृद्धिर्भवेद्ध्रुवा । निष्क्रमादायुःश्रीवृद्धिरप्युद्दिष्टा मनीषिभिः ॥ अन्नाशनान्मातृगर्भे मलाशी चापि शुद्ध्यति ॥ बलायुर्वर्चोवृद्धिश्च चूडाकर्मफलं स्मृतम् ॥ उपनीतेः फलं त्वेतद्द्विजतासिद्धिपूर्विका ॥ वेदाधीत्यधिकारस्य सिद्धिर्ऋषिभिरीरितेति ॥ यत्र फलश्रुतिर्न श्रूयते तत्र बैजिकगार्भिकैनोविनाशोऽपि फलं ज्ञेयमिति ॥

**तत्रादौ गर्भाधानं वक्तुं तदुपयोगि प्रथमतो निन्द्यमासादितच्छान्तिरजस्वलाधर्माद्या उच्यन्ते ॥ तत्रादौ प्रथमार्तवकालस्य शुभाशुभत्वविचारः ॥ धर्मनौकायाम्**—आर्त्तवौ पौषशुक्रोर्जमधुशुचिनभस्या अथो कृष्णसोमारार्कार्कीणां च वारा नहि शुभफलदाऽमा ३० के १२ षष्ठय ६ ष्ट ८ रिक्ताः ४।९।१४ ॥ रात्रिः संध्यापराह्णौ प्रतिपदपि सदा पौर्णमासी विशाखा ज्येष्ठाऽश्लेषात्रिपूर्वाभरणिशिवमघाः कृत्तिका संक्रमश्च ॥ १ ॥ शिवमार्द्रा ॥ कुस्थानं भर्तृगेहान्यदपि गृहम् ॥ निन्द्यमित्यर्थः ॥ ॥ **सर्वकर्मसु वर्ज्याणि**—अथो वैधृतिः पारिघार्धं पूर्वं वज्राङ्क ९ नाड्योऽङ्क ९ रस ६ रस ६ शरा ५ राम ३ नाड्यः क्रमेण ॥ व्याघाते गण्डयुग्मे नहि शुभफलदाः शूलविष्कम्भयोश्च पातः पापस्य लग्नं ग्रहणयुगजरन्नीलरक्ताम्बरं च ॥ २ ॥ जरज्जीर्णम् । पापलग्नानि १।५। ८।१०।११ कृष्णपक्षे तु ४ ॥ ॥ **सर्वकर्मसु वर्ज्यगण्डान्तादि** ॥ सार्पेन्द्रान्तिमभान्ततोऽब्धि ४ घटिकं पूर्णा ५।१०।१५।३० ततोऽभ्यर्धकं २ कीटा ४ न्त्या १२ लि ८ विरामतः कु १ घटिकं गण्डान्तमूर्ध्वाधरम् ॥ उत्पातान् ॥ ॥ **ऋतुमत्या रुधिरलक्षणम्**—अरुणाल्पभूरिरुधिरं कर्णं गरादष्ट नो शस्तं कश्चिदुवाच सर्वघटिका वज्रादिकानामपि ॥ ३ ॥ प्रसूतदोषे यदि दृश्यते तत्पुष्पं तदा शान्ति-

कक्कर्म कार्यम् ॥ विवर्जयेदेव तदेकशय्या यावद्रजोदर्शनमुत्तमेऽह्नि ॥ ४ ॥ शान्तिः स्वगृह्योक्तविधानतः स्यात् ॥ ॥ **प्रथमर्तौ कर्तव्यो विशिष्टाचारः** ॥ आद्यर्तुकाले पतिपुत्रवत्यः ॥ कृत्वाऽक्षतैरासनमल्पपूर्वं तस्मिंस्तु तां ता उपवेश्य दद्युः ॥ ५ ॥ ताम्बूलगन्धाभरणादि सर्वं स्रजं हरिद्रां कुसुमानि कुर्यात् ॥ नीराजनं वस्त्रगृहे सदीपे तां वासयेद्धर्षपुरःसरं च ॥ ६ ॥ स्त्रीभ्यो दद्यादागताभ्यः स्वशक्त्या मुद्गापूपं सैन्धवं कुङ्कुमादि ॥ एतत्सर्वं चन्द्रिकोक्तं मयोक्तमाद्ये एव स्यान्न भूयः कदापि ॥ ७ ॥ सैन्धवं लवणम् ॥ चन्द्रिका स्मृतिचन्द्रिका ॥ ॥ **द्वितीयाद्यृतुषु रजस्वलाधर्माः** ॥ दक्षो द्वितीयाद्यृतुकार्यजातमूचे च नारी रजसा प्रदुष्टा ॥ स्नानं प्रवासाञ्जनदन्तशोधनाभ्यञ्जनं खेचरदर्शनं च ॥ ८ ॥ दन्तशोधो दन्तधावनम् ॥ ताम्बूलगन्धौ मधुमांसमाल्यं स्वापं दिवा पात्रगतां च भुक्तिम् ॥ सा वर्जयेत्खर्परभोजनं च कुर्याच्च तोयं करतः पिबेच्च ॥ ९ ॥ कार्ष्णायसे पाणितलेऽथवा स्याद्भुजिः पृथिव्यां शयनं विधेयम् ॥ स्पर्शं हुताशस्य च गव्यभुक्तिं विवर्जयेन्मञ्चकपीठकादि ॥ १० ॥ ॥ **अनृतौ स्त्रीसङ्गनिषेधः** ॥ सङ्गं न कुर्यात्प्रथमर्तुपूर्वं कृते भवेद्ब्रह्मवधस्य दोषः ॥ पातित्यमप्यस्य भवेदवश्यमृतौ तु दोषो गमने न कोऽपि ॥ ११ ॥ ॥ **ऋतुकालविधिः** ॥ कालस्त्वृतोः षोडशरात्रितुल्यस्तत्रापि युग्मासु च संविशेत ॥ आद्याश्चतस्रः परिवर्जनीयाः श्रीयाज्ञवल्क्यो मुनिरित्यवोचत् ॥ १२ ॥ ऋतुमृतेऽपि जगौ किल गौतमो निन्दितं दिनमिहापि वर्जयेत् ॥ मैथुनं हरिदिनं त्रयोदशीं सर्वदा ऋतुगतां विवर्जयेत् ॥ १३ ॥ हरिदिनमेकादशी ॥ ॥ **अथ गर्भाधानमुहूर्तः** ॥ षष्ठीं गजौ पञ्चदशीं चतुर्थीं चतुर्दशीं मन्दकुजार्कवारान् ॥ हित्वा श्रुतौ रोहिणिहस्तमित्रपौष्णानिले वारुण उत्तरासु ॥ १ ॥ मृगाश्विनीपुष्यपुनर्वसूषु सङ्गः शुभः स्याद्वसुचित्रयोश्च ॥ केचित्तु मूले परिचिन्तनीयमित्यूचिरे मूलमलं विरोधात् ॥ २ ॥ अतोऽत्र कैश्चिदपि मूलमुपेक्ष्यमिति भावः ॥ समासु पुत्रो विषमासु कन्यका रात्रिष्ववश्यं भवतीति शास्त्रतः ॥ तत्रापि शस्ता खलु चोत्तरोत्तरा रात्रिस्तु

हित्वा प्रथमं चतुष्टयम् ॥ ३ ॥ चतुर्थरात्रावपि सङ्गमूचे कश्चिन्मुनीन्द्रो रजसो निवृत्तिः ॥ चेत्तर्हि गच्छेन्नहि चान्यथाऽतः सर्वासु यु-
ग्मासु सकृद्व्रजेन्ना ॥ ४ ॥ ना पुरुषः ॥ ॥ **क्वचिच्चतुर्थेऽपि दिने रजस्वलाशुद्धिः** ॥ दैवे पित्र्ये पञ्चमे शुद्धिरुक्ता स्त्रीणामारब्धं यदा
श्रौतकर्म ॥ स्नात्वा गोमूत्राक्ततोयेन शुद्धा घस्ने तुर्ये पुष्पिणी यज्ञकार्ये ॥ ५ ॥ युग्मासु कश्चित्प्रतिबन्ध आयादेकादशी श्राद्धदिने न
स स्यात् ॥ तर्हि त्ववश्यं हरिवासरादौ गच्छेन्न दोषोऽस्त्यृतुकाल एव ॥ ६ ॥ अन्यर्तुकाले प्रथमर्तुकाले सर्वाणि पर्वाणि विवर्जयेच्च ॥
भूता १४ ष्टमी दर्शदिन च पौर्णमासी च संक्रान्तिदिनं च पर्व ॥ ७॥ अनेकभार्यो युगपत्त्वथर्तौ व्रजेद्विवाहक्रमशस्त्वृतोर्वा ॥ सर्वासु
कार्यो ह्यृतुकालसङ्गो दोषान्वितः स्यादकृतौ स नूनम् ॥ ८ ॥ व्याधिं प्रवासं रिपुबन्धनं गतो दारांस्त्यजन्पर्वसु नास्ति दोषता ॥ वन्ध्यां
च वृद्धां मृतवत्सतायुतां कन्यामसद्वृत्तयुतां सुपुत्रिणीम् ॥ ९ ॥ वृद्धां गतरजस्काम् ॥ सुपुत्रिणीं बहुपुत्राम् ॥ ॥ **अथ गर्भाधान-
होमाऽकरणे प्रायश्चित्तम्** ॥ प्राजापत्यश्चेन्न होमः कृतः स्यात्तस्यां जातो नैव साधुत्वमायात् ॥ दत्वा तस्माद्गां सवत्सां द्विजाय
कुर्याद्भर्ता पुंसवाख्यं च कर्म ॥ १० ॥ गर्भाधानं शुक्रगुर्वस्तबाल्यवार्धक्ये स्यान्न्यूनमासेऽधिमासे ॥ सिंहस्थेज्ये याम्यसंज्ञेऽयनेपि ज्ञेयं
ह्यत्र प्राशनान्तेषु चैवम् ॥ ११ ॥ स्नानं त्वृतौ मैथुनतः प्रकुर्यात्पुमान्न जायाऽनृतुमैथुने तु ॥ शौचं च विण्मूत्रसमं प्रकुर्याज्जाया शुचिः
स्याच्छयनोत्थितैव ॥ १२ ॥ ॥ **अथात्र रजस्वलाशुद्धिविचारः** ॥ रात्रौ भवेच्चेज्जननादि तत्र रात्रेर्विभागद्वयमाद्यमेव ॥ दिनं
तृतीयः परवासरः स्यादिनोदयादर्धनिशः परस्तात् ॥ १३ ॥ पूर्वं दिनं चेति वदन्ति केचित्स्वदेशमार्गेण विधेयमेतत् ॥ या स्त्री भवेद्विं-
शतितः परस्ताद्रजस्वलाऽत्यष्टि १७ दिनावधि स्यात् ॥ रजस्वला स्नानत एव शुद्धा ह्यहीन्दुत १८।१९।२० स्त्वेकदिनादि १।२।३ शुद्धा
॥ १४ ॥ या विश्वघस्रा १३ त्परतो रजस्वला सा दिग्दिनान्तं १० शुचिराप्लवेन हि ॥ एकादशादित्रिषु ११।१२।१३ तु क्रमेण ह्येका-

दिना १।२।३ शुद्ध्यति पूर्ववत्तु–॥ १५ ॥ दिनस्य संख्या प्रथमाद्दिनात्स्याद्रोगाद्रजश्चेत्स्रवतीह नित्यम् ॥ तदा न दोषोऽस्ति रजोनिवृत्तौ कर्माधिकारो नहि चान्यथा स्यात् ॥ १६ ॥ तत्रापि कालेऽशुचिरेव नारी ॥ ॥ **रजस्वलयोः परस्परं स्पर्शे** ॥ रजस्वलान्यां रजसा युतां च ॥ स्पृशेदकामेन च कामतो वा भवेच्छुचिः स्नानत एव चाद्ये ॥ १७ ॥ शुद्धा द्वितीये खलु पञ्चगव्यसंप्राशनादन्नविवर्जनात्सा ॥ ॥ **वर्णपरत्वेन स्पर्शे शुद्धितारतम्यम्** ॥ चेद्ब्राह्मणी स्वेतरहीनवर्णां बुद्ध्या स्पृशेत्स्यात्क्रमतो विशुद्धा ॥ १८ ॥ कृच्छ्रार्धतः पादविहीनकृच्छ्रतः कृच्छ्रेण हीना द्विजकामिनीं स्पृशेत् ॥ बुद्ध्यैव कृच्छ्रस्य च पादतो भवेत्सर्वा विशुद्धा खलु हीनवर्णा ॥१९॥ चेत्क्षत्रिया वैश्यभवापि शूद्रीं स्पृशेत्स्वकामेन यदा स्वनीचाम् ॥ त्रिरात्रमन्नस्य विवर्जनेन शुद्धा भवेच्छास्त्रविनिर्णयोऽयम् ॥ २० ॥ वैश्या च शूद्री यदि चोत्तमां स्पृशेत् बुद्ध्यैकरात्रात्क्रमतस्त्रिरात्रतः ॥ शुद्धा त्वकामेन रजस्वलां स्पृशेच्छुद्धा तदा भोजनलोपमात्रतः ॥२१॥ ॥ **चाण्डाल्यादिस्पर्शे तु** ॥ अकामतश्चेद्यदि चान्त्यजादिं स्पृशेत्तदा पूर्ववदेव शुद्धिः ॥ अकामतस्तु प्रथमे त्रिरात्रमुपोषणं स्याद्द्विदिनं द्वितीये ॥ २२ ॥ दिने तृतीये किल चैकरात्राच्छुद्धा शुनःस्पर्शनतो द्विरात्रात् ॥ एकाहतो वा शुचितामियात्सा ह्युपोषणादित्यपि सर्वतः स्यात् ॥ २३ ॥ चाण्डालादिश्चेत्स्पृशेद्भोजने तु षड्रात्रस्योपोषणाच्छुद्धिरुक्ता ॥ बालापत्यायास्तु सर्वत्र शुद्धिः स्नानाद्भुक्तिश्चोपवासस्य चेति ॥ २४ ॥ प्रत्याम्नाया अथोच्छिष्टयोः स्पर्शे कृच्छ्र एव च ॥ ॥ **स्नानविधिश्च** ॥ स्नाने नैमित्तिके प्राप्ते नारी यदि रजस्वला ॥ पात्रान्तरिततोयेन स्नान कृत्वा व्रतं चरेत् ॥ २५ ॥ सिक्तमात्रा भवेदद्भिः साङ्गोपाङ्गा कथंचन ॥ न वस्त्रपीडनं कुर्यान्नान्यद्वासश्च धारयेत् ॥२६॥ ॥ **अथ रजस्वलास्नानम्** ॥ ब्रह्मानुराधाश्विनिसोमभेषु हस्तानिलाखण्डलवासवेषु ॥ विश्वार्यमर्क्षानिलभाद्रभेषु वराङ्गनास्नानविधिः प्रदिष्टः ॥ १ ॥ ॥ **रुग्णायां रजस्वलायां स्नानप्रकारः** ॥ रजस्वला रोगयुता नरश्च नैमित्तिके स्नान उपागते तु ॥ स्पृशेत्स्वकीयः किल नाव-

गाह्याचम्य स्पृशेत्तौ दशवाऽर्कवारम् ॥ २ ॥ अन्ते तु वासांसि जहात्वशुद्ध आचम्य शुद्धो भवतीति शास्त्रम् ॥ स्नायात्सचैलं यदि चेद्-रोगी स्पृष्ट्वा सचैलं जलमाविशेत्सः ॥ ३ ॥ ॥ **रजसोऽज्ञाने भाण्डादिस्पर्शे** ॥ यदाकदाचिद्विदिते न पुष्पे स्पृशेत भाण्डादि च या तु नारी ॥ स्पृष्टं त्यजेत्सा तु शुचिस्त्रिरात्रात् ॥ ॥ **उच्छिष्टकाले रजसितु** ॥ उच्छिष्टकाले रजसा च युक्ता ॥ ४ ॥ उपवासमधो-च्छिष्टे ऊर्ध्वोच्छिष्टे त्र्यहं क्षिपेत् ॥ ऊर्ध्वोच्छिष्टं भवेद्वान्तं मलोत्सर्गो द्वितीयकम् ॥ ५ ॥ इति ॥

**शान्तिकहोमाद्युक्तं अग्निचक्रं चिन्तामणौ**—सैका तिथिर्वारयुता कृता ४ प्ता शेषे गुणे ३ ऽग्रे० भुवि वह्निवासः ॥ सौ-ख्याय होमे, शशि १ युग्म २ शेषे प्राणार्थनाशौ दिवि भूतले च ॥ ॥ **आहुतिचक्रम्**—सूर्यभात्त्रिभे चान्द्रे सूर्यविच्छुक्रपङ्गवः ॥ चन्द्रारेज्यागुशिखिनो नेष्टा होमाहुतिः खले ॥ ॥ **अग्न्याहुतिमन्तरापि कानिचित्कर्माणि निर्णीतानि ज्योतिर्निबन्धे**—दुर्गा-होमविधौ विवाहसमये सीमन्तपुत्रोत्सवे गर्भाधानविधौ च वास्तुसमये विष्णोः प्रतिष्ठादिषु ॥ मौञ्जीबन्धनवैश्वदेवकरणे नैमित्तिकोपस्थितौ होमे नित्यभवे न दोष उदितश्चक्रं च वह्नेरपीति ॥ ॥ **शान्तिकपौष्टिकलक्षणम्** ॥ अस्पष्टपापनिदानकैहिकमात्रानिष्टनिवर्तकं पापाप्रयोजकं वैधं कर्म शान्तिकम् । क्षयादिहरदानादावतिप्रसङ्गं वारयितुं निदानकान्तम् । आमुष्मिकानिष्टनिवारके तं वारयितुमैहिकेति । प्रायश्चित्तं वारयितुं मात्रपदं । प्रायश्चित्तं त्वामुष्मिकानिष्टनिवर्तकमपि । अभिचारप्रत्यभिचारादौ वारयितुं पापाप्रयोजकमिति । तयोः फलतो हिंसात्वेन तदनुष्ठाने प्रायश्चित्तोक्तेश्च पापप्रयोजकत्वात् । अनिष्टनिवर्तकत्वं च शान्तिकस्य । तन्निदानपापनाशरूपसामग्रीविघटकत्वेन पुष्टि-फलकं वैधं कर्म पौष्टिकम् ॥ इति ॥ ॥ **रजोदर्शनशान्त्यादौ ग्रहमखस्यावश्यकता** ॥ **याज्ञवल्क्यः**—आदौ विनायकं पूज्य ग्रहांश्चैव विशेषतः ॥ कर्मणां फलमाप्नोति श्रियं चाप्नोत्यनुत्तमामिति ॥ **मात्स्ये**—विवाहोत्सवयज्ञेषु प्रतिष्ठादिषु कर्मसु ॥ नववे-

श्मप्रवेशे च नारीणा प्रथमार्तवे ॥ नवग्रहमखं कृत्वा ततः कर्म समारभेदिति ॥ **नारदसंहितायाम्**—निन्द्यर्क्षतिथिवारेषु यदि पुष्पं प्रदृश्यते ॥ तत्र शान्तिं प्रकुर्वीत ग्रहयज्ञपुरःसरमित्यादिवचनेषु ग्रहमखस्यावश्यकतोक्तेः देशकालकर्त्रैक्याच्च तन्त्रेण कर्तव्यत्वावगमात्सग्रहमखा रजोदर्शनशान्तिः कर्तव्या ॥

**अथ नारदोक्ता रजोदर्शनशान्तिः** ॥ निन्द्यर्क्षतिथिवारेषु यदि पुष्पं प्रदृश्यते ॥ अशुभं चेद्रजः स्त्रीणां निन्द्यस्थानं च वाससी ॥ तत्र शान्तिं प्रकुर्वीत ग्रहयज्ञपुरःसरम् ॥ सुमुहूर्ते तु संप्राप्ते कुर्याच्छान्तिं यथाविधि ॥ विधानं तत्र कर्तव्यमरिष्टघ्नं विशेषतः ॥ दंपत्योः प्रातरेव स्नान्मङ्गलस्नानमुत्तमम् ॥ पञ्चमे दिवसे स्नात्वा द्वाभ्यामप्यत्र मङ्गलैः ॥ तिलतैलेन शुद्धेन शुभकल्केन वा पुनः ॥ उष्णैश्च वारिभिः श्रेष्ठैः पञ्चपल्लवसंयुतैः ॥ आह्निकं विधिवत्कृत्वा विधानं नूनमाचरेत् ॥ शुभाचारसमायुक्तः श्रद्धया परया युतः ॥ तिथिश्रवणकं कुर्याच्छान्तिसंकल्पपूर्वकम् ॥ पुण्याहं वाचयेत्पश्चाद्ब्राह्मणैर्वेदपारगैः ॥ कृत्वाभ्युदयिकं श्राद्धमाचार्यं वरयेत्ततः ॥ स्थण्डिलं च ततः कृत्वा अग्निं संस्थापयेत्ततः ॥ ईशान्यां चतुरः कुम्भान्स्थापयेद्वारिपूरितान् ॥ पञ्चपल्लवसंयुक्तान्सर्वौषधिसमन्वितान् ॥ पञ्चरत्नसमायुक्तान्पङ्क्तिरूपेण साधयेत् ॥ कुम्भोपरि न्यसेत्पात्रं शालितन्दुलपूरितम् ॥ पात्रोपरि न्यसेद्वस्त्रं प्रतिकुम्भं पृथक्पृथक् ॥ सूर्यं च विन्यसेदाद्ये इन्द्रेन्द्राणी ततः परम् ॥ चतुर्थे विन्यसेद्विद्वान्प्रतिमां भुवनेश्वरीम् ॥ ततो ग्रहांश्च संपूज्य यथाविधि विधानतः ॥ सूर्यकुम्भं तु संस्पृष्ट्वा सूर्यसूक्तं जपेद्द्विजः ॥ रुद्रैकादशिनीं चापि जपेत्तत्र समाहितः ॥ प्रधानं पायसं प्रोक्तं सघृतं च सशर्करम् ॥ अष्टोत्तरसहस्रं तु शतमष्टोत्तरं तु वा ॥ प्रत्येकदेवतानां च जुहुयात्तिलसर्पिषा ॥ आकृष्णेनेति सूर्यं च इन्द्रं त्रातारमिन्द्रतः ॥ इन्द्राणीं तु तथादित्यैरास्नेति च सुमन्त्रतः ॥ ईश्वरीं भुवनस्याथ यजुषा श्रीश्च तेति च ॥ ग्रहहोमं ततः कृत्वा यथाविध्युक्तसंख्यया ॥ वंशपात्रं समानीय रक्तवस्त्रसमन्वितम् ॥ तत्र राशिं प्रकुर्वीत

तन्दुलानां नृपोत्तम ॥ तत्रोपरि न्यसेद्धैमीं कदलीं सूर्यदेवताम् ॥ वह्नेरुत्तरतो विद्वान्कदलीं स्थापयेच्छुभाम् ॥ हेम्नः पञ्चपलाढ्यां वा पलस्यापि सुलक्षणाम् ॥ पलार्धेन तदर्धेन तदर्धेन च वा पुनः ॥ सुस्तम्भाढ्यां सुपत्रां च कदलेन विराजिताम् ॥ दद्यात्ता विप्रवर्याय सवस्त्रां च सदक्षिणाम् ॥ अलङ्कृताय विदुषे श्रोत्रियाय कुटुम्बिने ॥ **दानमन्त्रस्तु**—सुपत्रे सुभगे देवि रम्भे भास्करवल्लभे ॥ रक्ष मां रजसो दोषादतिदुष्टाद्विगर्हितात् ॥ दानेनानेन देवेशः सविता विश्वतोमुखः ॥ प्रीतो भवतु मे सद्यो दोषं हरतु दुष्करं ॥ ततोऽभिषेचनं कार्यं दंपत्योश्च विशेषतः ॥ उच्चार्य वारुणान्मन्त्राञ्जलेन पञ्चपल्लवैः ॥ उद्धृत्योद्धृत्य तं सिंचेत्पुण्यमन्त्रैर्यथाविधि ॥ आपोहिष्ठात्रिभिर्मन्त्रैः पञ्चेन्द्रैः पञ्चवारुणैः ॥ भगप्रणेतरिदमापः समुद्राय पुनन्तु मा ॥ आप्याय पञ्चनद्येति शिरोमेति चतसृभिः ॥ देवस्यत्वात्रिभिश्चैवमभिषिंचेत्पुनः-पुनः ॥ शक्रादिदेवताः सर्वा ब्रह्मविष्णुपुरोगमाः ॥ दंपत्योः परिधानार्थमहते वाससी पुरा ॥ कर्मणोऽन्ते विसृज्यान्यद्वासश्च परिधार्यते ॥ आचार्याय ततो दद्यात्स्वर्णगोभूतिलांस्ततः ॥ ब्राह्मणेभ्यस्तथाऽन्येभ्यो दक्षिणाश्च विशेषतः ॥ सदक्षिणमनड्वाहं प्रदद्याद्रुद्रजापिने ॥ ब्राह्मणान्भोजयेत्पश्चाच्छर्कराघृतपायसैः ॥ यस्मिन्वाससि दृष्टं च रजो दुष्टं भयावहम् ॥ तद्वासो यत्नतस्त्याज्यं ततः शान्तिकरं हि तत् ॥ एवं यः कुरुते शान्तिं नारदोक्तप्रमाणतः ॥ तदनिष्टं तु सकलं सद्य एव विनश्यति ॥ इति नारदोक्तरजोदर्शनशान्तिक्रमः ॥ ॥

**अथ शान्तिप्रयोगानुक्रमः** ॥ शान्तिक्रमं प्रवक्ष्यामि नारदेन यथोदितम् ॥ गणेशं पूजयेदादौ स्वस्तिपुण्याहवाचनम् ॥ मातॄणां पूजनं कार्यं नान्दीश्राद्धमतः परम् ॥ आचार्यं वरयित्वाथ ब्रह्माणं गाणपत्यकम् ॥ सादस्यं ऋत्विजश्चैव जापकान्वरयेत्ततः ॥ दिग्रक्षणं ततः कार्यं पञ्चगव्यं यथाविधि ॥ भूमिं संपूज्य विधिवत्तत्र संस्कारपञ्चकम् ॥ स्थण्डिलेऽग्निं प्रतिष्ठाप्य कलशान्स्थापयेत्क्रमात् ॥ मूर्त्यग्न्युत्तारणं प्राणप्रतिष्ठा स्थापनार्चनम् ॥ ग्रहादीन्स्थापयित्वाथ स्थापयेद्रुद्रकुम्भकम् ॥ ब्रह्मासनं ततो दत्वा कारयेत्कुशकण्डिकाम् ॥ लिङ्गोक्तैर्नामम-

न्त्रैर्वा यथाविध्युक्तसंख्यया ॥ देवताग्रहहोमं च ग्रहपूजापुरःसरम् ॥ पूजा स्विष्टं नवाहुत्यो बलिं पूर्णाहुतिं तथा ॥ स्रवाश्चादिवितोकान्तं होमशेषं समापयेत् ॥ श्रेयःसंपादनं पश्चादभिषेको विसर्जनम् ॥ विप्राशिषः प्रगृह्णीयात्तान्मिष्टान्नेन भोजयेत् ॥ इति शान्तिप्रयोगानुक्रमः ॥

**अथाभ्युदयिकश्राद्धदेवतानिर्णयः** ॥ **अखिलकर्मणामाभ्युदयिकपूर्वकत्वात्तस्य च विधानप्राचुर्यात्तन्निर्णयः पूर्वं क्रियते** ॥ **तत्र कात्यायनसूत्रम्**—आभ्युदयिके प्रदक्षिणमुपचारः पूर्वाह्ण इति प्रकृत्य नान्दीमुखाः पितरः पितामहाः प्रपितामहा मातामहाः प्रमातामहाः वृद्धप्रमातामहाश्च प्रीयन्तामिति ॥ अत्रहि पूर्वाह्णरूपकालैक्यात्प्रयोगैक्येन षड्दैवतमाभ्युदयिकं श्राद्धमुक्तं। नान्दीमुखेभ्यः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो मातामहेभ्यः प्रमातामहेभ्यो वृद्धप्रमातामहेभ्यश्च स्वाहोच्यतामिति **छन्दोगसूत्रे वसिष्ठेन** तथैवोक्तम् ॥ **छन्दोगपरिशिष्टे कात्यायनेनापि**—आयुष्याणि च शान्त्यर्थं जप्त्वा तत्र समाहितः ॥ षड्भ्यः पितृभ्यस्तदनु भक्त्या श्राद्धमुपक्रमेदित्यनेन षड्दैवतमाभ्युदयिकश्राद्धमुक्त्वा ॥ प्रागग्रेष्वथ दर्भेषु आद्यमामन्त्र्य पूर्ववत् ॥ आपः क्षिपेन्मूलदेशेऽवनेनिक्ष्वेति निस्तिलाः ॥ द्वितीयं च तृतीयं च मध्यदेशाग्रदेशयोः ॥ मातामहप्रभृतींस्तु एतेषामेव वामतः ॥ इत्यनेन प्रयोगैक्यं तत्र प्रदर्शितम् । नहि प्रयोगभेदे पित्रादीनां वामतो मातामहादीनामवनेजनं संभवति । स्वेन भर्त्रा समं भुङ्क्ते माता श्राद्धं सुधासमम् ॥ पितामही च स्वेनैव स्वेनैव प्रपितामहीति **बृहस्पतिनापि** स्वभर्त्रादिभिः सहैव प्राशस्त्येन मातृभ्यः श्राद्धदानमुक्तम् । न योषिद्भ्यः पृथग्दद्यादवसानदिनादृते ॥ स्वभर्तृपिण्डदानाच्च तृप्तिरासां यतः स्मृतेति **छन्दोगपरिशिष्टे कात्यायनेन** मातृभ्यः पृथक्त्वेन श्राद्धप्रदानस्य प्रतिषिद्धत्वात् , पिण्डपितृयज्ञवत्स्त्रीभ्यश्चेत्यन्वष्टकावद्विशेषोपदेशाभावाच्च। सूत्रे विशेषोपदेशाभावेऽपि—अन्वष्टकासु वृद्धौ च गयायां च क्षयेहनि ॥ मातुःश्राद्धं पृथक्शस्तमन्यत्र पतिना सहेति **स्मृत्यन्तरे विशेष** उक्त एवेतिचेन्न । नान्दीमुखाः पितामहा इत्या-

दिसूत्रविरोधात् षड्भ्यः पितृभ्य इति । प्रागग्रेष्वथ दर्भेषु इति पूर्वोक्तकात्यायनवचनविरोधात् । कर्षूसमन्वितं मुक्त्वा तत्राद्यं श्राद्धषोडशम् ॥ प्रत्याब्दिकं च शेषेषु पिण्डाः स्युः षडिति स्थितिरिति **छन्दोगपरिशिष्टे कात्यायनवचनविरोधाच्च** । कर्षूसमन्वितमन्वष्टकाश्राद्धम् । शेषेषु उक्तव्यतिरिक्तेषु श्राद्धेषु उक्तव्यतिरिक्तत्वेनाभ्युदयिकेऽपि षट्पिण्डा इत्यर्थः । तस्माद्वाजसनेयिभिः छन्दोगैश्च षड्दैवतमेवैकप्रयोगमाभ्युदयिकं श्राद्धं कर्तव्यम् । **यत्तु**—अन्वष्टकासु वृद्धौ चेति स्मृत्यन्तरं तच्छाखान्तरविषयम् ॥ **यानि तु**—मातृश्राद्धं तु पूर्वं स्यात्पितॄणां तदनन्तरम् ॥ ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतमिति ॥—मातृश्राद्धं तु पूर्वेद्युः कर्माहनि तु पैतृकम् ॥ मातामहं चोत्तरेद्युर्वृद्धौ श्राद्धत्रयं स्मृतमित्यादि**हेमाद्र्यादिनिबन्धधृतैः शातातपगार्ग्यादिस्मृतिवाक्यैः** कालभेदाद्भिन्नप्रयोगाणि त्रीणि श्राद्धान्युक्तानि तानि येषां सूत्र आभ्युदयिके विशेषतः पार्वणत्रयविधिरस्ति पार्वणद्वयत्रययोर्विध्यभावो वास्ति तच्छाखाविषयाणि ॥ **यदपि**—अलाभे भिन्नकालानां नान्दीश्राद्धत्रयं बुधः ॥ पूर्वेद्युर्वै प्रकुर्वीत पूर्वाह्णे मातृपूर्वकमिति **वृद्धमनुवचनं** तच्छाखान्तरविषयम् । यत्रहि मात्रादित्रयविधिः कालत्रयेऽस्ति तत्रैवानुकल्पतया कालैकत्वेन विधिर्युक्तः । नहि **कात्यायनसूत्रादौ** कालत्रये मात्रादिश्राद्धत्रयविधिरस्ति ॥ **कोकिलमतानुसारिभिरपि** षड्दैवतमेवाभ्युदयिकश्राद्धं कर्तव्यं ॥ तत्रैकं पितृपार्वणं मातृमातामहोद्देशेनापरमिति तेषां विशेषः ॥ **पुत्रिकापुत्रस्याप्येवम् । तदाह छन्दोगपरिशिष्टे कात्यायनः**—मातुः प्रथमतः पिण्डं निर्वपेत्पुत्रिकासुतः ॥ द्वितीयं तु पितुस्तस्यास्तृतीयं तु पितुःपितुरिति ॥ नान्दीमुखाः पितरः पितामहा इत्यादिना **भगवताचार्येण** पित्रादीनामनुलोमक्रमो विहितः । **बौधायनसूत्रे छन्दोगसूत्रे** चाप्येवम् ॥ माता पितामही चैव तथैव प्रपितामही ॥ पित्रादयस्त्रयश्चैव मातुःपित्रादयस्त्रयः ॥ एते चैवार्चनीयाः स्युः पितरोऽभ्युदये द्विजैरित्याश्वलायनानामप्यनुलोमक्रमएवेति **पारिजातस्मृतिकौस्तुभा-**

दयः ॥ यत्तु—नान्दीमुखे विवाहे च प्रपितामहपूर्वकम् ॥ नाम संकीर्तयेद्विद्वानन्यत्र पितृपूर्वकमिति **वृद्धवसिष्ठवचनं** प्रतिलोमक्रमविधायकं तद्येषां सूत्रे वृद्धिश्राद्धेऽनुलोमप्रतिलोमक्रमयोरनुपदेशः प्रतिलोमक्रमोपदेशो वास्ति तच्छाखाविषयम् ॥ ॥ आथर्वणानां तु पिण्डपितृयज्ञदर्शश्राद्धादौ सर्वत्र प्रतिलोमक्रम एव तद्गृह्य उक्तोस्ति ॥ **छन्दोगपरिशिष्टे कात्यायनः**—स्वपितृभ्यः पिता दद्यात्सुतसंस्कारकर्मसु ॥ पिण्डानोद्वहनात्तेषां तस्याभावे तु तत्क्रमादिति ॥ ओद्वहनादित्याङभिविधौ । तेन तेषां सुतानामुद्वाहं विवाहमभिव्याप्य पिता स्वपितृभ्यः स्वपित्रादिभ्यो मातामहादिभ्यश्च पिण्डान्दद्यात् । तदुपलक्षिताभ्युदयिकं श्राद्धं कुर्यादित्यर्थः । उद्वाहोऽत्र पूर्वोऽभिप्रेतः । द्वितीये तु पितरि जीवत्यपि स्वकर्तृकत्वात् ॥ ॥ **द्वितीयोद्वाहादौ स्वस्याधिकारः** ॥ **तथाच स्मृतिः**—नान्दीश्राद्धं पिता कुर्यादाद्ये पाणिग्रहे पुनः ॥ अतऊर्ध्वं प्रकुर्वीत स्वयमेव तु नान्दिकमिति ॥ प्रथमविवाहे कर्त्रन्तराभावे वर एवाभ्युदयिकं श्राद्धं कुर्यादिति **प्रयोगपारिजाते** । तत्राऽजीवत्पितृकः स्वपित्रादीनुद्दिश्याऽभ्युदयिकं कुर्यात् ॥ तस्याभावे तु तत्क्रमादिति । तस्य पितुरभावे पितृव्याचार्यमातुलादिर्यः संस्कारं कुर्यात्स तत्क्रमात्तं पितरमारभ्य संस्कार्यस्य यः पितॄणां क्रमस्तेन क्रमेण दद्यादित्यर्थः ॥ जीवदसंनिहितपितृकत्वे तु संस्कार्यस्य पितृपित्रादिभ्यो मातामहादिभ्यश्च दद्यादिति । आभ्युदयिकश्राद्धकर्तुर्मातर्येव जीवन्त्यां मृतायास्तस्याः सपत्न्याः सपत्नीकत्वगुणकीर्तनं । एवं पितामहीप्रपितामह्योरन्यतरजीवने उभयोर्जीवनेच । सपत्न्यभावे च न सपत्नीकत्वगुणकीर्तनम् । मातामहे जीवति तत्पार्वणलोपः ॥ **तदुक्तं**—मातृवर्गे पितृवर्गे तथा मातामहस्य च ॥ जीवेत्तु यदि वर्गाद्यस्तं वर्गं तु परित्यजेदिति तदा पितृपार्वणेनैवाभ्युदयिकश्राद्धसिद्धिः ॥ पितृजीवनेऽप्येवं प्रसक्ते विशेष उक्तः **छन्दोगपरिशिष्टे कात्यायनेन**—वृद्धौ तीर्थे च संन्यस्ते ताते च पतिते सति ॥ येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुत इति ॥ अत्र वृद्धौ तीर्थेचेत्यनेकनिमित्तसमावेशे वाक्यभेदादर्धमन्तर्वेदीति-

वद्वृद्धितीर्थादिपदैर्जीवत्पित्रधिकारिकं श्राद्धमात्रं लक्ष्यते । येभ्यएवेति यच्छब्दोपबद्धैवकारस्य यदेव विद्यया करोतीतिवद्वीप्सार्थकत्वाद्येभ्यो येभ्यः पिता दद्यात्तेभ्यस्तेभ्यः पुत्रोऽपि दद्यादित्यर्थः । तेन जीवत्पितृकः स्वपितुः पित्रादीन्मातामहादींश्चोद्दिश्याभ्युदयिकं श्राद्धं कुर्यात् ॥ मृतमातामहस्यापि जीवत्पितुर्न स्वमातामहाद्युद्देशः । पितृपितामहयोर्जीवने तु पितामहस्य पित्रादीन् मातामहादींश्चोद्दिश्याभ्युदयिकं श्राद्धं कुर्यात् ॥ **तदुक्तं विष्णुस्मृतौ**—पितरि जीवतिसति यः श्राद्धं कुर्यात्स येषां पिता कुर्यात्तेषां कुर्यात्पितरि पितामहे च जीवति येषां पितामह इति । येषां पितामह इत्यत्र कुर्यात्तेषां कुर्यादित्यस्यानुषङ्गः ॥ पित्रादीनां त्रयाणां जीवने तु पितृपार्वणलोपः । पितरि पितामहे प्रपितामहे च जीवति नैव कुर्यादिति विष्णुस्मृतेरित्युक्तं **स्मृतिकौस्तुभे** ॥ यत्तु **कल्पतरौ हलायुधभाष्येचोक्तं**—त्रयाणां जीवनेऽपि प्रपितामहस्य पित्रादीन्मातामहादींश्चोद्दिश्याभ्युदयिकं श्राद्धं कुर्यात् ॥ पिता पितामहश्चैव तथैव प्रपितामहः ॥ त्रयो ह्यश्रुमुखाः ह्येते पितरः संप्रकीर्तिताः ॥ तेभ्यः पूर्वतरा येच प्रजावन्तः सुखैषिणः ॥ ते तु नान्दीमुखा नान्दी समृद्धिरिति कथ्यत इति **ब्रह्मपुराण**वचनस्य जीवत्पित्रादित्रिककर्तृकवृद्धिश्राद्धविषयत्वात् ॥ **यत्तु**—पितरि पितामहे प्रपितामहे जीवति नैव कुर्यादिति विष्णुस्मृतिवचनं तज्जीवत्पित्रादित्रिककर्तृकतीर्थश्राद्धादिविषयमिति । तन्न । अस्य **ब्रह्मपुराण**वचनस्य तत्प्रकरणपठितत्वात्प्रौष्ठपदीश्राद्धविषयत्वेन **हेमाद्यादिभि**र्निर्णीतत्वात् । अतस्तस्य जीवत्पित्रादित्रिककर्तृकाभ्युदयिकश्राद्धविषयत्वाभावात्**स्मृतिकौस्तुभो**क्तमेव साधु ॥ ॥ **व्युत्क्रममृते तु श्राद्धप्रकारो विष्णुस्मृतावभिहितः**—यस्य पिता प्रेतः स्यात्स पित्रे पिण्डं निधाय पितामहात्परं द्वाभ्यां दद्याद्यस्य पिता पितामहश्च प्रेतौ स्यातां स ताभ्यां पिण्डं दत्वा पितामहपितामहाय दद्याद्यस्य पितामहः प्रेतः स्यात्स तस्मै पिण्डं निधाय प्रपितामहात्परं द्वाभ्यां दद्यादिति ॥ अजीवत्पितृपितामहो जीवत्पितामहः पिता पितृप्रपितामहतत्पितॄनुद्दिश्य पितृपार्वणं कुर्यात् । नान्दीमुखपित

नान्दीमुखपितुःपितामह नान्दीमुखपितुःप्रपितामह इदं वः पाद्यमिति प्रयोगः । एवं प्रपितामहमात्रजीवने पितृपितामहतत्पितामहानुद्दिश्य पितृपार्वणं कुर्यात् । नान्दीमुखपितः नान्दी० पितामह नां० पितुः प्रपितामह इदं व इति प्रयोगः ॥ पितृप्रपितामहयोर्जीवनेतु पितामहं प्रपितामहस्य पितृपितामहौ चोद्दिश्य पितृपार्वणं कुर्यात् । नान्दीमुखपितामह ना० प्रपितामहस्य पितः इदं व इति । पितामहप्रपितामहयोर्जीवने तु पितरं पितामहस्य पितामहप्रपितामहौ चोद्दिश्य तत्पार्वणं कुर्यात् ॥ नान्दी० पितः नां० पितामहस्य पितामह नां० पितामहस्य प्रपितामह इदं व इति। एवमजीवन्मातामहस्य प्रमातामहजीवने नां० मातामह नां० मातामहस्य पितामह नां० मातामहस्य प्रपितामह इदं व इति प्रयोगः ॥ वृद्धप्रमातामहजीवने तु नां० मातामह नां० प्रमातामह नां० मातामहस्य प्रपितामह इदंव इति ॥ तयोरुभयोर्जीवनेतु नां० मातामह नां० मातामहस्य पितामह नान्दी० माता० प्रपितामह इदं व इति ॥ इतिश्रीमद्विवेद्युद्धवात्मजानन्तदेवकृतेरुद्रकल्पद्रुमे आभ्युदयिकश्राद्धदेवतानिर्णयः ॥

**अथाश्वलायनगृह्यपरिशिष्टानुसारेण स्मृतिकौस्तुभकृता निर्णीत आभ्युदयिकश्राद्धनिर्णयः** ॥ तत्र तावत्सुतसंस्काराङ्गभूतवृद्धिश्राद्धे अजीवत्पितृमातृमातामहः पिता स्वपित्राद्युद्देश्यकं पार्वणत्रयं कुर्यात् । मातर्येव जीवन्त्यां तत्पार्वणलोपः तदा पार्वणद्वयेनैवाभ्युदयिकश्राद्धसिद्धिः । मातृमातामहजीवने पितृपार्वणेनैव तत्सिद्धिः ॥ अजीवत्पितृप्रपितामहो जीवत्पितामहः पिता पितृप्रपितामहतत्पितॄनुद्दिश्य पितृपार्वणं कुर्यात्। नान्दीमुखपितः नान्दीमुखपितुःपितामह नान्दीमुखपितुःप्रपितामह इदं वः पाद्यमिति प्रयोगः ॥ एवं प्रपितामहमात्रजीवने पितृपितामहतत्पितामहानुद्दिश्य पितृपार्वणं कुर्यात् । नान्दीमुखपितः नान्दीमुखपितामह नान्दीमुखपितुःप्रपितामह इदं व इति प्रयोगः ॥ पितामहप्रपितामहयोर्जीवने पितरं पितामहस्य पितामहप्रपितामहौ चोद्दिश्य तत्पार्वणं कुर्यात् । नान्दी-

सुखपितः नान्दीमुखपितामहस्य पितामह नान्दीमुखपितामहस्य प्रपितामह इदं वः पाद्यमिति प्रयोगः ॥ एवं जीवन्मातृकस्य पितामह्या एव जीवने नान्दीमुखिमातः नान्दीमुखिपितामहि नान्दीमुखिपितुःप्रपितामहि इति प्रयोगः ॥ पितामहीप्रपितामहीजीवने तु नान्दीमुखिमातः नान्दीमुखिपितामहस्य पितामहि नान्दीमुखिपितामहस्य प्रपितामहि इदंव इति। इदंच पितामहीप्रपितामहीसपत्न्योर्मृतयोर्दैवतात्वसंभवे ताभ्यां सहैव पार्वणं कार्यम्। एवं मातामहपार्वणे मुख्यमातामह्यादिषु जीवतीषु तत्सपत्नीभिः सपत्नीकत्वगुणोपपत्तिः । नतु सापत्नमात्रा पार्वण-निर्वाहः परिशिष्टविरोधात् ॥ एवमजीवन्मातामहस्य प्रमातामहजीवने नान्दीमुखमातामह नान्दीमुखमातामहस्य पितामह नान्दीमुखमाता-महस्य प्रपितामह इदं व इति प्रयोगः ॥ वृद्धप्रमातामहजीवने तु नान्दीमुखमातामह नान्दीमुखप्रमातामह नान्दीमुखमातामहस्य प्रपिता-मह इदं व इति ॥ तयोरुभयोर्जीवने तु नान्दीमुखमातामह नान्दीमुखमातामहस्य पितामह नान्दीमुखमातामहस्य प्रपितामह इदं व इति ॥ अथ जीवत्पितृकोऽजीवन्मातृमातामहश्च पिता मातृमातामहपार्वणद्वयमेव सुतसंस्कारारम्भे कुर्यात्। केचित्तु सुतसंस्काराङ्गवृद्धिश्राद्धेऽपि जीवत्पितृको मृतमातृमातामहश्च पिता येभ्य एव पिता दद्यादिति वाक्यबलेन पितुः पितृपार्वणं-बह्वृचपरिशिष्टबलेनच स्वमात्रादिपार्वणं समुच्चयेन कुर्यादित्याहुस्तन्न। तस्माज्जीवत्पिता सुतसंस्कारेषु मातृमातामहयोः कुर्यात्तस्यां जीवन्त्यां मातामहस्यैव कुर्यादिति बह्वृचपरि-शिष्टविरोधात्। मातर्यपि जीवन्त्यां मातामहपार्वणमेव कुर्यात्। मातामह एव जीवति मातृपार्वणमेव देवरहितं कुर्यात्। मातृश्राद्धं तु युग्मैः स्याददैवं प्राङ्मुखैः पृथगिति श्राद्धहेमाद्युदाहृतवचनेन पूर्वाह्णादिकालभेदेन पार्वणत्रयानुष्ठानपक्षे पार्वणान्तरासाहित्येन क्रियमाणे मातृश्राद्ध इवोक्तविधमातृश्राद्धेऽपि तादृशे अदैवत्वबोधनात् ॥ त्रिष्वपि जीवत्सु पितुर्मात्रादीनुद्दिश्य पार्वणत्रयं कुर्यात्। बाधकपरिशि-ष्टाऽप्रवृत्तौ विष्णुस्मृतेर्निःशङ्कप्रवृत्तेः। एवं स्वस्य द्वितीयादिविवाहाङ्गत्वेनाभ्युदयिकं कुर्वन् अजीवत्पितृकः स्वमात्रादीनुद्दिश्य पार्वणत्रयं

कुर्यात् । मातरि जीवन्त्यां तत्पार्वणलोपः । मातामहे जीवति तत्पार्वणलोपः । जीवत्पितृकस्तु मृतमातृमातामहोऽपि स्वपितुर्मात्रादीनुद्दिश्य पार्वणत्रयं कुर्यात् । नान्दीमुखिपितुर्मातः नान्दीमुखिपितुःपितामहि नान्दीमुखिपितुःप्रपितामहीति मातृपार्वणे प्रयोगः ॥ एवं पितृमातामहपार्वणयोरपि प्रयोगो बोध्यः ॥ जीवत्पितृपितामहस्तु पितामहस्य मात्रादीन् पित्रादीन् मातामहादींश्चोद्दिश्याभ्युदयिकं कुर्यात् तदोक्तवाक्येषु पितुरित्यस्य स्थाने पितामहस्य निर्देशः । त्रयाणां जीवनेतु पितृपार्वणलोपः । सुतसंस्कार इव स्वीयमात्राद्युद्देश्यकपार्वणद्वयेनैवाभ्युदयिकश्राद्धसिद्धिः । नित्यवन्नान्दीश्राद्धविधिनैव लोपशास्त्रसहकृतेन तत्प्रापणादिति **स्मृतिकौस्तुभे** ॥ ॥ **अन्येत्वाहुः** ॥ त्रयाणां जीवनेऽपि प्रपितामहस्य मात्रादीन्पित्रादीन्मातामहादींश्चोद्दिश्य श्राद्धं कुर्यात् । दद्यात्रिभ्यः परेभ्यस्तु जीवेच्चेत्रितयं यदीति वृद्धिश्राद्धं प्रकृत्य **निगमपरिशिष्टोक्तेः** ॥ **यत्तु**—पितरि पितामहे प्रपितामहे च जीवति कुर्यादिति **विष्णुवच**स्तज्जीवत्पित्रादित्रिककर्तृकतीर्थश्राद्धादिविषयम् । एवमेव **हलायुधभाष्ये कल्पतरौ**च ॥ एवं प्रथमविवाहेऽपि कर्त्रन्तराभावे **पारिजातोक्त**रीत्या वर एव नान्दीश्राद्धं कुर्वन्नजीवत्पितृकः स्वपित्रादीनुदिश्य, जीवत्पितृकादिस्तु पितुःपितामहादेर्वा पित्रादीनुद्दिश्य पार्वणत्रयं कुर्यात् । तत्राऽजीवत्पितृकस्य न स्वस्येति संबन्धकीर्तनम् । ससंबन्धिकत्वमहिम्नैव पित्रादिषु विशेषसिद्धेः । अदृष्टार्थतत्कीर्तनस्य नान्दीश्राद्धे निषेधात् । अतएव परकीयपित्राद्युद्देश्यकवृद्धिश्राद्धविशेषलाभार्थस्य पितुरित्यादेः संबन्धकीर्तनस्य न निषेधः । यदा पितृव्यमातुलादिः कन्याविवाहं कुमारस्योपनयनमुपनीतस्य प्रथमविवाहं वा कुर्यात्तदा संस्कार्यस्याजीवत्पित्रादीनुद्दिश्य पार्वणत्रयं कुर्यात् । सोदरज्येष्ठभ्रातुः प्रयोगे न विशेषः । तदीयपित्रादीनां संस्कार्यपित्रादिभिरभेदात् । सापत्नज्येष्ठस्तु मातृपार्वणे नान्दीमुखिसंस्कार्यस्य मातः पितामहि प्रपितामहि इति प्रयोगं कुर्यात् । पितृव्यादिस्तु सर्वपार्वणेषु संस्कार्यस्येति सविशेषप्रयोगं कुर्यात् । संस्कार्यस्य जीवत्पितृकत्वे संस्कार्यपितुः पित्रादीनुद्दिश्य

पार्वणत्रयं कुर्यात् । तस्य संस्कार्यपितुर्जीवत्पितृकत्वे तदीयमात्रादीन्मातामहादींश्चोद्दिश्य पार्वणत्रयं कुर्यात् । मात्रादिजीवननिमित्तो विशेषः पूर्ववद्बोध्यः । मुख्यस्य यथाप्राप्तकार्येऽमुख्यकर्तृणां प्रवृत्त्यौचित्यात् ॥ ॥ **परकीयकन्योद्वाहादौ विचारः** ॥ एवं—आत्मीकृत्य सुवर्णेन परकीयां तु कन्यकाम् ॥ धर्म्येण विधिना दातुः समगोत्रोऽपि युज्यत इति **स्कान्दवचनात्**—अनाथां कन्यकां दत्वा सदृशे वाऽधिके वरे ॥ द्विगुणं फलमाप्नोति कन्यादाने यदीरितम् ॥ इति वचनाद्वा केनापि हेतुना कन्यां दातुमशक्नुवता दानाधिकारिणा त्वं कन्यादानं कुर्विति प्रार्थनाद्वा यः परकीयां कन्यां दातुमिच्छति सोऽपि संस्कार्यकन्यायाः पित्रादीनुद्दिश्य तस्या जीवत्पितृकत्वे तदीयमात्राद्युद्देश्यकपार्वणानुष्ठानं यथासंभवं कुर्यात् ॥ ॥ **दत्तककन्योद्वाहे नान्दीविचारः** ॥ दत्तककन्यायास्तु विवाहं कुर्वन् प्रतिग्रहीता स्वपित्रादीनुद्दिश्यैव पितृवन्नान्दीश्राद्धं कुर्यात् । दत्तककन्याया असंभवे शङ्काच निराकृता **दत्तकनिर्णये स्मृतिकौस्तुभे** । दत्तकपुत्रस्तु यदि लब्धबीजिरिक्थस्तदोभौ पितरौ पितामहौ प्रपितामहौ चोद्दिश्य कुर्यात् । एवं मातृपार्वणे मातामहपार्वणे च बोध्यम् ॥ यदितु बीजिरिक्थग्रहणेऽधिकार्यन्तरसंभवात्—गोत्ररिक्थे जनयितुर्न भजेद्दत्रिमः सुत इति शास्त्रादलब्धतद्रिक्थस्तदा प्रतिगृहीतृकुलसंबद्धपित्राद्युद्देश्यकमेव कुर्यात् ॥ पिण्डदो रिक्थहारी च पूर्वाभावे परःपर इति पिण्डदानरिक्थग्रहणसाहचर्यस्यौत्सर्गिकत्वात् ॥ एवंचाऽनेकसंस्कार्यविषयानेकसंस्काराणां सहानुष्ठानं यत्र न निषिद्धं तदङ्गभूताभ्युदयिकश्राद्धदेवतानामभेदश्च । तत्र—गणशः क्रियमाणानामेकं स्यान्मातृपूजनम् ॥ वृद्धिश्राद्धं च तन्त्रं स्याद्धोमस्तु स्यात्पृथक्पृथगिति **स्मृत्यर्थसारवचनानुसारितन्त्रानुष्ठानं** बोध्यम् ॥ इति कल्पद्रुमे-आभ्युदयिकश्राद्धदेवतानिर्णयः ॥

**अपिण्डकं नान्दीश्राद्धम्** ॥ **उक्तं सपिण्डमाभ्युदयिकश्राद्धं । तत्प्रसङ्गादिदानीं क्वचित्पिण्डदाननिषेधोऽभि-**

धीयते । **स्मृतिरत्नावल्यां स्मृत्यन्तरे**—विवाहमौञ्जीबन्धोर्ध्वं वर्षार्धं वर्षमेव वा ॥ पिण्डान्सपिण्डा नो दद्युः सपिण्डीकरणं विनेति ॥ **तत्रैव**—विवाहव्रतचूडासु वर्षमर्धं तदर्धकम् ॥ पिण्डदानं न कर्तव्यं ज्ञातीनामृद्धिमिच्छतेति ॥ **तथा तत्रैव**—वृद्धिमात्रे तथाऽन्यत्र पिण्डदाननिराक्रियेति । **कार्ष्णाजिनिरपि**—मौञ्जीबन्धाद्विवाहाच्च वर्षार्धं वर्षमेव वा । पिण्डान्सपिण्डा नो दद्युः सपिण्डीकरण विनेति । अत्र सपिण्डीकरणग्रहणं तत्पूर्वभाविनां प्रेतश्राद्धानामुपलक्षणार्थम् ॥ **विपक्षे निन्दापि श्रूयते**—वृद्धौ पिण्डान्विनिर्वाप्य पुनः पिण्डान्ददाति यः ॥ गोत्रवृद्धिविघाती स्यान्नरकं प्रतिपद्यत इति ॥ ॥ **सपिण्डकश्राद्धप्रतिप्रसवः** ॥ एवं **सर्वत्र निषेधे प्राप्ते क्वचिदपवादमाह बृहस्पतिः**—महालये गयाश्राद्धे मातापित्रोः क्षयेऽहनि ॥ कृतोद्वाहोऽपि कुर्वीत पिण्डनिर्वपणं सुत इति ॥ महालयशब्देनात्र कालविशेषो देशविशेषश्चेत्युभयमपि गृह्यते विशेषाश्रवणादिति **स्मृतिरत्नावलीकारः** । अपिशब्दात्कृतोपनयनादिर्बोद्धव्यः ॥ **दिवोदासीये बृहस्पतिः**—तीर्थे संवत्सरे प्रेते पितृयागे महालये ॥ पिण्डदानं प्रकुर्वीत युगादिभरणी उभे इति ॥ **स्मृतिरत्नावल्याम्**—पित्रोः क्षयाहे यज्ञे च पितृयज्ञे महालये ॥ गयायां पिण्डदानस्य न कदाचिन्निराक्रियेति ॥ यज्ञः सोमयागः । पितृयज्ञश्चातुर्मास्यान्तर्गता पित्र्येष्टिः पिण्डपितृयज्ञश्च । वचनमन्तरेण पिण्डदाननिवृत्तिर्नास्तीत्यभिहितं । विनावचनं पिण्डदानाकरणे प्रतिषेध उच्यते—पिण्डैर्विना नहि श्राद्धमपवादादृते क्वचित् ॥ पैशाचमन्यथा तत्स्याद्विधिहीने कृते कृतमिति ॥ ॥

**तर्पणे तिलनिषेधः** ॥ **प्रसङ्गात्तर्पणे क्वचित्तिलनिषेधोऽप्यभिधीयते** । **तत्र मरीचिः**—विवाहे चोपनयने चौले सति यथाक्रमम् ॥ वर्षमर्धं तदर्धं च नेत्याहुस्तिलतर्पणमिति ॥ वृद्धौ सत्यां च तन्मासि नेत्याहुस्तिलतर्पणमिति **स्मृत्यर्थसारः** ॥ **गार्ग्यः**—भानौ भौमे त्रयोदश्यां नन्दाभृगुमघासु च ॥ पिण्डदानं मृदा स्नानं न कुर्यात्तिलतर्पणमिति ॥ **मरीचिः**—सप्तम्यां रविवारे च गृहे

जन्मादिने तथा ॥ भृत्यपुत्रकलत्रार्थी न कुर्यात्तिलतर्पणम् ॥ पक्षयोरुभयो राजन्सप्तम्यां निशि संध्ययोः ॥ विद्यापुत्रकलत्रार्थी तिलान्सप्तसु वर्जयेदिति ॥ **स्कान्दे काशीखण्डे**—रवौ शुक्रे त्रयोदश्यां सप्तम्यां निशि संध्ययोः ॥ श्रेयोर्थी ब्राह्मणो जातु न कुर्यात्तिलतर्पणमिति ॥ अयंच तर्पणे तिलप्रतिषेधो वाजसनेयिभिन्नपरः । ततोऽपसव्यं तिलमिश्रमिति **कात्यायनीयस्नानसूत्रे** तिलमिश्रमित्यनेनैव तिलप्राप्तौ—एकैकस्य तिलैर्मिश्रांस्त्रींस्त्रीन्दद्याजलाञ्जलीनिति सूत्रे पुनस्तद्ग्रहणं स्मृत्युक्तप्रतिषिद्धदिनेष्वपि तर्पणे तिलनिवृत्तिर्माभूदित्येतदर्थमिति **हरिहरादिभिर्व्याख्यातत्वात्** ॥ कठाः कण्वाश्च जाबाला ये च वाजसनेयिनः ॥ सतिलं तर्पणं कुर्युर्निषिद्धेषु दिनेष्वपीति **मरीचिवचनाच्च** । काण्वजाबालयोर्वाजसनेयिगणान्तःपातित्वाद्वाजसनेयिग्रहणेनैव तदुपादाने सिद्धे पुनस्तदुपादानमत्यादरार्थम् । अयंच तिलतर्पणे प्रतिप्रसवः शुक्लतिलविषयः ॥ श्रेयोर्थी ब्राह्मणो जातु न कुर्यात्तिलतर्पणमिति तिलान्प्रतिषिध्य तत्रैवाग्रे—यदि कुर्यात्ततः कुर्याच्छुक्लैरेव तिलैः कृतीति **स्कान्दपुराणात्** ॥ ॥ **तीर्थतर्पणेऽपि तिलनिषेधो न प्रवर्तते**—तीर्थे तिथिविशेषे च गयायां प्रेतपक्षके ॥ निषिद्धेऽपि दिने कुर्यात्तर्पणं तिलमिश्रितमिति **त्रिस्थलीसेतौ** वचनात् ॥

**अथामश्राद्धम्**—आमश्राद्धं प्रकर्तव्यं वृद्धौ नान्दीमुखे सदा ॥ पाकेन वा बहिःशाले सोदनं बदरं दधीति **श्राद्धकाशिकायां याज्ञवल्क्येन** वृद्धावपि पाक्षिकामश्राद्धविधानात्—आपद्यनग्नौ तीर्थे च प्रवासे पुत्रजन्मनि ॥ आमश्राद्धं प्रकुर्वीत भार्यारजसि संक्रमे इति **त्रिस्थलीसेतौ कात्यायनेन** चापदि पुत्रजन्मनि चामश्राद्धविधानात्तदिह निरूप्यते ॥ **तत्र हेमाद्रौ पराशरस्मृतिविष्णुपुराणवराहपुराणेषु**—असमर्थोऽन्नदानस्य धान्यमामं स्वशक्तितः ॥ प्रदद्यात्तु द्विजादिभ्यः स्वल्पामपि च दक्षिणामिति ॥ अस्यायमर्थः—पक्वान्नाभावे श्राद्धयोग्यान्नप्रकृतिभूतं यवगोधूमतण्डुलादिधान्यमेव विश्वान्देवान्पितॄंश्चोद्दिश्य पक्वान्नवत्त्यक्त्वा निमन्त्रितद्विजेभ्यः

समर्पयेत् ॥ तत्र धान्यस्य साक्षादनदनीयत्वाद्भोजनाभावे तत्संबन्धिनो धर्मा लुप्तप्रयोजना अपोशनादयो लुप्यन्ते । **तदुक्तम्**—तृप्तिप्रश्नोऽवगाहश्च जुषप्रश्नो यथासुखम् ॥ आमश्राद्धे भवेन्नैतदपोशानं च पञ्चममिति ॥ अवगाहोऽङ्गुष्ठनिवेशनम् । अश्यत इत्याशः । धान्यविशेषणेन चाशशब्देनैतत्सूच्यते यत्स्वस्थानं गत्वा तैर्ब्राह्मणैस्तद्धान्यमशनयोग्यं कृत्वा भोक्तव्यं नतु कार्यान्तरे विनियोक्तव्यमिति । अन्यथाऽऽशमित्यनर्थकं स्यात् ॥ ॥ **अस्य कर्तृविशेषेऽपवादमाह व्यासः**—हिरण्यमामं श्राद्धीयं लब्धं यत्क्षत्रियादितः ॥ यथेष्टं विनियोज्यं स्याद्भुञ्जीयाद्ब्राह्मणः स्वयमिति ॥ क्षत्रियादितः क्षत्रियवैश्यमूर्धावसिक्तादिभ्यः ॥ अत्र यद्यपि यथेष्टं विनियोज्यमिति सामान्येनोक्तं तथापि श्राद्धादौ न विनियोज्यम् । देवतोद्देशेन त्यक्तस्य पुनर्देवतान्तरोद्देशेन त्यागस्यायुक्तत्वात् । अतो लौकिके भोजनक्रियादौ वाऽलौकिकेऽपि श्रुतिस्मृतिविहिते दक्षिणादानादौ नित्यनैमित्तिके विनियोज्यमित्यवगन्तव्यम् ॥ ॥ **लब्धद्रव्यस्य वर्णपरत्वेन विनियोगः** ॥ ब्राह्मणात्तु लब्धं स्वयमेवेति नियम्यते । अत्र यावत्प्रतिगृहीतं तावत्स्वयमेव भोज्यमिति नियमो न मन्तव्यः किंतु तृप्तिपर्यन्तं स्वयं भुक्त्वाऽन्यस्य श्राद्धशेषोचिता प्रतिपत्तिः कर्तव्येति निश्चेतव्यम् ॥ शूद्रात्तु प्रतिगृहीतं कस्मिंश्चिदपि नित्यनैमित्तिके न विनियोज्यं किंतु स्वकीये परकीये वा भोजन एवोपयोज्यमित्युक्तं **हेमाद्रौ षट्त्रिंशन्मते**—आमं शूद्रस्य यत्किंचिच्छ्राद्धिकं प्रतिगृह्यते ॥ तत्सर्वं भोजनायालं नित्ये नैमित्तिके नचेति ॥ ॥ **अत्र श्राद्धे प्रदेयधान्यपरिमाणमाह व्यासः**—आमं ददंस्तु कौन्तेय दद्यादामं चतुर्गुणमिति । चतुर्गुणमित्येकैकब्राह्मणतृप्तिपर्याप्तान्नसिद्धिसमर्थाद्धान्याच्चतुर्गुणं तावत्त्वेकैकस्मै ब्राह्मणाय दद्यादित्यर्थः ॥ ॥ **अशक्तौ पक्षान्तरमपि तेनैवोक्तम्**—आमं ददद्धि कौन्तेय आमं तद्द्विगुणं भवेत् ॥ त्रिगुणं चतुर्गुणं वापि नत्वेकगुणमर्पयेदिति ॥ अत्रोत्तरोत्तरपक्षस्य मुख्यत्वम् ॥ ॥ **एवमप्यशक्तौ सममप्यामं दद्यादित्युक्तं त्रिस्थलीसेतौ** ॥ ॥ **आमश्राद्धेतिकर्तव्य-**

माह **हेमाद्रौ व्यासः**—सिद्धान्नेन विधिर्यः स्यादामश्राद्धेऽप्यसौ विधिः ॥ आवाहनादि सर्वं स्यात्पिण्डदानं च भारत ॥ दद्याच्च द्विजातिभ्यः शृतं वा यदि वाऽशृतम् ॥ तेनाग्नौकरणं कुर्यात्पिण्डांस्तेनैव निर्वपेदिति ॥ आवाहनादीत्यादिशब्देनार्घोऽपि गृह्यते ॥ **तथाच तत्रैव भविष्यपुराणे**—आवाहनं भवेत्कार्यमर्घदानं तथैवच ॥ एष एव विधिर्यत्र यत्र श्राद्धं प्रवर्तत इति ॥ **हेमाद्रौ कूर्मपद्मपुराणयोः**—आमेन वर्तयेन्नित्यं ब्राह्मणो व्यसनान्वितः ॥ तेनाग्नौकरणं कुर्यात्पिण्डांस्तेनैव निर्वपेदिति ॥ **त्रिस्थलीसेतौ उशना**—आमश्राद्धं यदा कुर्याद्विधिज्ञः श्राद्धदस्तदा ॥ हस्तेऽग्नौकरणं कुर्याद्ब्राह्मणस्य विधानत इति ॥ **यत्तु**—आमश्राद्धमनङ्गुष्ठमग्नौकरणवर्जितम् ॥ तृप्तिप्रश्नविहीनं तु कर्तव्यं मानवैर्ध्रुवमिति **श्राद्धकाशिकायामाचारतिलके** आमश्राद्धेऽग्नौकरणनिषेधकं वचनं । **यच्च**—आवाहनाग्नौकरणं विकिरं पात्रपूरणम् ॥ तृप्तिप्रश्नं न कुर्वीत आमे हेमे कदाचनेति तत्रैव **धर्मप्रदीपे** आवाहनाग्नौकरणादिनिषेधकवचन तत्तीर्थप्राप्तिनिमित्तामश्राद्धविषयम् ॥ ॥ **पिण्डदाने पक्षान्तरमुक्तं हेमाद्रौ षट्त्रिंशन्मते**—आमश्राद्धं यदा कुर्यात्पिण्डदानं कथं भवेत् ॥ गृहपाकात्समुद्धृत्य सक्तुभिः पायसेन वा । पिण्डान्दद्याद्यथालाभं तिलैः सह विमत्सर इति ॥ अत्र गृहपाकात्सक्तुपायसानां यथालाभं व्यवस्था ॥ **यत्तु**—आमेन पिण्डान्दद्याद्यो विप्रान्पक्वेन भोजयेत् ॥ पक्वेन कुरुते पिण्डान्विप्रेष्वामं प्रयच्छति ॥ तावुभौ मनुजौ प्रोक्तौ नरकार्हौ न संशय इति वचनं तदमावास्याश्राद्धविषयमित्युक्तं **श्राद्धकाशिकायां त्रिस्थलीसेतौच** ॥ ॥ **विकिरादिकमप्यामद्रव्येणैव कर्तव्यं** ॥ **तदाह प्रचेताः**—आमश्राद्धप्रदः पिण्डांस्तथाग्नौकरणं च यत् ॥ तद्दद्यात्तत्र तेनैव यत्किंचिच्छ्राद्धिकं भवेदिति । यत्किंचिदन्यदपि विकिरादि तदपि ते नैव कर्तव्यमित्यर्थः ॥ ॥ **आमश्राद्धे केषांचिन्मन्त्राणामूहोऽपि कार्यः । तदाह मरीचिः**—आवाहने स्वधाकारे मन्त्रा ऊह्या विसर्जने ॥ अन्यकर्मण्यनूह्याः स्युरामश्राद्धविधिः स्मृत इति ॥ आवाहने

पितॄन्हविषे अत्तवे इति मन्त्रे अत्तव इतिपदस्थाने स्वीकर्तवे इति पदोहः । स्वधाकारे नमोवः पितर इषे इति मन्त्रे इषेपदस्थाने आमद्रव्यायेत्यूहः ॥ एतच्च वाजसनेयिभिन्नविषयं ॥ वाजसनेयिशाखास्वस्य मन्त्रस्याभावात् ॥ विसर्जने वाजेवाज इतिमन्त्रे तृप्ता इति क्तप्रत्ययस्थाने तृप्यतेति लोट्प्रत्ययोहः कार्यः ॥ यद्यपि पूयति वा एतदृचोक्षरं यदेनदूहतीति ऋच्यूहो निषिद्धस्तथापि वाचनिकोऽयमूहः । एवमिदमन्नमित्येवमादाविदमाममित्यूहः कार्यः । अन्यकर्मणि तु विष्णोहव्यꣳरक्षेत्यादौ नोह इति वाक्यार्थः । वस्त्रदक्षिणादि आमश्राद्धेऽपि देयमेव । सिद्धान्नेन विधिर्यः स्यादामश्राद्धेऽप्यसौ विधिरिति वचनात् ॥ इत्यामश्राद्धम् ॥

**अथ हेमश्राद्धम्** ॥ **तत्र हेमाद्रौ व्यासः**—द्रव्याभावे द्विजाभावे प्रवासे पुत्रजन्मनि ॥ हेमश्राद्धं प्रकुर्वीत यस्य भार्या रजस्वलेति ॥ ॥ **हेमश्राद्धस्य क्वचिदपवादः षट्त्रिंशन्मते**—अन्नाभावे द्विजाभावे प्रवासे पुत्रजन्मनि ॥ हेमश्राद्धं प्रकुर्वीत वर्जयित्वा क्षयेऽहनीति ॥ इह स्मृत्यन्तरपुराणान्तरेषु यत्रयत्रामश्राद्धं विहितं तत्रतत्र विधीयमानं हेमश्राद्धमामद्रव्यासंभव एवेति व्याख्येयम् ॥ **अत एव मरीचिः**—आमान्नस्याप्यभावे तु श्राद्धं कुर्वीत बुद्धिमान् ॥ धान्याच्चतुर्गुणेनैव हिरण्येन सुरोचिषेति । एवंह्यामद्रव्यहेम्नोरष्टदोषदुष्टो न विकल्पः । अन्नप्रकृतिभूतत्वेन श्राद्धविधावन्तरङ्गस्य धान्यस्य सतिसंभवे बहिरङ्गाद्धेम्नः पूर्वमुपादानं चानुगृहीतं भवति । पुत्रजन्मनिमित्ते पक्वामयोरन्नयोः सद्भावेऽपि हेमश्राद्धमेवेति **हेमाद्रिः** ॥ **अतएव संवर्तः**—पुत्रजन्मनि कुर्वीत श्राद्धं हेम्नैव बुद्धिमान् ॥ न पक्वेन न चामेन कल्याणान्यभिकामयन्निति ॥ धान्याच्चतुर्गुणेनैवेति । आमश्राद्धे यावदेकैकस्मै ब्राह्मणाय धान्यं दीयते तावतश्चतुर्गुणं यावता हिरण्येन लभ्यते तावदेकैकस्मै ब्राह्मणाय हेमश्राद्धे हिरण्यं देयमित्यर्थः ॥ इह ये शक्तितारतम्यालोचनया आमश्राद्धे धान्यद्वैगुण्यादिपक्षाः प्रतिपादितास्तदनुसारेणैव हेम्नोऽपि प्रमाणभेदोऽनुक्त एवार्थाद्गम्यते ॥ **धर्मस्त्वाह**—आमं तु द्विगुणं प्रोक्तं हेम तद्वच्चतुर्गुणम् ॥ अन्ना-

भावे द्विजातीनां ब्राह्मणस्य विशेषत इति । एकैकब्राह्मणतृप्तिपर्याप्तान्नसमर्थं धान्यं यावता हिरण्येन लभ्यते तावतश्चतुर्गुणं हेम एकैकस्मै ब्राह्मणाय देयमित्यर्थः ॥ अनेन द्विगुणधान्याद्द्विगुणं हेम प्रदेयमित्युक्तं भवति ॥ ॥ **शूद्रश्राद्धे प्रतिगृहीतं धान्यंनित्यनैमित्तिके न विनियोज्यमित्यभिधायोक्तं षट्त्रिंशन्मते**—हिरण्यं तत्पुनः श्राद्धे गृहीतं नैव दुष्यति ॥ तेन नित्यक्रियाः कार्या हिरण्यं नान्नमुच्यत इति ॥ **पिण्डदानप्रकारोऽपि भविष्ये**—गृहपाकात्समुद्धृत्य सक्तुभिः पायसेन वा । पिण्डदानं प्रकुर्वीत हेमश्राद्धे कृते सदेति ॥ **षट्त्रिंशन्मते**—नामन्त्रणाग्नौकरणं विकिरो नैव दीयते ॥ तृप्तिप्रश्नोऽपि नैवात्र कर्तव्यः केनचिद्भवेदिति ॥ अत्रामहेमश्राद्धयोः प्रयोगस्तु निषिद्धपदार्थवर्जं विशेषविधिविशिष्टः पूर्वोक्तएव ज्ञेयः ॥ विशेषविधिनिषेधयोः शेषाभ्यनुज्ञानफलकत्वात् ॥ इति हेमश्राद्धम् ॥

**अथ सांकल्पिकश्राद्धम्**—यद्यपि दधिबदराक्षतमिश्राः पिण्डा इति सूत्रे पिण्डपदोपादानस्यापिण्डकव्युदासार्थत्वेन हेतुना संकल्पश्राद्धं कात्यायनानां न भवतीत्यभिहितं प्राक्, तथापि—समग्रं यस्तु शक्नोति कर्तुं नैवेह पार्वणम् ॥ अपि संकल्पविधिना काले तस्य विधीयत इति **हेमाद्रौ संवर्तेनाशक्तंप्रति** संकल्पश्राद्धविधानात् ॥ अथवा वृद्ध्यनन्तरं पिण्डदाननिषेधं प्रकृत्य वृद्धिमात्रे तथान्यत्र पिण्डदाननिराक्रियेति **स्मृतिरत्नावलीधृतवचनेन** वृद्ध्यनन्तरभाविनि वृद्धावपि पिण्डदानस्य प्रतिषिद्धत्वात्तादृशस्थले पिण्डनिषेधान्यथानुपपत्त्याऽभियुक्तैः संकल्पश्राद्धानुष्ठानस्यैवौचित्येन स्वीकारात् ॥ **अथवा**—अनग्निको यदा विप्र उच्छिन्नाग्निरथापिवा ॥ तदा वृद्धिषु सर्वासु संकल्पश्राद्धमाचरेदिति ॥ **हेमाद्रौ षट्त्रिंशन्मते**—अनग्निकोच्छिन्नाग्निकर्तृकासु सर्वासु वृद्धिषु संकल्पश्राद्धस्यैव विहितत्वात् ॥ **अथवा**—पिण्डनिर्वपणं कुर्यान्न वा कुर्याद्विचक्षणः ॥ वृद्धिश्राद्धे महाबाहो कुलधर्ममवेक्ष्य हीति **भविष्यवचने** सपिण्डकस-

कल्पश्राद्धयोः कुलाचारपरत्वेन विधानात्तदिह निरूप्यते ॥ **तत्र हेमाद्रौ संवर्तः**—पात्रभोज्यस्य चान्नस्य त्यागः संकल्प उच्यते ॥ तत्प्रयुक्तो विधिर्यस्तु यत्तेन व्यपदिश्यते ॥ तावन्मात्रेण संबद्धं श्राद्धं सांकल्पमुच्यत इति ॥ **भविष्ये**—अग्नौकरणमर्घ्यं चावाहनं चावनेजनम् ॥ पिण्डश्राद्धे प्रकुर्वीत पिण्डहीने निवर्तते ॥ पिण्डनिर्वापरहितं यत्र श्राद्धं विधीयते ॥ स्वधावाचनलोपोऽस्ति विकिरस्तु न लुप्यते ॥ अक्षय्यदक्षिणास्वस्तिसौमनस्यं यथास्थितिरिति ॥ **धर्मप्रदीपेऽपि**—आवाहनं तथार्घं वै अग्नौकरणमेव च ॥ अक्षय्यापोऽस्य विकिरं पिण्डहीने विवर्जयेदिति ॥ **तथा**—नात्राग्नौकरणं कुर्यान्नार्घदानं कथंचन ॥ न पिण्डकल्पना श्राद्धे विकिरान्नं न चोत्सृजेदिति ॥ **स्मृत्यर्थसारे**—त्यजेदावाहनं चार्घमग्नौकरणमेव च ॥ पिण्डाश्च विकिराक्षय्ये श्राद्धे संकल्पसंज्ञके इति ॥ **अत्रापस्तम्बसूत्रेऽपि**—संकल्पश्राद्धेऽर्घावाहनाग्नौकरणपिण्डस्वधावाचनानि वर्जयेदिति ॥ पिण्डहीनश्राद्धशब्दः संकल्पश्राद्धपर्यायः । अर्घत्वाविशेषात्पादार्घोऽप्यत्र निषिद्ध एवेति केचित् । क्वचिदावाहनसाहचर्यात्क्वचिदग्नौकरणसाहचर्याच्च हस्तार्घ एव निषिद्धः । पादार्घस्तु भवत्येवेत्यपरे । उदाहृतवाक्येषु समन्त्रस्यावाहनस्य प्रतिषेधो नत्वावाहनस्वरूपस्य ॥ तदभावे देवपितृसंबन्धाभावप्रसङ्गादिति **हेमाद्रिः** । अन्येतु वाचनिकत्वादावाहनस्यैव निषेधं मन्यन्ते नत्वावाहनमन्त्रमात्रस्य । शिष्टाचारोऽप्येवम् । विकिराक्षय्योदकदानयोर्विहितप्रतिषिद्धत्वाद्विकल्पः ॥ **स्मृतिरत्नावल्याम्**—आवाहनाग्नौकरणं विकिरं पात्रपूरणम् ॥ पिण्डहीने न कर्तव्यमेतच्छ्राद्धे चतुष्टयमिति ॥ **श्राद्धकाशिकायां** त्विदं वचनमन्यथा पठित्वा वचनान्तरं श्राद्धान्तरविषयत्वेन व्यवस्थितमस्ति ॥ **तथाहि**—पिण्डहीनेऽपि कर्तव्यं विकिरं पात्रपूरणम् ॥ अग्नौकरणमर्घं चेत्येतच्छ्राद्धे चतुष्टयम् ॥ वर्जने पिण्डहीनेऽपि सर्वमर्घादिकं भवेत् ॥ कुशान्स्थाप्य स्वधाकुर्यात्क्षिपेदग्नौ जलेऽपि वेति ॥ **यत्तु**—संकल्पं तु यदा कुर्यादिति वचनं तच्छ्राद्धान्तरविषयमिति ॥ **अत्र स्मृतिरत्नावलीकाराः**—केचित्पिण्डहीनेऽपि कर्तव्यमिति पठन्ति तद्वच-

नान्तरविरुद्धत्वादुपेक्षणीयम् ॥ **तथाहि** ॥ अर्घं दत्वा न यः कुर्यात्पिण्डदानावनेजने ॥ आसुरं तद्भवेच्छ्राद्धं निराशैः पितृभिर्गतैरिति ॥ **तथान्यत्रापि**—संकल्पं तु यदा कुर्यान्न कुर्यात्पात्रपूरणम् ॥ नावाहनाग्नौकरणं पिण्डांस्तत्र न निर्वपेदिति । तस्मात्सत्सु पिण्डेष्वावाहनादिचतुष्टयमनुष्ठेयं नान्यथेत्याहुः ॥ **प्रयोगरत्नकारादयो**ऽप्येतन्मतावलम्बनेन प्रयोगोपनिबन्धनं कृतवन्तः शिष्टा अप्येवमाचरन्तीति । अग्नौकरणनिषेधात् पात्रालम्भस्यापि निषेधएव । हुतशेषदानानन्तरं हि तस्य विहितत्वात् । अमृते अमृतं जुहोमीति मन्त्रलिङ्गात् हुतशेषस्यैव परामर्शात् हुतशेषसंस्कारोऽयमिति तदभावे पात्रालम्भाभाव इति **हलायुधभाष्यात्** । उष्णᳪस्विष्टमन्नं दद्यादित्यनेन पात्रालम्भोत्तरकालं परिवेषणविधानेन हुतशेषव्यतिरिक्तभोजनार्थान्नसंस्काराभावाच्चेति दिक् ॥

**अथ संकल्पश्राद्धप्रयोग उच्यते**—यद्यपि नान्दीमुखाः पितरः पितामहाः प्रपितामहाः मातामहाः प्रमातामहा वृद्धप्रमातामहाश्च प्रीयन्तामिति **कात्यायनसूत्रे** नान्दीमुखेभ्यः पित्रादिभ्यः पूर्वोक्तेभ्यश्च स्वाहोच्यतामिति **छन्दोगसूत्रे** षड्भ्यः पितृभ्यस्तदनु भक्त्या श्राद्धमुपक्रमेदिति **छन्दोगपरिशिष्टे** कात्यायनेन च पार्वणद्वयात्मकमेवाभ्युदयिक श्राद्धमुक्तं तथापि बहूनामाचारात् कात्यायनादिसूत्रविरुद्धेनापि पार्वणत्रयेण सांकल्पेन विधिनाभ्युदयिकश्राद्धप्रयोग उच्यते ॥ ॥ तत्रादावग्निमता गृह्येऽग्नौ निर्णेजनान्ताः पञ्चमहायज्ञाः कर्तव्याः ॥ निरग्निनातु प्रसवोत्थानपरिशिष्टपृष्ठोदिविविधिभ्यामुक्तेन विधिना कर्तव्याः । अस्यासंभवे यज्ञपार्श्वपरिशिष्टोक्तेन स्मृत्यन्तरोक्तेन वा शाकलेन विधानेन कर्तव्याः ॥ ततो गणपतिपूजनाद्यायुष्यजपान्तं कर्म कर्तव्यं तद्यथा ।

१ अयमाभ्युदयिकविषयः शास्त्रार्थेऽग्रेतनप्रयोगेषु व्यवधानहानायात्र सगृहीतोऽपि तत्तत्प्रसङ्गे यथास्थानं धीधनैरूह्यः ।

अथरजोदर्शनशान्तिसंवलितोगर्भाधानप्रयोगः ॥ श्रीः ॥ अथसर्वेषां श्रौतानांगार्ह्याणां स्मार्तानांचकर्मणां साधारणा-
ङ्गानां गणेशपूजनादीनांपद्धतिरुच्यते ॥ महत्सुकर्मसु पूर्वेद्युरल्पेषुतुतस्मिन्नहनिपूर्वाह्णे निर्णेजनान्तपञ्चमहायज्ञान्तकृत-
नित्यक्रियेण सपत्नीकेनससंस्कार्येणयजमानेनस्वासनेप्राङ्मुखेनोपवेशनम् ॥ पादौहस्तौचप्रक्षाल्य द्विराचमनं त्रिःप्राणा-
नायम्य देशकालौसंकीर्त्य करिष्यमाणामुककर्माङ्गतयामङ्गलस्नानंकरिष्यइतिसंकल्प्य यथाचारंमङ्गलवाद्यघोषपुरःसरं-
वृद्धसुवासिनीभिर्नीराजनपूर्वकं सर्वौषधीसर्वगन्धचूर्णयुक्तेन तिलामलककल्कादिना सुगन्धतैलेनवोद्वर्त्यस्नानंकार्यम् ॥
इदमेवमङ्गलस्नानमित्यभिधीयते ॥ ततोद्विराचमनम् ॥ यजमानः अहतेवाससीपरिधत्तेअमौत्रधौतेवा ॐपरिधास्यैइति-
मन्त्रेण परिधाय ॥ ॐयशसामेत्युत्तरीयं ॥ पत्नीत्वमन्त्रं ॥ प्रतिवस्त्रंस्मार्तविधिनाद्विराचमनं ॥ पत्न्यास्तुयथोक्तम् ॥ वा-
रणादियज्ञियदारुनिर्मितसोत्तरच्छदे शुद्धपीठे बद्धत्रिकच्छेन यज्ञोपवीतिना दक्षिणपार्श्वेबद्धशिखेन शिखाभिन्नबद्धकेशेन-
यजमानेनप्राङ्मुखेनोपवेशनं तद्दक्षिणतःपत्न्या तद्दक्षिणतःसंस्कार्येणच ॥ सव्येकुशोपग्रहः ॥ करद्वयेवाकुशोपग्रहः ॥
पवित्रोपग्रहोवा ॥ स्मार्तविधिनाद्विराचम्य त्रीन्प्राणायामान्कृत्वा त्रिमात्रंप्रणवमुच्चार्य शान्तिपाठादिजप्त्वा लक्ष्मीनारा-
यणादीन्प्रणमेत् ॥ ॥ अथशान्तिपाठमन्त्राः ॥ ॐआनोभद्राःक्रतवोयन्तुविश्वतोदब्धासोऽअपरीतासऽउद्भिदः ॥ दे-
वानोयथासदमिद्वृधेऽअसन्नप्रायुवोरक्षितारोदिवेदिवे ॥ १ ॥ देवानाम्भद्रासुमतिर्ऋजूयतान्देवानाᳬरातिरभिनोनिवर्त्त-
ताम् ॥ देवानाᳬसख्यमुपसेदिमाव्वयन्देवानऽआयुःप्रतिरन्तुजीवसे ॥ २ ॥ तान्पूर्व्वयानिविदाहूमहेव्वयम्भगम्मित्रमदि-

तिन्दक्षमस्त्रिधम् ॥ अर्य्यमणम्वरुण ँ सोममश्विनासरस्वतीनः सुभगामयस्करत् ॥ ३ ॥ तन्नोवातोमयोभुवातुभेषजंत-
न्मातापृथिवीतत्पिताद्यौः ॥ तद्ग्रावाणः सोमसुतोमयोभुवस्तदश्विनाशृणुतन्धिष्ण्यायुवम् ॥ ४ ॥ तमीशानञ्जगतस्तस्थु-
षस्पतिन्धियञ्जिन्वमवसेहूमहेवयम् ॥ पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धः स्वस्तये ॥ ५ ॥ स्वस्तिनऽइन्द्रोवृद्ध-
श्रवाः स्वस्तिनः पूषाविश्ववेदाः ॥ स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिः स्वस्तिनोबृहस्पतिर्दधातु ॥ ६ ॥ पृषदश्वामरुतः पृश्नि-
मातरः शुभंय्यावानोविदथेषुजग्मयः ॥ अग्निजिह्वामनवः सूरचक्षसोविश्वेनोदेवाऽअवसागमन्निह ॥ ७ ॥ भद्रङ्कर्णेभिः
शृणुयामदेवाभद्रम्पश्येमाक्षभिर्यजत्राः ॥ स्थिरैरङ्गैस्तुष्टुवा ँ सस्तनूभिर्व्यशेमहिदेवहितंयदायुः ॥ ८ ॥ शतमिन्नुशरदोऽ-
अन्तिदेवायत्रानश्चक्राजरसन्तनूनाम् ॥ पुत्रासोयत्रपितरोभवन्तिमानोमध्यारीरिषतायुर्गन्तोः ॥ ९ ॥ अदितिर्द्यौरदि-
तिरन्तरिक्षमदितिर्म्मातासपितासपुत्रः ॥ विश्वेदेवाऽअदितिः पञ्चजनाऽअदितिर्जातमदितिर्जनित्वम् ॥ १० ॥ तम्प-
त्नीभिरनुगच्छेमदेवाः पुत्रैर्भ्रातृभिरुतवाहिरण्यैः ॥ नाकङ्गृभ्णानाः सुकृतस्यलोकेतृतीयेपृष्ठेऽअधिरोचनेदिवः ॥ ११ ॥
ऋचंवाचमित्यध्यायः ॥ द्यौः शान्तिरन्तरिक्ष ँ शान्तिः पृथिवीशान्तिरापः शान्तिरोषधयः शान्तिः ॥ वनस्पतयः शान्ति-
र्विश्वेदेवाः शान्तिर्ब्रह्मशान्तिः सर्व ँ शान्तिः शान्तिरेवशान्तिः सामाशान्तिरेधि ॥ १ ॥ यतोयतः समीहसेततोनोऽ-
अभयङ्कुरु ॥ शन्नः कुरुप्रजाभ्योभयन्नः पशुभ्यः ॥ २ ॥ सुशांतिर्भवतु ॥ ॥ ॐश्रीमन्महागणाधिपतयेनमः ॥ लक्ष्मी-

नारायणादीन्नमस्कृत्य सुमुखश्चेत्यादिपद्यपठनं ॥ देशकालौसंकीर्त्य ॥ ममआत्मनःश्रुतिस्मृतिपुराणोक्तफलावाप्तयेअस्मि-
न्पुण्याहेअस्याःममभार्यायाःप्रथमरजोदर्शनसमयेमासतिथिवारनक्षत्रयोगकरणलग्नहोरावस्त्रदर्शनस्थानदिनभागवर्णानांम-
ध्येयद्यद्विरुद्धफलंतत्तद्दोषपरिहारार्थंपुत्रपौत्रादिसंततिप्राप्त्यर्थं तथाचजन्मराशेःसकाशान्नामराशेःसकाशाद्येकेचिद्विरुद्धस्था-
नस्थितक्रूरग्रहास्तैःसूचितंसूचयिष्यमाणंचयत्सर्वारिष्टंतद्विनाशार्थं सर्वदातृतीयैकादशशुभस्थानस्थितशुभफलप्राप्त्यर्थंग-
णपतिदुर्गाक्षेत्रपालादिसहितआदित्यादिनवग्रहसूर्यइंद्रइंद्राणीभुवनेश्वरीदेवताप्रीत्यर्थंनारदोक्तांसग्रहमखांरजोदर्शनशान्तिं
तथाअस्याःममभार्यायाः क्षेत्रगर्भयोःसंस्कारार्थं प्रतिगर्भसमुद्भवैनोनिबर्हणद्वाराश्रीपरमेश्वरप्रीत्यर्थं गर्भाधानाख्यकर्म-
चतन्त्रेणाहंकरिष्ये ॥ तदंगत्वेन स्वस्तिपुण्याहवाचनंमातृकापूजनं वसोर्धारापूजनं आयुष्यमन्त्रजपं नान्दीश्राद्धं चाहं-
करिष्ये ॥ तत्रादौनिर्विघ्नतासिद्ध्यर्थंगणपतिपूजनंकरिष्ये ॥ [ एकस्मिन्नेवदिनेशान्तिकगर्भाधानयोःकरणे पूर्वंसग्रहमखां-
सकलांशान्तिंकृत्वा पुनर्मंगलस्नानंकृत्वागणेशपूजनादिनान्दीश्राद्धान्तंविधाय वक्ष्यमाणविधिनागर्भाधानंकार्यं ॥ अथवा
एकस्मिन्नेवदिनेशान्तिकगर्भाधानयोरादौतन्त्रेणगणेशपूजनादिनान्दीश्राद्धान्तंविधाय तदुत्तरं शान्तिकस्यप्रधानसंकल्पं-
कृत्वा ऋत्विग्वरणाद्युत्तरांगाभिषेकान्तांशान्तिंसमाप्यमङ्गलस्नानंविधायगर्भाधानसंस्कारसंकल्पंविधायगर्भाधानंविधाय-
तन्त्रेणसमापयेत् ॥ तत्राङ्गसंकल्पेविशेषः ॥ देशकालयोःसंकीर्तनान्ते अस्याः ममभार्यायाःप्रथमरजोदर्शनसमयेकरि-
ष्यमाणयोः सग्रहमखरजोदर्शनशान्तिक्षेत्रगर्भसंस्कारकगर्भाधानकर्मणोः अङ्गत्वेन स्वस्तिपुण्याहवाचनं मातृकापूजनं

वसोर्धारापूजनंआयुष्यमन्त्रजपं नान्दीश्राद्धंचाहंकरिष्ये ॥ तत्रादौनिर्विघ्नतासिद्ध्यर्थं गणपतिपूजनंकरिष्यइतिविशेषः ॥ जलपूरितकलशार्चनं ॥ ॐतत्त्वायामिब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशꣳसमानआयुःप्रमोषीः ॥ १ ॥ कलशवरुणौ गन्धाक्षतपुष्पैःसंपूज्य ॥ दक्षिणहस्तेनकलशमालभ्याभिमन्त्रयेत् ॥ कलशस्यमुखेविष्णुःकण्ठेरुद्रःसमाश्रितः ॥ मूलेतस्यस्थितोब्रह्मामध्येमातृगणाःस्मृताः ॥ १ ॥ कुक्षौतुसागराःसप्तसप्तद्वीपावसुन्धरा ॥ ऋग्वेदोऽथयजुर्वेदःसामवेदोह्यथर्वणः ॥ २ ॥ अङ्गैश्चसहिताःसर्वेकलशाम्बुसमाश्रिताः ॥ इत्यभिमन्त्र्य ॥ ततोगङ्गाद्यावाहनं ॥ गङ्गेचयमुनेचैवगोदावरिसरस्वति ॥ नर्मदेसिंधुकावेरिजलेस्मिन्सन्निधिंकुरु ॥ १ ॥ अस्मिन्कलशेसर्वाणितीर्थान्यावाहयामि ॥ पूजयामि ॥ नमस्करोमि ॥ कलशोदकेनपूजासंभारान् ॥ ॐ अपवित्रःपवित्रोवासर्वावस्थांगतोपिवा ॥ यःस्मरेत्पुंडरीकाक्षंसबाह्याभ्यन्तरःशुचिः ॥ १ ॥ इतिप्रोक्षेत् ॥ ॥ दीपपूजनं ॥ भोदीपब्रह्मरूपस्त्वमन्धकारनिवारक ॥ इमांमयाकृतांपूजांगृह्णंस्तेजःप्रवर्धय ॥ दीपायनमइति गंधाक्षतपुष्पैःसंपूजयेत् ॥

अथगणपतिपूजनम् ॥ तत्रध्यानम् ॥ ॐगणानान्त्वागणपतिꣳहवामहेप्रियाणान्त्वाप्रियपतिꣳहवामहेनिधीनान्त्वानिधिपतिꣳहवामहेवसोमम ॥ आहमजानिगर्भधमात्वमजासिगर्भधम् ॥ श्वेताङ्गंश्वेतवस्त्रंसितकुसुमगणैःपूजितंश्वेतगन्धैः

१ सिन्धु इत्यार्षं ब्रह्मवैवर्तपुराणे तथा पाठात् । २ काण्वाना तु वसोममेत्यन्त एवायं मन्त्र. ।

क्षीराब्धौरत्नदीपैःसुरतरुविमलेरत्नसिंहासनस्थम् ॥ दोर्भिःपाशाङ्कुशेष्टाभयधृतिविशदंचन्द्रमौलिंत्रिनेत्रंध्यायेशान्त्यर्थमीशं-
गणपतिममलंश्रीसमेतंप्रसन्नम् ॥ ॐभूर्भुवःस्वःसिद्धिबुद्धिसहितश्रीमन्महागणपतयेनमः महागणपतिंध्यायामि ॥ ॐस-
हस्रशीर्षापुरुषः० ॥ हेहेरम्बत्वमेह्येहिअम्बिकात्र्यम्बकात्मज ॥ सिद्धिबुद्धिपतेत्र्यक्षलक्षलाभपितुःपितः ॥ नागास्यना-
गहारत्वंगणराजचतुर्भुज ॥ भूषितःस्वायुधैर्दिव्यैःपाशाङ्कुशपरश्वधैः ॥ आवाहयामिपूजार्थंरक्षार्थंचममक्रतोः ॥ इहा-
गत्यगृहाणत्वंपूजांक्रतुंचरक्षमे ॥ ॐभूर्भुवःस्वः महागणपतिंआवाहयामि ॥ १ ॥ ॐपुरुषएवेदं० ॥ रम्यंसुशोभनं-
दिव्यंसर्वसौख्यकरंशुभम् ॥ आसनंचमयादत्तंगृहाणपरमेश्वर ॥ ॐभूर्भु० आसनंस० ॥ २ ॥ ॐएतावानस्य० ॥ उष्णो-
दकंनिर्मलंचसर्वसौगन्ध्यसंयुतम् ॥ पादप्रक्षालनार्थायदत्तंतेप्रतिगृह्यताम् ॥ ॐभूर्भु० पाद्यंस० ॥ ३ ॥ ॐत्रिपादूर्ध्व० ॥
ताम्रपात्रेस्थितंतोयंगन्धपुष्पफलान्वितम् ॥ सहिरण्यंददाम्यर्घ्यंगृहाणपरमेश्वर ॥ ॐभूर्भु० अर्घ्यंस० ॥ ४ ॥ ॐततोवि-
राडजायत० ॥ सर्वतीर्थसमायुक्तंसुगन्धिनिर्मलंजलम् ॥ दत्तमाचमनीयंतेगृहाणगणनायक ॥ ॐभूर्भु० आचमनीयं० ॥५॥
ॐतस्माद्यज्ञात्सर्वहुतःसम्भृतं० ॥ गङ्गासरस्वतीरेवापयोष्णीनर्मदाजलैः॥स्नापितोसिमयादेवतथाशान्तिंकुरुष्वमे ॥ ॐभूर्भु०
स्नानं ॥ ततःपञ्चामृतस्नानम् ॥ ॐपयःपृथिव्याम्पयऽओषधीषुपयोदिव्यन्तरिक्षेपयोधाः ॥ पयस्वतीःप्रदिशःसन्तुमह्यम्
॥ १ ॥ कामधेनुसमुद्भूतंसर्वेषांजीवनंपरं ॥ पावनंयज्ञहेतुश्चपयःस्नानार्थमर्पितं ॥ १ ॥ ॐभू० पयःस्नानंस० ॥ पयःस्ना-
नांतेशुद्धोदकस्नानंस० ॥ ॐदधिक्राव्णोऽअकारिषञ्जिष्णोरश्वस्यवाजिनः ॥ सुरभिनोमुखाकरत्प्रणऽआयूंषितारि-

पत् ॥ २ ॥ पयसस्तुसमुद्भूतंमधुराम्लंशशिप्रभं ॥ दध्यानीतंमयादेवस्नानार्थंप्रतिगृह्यतां ॥ २ ॥ दधिस्नानान्तेशु० ॥
ॐघृतम्मिमिक्षेघृतमस्ययोनिर्घृतेश्रितोघृतम्वस्यधाम ॥ अनुष्वधमावहमादयस्वस्वाहाकृतंवृषभवक्षिहव्यम् ॥ ३ ॥ नवनी-
तसमुत्पन्नंसर्वसंतोषकारकं ॥ घृतंतुभ्यंप्रदास्यामिस्नानार्थंप्रतिगृह्यतां ॥ ३ ॥ ॐभू० घृतस्नानंस० ॥ घृतस्नानांतेशु० ॥
॥ ॐमधुवाताऽऋतायतेमधुक्षरन्तिसिन्धवः ॥ माध्वीर्न्नःसन्त्वोषधीः ॥ १ ॥ मधुनक्तमुतोषसोमधुमत्पार्थिवंरजः ॥
मधुद्यौरस्तुनःपिता ॥ २ ॥ मधुमान्नोवनस्पतिर्म्मधुमाँ२ऽअस्तुसूर्यः ॥ माध्वीर्ग्गावोभवन्तुनः ॥ ३ ॥ तरुपुष्पस-
मुद्भूतंसुस्वादुमधुरंमधु ॥ तेजःपुष्टिकरंदिव्यंस्नानार्थंप्रतिगृह्यतां ॥ ४ ॥ ॐभू० मधुस्नानंस० ॥ मधुस्नानान्तेशु० ॥
ॐअपाꣳरसमुद्वयसꣳसूर्य्येसन्तꣳसमाहितम् ॥ अपाꣳरसस्ययोरसस्तंवोगृह्णाम्युत्तममुपयामगृहीतोसीन्द्रायत्वाजुष्टंगृह्णाम्ये-
षतेयोनिरिन्द्रायत्वाजुष्टतमम् ॥ ५ ॥ इक्षुसारसमुद्भूताशर्करापुष्टिकारिका ॥ मलापहारिकादिव्यास्नानार्थंप्रतिगृह्यतां ॥५॥
ॐभू० शर्करास्नानंस० ॥ शर्करास्नानान्तेशु० ॥ ततः शुद्धोदकस्नानं ॥ ॐआपोहिष्ठा० ॥३॥ स्नानान्तेआचमनीयं ॥६॥
ततःपंचामृतस्नानाङ्गपूजनमितिशिष्टाः ॥ ततोऽभिषेकः ॥ अथोद्वर्तनस्नानं ॥ ॐगन्धर्वस्त्वाविश्वावसुःपरिदधातुविश्वस्या
रिष्ट्यैयजमानस्यपरिधिरस्यग्निरिडऽईडितः ॥ १ ॥ नानासुगन्धद्रव्यंचचन्दनंरजनीयुतं ॥ उद्वर्त्तनंमयादत्तंगृहाणपरमेश्वर
॥ १ ॥ ॐअहिरिवभोगैःपर्येतिबाहुंज्यायाहेतिम्परिबाधमानः ॥ हस्तघ्नोविश्वावयुनानिविद्वान्पुमान्पुमांꣳसम्परिपातुवि-

श्वतेः ॥ २ ॥ ॐभू० उद्वर्तनस्नानसं० ॥ ॐतस्माद्यज्ञात्सर्वहुतऋ० ॥ सर्वभूषाधिकेसौम्येलोकलज्जानिवारणे ॥ मयोपपा-
दितेतुभ्यं वाससीप्रतिगृह्यताम् ॥ ॐभूः० वस्त्रोपवस्त्रेस० ॥ आचमनीयंस० ॥ ॐतस्मादश्वा० ॥ नवभिस्तंतुभिर्युक्तंत्रिगुणं-
देवतामयं ॥ उपवीतंमयादत्तंगृहाणपरमेश्वर ॥१॥ ॐभू० यज्ञोपवीतंस० ॥ आचमनं ॥ ॐतंयज्ञं० ॥ श्रीखण्डंचन्दनंदिव्यं-
केशरादिसमन्वितम् ॥ विलेपनंसुरश्रेष्ठचन्दनंप्रतिगृह्यतां ॥१॥ ॐभू० चन्दनंस० ॥ अक्षन्नमीमदन्त० ॥ अक्षताश्चसुरश्रेष्ठकुं-
कुमाक्ताःसुशोभिताः ॥ मयानिवेदिताभक्त्यागृहाणपरमेश्वर ॥ ॐभू० अक्षतान्स० ॥ ॐयत्पुरुषमितिपुष्पाणि ॥ सुमाल्या-
निसुगंधीनिमालत्यादीनिवैप्रभो ॥ मयाहृतानिपूजार्थंपुष्पाणिप्रतिगृह्यतां ॥ १ ॥ ॐभू० पुष्पाणिस० ॥ काण्डात्काण्डा०
दूर्वांकुरान्सुहरितानमृतान्मङ्गलप्रदान् ॥ आनीतांस्तवपूजार्थंगृहाणगणनायक ॥ ॐभू० दूर्वांकुरान्स० ॥ हरिद्रांकुंकुमंचैव-
सिंदूरादिसमन्वितं ॥ सौभाग्यद्रव्यसंयुक्तंगृहाणपरमेश्वर ॥१॥ ॐभू० सौभाग्यद्रव्याणि० ॥ ॐअहिरिवभोगैः० ॥ सुगन्धौ-
षधिचूर्णंचनानापरिमलानिच ॥ नानासुगंधतैलानिजिघ्रशांतिंप्रयच्छमे ॥ २ ॥ ॐभू० नानापरिमलद्रव्याणिसमर्पयामि ॥
ॐब्राह्मणोस्य० ॥ वनस्पतिरसोद्भूतोगन्धाढ्योगन्धउत्तमः ॥ आघ्रेयःसर्वदेवानांधूपोयंप्रतिगृह्यतां ॥ १ ॥ ॐभू० धूपंस० ॥
ॐचन्द्रमामनसः ॥ साज्यंचवर्त्तिसंयुक्तंवह्निनायोजितंमया ॥ दीपंगृहाणदेवेशत्रैलोक्यतिमिरापह ॥ १ ॥ ॐभू० दीपंसमर्प-
यामि ॥ ॐनाभ्याआसीत्० ॥ शर्कराघृतसंयुक्तंमधुरंस्वादुचोत्तमं ॥ उपहारसमायुक्तंनैवेद्यंप्रतिगृह्यतां ॥ १ ॥ ॐभू० नैवे-
द्यंस० ॥ ॐभू० पानीयंस० ॥ ॐभू० उत्तरापोशनंस० ॥ ॐभू० हस्तप्रक्षालनंसम० ॥ ॐभू० मुखप्रक्षालनंस० ॥ ॐभू०

चंदनेनकरोद्वर्तनंस० ॥ ॐया:फलिनीर्या०॥ इदंफलंमयादेवस्थापितंपुरतस्तव ॥ तेनमेसफलावाप्तिर्भवेज्जन्मनिजन्मनि ॥१॥
ॐभू० फलंस० ॥ ॐयत्पुरुषेण० ॥ पूगफलंमहद्दिव्यंनागवल्लीदलैर्युतं ॥ एलादिचूर्णसंयुक्तंतांबूलंप्रतिगृह्यतां ॥ १ ॥ ॐभू०
तांबूलंस० ॥ ॐसुप्तास्यासन्०॥ हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः ॥ अनन्तपुण्यफलदमतःशान्तिंप्रयच्छमे ॥१॥ ॐभू०
दक्षिणांस० ॥ ततः ॐइदᳪहविः० ॥ कदलीगर्भसंभूतंकर्पूरंचप्रदीपितं ॥ आरार्तिकमहंकुर्वेपश्यमेवरदोभव ॥ १ ॥ ॐभू०
कर्पूरनीराजनंस० ॥ ॐयज्ञेनयज्ञ० ॥ नानासुगंधपुष्पाणियथाकालोद्भवानिच ॥ पुष्पांजलिर्मयादत्तोगृहाणपरमेश्वर
॥ १ ॥ ॐभू० पुष्पांजलिंस० ॥ यानिकानिचपापानिज्ञाताज्ञातकृतानिच ॥ तानिसर्वाणिनश्यंतिप्रदक्षिणपदेपदे ॥ १ ॥
ॐभू० प्रदक्षिणांस० ॥ ॥ अथविशेषार्घः ॥ रक्षरक्षगणाध्यक्षरक्षत्रैलोक्यरक्षक ॥ भक्तानामभयंकर्तात्राताभवभवार्णवात्
॥ १ ॥ द्वैमातुरकृपासिन्धोषाण्मातुराग्रजप्रभो ॥ वरदत्वंवरंदेहिवाञ्छितंवाञ्छितार्थद ॥ २ ॥ अनेनचार्घ्यदानेनफल-
दोस्तुसदामम ॥ ॐभू० विशेषार्घंस० ॥ ॥ प्रार्थना ॥ विघ्नेश्वरायवरदायसुरप्रियायलम्बोदरायसकलायजगद्धिताय ॥
नागाननायश्रुतियज्ञविभूषितायगौरीसुतायगणनाथनमोनमस्ते ॥ १ ॥ भक्तार्तिनाशनपरायगणेश्वरायसर्वेश्वरायशुभदाय-
सुरेश्वराय ॥ विद्याधरायविकटायचवामनायभक्तप्रसन्नवरदायनमोनमस्ते ॥ २ ॥ नमस्तेब्रह्मरूपायविष्णुरूपायतेनमः ॥
नमस्तेरुद्ररूपायकरिरूपायतेनमः ॥ ३ ॥ विश्वरूपस्वरूपायनमस्तेब्रह्मचारिणे ॥ भक्तप्रियायदेवायनमस्तुभ्यंविनायक ॥४॥
लम्बोदरनमस्तुभ्यंसततंमोदकप्रिय ॥ निर्विघ्नंकुरुमेदेवसर्वकार्येषुसर्वदा ॥ ५ ॥ त्वांविघ्नशत्रुदलनेतिचसुन्दरेतिभक्तप्रि-

येतिसुखदेतिवरप्रदेति ॥ विद्याप्रदेत्यघहरेतिचयेस्तुवन्तितेभ्योगणेशवरदोभवनित्यमेव ॥ ६ ॥ अनयापूजयासिद्धिबुद्धि-
सहितःश्रीमन्महागणपतिःप्रीयताम् ॥ इतिगणपतिपूजनम् ॥

अथस्वस्तिपुण्याहवाचनं ॥ हेमाद्रिमदनरत्नदानखंडादावुदाहृतंबह्वृचपरिशिष्टंपरशुरामकारिकाःशिष्टसमाचारंचानुसृ-
त्योच्ये ॥ आदौस्वपुरतःशुद्धायांभूमौपञ्चवर्णैस्तण्डुलैर्वाअष्टदलकरणम् ॥ महीद्यौरितिभूमिंस्पृष्ट्वा ॥ ॐमहीद्यौःपृथिवी-
चंनऽइमंय्यज्ञम्मिमिक्षताम् ॥ पिपृतान्नोभरीमभिः ॥ १ ॥ ओषधयःसमितियवान्क्षिप्त्वा ॥ ॐओषधयःसमवदन्तसो-
मेनसहराज्ञा ॥ यस्मैकृणोतिब्राह्मणस्तꣳराजन्पारयामसि ॥ १ ॥ आजिघ्रमितिकलशंस्थापयेत् ॥ ॐआजिघ्रकलशम्मह्या-
त्वाविशन्त्विन्दवः ॥ पुनरूर्जानिवर्तस्वसानःसहस्रन्धुक्ष्वोरुधारापयस्वतीपुनर्म्माविशताद्रयिः ॥ १ ॥ वरुणस्योत्तंभन-
मितिजलंपूरयेत् ॥ ॐवरुणस्योत्तम्भनमसिवरुणस्यस्कंभसर्ज्जनीस्थोवरुणस्यऽऋतसदन्यसिवरुणस्यऽऋतसदनमसिवरुण-
स्यऽऋतसदनमासीद ॥ १ ॥ त्वांगंधर्वाइतिगंधान्प्रक्षिपेत् ॥ ॐत्वाङ्गन्धर्वाऽअखनं० ॥१॥ याओषधीरितिसर्वौषधीः ॥
याऽओषधीःपूर्वाजातादेवेभ्यस्त्रियुगम्पुरा ॥ मनैनुबभ्रूणामहꣳशतन्धामानिसप्तच ॥ १ ॥ कांडात्कांडादितिदूर्वाः ॥ ॐका-
ण्डात्काण्डात्प्ररोहन्ती० ॥१॥ अश्वत्थेवइतिपंचपल्लवान् ॥ ॐअश्वत्थेवोनिषदनम्पर्णेवोवसतिष्कृता ॥ गोभाजऽइत्कि-
लासथयत्सनवथपूरुषम् ॥ १ ॥ स्योनापृथिवीतिपंचसप्तवामृदः ॥ ॐस्योनापृथिविनोभवानृक्षरानिवेशनी ॥ यच्छानः-

शर्म्मसप्रथाः ॥ १ ॥ याःफलिनीरितिफलं ॥ ॐयाःफलिनीर्याऽअफला० ॥ १ ॥ परिवाजपतिरितिपंचरत्नानि ॥
ॐपरिवाजपतिःकविरग्निर्हव्यान्यक्रमीत् ॥ दधद्रत्नानिदाशुषे ॥१॥ हिरण्यगर्भइतिहिरण्यं ॥ ॐहिरण्यगर्भःसम०॥१॥
युवासुवासाइतिरक्तसूत्रेणवेष्टयेत् ॥ ॐयुवासुवासाःपरिवीतआगात्सउश्रेयान्भवतिजायमानः ॥ तंधीरासःकवयउन्नयन्ति-
स्वाध्योमनसादेवयन्तः ॥ पूर्णादर्व्वीतिपूर्णपात्रमुपरिन्यसेत् ॥ ॐपूर्णादर्व्विपरापतसुपूर्णापुनरापत ॥ वस्नेवविक्रीणावहाऽइष-
मूर्ज्जꣳ शतक्रतो ॥ १ ॥ तत्त्वायामीतिवरुणमावाह्यपूजयेत् ॥ ॐतत्त्वायामिब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः ॥
अहेडमानोवरुणेहबोध्युरुशꣳसमानऽआयुःप्रमोषीः ॥१॥ भोवरुणइहागच्छइहतिष्ठ ॥ ॐभूर्भुवःस्वः वरुणायनमः वरु-
णमावाहयामि इतिमन्त्रेणषोडशोपचारैःसंपूजयेत् ॥ ॥ ततोगङ्गाद्यावाहनं ॥ सर्वेसमुद्राःसरितस्तीर्थानिजलदानदाः ॥
आयान्तुममशान्त्यर्थंदुरितक्षयकारकाः ॥ १ ॥ ततःकलशाभिमन्त्रणं ॥ कलशस्यमुखेविष्णुःकण्ठेरुद्रःसमाश्रितः ॥ मूले-
तस्यस्थितोब्रह्मामध्येमातृगणाःस्मृताः ॥ १ ॥ कुक्षौतुसागराःसप्तसप्तद्वीपावसुन्धरा ॥ ऋग्वेदोथयजुर्वेदःसामवेदोह्यथ-
र्वणः ॥ अङ्गैश्चसहिताःसर्वेकलशाम्बुसमाश्रिताः ॥ ३ ॥ ॥ प्रार्थना ॥ देवदानवसंवादेमथ्यमानेमहोदधौ ॥ उत्पन्नोसित-
दाकुम्भविधृतोविष्णुनास्वयं ॥ १ ॥ त्वत्तोयेसर्वतीर्थानिदेवाःसर्वेत्वयिस्थिताः ॥ त्वयितिष्ठन्तिभूतानित्वयिप्राणाःप्रति-
ष्ठिताः ॥ २ ॥ शिवःस्वयंत्वमेवासिविष्णुस्त्वंचप्रजापतिः ॥ आदित्यावसवोरुद्राविश्वेदेवाःसपैतृकाः ॥ त्वयितिष्ठन्तिसर्वे-

पियतःकामफलप्रदाः ॥३॥ त्वत्प्रसादादिमंयज्ञंकर्तुमीहेजलोद्भव ॥ सान्निध्यंकुरुमेदेवप्रसन्नोभवसर्वदा ॥४॥ नमोनमस्ते-स्फटिकप्रभायसुश्वेतहारायसुमङ्गलाय ॥ सुपाशहस्तायझषासनायजलाधिनाथायनमोनमस्ते ॥१॥ पाशपाणेनमस्तुभ्यंपद्मिनीजीवनायक ॥ पुण्याहवाचनंयावत्तावत्त्वंसन्निधोभव ॥ १ ॥ इतिप्रार्थना ॥ ॥ अथपुण्याहवाचनम् ॥ अवनिकृतजानुमण्डलःकमलमुकुलसदृशमञ्जलिंशिरस्याधाय दक्षिणेनपाणिनास्वर्णपूर्णकलशंधारयित्वा आशिषःप्रार्थयते ॥ दीर्घानागानद्योगिरयस्त्रीणिविष्णुपदानिच ॥ ॐत्रीणिपदाविचक्रमेविष्णुर्गोपाऽअदाभ्यः ॥ अतोधर्माणिधारयन् ॥१॥ तेनायुःप्रमाणेनपुण्यंपुण्याहंदीर्घमायुरस्त्वितिभवन्तोब्रुवन्तुइतियजमानः ॥ तेनायुःप्रमाणेन पुण्यंपुण्याहंदीर्घमायुरस्त्वितिद्विजाः ॥ ॥ एवंसर्वत्रयजमानवचनोत्तरंब्राह्मणाःप्रतिवचनंदद्युः ॥ ब्राह्मणानांहस्तेसुप्रोक्षितमस्तु ॥ शिवाआपःसंतु ॥ संतुशिवाआपः ॥ सौमनस्यमस्तु ॥ अस्तुसौमनस्यं ॥ अक्षतंचारिष्टंचास्तु ॥ अस्त्वक्षतमरिष्टंच ॥ गन्धाःपान्तुसौमङ्गल्यंचास्त्वितिभवन्तोब्रुवन्तु ॥ गन्धाःपान्तुसौमङ्गल्यंचास्तु ॥ एवंसर्वत्र ॥ अक्षताःपान्तुआयुष्यमस्त्व० ॥ अक्षताःपान्तुआयुष्यमस्तु ॥ पुष्पाणिपान्तुसौश्रियमस्त्व० ॥ पुष्पाणिपान्तुसौश्रियमस्तु ॥ ताम्बूलानिपान्तुऐश्वर्यमस्त्व० ॥ ताम्बूलानिपान्तुऐश्वर्यमस्तु ॥ दक्षिणाःपान्तुबहुदेयंचास्त्व० ॥ दक्षिणाःपान्तुबहुदेयंचास्तु ॥ दीर्घमायु[1]ःशान्तिःपुष्टिस्तुष्टिःश्रीर्यशोविद्याविनयोवित्तंबहुपुत्रंचायुष्यंचास्त्वितिभवंतोब्रुवंतु दीर्घमायु[1]ःशान्तिःपुष्टिस्तुष्टिश्चास्तु ॥ श्रीर्यशोविद्याविनयोवित्तं-

१ मायु श्रेय शान्तिरित्यन्यशाखिना पाठ ।

बहुपुत्रंचायुष्यंचास्त्वितिभवन्तोब्रुवन्तु ॥ ॥ श्रीर्यशोविद्याविनयोवित्तंबहुपुत्रंचायुष्यंचास्तु ॥ यंकृत्वासर्ववेदयज्ञ
क्रियाकरणकर्मारम्भाःशुभाःशोभनाःप्रवर्तन्ते तमहमोंकारमादिंकृत्वा ऋग्यजुःसामाशीर्वचनंबह्वृषिमतंसमनुज्ञातंभवद्भि-
रनुज्ञातःपुण्यंपुण्याहंवाचयिष्ये ॥ वाच्यतां ॥ ॥ ब्राह्मणानांहस्तेष्वक्षतान्दद्यात्तेचाशिषोदद्युः ॥ ॥ ॐभद्रङ्कर्णेभिः॑श्रृणु-
यामदेवाभद्रम्पश्येमाक्षभिर्यजत्राः॑ ॥ स्थिरैरङ्गैस्तुष्टुवाᳬंसस्तनूभिर्व्यशेमहिदेवहितंयदायुः॑ ॥१॥ देवानाम्भद्रासुमतिर्ऋजू-
यतान्देवानाᳬंरातिरभिनोनिवर्ततताम् ॥ देवानाᳬंसख्यमुपसेदिमाव्वयन्देवानऽआयुः॑प्प्रतिरन्तुजीवसे ॥२॥ नतद्रक्षाᳬंसि-
नपिशाचास्तरन्तिदेवानामोजः॑प्रथमजᳬंह्येतत् ॥ योबिभर्तिदाक्षायणᳬंहिरण्यᳬंसदेवेषुकृणुतेदीर्घमायुः॑सर्मनुष्येषुकृणुते-
दीर्घमायुः॑ ॥ ३ ॥ दीर्घायुस्तऽओषधेखनितायस्मैचत्वाखनाम्यहम् ॥ अथोत्वन्दीर्घायुर्भूत्वाशतवल्शाविरोहतात्
॥ ४ ॥ द्रविणोदाद्रविणसस्तुरस्यद्रविणोदाःसनरस्यप्रयᳬंसत् ॥ द्रविणोदावीरवतीमिषन्नोद्रविणोदारासतेदीर्घमायुः ॥ १ ॥
सवितापश्चात्तात्सवितापुरस्तात्सवितोत्तरात्तात्सविताधरात्तात् ॥ सवितानःसुवतुसर्वतातिंसवितानोरासतान्दीर्घमायुः
॥ २ ॥ नवोनवोभवतिजायमानोह्नांकेतुरुषसामेत्यग्रं ॥ भागन्देवेभ्योविदधात्यायन्प्रचंद्रमास्तिरतेदीर्घमायुः ॥ ३ ॥
उच्चादिविदक्षिणावन्तोऽअस्थुर्येऽअश्वदाःसहतेसूर्येण ॥ हिरण्यदाऽअमृतत्वंभजन्तेवासोदाःसोमप्रतिरन्तआयुः ॥ इत्याशी-
र्वादः ॥ ॥ व्रतजपनियमतपःस्वाध्यायक्रतुदयादमदानविशिष्टानांसर्वेषांब्राह्मणानांमनःसमाधीयतां इतियजमानः ॥ समा-
हितमनसःस्मः इतिद्विजाः ॥ प्रसीदंतुभवंतः इतियजमानः ॥ प्रसन्नाःस्मःइतिद्विजाः ॥ ततोयजमानो ब्रूयात् ॥ ॐशां-

तिरस्तु ॥ ॐपुष्टिरस्तु ॥ ॐतुष्टिरस्तु ॥ ॐवृद्धिरस्तु ॥ ॐअविघ्नमस्तु ॥ ॐआयुष्यमस्तु ॥ ॐआरोग्यमस्तु ॥ ॐशि-
वंकर्मास्तु ॥ ॐकर्मसमृद्धिरस्तु ॥ ॐधर्मसमृद्धिरस्तु ॥ ॐवेदसमृद्धिरस्तु ॥ ॐशास्त्रसमृद्धिरस्तु ॥ ॐपुत्रसमृद्धिरस्तु ॥
ॐधनधान्यसमृद्धिरस्तु ॥ ॐइष्टसंपदस्तु ॥ १५ ॥ ॐअरिष्टनिरसनमस्तु ॥ ॐयत्पापंतत्प्रतिहतमस्तु ॥ ॐयच्छ्रेयस्त-
दस्तु ॥ ॐउत्तरेकर्मण्यविघ्नमस्तु ॥ ॐउत्तरोत्तरमहरहरभिवृद्धिरस्तु ॥ ॐउत्तरोत्तराःक्रियाःशुभाःशोभनाःसंपद्यन्तां ॥
ॐतिथिकरणमुहूर्तनक्षत्रग्रहलग्नसंपदस्तु ॥ ६ ॥ उदकसेकः ॥ ॐतिथिकरणमुहूर्तनक्षत्रग्रहलग्नाधिदेवताःप्रीयन्तां ॥
ॐतिथिकरणेमुहूर्तेनक्षत्रेसग्रहेसदैवतेप्रीयेतां ॥ ॐदुर्गापाञ्चाल्यौप्रीयेतां ॥ ॐअग्निपुरोगाविश्वेदेवाःप्रीयन्तां ॥ ॐइ-
न्द्रपुरोगामरुद्गणाःप्रीयन्तां ॥ वसिष्ठपुरोगाऋषिगणाःप्रीयंतां ॥ ॐमाहेश्वरीपुरोगाउमामातरःप्रीयन्तां ॥ ॐअरुन्ध-
तीपुरोगाएकपत्न्यःप्रीयन्तां ॥ ॐविष्णुपुरोगाःसर्वेदेवाःप्रीयन्तां ॥ ॐब्रह्मपुरोगाःसर्वेवेदाःप्रीयन्तां ॥ ॐब्रह्मचब्रा-
ह्मणाश्चप्रीयन्तां ॥ ॐश्रीसरस्वत्यौप्रीयेतां ॥ ॐश्रद्धामेधेप्रीयेतां ॥ ॐभगवतीकात्यायनीप्रीयतां ॥ ॐभगवतीमाहेश्वरी-
प्रीयतां ॥ ॐभगवतीऋद्धिकरीप्रीयतां ॥ ॐभगवतीपुष्टिकरीप्रीयतां ॥ ॐभगवतीतुष्टिकरीप्रीयतां ॥ ॐभगवन्तौ-
विघ्नविनायकौप्रीयेतां ॥ ॐसर्वाःकुलदेवताःप्रीयन्तां ॥ ॐसर्वाग्रामदेवताःप्रीयंतां ॥ २१ ॥ ॐहताश्चब्रह्मद्विषः ॥
ॐहताश्चपरिपन्थिनः ॥ ॐहताश्चविघ्नकर्तारः ॥ शत्रवःपराभवंयान्तु ॥ ॐशाम्यन्तुघोराणि ॥ ॐशाम्यन्तुपापानि ॥

---

१ अत्र इष्टा.कामाःसंपद्यन्तामितिविशेषपाठोऽन्यशाखीय. ।

ॐशाम्यन्त्वीतयः ॥ ६ ॥ ॐशुभानिवर्द्धन्तां ॥ ॐशिवाआपःसन्तु ॥ ॐशिवाऋतवःसन्तु ॥ ॐशिवाअग्नयःसन्तु ॥ ॐशिवाआहुतयःसन्तु ॥ ॐशिवाओषधयःसन्तु ॥ ॐशिवावनस्पतयःसन्तु ॥ ॐशिवाअतिथयःसन्तु ॥ ॐअहोरात्रेशिवेस्यातां ॥ ॐनिकामेनिकामेनऽपर्ज्जन्योवर्षतुफलवत्योनऽओषधयःपच्यन्तांयोगक्षेमोनःकल्पताम् ॥ १ ॥ ॐनिकामेनिकामेनऽपर्ज्जन्योवर्षत्वितिनिकामेनिकामेवैतत्रपर्ज्जन्योवर्षतियत्रैतेनयज्ञेनयजन्तेफलवत्योनऽओषधयःपच्यन्तामितिफलवत्योवैतत्रौषधयःपच्यन्तेयत्रैतेनयज्ञेनयजन्तेयोगक्षेमोनःकल्पतामितियोगक्षेमोवैतत्रकल्पतेयत्रैतेनयज्ञेनयजन्तेतस्माद्यत्रैतेनयज्ञेनयजन्तेक्लृप्तःप्रजानांयोगक्षेमोभवति ॥ १ ॥ ॐशुक्राङ्गारकबुधबृहस्पतिशनैश्चरराहुकेतुसोमसहिता आदित्यपुरोगाःसर्वेग्रहाःप्रीयन्तां ॥ ॐभगवान्नारायणःप्रीयतां ॥ ॐभगवान्पर्जन्यःप्रीयतां ॥ ॐभगवान्स्वामीमहासेनःप्रीयतां ॥ ॐपुण्याहकालान्वाचयिष्ये इतियजमानः ॥ ॐवाच्यतां ॥ इतिप्रतिवचनं ॥ ब्राह्मंपुण्यमहर्यच्चसृष्ट्युत्पादनकारकं ॥ वेदवृक्षोद्भवंनित्यंतत्पुण्याहंब्रुवन्तुनः ॥१॥ भोब्राह्मणाः ममगृहेअद्यक्रियमाणयोःसग्रहमखरजोदर्शनशान्तिगर्भाधानकर्मणोः ॐपुण्याहंभवंतोब्रुवन्तु ॥ एवंमन्द्रमध्योच्चस्वरैःउत्तमस्वरेणवात्रिर्ब्रूयात् ॥ ॐपुण्याहमितिविप्रास्त्रिः । एवमग्रेपि ॥ ॐपुनन्तुमादेवजनाःपुनन्तुमनसाधियः ॥ पुनन्तुविश्वाभूतानिजातवेदःपुनीहिमा ॥ १ ॥ ॐसयःकामयेतमहत्प्राप्नुयामित्युदगयनऽआपूर्यमाणपक्षेपुण्याहेद्वादशाहमुपसद्व्रतीभूत्वौदुम्बरेकꣳसेचमसेवासर्वौषधम्फलानीतिसम्भृत्यपरिसमुह्यपरिलिप्याग्निमुपसमाधायावृताज्यꣳसꣳस्कृत्यपुꣳसानक्षत्रेणमन्थꣳसन्नीयजुहोति ॥ १ ॥ पृथिव्यामुद्धृतायांतुय-

त्कल्याणंपुराकृतं ॥ ऋषिभिःसिद्धगन्धर्वैस्तत्कल्याणंब्रुवन्तुनः ॥ १ ॥ भोब्राह्मणाः ममगृहे० ॐकल्याणंभवन्तोब्रुवन्तु ॥
ॐकल्याणं ॥३॥ ॐयथेमाँवाचङ्कल्याणीमावदानिजनेभ्यः ॥ ब्रह्मराजन्याभ्याꣳशूद्रायचार्यायचस्वायचारणायच ॥ प्रि-
योदेवानांदक्षिणायैदातुरिहभूयासमयम्मेकामःसमृध्यतामुपमादोनमतु ॥ १ ॥ अथाङ्क्रर्योःप्रतिगरोरात्सुरिमेयजमाना
भद्रमेभ्योयजमानेभ्योभूदितिकल्याणमेवैतन्मानुष्यैवाचोवदति ॥ १ ॥ सागरस्ययथावृद्धिर्महालक्ष्म्यादिभिःकृता ॥
संपूर्णासुप्रभावाचतांचऋद्धिंब्रुवन्तुनः ॥१॥ भोब्राह्मणाः ममगृहे० ॐऋद्धिंभवन्तोब्रुवन्तु ॥ ॐऋध्यतां ॥३॥ ॐसत्र-
स्यऽऋद्धिरस्यगन्मज्योतिरमृताऽअभूम ॥ दिवम्पृथिव्याऽअध्यारुहामाविदामदेवान्स्वर्ज्योतिः॥१॥ ॐतऽउत्तरस्यहविर्धा-
नस्यजघन्यायाङ्खर्याꣳसामाभिगायन्तिसत्रस्यऽऋद्धिरितिराद्धिमेवैतदभ्युत्तिष्ठन्त्युत्तरवेदेर्वोत्तरायाꣳश्रोणावितरंतुकृततरम्
॥ १ ॥ स्वस्तिस्तुयाऽविनाशाख्यापुण्यकल्याणवृद्धिदा ॥ विनायकप्रियानित्यंतांचस्वस्तिंब्रुवन्तुनः ॥ १ ॥ भोब्राह्मणाः०
ममगृहेअद्यक्रियमाणाभ्यांसग्रहमखरजोदर्शनशांतिगर्भाधानकर्मभ्यांॐस्वस्तिभवन्तो० ॥ ॐस्वस्ति ॥ ३ ॥ ॐस्वस्तिनऽ-
इन्द्रोवृद्धश्रवाःस्वस्तिनःपूषाविश्ववेदाः ॥ स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिःस्वस्तिनोबृहस्पतिर्दधातु ॥ १ ॥ गातुंयज्ञायगा-
तुंयज्ञपतयऽइतिगातुꣳह्येषयज्ञायेच्छतिगातुंयज्ञपतयेयोयज्ञस्यसꣳस्थान्दैवीस्वस्तिरस्तुनःस्वस्तिर्मानुषेभ्यऽइतिस्वस्तिनोदे-
वत्रास्तुस्वस्तिर्मानुष्यत्रेत्येवैतदाहोर्ध्वंजिगातुभेषजमित्यूर्ध्वोनोयंयज्ञोदेवलोकंगच्छत्वित्येवैतदाहशन्नोऽअस्तुद्विपदेशञ्चतु-

ष्पद ऽइत्येतावद्वा ऽइदᳫं सर्वं यावद्द्विपाच्चैव चतुष्पाच्च तस्मा ऽएवैतद्यज्ञस्य सᳫंस्थां गत्वा शं करोति तस्मादाह शन्नो ऽअस्तु द्विपदे श-
ञ्चतुष्पदे ॥ १ ॥ समुद्रमथनाज्जाता जगदानंदकारिका ॥ हरिप्रिया च माङ्गल्या तां श्रियं च ब्रुवन्तु नः ॥ १ ॥ भो ब्राह्मणाः
मम गृहे० ॐ श्रीरस्त्विति भवन्तो ब्रुवन्तु ॥ ३ ॥ ॐ अस्तु श्रीः ॥ २ ॥ ॐ श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रू-
पमश्विनौ व्यात्तम् ॥ इष्णन्निषाणामुम्म ऽइषाण सर्वलोकम्म ऽइषाण ॥ १ ॥ तेनो ह तत इजे दक्षᳫं पार्वतिस्त ऽइमेप्येतर्हि दा-
क्षायणा राज्यमिवैव प्राप्ता राज्यमिव ह वै प्राप्नोति य ऽएवं विद्वानेतेन यज्ञेन यजते तस्माद्वा ऽएतेन यजेत तस्मा ऽएकैक ऽएवानूचीना-
हं पुरोडाशो भवत्येतेनो हास्या सपत्नानुपबाधा श्रीर्भवति ॥ ५ ॥ अस्मिन्पुण्याहवाचने न्यूनातिरिक्तो यो विधिः स उपविष्टब्रा-
ह्मणानां वचनात् श्रीमहागणपतिप्रसादात्परिपूर्णोस्त्विति भवंतो ब्रुवंतु ॥ ॐ अस्तु परिपूर्णः ॥ अनेन पुण्याहवाचनेन प्रजा-
पतिः प्रीयतां ॥ अथाभिषेकः ॥ अभिषेके पत्नी वामतः ॥ तत्र मंत्राः ॥ ॐ पयः पृथिव्यां० ॥ १ ॥ देवस्य त्वा सवितुः प्रस-
वेश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ॥ सरस्वत्यै वाचो यन्तुर्यन्त्रियै दधामि बृहस्पतेष्ट्वा साम्राज्येनाभिषिञ्चाम्यसौ ॥ २ ॥
देवस्य त्वा० सरस्वत्यै वाचो यन्तुर्यन्त्रेणाग्नेः साम्राज्येनाभिषिञ्चामि ॥ ३ ॥ देवस्य त्वा० अश्विनोर्भैषज्येन तेजसे ब्रह्म-
वर्चसायाभिषिञ्चामि सरस्वत्यै भैषज्येन वीर्यायान्नाद्यायाभिषिञ्चामीन्द्रस्येन्द्रियेण बलाय श्रियै यशसेभिषिञ्चामि ॥ ४ ॥ वि-
श्वानि देव सवितर्दुरितानि परासुव ॥ यद्भद्रन्तन्न ऽआसुव ॥ ५ ॥ धामच्छदग्निरिन्द्रो ब्रह्मा देवो बृहस्पतिः ॥ सचेतसो वि-

श्वेदेवासुइम्म्रावन्तुनःशुभे ॥ ६ ॥ त्वञ्चविष्ठदाशुषोनॄँश्पाहिशृणुधीगिरः ॥ रक्षातोकमुतत्मना ॥ ७ ॥ अन्नपतेन्नस्य-
नोदेह्यनमीवस्यशुष्मिणः ॥ प्रप्रदातारन्तारिषऽऊर्ज्जन्नोधेहिद्विपदेचतुष्पदे ॥ ८ ॥ ॐपालाशंभवति ॥ तेनब्राह्मणो-
भिषिंचतिब्रह्मवैपलाशोब्रह्मणैवैनमेतदभिषिंचति ॥ १ ॥ औदुंबरंभवति ॥ तेनस्वोभिषिंचत्यन्नंवाऽऊर्गुदुंबरऽऊर्ग्वैस्वंयाव-
द्धैपुरुषस्यस्वंभवतिनैवतावदशनायतितेनोर्क्स्वंतस्मादौदुंबरेणस्वोभिषिंचति ॥ २ ॥ नैय्यग्रोधपादंभवति ॥ तेनमित्रो-
राजन्योभिषिञ्चतिपद्भिर्वैन्यग्रोधःप्रतिष्ठितोमित्रेणवैराजन्यःप्रतिष्ठितस्तस्मान्नैय्यग्रोधपादेनमित्रोराजन्योभिषिञ्चति ॥३॥
आश्वत्थम्भवति । तेनवैश्योभिषिञ्चतिसयदेवादोश्वत्थेतिष्ठतऽइन्द्रोमरुतऽउपामन्त्रयततस्मादाश्वत्थेनवैश्योभिषिञ्चति
॥ ४ ॥ यद्देवकल्पाञ्जुहोति । प्राणावैकल्पाऽअमृतमुवैप्राणाऽअमृतेनैवैनमेतदभिषिञ्चति ॥ ५ ॥ सर्वेषांवाऽएषवेदानाꣳ
रसोयत्सामसर्वेषामेवैनमेतद्वेदानाꣳरसेनाभिषिञ्चति ॥ ६ ॥ ॐद्यौःशान्तिरन्तरिक्ष० ॥१॥ यतोयतःसमीहसे० ॥ २ ॥
अमृताभिषेकोस्तु ॥ ॥ शान्तिःशान्तिःशान्तिः ॥ सुशान्तिर्भवतु ॥ उदकोपस्पर्शः ॥ स्वस्थानेउपवेशनम् ॥ ततःपुत्रवतीभिर्वृ-
द्धसुवासिनीभिर्नीराजनंकार्यं ॥ ॐअनाधृष्टापुरस्तादग्नेराधिपत्यऽआयुर्म्मेदाःपुत्रवतीदक्षिणतऽइन्द्रस्याधिपत्येप्रजाम्मे-
दाःसुखदापश्चाद्देवस्यसवितुराधिपत्येचक्षुर्म्मेदाऽआश्रुतिरुत्तरतोधातुराधिपत्येरायस्पोषम्मेदाः ॥ विधृतिरुपरिष्टाद्बृह-
स्पतेराधिपत्यऽओजोमेदाविश्वाभ्योमानाष्ट्राभ्यस्पाहिमनोरश्वासि ॥ १ ॥ इति ॥ इतिस्वस्तिवाचनम् ॥

अथअविघ्नपूजनं ॥ तत्रायंक्रमः ॥ अविघ्नोमण्डपश्चैवमातृणांपूजनंसकृत् ॥ वैश्वदेवंवसोर्द्धारानान्दीश्राद्धमतःपरम् ॥१॥ [तत्र पञ्चस्वेव कर्मसु मण्डपविधानं ॥ पारस्करः ॥ पञ्चसु बहिःशालायां विवाहे चूडाकरण उपनयने केशान्ते सीमन्तोन्नयन इति ॥ बहिःशालागृहाद्बहिर्मण्डपइत्यर्थः ॥ तत्रैवायं अविघ्नोमण्डपश्चैवेत्यादिक्रमः ॥ यत्र मण्डपो नास्ति तत्र अविघ्नपूजनस्य मण्डपमातृणां जलस्थलद्वारमातृणांचाभावः ॥ केवलगौर्यादिमातृणांपूजनं ॥ अत्रमण्डपपूजने शिष्टाचारएवशरणम् । ] ततोगोधूमादिधान्यपूरितेहरिद्रादिरञ्जितेमृन्मयेअविघ्नाख्यकलशेमोदादिषड्विनायकानांप्रतिमाः कुंकुमादिना लिखित्वा पृथक्पृथगावाह्य पृथक्सहवापूजयेत् ॥ तद्यथा ॥ मोदश्चैव प्रमोदश्च सुमुखो दुर्मुखस्तथा ॥ अविघ्नो विघ्नकर्ता च षडेते विघ्ननायकाः ॥ १ ॥ ॐमोदायनमःमोदंआवाहयामि ॥ १ ॥ ॐप्रमोदाय० प्रमोदं० ॥ २ ॥ ॐसुमुखाय० सुमुखं० ॥ ३ ॥ दुर्मुखाय० दुर्मुखं० ॥ ४ ॥ ॐअविघ्नाय० अविघ्नं ॥ ५ ॥ ॐविघ्नकर्त्रे० विघ्नकर्तारं० ॥ ६ ॥ मनोजूतिरिति-प्रतिष्ठाप्य ॥ ॐभूर्भुवःस्वः मोदादिषड्विनायकाः सुप्रतिष्ठावरदाभवन्तु ॥ ॐमोदादिषड्विनायकेभ्योनमइति षोडशोप-चारैःसंपूजयेत् ॥ अनयापूजयामोदादिषड्विनायकाःप्रीयंतां ॥ इतिअविघ्नपूजनम् ॥

अथमण्डपदेवतापूजनम् ॥ ततआचार्यहस्तेसुप्रोक्षितादिकंकार्यं ॥ आचार्यहस्ते शिवाआपःसन्तु ॥ सन्तुशिवाआपः ॥ गन्धाःपान्तुसौमङ्गल्यंचास्त्वितिभव० ॐगन्धाःपान्तुसौमङ्गल्यंचास्तु ॥ अक्षताःपान्तुआयुष्यमस्त्वितिभ० ॥ ॐअक्ष-ताःपान्तुआयुष्यमस्तु ॥ पुष्पाणिपान्तु सौश्रियमस्त्वितिभ० ॥ ॐपुष्पाणिपान्तुसौश्रियमस्तु ॥ तांबूलानिपान्तुऐश्वर्यम-

स्त्वितिम० ॥ ॐताम्बूलानिपान्तुऐश्वर्यमस्तु ॥ दक्षिणाःपान्तुबहुधनमस्त्वितिम० ॥ ॐदक्षिणाःपान्तुबहुधनमस्तु ॥ अपूपाःपान्तुबह्वन्नंचास्त्वितिम०॥ ॐअपूपाःपान्तुबह्वन्नंचास्तु ॥ शाखादूर्वाःपान्तुशाखापल्लवानांवृद्धिरस्त्वितिम०॥ ॐशाखादूर्वाःपान्तुशाखापल्लवानांवृद्धिश्चास्तु ॥ ततआचार्येणदूर्वाशम्याम्रादिप्रशस्तवृक्षपत्राणांरक्तसूत्रेणपञ्चधावेष्टनंकार्यं ॥ तासां मण्डपमातृसंज्ञा ॥ तासांमण्डपमातृणामेकस्मिन्पात्रेस्थापनं ॥ वसोःपवित्रमितिमन्त्रेण यजमानपत्याशाखासुतैलारोपणं कार्यं ॥ ॐवसोः॑पवित्र॑मसिशतधा॑रंवसोः॑पवित्र॑मसिसहस्र॑धारम् ॥ देवस्त्वा॑सविताषु॑नातुवसोः॑पवित्रे॑णशतधा॑रेणसुप्वा॑कामधुक्षः ॥१॥ अहिरिवभोगैरितिशाखासुहरिद्राकुङ्कुमादिसुगन्धिद्रव्येणोद्वर्तनम् ॥ ॐअहि॑रिवभोगैः० ॥१॥ निकामेनिकामइतिउष्णोदकेनशाखास्नपनं ॥ ॐनिकामेनि॑कामेनः पर्जन्यो॑० ॥ १ ॥ दधिक्राव्णइतिशाखासुदध्यक्षतासमर्पणं ॥ ॐदधिक्राव्णो॑ऽअकारिषं० ॥ १ ॥ याओषधीरितिशाखाग्रहणं ॥ ॐयाऽओष॑धीः॒पूर्वाजा॒ता० ॥ १ ॥ ततः मण्डपस्याग्नेयस्तंभेशाखायाः स्थिरोभवेतिस्थिरीकरणं ॥ ॐस्थि॒रोभ॑ववी॒ड्वङ्गऽआ॒शुर्भ॑ववा॒ज्यर्व॑न् ॥ पृथुर्भ॑वसु॒षद॒स्त्वम॒ग्नेः॑पुरी॒षवाह॑णः ॥ १ ॥ एवं नैर्ऋत्यै वायव्ये ईशान्येच ॥ ततःपञ्चमींशाखांयज्ञियवृक्षसमिधोपेतांमन्त्रेणगृहीत्वा काण्डात्काण्डादितिमन्त्रेणत्रिःकण्डनं ॥ ॐकाण्डा॑त्काण्डात्प्ररोह॑न्ती० इति सकृन्मन्त्रेणद्विस्तूष्णीं ॥ ततोमण्डपमध्येस्तम्भोपरिस्थापयेत् ॥ तत्रायंक्रमः ॥ नंदिनीनलिनीमैत्राउमाचपशुवर्धिनी ॥ आग्नेयादिक्रमेणैवशाखास्तम्भेप्रतिष्ठिताः ॥१॥ ॐनन्दिन्यैनमःनन्दिनींआवा० ॥ ७ ॥ ॐनलिन्यैन० नलिनींआ० ॥ ८ ॥ ॐमैत्रायै०मैत्रांआ० ॥ ९ ॥ उमायै०

उमांआ० ॥ १० ॥ पशुवर्धिन्यै०पशुवर्धिनींआ० ॥११॥ मनोजूतिरितिप्रतिष्ठाप्य सर्वासांतन्त्रेणषोडशोपचारैःपूजनं ॥ ॐभूर्भुवःस्वः नन्दिन्यादिमण्डपमातृभ्योनमः इति आवाहनादिषोडशोपचारैःपूजयेत् ॥ अनयापूजयानन्दिन्यादिमण्डपमातरःप्रीयन्तां ॥ इतिमण्डपदेवतापूजनम् ॥

अथगौर्यादिमातॄणांपूजनं ॥ रक्तवस्त्रास्तृतपीठेरजतस्फटिकादिमयीषुप्रतिमासुलिखितप्रतिमासुवाअक्षतपुञ्जेषुवासगणाधिपानांगौर्यादिचतुर्दशमातॄणांदक्षिणोपक्रमाणांउदगपवर्गाणांप्रत्यगुपक्रमाणांप्रागपवर्गाणांवास्थापनं ॥ तत्रायंक्रमः ॥ गौरीपद्माशचीमेधासावित्रीविजयाजया ॥ देवसेनास्वधास्वाहामातरोलोकमातरः ॥ १ ॥ धृतिःपुष्टिस्तथातुष्टिरात्मनःकुलदेवता ॥ गणेशेनाधिकाह्येताद्वृद्धौपूज्याश्चतुर्दश ॥ १ ॥ अत्रचतुर्दशपदोपादानान्मातरोलोकमातरइतिसर्वासांविशेषणं ॥ ॐगणेशायनमःगणेशंआवाहयामि ॥ १ ॥ ॐगौर्यैनमःगौरींआ० ॥ २ ॥ ॐपद्मायैन०पद्मां० ॥ ३ ॥ ॐशच्यैन० शचींआ० ॥ ४ ॥ ॐमेधायै० मेधांआ० ॥ ५ ॥ ॐसावित्र्यै० सावित्रीं० ॥ ६ ॥ ॐविजयायै० विजयां० ॥७॥ ॐजयायै० जयांआ० ॥८॥ ॐदेवसेनायै० देवसेनां० ॥९॥ ॐस्वधायैन० स्वधां० ॥१०॥ ॐस्वाहायै० स्वाहां० ॥११॥ ॐधृत्यै० धृतिं० ॥१२॥ ॐपुष्ट्यै० पुष्टिं० ॥१३॥ ॐतुष्ट्यै० तुष्टिं० ॥ १४ ॥ ॐआत्मनःकुलदेवतायै० आत्मनःकुलदेवतां० ॥ १५ ॥ इत्यावाह्य ॥ षोडशोपचारैःसंपूज्य ॥ समख्येइतिपुष्पाञ्जलिः ॥ ॐसमख्येदेव्याधियासंदक्षिणयोरुचक्षसा ॥ मामआयुःप्रमोषीर्मोअहंतववीरंविदेयतवदेविसंदृशि ॥ अनयापूजयागौर्यादिमातरःप्रीयन्ताम् ॥ ॥ पक्षान्त-

रेणगौर्यादीनांपौराणमन्त्रैरावाहनंयथा—समीपेमातृवर्गस्यसर्वविघ्नहरंसदा ॥ त्रैलोक्यपूजितंदेवंगणेशंस्थापयाम्यहं ॥ १ ॥
॥ १ ॥ हिमाद्रितनयांदेवींवरदांभैरवप्रियाम् ॥ लम्बोदरस्यजननींगौरीमावाहयाम्यहम् ॥ २ ॥ सुवर्णाभांपद्महस्तांवि-
ष्णोर्वक्षस्थलस्थिताम् ॥ त्रैलोक्यपूजितांदेवींपद्मामावाहयाम्यहम् ॥ ३ ॥ दिव्यरूपांविशालाक्षींशुचिंकुण्डलधारिणीम् ॥
देवराजप्रियांभद्रांशचीमावाहयाम्यहम् ॥ ४ ॥ वैवस्वत्कृतफुल्लाब्जतुल्याभांपद्मवासिनीम् ॥ बुद्धिप्रसादिनींसौम्यांमेधामा-
वाहयाम्यहम् ॥ ५ ॥ जगत्सृष्टिकरींधात्रींरूपेणचव्यवस्थिताम् ॥ ॐकाराख्यांभगवतींसावित्रीमाह्वयाम्यहम् ॥ ६ ॥
विष्णुरुद्रार्कदेवानांशरीरेषुव्यवस्थिताम् ॥ त्रैलोक्यवासिनींदेवींविजयामाह्वयाम्यहम् ॥ ७ ॥ दैत्यरक्षःक्षयकरींदेवानाम-
भयप्रदाम् ॥ गीर्वाणवन्दितांदेवींजयामावाहयाम्यहम् ॥ ८ ॥ मयूरवाहनांदेवींशक्तिखड्गधनुर्धराम् ॥ आवाहयेदेवसे-
नांतारकासुरमर्दिनीम् ॥ ९ ॥ कव्यमादायसततंपितृभ्योयाप्रयच्छति ॥ पितृलोकार्चितांदेवींस्वधामावाहयाम्यहम्
॥ १० ॥ हविर्गृहीत्वासततंदेवेभ्योयाप्रयच्छति ॥ वह्निप्रियाचसास्वाहासमागच्छतुसाध्वरे ॥ ११ ॥ नमस्तुष्टिकरीं-
देवींलोकानुग्रहकर्मणि ॥ स्वकामस्यचसिद्ध्यर्थंधृतिमावाहयाम्यहम् ॥ १२ ॥ आवाहयाम्यहंपुष्टिंजगद्विघ्नविनाशिनीम् ॥
ज्ञात्वापुष्टिकरींदेवींरक्षणायाध्वरेमम ॥ १३ ॥ सौम्यरूपेसुवर्णाभेविद्युज्ज्वालातिकुण्डले ॥ धर्मतुष्टिकरींदेवीमस्मिन्य-

---

१ मातृणाषोडशपक्षेतु ॥ भूतग्राममिमंकृत्स्नंयाभिरुत्पादितपुरा ॥ त्रैलोक्यपूजितादेवीर्मातॄरावाहयाम्यहम् ॥ १२ ॥ आवाहयेलोकमातॄर्जगत्पालनसंस्थिताः ॥ शक्राद्यैरर्चितादेवीःस्तोत्रैराराधनैस्तथा ॥ १३ ॥ इतिविशेषः ॥

ज्ञेहितायवै ॥१४॥ त्वमात्मासर्वदेवानांदेहिनांमन्त्रसर्वगाम् ॥ वंशरक्षाकरींदेवींकुलदेवींप्रपूजये ॥१५॥ ॥ अथजलमातरः ॥
मत्सीकूर्मीचवाराहीमाण्डुकीमकरीतथा ॥ ग्राहकीक्रौञ्चिकीचैवसप्तैताजलमातरः ॥ १ ॥ प्रभूतजलपूरितमणिकपात्रे-
लिखितप्रतिमासुवाअक्षतपुंजेषुवाजलमातृकास्थापनम् ॥ ॐमत्स्यैनमः मत्सींआवाहयामि ॥ १ ॥ ॐकूर्म्यै०कूर्मीं०
॥ २ ॥ ॐवाराह्यै० वाराहीं० ॥ ३ ॥ माण्डुक्यै० माण्डुकीं० ॥ ४ ॥ ॐमकर्यै० मकरीं० ॥ ५ ॥ ग्राहक्यै० ग्रा-
हकीं० ॥ ६ ॥ ॐक्रौञ्चिक्यै० क्रौञ्चिकीं० ॥ ७ ॥ इत्यावाह्य षोडशोपचारैःपूजनम् ॥ ॥ अथस्थलमातरः ॥ आसांस्थ-
लमातृणांदेवतागारेसिंदूरादिनालिखितासुपूजनंकार्यम् । तत्रक्रमः । ब्राह्मीमाहेश्वरीचैवकौमारीवैष्णवीतथा ॥ वाराही-
चतथेन्द्राणीचामुण्डासप्तमातरः ॥ १ ॥ ॐब्राह्म्यैन० ब्राह्मीं० ॥ १ ॥ ॐमाहेश्वर्यैन० माहेश्वरीं० ॥ २ ॥ ॐकौमा-
र्यैन० कौमारीं० ॥ ३ ॥ ॐवैष्णव्यैन० वैष्णवीं० ॥ ४ ॥ ॐवाराह्यै० वाराहीं० ॥ ५ ॥ ॐइन्द्राण्यै० इन्द्राणीं०
॥ ६ ॥ ॐचामुण्डायै० चामुण्डां० ॥ ७ ॥ इत्यावाह्य ॥ ॥ अथद्वारमातरः ॥ तत्रक्रमः—जयन्तीमङ्गलाचैवपिङ्गलादक्षि-
णेगृहात् ॥ आनन्दवर्धिनीवामेमहाकालीचनिर्गमे ॥ १ ॥ गृहस्यदक्षिणेभागेतिस्रोलेख्यास्तुमातरः ॥ वामभागेतथाद्वे-
चजयन्त्यादिक्रमेणतु ॥ २ ॥ लिखितप्रतिमासुअक्षतपुंजेषुवा ॥ ॐजयन्त्यैन० जयन्तीं० ॥१॥ ॐमङ्गलायै० मङ्गलां०
॥ २ ॥ पिङ्गलायै० पिङ्गलां० ॥ ३ ॥ इतिद्वारदक्षिणे ॥ ॥ ॐआनन्दवर्धिन्यै० आनन्दवर्धिनीं० ॥ ४ ॥ ॐमहा-
काल्यै० महाकालीं० ॥ ५ ॥ इतिवामे ॥ इत्यावाह्यसंपूज्य ॥ ॥ अथगृहमातरः गृहमध्येलिखितप्रतिमासु ॥ तत्रक्रमः ॥

कीर्तिर्लक्ष्मीर्धृतिर्मेधापुष्टिःश्रद्धाक्रियामतिः ॥ बुद्धिर्लज्जावपुःशान्तिस्तुष्टिःकान्तिस्तुमातरः ॥ १ ॥ ॐकीर्त्यैनमः ॥ कीर्तिं आवाहयामि ॥ १ ॥ ॐलक्ष्म्यै० लक्ष्मीं० ॥ २ ॥ ॐधृत्यैन० धृतिं० ॥ ३ ॥ ॐमेधायै० मेधां० ॥ ४ ॥ ॐपुष्ट्यैन० पुष्टिं० ॥ ५ ॥ श्रद्धायै० श्रद्धां० ॥ ६ ॥ क्रियायै० क्रियां० ॥ ७ ॥ ॐमत्यैन० मतिं० ॥ ८ ॥ ॐबुद्ध्यै० बुद्धिं० ॥ ९ ॥ ॐलज्जावपुषेन० लज्जावपुषं० ॥ १० ॥ ॐशान्त्यैन० शान्तिं० ॥ ११ ॥ ॐतुष्ट्यैन० तुष्टिं० ॥ १२ ॥ कान्त्यैन० कान्तिं० ॥ १३ ॥ इत्यावाह्यषोडशोपचारैःसंपूज्य ॥ दाक्षिणात्यास्तुमण्डपमातृकास्थापनंरक्तवस्त्राद्यास्तृतेशूर्पेकुर्वंति ॥ तस्मिन्नेव-शूर्पेयथावकाशंकुंकुमादिनालिखितप्रतिमासुअक्षतपुञ्जेषुवागौर्यादिगृहमातृकान्तानांस्थापनंपूजनंकुर्वन्ति अत्रशिष्टाचा-रएवशरणं इतिप्रयोगदर्पणेपद्मनाभदीक्षिताः ॥ इतिमातृकापूजनम् ॥

अथवसोर्धारापूजनं ॥ पात्रस्थेनविलीनेनसगुडेनघृतेनमातृणांसंनिहितकुड्यलग्नाःदक्षिणाद्युदगपवर्गाः पश्चिमादिप्राग-पवर्गा नातिनीचानचोच्छ्रिताःपञ्चसप्तवावसोर्धाराःकर्तव्याः ॥ तत्रमंत्रः—ॐवसोःपवित्रमसिशतधारंवसोःपवित्रम-सिसहस्रधारं ॥ देवस्त्वासवितापुनातुवसोःपवित्रेणशतधारेणसुप्वा ॥ १ ॥ इति ॥ ततःशिष्टाचारात् ऊर्ध्वभागेगुडेनैकी-करणंतत्रैवकुङ्कुमादिनायथाचारंबिन्दुकरणेनालंकरणं ॥ तत्रमन्त्रः—ॐकामंधुक्षः ॥ इति ॥ ॥ अथघृतमातरः ॥ एताः कुड्येकुंकुमाक्तेनघृतेनदक्षिणोत्तराःपूर्वाभिमुखालेख्याः ॥ श्रीश्चलक्ष्मीर्धृतिर्मेधापुष्टिःप्रज्ञासरस्वती ॥ मांगल्येषुप्रपूज्यंते-सप्तैताघृतमातरः ॥ १ ॥ ॐश्रियैनमः श्रियंआवाहयामि ॥ १ ॥ ॐलक्ष्म्यैन० लक्ष्मीं० ॥ २ ॥ ॐधृत्यैन० धृतिं० ॥ ३ ॥

मेधायैन० मेधांआ० ॥ ४ ॥ ॐस्वाहायैन० स्वाहांआ० ॥ ५ ॥ प्रज्ञायैन० प्रज्ञां आ० ॥ ६ ॥ ॐसरस्वत्यैनमः सरस्वतींआवाहयामि ॥ ७ ॥ इत्यावाह्यवसोर्धारादेवताभ्योनमःइतिसंपूज्यप्रार्थयेत् ॥ अत्रागच्छतभोदेवाःपूजिताविधिमार्गतः ॥ कुर्वंतुकार्यमखिलंनिर्विघ्नेनक्रतूद्भवं ॥ इति ॥ इदंवसोर्धाराकरणंकातीयानामेवनान्येषां ॥ इतिवसोर्धारापूजनं ॥ ततोयजमानःस्थापितमातृकंशूर्पंस्वयंगृहीत्वापत्न्याचाविघ्नकलशंग्राहयित्वापत्न्यग्रतःसन्मण्डपतोगृहमध्येदेवस्याग्रेतत्सर्वंस्थापयेत् ॥ तद्वामपार्श्वेदीपंनिदध्यात् ॥ ॥ आयुष्यमंत्रजपः ॥ ॐआयुष्यंवर्चस्यꣳ रायस्पोषमौद्भिदम् ॥ इदꣳहिरण्यम्वर्चस्वज्जैत्रायाविशतादुमाम् ॥ १ ॥ नतद्रक्षां० ॥ २ ॥ यदाबध्नं० ॥ ३ ॥ इत्यायुष्यमंत्रजपः ॥

अथाभ्युदयिकश्राद्धम् ॥ एतन्निबन्धनाःसर्वेनिर्णयास्त्रयोविंशतिपुटात्प्रभृतिसर्वेसविस्तरंनिर्णीतास्ततएवालोचनीयाः ॥ अत्रतावत्प्रयोगोलिख्यते ॥ ब्राह्मणवत्आसनेषुकौशचट्टनिवेशनं । ततोनिमन्त्रणं । अद्यकर्तव्यामुककर्माङ्गश्राद्धेदैवेक्षणःक्रियतां । ॐतथा ॥ प्राप्नुतांभवन्तौ । प्राप्नवाव ॥ अमुकगोत्राणांनांदीमुखानांअस्मत्पितृपितामहप्रपितामहानांअमुकामुकशर्मणांकर्तव्यामुककर्माङ्गाभ्युदयिकश्राद्धेक्षणःक्रियतां॥ॐतथा ॥ प्राप्नुतांभवन्तौ । प्राप्नवाव ॥ अमुकगोत्राणांनान्दीमुखीनां अस्मत्मातृपितामहीप्रपितामहीनांअमुक्यमुकीदेवीनांकर्तव्यामुककर्माङ्गाभ्युदयिकश्राद्धेक्षणःक्रियतां । ॐतथा ॥ प्राप्नुतांभवन्तौ । प्राप्नवाव ॥ अमुकगोत्राणांनान्दीमुखानांअस्मत्मातामहप्रमातामहवृद्धप्रमातामहानांअमुकामुकशर्मणांसपत्नीकानांकर्तव्यामुककर्माङ्गाभ्युदयिकश्राद्धेक्षणःक्रियतां । ॐतथा ॥ प्राप्नुतांभवन्तौ । प्राप्नवाव ॥ ॐसत्यवसूविश्वेदेवाः इदंवःपाद्यं-

पादप्रक्षालनं । एषवोगन्धः । इमानिवःपुष्पाणि ॥ एषवोऽर्घः ॥ अमुकामुकगोत्राः नान्दीमुखाःअस्मत्पितृपितामहप्र-
पितामहाःअमुकामुकशर्माणःइदंवःपाद्यंपादप्रक्षालनं । एषवोगन्धः । इमानिवःपुष्पाणि । एषवोऽर्घः ॥ अमुका-
मुकगोत्राःनान्दीमुख्यःअस्मन्मातृपितामहीप्रपितामह्यःअमुक्यमुकीदाः इदंवःपाद्यंपादप्रक्षालनं । एषवोगन्धः । इमा-
निवःपुष्पाणि । एषवोऽर्घः ॥ अमुकामुकगोत्राःनान्दीमुखाःअस्मन्मातामहप्रमातामहवृद्धप्रमातामहाःअमुकामुकश-
र्माणःसपत्नीकाःइदंवःपाद्यंपादप्रक्षालनं । एषवोगन्धः । इमानिवःपुष्पाणि । एषवोऽर्घः ॥ देशकालौसंकीर्त्यअमुक-
गोत्राःनान्दीमुखाःअस्मत्पितृपितामहप्रपितामहाः अमुकामुकशर्माणः । अमुकगोत्राःनान्दीमुख्यःअस्मन्मातृपितामही-
प्रपितामह्यःअमुक्यमुकीदेव्यः । अमुकगोत्राःनान्दीमुखाःअस्मन्मातामहप्रमातामहवृद्धप्रमातामहाःअमुकामुकशर्माणःस-
पत्नीकाः । एतानुद्दिश्यकरिष्यमाणामुककर्माङ्गतयासत्यवसूविश्वेदेवपूर्वकंसांकल्पेनविधिनाआभ्युदयिकश्राद्धंयुष्मदनुज्ञ-
याकरिष्येइतिप्रश्नः ॥ कुरुष्वइतिप्रतिप्रश्नः ॥ ॐसत्यवसूविश्वेदेवाःइदंवआसनं ॥ अमुकगोत्राःनान्दीमुखाःअस्मत्पितृपि-
तामहप्रपितामहाः अमुकामुकशर्माणःइदंवआसनं॥ अमुकगोत्राःनान्दीमुख्यःअस्मन्मातृपितामहीप्रपितामह्यःअमुक्यमुकी-
देव्यःइदंवआसनं ॥ अमुकगोत्राः नान्दीमुखाःअस्मन्मातामहप्रमातामहवृद्धप्रमातामहाःअमुकामुकशर्माणःसपत्नीकाः इदं
वआसनं॥ ततोगन्धादिदानं ॥ ॐसत्यवसूविश्वेदेवाः इदंदत्तंगन्धाद्यर्चनंयथाविभागंवःस्वाहानमः ॥ अमुकगोत्राःनान्दी-
मुखाः अस्मत्पितृपितामहप्रपितामहाःअमुकामुकशर्माणःयथादत्तंगन्धाद्यर्चनंयथाविभागंवःस्वाहानमः ॥ अमुकगोत्राःना-

न्दीसुख्यः अस्मन्मातृपितामहीप्रपितामह्यः अमुक्यमुकीदाः इदंदत्तंगन्धा० ॥ अमुकगोत्राः नान्दीमुखाः अस्मन्मातामहप्रमा-
तामहवृद्धप्रमातामहाः अमुकामुकशर्माणः सपत्नीकाः इदंदत्तंगन्धा० ॥ इदंज्योतिः । सुज्योतिः ॥ अन्नसंकल्पः ॥
ॐसत्यवसूविश्वेदेवाः युग्मब्राह्मणतृप्तिपर्यन्तंदास्यमानमामंअमृतरूपेणवः स्वाहानमः ॥ अमुकगोत्राः नान्दीसुखाः अस्मत्पि-
तृपितामहप्रपितामहाः अमुकामुकशर्माणः युग्मब्राह्मणतृप्तिपर्यन्तंदास्यमानमामंअमृतरूपेणवः स्वाहानमः ॥ अमुकगोत्राः
नान्दीसुख्यः अस्मन्मातृपितामहीप्रपितामह्यः० युग्मब्राह्मणतृप्तिपर्यन्तंदास्यमानमामंअमृत० ॥ अमुकगोत्राः नान्दीमुखाः
अस्मन्मातामहप्रमातामहवृद्धप्रमातामहाः० युग्मब्राह्मणतृप्तिपर्यन्तंदास्यमानमामंअमृत० ॥ आमंहिरण्यंवा ॥ ॐसत्य-
वसूविश्वेदेवाः प्रीयन्तां ॥ अमुकगोत्रानान्दीसुखाः अस्मत्पितृपितामहप्रपितामहाः अमुकामुकशर्माणः प्रीयन्तां ॥ अमुक-
गोत्राः नान्दीसुख्यः अस्मन्मातृपितामहीप्रपितामह्यः अमुक्यमुकीदाः प्रीयन्तां ॥ गोत्राः नान्दीमुखाः अस्मन्मातामहप्रमाता-
महवृद्धप्रमातामहाः अमुकामुकशर्माणः सपत्नीकाः प्रीयन्तां ॥ ॐसत्यवसूविश्वेदेवाः कृतस्याभ्युदयिकश्राद्धस्यफलप्रतिष्ठासि-
द्ध्यर्थंद्राक्षामलकयवमूलनिष्क्रयिणींदक्षिणांदातुमहमुत्सृज्ये ॥ गोत्राः नान्दीसुखाः अस्मत्पितृपितामहप्रतितामहाः० । गो-
त्राः नान्दीसुख्यः अस्मन्मातृपितामहीप्रपितामह्यः० । गोत्राः नान्दी० सपत्नीकाः कृतस्याभ्युदयिकश्राद्धस्यफलप्रतिष्ठासिद्ध्यर्थं-
द्राक्षामलकयवमूलनिष्क्रयिणींदक्षिणांदातुमहमुत्सृज्ये ॥ आशीर्ग्रहणं ॥ अघोराः पितरः सन्तु ॥ सन्त्वघोराः पितरः ॥

गोत्रंनोवर्धतां ॥ वर्धतांवोगोत्रं० ॥ दातारोनोऽभिवर्धन्तां ॥ अभिवर्धन्तांवोदातारः ॥ वेदाश्चनोऽभिवर्धन्तां ॥ वर्धन्तां वोवेदाः ॥ संततिर्नोऽभिवर्धतां ॥ वर्धतांवःसंततिः ॥ श्रद्धाचनोमाव्यगमत् ॥ माव्यगमद्वःश्रद्धा ॥ बहुदेयंचनोस्तु ॥ अस्तुवोबहुदेयं ॥ ततःनान्दीश्राद्धंसंपन्नं । सुसंपन्नं ॥ अस्मिन्नाभ्युदयिकश्राद्धेन्यूनातिरिक्तोयोविधिःसउपविष्टब्राह्मणवचनाद्विष्णुप्रसादात् श्रीनान्दीमुखदेवताप्रसादात्परिपूर्णोस्त्वितिभवन्तोब्रुवन्तु ॥ अस्तुपरिपूर्णः ॥ विसर्जनम् ॥ ॐवाजेवाजेवतवाजिनोनोधनेषुविप्राऽअमृताऽऋतज्ञाः ॥ अस्यमध्वः पिबतमादयध्वंतृप्तायातपथिभिर्देवयानैः ॥ अनुव्रजनम् ॥ आमावाजस्यप्रसवोजगम्यादेमेद्यावापृथिवीविश्वरूपे ॥ आमागन्तांपितरामातराचामासोमोअमृतत्वेनगम्यात् ॥ अनेनसांकल्पविधिनाआभ्युदयिकश्राद्धेननान्दीमुखदेवताःप्रीयन्ताम् ॥ इतिआभ्युदयिकश्राद्धम् ॥

अथर्त्विग्वरणम् ॥ अस्मिन्त्सग्रहमखरजोदर्शनशान्त्याख्येकर्मणिआचार्यादिऋत्विग्वरणंकरिष्ये ॥ अमुकप्रवरान्वितअमुकगोत्रःशुक्लयजुर्वेदाम्नायवाजिमाध्यंदिनीयशाखाध्यायीअमुकशर्मायजमानोहं अमुकप्रवरान्वितअमुकगोत्रंशुक्लयजुर्वेदाम्नायवाजिमाध्यंदिनीयशाखाध्यायिनंअमुकशर्माणंब्राह्मणंअस्मिन्त्सग्रहमखरजोदर्शनशान्त्याख्येकर्मणिआचार्यत्वेनत्वांवृणे वृतोस्मीत्याचार्यः ॥ गंधादिभिःसंपूज्य प्रार्थयेत् ॥ ॐबृहस्पतेऽअतियदर्योअर्हाद्द्युमद्विभातिक्रतुमज्जनेषु ॥ यद्दीदयच्छवसऽऋतप्रजाततदस्मासुद्रविणन्धेहिचित्रम् ॥१॥ आचार्यस्तुयथास्वर्गेशक्रादीनांबृहस्पतिः ॥ तथात्वंममयज्ञेस्मिन्नाचार्यो-

भवसुव्रत ॥१॥ एवं ब्रह्माणंवृत्वा ॥ अस्मिन्त्स० रजोदर्शनशान्त्याख्येकर्मणिब्रह्मत्वेनत्वामहंवृणे ॥ वृतोस्मि ॥ ॐब्रह्मयज्ञा-
नंप्रथमंपुरस्ताद्विसीमतःसुरुचोवेनआवः ॥ सबुध्न्याउपमाअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ॥ यथाचतुर्मुखोब्रह्मास-
र्वलोकपितामहः ॥ तथात्वंममयज्ञेस्मिन्ब्रह्माभवद्विजोत्तम ॥१॥ एवंगणपतिंसम्र०गाणपत्येनत्वामहंवृणे ॥ वृतोस्मि ॥ ॐ-
गणानांत्वागणपतिं० ॥ वांछितार्थफलावाप्त्यैपूजितोसिसुरासुरैः ॥ निर्विघ्नंक्रतुसंसिध्यैत्वामहंगणपंवृणे ॥ १ ॥ एवंसदस्यं
अस्मिन्त्सम्र० सादस्येनत्वामहंवृणे ॥ वृतोस्मि ॥ ॐसदसस्पतिमद्भुतंप्रियमिन्द्रस्यकाम्यम् ॥ सनिम्मेधामयासिषम् ॥१॥
कर्मणामुपदेष्टारंसर्वकर्मविदुत्तमं ॥ कर्मणिवेदतत्वज्ञंसदस्यंत्वामहंवृणे ॥ १ ॥ ततश्चतुरोष्टौवाऋत्विजोवृणुयात् ॥ ऋत्वि-
क्त्वेनत्वामहंवृणे इति ॥ (यज्ञादिकर्मकार्येपुऋत्विग्शक्रमखेयथा ॥ तथावैयज्ञकार्येस्मिन्नृत्विक्त्वंमेमखेभव ॥ १ ॥)
ॐव्रतेनदीक्षामाप्नोतिदीक्षयाप्नोतिदक्षिणाम् ॥ दक्षिणाश्रद्धामाप्नोतिश्रद्धयासत्यमाप्यते ॥१॥ एतावद्रूपञ्ज्यज्ञस्ययद्देवैर्ब्रह्म-
णाकृतम् ॥ तदेतत्सर्वमाप्नोतियज्ञेसौत्रामणीसुते ॥ १ ॥ अथप्रार्थना ॥ ब्राह्मणाःसन्तुमेशस्ताःपापात्पान्तुसमाहिताः ॥
देवानांचैवदातारःपातारःसर्वदेहिनां ॥ १ ॥ जपयज्ञैस्तथाहोमैर्दानैश्चविविधैःपुनः ॥ देवानांचऋषीणांचतृप्त्यर्थंयाजकाः
कृताः ॥ २ ॥ येषांदेहेस्थितावेदाःपावयन्तिजगत्त्रयम् ॥ रक्षन्तुसततंतेमांजपयज्ञेव्यवस्थिताः ॥ ३ ॥ ब्राह्मणाजंगमंती-
र्थंत्रिपुलोकेषुविश्रुतम् ॥ येषांवाक्योदकेनैवशुध्यन्तिमलिनाजनाः ॥ ४ ॥ पावनाःसर्ववर्णानांब्राह्मणाब्रह्मरूपिणः ॥

सर्वकर्मरतानित्यंवेदशास्त्रार्थकोविदाः ॥ ५ ॥ श्रोत्रियाःसत्यवाचश्चग्रहध्यानरताःसदा ॥ यद्वाक्यामृतसंसिक्ताऋद्धिंयान्तिनरद्रुमाः ॥ ६ ॥ अङ्गीकुर्वन्तुकर्मैतत्कल्पद्रुमसमाशिषः ॥ यथोक्तनियमैर्युक्तामंत्रार्थेस्थिरबुद्धयः ॥ ७ ॥ यत्कृपालोचनात्सर्वाऋद्धयोवृद्धिमाप्नुयुः ॥ अस्मिन्यागेमयापूज्याःसन्तुमेनियमान्विताः ॥ ८ ॥ अक्रोधनाःशौचपराःसततंब्रह्मचारिणः ॥ ग्रहध्यानरतानित्यंप्रसन्नमनसःसदा ॥ ९ ॥ अदुष्टभाषणाःसन्तुमासन्तुपरनिन्दकाः ॥ ममापिनियमाह्येतेभवन्तुभवतामपि ॥ १० ॥ इतिसंप्रार्थ्यतान्ब्रूयाद्यथावत्क्रियतांविधिः ॥ ११ ॥ ऋत्विजश्चयथापूर्वंशक्रादीनांमखेभवन् ॥ यूयंतथामेभवतऋत्विजोर्हत्सुसत्तमाः ॥ १२ ॥ अस्ययागस्यनिष्पत्तौभवन्तोभ्यार्थितामया ॥ सुप्रसन्नैःप्रकर्तव्यंशान्तिकंविधिपूर्वकं ॥१३॥ इतिऋत्विग्वरणम् ॥ ॥ अथदिग्रक्षणं ॥ ॐ र॒क्षो॒हणं॑म्वलग॒हनं॑म्वैष्णवीमि॒दम॒हन्तम्व॑लगमुत्किरामि॒यम्मे॒निष्ट्यो॒यम॒मात्यो॑निच॒खाने॒दम॒हन्तम्व॑ल॒गमुत्कि॑रामि॒यंमे॑समा॒नोयमसमानोनिच॒खाने॒दम॒हन्तम्व॑ल॒गमुत्कि॑रामि॒यम्मे॒सबन्धुर्यमसबन्धुर्निच॒खाने॒दम॒हन्तम्व॑ल॒गमुत्कि॑रामि॒यम्मे॑सजा॒तोयमसंजातोनिच॒खानोत्कृत्याङ्किरामि ॥ १ ॥ र॒क्षो॒हणो॑वोवलग॒हनः॒ प्रोक्षा॑मिवैष्ण॒वान्र॑क्षो॒हणो॑वोवलग॒हनोवनयामिवैष्ण॒वान्र॑क्षो॒हणो॑वोवलग॒हनोवस्तृणामिवैष्ण॒वान्र॑क्षो॒हणौ॑वांवलग॒हना॒ऽउप॑दधामिवैष्ण॒वीर॑क्षो॒हणौ॑वांवलग॒हना॒पर्यू॑हामिवैष्ण॒वीवैष्ण॒वम॑सिवैष्ण॒वास्थ ॥ २ ॥ रक्ष॑साम्भा॒गो॒सि॒निर॑स्त॒ꣳरक्ष॒ऽइ॒दम॒हꣳरक्षो॒भिति॑ष्ठामी॒दम॒हꣳ रक्षो॑वबाधऽइ॒दम॒हꣳरक्षो॑ध॒मन्तमो॑नयामि ॥ घृतेन॑द्यावापृथिवी॒प्रोर्णु॑वाथां॒वायो॒वेस्तो॒काना॑-

यजुः-
मग्निराज्यंस्यवेत्तुस्वाहास्वाहाकृतेऽऊर्ध्वंनभसंमारुतङ्गच्छतम् ॥ ३ ॥ रक्षोहाविश्वचर्षणिरभियोनिमयोहते ॥ द्रोणेसध-
स्थमासदत् ॥ ४ ॥ अपसर्पन्तुतेभूतायेभूताभूमिसंस्थिताः ॥ येभूताविघ्नकर्तारस्तेनश्यन्तुशिवाज्ञया ॥ १ ॥ अपक्राम-
३५॥
न्तुभूतानिपिशाचाःसर्वतोदिशं ॥ सर्वेषामविरोधेनशान्तिकर्मसमारभे ॥ २ ॥ यदत्रसंस्थितंभूतंस्थानमाश्रित्यसर्वतः ॥
स्थानंत्यक्त्वातुतत्सर्वंयत्रस्थंतत्रगच्छतु ॥३॥ भूतानिराक्षसावापियेऽत्रतिष्ठन्तिकेचन ॥ तेसर्वेप्यपगच्छन्तुशान्तिकंतुकरो-
म्यहं ॥ ४ ॥ इतिमन्त्रैरीशानादिसर्वदिक्षुविकिरेत् ॥ उदकोपस्पर्शः ॥ इतिदिग्रक्षणम् ॥ ॥ अथपञ्चगव्यकरणं ॥ गाय-
त्र्यागोमूत्रं ॥ ॐतत्सवितु० ॥ १ ॥ गन्धद्वारामितिगोमयं ॥ ॐगन्धद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीं ॥ ईश्वरींसर्व-
भूतानांतामिहोपह्वयेश्रियं ॥ २ ॥ आप्यायस्वेतिक्षीरं ॥ ॐआप्यायस्वसमेतुतेविश्वतःसोमवृष्ण्यम् ॥ भवावाजस्यस-
ङ्गथे ॥ ३ ॥ दधिक्राव्णइतिदधि ॥ ॐदधिक्राव्णो० ॥ ४ ॥ तेजोसीत्याज्यं ॥ ॐतेजोसिशुक्रमस्यमृतमसिधामनामा-
सिप्रियन्देवानामनाधृष्टन्देवयजनमसि ॥ ५ ॥ देवस्यत्वेतिकुशोदकं ॥ ॐदेवस्यत्वासवितुः० ॥ ६ ॥ ॐइतिप्रणवेन
यज्ञकाष्ठेनालोड्य आपोहिष्ठेतितिस्त्रिभिर्मन्त्रैः आत्मानंकर्मभूमिंयज्ञसंभारांश्चप्रोक्षेत् ॥ इतिपञ्चगव्यकरणं भूमिप्रोक्षणंच ॥ ॥
॥ अथभूमिपूजनं ॥ ॐभूरसिभूमिरस्यदितिरसिविश्वधायाविश्वस्यभुवनस्यधर्त्री ॥ पृथिवींयच्छपृथिवीन्दृंहपृथिवीम्माहिंः
सीः ॥ ॐभूर्भुवःस्वःपृथिवीकूर्मानन्तदेवताभ्योनमः इतिमन्त्रेणषोडशोपचारैःपूजयेत् ॥ इतिभूमिपूजनं ॥ ॥ अथाग्निप्र-

तिष्ठापनं । शुभपुण्यतिथौअस्मिन्सग्रहमखरजोदर्शनशान्त्याख्येकर्मणिपञ्चभूसंस्कारपूर्वकंअग्निप्रतिष्ठापनंकरिष्ये ॥ स्थण्डि-लेपञ्चभूसंस्काराः । दर्भैःपरिसमुह्य गोमयेनोपलिप्य यज्ञकाष्ठेनस्रुवेणकुशैर्वोल्लिख्य अनामिकांगुष्ठेनोद्धृत्य उदकेनाभ्युक्ष्य आ-त्माभिमुखमग्निमुपसमाधाय[2] ॥ अग्निपूजनम् ॥ ॐअग्निन्दूतम्पुरोदधेहव्यवाहमुपब्रुवे ॥ देवाँ२ऽआसादयादिह ॥ १ ॥ ॥ अग्न्याहरणपात्रेसाक्षतोदकंनिषिच्य ॥ अग्निमुखंकृत्वाध्यायेत् ॥ ॐचत्वारिशृङ्गात्रयोऽअस्यपादाद्वेशीर्षेसप्तहस्तासोऽअ-स्य ॥ त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्याँ२ऽआविवेश ॥ १ ॥ सप्तहस्तश्चतुःशृङ्गःसप्तजिह्वोद्विशीर्षकः ॥ त्रिपात्प्र-सन्नवदनःसुखासीनःशुचिस्मितः ॥ १ ॥ स्वाहांतुदक्षिणेपार्श्वेदेवींवामेस्वधांतथा ॥ बिभ्रद्दक्षिणहस्तैस्तुशक्तिमन्नंस्रुचंस्रुवं ॥ २ ॥ तोमरंव्यजनंवामेघृतपात्रंचधारयन् ॥ आत्माभिमुखमासीनएवंरूपोहुताशनः ॥ ३ ॥ अग्नेवैश्वानरशाण्डिल्य-गोत्रशाण्डिल्यासितदेवलेतित्रिप्रवरभूमिमातः[3]वरुणपितःमेषध्वजप्राङ्मुखममसम्मुखोभव ॥ शान्तिकेवरदनामाग्निंप्रति-ष्ठाप्य ॐअग्निपुरुषायनमः इतिमन्त्रेणनैर्ऋत्यकोणेबहिरग्निंषोडशोपचारैःसंपूज्यप्रार्थयेत् ॥ अग्निंप्रज्वलितंवन्देजातवे-दंहुताशनं ॥ हिरण्यवर्णमनलंसमृद्धंविश्वतोमुखं ॥ इत्यग्निप्रतिष्ठापनं ॥ ॥ अथप्रधानदेवतास्थापनं ॥ तत्रादौस्थण्डिलस्ये-

---

१ उत्तानेनतुहस्तेनप्रोक्षणंसमुदाहृतम् ॥ तिरश्चावोक्षणंप्रोक्तंनीचेनाभ्युक्षणस्मृतमितिसार्तवैद्यनाथमिश्रा । २ शुभंपात्रंतुकांस्यस्यतेनाग्निप्रणयेद्बुध । तस्याभावे-शरावेणनवेनाभिमुखेनतमिति । सार्त० । ३ चिराच्छिष्टपठितमिदंवहेर्भूमिमातृत्वंवरुणपितृत्वंचकिंमूलकनविद्म ।

शानदेशेदक्षिणोत्तरस्थानेपुक्रमेणमहीद्यौरित्यादिपूर्णपात्रान्तंमंत्रावृत्त्याकलशचतुष्टयंसंस्थाप्यतेपुतत्त्वायामीतिमन्त्रावृत्त्या-
वरुणमावाह्यप्रसन्नोभवसर्वदेत्यंतंसंपूजयेत् ॥ तद्यथा ॥ ततोमहीद्यौरितिभूमिंस्पृष्ट्वा ॥ ओषधयःसमितियवान्क्षिप्त्वा ॥
आजिघ्रमितिकलशंस्थापयेत् ॥ वरुणस्योत्तम्भनमितिजलंपूरयेत् ॥ त्वांगन्धर्वाइतिगन्धप्रक्षेपः ॥ याओषधीरितिसर्वौ-
षधीः ॥ काण्डात्काण्डादितिदूर्वाः ॥ अश्वत्थेवइतिपञ्चपल्लवान् ॥ स्योनापृथिवीतिसप्तमृदः ॥ आपोहिष्ठेतिपञ्चगव्यं ॥
याःफलिनीरितिफलं ॥ परिवाजपतिरितिपञ्चरत्नानि ॥ हिरण्यगर्भेतिहिरण्यं ॥ युवासुवासाइतिरक्तसूत्रेणावेष्ट्य ॥ पूर्णा-
दर्वीतिपूर्णपात्रंनिधाय ॥ तत्त्वायामीतिवरुणमावाह्यपंचोपचारैःसंपूज्यसर्वेसमुद्राइतिगङ्गाद्यावाहयेत् ॥ ॥ ततः सूर्ये-
न्द्रेन्द्राणीभुवनेश्वरीणांचतस्रःसुवर्णमयीःप्रतिमाःपात्रांतस्संस्थाप्यअग्न्युत्तारणपूर्वकंप्राणप्रतिष्ठांतंकुर्यात् ॥ ॥ ततःदेश-
कालौस्मृत्वाआसांसूर्येन्द्रेन्द्राणीभुवनेश्वरीमूर्तीनांअग्न्युत्तारणपूर्वकंप्राणप्रतिष्ठांकरिष्ये ॥ मूर्तीर्घृतेनाभ्यज्यउपरिजलधारां
कुर्यात् ॥ ॥ अग्न्युत्तारणमन्त्राः ॥ ॐसमुद्रस्यत्वावकयाग्नेपरिव्ययामसि ॥ पावकोऽअस्मभ्यंशिवोभव ॥ १ ॥
हिमस्यत्वाजरायुणाग्नेपरिव्ययामसि ॥ पावकोऽअस्मभ्यंशिवोभव ॥ २ ॥ उपज्मन्नुपवेतसेवतरनदीष्वा ॥ अग्नेपित्त-
मपामसिमण्डूकिताभिरागहिसेमन्नोयज्ञम्पावकवर्णंशिवङ्कृधि ॥ ३ ॥ अपामिदंन्ययनंसमुद्रस्यनिवेशनम् ॥ अन्याँस्तेऽ-
अस्मत्तपन्तुहेतयःपावकोऽअस्मभ्यंशिवोभव ॥ ४ ॥ अग्नेपावकरोचिषामन्द्रयादेवजिह्वया ॥ आदेवान्वक्षियक्षिच ॥५॥

सनᳪ॑पावकदीदिवोग्नेदेवाँ२इहावह ॥ उपयज्ञᳪ्हविश्चनᳪ॑ ॥ ६ ॥ पावकयायश्चितयन्त्याकृपाक्षामन्नुरुचऽउषसोनभानु-
नां ॥ तूर्वन्नयामन्नेतशस्यनूरणऽआयोघृणेनततृषाणोऽअजरᳪ॑ ॥ ७ ॥ नमस्तेहरसेशोचिषेनमस्तेऽअस्त्वर्चिषे ॥ अन्याँ-
स्तेऽअस्मत्तपन्तुहेतयᳪ॑पावकोऽअस्मभ्यᳪ्शिवोभव ॥८॥ नृषदेवेडप्सुषदेवेड्बर्हिषदेवेड्वनसदेवेड्स्वर्विदेवेट् ॥ ९ ॥ येदे-
वादेवानांयज्ञियायज्ञियानाᳪ्संवत्सरीणमुपभागमासते ॥ अहुतादोहविषोयज्ञेऽअस्मिन्स्वयंपिबन्तुमधुनोघृतस्य ॥ १० ॥
येदेवादेवेष्वधिदेवत्वमायन्येब्रह्मणᳪ॑पुरऽएतारोऽअस्य ॥ येभ्योनऽऋतेपवतेधामकिञ्चननतेदिवोनपृथिव्याऽअधिस्नुषु ॥११॥
प्राणदाऽअपानदाव्यानदावर्चोदावरिवोदाः ॥ अन्याँस्तेऽअस्मत्तपन्तुहेतयᳪ॑पावकोऽअस्मभ्यᳪ्शिवोभव ॥ १२ ॥ ॥
ततःप्राणप्रतिष्ठांकुर्यात् ॥ अस्यश्रीप्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुरुद्राऋषयः । ऋग्यजुःसामानिच्छन्दांसि । पराप्राणशक्ति-
र्देवता । आंबीजं । ह्रींशक्तिः । क्रोंकीलकं । आसुस्वर्णप्रतिमासुसूर्येन्द्रेन्द्राणीभुवनेश्वरीणांप्राणप्रतिष्ठायांविनियोगः ॥
ॐआंह्रींक्रोंयंरंलंवंशंषंसंहोंॐक्षंसंहंसः ह्रींॐआंह्रींक्रों ॥ आसांसूर्येन्द्रेन्द्राणीभुवनेश्वरीमूर्तीनांप्राणाइहप्राणाः ॥
पुनः पूर्ववत् ॐआंह्रींक्रोंयं० ॥ आसांसूर्येन्द्रे० मूर्तीनांजीवाइहस्थिताः ॥ पुनः ॐआंह्रींक्रोंयं० आसांसूर्येन्द्रे०
मूर्तीनांसर्वेन्द्रियाणि ॥ ॐआंह्रींक्रोंयंरं० आसांसूर्येन्द्रेन्द्राणी० मूर्तीनां वाङ्मनश्चक्षुःश्रोत्रघ्राणपादप्राणाइहैवागत्यसुखंचिरं
तिष्ठन्तुस्वाहा ॥ प्रणवस्यपञ्चदशावृत्तीःकृत्वा ॥ ॐमनोजूतिर्ज्जुषता० ॥१॥ एषवैप्रति० ॥२॥ सूर्येन्द्रेन्द्राणीभुवनेश्वरीदेवताः

सुप्रतिष्ठिताःवरदाभवंतु इतिप्रतिष्ठाप्य ॥ ॥ वृत्रस्यासीतिनेत्रोन्मीलनं ॐवृत्रस्यासिकनीनकश्चक्षुर्दाऽअसिचक्षुर्म्मेदेहि ॥
गंधादिपंचोपचारान्दत्वासंस्कारसिद्ध्येषोडशप्रणवावृत्तीःकुर्यात् ॥ ॥ इतिप्राणप्रतिष्ठा ॥ ॥ अथसूर्याद्यावाहनं ॥ ॥
ॐआकृष्णेनरज॰ ॥ एह्येहिपद्मासनपद्मपाणेसुरक्तसिन्दूरसमानवर्ण ॥ सप्ताश्वरक्ताम्बरसूर्यशीघ्रंगृहाणपूजांभगवन्नमस्ते ॥१॥
ॐभूर्भुवःस्वःसूर्यइहागच्छइहतिष्ठ ॥ ॐसूर्यायनमःसूर्यंआवाहयामि ॥ ॥ अथेन्द्रध्यानं ॥ ॐत्रातारमिन्द्रम॰ ॥ एह्ये-
हिनानाभरणप्रियेन्द्रशाचीपतेवज्रधरामरेश ॥ ऐरावतारूढशचीसखात्रगृहाणपूजांभगवन्नमस्ते ॥ २ ॥ ॐभू॰ इन्द्रइ-
हा॰ ॥ ॥ अथेन्द्राणीध्यानं ॥ ॐअदित्यैरास्नासि॰ ॥ एह्येहिदेवीश्वरिहेमवर्णेविशालपंकेरुहलोलनेत्रे ॥ अंभोजह-
स्तेशचिदिव्यरूपेगृहाणपूजांममयज्ञसिद्ध्यै ॥३॥ ॐभू॰ इंद्राणिइ॰ ॥ ॥ अथभुवनेश्वरीध्यानं ॥ ॐश्रीश्चतेल॰ ॥ एह्ये-
हिदुर्गेदुरितौघनाशिनिप्रचंडदैत्यौघविनाशकारिणि ॥ उमेमहेशार्धशरीरधारिणिस्थिराभवत्वंममयज्ञकर्मणि ॥४॥ ॐभू॰
भुवनेश्वरिइहा॰ भुवनेश्वर्यै॰ भुवनेश्वरींआवाहयामि ॥ ॥ ततआकृष्णेनेत्यादिचतुर्मन्त्रैर्नाममन्त्रैर्वासर्वाःप्रत्येकंएकतन्त्रेणवा
षोडशोपचारैःसंपूज्यप्रार्थयेत् ॥ सूर्यप्रार्थना ॥ नमोनमस्तेसुरसेवितायसहस्रनेत्रायसुमण्डलाय ॥ सिन्दूरवर्णायसुपङ्कजाय
सुवर्णवज्राभरणायतुभ्यं ॥ १ ॥ क्षमापनं ॥ सप्तसप्तिसमारूढपद्महस्तसुमङ्गल ॥ क्षमांकुरुदयालोत्वंग्रहराजनमोस्तुते
॥ २ ॥ अथेन्द्रप्रार्थना ॥ पुरन्दरनमस्तेस्तुवज्रहस्तनमोस्तुते ॥ शचीसखनमस्तेस्तुमेघवाहनमोस्तुते ॥ १ ॥ क्षमा-

पनं ॥ देवराजगजारूढपुरन्दरशतक्रतो ॥ शचीसखमहाबाहोवाञ्छितार्थप्रदोभव ॥ २ ॥ अथेन्द्राणीप्रार्थना ॥ त्वांन-
मामिगजारूढांशचींकमललोचनां ॥ सुरराजप्रियांदेवींधृतसंतानमञ्जरीं ॥ १ ॥ क्षमापनं ॥ अम्भोजहस्तेवरदेकमलाय-
तलोचने ॥ सुरराजप्रियेदेविप्रसीदपरमेश्वरि ॥ २ ॥ अथभुवनेश्वरीप्रार्थना ॥ नमोस्तुदेव्यैसुरपूजितायैविशालपङ्केरुह-
लोचनायै ॥ नगाधिराजप्रियकन्यकायैनमोस्तुतस्यैहरवल्लभायै ॥ १ ॥ क्षमापनं ॥ दुर्गेदेविमहाभागेमहादेवप्रियेनघे ॥
नीलोत्पलमुखेवन्द्येममपीडांनिराकुरु ॥ २ ॥ इतिप्रार्थ्य ॥ अनयापूजयाश्रीसूर्येन्द्रेन्द्राणीभुवनेश्वरीदेवताःप्रीयन्तां ॥ ॥
वह्नेरुत्तरतोविद्वान्कदलींस्थापयेच्छुभां ॥ हेम्नःपञ्चपलाढ्यांचपलस्यापिसुलक्षणां ॥ १ ॥ वंशपात्रेप्रतिष्ठाप्यतन्दुलानाढ-
कोपरि ॥ कदल्यैइतिमन्त्रेणपूजयित्वाप्रणम्यच ॥ दद्यात्तांद्विजवर्यायसर्वदोषापनुत्तये ॥ २ ॥ ॥ ततोग्नेरुत्तरतःप्रसा-
रितरक्तवस्त्रेवंशपात्रेआढकपरिमिततन्दुलराशिंकृत्वातदुपरिहैमींकदलींसंस्थाप्य ॥ श्रीसूर्यदेवतायैकदल्यैनमइतिमन्त्रेणषो-
डशोपचारैःसंपूजयेत् ॥ दानसमयेअस्यादानंकार्यमिति ॥ ॥ ततोजपार्थंकृतवरणोब्राह्मणः सूर्याद्यावाहितमूर्तिसमी-
पेउपविश्यसूर्यकलशंस्पृष्ट्वाविभ्राडित्यनुवाकंजपेत् अथवारुद्रैकादशनींजपेत् ॥ ॥ अथग्रहमण्डलदेवतास्थापनं ॥
तत्रपीठमध्येवर्तुलेद्वादशाङ्गुलेमण्डलेप्राङ्मुखंसूर्यंरक्तपुष्पाक्षतैरावाह्य ॥ ॐआकृष्णेनरजसावर्तमानोनिवेशयन्नमृतंमर्त्यंच ॥
हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन् ॥ १ ॥ ॐभू० कलिंगदेशोद्भवकाश्यपगोत्ररक्तवर्णभोसूर्यइहागच्छइ-

इतिष्ठ ॐसूर्यायनमः सूर्यंआवाहयामि ॥ ततआग्नेय्यांदिशिचतुरस्रेचतुर्विंशत्यङ्गुलेमण्डलेप्रत्यङ्मुखंसोमंशुक्लपुष्पाक्षतैः ॥
ॐइमन्देवाऽअसपत्नꣳसुवध्वम्महतेक्षत्रायमहतेज्यैष्ठ्यायमहतेजानराज्यायेन्द्रस्येन्द्रियाय ॥ इममुमुष्यपुत्रममुष्यैपुत्रमस्यै-
विशऽएषवोमीराजासोमोस्माकम्ब्राह्मणानाꣳराजा ॥ २ ॥ ॐभू० यमुनातीरोद्भवआत्रेयगोत्रशुक्लवर्णभोसोमइहागच्छ-
इ० ॥ ततोदक्षिणस्यांदिशित्रिकोणेत्र्यङ्गुलेमण्डलेदक्षिणाभिमुखंभौमंरक्तपुष्पाक्षतैः ॥ ॐअग्निर्मूर्धादिवःककुत्प-
तिःपृथिव्याऽअयम् ॥ अपाꣳरेताꣳसिजिन्वति ॥ ३ ॥ ॐभू० अवंतिदेशोद्भवभारद्वाजगोत्ररक्तवर्णभोभौमइहा० ॥ त-
तऐशान्यांदिशिबाणाकारेचतुरङ्गुलेमण्डलेउदङ्मुखंबुधंपीतपुष्पाक्षतैः ॥ ॐउद्बुध्यस्वाग्नेप्रतिजागृहित्वमिष्टापूर्तेसꣳसृजे-
थामयंच ॥ अस्मिन्त्सधस्थेऽअध्युत्तरस्मिन्विश्वेदेवायजमानश्चसीदत ॥ ४ ॥ ॐभू० मगधदेशोद्भवआत्रेयगोत्रपीतवर्णभो-
बुधइ० ॥ ततउत्तरस्यांदिशिलंबदीर्घचतुरस्रेपट्टाकारेषडङ्गुलेमण्डलेबृहस्पतिंपीतपुष्पाक्षतैः ॥ ॐबृहस्पतेऽअतियद-
र्योऽअर्हाद्द्युमद्विभातिक्रतुमज्जनेषु ॥ यद्दीदयच्छवसऽऋतप्रजाततदस्मासुद्रविणन्धेहिचित्रम् ॥ ५ ॥ ॐभू० सिंधुदे-
शोद्भवआङ्गिरसगोत्रपीतवर्णभोबृहस्पतइ० ॥ ततःपूर्वस्यांदिशिपञ्चकोणेनवाङ्गुलेमण्डलेप्राङ्मुखंशुक्रंशुक्लपुष्पाक्षतैः ॥
ॐअन्नात्परिस्रुतोरसम्ब्रह्मणाव्यपिबत्क्षत्रम्पयःसोमम्प्रजापतिः ॥ ऋतेनसत्यमिन्द्रियम्विपानꣳशुक्रमन्धसऽइन्द्रस्येन्द्रिय-
मिदम्पयोमृतम्मधु ॥ ६ ॥ ॐभू० भोजकटदेशोद्भवभार्गवगोत्रशुक्लवर्णभोशुक्रइ० ॥ ततःपश्चिमायांदिशिधनुराकारेद्व्यङ्गुले-

मण्डलेप्रत्यङ्मुखंशनिंकृष्णपुष्पाक्षतैः ॥ ॐशन्नोदेवीरभिष्टयऽआपोभवन्तुपीतये ॥ शंय्योरभिस्रवन्तुनः ॥ ७ ॥ ॐभू० सौराष्ट्रदेशोद्भवकाश्यपगोत्रकृष्णवर्णभोशनैश्चरइहा० ॥ ततोनैर्ऋत्यांदिशिशूर्पाकारेद्वादशाङ्गुलेमण्डलेदक्षिणाभिमुखंराहुं कृष्णपुष्पाक्षतैः ॥ ॐकयानश्चित्रऽआभुवदूतीसदावृधः सखा ॥ कयाशचिष्ठयावृता ॥ ८ ॥ ॐभू० राठिनापुरोद्भवपैठिनसगोत्रनीलवर्णभोराहो इ० ॥ ततोवायव्यांदिशिध्वजाकारेषडङ्गुलेमण्डलेदक्षिणाभिमुखान्केतून्धूम्रपुष्पाक्षतैः ॥ ॐकेतुंकृण्वन्नकेतवेपेशोमर्य्याऽअपेशसे ॥ समुषद्भिरजायथाः ॥ ९ ॥ ॐभू० अन्तर्वेदिसमुद्भवाः जैमिनिगोत्राः धूम्रवर्णाः भोः केतवः[1] इहागच्छत इहतिष्ठत ॥ केतुभ्योनमः केतूनआवाह० ॥ अथवामात्स्योक्तेरादित्याभिमुखाः सर्वेग्रहाः ॥ ततोधिदेवतास्थापनंग्रहदक्षिणपार्श्वे ॥ ॐत्र्यम्बकंयजामहेसुगन्धिम्पुष्टिवर्द्धनम् ॥ उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमामृतात् ॥ १ ॥ सूर्यदक्षिणपार्श्वे ॥ ॐभू० ईश्वरइहागच्छइहतिष्ठईश्वरायनमः ईश्वरंआवाहयामि ॥ एवंसर्वत्र ॥ ॐश्रीश्चतेलक्ष्मी० ॥ २ ॥ सोमदक्षिणपार्श्वे ॥ ॐभू० उमे इ० उमायै० उमांआ० ॥ ॐयदक्रन्दः प्रथमञ्जायमानऽउद्यन्त्समुद्रादुतवापुरीषात् ॥ श्येनस्यपक्षाहरिणस्यबाहूऽउपस्तुत्यम्महिजातन्तेऽअर्वन् ॥ ३ ॥ भौमदक्षिणपार्श्वे ॥ ॐभू० स्कन्द इहा० स्कन्दाय० स्कन्दं आ० ॥ ॐविष्णोरराटमसिविष्णोः श्नप्त्रेस्थोविष्णोः

१ केतूनांबहुत्वेपिपूजादौबहुत्वविशिष्टमेकमेवदेवतात्वमेकदापूजनादिइतिकल्पद्रुमे ।

स्यूरसिविष्णोर्ध्रुवोसि ॥ वैष्णवमसिविष्णवेत्वा ॥ ४ ॥ बुधदक्षिणपार्श्वे ॥ ॐभू० विष्णोइहा० विष्णवेनमः विष्णुंआ० ॥ ॐआब्रह्मन्ब्राह्मणोब्रह्मवर्चसीजायतामाराष्ट्रेराजन्यः शूरऽइषव्योतिव्याधीमहारथोजायतान्दोग्ध्रीधेनुर्वोढानड्वानाशुः सप्तिः पुरन्धिर्योषाजिष्णूरथेष्ठाः सभेयोयुवास्ययजमानस्यवीरोजायतान्निकामेनिकामेनः पर्जन्योवर्षतुफलवत्योनऽओषधयः पच्यन्तान्योगक्षेमोनः कल्पताम् ॥ ५ ॥ गुरुदक्षिणपार्श्वे ॐभू० ब्रह्मन्इ० ब्रह्मणेन० ब्रह्माणंआ० ॥ ॐसजोषाऽइन्द्रसगणोमरुद्भिः सोमम्पिबवृत्रहाशूरविद्वान् ॥ जहिशत्रूँ २ रपमृधोनुदस्वाथाभयङ्कृणुहिविश्वतोनः ॥ ६ ॥ शुक्रदक्षिणपार्श्वे ॥ ॐभू० इन्द्रइहा० इन्द्राय० इन्द्रंआ० ॥ ॐयमायत्वाङ्गिरस्वतेपितृमतेस्वाहा ॥ स्वाहाघर्म्मायस्वाहाघर्म्मः पित्रे ॥ ७ ॥ शनिदक्षिणपार्श्वे ॐभू० यमइ० यमाय० यमंआ० ॥ ॐकार्षिरसिसमुद्रस्यत्वाक्षित्याउन्नयामि ॥ समापोऽअद्भिरग्मतसमोषधीभिरोषधीः ॥ ८ ॥ राहुदक्षिणपार्श्वे ॥ ॐभू० कालइ० कालाय० कालं० ॥ ॐचित्रावसोस्वस्तितेपारमशीय ॥ ९ ॥ केतुदक्षिणपार्श्वे ॥ ॐभू० चित्रगुप्तइ० चित्रगुप्ताय० चित्रगुप्तं० ॥ ॥ ततः प्रत्यधिदेवतास्थापनंग्रहवामपार्श्वे ॥ ॐअग्निन्दूतम्पुरोदधेहव्यवाहमुपब्रुवे ॥ देवाँ २ आसादयादिह ॥१॥ सूर्यवामपार्श्वे ॥ ॐभू० अग्नेइ० अग्नये० अग्निं० ॥ ॐआपोहिष्ठा० ॥ २ ॥ सोमवामपार्श्वे ॥ ॐभू० आपइहागच्छत इहतिष्ठत अद्भ्योनमः अपःआवा० ॥ ॐस्योनापृथिवि० ॥ ३ ॥ भौमवामपार्श्वे ॥ ॐभू० पृथिविइ० पृथिव्यै० पृथिवींआ० ॥ ॐइद-

दिशं॑प्रदिशं॑ऽआदिशो॒विदिशं॑ऽउद्दिशो॒दिग्भ्यः॑ ॥४॥ राहोर्दक्षिणे ॥ ॐभू० आकाशइहा० आकाशाय० आकाशंआ० ॥
ॐयावाङ्कशामधुमत्यश्विनासूनृतावती ॥ तयायज्ञम्मिमिक्षताम् ॥५॥ केतुदक्षिणे ॥ ॐभू० अश्विनौइहागच्छतं इहतिष्ठतं
अश्विभ्यां० अश्विनौआवाहयामि ॥ अथवाविनायकादयःपंचोत्तरतएवस्थाप्याइति संप्रदायः ॥ ॥ उत्तरतः क्षेत्राधिपतिं
वास्तोष्पतिं चावाहयेदित्येके ॥ ॥ ॐनहिस्पशमविदं० ॥१॥ उत्तरे ॐभू० क्षेत्राधिपतेइ० क्षेत्राधिपतये० क्षेत्राधिप-
तिंआ० ॥ ॐवास्तोष्पतेप्रतिजानीह्यस्मान्त्स्वावेशोऽअनमीवोभवानः ॥ यत्त्वेमहेप्रतितन्नोजुषस्वशन्नोभवद्विपदेशंचतुष्पदे
॥ १ ॥ उत्तरे ॐभू० वास्तोष्पतेइ०वास्तोष्पतये०वास्तोष्पतिंआ० ॥ इतिक्रतुसाद्गुण्यदेवताः ॥ अथप्रागादितःपीठसमन्ता-
द्दिक्पालानष्टौदशवासूर्याभिमुखानावाहयेत् ॥ ॥ ॐत्रातारमिन्द्र० ॥ १ ॥ पूर्वे ॐभू० इन्द्रइ० इन्द्रंआ० ॥ ॐत्व-
न्नोऽअग्नेतवदेवपायुभिर्म्मघोनोरक्षतन्वश्चवन्द्य ॥ त्राताताेकस्यतनयेगवामस्यनिमेषꣳरक्षमाणस्तवव्रते ॥ २ ॥ आग्नेय्यां
ॐभू० अग्नेइहाग० इ० अ० अग्निंआ० ॥ ॐयमायत्वांगिर० ॥ ३ ॥ दक्षिणे ॐभू० यमइ० इ० य० यमंआ० ॥ ॐअ-
सुन्वन्तमयजमानमिच्छस्तेनस्येत्यामन्विहितस्करस्य ॥ अन्यमस्मदिच्छसातऽइत्यानमोदेविनिर्ऋतेतुभ्यमस्तु ॥ ४ ॥ नैर्ऋ-
त्यां ॐभू० निर्ऋते इ० निर्ऋतये० निर्ऋतिंआ० ॥ ॐतत्त्वायामि० ॥ ५ ॥ पश्चिमे ॐभू० वरुणइ० वरुणाय० वरुणं-
आ० ॥ ॐआनोनियुद्भिःशतिनीभिरध्वरꣳसहस्त्रि० ॥६॥ वायव्यां ॐभू० वायोइहा० वा० वायुंआ० ॥ ॐवयꣳसो-

मव्रतेतवमनस्तनूषुबिभ्रतः ॥ प्रजावन्तःसचेमहि ॥ ७ ॥ उत्तरेसोमइहा० सो० सोमंआ० ॥ ॐतमीशानंजगतस्तस्थुषस्पतिंधियजिन्वमवसेहूमहेवयम् ॥ पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धःस्वस्तये ॥ ८ ॥ ईशान्यां ॐभू० ईश्वरइ० ई० आवा० ॥ ॐअस्मेरुद्रामेहनापर्वतासोवृत्रहत्येभरहूतौसजोषाः ॥ यःशंसतेस्तुवतेधायिपज्रऽइन्द्रज्येष्ठाऽअस्माँ २ अवन्तुदेवाः ॥ ९ ॥ पूर्वेशानयोर्मध्येऊर्ध्वायां ॐभू० ब्रह्मन्इहा० ब्र० ब्रह्माणंआ० ॥ ॐस्योनापृथिविनो० ॥१०॥ निर्ऋतिपश्चिमयोर्मध्येअधःस्थायां ॐभू० अनंतइहा० अनन्ताय० अनन्तंआ० ॥ ॥ इतिदिक्पालदेवताः ॥ ॥ ॐमनोजूतिर्जु० ॥ एषवै० ॥ सूर्याद्यावाहितग्रहमण्डलदेवताः सुप्रतिष्ठिताः वरदा भवन्तु ॥ पूजामन्त्रस्तु ॥ ॐग्रहाऽऊर्याहुतयोव्यन्तोविप्रायमतिम् ॥ तेषांविशिप्रियाणाम्वोहमिषमूर्ज्जःसमग्रभमुपयामगृहीतोसीन्द्रायत्वाजुष्टङ्गृह्णाम्येषतेयोनिरिन्द्रायत्वाजुष्टतमम् ॥ १ ॥ ॐभूर्भुवःस्वः सूर्यादिनवग्रहमण्डलदेवताभ्योनमः इति षोडशोपचारैःसंपूज्य विशेषार्घंदद्यात् ॥ आदित्याद्याग्रहाःसर्वेपीठेचात्रप्रतिष्ठिताः ॥ तेगृह्णंतुमयादत्तमिममर्घंनमोस्तुवः ॥ १ ॥—ततःप्रार्थयेत् ॥ आयुर्विद्यांधनंसौख्यंयशःशौर्यंचपुष्कलं ॥ पुत्रान्दत्तधनंदत्तसर्वान्कामांश्चदत्तमे ॥ १ ॥ अनयापूजया आदित्यादिग्रहमण्डलदेवताःप्रीयन्तां ॥ ॥ इतिग्रहस्थापनं ॥ ॥ ततईशान्यांकलशस्थापनं ॥ महीद्यौरित्यादिप्रसन्नोभवसर्वदेत्यन्तं ॥ तत्रसांगरुद्रजपः ॥

**अथ सूत्रभाष्याद्यनुसारेण कुशकण्डिकोपयोगि किंचिल्लिख्यते** ॥ ॥ परिसमूहनं पांसूनामपसारणं । तच्च सामर्थ्यात् पांस्वपसारणयोग्यैर्दर्भादिभिर्यावत्पांस्वपसारणं भवति तावत्कार्यं ॥ प्रागुदग्वेतिपरिभाषातः प्राक्संस्थमुदक्संस्थं वा । एकेन दर्भेण वारत्रयमिति **कारिकाकारः** । त्रिभिर्वारत्रयमित्यन्ये ॥ तत्साधनान्तरानुक्तत्वात् हस्तेनैवेत्यनन्तः ॥ ॥ उपलेपनं भूमेरुद्वर्तनं । तच्च गोमयेन । स्थण्डिलं गोमयेनोपलिप्येति **मैत्रायणीयगृह्यात्** ॥ इदमपि वारत्रयं भवतीति केचित् ॥ ॥ उल्लेखनं लेखाकरणं । **वर्द्धमानः**—खादिरं स्फ्यं प्रकल्प्याथ तिस्रो लेखाश्च पञ्च वा ॥ स्थण्डिलोल्लेखनं कुर्यात्स्रुवेण च कुशेन वेति ॥ ॥ उद्धरणं पांसूनामुद्धपनं । तच्चोल्लेखनक्रमेण । अनामिकाङ्गुष्ठाभ्यां कर्तव्यमिति सांप्रदायिकाः ॥ ॥ अभ्युक्षणं सेचनं । तच्च जलेन । अथाद्भिरभ्युक्षतीति **श्रुतेः** । **वर्द्धमानः**—उत्तानेन तु हस्तेन प्रोक्षणं समुदाहृतं ॥ तिरश्चावोक्षणं प्रोक्तं नीचेनाभ्युक्षणं स्मृतमिति ॥ इदमपि वारत्रयं भवतीति केचित् ॥ ॥ उपसमाधानं स्थापनं ॥ ॥ **ब्रह्मलक्षणं** । **कात्यायनः**—ब्रह्माणं वृणीते ब्रह्मिष्ठमिति । ब्रह्मिष्ठमिति च पदार्थसतत्वोपजातावबोधेन । नहि परमात्माख्यब्रह्मसतत्वावबोधोऽत्रोपयुज्यत इति **कर्कः** ॥ तदभावे कुशमयो ब्रह्मा । **तदुक्तं परिशिष्टे**—पञ्चाशता भवेद्ब्रह्मा तदर्धेन तु विष्टर इति ॥ ॥ **ब्रह्मासनलक्षणं**—आसनं ब्रह्मणः कार्यं वारणं वा विकङ्कतं ॥ हस्तमात्रं चतुःस्रक्तिमूलदण्डसमन्वितं ॥ द्विषडङ्गुलसंख्याको मूलदण्डो विकङ्कत इति ॥ ॥ **प्रणीतालक्षणं** । **रेणुः**—प्रस्थमात्रोदकग्राही प्रणीताचमसो भवेत् ॥ **चमसलक्षणं तु यज्ञपार्श्वे**—चमसानां तु वक्ष्यामि दण्डाः स्युश्चतुरङ्गुलाः ॥ त्र्यङ्गुलं तु भवेत्खातं विस्तारे चतुरङ्गुलं ॥ विंशत्यङ्गुलदीर्घा चेति ॥ **तृणैरग्नेः परिस्तरणं** । **यज्ञपार्श्वः**—छिन्नाग्रास्तृणसंज्ञका इति । बर्हिषः इति शेषः । बर्हिषस्तृणे तिरश्चीनिदधातीति **सूत्रात्** । **रेणुः**—यज्ञे वास्तुनि मुष्टौ च स्तम्बे दर्भबटौ तथा ॥ दर्भसंख्या न विहिता विष्टरास्तरणेषु चेति ॥ ॥ **प्रोक्षणीपात्र**-

लक्षणं । रेणुः—वैकङ्कतं पाणिमात्रं प्रोक्षणीपात्रमुच्यते ॥ हंसवक्त्रप्रसेकं च त्वग्बिलं चतुरङ्गुलमिति ॥ ॥ **आज्यस्थालीलक्षणं** । **रेणुः**—आज्यस्थाली प्रकर्तव्या तैजसद्रव्यसंभवा ॥ महीमयी वा कर्तव्या सर्वास्वाज्याहुतीषु च ॥ आज्यस्थाल्याः प्रमाणं च यथाकामं तु कारयेत् । तैजसं सुवर्णादि ॥ ॥ **चरुस्थालीलक्षणं** । **रेणुः**—मृण्मय्यौदुम्बरी वापि चरुस्थाली प्रशस्यते ॥ तिर्यगूर्ध्वं समिन्मात्रा दृढा नातिबृहन्मुखी ॥ कुलालचक्रघटितमासुरं मृण्मयं स्मृतं ॥ तदेव हस्तघटितं स्थाल्यादि खलु दैविकं ॥ औदुम्बरी ताम्रमयी ॥ ॥ **संमार्गकुशानां उपयमनकुशानां च लक्षणं** । **ग्रह्यज्ञकल्पवल्ल्यां**—स्रुवसंमार्जनार्थाय पञ्च वाथ त्रयोपि वा ॥ प्रादेशमात्रान् गृह्णीयात् संमार्गकुशसंज्ञकान् ॥ उपयमनकुशाः सप्त पञ्च वाथ त्रयोपि वा ॥ ॥ **समिल्लक्षणं पवित्रलक्षणं च** । **यज्ञपार्श्वः**—समित्पवित्रं वेदश्च त्रयं प्रादेशसंमितं ॥ ॥ **स्रुवलक्षणं** । **रेणुः**—अङ्गुष्ठपर्ववृत्तः स्यात् रत्निमात्रः स्रुवो भवेत् ॥ पुष्करार्धं भवेत्खातं पिण्डकार्धं स्रुवस्तथा ॥ खादिरः स्रुवश्चेति ॥ ॥ **स्रुक्लक्षणं** । **कात्यायनः**—बाहुमात्र्यः स्रुचः पाणिमात्रपुष्करास्त्वग्बिलाहंसमुखप्रसेकामूलदण्डा भवन्ति ॥ ॥ **आज्यलक्षणं** । **कात्यायनः**—घृतमाज्ये लिङ्गादिति । तच्च गव्यमेव । महीनां पयोसीति मन्त्रलिङ्गात् । **तदभावे प्रतिनिधिमाह मण्डनः**—गव्याज्याभावतश्छागीमहिष्यादेर्घृतं क्रमात् ॥ तदभावे गवादीनां क्रमात् क्षीरं विधीयते ॥ तदभावे दधि ग्राह्यमलाभे तैलमिष्यत इति ॥ ॥ **चरुलक्षणं** । **कात्यायनः**—स्वशाखोक्तेन सुस्विन्नो ह्यदग्धः कठिनः शुभः । नचातिशिथिलः पाच्यो नच वीतरसो भवेत् ॥ स्वशाखोक्तेन विधिना पाच्यः । वीतरसो गलितमण्ड इत्यर्थः ॥ ॥ **हविर्लक्षणं** । **कात्यायनः**—व्रीहीन्यवान्वा हविषि प्रतीयादिति ॥ ॥ **स्रुवधारणं** । **संग्रहे**—अग्रमध्याच्च यन्मध्यं मूलमध्याच्च मध्यतः ॥ स्रुवं धारयते विद्वान् इति ॥ ॥ **पूर्णपात्रलक्षणं** । **रेणुः**—यावतान्नेन भोक्तुस्तु तृप्तिः पूर्णैव जायते ॥ तावता धर्मतः कुर्यात्पूर्णपात्रमिति

स्थितिः ॥ अथवा ॥ यवैर्वा व्रीहिभिः पूर्णं शूर्पं तत्पूर्णपात्रकं ॥ शूर्पप्रमाणं तु—शूर्पं त्वरत्निमात्रं स्यादैषीकं वैणवं तु वा ॥ लम्बं त्वरत्निमात्रं स्यादिति ॥ अथवा । अष्टमुष्टि भवेत्किंचित्किंचिदष्टौ तु पुष्कलं ॥ पुष्कलानि च चत्वारि पूर्णपात्रं विधीयते ॥ ॥ वरलक्षणं । रेणुः—वरोऽभिलषितं द्रव्यं सारभूतं तदुच्यत इति ॥ ॥ ताभिस्तासां प्रोक्षणं । इति तु पक्षान्तरेण । तथाच वैद्यनाथः—प्राणीतवारिणा कर्कः स्वैकदेशेन याज्ञिकाः ॥ मन्त्रोच्चारणमात्रेण प्रोक्षणं केचिदूचिर इति ॥

अथाग्न्यन्वाधानं ॥ तत आचार्योऽग्निसमीपउपविश्यान्वादध्यात् ॥ यद्यपि यजुषां गोभिलहरिहरगदाधरादिभिरनुक्तत्वात्स्मार्तकर्मणिनाग्न्यन्वाधानं तथापि प्रयोगरत्नस्मार्तोल्लासस्मार्तगङ्गाधर्यादावग्न्यन्वाधानोक्तेः प्रचुरतरशिष्टाचारप्राप्तत्वाच्चात्रोच्यते ॥ ॥ देशकालौ० अस्मिन्सग्रहमखरजोदर्शनशान्त्याख्येकर्मणिदेवतापरिग्रहार्थमग्न्यन्वाधानंकरिष्ये ॥ दक्षिणहस्तेसमिद्द्वयमादाय ॥ तत्रादौवैकल्पिकपदार्थावधारणं ॥ पूर्वेणब्रह्मणोगमनं ॥ उत्तरतः पात्रासादनं ॥ ॥ कांस्यमयीताम्रमयीवाआज्यस्थाली ॥ ताम्रमयीचरुस्थाली ॥ पालाश्यः समिधः ॥ प्रांचाघारौ ॥ समिद्धतमआज्यभागौ ॥ पूर्णपात्रंवरोवादक्षिणा ॥ एतान्वैकल्पिकान्पदार्थानहंकरिष्ये ॥ अथदेवता-

१ रेणुकारिकायां—देवतानामभिध्यानंनकरोतिविमूढधी ॥ वृथातस्यभवेत्कर्मपूर्वाचार्यावदंतिहि ॥ उत्प्रेक्षितमिदंकैश्चिन्नोक्तंकात्यायनादिभि. ॥ वषट्करिष्यन्ध्यायेत्तुयास्काचार्योऽब्रवीत्स्फुटम् ॥

भिध्यानं ॥ तत्रप्रजापतिं इन्द्रंअग्निंसोमंएताः आज्येनप्रत्येकंएकैकयाहुत्या ॥ अत्रप्रधानं ॥ आदित्यादिनवग्रहान् अर्कादियथालाभसमिच्चरुतिलाज्यद्रव्यैःप्रत्येकंप्रतिद्रव्येणअष्टाष्टसंख्याकाभिराहुतिभिः ॥ अधिदेवताप्रत्यधिदेवताश्चैतैरेवद्रव्यैःप्रत्येकंप्रतिद्रव्येणचतुश्चतुःसंख्याकाभिराहुतिभिः ॥ विनायकादिपञ्चदेवताः क्षेत्रपालंवास्तोष्पतिंइन्द्रादिदशलोकपालांश्चैतैरेवद्रव्यैः प्रत्येकंप्रतिद्रव्येणद्वाभ्यांद्वाभ्यामाहुतिभ्यांयक्ष्ये ॥ ॥ पुनरत्रप्रधानं ॥ सूर्यंइन्द्रंइन्द्राणींभुवनेश्वरींशर्कराघृतसंमिश्रपायसतिलाज्यद्रव्यैः प्रत्येकंप्रतिद्रव्येणअष्टाविंशत्यष्टाविंशतिसंख्याकाभिराहुतिभिर्यक्ष्ये ॥ न्यूनातिरिक्तार्थंघृताक्ततिलद्रव्येणसमस्तव्याहृतीरष्टाविंशतिसंख्याकाभिराहुतिभिर्यक्ष्ये ॥ शेषेणस्विष्टकृतं ॥ अग्निंवायुंसूर्यंअग्नीवरुणौअग्नीवरुणौअग्निंवरुणंसवितारंविष्णुंविश्वान्देवान्मरुतःस्वर्कान्वरुणंआदित्यंअदितिंप्रजापतिंएताअङ्गप्रधानार्थादेवताआज्येनअस्मिन्सग्रहमखरजोदर्शनशान्त्याख्येकर्मण्यहंयक्ष्ये ॥ इत्युक्त्वा अग्नौसमिद्द्वयप्रक्षेपः ॥ इति अन्वाधानं ॥ ॥

अथकुशकंडिका ॥ ॥ अग्नेर्दक्षिणतोब्रह्मासनमास्तीर्य । तदुपरिप्रागग्रानुदगग्रान्वाकुशान्निधाय । पञ्चासनानि ब्रह्मयजमानयोर्वरणार्थंब्रह्मणउपवेशनार्थंच । प्रणीतानामालंभार्थंस्थापनार्थंचेति । अग्नेरुत्तरतोब्रह्मवरणं । दानवाचनान्वारंभणवरवरणव्रतप्रमाणेषुयजमानंप्रतीयात् । तत्रउदङ्मुखोयजमानःप्राङ्मुखंब्रह्माणंदक्षिणंजान्वालभ्य । अस्मिन्सग्रहमखरजोदर्शनशान्त्याख्येकर्मणित्वंब्रह्माभव । भवामि इतिप्रतिवचनं । पूर्वेणाग्निंदक्षिणातिक्रामति । ब्रह्माआसनमीक्षते ।

ब्रह्माआसनान्नैर्ऋत्यांतृणंनिरस्यति । अत्रोदकोपस्पर्शः । नेतिकर्कदेवादयः । ब्रह्माआसनेअग्न्यभिमुखउपविशति । उत्तरतःप्रणीतासनं । अत्रसक्षीरप्रणीताप्रणयनंविशेषः । वारणमुदकेनसंपूर्यस्वाग्रेभूमौकुशोपरिनिधाय आलभ्य ब्रह्माणमवेक्ष्य प्रणीयउत्तरतोऽग्नेःस्थापनं । नान्तरेणगच्छेयुः । तृणैरग्निंपरिस्तीर्य[1] पुरस्तात्प्रथमं दक्षिणतःपश्चादुत्तरतश्च । विवृत्यावृत्यवेतरथावृत्तिः । आवृत्तिसामंतेपुप्रदक्षिणं । विवर्तनमप्रदक्षिणं । इतरथावृत्तिः । अर्थवत्पात्रासादनं । अग्नेःपश्चादुत्तरतोवा । प्राक्संस्थमुदक्संस्थंवा । प्रागग्रमुदगग्रंवा । पवित्रच्छेदनादर्भास्त्रयः । पवित्रेद्वे । प्रोक्षणीपात्रं । आज्यस्थाली । चरुस्थाली । संमार्गकुशाःपंच । उपयमनकुशाःसप्त । समिधस्तिस्रः । स्रुवः । आज्यं । तण्डुलाः । पूर्णपात्रंवरोवा । पवित्रच्छेदनैःपवित्रकरणं । प्रागग्रयोर्द्वयोरुपरिउदगग्राणित्रीणिनिधायउपरिप्रादेशमात्रमवशेषयित्वाअधोभागेद्वयोर्मूलेन प्रदक्षिणीकृत्यएकीकृत्यछेदयेत् । तानुत्तरतःप्राक्षिपेत् । प्रोक्षणीपात्रेप्रणीतोदकमासिच्य । पवित्राभ्यामुत्पवनं । ताःस्थानंतयोः । प्रोक्षणीनांसव्यहस्तकरणं । दक्षिणेनोदिंगनं । ताभिस्तासांप्रोक्षणं । आज्यस्थाल्याःप्रोक्षणं । चरुस्थाल्याःप्रोक्षणं । संमार्गकुशानांप्रोक्षणं । उपयमनकुशानांप्रोक्षणं । समिधांप्रोक्षणं । स्रुवस्यप्रोक्षणं । आज्यस्यप्रोक्षणं । तण्डुलानांप्रोक्षणं । पूर्णपात्रस्यप्रोक्षणं । असंचरेप्रोक्षणीर्निधाय । असंचरःप्रणीताग्नीअन्तरेणप्रकीर्तितः । आज्यस्थाल्यामाज्यनिर्वापः । सपवित्रे-



1 छिन्नाग्रास्तृणसंज्ञका.इतियज्ञपार्श्वः । दर्भसंख्यानविहिताविष्टरास्तरणेपुचेति च ।

चरुपात्रेतण्डुलावापः। दैवेत्रिःक्षालिताज्ञेयाःसकृत्पित्र्येतुतण्डुलाः । प्रणीतोदकमासिच्य । आज्यचर्वोःसहाधिश्रयणं । अव-
रोक्तमुत्तरᳬहविषि । तत्रदक्षिणतआज्याधिश्रयणंब्रह्मणः । चरोरधिश्रयणमाज्यस्योत्तरतोयजमानस्य । उल्मुकेनपर्यग्निकर-
णमुभयोः । इतरथावृत्तिः । उदकोपस्पर्शः । अधिश्रितेस्रुवस्याधोमुखस्यप्रतपनं । उदकोपस्पर्शः । प्राङुत्क्रम्य । संमार्ग-
कुशैःस्रुवस्यसंमार्जनं । मूलादारभ्यअग्रपर्यन्तंबिलांतरतश्चाग्रैः । अग्रादारभ्यमूलपर्यंतंमूलैः । प्रणीतोदकेनाभ्युक्षणं ।
पुनःप्रतपनं । उदकोपस्पर्शः । अग्नेःपश्चिमतोदक्षिणदेशेनिधानं । संमार्जनान्यपास्यत्युत्तरतः[1] । उदगुद्वासयतिहविश्च ।
त्रिरुद्वासयति । शृतानांतुपूर्वेण । उद्वासितानांपृष्ठतः । आज्यमुद्वास्यचरोःपूर्वेणानीयअग्नेरुत्तरतःसंस्थाप्य चरुमुद्वास्य आ-
ज्यस्यपश्चिमेनानीय आज्योत्तरतोनिधाय अग्नेःपश्चात्स्रुवस्योत्तरतआज्यंनिधाय तदुत्तरतश्चरुनिधानं । पवित्राभ्यामाज्यो-
त्पवनं । आज्यावेक्षणं । अपद्रव्यनिरसनं । प्रोक्षण्याःप्रत्युत्पवनं । उपयमनकुशानादायसव्येकृत्वादक्षिणेनाग्नौप्रागग्रा-
स्तिष्ठन्समिधोऽभ्याधाय प्रोक्षण्युदकशेषेणसपवित्रहस्तेनाग्नेःईशानीमारभ्यप्रदक्षिणंपर्युक्ष्य । इतरथावृत्तिः । पवित्रयोः-
प्रणीतासुनिधानं । दक्षिणंजान्वाच्य । सोपयमनकुशंसव्यहस्तंहृदयेनिधायजुहोति ॥ ब्रह्मणाअन्वारब्धआघारावाज्य-
भागौ महाव्याहृतयःसर्वप्रायश्चित्तंप्राजापत्यᳬस्विष्टकृच्चैतन्नित्यᳬसर्वत्र । कुशेनान्वारंभणं । उपविष्टहोमाःस्वाहाकारप्रदा-

1 अग्नावपासनंवा ।

नाजुहोतयः । प्रांचावाघारौ । ऋजूदीर्घसंततौ । अग्नेरुत्तरप्रदेशेपूर्वाघारः । दक्षिणप्रदेशेउत्तराघारः । विदिशावेके । प्रजापतिदेवतापदमात्रमुपांशु । यस्मिन्मंद्रादयोनविज्ञायंतेनस्वरोनव्यंजनं केवलमेवौष्ठचालनं श्वासोवातदुपांशु ॥ ॐप्रजापतयेस्वाहा । इदंप्रजापतयेनमम । ॐइन्द्रायस्वाहा । इदमिन्द्रायनमम ॥ पाकयज्ञेष्ववत्तस्यासर्वहोमो- हुत्वाशेषप्राशनमग्निहोत्रेतदस्यपाकयज्ञस्यवेतिश्रुतेः । हुत्वाहुत्वापात्रान्तरेसंस्रवान्समवनयति । आज्यभागौ । आग्ने- यमुत्तरपूर्वार्धे । दक्षिणपूर्वार्धेसौम्यं । समिद्धतमेवा । ॐअग्नयेस्वाहा । इदमग्नयेनमम । ॐसोमायस्वाहा । इदंसो- मायनमम ॥ ततोयजमानेनद्रव्यत्यागःकार्यः । प्रधानंस्वामीफलयोगात् । सचबहुकर्तृकहोमे यथाकालंप्रत्याहु- तित्यागस्यकर्तुमशक्यत्वात् सर्वंहोमद्रव्यजातंदेवताश्चमनसाध्यात्वा इदंयथादैवतमस्तुनममेत्येवंरूपः । इदंसंपादि- तंसमिच्चरुतिलाज्यादिहोमद्रव्यंयायायक्ष्यमाणादेवतातस्यैतस्यैदेवतायैमयापरित्यक्तंनमम । यथादैवतमस्तु ॥ हेमाद्रौ- देवीपुराणे—गणाधिपतयेदेयाप्रथमातुवराहुतिः ॥ अन्यथाविफलंविप्रभवतीहनसंशय इति ॥ तत्रग्रहहोमद्रव्याणि । अर्कःपलाशःखदिरआपमार्गोथपिप्पलः । औदुम्बरःशमीदूर्वाःकुशाश्चसमिधःक्रमादितिसमिधः । चरुः । आज्यं । ति- लाश्चेतिचतुष्टयं । तिसृभिर्दूर्वाभिरेकाहुतिर्दूर्वाणां । पत्रत्रयेणैकाहुतिःकुशानां । समिधः प्रादेशमात्राःपयोदधिमध्वा- ज्यान्यतरप्लुताः मूलतोद्व्यङ्गुलंविहायमध्यमानामिकाङ्गुष्ठैर्जुहुयात् ॥ चर्वादिकमपिघृताद्यक्तंपाणिनाहोतव्यं । होतव्यं-



जुः-
४ ॥

चघृताद्यक्तचरुभक्ष्यादिकंपुनरीरितिमात्स्यात् । पाण्याहुतिप्रमाणंतु । अङ्गुलीनांद्वादशपर्वाणियावत्पूर्यन्तेतावत्परिमाणापाण्याहुतिरितिकल्पद्रुमः । सिद्धान्तशेखरेत्वन्नंग्राससमंग्राह्यमित्युक्तं। आज्यादिद्रवद्रव्यंस्रुवेण । तथाचकर्कः । सामर्थ्यात्स्वधितिर्मांसेद्रवेषुस्यात्स्रुवस्तथेति । तिलादौतुमृगीमुद्रा । तथाचवसिष्ठः । तिस्रोमुद्रास्तुसंप्रोक्तामृगीहंसीचसूकरी । सूकरीकरसंकोचाद्धंसीमुक्तकनिष्ठिका । कनिष्ठातर्जनीहीनामृगीमुद्रातिलाहुतौ । शान्तिकर्मणिसर्वत्रमृगीहंसीशुभेउभे । अभिचारेषुसर्वेषुसूकरीतुप्रकीर्तिता । यवादावपिसाप्रोक्तामृगीतुगुग्गुलेतथेति । यस्ययस्यग्रहस्ययायासमित् सासातस्यतस्याधिदेवताप्रत्यधिदेवतानांच । ततोविनायकादीनामिन्द्रादिदशदिक्पालानांचपालाश्यःसमिधः । ग्रहान्प्रत्येकंप्रतिद्रव्यंअष्टोत्तरशतमष्टाविंशत्यष्टौवाआहुतीनांसंख्या । यदाग्रहाणामष्टोत्तरशतंतदाअन्येभ्योऽष्टाविंशतिः । यदाग्रहाणामष्टाविंशतिस्तदाऽन्येभ्योऽष्टौ । यदाग्रहाणामष्टौतदाऽन्येभ्यश्चतस्रः इतिसंप्रदायः । दशांशेनेतिकेचित् । विनायकादिक्रतुसंरक्षकदेवताभ्यस्तिस्रिः । इन्द्रादिदशदिक्पालानांद्वेद्वे । एवंग्रहहोमंसमाप्य ॥ अत्रप्रधानं सूर्यं इन्द्रं इन्द्राणीं भुवनेश्वरीं पायसेनसघृतेनसशर्करेणतिलैः आज्येनचपूर्वोक्तमन्त्रैःप्रत्येकंप्रतिद्रव्यंअष्टोत्तरसहस्रमष्टोत्तरशतमष्टाविंशतिरष्टौवाजुहुयात् ॥ ततोन्यूनाधिकदोषपरिहारार्थंसमस्तव्याहृतिभिःअष्टोत्तरशतमष्टाविंशतिरष्टौवाजुहुयात् ॥ एवंहोमंसमाप्यउत्तरांगानिकुर्यात् ॥ त-

१ गदाधरभाष्येनारदः—तत्रशान्तिप्रकुर्वीतघृतदूर्वातिलाक्षतैः ॥ प्रत्येकाष्टशतंचैवगायत्र्याजुहुयात्ततः ॥ स्वर्णगोभूतिलान्दद्यात्सर्वदोषापनुत्तये । इतिहोमद्रव्येविशेष ॥

त्रायंक्रमः । पूजास्विष्टंनवाहुत्योबलिःपूर्णाहुतिस्तथा ॥ श्रेयःसंपाद्यदानंचअभिषेकोविसर्जनमिति ॥ ॥ अद्यपूर्वो०
कृतस्यकर्मणःसाङ्गतासिद्ध्यर्थंस्थापितदेवतानांमृडाग्नेश्चोत्तरपूजनंकरिष्ये ॥ स्थापितदेवतानांगन्धादिपञ्चोपचारैःपूजनंकृ-
त्वा ॥ अनयापूजयास्थापितदेवताःप्रीयन्ताम् ॥ ॐअग्नेनयसुपथाराये॒ऽअस्मान्विश्वानिदेववयुनानिविद्वान् ॥ युयोध्यस्म-
ज्जुहुराणमेनोभूयिष्ठांतेनमउक्तिंविधेम ॥ मृडाग्नयेनमः इतिगन्धादिपञ्चोपचारैःसंपूज्य ॥ अनयापूजयामृडाग्निःप्रीय-
तां ॥ ततश्चरुशेषेणस्विष्टकृद्धोमः ॥ प्राङ्महाव्याहृतिभ्यःस्विष्टकृदन्यच्चेदाज्याद्धविः । शेषात्स्विष्टकृतेसमवद्यति । यावद्धु-
विरुत्तरार्धात्स्विष्टकृत् । नाज्यादशेषात् । आज्यैकहविष्केकर्मणिशेषादाज्यादन्तेस्विष्टकृद्यागः । ततएवहोमः । ततइत्यु-
त्तरतइत्यर्थः । असंसृष्टामाहुतिभिः । ॐअग्नयेस्विष्टकृतेस्वाहा ॥ इदमग्नयेस्विष्टकृतेनमम ॥ रौद्रत्वादुदकोपस्पर्शः । रौद्रं-
राक्षसमासुरमाभिचरणिकंमन्त्रमुक्त्वापित्र्यमात्मानंचालभ्योपस्पृशेदपः । आत्मालम्भनंहृदयं । चात्कर्मचकृत्वेति । ततोभूरा-
द्यानवाहुतयः ॥ ॐभूःस्वाहा ॥ १ ॥ इदमग्नयेनमम ॥ ॐभुवःस्वाहा ॥ २ ॥ इदंवायवेनमम ॥ ॐस्वःस्वाहा ॥ ३ ॥
इदंसूर्यायन० ॥ ॐत्वन्नोऽअग्नेवरुणस्यविद्वान्देवस्यहेडोऽअवयासिसीष्ठाः ॥ यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषांसिप्रमुमुग्ध्यस्मत्स्वाहा ॥ ४ ॥ इदमग्नीवरुणाभ्यां० ॥ ॐसत्वन्नोऽअग्नेवमोभवोतीनेदिष्ठोऽअस्याऽउषसोव्युष्टौ ॥ अव-
यक्ष्वनोवरुणंरराणोवीहिमृडीकंसुहवोनऽएधिस्वाहा ॥५॥ इदमग्नीवरुणाभ्यां० । ॐअयाश्चाग्नेस्यनभिशस्तिपाश्चसत्यमि-

त्वमयाऽअसि ॥ अयानोयज्ञंवहास्ययानोधेहिभेषजꣳस्वाहा ॥ ६ ॥ इदमग्नयेन० ॥ ॐयेतेशतंवरुणयेसहस्रंयज्ञियाःपाशावितताममहान्तः ॥ तेभिर्नोऽअद्यसवितोतविष्णुर्विश्वेमुञ्चन्तुमरुतःस्वर्काःस्वाहा ॥ ७ ॥ इदंवरुणायसवित्रेविष्णवेविश्वेभ्योदेवेभ्योमरुद्भ्यःस्वर्केभ्यश्चनमम ॥ ॐउदुत्तमंवरुणपाशमस्मदवाधमंविमध्यमꣳश्रथाय ॥ अथावयमादित्यव्रतेतवानागसोऽअदितयेस्यामस्वाहा ॥ ८ ॥ इदंवरुणायादित्यायादितयेचन० ॥ ॐप्रजापतयेस्वाहा ॥ ९ ॥ इदंप्रजापतयेनमम ॥ इतिनवाहुतयः ॥ ॥ ततोबलिदानं ॥ तच्चैवं ॥ अग्न्यायतनस्यसमंताद्दिक्षुविदिक्षुच दशदिक्पालानांमाषभक्तबलयोदेयाः ॥ ॥ अद्यपू० कृतस्यकर्मणःसांगतासिध्यर्थंदिक्पालपूर्वकंआदित्यादिग्रहमण्डलादिस्थापितदेवताभ्योबलिदानंकरिष्ये ॥ ॥ ॐत्रातारमिन्द्र० ॥ १ ॥ प्राच्यांदिशिइन्द्रंसाङ्गंसपरिवारंसायुधंसशक्तिकंएभिर्गन्धाद्युपचारैस्त्वामहं पूजयामि ॥ इन्द्रायसाङ्गायसपरिवारायसायुधायसशक्तिकायइमंसदीपमाषभक्तबलिंसमर्पयामि ॥ भोइन्द्रदिशंरक्षबलिंभक्षममसकुटुंबस्याभ्युदयंकुरु ॥ आयुःकर्ताक्षेमकर्ताशान्तिकर्तापुष्टिकर्तातुष्टिकर्तानिर्विघ्नकर्तावरदोभव ॥ अनेनबलिदानेनइन्द्रःप्रीयतां ॥ ॥ एवं सर्वत्रोहः ॥ ॐत्वन्नोऽअग्नेतवदेव० ॥ २ ॥ आग्नेय्यांदिशिअग्निंसांगं० एभिर्गन्धा० अग्नयेसाङ्गायसप० भोअग्नेदिशं० आयुःकर्ता० अनेनबलि० अग्निःप्रीयतां ॥ ॐयमायत्वांगि० दक्षिणस्यांदिशियमंसांगं० एभिर्गन्धा० यमायसां० भोयमदिशं० आयुःकर्ता० अनेनबलिदा० यमःप्रीयतां ॥ ॐअसुन्वन्तमयजमानमिच्छ० ॥ ४ ॥

नैर्ऋत्यांदिशिनिर्ऋतिंसां० एभिर्गन्धा० निर्ऋतयेसां० भोनिर्ऋतेदि० अनेनबलि० निर्ऋतिःप्री० ॥ ॐतत्त्वायामि०
॥ ५ ॥ पश्चिमायांदिशिवरुणंसां० एभिर्गन्धा० वरुणायसां० भोवरुणदिशं० आयुःकर्त्ता० अनेनबलि० वरुणःप्री० ॥
ॐआनोनियु० ॥ ६ ॥ वायव्यांदिशिवायुंसां० एभिर्गन्धा० वायवेसां० भोवायोदिशं० अनेनबलिदा० वायुःप्री० ॥
ॐवयꣳसोमव्र० ॥ ७ ॥ उदीच्यांदिशिसोमंसां० एभिर्गन्धा० सोमायसां० भोसोमदिशं० अनेनबलि० सोमःप्री० ॥
ॐतमीशानं० ॥ ८ ॥ ईशान्यांदिशिईशानंसां० एभिर्गन्धा० ईशानायसां० भोईशानदिशं० अनेनबलिदानेनईशानः
प्री० ॥ ॐअस्मेरुद्रा० ॥ ९ ॥ पूर्वेशानयोर्मध्येऊर्ध्वायांदिशिब्रह्माणंसाङ्गं० एभिर्गन्धा० ब्रह्मणेसां० भोब्रह्मन्दिशं०
आयुःक० अनेनबलि० ब्रह्माप्री० ॥ ॐस्योनापृथि० ॥ १० ॥ निर्ऋतिपश्चिमयोर्मध्येअधःस्थायांदिशिअनन्तंसाङ्गं०
एभिर्गंधा० अनन्तायसां० भोअनन्तदिशं० आयुःक० अनेनब० अनन्तःप्री० इतिदिक्पालबलिः ॥ ॥ ततोग्रहवेदी-
समीपेग्रहाणांबलिः ॥ ॐआकृष्णेन० ॥ १ ॥ सूर्यायसाङ्गायसपरिवारायसायुधायसशक्तिकायईश्वराग्निरूपाधिप्रत्यधिदे-
वतासहितायइमंसदीपमाषभक्तबलिंस० ॥ भोसूर्यइमंबलिंगृहाणममसकुटुम्बस्याभ्युदयंकुरु ॥ आयुःकर्त्ताक्षेमकर्ता-
शान्तिकर्तापुष्टिकर्तातुष्टिकर्तानिर्विघ्नकर्तावरदोभव ॥ अनेनबलिदानेनसूर्यःप्री० ॥ १ ॥ ॐइमन्देवा० ॥ २ ॥ सोमाय-
सां० उमाम्बुरूपाधिप्रत्यधिदेवतास० ॥ भोसोमइमंब० ॥ ॐअग्निर्मूर्द्धा० ॥ ३ ॥ भौमायसां० स्कन्दभूमिरूपाधि-

प्रत्यधिदेवतास० भोभौमइमंबलिंगृ० ॥ ॐ उद्बुध्यस्वा० ॥ ४ ॥ बुधायसाङ्गाय० विष्णुविष्णुरूपाधिप्रत्याधदेवतास०
भोबुधइमं० अनेनबलि० बुधःप्री० ॥ ॐबृहस्पते० ॥ ५ ॥ बृहस्पतयेसां० ब्रह्मेन्द्ररूपाधिप्रत्यधिदेवतासहिताय० ॥
भोबृहस्पतेइमं० अनेनबलिदा० बृहस्पतिःप्री० ॥ ॐअन्नात्परिस्रु० ॥ ६ ॥ शुक्रायसां० इन्द्रेन्द्राणीरूपाधिप्रत्य-
धिदेव० ॥ भोशुक्रइमंबलिं० अनेनबलिदा० शुक्रःप्रीय० ॥ ॐशन्नोदेवी० ॥ ७ ॥ शनैश्चराय सां० यमप्रजापति-
रूपाधिप्रत्यधिदे० भोशनैश्चरइमंब० अनेनब० शनैश्चरःप्री० ॥ ॐकयानश्चि० ॥ ८ ॥ राहवेसां० कालसर्परूपाधि-
प्रत्यधिदे० भोराहो इमंबलिं० अनेन० राहुःप्री० ॥ ॐकेतुंकृण्व० ॥ ९ ॥ केतुभ्यः सांगेभ्यः० चित्रगुप्तब्रह्मरूपाधिप्रत्य-
धिदेवतासहितेभ्यः० भोकेतवः इमंबलिंगृह्णीतय० कुरुत आयुःकर्तारः पु० इदाः भवत । अने० केतवःप्रीयन्तां ॥ ॥
ततःक्रतुसाद्गुण्यदेवताभ्योबलिः ॥ ॐगणानान्त्वा० ॥ १ ॥ गणपतयेसां० भोगण० इमंब० अनेन० ॥ ॐअम्बेअ-
म्बिके० ॥ २ ॥ दुर्गायैसां० सशक्तिकायै० भोदुर्गेइ० आयुःकर्त्रींवरदा० अनेनब० दुर्गा० ॥ ॐआनोनि० ॥ ३ ॥
वायवेसां० भोवायोइमंब० अनेन० ॥ ॐघृतंघृत० ॥ ४ ॥ आकाशायसां० भोआकाशइमं० अनेन० ॥ ॐयावां-
कशा० ॥ ५ ॥ अश्विभ्यांसां० भोअश्विनौ० गृह्णीतं कुरुतं आयुःकर्तारौ० वरदौभवेतं । अनेनब० अश्विनौप्रीयेतां ॥
ॐवास्तोष्पते० ॥२॥ वास्तोष्पतये सां० भोवास्तोष्पते० इमंब० अनेनब० वास्तोष्पतिःप्री० ॥ ॐनहिस्पश० ॥ १ ॥

क्षेत्राधिपतयेसां० भोक्षेत्राधिपतेइमंबलिं० अनेन० ॥ ॥ अथवादिक्पालेभ्यएकतन्त्रेणैकमेवबलिंदद्यात् ॥ ॐप्राच्यैदिशे-
स्वाहावाच्यैदिशेस्वाहादक्षिणायैदिशेस्वाहावाच्यैदिशेस्वाहाप्रतीच्यैदिशेस्वाहावाच्यैदिशेस्वाहोदीच्यैदिशेस्वाहावाच्यैदिशे-
स्वाहोर्ध्वायैदिशेस्वाहावाच्यैदिशेस्वाहावाच्यैदिशेस्वाहावाच्यैदिशेस्वाहा ॥ १ ॥ इन्द्रादिदशदिक्पालेभ्यःसांगेभ्यः इइ०
इमंसदीपमाषभक्तबलिंस० भोभोइन्द्रादिदशदिक्पालाःदिशंरक्षतबलिंभक्षत० कुरुत आयुःकर्त्तारः क्षेम० अनेनबलि०
इन्द्रादिदशदिक्पालाःप्री० ॥ एवंसर्वेभ्योग्रहेभ्यएकतन्त्रेणैकमेवबलिंदद्यात् ॥ ॐग्रहाऽऊर्जा० तमम् ॥१॥ आदित्यादिन-
वग्रहदेवताभ्यःअधिप्रत्यधिदेवताविनायकादिक्षेत्रपालवास्तोष्पतिदेवतासहिताभ्यइमंसदीपमाषभक्तबलिं० भोभोआदि०
ग्र० देवताःअधिप्रत्यधिदे० सहिताः इमंब० आयुःकर्त्र्यः क्षेम० । अनेनब० आदित्यादिनवग्रहदेवताअधिप्रत्यधिदेवता-
विनायकादिक्षेत्रपालवास्तोष्पतिदे० स० प्रीयंतां ॥ एवंमातृणामेकमेवबलिंदद्यात् ॥ ॐसमख्येदेव्या० ॥ १ ॥ गौ-
र्यादिमातृभ्यइमंसदीपमाषभक्तब० भोभोगौर्यादिमातरइमंबलिंगृह्णीतआयुःकर्त्र्यः० अनेनबलि० गौर्यादिमातरःप्रीय-
न्तां ॥ प्रधानदेवताभ्यएकतन्त्रेणैकमेवबलिंदद्यात् ॥ ॐआकृष्णे० ॥ १ ॥ त्रातारमिंद्र० ॥ २ ॥ अदित्यैरा० ॥ ३ ॥
श्रीश्चतेल० ॥ ४ ॥ सूर्येन्द्रेन्द्राणीभुवनेश्वरीदेवताभ्यइमंसदीपमाषभक्तबलिंस० ॥ भोभोसूर्येन्द्रेन्द्राणीभुवनेश्वरीदेवताः
इमंबलिंगृ० ममसकुटुं० आयुःकर्त्र्यः क्षेम० अनेनबलि० सूर्येन्द्रेन्द्राणीभुवनेश्वरीदे० प्रीयन्तां ॥ ॥ अथक्षेत्रपालमहा-

बलिः ॥ एकस्मिन्वंशपात्रेकुशानास्तीर्यतदुपरिआहारचतुर्गुणंद्विगुणंवामाषभक्तदध्योदनंजलपात्रंचान्नेधायहारद्राकुङ्कुमा-
दिपताकायुतंकृत्वा ॥ अद्यपू० सकलारिष्टशान्तिपूर्वकंप्रारिप्सितस्यकर्मणःसाङ्गतासिद्ध्यर्थंक्षेत्रपालपूजनंबलिदानंचकरिष्ये ॥
ॐनहिस्पश० ॥१॥ इतिमन्त्रेणक्षेत्रपालायनमः इतिषोडशोपचारैःसंपूज्यप्रार्थयेत् ॥ ॥ ॐनमोक्षेत्रपालस्त्वंभूतप्रेतगणैः
सह ॥ पूजांबलिंगृहाणेमंसौम्योभवतुसर्वदा ॥ आयुरारोग्यंमेदेहिनिर्विघ्नंकुरुसर्वदा ॥ १ ॥ ॐनमोभगवन्क्षेत्रपालचि
त्रतुरङ्गवाहनसर्वभूतप्रेतपिशाचशाकिनीडाकिनीवेतालादिपरिवृतदध्योदनप्रियसकलशक्तिसहितइमांपूजांगृहाण अनया-
पूजयाक्षेत्रपालःप्रीयतां ॥ ततोबलिदानं ॥ ॥ क्षेत्रपालायसाङ्गायभूतप्रेतपिशाचशाकिनीडाकिनीवेतालादिपरिवारयु-
तायसायुधायसशक्तिकायसवाहनायइमंसदीपमाषभक्तबलिंसमर्पयामि ॥ भोभोक्षेत्रपालसर्वतोदिशंरक्षबलिंभक्षममसकु-
टुम्बस्याभ्युदयंकुरु ॥ आयुःकर्ताक्षेमकर्ताशांतिकर्तापुष्टिकर्तातुष्टिकर्तानिर्विघ्नकर्तावरदोभव ॥ अनेनबलिदानेनक्षेत्रपालः
प्रीयतां ॥ पश्चादनवेक्षमाणेनदुर्ब्राह्मणेनबलिंनीत्वाचतुष्पथेनिक्षेपयेत् ॥ ततोयजमानस्तस्यपृष्ठतोद्वारपर्यन्तंगत्वाजलंक्षिपे-
द्धिंकारेतिमन्त्रेण ॥ ॐहिङ्कारायस्वाहाहिङ्कृतायस्वाहाक्रन्दतेस्वाहावक्रन्दायस्वाहाप्रोथतेस्वाहाप्रप्रोथायस्वाहागन्धायस्वा-
हाघ्रातायस्वाहानिविष्टायस्वाहोपविष्टायस्वाहासन्दितायस्वाहावल्गतेस्वाहासीनायस्वाहाशयानायस्वाहास्वपतेस्वाहाजाग्रते-
स्वाहाकूजतेस्वाहाप्रबुद्धायस्वाहाविजृम्भमाणायस्वाहाविचृत्तायस्वाहासंहानायस्वाहोपस्थितायस्वाहायनायस्वाहाप्रायणा-

युस्वाहा ॥१॥ ॥ पूर्णाहुतिः ॥ यजमानःपाणिपादंप्रक्षाल्याचम्यपूर्णाहुतिहोमंकुर्यात् ॥ ॥ अद्यपू० कृतस्यकर्मणःसांग-
तासिध्यर्थंवसोर्द्धारासमन्वितंपूर्णाहुतिहोमंकरिष्ये ॥ ततःपात्रान्तरेस्रुवेणचतुर्गृहीतमाज्यंद्वादशवारंगृहीतंवागृहीत्वापा-
त्रोपरिसमिधंधृत्वावस्त्रफलताम्बूलचन्दनमाल्यादिभिरलंकृत्यगृहीत्वापात्रंस्रुगुपरिनिधायधृत्वोभयपाणिभ्यांयजमानस्ति-
ष्ठेत् ॥ तत्रमन्त्राः ॥ ॥ ॐसमुद्रादूर्म्मिर्मधुमाँ२ उदारदुपाᳲशुनासममृतत्वमानट् ॥ घृतस्यनामगुह्यंयदस्तिजिह्वादेवा-
नाममृतस्यनाभिः ॥ १ ॥ वयन्नामप्रब्रवामाघृतस्यास्मिन्यज्ञेधारयामानमोभिः ॥ उपब्रह्माशृणवच्छस्यमानञ्चतुःशृङ्गोव-
मीद्गौरऽएतत् ॥ २ ॥ चत्वारिशृङ्गात्रयोऽअस्यपादाद्वेशीर्षेसप्तहस्तासोऽअस्य ॥ त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोम-
र्त्याँ२ऽआविवेश ॥ ३ ॥ त्रिधाहितम्पणिभिर्गुह्यमानङ्गविदेवासोघृतमन्वविन्दन् ॥ इन्द्रऽएकᳲसूर्यऽएकञ्जजानवेना-
देकᳲस्वधयानिष्टतक्षुः ॥ ४ ॥ एताऽअर्षन्तिहृद्यात्समुद्राच्छतव्रजारिपुणानावचक्षे ॥ घृतस्यधाराऽअभिचाकशीमिहि-
रण्ययोवेतसोमध्यऽआसाम् ॥ ५ ॥ सम्यक्स्रवन्तिसरितोनधेनाऽअन्तर्हृदामनसापूयमानाः ॥ एतेऽअर्षन्त्यूर्म्मयोघृत-
स्यमृगाऽइवक्षिपणोरीषमाणाः ॥ ६ ॥ सिन्धोरिवप्राध्वनेशूघनासोवातप्रमियःपतयन्तियह्वाः ॥ घृतस्यधाराऽअरुषो-
नवाजीकाष्ठाभिन्दन्नूर्म्मिभिःपिन्वमानः ॥ ७ ॥ अभिप्रवन्तसमनेवयोषाःकल्याण्यःस्मयमानासोऽअग्निम् ॥ घृतस्य-
धाराःसमिधोनसन्तताजुषाणोहर्य्यतिजातवेदाः ॥ ८ ॥ कन्याऽइववहतुमेतवाऽउऽअञ्ज्यञ्जानाऽअभिचाकशीमि ॥ य-

त्रसोमं॑सूयतेयत्रयज्ञोघृतस्यधाराऽअभितत्पवन्ते ॥ ९ ॥ अभ्यर्षतसुष्टुतिङ्गव्यमाजिमस्मासुभद्राद्रविणानिधत्त ॥ इमं-
यज्ञन्नयतदेवतानोघृतस्यधारामधुमत्पवन्ते ॥ १० ॥ धामन्तेविश्वम्भुवनमधिश्रितमन्तःसमुद्रेहृद्यन्तरायुषि ॥ अपाम-
नीकेसमिथेयऽआभृतस्तमश्यामधुमन्तन्तऽऊर्म्मिम् ॥ ११ ॥ पुनस्त्वादित्यारुद्रावसवःसमिन्धताम्पुनर्ब्रह्माणोवसुनीथ-
यज्ञैः ॥ घृतेनत्वन्तन्वंवर्धयस्वसत्याःसन्तुयजमानस्यकामाः ॥ १२ ॥ सप्ततेऽअग्नेसमिधःसप्तजिह्वाःसप्तऽऋषयःसप्त-
धामप्रियाणि ॥ सप्तहोत्राःसप्तधात्वायजन्तिसप्तयोनीरापृणस्वाघृतेनस्वाहा ॥ १३ ॥ पूर्णादर्विपरापत० ॥ १४ ॥ अथ-
प्रातरहुतेवाहुतेवायतरथाकामयेतसोस्याऽअनिरसितायैकुम्भ्यैदर्व्योपहन्तिपूर्णादर्विपरापतसुपूर्णापुनरापत ॥ वस्नेवविक्री-
णावहाऽइषमूर्जंशतक्रतोस्वाहा ॥ १ ॥ इदमग्नयेवैश्वानरायवसुरुद्रादित्येभ्यःशतक्रतवेसप्तवतेअग्नयेअद्भ्यश्चनमम ॥ ॥
ततोवसोर्द्धारांजुहुयात् ॥ तत्रमन्त्राः ॥ ॐसप्ततेअग्नेसमिधः० ॥ १ ॥ शुक्रज्योतिश्चचित्रज्योतिश्चसत्यज्यो-
तिश्चज्योतिष्माँश्च ॥ शुक्रश्चऽऋतपाश्चात्यंहाः ॥ २ ॥ ईदृङ्चान्यादृङ्चसदृङ्चप्रतिसदृङ्च ॥ मितश्चसम्मितश्चसभराः
॥ ३ ॥ ऋतश्चसत्यश्चध्रुवश्चधरुणश्च ॥ धर्त्ताचविधर्ताचविधारयः ॥ ४ ॥ ऋतजिच्चसत्यजिच्चसेनजिच्चसुषेणश्च ॥ अ-
न्तिमित्रश्चदूरेऽअमित्रश्चगणः ॥ ५ ॥ ईदृक्षासऽएतादृक्षासऽऊषुणःसदृक्षासःप्रतिसदृक्षासऽएतन ॥ मितासश्चसम्मि-
तासोनोऽअद्यसभरसोमरुतोयज्ञेऽअस्मिन् ॥६॥ स्वतवाँश्चप्रघासीचसान्तपनश्चगृहमेधीच ॥ क्रीडीचशाकीचोज्जेषि ॥७॥

इन्द्रन्देवीर्विशोमरुतोनुवर्त्मानोभवन्यथेन्द्रन्दैवीर्विशोमरुतोनुवर्त्मानोभवन् ॥ एवमिमम्यजमानन्दैवीश्चविशोमानुषीश्चा-
नुवर्त्मानोभवन्तु ॥ ८ ॥ इमꣳस्तनमूर्जस्वन्तन्धयापाम्प्रपीनमग्नेसरिरस्यमध्ये ॥ उत्सञ्जुषस्वमधुमन्तमर्वन्त्समुद्रियꣳसद-
नमाविशस्व ॥ ९ ॥ घृतम्मिमिक्षेघृतमस्य० ॥ १० ॥ ॥ ब्राह्मणं ॥ अथातोवसोर्धाराञ्जुहोति ॥ अत्रैषसर्वोऽग्निःसं-
स्कृतःसऽएषोत्रवसुस्तस्मैदेवाऽएतान्धाराम्प्रागृह्णंस्तयैनमप्रीणँस्तद्यदेतस्मैवसवऽएतान्धाराम्प्रागृह्णंस्तस्मादेनाम्वसोर्द्धारे-
त्याचक्षतेतथैवास्माऽअयमेतान्धाराम्प्रगृह्णातितयैनम्प्रीणाति ॥ १ ॥ यद्वेवैताम्वसोर्धाराञ्जुहोति ॥ अभिषेकऽएवास्यै-
षऽएतद्वाऽएनन्देवाःसर्वङ्कृत्स्नꣳसंस्कृत्याथैनमेतैःकामैरभिषिञ्चन्त्येतयावसोर्द्धारयाथैनमयमेतत्सर्वङ्कृत्स्नꣳ संस्कृत्याथैनमे-
तैःकामैरभिषिञ्चत्येतयावसोर्द्धारयाज्येनपञ्चगृहीतेनौदुम्बर्यास्रुचातस्योक्तोबन्धुः ॥ २ ॥ वैश्वानरꣳहुत्वा ॥ शिरोवैवैश्वान-
रःशीर्ष्णोवाऽअन्नमद्यतेथोशीर्षतोवाऽअभिषिच्यमानोभिषिच्यतेमारुतान्हुत्वाप्राणावैमारुताःप्राणैर्वाऽअन्नमद्यतेथोप्रा-
णेषुवाऽअभिषिच्यमानोभिषिच्यते ॥ ३ ॥ तद्वाऽअरण्येनूच्योवाग्वाऽ ॥ अरण्येनूच्योवाचोवाऽअन्नमद्यतेथोवाचावाऽअ-
भिषिच्यमानोभिषिच्यतेतदेतत्सर्वम्वसुसर्वेह्येतेकामाःसैषावसुमयीधारायथाक्षीरस्यवासर्पिषोवैवमारम्भायैवेयमाज्याहुति-
र्हूयतेतद्यदेषावसुमयीधारातस्मादेनाम्वसोर्द्धारेत्याचक्षते ॥४॥ सऽआहऽइदञ्चमऽइदञ्चमऽइत्यनेनचत्वाप्रीणाम्यनेनचानेन-
चत्वाभिषिञ्चाम्यनेनचेत्येतदथोऽइदञ्चमेदेहीदञ्चमऽइतिसायदेवैषाधाराग्निम्प्राप्नुयादथैतद्यजुःप्रतिपद्यते ॥५॥ एतद्वाऽएन-

न्प्रायच्छन्तथैवैनमयमेतदेतेनान्नेनप्रीणात्यैतैः कामैरभिषिञ्चत्यैतयावसोर्द्धारयाथैनमेतान्कामान्याचतेतस्मा ऽइष्टः प्रीतोभिषिक्तऽ-
एतान्कामान्प्रयच्छतिद्वौद्वौकामौसंधुनक्त्यव्यवच्छेदाथयथाव्योमाकसौसंयुंज्यादेवन्यज्ञेनकल्पतामिति ॥६॥ एतद्वैदेवा ऽअ-
ब्रुवन् ॥ केनेमान्कामान्प्रतिगृहीष्याम ऽइत्यात्मनैवेत्यब्रुवन्यज्ञोवैदेवानामात्मायज्ञ ऽउ ऽएवयजमानस्यसयदाहयज्ञेनकल्पता-
मित्यात्मनामेकल्पंतामित्येवैतदाह॥७॥ द्वादशसुकल्पयति ॥ द्वादशमासाः संवत्सरः संवत्सरोग्निर्यावानग्निर्यावत्यस्यमात्रातता-
वतैवैनमेतदन्नेनप्रीणात्यथोतावतैवैनमेतदन्नेनाभिषिञ्चतिचतुर्दशसुकल्पयत्यष्टासुकल्पयतिदशसुकल्पयतित्रयोदशसुकल्प-
यति ॥८॥ अथार्धेन्द्राणिजुहोति ॥ सर्वमेतद्यदर्धेन्द्राणिसर्वेणैवैनमेतत्प्रीणात्यथोसर्वेणैवैनमेतदभिषिञ्चति ॥९॥ अथग्रहा-
ञ्जुहोति ॥ यज्ञोवैग्रहायज्ञेनैवैनमेतदन्नेनप्रीणात्यथोयज्ञेनैवैनमेतदन्नेनाभिषिञ्चति ॥१०॥ अथैतान्यज्ञक्रतूञ्जुहोति ॥ अग्निश्च-
मेघर्मश्चम ऽइत्येतैरेवैनमेतद्यज्ञक्रतुभिः प्रीणात्यथो ऽएतैरेवैनमेतद्यज्ञक्रतुभिरभिषिञ्चति ॥११॥ अथायुजस्तोमाञ्जुहोति ॥ सहै-
षयज्ञ ऽउवाचनग्नतायावैबिभेमीतिकातेनग्नतेत्यभितएवमापरिस्तृणीयुरितितस्मादेतदग्निमभितः परिस्तृणन्तितृष्णायावैबि-
भेमीतिकातेतृप्तिरितिब्राह्मणस्यैवतृप्तिमनुतृप्येयमितितस्मात्संस्थितेयज्ञेब्राह्मणन्तर्प्पयितवैब्रूयाद्यज्ञमेवैतत्तर्प्पयति ॥ १२॥
यत्कर्मणात्यरीरिचन्यद्वान्यूनमिहाकरम् ॥ अग्निष्टत्स्विष्टकृद्विद्वान्स्विष्टंसुहुतंकरोतुस्वाहा ॥ १३ ॥ ॥ ततस्त्रायुपक-

रणं ॥ श्रद्धांमेधांयशःप्रज्ञांविद्यांपुष्टिंश्रियंबलं ॥ तेजआयुष्यमारोग्यंदेहिमेहव्यवाहन ॥ १ ॥ ॐत्र्यायुषंजमदग्नेःकश्यप-
स्यत्र्यायुषम् ॥ यद्देवेषुत्र्यायुषन्तन्नोऽअस्तुत्र्यायुषम् ॥ भस्मनाललाटेग्रीवायांदक्षिणेंऽसेहृदिचत्र्यायुषमितिप्रतिमन्त्रं ॥ ॥
ततःसंस्रवप्राशनं ॥ पवित्राभ्यांमार्जनं ॥ अग्नौपवित्रप्रतिपत्तिः ॥ ब्रह्मणेपूर्णपात्रदानं ॥ कृतस्यकर्मणःसाङ्ग-
तासिध्यर्थंब्रह्मन्इदंपूर्णपात्रंदक्षिणांतुभ्यमहंसंप्रददे ॥ प्रतिगृह्यतांइतियजमानोब्रूयात् ॥ सयदिकिंचिल्लभेतततत्प्रति-
गृह्णातिद्यौस्त्वाददातुपृथिवीत्वाप्रतिगृह्णात्विति सास्यनददतःक्षीयतेभूयसीचप्रतिगृहीताभवति ॥ ॐद्यौस्त्वाददातुपृथि-
वीत्वाप्रतिगृह्णातु ॥ इतिब्रह्माप्रतिगृह्णाति ॥ प्रणीताविमोकः ॥ ॐआपःशिवाःशिवतमाःशान्ताःशान्ततमास्तास्तेकृण्वन्तु-
भेषजं ॥ १ ॥ ॥ ततःश्रेयःसंपाद्यदानं ॥ आचार्यादयोवरणक्रमेणस्वंस्वंश्रेयोदानंकुर्युः ॥ अद्येत्यादि०कृतस्यसग्रहमख-
रजोदर्शनशांत्याख्यस्यकर्मणःयजमानायश्रेयोदानंकरिष्ये ॥ तत्रादौवचःप्रतिवचनं ॥ शिवाआपःसंतु ॥ सन्तुशिवाआपः ॥
सौमनस्यमस्तु ॥ अस्तुसौमनस्यं ॥ अक्षतंचारिष्टंचास्तु ॥ अस्त्वक्षतमरिष्टंच० ॥ यत्पापंतत्प्रतिहतमस्तु ॥ यच्छ्रेयस्त-
दस्तु ॥ भवन्नियोगेनमयाअस्मिन्सग्रहमखरजोदर्शनशान्त्याख्येकर्मणियत्कृतंआचार्यत्वंतदुत्पन्नंश्रेयः तत्तुभ्यमहंसंप्रददे ॥
प्रतिगृह्यतांप्रतिगृह्णामि ॥ तेनश्रेयसात्वंश्रेयस्वान्भव ॥ भवामीतिप्रतिवचनं ॥ एवमेवब्रह्मादयऋत्विजोजापकादयश्च ॥
यद्वाब्रह्मादयोऋत्विजोजापकाश्चआचार्यद्वाराश्रेयोदानंकुर्युः ॥ तद्यथा ॥ भवन्नियोगेनमयाअस्मिन्सग्रहमखरजोदर्शन-
शांत्याख्येकर्मणियत्कृतंआचार्यत्वंतथाचएभिर्ब्राह्मणैःसहयत्कृतंब्रह्मत्वंगाणपत्यंसादस्यंतथाचयःकृतोहोमःयःकृतोजपःआ-

चार्यत्वात्ब्रह्मत्वात्गाणपत्यात्सादस्यात्होमात्जपात्यदुत्पन्नंश्रेयः तत्तुभ्यमहंसंप्रददे ॥ तेनश्रेयसात्वंश्रेयस्वान्भव ॥ भ-
वामीतितेनवाच्यं ॥ ॥ ततआचार्यादीनांगन्धवस्त्रालंकारादिभिर्यथाविभवंपूजनंकार्यं ॥ दानानिच ॥ स्वर्णगोभूतिला-
न्दद्यात्सर्वदोषापनुत्तयइति ॥ ततःकदलीदानं ॥ तत्रमन्त्रः ॥ सुपत्रेसुभगेदेविरम्भेभास्करवल्लभे ॥ रक्षमांरजसोदोषाद्दुष्ट-
स्यास्यविगर्हितात् ॥१॥ दानेनानेनमेदेवःसविताविश्वतोमुखः ॥ प्रीतोभवतुमेसद्योदोषंहरतुदुष्करं ॥२॥ अनेनकदलीदाने-
नश्रीसूर्यःप्रीयतां ॥ ॥ अथमूर्तिदानं ॥ देवदेवजगन्नाथजगतांकारणाव्यय ॥ मनोहारिन्नमस्तुभ्यंभास्करःप्रीयतामिति ॥
इमाःसूर्यादिचतस्रोमूर्तीःसकलशाःसवस्त्राआचार्यायतुभ्यमहंसंप्रददे ॥ इदंग्रहमण्डलंग्रामाचार्यायतुभ्यमहंसंप्रददे ॥
अभिषेकः ॥ ततोग्रहकलशदेवताकलशानामुदकमेकस्मिन्पात्रेएकीकृत्यदूर्वापंचपल्लवैरुदङ्मुखआचार्यस्तिष्ठन्चत्वारोऋत्वि-
जश्चसपत्नीकंयजमानंप्राङ्मुखमुपविष्टमभिषिञ्चेयुः ॥ तत्रमन्त्राः ॥ ॐआपोहिष्ठा० ॥१॥ योवःशिव० ॥ २ ॥ तस्माऽ-
अरं० ॥ ३ ॥ आपोऽअस्मान्मातरः शुन्धयन्तुघृतेननोघृतप्वःपुनन्तु ॥ विश्वꣳहिरिप्रम्प्रवहन्तुदेवीरुदिदाभ्यःशुचिरा-
पूतऽएमि ॥ ४ ॥ इदमापःप्रवहतावद्यञ्चमलञ्चयत् ॥ यच्चाभिदुद्रोहानृतंयच्चशेपेऽअभीरुणम् ॥ आपोमातस्मादेनसःप-
वमानश्चमुञ्चतु ॥५॥ स्तोकानामिन्दुम्प्रतिशूरऽइन्द्रोवृषायमाणोवृषभस्तुराषाट् ॥ घृतप्रुषामनसामोदमानाःस्वाहादेवाऽअ-
मृतामादयन्ताम् ॥६॥ आयात्विन्द्रोवसऽउपनऽइहस्तुतःसधमादस्तुशूरः ॥ वावृधानस्तविषीर्यस्यपूर्वीर्द्यौर्नक्षत्रमभिभूतिपु-

ष्यात् ॥७॥ आनुऽइन्द्रोदूरादानऽआसादभिष्टिकृदवसेयासदुग्रः ॥ ओजिष्ठेभिर्नृपतिर्वज्रबाहुःसङ्गेसमत्सुतुर्वणिःपृतन्यून्
॥ ८ ॥ आनुऽइन्द्रोहरिभिर्यात्वच्छार्वाचीनोवसेराधसेच ॥ तिष्ठातिवज्रीमघवाविरप्शीमन्यज्ञमनुनोवाजसातौ ॥ ९ ॥
त्रातारमिन्द्र० ॥ १० ॥ इमम्मेवरुणश्रुधीहवमद्याचमृडय ॥ त्वामवस्युराचके ॥ ११ ॥ तत्त्वायामि० ॥ १२ ॥ त्व-
न्नोऽअग्ने० ॥ १३ ॥ सत्वन्नोऽअग्ने० ॥ १४ ॥ उदुत्तमम्वरुण० ॥ १५ ॥ वरुणस्योत्तम्भ० ॥ १६ ॥ प्रातरग्निम्प्रात-
रिन्द्रंहवामहेप्रातर्मित्रावरुणाप्रातरश्विना ॥ प्रातर्भगम्पूषणम्ब्रह्मणस्पतिम्प्रातःसोममुतरुद्रहुवेम ॥ १७ ॥ भगप्रणे-
तर्भगसत्यराधोभगेमान्धियमुदवाददन्नः ॥ भगप्रणोजनयगोभिरश्वैर्भगप्रनृभिर्नृवन्तःस्याम ॥ १८ ॥ समुद्रायत्वावाताय-
स्वाहासरितायत्वावातायस्वाहा ॥ अनाधृष्यायत्वावातायस्वाहाप्रतिधृष्यायत्वावातायस्वाहा ॥ अवस्यवेत्वावातायस्वाहा-
शिमिदायत्वावातायस्वाहा ॥ १९ ॥ आप्यायस्व० ॥ २० ॥ पञ्चनद्यःसरस्वतीमपियन्तिसस्रोतसः ॥ सरस्वतीतुपञ्चधा-
सोदेशेभवत्सरित् ॥ २१ ॥ पुनन्तुमादेवजनाः० ॥ २२ ॥ पवित्रेणपुनीहिमाशुक्रेणदेवदीद्यत् ॥ अग्नेक्रत्वाक्रतूँरनु
॥ २३ ॥ यत्तेपवित्रमर्चिष्यग्नेविततमन्तरा ॥ ब्रह्मतेनपुनातुमा ॥ २४ ॥ पवमानःसोऽअद्यनःपवित्रेणविचर्षणिः ॥
यःपोतासपुनातुमा ॥२५॥ उभाभ्यान्देवसवितःपवित्रेणसवेनच ॥ माम्पुनीहिविश्वतः ॥ २६ ॥ वैश्वदेवीपुनतीदेव्या-
गाद्यस्यामिमाबह्व्यस्तन्वोवीतपृष्ठाः ॥ तयामदन्तःसधमादेषुवयंस्यामपतयोरयीणाम् ॥२७॥ चित्पतिर्म्मापुनातुवाक्प-

तिम्मापुनातुदेवोमासवितापुनात्वच्छिद्रेणपवित्रेणसूर्यस्यरश्मिभिः ॥ तस्यतेपवित्रपतेपवित्रपूतस्ययत्कामःपुनेतच्छकेयम्
॥ २८ ॥ शिरोमेश्रीर्यशोमुखन्त्विषिःकेशाश्चश्मश्रूणि ॥ राजामेप्राणोऽअमृतꣳसम्राट्चक्षुर्विराट्श्रोत्रम् ॥ २९ ॥ जि-
ह्वामेभद्रँवाङ्महोमनोमन्युःस्वराड्भामः ॥ मोदाःप्रमोदाऽअङ्गुलीरङ्गानिमित्रम्मेसहः ॥ ३० ॥ बाहूमेबलमिन्द्रियꣳहस्तौ-
मेकर्म्मवीर्यम् ॥ आत्माक्षत्रमुरोमम ॥ ३१ ॥ पृष्ठीर्म्मेराष्ट्रमुदरमꣳसौग्रीवाश्चश्रोणी ॥ ऊरूऽअरत्नीजानुनीविशोमेङ्गा-
निसर्वतः ॥ ३२ ॥ नाभिर्म्मेचित्तम्विज्ञानम्पायुर्म्मेपचितिर्भसत् ॥ आनन्दनन्दावाण्डौमेभगःसौभाग्यम्पसः ॥ जङ्घा-
भ्यामपद्भ्यांधर्मोस्मिविशिराजाप्रतिष्ठितः ॥ ३३ ॥ पयःपृथि० ॥ ३४ ॥ देवस्य० सरस्व० यन्त्रिये० म्यसौ ॥ ३५ ॥
देवस्य० सरस्व०यन्त्रेणाग्नेः० चामि ॥ ३६ ॥ देवस्य०अश्विनोर्भै० ॥ ३७ ॥ विश्वानिदेव० ॥ ३८ ॥ धामच्छदग्नि०
॥ ३९ ॥ त्वर्ज्जविष्ठ० ॥ ४० ॥ अन्नपते० ॥ ४१ ॥ पालाशम्भ० ॥ ४२ ॥ औदुम्बरं० ॥ ४३ ॥ नैय्यग्रोधपादं०
॥ ४४ ॥ आश्वत्थं० ॥ ४५ ॥ यद्देवकल्पाञ्जहो० ॥ ४६ ॥ द्यौःशान्तिरन्तरि० ॥ ४७ ॥ यतोयतःस० ॥ ४८ ॥
अथपुराणोक्तमन्त्राः ॥ सुरास्त्वामभिषिञ्चन्तुब्रह्मविष्णुमहेश्वराः ॥ वासुदेवोजगन्नाथस्तथासंकर्षणोविभुः ॥ १ ॥ प्रद्युम्न-
श्चानिरुद्धश्चभवन्तुविजयायते ॥ आखण्डलोग्निर्भगवान्यमोवैनिर्ऋतिस्तथा ॥ २ ॥ वरुणःपवनश्चैवधनाध्यक्षस्तथाशिवः ॥
ब्रह्मणासहिताःसर्वेदिक्पालाःपान्तुतेसदा ॥ ३ ॥ कीर्तिर्लक्ष्मीर्धृतिर्मेधापुष्टिःश्रद्धाक्रियामतिः ॥ बुद्धिर्लज्जावपुःशान्ति-

स्तुष्टिःकान्तिश्चमातरः ॥ ४ ॥ एतास्त्वामभिषिञ्चन्तुदेवपत्न्यःसमागताः ॥ आदित्यश्चन्द्रमाभौमबुधजीवसितार्कजाः ॥५॥ ग्रहास्त्वामभिषिञ्चन्तुराहुःकेतुश्चतर्पिताः ॥ देवदानवगन्धर्वायक्षराक्षसपन्नगाः ॥ ६ ॥ ऋषयोमनवोगावोदेवमातरएवच ॥ देवपत्न्योद्रुमानागादैत्याश्चाप्सरसांगणाः ॥ ७ ॥ अस्त्राणिसर्वशस्त्राणिराजानोवाहनानिच ॥ औषधानिचरत्नानिकालस्यावयवाश्चये ॥८॥ सरितःसागराःशैलास्तीर्थानिजलदानदाः ॥ एतेत्वामभिषिञ्चन्तुसर्वकामार्थसिद्धये ॥९॥ सुर्वेपांवा० ॥४९॥ अमृताभिषेकोस्तु ॥ एवमभिषेकानन्तरंसर्वौषधीभिरनुलिप्यशुद्धोदकेनस्नात्वाउभयोःस्नानवस्त्रत्यागः ॥ वस्त्रण्याचार्यायदद्यात् ॥ शुक्लमाल्याम्बरधरोधृतमङ्गलतिलकःसपत्नीकोयजमानःस्वासनेउपविश्याचम्याज्यावलोकनंकुर्यात् ॥

ॐरूपेणवोरूपमभ्यागांतुथोवोविश्ववेदाविभजतु ॥ ऋतस्यपथाप्रेतचन्द्रदक्षिणाविस्वःपश्यव्यन्तरिक्षन्यतस्वसदस्यैः ॥१॥ रूपंरूपम्प्रतिरूपोबभूवतदस्यरूपम्प्रतिचक्षणाय ॥ इन्द्रोमायाभिःपुरुरूपईयतेयुक्ताह्यस्यहरयःशतादशेत्ययंवैहरयोयम्वैदशचसहस्राणिबहूनिचानन्तानिचतदेतद्ब्रह्मापूर्वमनपरमनंतरमबाह्यमयमात्माब्रह्मसर्वानुभूरित्यनुशासनम् ॥१॥ इदंआज्यपात्रंसदक्षिणाकंआचार्यायतुभ्यमहंसंप्रददे ॥ ॥ ततोब्राह्मणभोजनसंकल्पः ॥ कृतस्यकर्मणःसाङ्गतासिध्यर्थंयथाशक्तिब्राह्मणान्भोजयिष्ये ॥ तेनश्रीकर्माङ्गदेवताःप्रीयन्तां ॥ ॥ कर्मसाङ्गतासिध्यर्थंआचार्यायदक्षिणांदद्यात् ॥ ऋत्विगादिभ्योयथाशक्तिदक्षिणांदत्वा अन्येभ्योब्राह्मणेभ्योयथाशक्तिभूयसींदक्षिणांदातुमहमुत्सृजेइतिदत्वा तेषामाशिषोगृह्णीयात् ॥

ततोदेवताग्निविसर्जनं ॥ यान्तुग्रहगणाःसर्वेस्वशक्त्यापूजितामया ॥ इष्टकामप्रसिध्यर्थंपुनरागमनायच ॥ १ ॥ ॐउ-
त्तिष्ठब्रह्मणस्पतेदेवयन्तस्त्वेमहे ॥ उपप्रयन्तुमरुतःसुदानवइन्द्रप्राशूर्भवासचा ॥१॥ गच्छगच्छसुरश्रेष्ठस्वस्थानेपरमेश्वर ॥
यत्रब्रह्मादयोदेवास्तत्रगच्छहुताशन ॥१॥ ॐयज्ञयज्ञंगच्छयज्ञपतिंगच्छस्वांयोनिंगच्छस्वाहा ॥ एषतेयज्ञोयज्ञपतेसहसूक्तवा-
कःसर्ववीरस्तञ्जुषस्वस्वाहा ॥१॥ मासोत्तमेअमुकमासेअमुकपक्षेअमुकतिथौमयायत्कृतंसग्रहमखरजोदर्शनशान्त्याख्यंकर्मत-
त्कालहीनंभक्तिहीनंश्रद्धाहीनंब्राह्मणानांवचनात्श्रीसूर्याद्यावाहितदेवताप्रसादात्सर्वंपरिपूर्णमस्त्वितिभवन्तोब्रुवन्तु ॥ अ-
स्तुपरिपूर्णइतिब्राह्मणाप्रतिब्रूयुः ॥ प्रमादात्कुर्वतांकर्मप्रच्यवेदध्वरेषुयत् ॥ स्मरणादेवतद्विष्णोःसंपूर्णस्यादितिश्रुतिः ॥ १॥
यस्यस्मृत्याचनामोक्त्यातपोयज्ञक्रियादिषु ॥ न्यूनंसंपूर्णतांयातिसद्योवन्देतमच्युतं ॥ २ ॥ ॐविष्णवेनमोविष्णवेनमो-
विष्णवेनमः ॥३॥ एवंयःकुरुतेशान्तिंनारदोक्तप्रमाणतः ॥ तदनिष्टंतुसकलंसद्यएवविनश्यतीति ॥ इतिसग्रहमखनारदोक्त-
रजोदर्शनशान्तिप्रयोगः ॥ ॥ अथगर्भाधानम् ॥ आचमनं ॥ प्राणायामः । पवित्रधारणं ॥ देशकालौसंकीर्त्यशुभपुण्यति-
थौअस्याःममभार्यायाःप्रतिगर्भसंस्कारातिशयद्वारा अस्यांजनिष्यमाणसर्वगर्भाणांबीजगर्भसमुद्भवैनोनिबर्हणद्वाराश्रीपरमे-
श्वरप्रीत्यर्थंगर्भाधानाख्यंकर्माहंकरिष्ये॥ तदंगत्वेनस्वस्तिपुण्याहवाचनंमातृकापूजनंवसोर्धारापूजनमायुष्यमन्त्रजपंनान्दीश्रा-
द्धंचकरिष्ये ॥ तत्रादौनिर्विघ्नतासिद्ध्यर्थंगणपतिपूजनंकरिष्येइतिसंकल्प्य ॥ तानिकृत्वा ॥ अत्रशिष्टाचारः ॥ ततोमङ्गलवा-
द्यघोषपुरःसरंस्वकुलवृद्धैः दंपतीभ्यांनूतनोष्णीषादिमङ्गलवस्त्रदानं ताभ्यांपरिधानंचकार्यं ततोभर्ताउदङ्मुखःसन्याःफलि-

नीरितिमन्त्रेणनारिकेलफलप्रदानंकरोति ॥ ॐया:फलिनी० ॥ साचवस्त्रेप्रतिगृह्णाति ॥ ततःपतिपुत्रवतीभिर्वृद्धसुवासिनी-
स्त्रिभिःगोधूमनारिकेलादिनानाविधफलप्रदानपूर्वकंआशीःप्रदानं ॥ ततोभर्तापत्न्यासहआदित्यमवेक्षते ॥ ॐआदित्यङ्गर्भम्प-
यसासमङ्ग्धिसहस्रस्यप्रतिमाम्विश्वरूपम् ॥ परिवृङ्धिहरसामाभिमᳪंस्थाः शतायुषङ्कृणुहिचीयमानः ॥१॥ ततोदक्षिणेन-
पाणिनोरुप्रसार्यप्रजास्थानंतूष्णीमभिमृश्यजपति ॥ ॐ पूषाभगᳪंसवितामेददातुरुद्रःकल्पयतुललामगुम्विष्णुर्योनिङ्कल्पय-
तुत्वष्टारूपाणिपिᳪंशतु ॥ आसिञ्चतुप्रजापतिर्धातागर्भन्दधातुते ॥ गर्भंधेहिसिनीवालिगर्भंधेहिपृथुष्टुके ॥ गर्भन्तेऽअश्विनौ-
देवावाधत्तांपुष्करस्रजौ ॥ तेजोवैश्वानरोदद्यात् ॥ अथब्रह्मानुमन्त्रयते ॥ ॐब्रह्मागर्भन्दधातुते ॥ प्राङ्मुखोवोदङ्मुखोवोपवि-
ष्टोमंथेत् ॥ ॐगायत्रेणत्वाछन्दसामन्थामि ॥ ॐत्रैष्टुभेनत्वाछन्दसामन्थामि ॥ ॐजागतेनत्वाछन्दसामन्थामि ॥१॥ रेतो-
मूत्रमितिचैकेस्रावणंकुर्यात् ॥ ॐरेतोमूत्रंविजहातियोनिम्प्रविशदिन्द्रियम् ॥ गर्भोजरायुणावृतऽउल्वञ्जहातिजन्मना ॥
ऋतेनसत्यमिन्द्रियँविपानᳪंशुक्रमन्धसऽइन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु ॥ १ ॥ अथास्यैदक्षिणाᳪंसमधिहृदयमालभते ॥
ॐयत्तेसुशीमेहृदयन्दिविचन्द्रमसिश्रितम् ॥ वेदाहन्तन्मान्तद्विद्यात्पश्येमशरदःशतञ्जीवेमशरदःशतᳪंशृणुयामशरदःशतम्
॥ १ ॥ कृतस्यकर्मणःसांगतासिध्यर्थंदशब्राह्मणान्भोजयिष्ये ॥ तेनश्रीकर्माङ्गदेवताःप्रीयन्तां ॥ ब्राह्मणेभ्योदक्षि-
णादानंआशीर्ग्रहणंमातृणांविसर्जनं ॥ अनेनगर्भाधानाख्येनकर्मणाभगवान्श्रीपरमेश्वरःप्रीयताम् ॥ इतिगर्भाधानम् ॥

**अथ गर्भाधानाकरणे प्रायश्चित्त विधानपारिजाते आश्वलायनः**—गर्भाधानस्याकरणात्तस्यां जातस्तु दुष्यति ॥ अकृत्वा गां द्विजे दत्वा कुर्यात्पुंसवनं पतिरिरिति ॥ केवलगर्भाधानहोमाकरणेप्रायश्चित्तंतु २० पुटेद्रष्टव्यम् ॥

**अथगर्भधारणौषधं ॥ सायदिगर्भंनदधीततदा ॥ ऋतुस्नातायांचतुर्थेहनिषोडशरात्रिमध्येकस्मिंश्चिद्युग्मेह्निवापुष्यनक्षत्रादिनाचन्द्रमायुज्येततदह्निऋतुमतीमुपोष्यतद्रात्रौसिंह्याःश्वेतपुष्प्यार्बृहत्यामूलमुत्थाप्योदपेषंपिष्ट्वादक्षिणस्यांनासिकायामासिञ्चतिभर्ता ॥ तत्रमन्त्रः ॥ ॐइयमौषधीत्रायमाणासहमानासरस्वती ॥ अस्याऽअहंबृहत्याःपुत्रःपितुरिवनामजग्रभम् ॥ १ ॥ इतिगर्भधारणौषधं ॥**

**अथपुंसवनम् ।** पुरास्पन्दत इति । गर्भस्पन्दनात्पूर्वं भवतीत्यर्थः । मासे द्वितीये तृतीये वा । यदहःपुंसा नक्षत्रेणचन्द्रमा युज्येत तदहरुपवास्याप्लाव्याहते वाससी परिधाप्य ॥ **रेणुकारिकायां**—गर्भसंस्कार एवायमिति कर्कस्य संमतिः ॥ अतस्तद्गर्भसंस्कारात्प्रतिगर्भंप्रयुज्यत इति ॥ बह्वृचकारिकायामप्येवं ॥ कालातिक्रमेस्पन्दितेपि कार्यमेव । **तदुक्तं कारिकायाम्**—एतदेव पुरा गर्भचलनादकृतं यदि ॥ सीमन्तात्प्राग्विधातव्यं स्पन्दितेपि बृहस्पतिरिरिति ॥ **निर्णयसिन्धौ प्रयोगपारिजाते जातूकर्ण्यः**—द्वितीये वा तृतीये वा मासि पुंसवनं भवेत् । व्यक्ते गर्भे भवेत्कार्यं सीमन्तेन सहाथवा ॥ **पुंनक्षत्राणि तु**—पुंनक्षत्राणि चैतानि पुष्यो हस्तः पुनर्वसुः । अभिजिच्च तथा पूभा अनूराधाऽश्विनी तथा ॥ **निर्णयसिंधौ वराहः**—हस्तो मूलं श्रवणः पुनर्वसुर्मृगशिरस्तथा पुष्यः । पुंसंज्ञकेषु कार्येष्वेतानि शुभानि धिष्ण्यानि ॥ **गर्गोपि**—पुंनामा श्रवणस्तिष्यो हस्तश्चैव पुनर्वसुः । अभिजित्प्रोष्ठपाचैव अनुराधा तथाश्वयुगिति ॥

---

१ बृहती भूयरिंगणी ।

अथप्रयोगः ॥ आचमनं । प्राणायामः । पवित्रधारणं । देशकालौसंकीर्त्य शुभपुण्यतिथौ अस्यांममभार्यायां उत्पत्स्यमान-
गर्भस्यबैजिकगार्भिकदोषपरिहारार्थंपुंरूपताज्ञानोदयप्रतिरोधिपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थंपुंसवनाख्यंकर्माहंकरिष्ये ॥
तदंगत्वेनस्वस्तिपुण्याहवाचनंमातृकापूजनंवसोर्द्धारापूजनंआयुष्यमन्त्रजपंनान्दीश्राद्धंचकरिष्ये ॥ तत्रादौनिर्विघ्नतासिद्ध्य-
र्थंगणपतिपूजनंकरिष्ये ॥ इतिसंकल्प्यतानिकृत्वा ॥ न्यग्रोधावरोहान्छुङ्गांश्चनिशायामुपदेपंपिष्ट्वाकुशकंटकंसोमा९ं
शुंचैके । न्यग्रोधोवटः । अवरोहाअधोभागाङ्कुराः । शुङ्गाः ऊर्ध्वाङ्कुराश्च । कुशकण्टकंकुशमूलं । सोमा९ंशुंसोमलताख-
ण्डंचेत्यर्थः । पूर्ववदासेचन९ंहिरण्यगर्भोऽद्भ्यःसंभृतइत्येताभ्यां । पूर्ववदिति दक्षिणस्यांनासिकायामित्यर्थः । ॐहिरण्य-
गर्भ९० ॥ १ ॥ अद्भ्यःसम्भृतःपृथिव्यैरसाच्चविश्वकर्म्मणःसमवर्त्तताग्रे ॥ तस्यत्वष्टाविदधद्रूपमेतितन्मर्त्यस्यदेवत्वमाजा-
नमग्रे ॥ २ ॥ कूर्मंपित्तंचोपस्थेकृत्वा सयदिकामयेतवीर्यवान्स्यादितिविकृत्यैनमभिमंत्रयतेसुपर्णोसीतिप्राग्विष्णुक्रमेभ्यः
तत्रयंत्रः ॥ ॐसुपर्णोसिगरुत्माँस्त्रिवृत्तेशिरोगायत्रंचक्षुर्बृहद्रथंतरेपक्षौ ॥ स्तोमआत्माच्छन्दा९ंस्यङ्गानियजू९ंषिनाम ॥
सामतेतनूर्वामदेव्यंयज्ञायज्ञियम्पुच्छन्धिष्ण्याःशफाः ॥ सुपर्णोसिगरुत्मान्दिवंगच्छस्वःपत ॥१॥ कृतस्यकर्मणः सांग-



---

१ कूर्मंपित्तमितिउदकपूर्णशराव । उपस्थ उत्संग. । २ विकृत्याविकृतिछंदस्कया सुपर्णोसीतिऋचा । ३ तमेवमभिमृश्यजपतिपश्चात्प्राङ्तिष्ठन्नभिमंत्रयतइतिश्रुतेर-
भिमृशत्यन्यानितिप्राङ्तिष्ठन्नभिमंत्रयतेवा वागसीतिसदोभिमर्शनमभिमंत्रणमुत्तरैरित्यादिसूत्रेभ्यश्च अभिमर्शनं अभिमंत्रणंचभिन्नार्थकं । तत्राभिमंत्रणपदार्थ. । अभी-
त्याभिमुख्यइतियास्कः । आभिमुख्येनमंत्रणं उपांशुस्वरादपिगुप्तपरिभाषणमभिमंत्रणं । मंत्रिगुप्तपरिभाषण इतिधातु. ॥

तासि० दशब्राह्मणान्भोजयिष्ये ॥ ब्राह्मणेभ्योदक्षिणादानंआशीर्ग्रहणंमातृणांविसर्जनं ॥ अनेनपुंसवनाख्येनकर्मणाभगवान्श्रीपरमेश्वरःप्रीयतां ॥ इतिपुंसवनम् ॥

**अथ गर्भिणीधर्माः ॥ पाद्मे गर्भिण्यधिकारे अदितिं प्रति कश्यपः**—नावस्करेषूपविशेन्मुसलोलूखलादिषु ॥ अवस्करेषु मार्जन्यादिषु ॥ नोपस्करेतिपाठान्तरे उपस्करशब्देन शूर्पादि ज्ञेयं ॥ जलं च नावगाहेत शून्यागारं विवर्जयेत् ॥ वल्मीके नाधितिष्ठेत नचोद्विग्नमना भवेत् ॥ विलिखेन्न नखैर्भूमिं नाङ्गारेण न भस्मना ॥ न शयालुः सदा तिष्ठेद्व्यायामं च विवर्जयेत् ॥ न तुषाङ्गारभस्मास्थिकपालेषु समाविशेत् ॥ वर्जयेत्कलहं गेहे गात्रभङ्गं तथैव च ॥ न मुक्तकेशा तिष्ठेत नाशुचिः स्यात्कदाचन ॥ न शयीतोत्तरशिरा न चैवाधःशिराः क्वचित् ॥ न वस्त्रहीना नोच्छिष्टा नचार्द्रचरणा तथा ॥ नामङ्गल्यां वदेद्वाणीं न च हास्याधिका भवेत् ॥ कुर्याच्छुश्रूषया नित्यं पूजामाङ्गल्यततत्परा ॥ तिष्ठेत्प्रसन्नवदना सदा भर्तुर्हिते रतेति ॥ **भविष्ये**—संध्यायां नैव भोक्तव्यं गर्भिण्या वरवर्णिनि ॥ स्थातव्यं न च गन्तव्यं वृक्षमूले च सर्वदा ॥ न दुर्मुखी सदा तिष्ठेत्खड्गाच्छायां विवर्जयेत् । सर्वौषधीभिः कोष्णेन वारिणा स्नानमाचरेत् ॥ ईषदुष्णं कोष्णं ॥ कृतरक्षा सुभूषा च वास्तुपूजनतत्परा ॥ दानशीला तृतीयायां पार्वत्या नक्तमाचरेत् ॥ गर्भिणी कुञ्जराश्वादिशैलहर्म्याधिरोहणं ॥ व्यायामं शीघ्रगमनं शकटारोहणं त्यजेत् ॥ शोकं रक्तविमोक्षं च साहसं कुक्कुटासनं ॥ व्यवायं च दिवा स्वापं रात्रौ जागरणं त्यजेत् ॥ अतिरूक्षं तु नाश्नीयादत्यम्लमतिभोजनं ॥ अत्युष्णमतिशीतं च गुर्वाहारं विवर्जयेत् ॥ इतिवृत्ता भवेन्नारी विशेषेण तु गर्भिणी ॥ यश्च तस्यां भवेत्पुत्रः स्थिरायुर्वृद्धिसंयुतः ॥ अन्यथा गर्भपतनमवाप्नोति न संशय इति ॥ **मार्कण्डेयोपि**—वृक्षं महीं च नाक्रामेन्न प्राकारं पयोनिधिं ॥ परिखां च न चाक्रामेदबला गर्भधारिणी ॥ गर्भरक्षा सदा कार्या नित्यं शौचनिषेवणात् ॥ प्रशस्तमन्त्रलिखनाच्छस्तमाल्यानुलेपनादिति ॥

**स्मृत्यंतरे**—भूम्यां चैवोच्चनीचायामारोहश्चावरोहण ॥ नदीप्रतरणं चैव शकटारोहणं तथा ॥ उग्रौषधं तथा क्षारं मैथुनं भारवाहनं ॥ कृते पुंसवने चैव गर्भिणी परिवर्जयेत् ॥ गर्भग्रहणं च श्रमादिलिङ्गैर्वेदितव्यं ॥ गृहीतगर्भायाः सद्यः श्रमो ग्लानिश्च जायते ॥ पिपासा आयासः सक्थिस्पन्दनं शुक्रशोणितयोरनुसंबन्धो योन्याः स्फुरणं चेत्यादि ॥ अन्यच्च **प्रयोगार्णवे स्मृत्यन्तरे**—दानं पक्कान्नभिक्षायाः परिवेषणमेव च ॥ पचनं नच कर्तव्यं गर्भिण्या सर्वथैव त्विति ॥ इति गर्भिणीधर्माः ॥ ॥ **अथ गर्भिणीपतिधर्माः** ॥ गर्भिणीवाञ्छितं द्रव्यं तस्यै दद्याद्यथोचितं ॥ सूते चिरायुपं पुत्रमन्यथा दोषमर्हतीति ॥ **याज्ञवल्क्यः**—दोहदस्याप्रदानेन गर्भो दोषमवाप्नुयात् ॥ वैरूप्यं मरणं वापि तस्मात्कार्यं प्रियं स्त्रिया इति ॥ दोहद गर्भिणीप्रियं ॥ **स्मृतिचिंतामणौ**—पुंसो भार्या गर्भिणी यस्य चेत्स्यात्सूनोश्चौलं क्षौरकर्मात्मनश्च ॥ गेहारम्भस्तम्भसंस्थापनं च वार्धिस्नानं नैव कुर्याच्च यात्रामिति ॥ **दक्षः**—ऋतुद्वये व्यतीते तु न कुर्यान्मौञ्जिबन्धनं ॥ अग्न्याधानं गयाश्राद्ध वपनं च विवर्जयेदिति ॥ **कालविधाने**—क्षौरं शवानुगमनं नखकृन्तनं च युद्धं च वास्तुकरणं त्वतिदूरयानं ॥ उद्वाहमौपनयनं जलधेर्वगाहमायुःक्षयो भवति गर्भिणिकापतीनां ॥ वगाहइत्यत्र अवेत्युपसर्गावयवाकारस्य भागुरिमतेन लोपः ॥ क्षौर वपनं ॥ तच्चात्र कर्तनस्याप्युपलक्षणं ॥ नोदन्वतोम्भसि स्नायान्न च श्मश्र्वादि कर्तयेत् ॥ अन्तर्वत्न्याः पतिः कुर्वन्नप्रजा भवति ध्रुवमिति ऋतुस्मरणात् ॥ **यत्तु**—वपनस्य निषेधेपि कर्तनं वै विधीयतेइति स्मृत्यन्तरवचनं तद्गर्भिणीपतिभिन्नानां जीवत्पितृकादीनां यो वपननिषेधस्तत्र कर्तनविधानपरं॥ **संग्रहे**—दहनं वपनं चैव पर्वतारोहणं तथा ॥ नावआरोहणं चैव वर्जयेद्गर्भिणीपतिरिति ॥ **स्मृत्यन्तरे**—गर्भिण्यामपि भार्यायां विवाहेऽप्यथवा व्रते ॥ सपितापि वपेत्केशान् गौतम्यां सिंहगे गुराविति ॥ विवाह इत्यत्र निवृत्तेपीति शेषः ॥ एवं व्रते इत्यत्रापि ॥ गौतम्यामिति गौतम्यसन्निहितदेशनिवृत्त्यर्थं ॥ सिंहगेगुराविति तीर्थयात्रान्तरोपलक्षणं ॥ विवाहे व्रतबंधे च

गर्भिणीपतिरेव च ॥ मुण्डनं सर्वतीर्थेषु कुर्यादेवाविचारयन्निति **स्मृतिदर्पण**धृतसंग्रहवचनसंवादात् ॥ **स्मृत्यन्तरे**—सिन्धुस्नानं द्रुमच्छेदं वपनं प्रेतवाहनं ॥ विदेशगमनं चैव न कुर्याद्गर्भिणीपतिरिति ॥ प्रेतवाहनमित्यनेन प्रेतविधानमप्युपलक्ष्यते ॥ **ज्योतिर्निबन्धेगालवः**—प्रव्यक्तगर्भापतिरब्धियानं मृतस्य वाहं क्षुरकर्मसङ्गम् ॥ तथैव यत्नेन गयादितीर्थं यागादिकं वास्तुविधिं न कुर्यादिति ॥ आदिशब्देन व्रतोद्यापनादि ॥ **शुद्धिदर्पणे दक्षः**—मुण्डनं पिण्डदानं च प्रेतकर्म तथैव च ॥ न जीवत्पितृकः कुर्याद्गर्भिणीपतिरेव चेति ॥ पिण्डदानशब्देन श्राद्धमुपलक्ष्यत इति केचित् ॥ **वपनप्रेतविधानापवादस्तत्रैव**—क्षौरं नैमित्तिकं कुर्यान्निषेधे सत्यपि ध्रुवं ॥ पित्रोः प्रेतविधानं च गर्भिणीपतिरेव चेति ॥ एतच्च नियमाः सप्तममासादूर्ध्वं भवन्ति ॥ वपनं मैथुनं तीर्थं वर्जयेद्गर्भिणीपतिः ॥ श्राद्धं च सप्तमान्मासादूर्ध्वं नैव समाचरेदित्या**श्वलायनोक्तेः** ॥ **अत्र केचित्स**प्तममासोत्तरं यो वपनादिनिषेधः स दोषातिशयार्थः ॥ तेन तत्पूर्वमपि शक्तौ सत्यां वपनादिनिषेधपरिपालनमस्त्येवेत्याहुः ॥ ऊर्ध्वं नैव समाचरेति वचनात्सप्तममासात्पूर्वं कदाचिद्वपनादिकरणमस्तीति गम्यते ॥ **दक्षः**—मासषट्के व्यतीते तु न कुर्यान्मौञ्जिबन्धनं ॥ अग्न्याधानं गयाश्राद्धं वपनं च विवर्जयेदिति ॥ **संस्कारदर्पणे सत्यव्रतः**—ऋतुत्रये व्यतीते तु न कुर्यान्मौञ्जिबन्धनं ॥ अग्न्याधानं गयाश्राद्धं वपनं च विवर्जयेदिति ॥ संकटवशेन शक्ताशक्तपरतया वा व्यवस्था यथायथं बोध्या ॥ तीर्थं तीर्थयात्रा ॥ श्राद्धं श्राद्धभोजनमिति केचित् ॥ पित्रोः क्षयाहश्राद्धादिकं तु सप्तममासादूर्ध्वमपि भवति ॥ पित्रोः क्षयाहं दर्शं च गयाश्राद्धं महालयं ॥ ग्रहणान्वष्टकाश्राद्धे कुर्याद्गर्भवतीपतिरिति **सत्यव्रतोक्तेः** । एतच्च नित्यानां युगादिश्राद्धानामुपलक्षणं ॥ पिण्डयज्ञोऽपि भवत्येव नित्यत्वात् ॥ मुण्डनं पिण्डदानं चेत्युदाहृतदक्षवाक्ये पिण्डदानशब्देन श्राद्धमुपलक्ष्यत इति श्राद्धस्यैव निषेधप्राप्तौ पित्रोः क्षयाहमिति सत्यव्रतवाक्येन नित्यश्राद्धानां प्रतिप्रसवः क्रियते ॥ पिण्डदानशब्देन पिण्डदानमेव निषिध्यत इति

मते पित्रोः क्षयाहादिश्राद्धेष्वपि पिण्डदाननिषेधः ॥ तत्र निर्वपणं कार्यं तस्यामपि नृसत्तमेति ॥ आन्वष्टक्यविषय एव गर्भिणीपतित्वप्रयुक्तो यः पिण्डदाननिषेधः प्राप्तः स नास्तीति निबन्धकारलेखनादान्वष्टक्यव्यतिरिक्तसांवत्सरिकादिस्थले कथं पिण्डदानप्राप्तिरिति वाच्यं ॥ अपिशब्देन सांवत्सरिकादीनामपि संगृहीतत्वेन तत्प्राप्तिसंभवात् ॥ नच पितृशब्दस्य पिण्डनिर्वपणशब्देनान्वयात्कथमेतदिति वाच्यं ॥ सन्निहितपदान्वयसंभवे व्यवहितान्वयकल्पनस्यानुचितत्वात् ॥ सांवत्सरिकादिषु गर्भिणीपतिकर्तृकपिण्डदानाचारस्य बहुशो दृष्टत्वाच्चेति केचित् ॥ वस्तुतस्तु एतन्मतेपि क्षयाहादिश्राद्धेष्वपि पिण्डनिषेधो नैवास्ति ॥ श्राद्धं च सप्तमान्मासादूर्ध्वं नैव समाचरेदित्याद्याश्वलायनवचनस्य श्राद्धशब्दार्थः श्राद्धभोजनपर इतिमते श्राद्धकरणस्यैतस्मादेव वचनात्प्राप्तत्वात्पित्रोः क्षयाहमिति वचनं सपिण्डकत्वविधानार्थं द्रष्टव्यं ॥ यथाचारं व्यवस्था ॥ इति गर्भिणीपतिधर्माः ॥ ॥ **अथ गर्भवृद्ध्युपायः** ॥ वरी विश्वा च गन्धा च मधुकं भृङ्गराट्समं ॥ अजादुग्धेन पानं तु नार्या गर्भस्य वृद्धिकृदिति ॥ वरी शतावरी ॥ विश्वा शुण्ठी ॥ गन्धा अश्वगन्धा ॥ भाषायां आस्कन्द इत्युच्यते ॥ मधुकं ज्येष्ठमधु ॥ भृङ्गराट् भाषायां माकाइति ॥ ॥ **अथ गर्भरक्षोपायः शाङ्खायनगृह्ये**—चतुर्थे मासि गर्भरक्षणं ब्रह्मणाग्निः संविदान इतिस्थालीपाकेन हुत्वाक्षीभ्यांतइतिप्रत्यृचं आज्यलेपेनाङ्गान्यवमृजेदिति ॥ ब्रह्मणाग्निःसंविदानइति राक्षोघ्नं ॥ अथवा स्वशाखोक्तराक्षोघ्नसूक्तग्रहणं ॥ शास्त्रांतरोक्तत्वाल्लौकिकाग्नाविदं कार्यं ॥ इतिगर्भरक्षणोपायः ॥ ॥ **अथ गर्भिण्या गर्भस्रावहरोपायः** ॥ **तत्रेदं गृह्यं**—यदि गर्भः स्रवेदार्द्रेणास्याः पाणिना त्रिरूर्ध्वं नाभेरुन्मार्ष्टि ॥ पराचं त्वा नार्वाचं त्वष्टा बध्नातु बन्धने ॥ स ऋतूनुपवेश्य दशमासो अवीरहेति ॥ यदि गर्भो गर्भिण्याः स्रवेत्तदा तस्या नाभेरूर्ध्वं यो देशो गर्भावस्थितियोग्यः स स्वेन पाणिना पराचंत्वेतिमन्त्रेण त्रिरुन्मार्ष्टि ऊर्ध्वापवर्गं संमृजीतेत्यर्थः ॥ सकृदेव मन्त्रः ॥ यत्रैकस्मिन्द्रव्य इतिसूत्रात् ॥ नैमित्तिकमिदं कर्म ॥

औषधमपि ॥ पीत्वा तण्डुलतोयेन तण्डुलीयजटा ऋतौ ॥ पतद्गर्भा च या नारी स्थिरगर्भा प्रजायते ॥ शर्कराथ च तिलैः समांशकैर्माक्षिकेण सह भक्षितैः स्त्रियः ॥ नास्ति गर्भपतनोद्भवं भयं पापमोक्तुरिव तीर्थसेवनमिति ॥ तण्डुलीयजटा तण्डुलजामूलं ॥ माक्षिकं मधु ॥ इति गर्भस्रावहरोपायः ॥

अथ सीमन्तोन्नयनम् ॥ पुंसवनवत् । प्रथमगर्भेमासेषष्ठेष्टमेवा । पुंसवनवदितिवतिनायदहःपुंसानक्षत्रेणचन्द्रमायुज्येततदहरुपवास्याप्लाव्याहतेवाससीपरिधाप्येत्यतिदिश्यते । पञ्चसुबहिःशालायांविवाहेचूडाकरणउपनयनेकेशान्तेसीमन्तोन्नयनइतिसूत्रादिदंकर्मबहिःशालायांकर्तव्यम् ॥ आचमनं । प्राणायामः । पवित्रधारणं । देशकालौसंकीर्त्यशुभपुण्यतिथौअस्याःममभार्यायाःगर्भावयवाभिवृद्ध्यर्थंक्षेत्रगर्भयोःसंस्कारार्थं प्रतिगर्भसमुद्भवैनोनिबर्हणेनबीजकोत्पत्त्यतिशयद्वाराश्रीपर० सीमन्तोन्नयनाख्यंकर्माहंकरिष्ये ॥ तदङ्गत्वेनस्वस्तिपुण्याहवाचनंअविघ्नपूजनंमण्डपस्थापनंमातृकापूजनंवसोर्द्धारापूजनंआयुष्यमन्त्रजपंनान्दीश्राद्धंचकरिष्ये ॥ तत्रादौनिर्विघ्नतासिध्यर्थंगणपतिपूजनंकरिष्यइतिसंकल्प्यतानि कृत्वा ॥ अत्रपुण्याहवाचनान्तेधाताप्रीयतामित्यूहः॥ ततोबहिःशालायांस्थण्डिलेपञ्चभूसंस्कारपूर्वकंमङ्गलनामाग्नेःस्थापनं॥ ततो दक्षिणतोब्रह्मासनास्तरणाद्याज्यभागान्तेविशेषः ॥ पात्रासादनेआज्यस्थाल्यनन्तरंचरुस्थाली । आज्यानन्तरंतण्डुलाः । उपकल्पनीयानि । तिलाः । मुद्गाः । मृदुपीठं । युग्मान्यौदुम्बरफलान्यपक्वान्येकस्तबकनिबद्धानि ॥ त्रीणिदर्भपिञ्जुलानि । त्र्येणीशलली ॥ वीरतरशङ्कुः आश्वत्थोबैल्वःशारेषीकोवा ॥ पूर्णचात्रं ॥ वीणागाथिनौचेति ॥ अर्थवत्प्रोक्षणं । आज्यस्था-

ल्यामाज्यनिर्वापः । सपवित्रेचरुपात्रेत्रिःप्रक्षालितानांमुद्गानांप्रक्षेपः । चरुपात्रेप्रणीतोदकप्रक्षेपः । आज्यचर्वोःसहाधिश्रयणं । तत्रब्रह्मणोदक्षिणतआज्याधिश्रयणं । यजमानस्यचरोरधिश्रयणमाज्यस्योत्तरतः । उभयोःपर्यग्निकरणं । उदकोपस्पर्शः । अर्धश्रितेचरौयुगपत्तिलतण्डुलप्रक्षेपः । अधिश्रितेचरौस्रुवंप्रतप्येत्याद्याज्यभागान्तं । तिलमुद्गमिश्रꣳस्थालीपाकꣳश्रपयित्वाप्रजापतेर्हुत्वा । ततश्चरुमभिघार्य ॥ ॐप्रजापतयेस्वाहा ॥ इदंप्रजापतयेनमम ॥ ततःस्थालीपाकेनोत्तरार्धात्स्विष्टकृत् ॥ ततोनवाहुत्यादिप्रणीताविमोकान्तं । ततःपश्चादग्नेर्मद्रपीठउपविष्टायांयुग्मेनसटालुग्लप्सेनौदुंबरेणत्रिभिश्चदर्भपिंजुलैस्त्र्येण्याशलल्यावीरतरशङ्कुनापूर्णचात्रेणचसीमन्तमूर्ध्वंविनयतिभूर्भुवःस्वरिति । प्रतिमहाव्याहृतिभिर्वा । ॐभूर्भुवःस्वर्विनयामि ॥ अथवा ॥ ॐभूर्विनयामि ॥ ॐभुवर्विनयामि ॥ ॐस्वर्विनयामि ॥ त्रिवृतमाबध्नाति ॥ ॐअयमूर्जावतोवृक्षऽऊर्ज्जीवफलिनीभव ॥ १ ॥ अथाहवीणागाथिनौराजानꣳसंगायेतां योवाप्यन्योवीरतरइति ।

१ रेणुकारिकायां—आज्यनिर्वपणतत. । तण्डुलान्प्रक्षिपेत्स्थाल्या तिलमुद्गांश्च मिश्रितान् । चरुं सश्रपयेन्मुद्गतिलयोर्न प्रधानता । अन्तराये उपेक्षैव मिश्रणस्योपदेशतइति । एवंककोपाध्यायजयरामहरिहरगदाधरदीक्षितादयश्च । रेणुदीक्षितानांमते—सपवित्रे चरुपात्रे तण्डुलतिलमुद्गानां सहैव प्रक्षेपः ।२ मंद्रपीठ मृदुपीठं । सटालुर्नाम अपक्वफलानि । तेषा ग्लप्सोनाम स्तबक. गुच्छइत्यर्थं । ३ पिञ्जुललक्षणं यज्ञपार्श्वपरिशिष्टे—अनन्तर्गर्भकं साग्रं कौशं द्विदलमेव च । प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् ॥ एतदेव हि पिञ्जुल्या लक्षणं समुदाहृतमिति । ४ त्रिषु स्थानेषु श्वेता त्र्येणी शलल्याख्यपक्षकण्टकः । ५ सूत्रेणपूर्णं चात्रं नाम सूत्रकर्तनसाधनभूतो लोहकीलस्तर्कुः । चाती । ६ सीमन्त. कथ्यते स्त्रीणा केशमध्ये तु पद्धतिरिति गदाधरभाष्ये । ७ त्रिभिर्वर्त्यते ग्रथ्यते इति त्रिवृद्वेणी तांप्रति तत्रैवेत्यर्थः । औदुंबरादिपञ्चक आबध्नाति ।

वीणागाथिनौराजानꣳसंगायेतांइतिप्रैषः । वीणागाथिनौअन्यंवीरतरꣳसंगायेतांइतिवाप्रैषः । तौच तं गायतः ॥ नियुक्तामप्येकेगाथामुपोदाहरन्ति । अस्मिन्पक्षे वीणागाथिनौसोमꣳराजानꣳसंगायेतां इतिप्रैषः । तौचसोमंराजानंगायतः । सचगाथामन्त्रः ॥ ॐसोमऽएवनोराजेमामानुषीःप्रजाः ॥ अविमुक्तचक्रऽआसीरंस्तीरेतुभ्यं ॥ १ ॥ सीमन्तिनीयांनदीमुपावसिताभवतितस्यानामगृह्णाति गङ्गा यमुना इत्यादिप्रथमान्तं नियुक्तामप्येकइत्यत्रापिःसमुच्चयार्थः । समुच्चयपक्षे । वीणागाथिनौराजानꣳसोमꣳराजानंचसंगायेतामितिप्रैषः । अथवा । वीणागाथिनौअन्यं वीरतरꣳसोमꣳराजानंचसंगायेतामितिप्रैषः ॥ तौचोभयंगायतः ॥ ततःपतिपुत्रवतीभिर्वृद्धसुवासिनीभिर्यथाकुलाचारंनीराजनादिमाङ्गलिकंकार्यं । ततःकृतस्यकर्मणःसांगतासिध्यर्थंस्मृत्युक्तान्दशब्राह्मणान्भोजयिष्ये ॥ तेनश्रीकर्माङ्गदेवताःप्रीयन्तां ॥ ब्राह्मणान्गन्धताम्बूलादिभिःसंपूज्यतेभ्यश्चदक्षिणांदत्वातैराशिषोगृहीत्वामातृणांविसर्जनं अग्निंविसृज्य यस्यस्मृत्येत्यादि ॥ इतिसीमन्तोन्नयनम् ॥ अकृतसीमंतायाःप्रसवेसत्यव्रतः—स्त्रीयदाऽकृतसीमंताप्रसवेत्तुकथंचन । गृहीतपुत्राविधिवत्पुनःसंस्कारमर्हति । इति । अत्रभोजनेप्रायश्चित्तमुक्तंपराशरमाधवीयेधौम्येन—ब्रह्मौदनेचसोमेचसीमंतोन्नयनेतथा । जातकर्मनवश्राद्धे भुक्त्वाचांद्रायणंचरेत् । इदंचकर्मांगब्राह्मणभोजनविषयं नत्विष्टकुटुंबादिभोजनविषयमितिसुरारिमिश्राः ॥

अथ शीघ्रप्रसवोपायः ॥ ग्रन्थान्तरे—हिमवत्युत्तरे पार्श्वे शबरी नाम यक्षिणी ॥ तस्या नूपुरशब्देन विशल्या स्यात्तु गर्भिणीस्वाहा ॥ इति मन्त्रेणैकविंशतिदूर्वाङ्कुरैरेकपल तिलतैलं प्रदक्षिणमावर्तयन्नष्टशतं मन्त्रं जपित्वा तत्तैलं किंचित्पाययेच्छेषमुदरे लेपयेदिति ॥ ॥ अथ सुख-

प्रसवयन्त्रमप्युक्तं यन्त्रप्रकाशे—गजाग्निवेदा उडुरादशराङ्का रसर्पिपक्षा इति हि क्रमेण ॥ लिखेत्प्रसूतेः समये गृहेदं सुखेन नार्यः प्रसवन्ति शीघ्रमिति ॥ अस्यार्थः—गर्भिण्या नार्या दृष्टिगोचरे देशे समचतुरस्रं संसाध्य तस्य समान्नव कोष्टकान्कृत्वा ईशानोत्तरवायुकोष्टेषु अष्टत्रिचतुरोऽङ्कान्क्रमेण लिखित्वा पूर्वमध्यमपश्चिमकोष्टेषु चैकपञ्चमनवाङ्कान्क्रमेण विलिख्य आग्नेयदक्षिणनैर्ऋतकोष्टेषुषट्सप्तद्वावित्यङ्कान्क्रमेण विलिखेत् ॥ इदं यन्त्रं प्रसूतिसमये सूतिकागृहे लेखनीयं एतद्दर्शनेन सुखेन शीघ्रं नार्यः प्रसवन्ति ॥ यन्त्रं यथा ॥

पूर्व

| | | |
|---|---|---|
| ८ | १ | ६ |
| ३ | ५ | ७ |
| ४ | ९ | २ |

अथ सोष्यन्तीकर्म ॥ सोष्यन्तीमद्भिरभ्युक्षत्येजतुदशमास्यइति प्राग्यस्यैतइति । सोष्यन्तींप्रसवशूलवतीं । ॐएजंतुदशमास्योगर्भोजरायुंणासुह ॥ यथायम्वायुरेजंतियथांसमुद्रऽएजंति ॥ एवायन्दर्शमास्योऽअस्रंज्जरायुंणासुह ॥ १ ॥ इति ॥ अथाऽवरावपतनंजपति । अवरेतिजरायुविशेषः । अभिधानात् । तस्याधःपतनेपितुर्जपः । ॐअवैतुपृश्निशेवलᳪशुनेजरायवत्तवे ॥ नैवमाᳪसेनपीवरिनकस्मिँश्चनायतमवजरायुपद्यताम् ॥ १ ॥ इतिसोष्यंतीकर्म ॥

अथ जातकर्मनिर्णयः ॥ धर्मनौकायाम्—श्रुत्वा पुत्रं जातमात्रं सचैलं स्नात्वा कुर्याज्जातकर्मास्य तातः ॥ नालच्छेदात्पूर्वमेवाथवा स्यान्नाम्ना युक्त पुत्रिकाया अपीदम् ॥ रात्रौ शावाशौचके जात्यशौचे कार्यं चैतन्मातृपूजादियुक्तं ॥ श्राद्धं हेम्ना वाऽऽमतो वा प्रकुर्याद्दाता शुद्धो नास्ति दोषो द्विजानाम् ॥ केचिच्छावाशौचके नैव कार्यमित्याहुस्तत्तत्समाप्तौ विधेयम् ॥ हस्तस्वातीत्र्युत्तरारोहिणीषु चित्रापुष्येन्द्वश्विनीरेवतीषु ॥ पुनर्वसौ चाभिजिति प्रकुर्याच्छ्रवस्त्रये मैत्रयुते किलैतत् ॥ सर्वत्र कालात्यय एव चैतन्मुख्ये तु काले नहि कोपि दोषः ॥ मैत्रमनुराधा ॥ मलास्तयाम्यायनबालवृद्धि न वर्जनीयं किल मुख्यकाले ॥ अतिक्रमे वर्जनमेव युक्तं शुभे हि काले विद-

धीत सर्वं ॥ ये जन्मनि स्युः किल दुष्टयोगास्तच्छान्तयश्चाकरतो विचार्याः ॥ विस्तारभीत्या इह नोदितास्ता इति ॥ गदाधरभाष्यादावप्येवम् ॥ दुष्टर्क्षादिजननशान्तयोप्यग्रे संगृह्यन्ते ततोऽवगन्तव्याः ॥

अथजातकर्म ॥ पुत्रमुखंदृष्ट्वासचैलंस्नायात् ॥ तथाचरेणुः—जातेपुत्रेसचैलंस्यात्स्नानंनैमित्तिकंपितुः ॥ तच्चशीतेन रात्रौचेदेवंजाबालिरब्रवीत् ॥ दिवाहृतेनतोयेनस्नायात्स्वर्णयुतेनतु ॥ इतिसांख्यायनःप्राहरात्रावनलसंनिधौ ॥ इति ॥ आचमनं ॥ प्राणायामः ॥ पवित्रधारणं ॥ देशकालौसंकीर्त्यशुभपुण्यतिथौममास्यकुमारस्यगर्भाम्बुपानजनितसकलदोषनिबर्हणायुर्मेधाभिवृद्धिबीजगर्भसमुद्भवैनोनिबर्हणद्वाराश्रीपरमेश्वरप्रीत्यर्थंजातकर्माहंकरिष्ये ॥ तदङ्गत्वेनस्वस्तिपुण्याहवाचनंमातृकापूजनं वसोर्धारापूजनंआयुष्यमन्त्रजपंनान्दीश्राद्धंचाहंकरिष्ये । तत्रादौनिर्विघ्नतासिद्ध्यर्थंगणपतिपू० ॥ अत्ररेणुः ॥ अच्छिन्ननाभ्यांकर्तव्यंश्राद्धंस्नानादनंतरं ॥ आमद्रव्येणतत्कार्यंवचनात्तुप्रजापतेः ॥ हिरण्येनभवेच्छ्राद्धमामद्रव्यं गृहेनचेत् । इतिव्यासवचःप्रोक्तंपक्वान्नंसनिषेधति ॥ अत्रामंद्विगुणंभोज्यंहिरण्यंचचतुर्गुणमिति ॥ तानिकृत्वा ॥ जातस्यकुमारस्याच्छिन्नायांनाड्यांमेधाजननायुष्येकरोति ॥ तत्रादौमेधाजननं ॥ अनामिकयासुवर्णांतर्हितयामधुघृतेप्राशयति घृतंवा । कृत्वामधुघृतेपात्रएकस्मिंस्तैजसादिकइतिरेणुः । ॐभूस्त्वयिदधामिभुवस्त्वयिदधामिस्वस्त्वयिदधामिभूर्भुवःस्वःसर्वंत्वयिदधामि ॥ इतिमन्त्रेणसकृत् ॥ प्राशनंप्रतिवाक्यंस्यादपरेचैवमब्रुवन्निति रेणुः । कर्कोप्येवं । अस्मिन्पक्षे ॥ ॐभूस्त्वयिदधामि ॥ ॐभुवस्त्वयिदधामि ॥ ॐस्वस्त्वयिदधामि ॥ ॐभूर्भुवःस्वःसर्वंत्वयिदधामीति ॥ इतिमेधाजन-

नम् ॥ इदंनालच्छेदनात्प्राङ्नक्तंचेत्कालांतरेनभवत्येव । तस्मात्कुमारंजातंघृतंवैवाग्रेप्रतिलेहयन्तिस्तनंवानुपधापयन्तीति-श्रुतेरितिसर्वेभाष्यकाराः ॥ आयुष्यकरणंतुकालान्तरेपिभवत्येव ॥ अथास्यायुष्यंकरोति ॥ नाभ्यांदक्षिणेवाकर्णेजपति । ॐअग्निरायुष्मान्त्सवनस्पतिभिरायुष्माँस्तेनत्वायुषायुष्मन्तंकरोमि ॥ १ ॥ ॐसोमऽआयुष्मान्त्सऽओषधीभिरायुष्माँ-स्तेनत्वायुषायुष्मन्तंकरोमि ॥२॥ ॐब्रह्मायुष्मत्तद्ब्राह्मणैरायुष्मत्तेनत्वायुषायुष्मन्तंकरोमि ॥ ३ ॥ ॐदेवाऽआयुष्मन्तस्ते-मृतेनायुष्मन्तस्तेनत्वायुषायुष्मन्तंकरोमि ॥ ४ ॥ ॐऋषयऽआयुष्मन्तस्तेव्रतैरायुष्मन्तस्तेनत्वायुषायुष्मन्तंकरोमि ॥ ५ ॥ ॐपितरऽआयुष्मन्तस्तेस्वधाभिरायुष्मन्तस्तेनत्वायुषायुष्मन्तंकरोमि ॥ ६ ॥ ॐयज्ञऽआयुष्मान्त्सदक्षिणाभिरायुष्माँस्ते-नत्वायुषायुष्मन्तंकरोमि ॥ ७ ॥ ॐसमुद्रऽआयुष्मान्त्सस्रवन्तीभिरायुष्माँस्तेनत्वायुषायुष्मन्तंकरोमि ॥ ८ ॥ इतित्रिः ॥ त्रिस्त्र्यायुषमितिच ॥ ॐत्र्यायुषंजमदग्नेः कश्यपस्यत्र्यायुषम् ॥ यद्देवेषुत्र्यायुषन्तन्नोऽअस्तुत्र्यायुषम् ॥ इत्यायुष्यम् ॥ अथवात्सप्रांभिमर्शनम् ॥ सयदिकामयेतसर्वमायुरियादितिवात्सप्रेणैनमभिमृशेत् ॥ दिवस्परीत्येतस्यानुवाकस्योत्तमामृचं परिशिनष्टि ॥ ॐदिवस्परिप्रथमञ्जज्ञेऽअग्निरस्मद्द्वितीयम्परिजातवेदाः ॥ तृतीयमप्सुनृमणाऽअजस्रमिन्धानऽएनञ्जरते-

१ अधिकरणसप्तम्यभावात्समीपसप्तमीयगङ्गायाघोषइतिवत् । तेननाभिसमीपेदक्षिणकर्णसमीपेवेत्यर्थः । २ अग्निरायुष्मानित्यारभ्यसमुद्रआयुष्मान्सस्रवंतीभि-रायुष्मास्तेनत्वायुषायुष्मन्तकरोमीत्यन्तएकएवमन्त्रः मन्त्रावसानबोधकइतिशब्दकरणात् इतिरेणुहरिहरौ । ३ इदमभिमर्शनसर्वशरीरेकार्यम् । ४ एतेषामेकादश-मन्त्राणावात्सप्रसञ्ज्ञा ।

स्वाधीः ॥ १ ॥ विद्मातेऽअग्नेत्रेधात्रयाणिविद्माते धामविभृतापुरुत्रा ॥ विद्मातेनामपरमङ्गुहायद्विद्मातमुत्सन्यतऽआज-
गन्थ ॥ २ ॥ समुद्रेत्वानृमणाऽअप्स्वन्तर्नृचक्षाऽईधेदिवोऽअग्नऽऊधन् ॥ तृतीयेत्वारजसितस्थिवाᳪ सम्पामुपस्थेमहि-
षाअवर्धन् ॥ ३ ॥ अक्रन्ददग्निस्तनयन्निवद्यौः क्षामारेरिहद्वीरुधᳪ समञ्जन् ॥ सद्योजज्ञानोविहीमिद्धोऽअख्यदारोदसी-
भानुनाभात्यन्तः ॥ ४ ॥ श्रीणामुदारोधरुणोरयीणाम्मनीषाणाम्प्रार्पणᳪ सोमगोपाः ॥ वसुः सूनुः सहसोऽअप्सुराजा-
विभात्यग्रऽउषसामिधानः ॥ ५ ॥ विश्वस्यकेतुर्भुवनस्यगर्भऽआरोदसीऽअपृणाज्जायमानः ॥ वीडुञ्चिदद्रिमभिनत्परा-
यञ्जनायदग्निमयजन्तपञ्च ॥ ६ ॥ उशिक्पावकोऽअरतिः सुमेधामर्त्येष्वग्निरमृतोनिधायि ॥ इयर्तिधूममरुषम्भरिभ्रदुच्छु-
क्रेणशोचिषाद्यामिनक्षन् ॥ ७ ॥ दृशानोरुक्मऽउर्व्याव्यद्यौद्दुर्मर्षमायुः श्रियेरुचानः ॥ अग्निरमृतोऽअभवद्वयोभि-
र्यदेनन्द्यौरजनयत्सुरेताः ॥ ८ ॥ यस्तेऽअद्यकृणवद्भद्रशोचेपूपन्देवघृतवन्तमग्ने ॥ प्रतन्नयप्रतरंवस्योऽअच्छाभिसुम्नन्देव-
भक्तंयविष्ठ ॥ ९ ॥ आतम्भजसौश्रवसेष्वग्नऽउक्थऽउक्थऽआभजशस्यमाने ॥ प्रियः सूर्येप्रियोऽअग्नाभवात्युज्जातेन-
भिनददुज्जनित्वैः ॥ १० ॥ त्वामग्नेयजमानाऽअनुद्यून्विश्वावसुदधिरेवार्याणि ॥ त्वयासहद्रविणमिच्छमानाव्रजङ्गोम-
न्तमुशिजोविवव्रुः ॥ ११ ॥ इतिवात्सप्राभिमर्शनम् ॥ अथानुप्राणनम् ॥ प्रतिदिशंपञ्चब्राह्मणानवस्थाप्यब्रूयादिममनु-
प्राणितेति । पूर्वोब्रूयात्प्राणेति । व्यानेतिदक्षिणः । अपानेत्यपरः । उदानेत्युत्तरः । समानेतिपञ्चमउपरिष्टादवेक्ष्यमाणो-

ब्रूयात् ॥ ब्राह्मणान्कुमाराभिमुखान् अवस्थाप्येत्यर्थः । पञ्चमस्तुनैर्ऋत्यामितिरेणुः । मध्यइतिहरिहरगदाधरौ । ॐइममनुप्राणित । प्राण । व्यान । अपान । उदान । समान । स्वयंवाकुर्यादनुपरिक्रामममविद्यमानेषु । अनुपरिक्रामामितिणमुलंतं । तेनतांतांदिशंपरिक्रम्यपरिक्रम्येत्यर्थः । अस्मिन्पक्षेइममनुप्राणितेतिप्रैषाभावः । इत्यनुप्राणनम् ॥ अथकुमारजन्मभूम्यभिमर्शनम् ॥ सयस्मिन्देशेजातोभवतितमभिमन्त्रयते ॥ ॐवेदतेभूमिर्हृदयन्दिविचन्द्रमसिश्रितं ॥ वेदाहन्तन्मान्तद्विद्यात्पश्येमशरदःशतञ्जीवेमशरदःशतꣳशृणुयामशरदःशतम् ॥ १ ॥ अथकुमाराभिमर्शनम्[1] ॥ ॐअश्माभवपरशुर्भवहिरण्यमस्तृतम्भव ॥ आत्मावैपुत्रनामासिसजीवशरदःशतम् ॥ १ ॥ अथास्यमातरमभिमन्त्रयते[3] ॥ ॐइडासिमैत्रावरुणीवीरेवीरमजीजनथाः ॥ सात्वम्वीरवतीभवयास्मान्वीरवतोकरत् ॥ १ ॥ इति ॥ अथास्यैदक्षिणꣳस्तनंप्रक्षाल्यप्रयच्छतीमꣳस्तनमिति ॥ ॐइमꣳस्तनमूर्जस्वंतंधयापांप्रपीनमग्नेसरिरस्यमध्ये ॥ उत्संजुषस्वमधुमंतमर्वत्समुद्रियꣳसदनमाविशस्व ॥ १ ॥

१ इदमभिमर्शनंशिरसीतिकारिकाकारः । हृदयइतिजयरामः । सर्वशरीरइतिहरिहरः । २ इदंजातकर्मदैवान्मानुषाद्वाप्रतिषेधादतीतकालंचेत्तदाअथास्यायुष्यंकरोतीत्यादिसजीवशरद शतमित्यतभवत्येव । तथाच वृद्धसमति.—अनुप्राणनवात्सप्राभिमर्शनानुमन्त्रणे । कालान्तरेपिकुर्वीतआयुष्यकरणंतथेति । तथाचरेणुः—स्वकालेनकृतजातकर्मदमानुषादपि । दैवादतीलकालंचेत्तदायुष्यादिकभवेत् ॥ अश्माभवेतिमन्त्रातमित्युपाध्यायसंमतिः । कार्यस्वकालतोमेधाजननंनान्यकालतः । कुमारजातमित्येषाभाष्येश्रुतिरुदाहृतेति । ३ अथास्यमातरचेडासीतिअभिमन्त्रयेत् । आसीन प्राङ्मुखीसस्थांवीक्ष्यतांसंपुटाञ्जलि. । उपेक्षितमुपाध्यायैरिदंमात्रभिमन्त्रणं । श्रुतिवाक्यादलेखीहस्वीकृतंचेतरैर्यतइति ।

यस्तेस्तनइत्युत्तरमेताभ्याम् ॥ ॐयस्तेस्तनःशशयोयोमयोभूर्योरत्नधावसुविद्यःसुदत्रः ॥ येनविश्वापुष्यसिवार्याणिस-रस्वतितमिहधातवेकः ॥ १ ॥ ॐइमᳫंस्तनमूर्ज० ॥ इतिमात्रभिमन्त्रणं ॥ अत्रदद्यात्सुवर्णवाभूमिंगांतुरगंतथा । छत्रंछागंवस्त्रमाल्यंशयनंचासनंगृहं । धान्यंगुडंतिलान्सर्पिरन्यच्चास्तिगृहेवसु । आयान्तिपितरोदेवाजातेपुत्रेगृहंप्रति । तस्मात्पुण्यमहःप्रोक्तंभारतेचादिपर्वणि । दानंप्रतिग्रहंनाभ्यामच्छिन्नायांतदहिवा । कुर्यादित्याहतुःशङ्खमनू इति ॥ ततो-नालच्छेदनम् ॥ अष्टाङ्गुलंपरित्यज्यनालंछिन्द्यात्क्षुरादिनेतिरेणुः ॥ उदपात्रᳫंशिरस्तोनिदधाति ॥ सूतिकायाःकुमार-स्यवाशिरःप्रदेशेखट्वाधस्ताद्भूमौतत्पात्रंदशाहंतिष्ठति ॥ ॐआपोदेवेषुजाग्रथयथादेवेषुजाग्रथ ॥ एवमस्याᳫंसूतिकायाᳫंस-पुत्रिकायांजाग्रथ ॥ १ ॥ अथसूतिकाग्निहोमः । पञ्चभूसंस्कारपूर्वकंद्वारदेशेसूतिकाग्निमुपसमाधाय । ओत्थानात्संधिवे-लयोः फलीकरणमिश्रान्सर्षपानग्नावावपति शण्डामर्केत्यादिनश्यतादितःस्वाहेति ॥ १ ॥ ॐशण्डामर्काउपवीरःशौण्डिके-यउलूखलः ॥ मलिम्लुचोद्रोणासश्च्यवनोनश्यतादितःस्वाहा ॥ इदमग्नयेनमम ॥ अथवा ॥ इदंशण्डायमर्कायउपवीरायशौ-ण्डिकेयायउलूखलायमलिम्लुचायद्रोणासायच्यवनायचनमम ॥१॥ ॐआलिखन्ननिमिषःकिम्वदन्तउपश्रुतिः ॥ हर्यक्षः-कुम्भीशत्रुःपात्रपाणिर्नृमणिर्हन्त्रीमुखः ॥ सर्षपारुणश्च्यवनोनश्यतादितःस्वाहा ॥ इदमग्नयेनमम ॥ अथवा । इदंआलिखतेअ-

---

१ यस्तेस्तनः इमᳫंस्तनमितिहरिहरकारिकाकारगंगाधरा. । आदौइमᳫंस्तनंपश्चाद्यस्तेस्तनइतिजयरामः । २ कालातरइदंकर्मनभवेच्छुतिवाक्यत. । इतिरेणुकर्कादय. ।
३ फलीकरणास्तंडुलकणाः । ४ आवपनोपदेशात् दक्षिणतोब्रह्मासनमास्तीर्येत्यादिकाहोमेतिकर्तव्यतानभवति ।

निमिषायकिंवदन्त्यः उपश्रुतयेहर्यक्षायकुम्भिनेशत्रवे पात्रपाणये नृमणये हन्त्रीमुखाय सर्षपारुणाय च्यवनाय च नमम ॥२॥
इदंकिंवदन्त्योनममइत्युभयत्रवात्यागः[1] ॥ संध्ययोरुभयोर्द्वेद्वेनित्यहोमादनन्तरं । ओत्थानो[2]दन्वहंकार्यंसंध्ययोःस्थापनादिकं ।
इतिरेणुः ॥ इतिसूतिकाग्निहोमः ॥ इदमपिकालान्तरेनभवतिनियतकालत्वात् । दशब्राह्मणभोजनसंकल्पः ॥ आशौचांते-
ब्राह्मणभोजनं ॥ भूयसीदानं आशीर्ग्रहणं मातृणांविसर्जनं ॥ अत्रसाग्निकस्त्रियादिसूतिकयालौकिकाग्निपक्कमेवपर्वण्यपि-
भोक्तव्यं । तथाचरणुः—सूतिसंबंधिपत्न्यादिकर्मतल्लौकिकेनले । पर्वण्यपिचतत्पक्कमश्नीयान्नैवदोषभाक् ॥ इतिजातकर्म ॥
अथनैमित्तिकविधानम् ॥ यदिकुमारउपद्रवेत्तंजालेनै[3]प्रच्छाद्योत्तरीयेणवापितांकआधायजपति ॥ ॐकूर्कुरःसुकूर्कुरःकूर्कु-
रोबालबन्धनः ॥ चेच्चेच्छुनकसृजनमस्तेऽअस्तुसीसरोलपेतापह्वर ॥ तत्सत्यंयत्तेदेवावरमदद्ःसत्वंकुमारमेववावृणीथाः ॥ चे-
च्चेच्छुनकसृजनमस्तेऽअस्तुसीसरोलपेतापह्वर ॥ तत्सत्यंयत्तेसरमामातासीसरःपिताश्यामशबलौभ्रातरौ ॥ चेच्चेच्छुनकसृज-
नमस्तेऽअस्तुसीसरोलपेतापह्वर ॥ १ ॥ अथाभिमृशतिकुमारं ॥ ॐननामयतिनरुदतिनहृष्यतिनग्लायतियत्रवयंवदामो-
यत्रचाभिमृशामः ॥ १ ॥ इतिनैमित्तिकविधानं ॥ कुमार्याश्चैतज्जातकर्मामन्त्रकंकार्यं ॥ रात्रौसंध्यायांग्रहणेजाताशौचा-
न्तरमध्येपीदंकार्यं ॥ मृताशौचमध्येजातश्चेत्तदैवाशौचान्तेवाकार्यं ॥ पितरिग्रामान्तरगतेपिपितृव्यादिगोत्रजोज्येष्ठक्रमे-
णेदंकुर्यात् ॥ इतिजातकर्म ॥

---

१ अनयोर्देवताग्नि स्यान्मंत्रोक्ता कैश्चिदीरिता' इतिरेणुः । २ ओत्थानात्दशदिनावधीत्यर्थः । ३ तप्रच्छाद्योत्तरीयेणमातस्यजालेनवाखके । अंकआधायजपतिमत्रं-
कूर्कुरइत्यसुम् ॥ रेणुः ।

अथ बालस्यदुष्टदृष्टिदोषपरिहारः ॥ ॥ वासुदेवो जगन्नाथः पूतनातर्जनो हरिः ॥ रक्षति त्वरितं बालं मुञ्च मुञ्च कुमारकं ॥




कृष्ण रक्ष शिशुं शङ्खमधुकैटभमर्दन ॥ प्रातःसंगवमध्याह्नसायाह्नेषु च संध्ययोः ॥ महानिशि सदा रक्ष कंसारिष्टनिषूदन ॥ यद्गोरजःपिशाचांश्च ग्रहान्मातृग्रहानपि ॥ बालग्रहान्विशेषेण च्छिन्धिच्छिन्धि महाभयान् ॥ त्राहित्राहि हरे नित्यं त्वद्रक्षाभूषितं शिशुं ॥ इति भस्माभिमन्त्र्यैव भूषयेत्तेन भस्मना ॥ शिशोर्ललाटाद्यङ्गेषु रक्षां कुर्याद्यथाविधि ॥ इति **प्रयोगसागरे** ॥ ॥ रक्षरक्ष महादेव नीलग्रीव जटाधर ॥ ग्रहैस्तु सहितो रक्ष मुञ्चमुञ्च कुमारकं ॥ अमुं मन्त्रं भूर्जपत्रे विलिख्य तत्पत्रं दक्षिणभुजे बध्नीयादिति **यन्त्रोद्धारे** ॥ ॥ **बालरोदनपरिहारार्थं यन्त्रं मयूखे**—षडस्रमध्ये ह्रींकारस्तन्मध्ये शिशोर्नाम विलिख्य षट्कोणेषु ॐलुलुवःस्वाहेतिमन्त्रषडक्षराणि विलिख्य तद्बहिर्नेमिवद्वृत्तद्वयं विलिख्य तद्बहिरधोमुखैरर्धचन्द्रैरावेष्ट्य पञ्चोपचारैः संपूज्य बालहस्ते बध्नीयादिति ॥

**अथ षष्ठीपूजनं** ॥ ॥ **तद्यथा**—विघ्नेशस्य जन्मदानां जीवन्त्याश्च प्रपूजनं ॥ जातादिपञ्चमे षष्ठे निशीथे बलिमाहरेत् ॥ १ ॥ द्वारतृतीयभागे तु पुत्तलैश्चापि कज्जलैः ॥ दक्षिणोत्तरयोर्देशे लेख्य चत्वारि पूजयेत् ॥२॥ द्वारस्योर्ध्वतृतीयभागइत्यर्थः ॥ अर्चयेद्दशदिक्पालान्गीतवादित्रनिःस्वनैः ॥ कृत्वा जागरणं रात्रौ गीतैश्च शान्तिपाठकैः ॥ ३ ॥ दशाहं सूतिकागारमायुधैश्च विशेषतः ॥ वह्निः सधूमः सलिलपूर्णकुंभैः प्रदीपकैः ॥ ४ ॥ मुसलादि तथा शस्त्रैर्वर्णकैश्चित्रितेन च ॥ विभूतिरक्षां कुर्वीत सर्षपान्विकिरेत्तथेति ॥ ५ ॥

**अथ षष्ठीपूजा** ॥ **पञ्चमेषष्ठेवादिनेरात्रौकार्या** ॥ **आचमनं । प्राणायामः । पवित्रधारणं** ॥ **शुभपुण्यतिथौ अनयोःसू-**

तिकाबालकयोरायुरारोग्याभिवृद्ध्यर्थंसकलारिष्टशान्तिद्वाराश्रीपरमेश्वरप्रीत्यर्थंविघ्नेशस्यजन्मदानांजीवन्त्यपरनाम्न्याःषष्ठीदे-
व्याःशस्त्रगर्भाभगवत्याश्चपूजनंकरिष्ये ॥ ॥ एतत्प्रतिमाःपीठादौक्षतपुञ्जेपुपूगीफलेपुवाविनिवेश्याः ॥ जीवन्तिकादि-
नूतनप्रतिमासुप्राणप्रतिष्ठादिकार्यं ॥ सर्वासामेकतन्त्रेणषोडशोपचारैःपूजनं ॥ तद्यथा ॥ आयाहिवरदेदेविषष्ठीदेवीतिवि-
श्रुते ॥ शक्तिभिःसहपुत्रंमेरक्षरक्षवरानने ॥ १ ॥ मनोजूतिरितिप्रतिष्ठा ॥ अथध्यानं ॥ देवीमञ्जनसंकाशांचन्द्रार्धकृत-
शेखरां ॥ सिंहारूढांजगद्धात्रींकौमारींभक्तवत्सलां ॥ खड्गंखेटंचबिभ्राणामभयंवरदांतथा ॥ तारकाहारभूषाढ्यांचिन्तया-
मिनवांशुकां ॥ १ ॥ ॐश्रीश्चंतेलक्ष्मी० ॥ १ ॥ ॐभूर्भुवःस्वःविघ्नेशजन्मदाषष्ठीदेवीजीवंतिकाभ्योनमः ॥ ध्यायामि ॥
एवंसर्वत्र ॥ आगच्छवरदेदेविस्थानेचात्रस्थिराभव ॥ आराधयामिभक्त्यात्वांरक्षबालंचसूतिकां ॥१॥ ॐहिरण्यवर्णां०ॐभू०
विघ्नेशाय० विघ्नेशंआ० ॥ जन्मदाभ्योनमः जन्मदाआ० ॥ जीवन्त्यपरनाम्न्यैषष्ठीदेव्यैन० जीवन्त्यपरनाम्नींषष्ठीदेवींआ० ॥
ॐशस्त्रगर्भाभगवत्यै० शस्त्रगर्भांभगवतींआ० ॥ संध्यारागनिभंरक्तमासनंस्वर्णनिर्मितं ॥ गृहाणसुमुखीभूत्वारक्षबालं-
चसूतिकां ॥ ॐतांमऽआवह० ॥ ॐभू० विघ्ने० ॥ आसनंस० ॥ गङ्गाजलंसमानीतंसुवर्णकलशेस्थितं ॥ पाद्यंगृहाणमेबालं-
सूतिकां चैवपालय ॥ ॐअश्वपूर्वां० ॐभू० वि० पाद्यंस० ॥ अक्षतापुष्पगन्धाढ्यमर्घ्यार्थंनिर्मलंजलं ॥ गृहाणपाहिमेपुत्रं-
सूतिकांभयहारिणि ॥ ॐकांसोस्मितां० ॐभू० वि० अर्घ्यंस० ॥ गृहाणाचमनीयंतुकर्पूरैलादिवासितं ॥ सबालांसूतिकां

पाहिजगन्मातर्नमोस्तुते ॥ ॐचन्द्राम्प्रभासां० ॐभू० वि० आचमनंस० ॥ पंचामृतंगृहाणेदंपयोदधिघृतंमधु ॥ शर्करासहितंदेविपाहिबालंसमातृकं ॥ घृतेनसीतामधुना० ॐभू० वि० पंचामृतस्नानंस० ॥ दुकूलादिमयंदेविनानारत्नैःपरिष्कृतं ॥ परिधत्स्वामलंवस्त्रंरक्षमेसुतसूतिके ॥ ॐउपैतुमां० ॐभू० वि० वस्त्रंस० ॥ नानारत्नमयंदिव्यमुक्ताहारमयंशुभं ॥ गृहाणकालरात्रित्वंरक्षमेसुतसूतिके ॥ ॐक्षुत्पिपासा० ॐभू० वि० अलंकारान्समर्पयामि ॥ कर्पूरागरुकस्तूरीकक्कोलादिसमन्वितं ॥ चन्दनंस्वीकुरुत्वंमेरक्षबालंचसूतिकां ॥ ॐगन्धद्वारां० ॐभू० वि० चन्दनंस० ॥ सुमाल्यानिसुगन्धीनिमालत्यादीनिवैप्रभो ॥ गृहाणवरदेदेविरक्षबालंचसूतिकां ॥ ॐमनसःकाम० ॐ भू० वि० पुष्पंस० ॥ हरिद्राकुङ्कुमादीनिनानापरिमलानिच ॥ गृहाणकालरात्रित्वंरक्षबालंचसूतिकां ॥ ॐअहिंरिवभोगैः० ॥ ॐभू० वि० परिमलद्रव्यंसम० ॥ वनस्पत्युद्भवंधूपंदिव्यंस्वीकुरुदेविमे ॥ प्रसीदसुमुखीभूत्वारक्षमेसुतसूतिके ॥ ॐकर्दमेनप्रजा० ॐभू० वि० धूपंस० ॥ आज्यंवर्तिकृतंदेविज्योतिषांज्योतिपंतथा ॥ जीवन्तिकेगृहाणेदंरक्षमेसुतसूतिके ॥ ॐआपःस्रजन्तु० ॥ ॐभू० वि० दीपंस० ॥ नैवेद्यंलेह्यपेयादिषड्रसैश्चसमन्वितं ॥ भुङ्क्ष्वदेविगणैर्युक्तारक्षमेसुतसूतिके ॥१॥ ॐआर्द्रांयःकरिणीं० ॐभू० वि० नैवेद्यंस० ॥ इदंफलंमयादेविस्थापितंपुरतस्तव ॥ तेनमेपरितुष्टात्वंरक्षबालंचसूतिकां ॥ ॐयाःफलिनी० ॥ ॐभू० वि० फलंस० ॥ नागवल्लीदलंरम्यंपूगीफलसमन्वितं ॥ भद्रेगृहाणताम्बूलंपाहिमेसुतसूतिके ॥ ॐआर्द्राम्पुष्करिणीं० ॥

ॐभू० वि० ताम्बूलंस० ॥ हिरण्यगर्भग० प्रयच्छमे ॥ ॐतांमआवहजातवे० नहं ॥ ॐभू० वि० दक्षिणांस० ॥ कदली-
गर्भसंभूतंकर्पूरंचप्रदीपितं ॥ आरार्तिकमहंकुर्वेरक्षबालंचसूतिकां ॥ ॐइदꣳहविः० ॥ ॐभू० वि० कर्पूरनीराजनंस० ॥
नानासुगन्धपुष्पाणियथाकालोद्भवानिच ॥ पुष्पाञ्जलिंगृहाणेमंरक्षमेसुतसूतिके ॥ ॐश्रीश्चतेलक्ष्मी०॥ ॐभू० वि० पुष्पा-
ञ्जलिंस० ॥ यानिकानि० ससास्येतिप्रदक्षिणां० ॥ अथप्रार्थना ॥ षष्ठिदेविनमस्तुभ्यंसूतिकागृहशालिनि ॥ पूजितापर-
याभक्त्यादीर्घमायुःप्रयच्छमे ॥ १ ॥ जननीजन्मसौख्यानांवर्धिनीधनसंपदां ॥ साधनीसर्वभूतानांजन्मदेत्वांनतावयं
॥ २ ॥ गौरीपुत्रोयथास्कन्दःशिशुत्वेरक्षितःपुरा ॥ तथाममाप्ययंबालंषष्ठिकेरक्षतेनमः ॥ ३ ॥ यथादाशरथीरामश्चतुर्मूर्ति-
र्भवप्रदे ॥ त्वयासंरक्षितस्तद्वद्बालंपाहिशुभप्रदे ॥ ४ ॥ विष्णुनाभिस्थितोब्रह्मादैत्येभ्योरक्षितस्त्वया ॥ तथामेबालकंरक्षयो-
गनिद्रेनमोस्तुते ॥ ५ ॥ रक्षितौपूतनादिभ्योनन्दगोपसुतौयथा ॥ तथामेबालकंपाहिदुर्गेदेविनमोस्तुते ॥ ६ ॥ यथावृ-
त्रासुरादिंद्रोरक्षितोऽदितिबालकः ॥ त्वयातथामेबालोयंरक्षणीयोमहेश्वरि ॥ ७ ॥ यथात्वयांजनीपुत्रोहनुमान्रक्षितः
शिशुः ॥ तथामेबालकंरक्षदुर्गेदुर्गार्तिहारिणि ॥ ८ ॥ रुद्रःस्कन्दोयथादेविकश्यपादिसुतास्त्वया ॥ मातस्त्राहितथाबालं
विष्णुमायेनमोस्तुते ॥ ९ ॥ सर्वविघ्नानपाकृत्यसर्वसौख्यप्रदायिनि ॥ जीवन्तिकेजगन्मातःपाहिनःपरमेश्वरि ॥ १० ॥
अनयापूजयाविघ्नेशजन्मदाजीवंत्यपरनाम्नीषष्ठीदेवीशस्त्रगर्भाभगवत्यःप्रीयंतां ॥ ॥ ततोदिक्पालपूजनं ॥ ततोनीराजनं ॥
सूतिकागृहेबलिंसोपस्करंदद्यात् ॥ तत्रमन्त्रः ॥ क्षेत्रस्याधिपतेदेविसर्वारिष्टविनाशिनि ॥ बलिंगृहाणमेरक्षक्षेत्रंसूतींच

बालकं ॥ १ ॥ इमंसोपस्करंबलिंक्षेत्राधिपतिदेव्यैसमर्पयामि ॥ ततआगत्यद्वारस्योभयतःकज्जलेनद्वेद्वेमातरौलिखेत् ॥ तन्नामानि ॥ धिपणावृद्धिमाताचतथागौरीचपूतना ॥ आयुर्दात्र्योभवन्त्वेताअद्यबालस्यमेशिवाः ॥ पञ्चोपचारैःपूजयेत् ॥ सुवासिनीभोजनं विप्रेभ्यश्चखाद्यताम्बूलदक्षिणादिदानं आशीर्ग्रहणं ॥ अत्रपञ्चमषष्ठदिनयोःपुरुषाःशस्त्रहस्ताः स्त्रियश्चनृत्यगीतकारिण्योऽस्यांरात्रौजागरणंकुर्युः ॥ सूतिकागेहंसधूमाग्निदीपंशस्त्रमुसलांबुविभूतियुतंकार्यं ॥ सर्षपांश्चसर्वतोविकिरेत् ॥ अन्यदपियथाचारंकार्यं ॥ विप्राश्चशान्तिपाठंपठेयुः ॥ तत्र सूतिकाबालकयोरायुष्याद्यभिवृद्ध्यर्थंश्रीपरमेश्वरप्रीत्यर्थंशान्तिपाठजपंकरिष्येइतिसंकल्पः ॥ इतिषष्ठीपूजनं ॥

अथ नामकरणम् ॥ दशम्यामुत्थाय ब्राह्मणान्भोजयित्वा पिता नाम करोति ॥ दशम्यां रात्र्यामतीतायां एकादशेहनीत्यर्थः ॥ तथाच गोभिलः—दशरात्रे व्युष्टे नामकरणमिति ॥ याज्ञवल्क्यश्च—अहन्येकादशे नाम इति । एकादशेहनि नामकरणासंभवे स्मृत्यन्तरोक्ता द्वादशाहादिकाला ग्राह्याः । तदुक्तं कारिकायां—मुख्यकाले यदा नामधेयं कर्तुं न शक्यते ॥ उक्तानामन्यतमस्मिन्दिने स्यात्तु गुणान्वित इति ॥ तथाच धर्मनौकायां—जन्मतो भवति नाम वासरे द्वादशे शशिविधौ ११ त्रयोदशे ॥ ब्राह्मणस्य नृपवैश्ययोः क्रमात्षोडशे च दिवसे च विंशतौ ॥ १ ॥ शूद्रनाम रद ३२ संमिते दिने सर्वनाम गजचन्द्र १८ दिनेऽथवा ॥ चन्द्रभूमि ११ दिवसे खादि १०० ह्मिते वासरे भवति वत्सरान्ततः ॥ २ ॥ इदं नामकर्म स्वकालेऽपि कुर्यादमापातसंक्रान्तिविष्ट्यादिके न ॥ तथान्ये कुयोगेपि कार्यं नचेदं मलादौ तु कार्यं न दोषोस्ति कश्चित् ॥ ३ ॥ मित्रादित्यमघोत्तराशतभिषक्स्वातीधनिष्ठाच्युतप्राजेशाश्विशशाङ्कपौष्णदिनकृत्पुष्येषु राशौ स्थिरे ॥ छिद्रां ४।८।९।१४ पञ्चदशीं १५।३० विहाय नवमीं शुद्धेऽष्टमे भार्गवज्ञाचार्यामृतपादभागदिवसे नामानि कुर्या-

च्छिशोः ॥४॥ अस्य श्लोकस्यव्याख्या **संस्कारकौस्तुभे**—मित्रोऽनुराधा । आदित्यं पुनर्वसुः । उत्तरेत्युत्तरात्रयं गृह्यते । त्रीण्युत्तराण्याहुर्बहूनि नाम्नीति शाखान्तरसंवादात् । अच्युतः श्रवणः । प्राजेशो रोहिणी । अश्वि अश्विनी । शशाङ्को मृगशिरः । पौष्णं रेवती । दिनकृद्धस्तः । राशौ स्थिरे वृषसिंहवृश्चिककुंभेषु । तेभ्य एवाष्टमस्थानेऽरिष्टसूचकग्रहानाक्रमणं शुद्धत्वं । ज्ञो बुधः । आचार्यो गुरुः । अमृतपादश्चन्द्रः । एषां भागाख्यांशे दिवसाख्यवासरे प्रत्येकमन्वयः । भागदिवसमित्येकवद्भावः । नामानीति बहुवचनमेकस्य शिशोर्बहूनि नामानि कार्याणीति ज्ञापनार्थं ॥ **प्रथममाह शङ्खः**—कुलदेवतासंबद्धं पिता नाम कुर्यादिति । कुलपूज्या या देवता तत्संबद्धमित्यर्थः । यथा कुलदेवतानाम रेणुकाभक्त इति ॥ स्त्रीविपयेतु आवन्तं रेणुकाभक्ता इति । अस्यां व्याख्यायामनादिराचारो मूलं ॥ **द्वितीयमाह गार्ग्यः**—मासनाम गुरोर्नाम दद्याद्बालस्य वै पिता ॥ कृष्णोऽनन्तोऽच्युतश्चक्री वैकुण्ठोथ जनार्दनः ॥ उपेन्द्रो यज्ञपुरुषो वासुदेवो हरिस्तथा ॥ योगीशः पुण्डरीकाक्षो मासनामान्यनुक्रमात् ॥ अत्र मार्गशीर्षादिक्रमः ॥ चैत्रादिमासनामानि वैकुण्ठोऽथ जनार्दनः ॥ उपेन्द्रो यज्ञपुरुषो वासुदेवो हरिस्तथा ॥ योगीशः पुण्डरीकाक्षः कृष्णोऽनन्तोऽच्युतस्तथा ॥ चक्रधारीति चैतानि क्रमादाहुर्मनीषिण इति **मदनरत्नो**दाहृतवचःसंवादात् । **स्त्रीणां तु**—कृष्णा अनन्ता अच्युता चक्रिणी वैकुण्ठी जनार्दना उपेन्द्रा यज्ञपुरुषा वासुदेवी हरिः योगीशा पुण्डरीकाक्षा । मासाश्चात्र चान्द्रास्तेष्वेव चैत्रादिशब्दानां मुख्यत्वात् । तेच शुक्लादिकृष्णान्ता एव । तादृशचान्द्रमासस्यैव मुख्यत्वात् । ब्राह्मणेन चैतदेव विशेषेणादरणीयम् । अमावास्यापरिच्छिन्नो मासः स्याद्ब्राह्मणस्य त्विति वचनात् ॥ **तृतीयं नाक्षत्रं नामाह बौधायनः**—नाक्षत्रनामधेयेन तृतीयं नामधेयं गुह्यमस्यान्यत् । अन्यद्व्यावहारिकात् ॥ **तथाच शाङ्खायनः**—कृत्तिकासूतपन्नस्य अग्निशर्मेत्येवं नाक्षत्राणि नामानि मन्यन्ते । उदाहृतं च श्रुतिभाष्ये वचनं—नक्षत्रदेवता एता एताभिर्यज्ञकर्मणि ॥ यजमानस्य शास्त्रज्ञैर्नाम नक्षत्रजं स्मृतं ॥ शर्मान्तं

ब्राह्मणस्योक्तमिति ॥ कातीया अपि देवतासंबद्धमेव नाक्षत्रनाम मन्यन्ते ॥ **नक्षत्रदेवतास्तु**—अग्निः प्रजापतिः सोमो रुद्रोऽदितिर्बृहस्पतिः ॥ सर्पाश्च पितरश्चैव भगश्चैवार्यमापि च ॥ सविता त्वष्टाथ वायुश्चेन्द्राग्नी मित्र एवच ॥ इन्द्रो निर्ऋतिरापो वै विश्वेदेवास्तथैव च ॥ विष्णुर्वसवो वरुणोऽजएकपात्तथैवच ॥ अहिर्बुध्न्यस्तथा पूषाश्विनौ यम एवचेति ॥ कृत्तिकादिक्रमः ॥ **गदाधररेणुभाष्यादौ**—अवकहडाख्यज्योतिःशास्त्रोक्तचक्रानुसारेण जन्मनक्षत्रपादप्रयुक्ताक्षरादिनाम नाक्षत्रं नाम इत्युक्तं स प्रकारः चूचेचोलाश्विनीत्यादिप्रसिद्धः । एवंच नाक्षत्रनामविधाने पक्षद्वयं । अग्निशर्मा प्रजापतिशर्मा इत्येत्रमादि ॥ अथवा चूडामणिः चेदिपतिः चोलपतिः लाटपतिरित्येवमादिर्वा । स्त्रीणामप्येवं । अग्निशर्मा प्रजापतिशर्मा इत्यादिपुंवत् । चूडामणिः चेदीशा चोलेशा लोटेशेत्यादि स्त्रीप्रत्ययान्तमूह्यं । **अभिवादने नाक्षत्रमेव नामोच्चारणीयं । तथाच बौधायनः**—नक्षत्रनामधेयेन तृतीयं नामधेयं गुह्यमस्यान्यदभिवादनीयोपनयनान्मातापितरौ संविदितौ भवतो विज्ञायते द्विनामा ब्राह्मण इति । तदप्युपांशूच्चारणीयं । **तथाच शौनकः**—अभिवादननामेदमस्येत्यालोच्य चेतसा । उपांशु निर्दिशेच्चैतन्न जानीयुः परे यथेति ॥ **चतुर्थं व्यावहारिकं नामाह बृहस्पतिः**—नामाखिलस्य व्यवहारस्य हेतुः शुभावहमिति । **तत्स्वरूपमाह पारस्करः**—द्व्यक्षरं चतुरक्षरं वा घोषवदादि अन्तरन्तस्थं दीर्घाभिनिष्ठानं कृतं कुर्यात् न तद्धितं । शर्मब्राह्मणस्य वर्मक्षत्रियस्य गुप्तेतिवैश्यस्येति । घोषवदादि । वर्गाणां प्रथमद्वितीयाः शषसहाश्च अघोषाः अन्ये घोषवन्तः तदादि कर्तव्यं । अन्तरन्तस्थं । अन्तस्थाः यरलवाः ते नाम्नोन्तर्मध्ये कर्तव्या इत्यर्थः । दीर्घाभिनिष्ठानं । अभिनिष्ठानं समाप्तिरुच्यते । सा दीर्घा कर्तव्या । कृतं कुर्यात् । कृदिति प्रत्ययसंज्ञा । अपरे पितामहादिकृतं वर्णयन्ति । न तद्धितं तद्धितप्रत्ययान्तं न कुर्यादित्यर्थः । शर्मशब्दः सुखवाचकः । वर्मशब्दः शौर्यवाचकः । गुप्तशब्दश्चाढ्यवाचक इति ॥ **कन्यायास्तु** अयुजाक्षरमाकारान्तं स्त्रियै तद्धितं । अयुजाक्षरं अयु-

ग्माक्षरं । आकारान्तं दीर्घाकारान्तं । स्त्रियै इति षष्ठ्यर्थे चतुर्थी । तद्धितं तद्धितप्रत्ययान्तं । **रेणुकारिकायां**—आकारान्तं स्त्रियो नाम तद्धितं चायुजाक्षरम् ॥ ईकारान्तं तु शंखोक्त्या न कृतं स्यात्कुले शुभं ॥ स्त्रीणां सघोपमक्रूरं विस्पष्टार्थं मनोहरं ॥ माङ्गल्यं दीर्घवर्णान्तमाशीर्वादाभिधानवदिति । न कृतमिति कृत्प्रत्ययान्तं नेत्यर्थः । सघोपमिति घोषसंज्ञकाक्षरयुक्तमित्यर्थः ॥ यथा यज्ञदाशर्मा जायन्ती मैत्रेयी बाहेयी मालुकी इत्यादीनि शर्मान्तानि ॥ अत्र नामकर्मणि नाक्षत्रव्यावहारिकयोर्नाम्नोरेव शर्मान्तत्वं पूर्वोक्तवचननिचयात् न कुलदेवताप्रयुक्तनामजन्ममासनाम्नोरिति **संस्कारकौस्तुभे** । ब्राह्मणान्भोजयित्वेति ब्राह्मणभोजनं श्राद्धव्यतिरेकेण । पिता नाम करोतीत्यत्र पितृग्रहणात् अन्यत्रापि संस्कारे पितुरेव कर्तृत्वनियमोऽवगम्यते इति कर्कजयरामगदाधररेणुदीक्षितादयः ॥ **रेणुकारिकायां विशेषः**—एतत्पितुरसावेऽन्यः कुलवृद्धोपि कारयेदिति । एतन्नामकरणं । इतिनामकरणशास्त्रार्थः ॥

**अथ नामकरणप्रयोगः ॥ आचमनं।प्राणायामः।पवित्रधारणं। देशकालौसंकीर्त्यशुभपुण्यतिथौ ममास्यकुमारस्य बीजगर्भसमुद्भवैनोनिवर्हणायुरभिवृद्धिव्यवहारसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंनामकरणाख्यंकर्माहंकरिष्ये ॥ तदङ्गत्वेनस्वस्तिपुण्याहवाचनंमातृकापूजनंवसोर्धारापूजनंआयुष्यमंत्रजपंनान्दीश्राद्धंचकरिष्ये तत्रादौनिर्विघ्नतासिध्यर्थंगणपतिपूजनंकरिष्यइतिसंकल्प्यतानिकृत्वा ॥ नामकरणपूर्वाङ्गत्वेनत्रीन्ब्राह्मणान्भोजयिष्ये ॥ अत्रशिष्टाचारप्राप्तंनामदेवतापूजनं ॥ तद्यथा ॥ कांस्यपात्रेतण्डुलान्प्रसार्यतदुपरिसुवर्णशलाकयाश्रीकुलदेवताप्रयुक्तमादौअमुकदेवताभक्तइतिनाम ॥ ततोमासनाम ॥**

ततोनाक्षत्रनाम ॥ ततोव्यावहारिकंनाम ॥ एवंनामचतुष्टयंलिखित्वा ॥ ॥ अस्यकुमारस्यब्रह्मायुष्यप्राप्त्यर्थंनामदेवतापू-
जनंकरिष्येइतिसंकल्पः ॥ मनोजूतिरितिप्रतिष्ठाप्य ॥ षोडशोपचारैःसंपूज्य ॥ ततःस्वदक्षिणतःमातुरुत्सङ्गस्थस्यशिशोर्दक्षि-
णकर्णेकथयति ॥ हेकुमारत्वंकुलदेवतानाम्नारेणुकाभक्तोसि ॥ हेकुमारत्वंमासनाम्नाकृष्णोसि ॥ हेकुमारत्वंनाक्षत्रेणनाम्ना
अग्निशर्मासिआत्मारामशर्मासिवा ॥ हेकुमारत्वंव्यावहारिकेणनाम्नारामचन्द्रशर्मासि ॥ इतिकथयित्वा ॥ ॐमनोजूतिः०
इतिमन्त्रपठनान्ते विप्रैर्नामसुप्रतिष्ठितमितिवाचयित्वा ॥ ततःकर्ताउत्थितोबद्धाञ्जलिःसन् ॥ भोब्राह्मणाःअयंकुमारःकुलदे-
वतानाम्नारेणुकाभक्तःभवतःसर्वान्ब्राह्मणानभिवादयतेइतिवदेत् ॥ तेचआयुष्मान्भवतुरेणुकाभक्तःइतिवदेयुः ॥ एवमग्रेपि ॥
भोब्राह्मणाःमासनाम्नाकृष्णःभवतः० अभिवादयते ॥ तेचआयुष्मान्भवतुकृष्णः ॥ भोब्राह्मणाःनाक्षत्रेणनाम्नाअग्निशर्मा-
आत्मारामशर्मावाभवतः० अभिवादयते ॥ तेचआयुष्मान्भवतुअग्निशर्माआत्मारामशर्मावा ॥ भोब्राह्मणाः व्यावहारिकेण
नाम्नारामचन्द्रशर्माभवतः० अभिवादयते ॥ आयुष्मान्भवतुरामचन्द्रशर्मा ॥ ततःशिष्टाचाराद्ब्राह्मणाआशीर्मन्त्रान्पठेयुः ॥
ॐवे॒दो॑सि॒येन॒त्वंदे॑ववेददे॒वेभ्यो॑वे॒दोभ॑व॒स्तेन॒मह्यं॑वे॒दोभू॑याः ॥ अ॒थास्या॒यु॒ष्यंक॑रोति ॥ द॒क्षिणंक॒र्णम॑भिनि॒धाय॒वाग्वा॒गि॒ति॒त्रि-
र्‌थास्यानामधेयंकरोतिवेदोसीतितदस्यैतद्गुह्यमेवनामस्याद्‌थद॒धिम॒धुघृत॒ꣳस॑ꣳसृज्या॒नन्त॑र्हितेनजातरूपेणप्राशयतिभूस्त्व॒-
यिदधामिभुवस्त्व॒यिदधामिस्वस्त्व॒यिदधामिभूर्भुवः॒स्वः॒सर्वं॑त्व॒यिदधामीति॒ ॥१॥ अ॒थैनम॑भि॒मृशति ॥ अ॒श्माभ॑वपर॒शुर्भ॑व-

हिरण्यमश्रुतंभव ॥ आत्मावैपुत्रनामासिसजीवशरदःशतमिति ॥ २ ॥ अथास्यमातरमभिमंत्रयते ॥ इडासिमैत्रावरुणी-
वीरेवीरमजीजनथाः ॥ सात्वंवीरवतीभवास्मान्वीरवतोकरदिति ॥ ३ ॥ अथैनंमात्रेप्रदायस्तनंप्रयच्छति ॥ यस्तेस्तनः-
शशयोयोमयोभूर्योरत्नधावसुविद्यःसुदत्रः ॥ येनविश्वापुष्यसिवार्याणिसरस्वतितमिहधातवेकरिति ॥४॥ तंवाऽएतमाहुः ॥
अतिपिताबताभूरतिपितामहोबताभूःपरमांवतकाष्ठांप्रापश्रियायशसाब्रह्मवर्चसेनयएवंविदोब्राह्मणस्यपुत्रोजायतइति ॥ ५ ॥
ततःकर्ताब्राह्मणान्नत्वाकृतस्यनामकरणकर्मणःसां० दशब्राह्मणान्भोजयिष्ये । तेभ्योदक्षिणांदातुमहमुत्सृज्ये ॥ अने-
ननामकरणाख्येनकर्मणाभगवान्श्रीपरमेश्वरःप्रीयतां ॥ इतिनामकरणम् ॥

अथ पालकारोहणम् ॥ धर्मनौकायां—पुंसः कन्यायाः क्रमेणात्र निद्रा सूर्ये १२ घस्रे विश्व १३ तुल्ये दिने च । मुख्यः कालो
नात्र भानामपेक्षाऽन्यस्मिन्काले तिर्यगाख्ये प्रकुर्यात् ॥ दश १० द्वादशा १२ष्टया १६ कृती २२ षु प्रशस्तं शिशोः पालकारोहणं रेवतीषु ।
करे त्वाष्ट्रयुग्मे श्रुतौ चाश्विनीषु ह्यदित्यां ध्रुवे पुष्यभे शोभनं स्यात् ॥ त्वाष्ट्रयुग्मं चित्रास्वाती । ध्रुवं रोहिणी उत्तरात्रयं च । भविष्ये—
अभीष्टे पुण्यदिवसे चन्द्रतारावलान्विते । मृदुध्रुवक्षिप्रभेषु माता वा कुलयोषितः ॥ योगशायिहरिं स्मृत्वा प्राक्शीर्षं विन्यसेच्छिशुमिति ।
मृदुनक्षत्राणि मृगचित्रारेवत्यनुराधाः । ध्रुवाण्युक्तानि । क्षिप्राणि अश्विनीहस्तपुष्याः ॥ ॥ अथ प्रयोगः ॥ अत्रदिनेशुभकालेकुलदेवतां यो-
गशायिनंचसंपूज्य स्मृत्वानत्वाच मात्रादिसुभगाः स्त्रियः अलंकृतं शिशुं गीतवाद्यघोषपुरःसरं हरिद्राकुङ्कुमादिचर्चितेपालके प्राक्शिरसं दक्षिण-
शिरसंवानिधापयेयुः । अन्यदपि यथाचारंकार्यं । इदंप्राप्तकालेकुयोगसत्वेपिभवति ॥ इतिपालकारोहणम् ॥ ॥ अथ दुग्धप्राशनम् ॥

**निर्णयसिन्धौ धर्मनौकायां**—एकत्रिंशद्दिने चैव पयः शङ्खेन पाययेत् । अन्नप्राशननक्षत्रे दिवसोदयराशिषु ॥ **संस्कारकौस्तुभे श्रीधरीये**—एकत्रिंशे वासरे वा द्वितीये जन्मर्क्षे वा शुद्धलग्नेऽनुकूले । शङ्खे दुग्धं संनिदध्याच्छिशूनां वक्त्रे धात्री पूज्यपूजां विधायेति । शङ्खे इति सप्तमी तृतीयार्थे । पूज्याः कुलदेवताः विप्राश्च । **नृसिंहः**—पूर्वाह्ने वाथ मध्याह्ने कुर्याद्रात्रिं विसर्जयेत् । योगिनीराहुरुद्रादिमुखं चैव विवर्जयेदिति । योगिन्यादिलक्षणं स्थिरचरभेदश्च ज्योतिःशास्त्रादवगन्तव्यः ॥ ॥ उक्तदिने शुभकाले गणपतिंकुलदेवतांचसंपूज्य गोक्षीरंशङ्खेन धात्रीमाता दक्षिणशिरसं शिशुमङ्के निधाय पाययेत् ॥ इति दुग्धप्राशनं ॥ ॥ **अथ ताम्बूलभक्षणं** ॥ **निर्णयसिन्ध्वादौ**—सार्धमासद्वये दद्यात्ताम्बूलं प्रथमं शिशोः ॥ कर्पूरादिकसंमिश्रं विलासाय हितायच ॥ १ ॥ मूलार्कचित्रकरतिष्यहरीन्द्रभेषु पौष्णे तथा मृगशिरोदितिवासवेषु ॥ अर्केन्दुजीवभृगुबोधनवासरेषु ताम्बूलभक्षणविधिर्मुनिभिः प्रदिष्टः ॥२॥ इति ताम्बूलभक्षणं ॥ ॥ **अथ कर्णवेधः** ॥ **तत्र पारस्करः**—अथ कर्णवेधो वर्षे तृतीये पञ्चमे वा पुष्येन्दुचित्राहरिरेवतीषु ॥ **धर्मनौकायां**—मासे षष्ठे सप्तमे वाष्टमे वा दिक्संख्याके द्वादशे वाद्यमासे ॥ ऊर्जे पौषे फाल्गुने चैत्रमासे शुक्लेपक्षे सद्दिने कर्णवेधः ॥ हरिहरकरचित्रासौम्यपौष्णोत्तरार्यादितिवसुषु घटालीसिंहवर्ज्ये च लग्ने ॥ दशमुनिरसपञ्चद्वित्रिविश्वेषु शस्तस्तिथिषु हरतिथौ च श्रोत्रवेधः प्रदिष्टः ॥ विप्राच्छलाका क्रमतः प्रशस्ता रौप्यस्य हेम्नो रजतस्य लौही ॥ अष्टाङ्गुलाऽङ्गुष्ठसमा तया तु ह्यङ्गुष्ठमात्रं विवरं च कर्णे ॥ अङ्गुष्ठमात्रं विवरं न कर्णे यस्यास्ति सोयं पितृकर्मगर्ह्य इति ॥ **रेणुकारिकायां**—दिनछिद्रव्यतीपातविष्टिवैधृतिवर्जित इति ॥ **गर्गः**—कर्णवेधं प्रशंसन्ति पुष्ट्यायुःश्रीविवृद्धय इति ॥ **अथ प्रयोगः**—आचमनं । प्राणायामः । पवित्रधारणं । देशकालौस्मृत्वा शुभपुण्यतिथौश्रीप० ममास्यकुमारस्य पुष्ट्यायुःश्रीविवृद्धये कर्णवेधंकरिष्ये इतिसंकल्पः ॥ ततो गणेशपूजनादिनान्दीश्राद्धान्तं ॥ **रेणुकारिकायां गदाधरभाष्ये च** । केचिन्नान्दी-

मुखं श्राद्धमिह नेच्छन्ति सूरय इति ॥ कुमारं स्नापयित्वा पूर्वाह्णे कुमारस्य मधुरं दत्वा प्रत्यङ्मुखायोपविष्टाय दक्षिणं कर्णमभिमन्त्रयते भद्रंकर्णेभिरिति ॥ ॐभद्रंकर्णेभिः० ॥ सव्यं वक्ष्यंतीवेदेतिच ॥ ॐवक्ष्यंतीवेदागनीगन्तिकर्णम्प्रियᳬसखायंपरिषस्वजाना ॥ योषेवशिङ्क्तेवितताऽधिधन्वञ्ज्याइयᳬसमनेपारयन्ती ॥ २ ॥ इतिकर्णाभिमन्त्रणं ॥ अथ अभिमन्त्रणक्रमेण भिन्द्यात् पूर्वोक्तया शलाकया ॥ ततो ब्राह्मणभोजनं ॥ इति कर्णवेधप्रयोगः ॥

अथ निष्क्रमणं ॥ तत्र पारस्करः—चतुर्थेमासि निष्क्रमणिका ॥ धर्मनौकायां—मासि तृतीये यदि वा चतुर्थे शिशोर्गृहान्निष्क्रमणं बहिः स्यात् । नान्दीमुखान्तं विधिवत्प्रकुर्याच्छन्दोगशाखासु विकल्प उक्तः ॥ मैत्रे पुष्यपुनर्वसु प्रथमभे पौष्णेऽनुकूले विधौ हस्ते चैव सुरेश्वरे च मृगभे तारासु शस्तासु च । कुर्यान्निष्क्रमणं शिशोर्बुधगुरौ शुक्रे त्वरिक्ते तिथौ कन्याकुंभतुलामृगारिभवने सौम्यग्रहालोकिते ॥ अन्नाशनोक्ते समये भवेद्वा दिक्पालसूर्येन्दुहरींश्च पूज्य ॥ शङ्खादिवाद्यैः सहितं शिशुं गृहान्निःसारयेन्मन्त्रमिमं पठेच्चेति ॥ संस्कारकौस्तुभे—अकृतायां क्रियायां स्यादायुःश्रीनाशनं शिशोः ॥ कृते संपद्विवृद्धिः स्यादायुर्वर्धनमेव चेति ॥

आचमनं । प्राणायामः । पवित्रधारणं ॥ देशकालौसंकीर्त्य शुभपुण्यतिथौ ममास्य कुमारस्य आयुःश्र्यभिवृद्धिव्यवहारसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंगृहान्निष्क्रमणंकरिष्ये ॥ गणेशपूजनादिनान्दीश्राद्धान्तंकृत्वा उक्तलग्ने वेदवाद्यघोषपुरःसरंभार्ययासहकुमारंगृहाद्बहिरानीयकुमारंसूर्यमुदीक्षयतितच्चक्षुरिति ॥ ॐतच्चक्षुर्देवहितम्पुरस्ताच्छुक्रमुच्चरत् ॥ पश्येमशरदᳬशतञ्जीवेमशरदᳬशतᳬशृणुयामशरदᳬशतम्प्रब्रवामशरदᳬशतमदीनाᳬस्यामशरदᳬशतम्भूयश्चशरदःशतात् ॥ १ ॥

ततआगत्य ॥ चन्द्रार्कयोर्दिगीशानांदिशांचवरुणस्यच ॥ निक्षेपार्थमहंदद्मितेत्वांरक्षंतुसर्वतः ॥ अप्रमत्तंप्रमत्तंवादिवारात्रमथापिवा ॥ रक्षंतुसततंसर्वेदेवाःशक्रपुरोगमाः ॥ १ ॥ इतिविभूतिंतस्यसर्वाङ्गेषुलापयेदितिनृसिंहभट्टौ ॥ अस्मिन्नेवदिने रात्रौचन्द्रंचैवप्रदर्शयेत् ॥ ततोदशब्राह्मणभोजनसंकल्पः । आशीर्ग्रहणं । दक्षिणादानं । मातृविसर्जनं ॥ अनेननिष्क्रमणाख्येनकर्मणाश्रीपरमेश्वरःप्रीयतां ॥ इतिनिष्क्रमणं ॥

अथभूम्युपवेशनं ॥ धर्मनौकायां । ध्रुवानुराधामृगशक्रहस्ताश्विनीज्यमेपञ्चममासिशस्तं ॥ निवेशनंभूमितलेसुतस्यपृथ्वींवराहंविधिवत्सुपूज्य ॥ आचमनं । प्राणायामः । पवित्रधारणं ॥ देशकालौसंकीर्त्यशुभपुण्यतिथौअस्यकुमारस्यभूम्युपवेशनंकरिष्ये । गणेशपूजनपूर्वकंस्वस्तिवाचनंकृत्वा ॥ ततःश्रीपरमेश्वरप्रीत्यर्थंवराहपृथ्वीपूजनमहंकरिष्ये इतिसंकल्प्य । ततोगोमयोपलिप्तायांरंगवल्ल्याद्यलंकृतायांभूमौ ॥ ॐवराहायनमः ॥ ॐपृथिव्यैनमः इतिमन्त्रेणसंपूज्यमंगलगीतवाद्यपुरःसरंअलंकृतांशिशुंतस्यांभूमौप्राङ्मुखमुपवेशयेत् ॥ तत्रमन्त्राः ॥ रक्षैनंवसुधेदेविसदासर्वगतंशुभे ॥ आयुःप्रमाणंनिखिलंनिक्षिपस्वहरिप्रिये ॥१॥ अचिरादायुषस्तस्ययेकेचित्परिपन्थिनः ॥ जीवितारोग्यवित्तेषुनिर्दहस्वाचिरेणतान् ॥ २ ॥ धारिण्यशेषभूतानांमातात्वमसिकामधुक् ॥ कुमारंपाहिमातस्त्वंब्रह्मातदनुमन्यतां ॥ ३ ॥ इति ॥ ततःसुवासिनीभिर्नीराजयित्वा ॥ ब्राह्मणेभ्योदक्षिणांदत्वातैराशिषोगृहीत्वाब्राह्मणान्भोजयेत् ॥ अनेनउपवेशनाख्येनकर्मणाश्रीपरमेश्वरःप्रीयतां ॥ एवंकुमार्याअपि ॥ इतिभूम्युपवेशनम् ॥

अथान्नप्राशनं ॥ तत्रपारस्करः । षष्ठेमासेऽन्नप्राशनं ॥ धर्मनौकायां—षष्ठात्पंक्त्यन्तेषु मासेषु ६।७।८।९।१० सौरेष्वब्दे संपूर्णे भवेद्वादशे वा ॥ पुंसः षष्ठे पञ्चमे सप्तमे वा स्त्रीणां शस्तं भोजनं पूर्वमेव ॥ सौरेष्विति नायं नियमः । बालान्नभोजनविधौ गुरुशुक्रमौढ्य-बाल्यप्रयुक्तमशुभं त्वधिमासदोषः ॥ नास्त्येव सावनविधाविह मासि षष्ठे युग्मे च मासि परतः शुभचन्द्रपक्ष इति विधिरत्ने सावनमानेनापि षष्ठस्य मासस्य विधानादिति संस्कारकौस्तुभे ॥ रिक्तां नन्दां द्वादशीमष्टमीं च त्यक्त्वा चासां शुक्रजीवज्ञवारे ॥ सोमे कृष्णाशांत १० मेव प्रशस्तं जन्मोडौ चाप्यन्नभुक्तिः प्रशस्ता ॥ आदित्यतिष्यवसुसौम्यकरानिलाश्विचित्राजविष्णुवरुणोत्तरपौष्णमित्राः ॥ बालान्नभोजनविधौ दशमे विशुद्धे शस्तास्तथा क्षयतिथिं प्रथमं विहायेति ॥ गदाधरभाष्ये वसिष्ठः—बालान्नभुक्तौ व्रतबन्धने च राजाभिषेके खलु जन्मधिष्ण्यं ॥ शुभं त्वनिष्टं सततं विवाहे सीमन्तयात्रादिषु मङ्गलेष्विति ॥ गर्भाधानादिका अन्नप्राशनान्ता मलिम्लुचे ॥ क्रिया अकर्णवेधाः स्युर्नान्या इत्याह भास्कर इति रेणुः ॥

अथ प्रयोगः ॥ आचमनं । प्राणायामः । पवित्रधारणं । देशकालौसंकीर्त्यशुभपुण्यतिथौममास्यकुमारस्यमातृगर्भामङ्गलप्राशनविशुद्ध्यर्थंअन्नाद्यब्रह्मवर्चसतेजइन्द्रियायुर्बललक्षणफलसिद्धिबीजगर्भसमुद्भवैनोनिबर्हणद्वाराश्रीपरमेश्वरप्रीत्यर्थंअन्नप्राशनाख्यंकर्मकरिष्ये ॥ तदङ्गत्वेनस्वस्तिपुण्याहवाचनंमातृकापूजनंवसोर्धारापूजनंआयुष्यमन्त्रजपंनान्दीश्राद्धंचकरिष्ये तत्रनिर्विघ्नार्थंगणपतिपूजनंकरिष्येइतिसंकल्प्यतानिकृत्वा ॥ ततःस्थण्डिलेपञ्चभूसंस्कारपूर्वकंशुचिनामानमग्निंप्रतिष्ठाप्य ततोदक्षिणतोब्रह्मासनमास्तीर्येत्यादिस्थालीपाकं श्रपयित्वाआज्यभागांतंप्रकृतिवत् ॥ आज्यभागाविष्ट्वाज्याहुतीजु-

होति ॥ ॐदेवींवाचमजनयन्तदेवास्तांविश्वरूपाःपशवोवदन्ति ॥ सानोमन्द्रेषमूर्जंदुहानाधेनुर्वागस्मानुपसुष्टुतैतुस्वाहा ॥ १ ॥ इदंदेव्यैवाचेन० ॥ वाजोनोअद्येतिचद्वितीयां । चकारात्प्रथमयाऽऋचासह ॥ ॐदेवींवाच० नुपसुष्टुतैतु ॥ वाजोनोऽअद्यप्रसुवातिदानंवाजोदेवाँऋतुभिःकल्पयाति ॥ वाजोहिमासर्ववीरअजानविश्वाऽआशावाजपतिर्जयेयंस्वाहा ॥२॥ इदंदेव्यैवाचेवाजायचनमम ॥ जुहुयादाज्यभागान्तेस्थाल्याज्येनाहुतीपृथक् ॥ देवींवाचमितिज्ञेयाप्रथमीतामृचंपुनः ॥ उक्त्वास्वाहांविनावाजोनोअद्येतिद्वितीयकेति ॥ ततश्चरुमभिघार्यस्थालीपाकस्यजुहोति ॥ ॐप्राणेनान्नमशीयस्वाहा ॥ इदंप्राणाय० ॥ ॐअपानेनगन्धानशीयस्वा० इदमपानाय० ॥ ॐचक्षुषारूपाण्यशीयस्वा० इदंचक्षुषे० ॥ ॐश्रोत्रेणयशोशीय० इदंश्रो० ॥ ततःस्विष्टकृदादिप्रणीताविमोकान्तंप्रकृतिवत् ॥ देवतापुरतोमातुरुत्सङ्गेसंस्थितस्यतु ॥ अलंकृतस्य दातव्यमन्नंस्वर्णादिभाजने ॥ प्राशनान्तेसर्वमन्नमेकतोद्धृत्यहस्तगृहीतसुवर्णेनअथैनंप्राशयेत्तूष्णींहन्तेतिवा ॥ हन्तकारंमनुष्याइतिश्रुतेः ॥ ॐहन्त ॥ रेणुकारिकायां—देवताग्रेथविन्यस्यशिल्पभाण्डानिसर्वशः ॥ शस्त्राणिचैवशास्त्राणिततःपश्येत्तुलक्षणं ॥ कृतप्राशनमुत्सङ्गाद्धात्रीबालंसमुत्सृजेत् ॥ कार्यंतस्यपरिज्ञानंजीविकायाअनन्तरं ॥ प्रथमंयत्स्पृशेद्बालस्ततोभाण्डंस्वयंतदा । जीविकातस्यबालस्यतेनैवेतिभविष्यतीति ॥ ततोदशब्राह्मणभोजनसंकल्पः ॥ दक्षिणादानं ॥ आशीर्ग्रहणं ॥ मातॄणांविसर्जनं ॥ अनेनान्नप्राशनाख्येनकर्मणाभगवान्श्रीपरमेश्वरःप्रीयतां ॥ इत्यन्नप्राशनं ॥

अथ वर्धापनविधिः ॥ सचवर्षपर्यन्तंप्रतिमासंजन्मतिथौकार्यः । वर्षोत्तरंप्रत्यब्दंजन्मतिथौकार्यः ॥ इदंवर्धापनंयावद्बाल्यंपित्रादिभिः-

कार्य । पश्चात्तुप्रतिवर्षंस्वयमेवेति ॥ अत्रजन्मतिथिरौदयिकीग्राह्या । युगाद्यावर्षवृद्धिश्चसप्तमीपार्वतीप्रिया । रवेरुदयमीक्षन्तिनतत्रतिथियुग्मते- तिकृत्यतत्वार्णववचनात् । तत्रतिथिद्वैधेयत्रजन्मर्क्षयोगःसाग्राह्या । दिनद्वयेजन्मनक्षत्रयोगसत्वासत्वयोरौदयिकीद्विमुहूर्ताधिकाग्राह्या । द्विमुहूर्तन्यूनत्वेपूर्वा । जन्ममासाधिमासत्वेशुद्धेमासेप्रत्याब्दिकवर्धापनविधिर्नत्वधिके इतिनिर्णयसिन्धुः ॥ **तत्रैवदीपिकायां**—कृ- तान्तकुजयोर्वारेयस्यजन्मतिथिर्भवेत् ॥ अनृक्षयोगसंप्राप्तौविघ्नस्तस्यपदेपदे ॥ तस्यसर्वौषधीस्नानंगुरुदेवाग्निपूजनं ॥ इति । कृतान्तः शनिः ॥

अथप्रयोगः ॥ तिलतैलोद्वर्तनपूर्वकंमङ्गलस्नानंनवाम्बरधारणं ॥ गृहाभ्यन्तरउपविश्य । आचमनं । प्राणायामः । पवित्रधारणं । देशकालौसंकीर्त्यशुभपुण्यतिथौअद्यमदीयजन्मदिनेदीर्घायुष्यकामःमार्कण्डेयादीनांपूजनमहंकरिष्ये ॥ तत्रादौनिर्विघ्नतासिद्ध्यर्थंगणपतिपूजनंस्वस्तिवाचनंच ॥ गौर्यादिषोडशमातृणांपूजनं ॥ ततोवसोर्धारापूजनंआयुष्यमन्त्र- जपंचकृत्वा । ततःअक्षतपुंजेषु ॐगणपतयेनमः गणपतिंआवाहयामि १ ॐदुर्गायै० दुर्गां० २ ॐकुलदेवतायै० कुलदे- वतां० ३ ॐगुरुभ्यो० गुरून्० ४ ॐदेवताभ्यो० देवताः० ५ अग्नये० अग्निं० ६ ॐविप्रेभ्यो० विप्रान्० ७ ॐमा- तृभ्यो० मातृः० ८ पितृभ्यो० पितॄन्० ९ ॐततोनवग्रहाः । ॐसूर्याय० सूर्यं० १ ॐसोमाय० सोमं० २ ॐभौ- माय० भौमं० ३ ॐबुधाय० बुधं० ४ ॐबृहस्पतये० बृहस्पतिं० ५ ॐशुक्राय० शुक्रं० ६ ॐशनैश्चराय० शनैश्चरं० ७ ॐराहवे० राहुं० ८ ॐकेतुभ्यो० केतून् ९ ॥ ततः पञ्चभूतादिनवकं ॥ ॐपञ्चभूतेभ्योनमःपञ्चभूतानि १ ॐकालायनमः- कालं २ ॐयुगाय० युगं० ३ ॐसंवत्सराय० संवत्सरं० ४ ॐमासाय० मासं० ५ ॐपक्षाय० पक्षं० ६ ॐअस्मज्जन्म-

तिथयेनमः अस्मज्जन्मतिथिं० ७ ॐअस्मज्जन्मनक्षत्राय० अस्मज्जन्मनक्षत्रं० ८ ॐअस्मज्जन्मराशये० अस्मज्जन्मराशिं ९ ततःशिवाद्यष्टौ ॐशिवायै० शिवां० १ ॐसंभूत्यै० संभूतिं० २ ॐप्रीत्यै० प्रीतिं० ३ ॐसंतत्यै० संततिं० ४ ॐअनसूयायै० अनसूयां० ५ ॐक्षमायै० क्षमां० ६ ॐविष्णवे० विष्णुं० ७ ॐभद्रायै० भद्रां० ८ ॥ ततःइन्द्रादिदशदिक्पालाः ॥ ॐइन्द्राय० इन्द्रं० १ ॐअग्नये० अग्निं० २ ॐयमाय० यमं० ३ ॐनिर्ऋतये० निर्ऋतिं० ४ ॐवरुणाय० वरुणं० ५ ॐवायवे० वायुं० ६ ॐकुबेराय० कुबेरं० ७ ॐईशानाय० ईशानं० ८ ॐब्रह्मणे० ब्रह्माणं० ९ ॐअनन्ताय० अनन्तं० १० ॥ ॐषष्ठिकायै० षष्ठिकां आवाहयामि १ इत्यावाह्य गणपत्यादिषष्ठिकान्ताभ्योदेवताभ्योनमः इतिषोडशोपचारैःसंपूज्य । षष्ठिकादेव्यैपुष्पाञ्जलित्रयसमर्पणं ॥ तत्रमन्त्रः । ॐजगन्मातर्जगद्धात्रिजगदानन्दकारिणि ॥ प्रसीदममकल्याणिनमोस्तुषष्ठिदेवते ॥ ततःषष्ठिकायैदेव्यैदध्योदनबलिदानं ॥ ततःप्रार्थना ॥ जयदेविजगन्मातर्जगदानन्दकारिणि ॥ प्रसीदममकल्याणिनमस्तेषष्ठिदेवते ॥ त्रैलोक्येयानिभूतानिस्थावराणिचराणिच ॥ ब्रह्मविष्णुहरैःसार्धंरक्षांकुर्वन्तुतानिमे ॥ रूपंदेहियशोदेहिभद्रंभगवतिदेहिमे ॥ पुत्रान्देहिधनंदेहिसर्वान्कामांश्चदेहिमे ॥ ततश्चन्दनेनवस्त्रेअष्टदलंकृत्वा ॥ ॐभगवन्मार्कण्डेयइहागच्छइहतिष्ठमार्कण्डेयायनमः मार्कण्डेयमावाहयामि १॥ ततःपरितः ॐअश्वत्थाम्नेनमः अश्वत्थामानं० १ ॐबलयेनमः बलिं० २ ॐ प्रह्लादाय० प्रह्लादं० ३ ॐव्यासाय० व्यासं० ४ ॐहनुमते० हनुमन्तं० ५ ॐबिभीषणाय० बिभीषणं० ६ ॐकृपाय० कृपं० ७ ॐपरशुरामाय० परशुरामं० ८ ॐकार्तिकेयाय० का-

र्तिकेयं० ९ ॐजन्मदेवतायै० जन्मदेवतां० १० ॐस्थानदेवतायै० स्थानदेवतां० ११ ॐप्रत्यक्षदेवतायै० प्रत्यक्षदेवतां० १२ ॐवासुदेवाय० वासुदेवं० १३ ॐक्षेत्रपालाय० क्षेत्रपालं० १४ ॐपञ्चभूतेभ्यो० पञ्चभूतानि० १५ ॥ इत्यावाह्यषोडशोपचारैःसंपूज्यपुष्पाञ्जलिसमर्पणं ॥ तत्रमन्त्रः ॥ आयुःप्रदमहाभागसोमवंशसमुद्भव ॥ महातपोमुनिश्रेष्ठमार्कण्डेयनमोस्तुते ॥ प्रार्थना ॥ मार्कण्डेयायमुनयेनमस्तेमहदायुषे ॥ चिरजीवीयथात्वंभोभविष्यामितथामुने ॥ मार्कण्डेयमहाभागसप्तकल्पान्तजीवन ॥ आयुरारोग्यसिद्ध्यर्थमस्माकंवरदोभव ॥ नराणामायुरारोग्यैश्वर्यसौख्यैःसुखप्रद ॥ सौम्यमूर्तेनमस्तुभ्यंभृगुवंशवरायच ॥ महातपोमुनिश्रेष्ठसप्तकल्पान्तजीवन ॥ मार्कण्डेयनमस्तुभ्यंदीर्घायुष्यंप्रयच्छमे ॥ मार्कण्डेयमहाभागप्रार्थयेत्वांकृताञ्जलिः ॥ चिरजीवीयथात्वंभोभविष्येहंतथामुने ॥ इतिसंप्रणम्यपूजानिवेदनम् ॥ प्रीयन्तांदेवताःसर्वाःपूजांगृह्णन्तुताःमम ॥ प्रयच्छंत्वायुरारोग्यंयशःसौख्यंचसंपदः ॥ मन्त्रहीनंभक्तिहीनंक्रियाहीनंमहामुने ॥ यदर्चितंमयादेवपरिपूर्णंतदस्तुमे ॥ ततस्तिलवपनम् ॥ ब्राह्मणायतिलदानंतण्डुलदानंघृतदानंदेयद्रव्याणिसंपूज्य ॥ कुशतिलजलान्यादाय अद्यमदीयजन्मदिनेदीर्घायुष्यकामः एतांस्तिलान्सोमदैवतान् एतान्सोपकरणांस्तण्डुलांश्च इदंघृतंप्रजापतिदैवतंयथानामगोत्रेभ्योब्राह्मणेभ्यःदातुमहमुत्सृज्ये इतिदानं ॥ तत्सांगतायैदक्षिणादानंच ॥ ततोदक्षिणहस्तेरक्षाबंधनं। तत्रद्रव्याणि गुग्गुलंनिम्बपत्राणिसिद्धार्थाःदूर्वाःगोरोचनंआदिपदाद्धरिद्राकुङ्कुमादिमङ्गलद्रव्यंचरक्तपट्टवस्त्रेबध्वारक्षांबध्नीयात् ॥ ततःस्थण्डिलेपञ्चभूसंस्कारपूर्वकंअग्निंप्रतिष्ठाप्यआज्यभागान्तंकृत्वाघृताक्ततिलैःव्याहृतिभिरष्टोत्तरशतंहोमः ॥

ततःप्रणीताविमोकान्तं ॥ ततःपयसासर्वभूतेभ्योनमः इतिबलिदानं ॥ ततस्तिलगुडसहितदुग्धपानं । तत्रमन्त्रः—अ-ञ्जल्यर्घमितंक्षीरंसतिलंगुडमिश्रितं ॥ मार्कण्डेयाद्वरंलब्ध्वापिबाम्यायुष्यहेतवे ॥ इति ॥ आचम्य ॥ ॐमार्कण्डेयाय-नमः ॥ ॐगोभ्योनमः ॥ ॐब्राह्मणेभ्योनमः ॥ इतिप्रणम्य ॥ मार्कण्डेयक्षमस्वइतिक्षमापनंकृत्वा ॥ अश्वत्थामाबलि-र्व्यासोहनुमांश्चबिभीषणः ॥ कृपःपरशुरामश्चसप्तैतेचिरजीविनः ॥ सप्तैतांश्चस्मरेन्नित्यंमार्कण्डेयमथाष्टमं ॥ जीवेद्वर्षशतं साग्रमपमृत्युविवर्जितः ॥ इतिस्मरेत् ॥ ततोवृद्धसुवासिनीभिर्नीराजनंकार्यं ॥ ब्राह्मणभोजनंदक्षिणादानंआशीर्ग्रहणं ॥ पूजितदेवतानांविसर्जनं ॥ तद्दिनेनियमाः—खण्डनंनखकेशानांमैथुनाध्वगमौतथा ॥ आमिषंकलहंहिंसांवर्षवृद्धौविवर्ज-येत् ॥ मृतेजन्मनिसंक्रांतौश्राद्धेजन्मदिनेतथा ॥ अस्पृश्यस्पर्शनेचैवनस्नायादुष्णवारिणेति ॥ अत्रमूलंगदाधरभाष्येनि-र्णयसिन्ध्वादौचद्रष्टव्यं ॥ इत्यादित्यपुराणोक्तोवर्धापनप्रयोगः ॥

अथ चूडाकरणम् । तत्र पास्करः—सांवत्सरिकस्य चूडाकरणं ॥ संवत्सरो जातो यस्य सः सांवत्सरिकः ॥ द्वितीये वर्षे इत्यर्थः ॥ तृतीये वा प्रतिहते ॥ अथवा तृतीये संवत्सरे अपूर्णे चूडाकरणं कुर्यात् ॥ यथामङ्गलं वा सर्वेषां ॥ अथवा यथाकुलाचारं पञ्चमेब्दे वा उपनीत्या वा सह क्रियते तथा व्यवस्था ॥ धर्मनौकायां—जन्मतो भवति वापि गर्भतो द्वित्रिपञ्चमगताद्यपर्वके ॥ वोपनीतिसहितं भवे-त्कुलाचारतः सममिदं स्त्रिया अपि ॥ श्रेष्ठं चौलं जन्मतोब्दे तृतीये ३ सप्ते ७ ष्व ५ ब्दे मध्यमं प्रोक्तमेतत् ॥ नेष्टं गर्भादङ्क ९ रुद्रा ११

ब्दयोस्तच्छस्तं सूर्यो नक्रषट्के यदा स्यात् ॥ २ ॥ तत्रापि मेषात्रयगे विशेषाच्छस्तं रवौ चौलमथात्र शुक्रः ॥ पक्षः शुभः कृष्णदिगन्तमार्याः केचिच्छुभं पञ्चमिकान्तमन्ये ॥ ३ ॥ जगुरितिशेषः ॥ रिक्ता ४।९।१४ षष्ठीपद्धरि ६।१२ दर्शपूर्णिमाद्या वह्निवर्ज्यास्तिथयः शुभाः स्युः ॥ भौमार्कनन्दा न शुभाः क्वचित्तु शस्तास्त्रयोपि क्रमतश्चतुर्णां ॥ ४ ॥ विप्रे रविर्भूमिसुतो महीपे विट्शूद्रयोर्भानुसुतः क्रमोयं ॥ हस्तद्वयं विष्णुयुगं च पौष्णयुगं मृगादित्ययुगं प्रशस्तं ॥ ५ ॥ वायव्यवारुणकभानि तथोत्तराश्च तिस्रो भवन्ति क्षुरकर्मणि मध्यमास्ताः ॥ दैवज्ञतः सकललग्नविशोधनादि ज्ञेयं यदा भवति गर्भयुता तु माता ॥ ६ ॥ चौलं न कार्यं त्वथ पञ्चमाब्दात्पूर्वं नचोर्ध्वं नियमो मतोयं ॥ वदन्ति केचिद्यदि गर्भपातः शिशोर्मृतिर्मौञ्जियुतं तदापि ॥ ७ ॥ चेद्गर्भिणी पञ्चममासतोऽर्वाङ् दोष ऊर्ध्वं स भवेदवश्यं ॥ गर्गोऽवदद्यस्य तु रोगलब्धिस्तन्मङ्गलं रोगविनाशने सत् ॥ ८ ॥ ॥ **संस्कार्यमातरि रजस्वलायां** ॥ संस्कर्तृपत्नी यदि पुष्पिणी स्यात्संस्कारमात्रं न तदा प्रकुर्यात् ॥ यज्ञोत्सवौ संकटके तु कुर्यात्संपूज्य लक्ष्मीं विधिवद्विधिज्ञः ॥ संस्कर्ता पितुरन्यश्चेन्माता यदि रजस्वला ॥ पञ्चमादिदिने कुर्याद्विवाहादिविधिं समं ॥ १० ॥ नान्दीश्राद्धं चेन्न जातं तदा तु कुर्यात्संस्कारं न कालान्तरे स्यात् ॥ नान्दीश्राद्धं चेत्कृतं लग्नशुद्धिरन्या न स्यात्तर्हि लक्ष्मीविधानं ॥ ११ ॥ ॥ **मण्डनमुण्डनविचारः** ॥ न मुण्डनं मण्डनतोऽर्धमब्दं गोत्रैकतायां यदि नाब्दभेदः ॥ व्रतं समावर्तनकं सचौलं केशान्तमेतानि तु मुण्डनानि ॥१२॥ मण्डनं विवाहादि ॥ ॥ **एकोदरापत्यसंस्कारविचारः** ॥ एकोदराणां न समानसंस्कृतिं संवत्सरान्तं विदधीत तत्पिता ॥ **अत्ररेणुः**—एकमातृकयोरेकवत्सरे पुरुषस्त्रियोः ॥ न समानक्रियां कुर्यान्मातृभेदे विधीयत इति । एवं न कुर्यात्किल मङ्गलत्रयम् ॥ ॥ **मङ्गलमध्ये आशौचे** ॥ आशौचपाते यदि संकटं तदा ॥१३॥ कूष्माण्डीभिर्ऋग्भिराज्यं च हुत्वा दत्वा विप्राग्र्याय गां वत्सयुक्तां ॥ कुर्यात्सर्वं मङ्गलं सिंहगेज्ये रेवोदक्तो मङ्गलं चाचरेन्न ॥ १४ ॥ चौले जाते जातक-

॥ ८१ ॥

र्मण्यवश्यं संतापनं चाचरेच्चैव कृच्छ्रं॥ भुक्त्वा विप्रोऽन्यत्र संस्कारमात्रे भुक्त्वा शुद्ध्येचोपवासाद्विजेन्द्रः ॥ १५॥ जाते कर्मणि । संतापनं सान्तपनं। संस्कारमात्रं त्विह कन्यकानाममन्त्रकं होमविधिः समन्त्रः ॥ होमोऽप्यमन्त्रो भवतीति केचिद्भवेन्न होमस्त्विति वृत्तिकारः ॥१६॥

अथ चौलप्रयोगः ॥ आचमनं । प्राणायामः । पवित्रधारणं ॥ देशकालौसंकीर्त्यशुभपुण्यतिथौ अस्यकुमारस्यबीजगर्भसमुद्भवैनोनिबर्हणेनबलायुर्वर्चोभिवृद्धिव्यवहारसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंचूडाकरणाख्यंकर्मकरिष्ये ॥ तदङ्गत्वेन स्वस्तिपुण्याहवाचनंअविघ्नपूजनंमंडपस्थापनंमातृकापूजनं वसोर्द्धारापूजनंआयुष्यमंत्रजपं नान्दीश्राद्धंचकरिष्ये तत्रनिर्विघ्नार्थंगणपतिपूजनंकरिष्ये इतिसंकल्प्यतानिकृत्वा ॥ चूडाकरणपूर्वांगतयात्रीन्ब्राह्मणान्भोजयिष्ये ॥ ततोबहिःशालायांस्थण्डिलेपञ्चभूसंस्कारपूर्वकंसभ्यनाम्नोऽग्नेःस्थापनं ॥ ततःमाताकुमारमादायाप्लाव्याहतेवाससीपरिधाप्याङ्कआधायपश्चादग्नेरुपविशति । ततो दक्षिणतोब्रह्मासनमास्तीर्येत्यादिचरुवर्जंआज्यभागान्तंप्रकृतिवत् ॥ तत्रविशेषः ॥ पात्रासादनानन्तरंउपकल्पनीयानि ॥ शीतोदकं ॥ उष्णोदकं ॥ नवनीतपिण्डः ॥ घृतपिण्डोदधिपिण्डोवा ॥ त्र्येणीशलली ॥ साग्राणिसप्तविंशतिकुशतरुणानि ॥ ताम्रपरिष्कृतआयसःक्षुरः ॥ आनडुहगोमयपिण्डः ॥ नापितः ॥ वरश्चेति ॥ प्राशनान्तेशीतास्वप्सूष्णाआसिंचति ॥ ॐउष्णेनवायउदकेनेह्यदितेकेशान्वप ॥ १ ॥ अथात्रनवनीतपिण्डंघृतपिण्डंदध्नोवाप्रास्यति ॥ ततआदायदक्षिणंगोदानमुन्दति ॥ ॐसवित्राप्रसूतादैव्याऽआपऽउन्दन्तुतेतनूं ॥ दीर्घायुत्वायवर्चसे ॥ ततस्त्रेण्याशलल्याविनीय ॥ त्रीणिकुशतरुणान्यन्तर्दधात्योषधइति ॥ ॐओषधेत्रायस्व ॥ १॥ शिवोनामेतिलोहक्षुरमादाय ॥ ॐशि-

वोनामासिस्वधितिस्तेपितानमस्तेऽअस्तुमामाहिᳫंसीः ॥ १ ॥ निवर्तयामीति प्रवपति । संछ्रयतीत्यर्थः ॥ ॐनिवर्तया-
म्यायुषेन्नाद्यायप्रजननायरायस्पोषायसुप्रजास्त्वायसुवीर्याय ॥ १ ॥ सकेशानिप्रच्छिद्य ॥ ॐयेनावपत्सविताक्षुरेण-
सोमस्यराज्ञोवरुणस्यविद्वान् ॥ तेनब्रह्माणोवपतेदमस्यायुष्यंजरदष्टिर्यथासत् ॥ १ ॥ आनडुहेगोमयपिण्डेप्रास्यत्यग्ने-
रुत्तरतोध्रियमाणे । एवंद्विरपरंतूष्णीं ॥ उन्दनं ॥ विनयनं ॥ त्रिकुशतरुणांतर्धानं ॥ संछ्रयीकरणं ॥ छेदनं ॥ गोमयपि-
ण्डेप्रासनं ॥ इतरयोश्चोंदनादि । अथपश्चात्र्यायुपमिति ॥ पश्चिमंगोदानमुन्दति ॥ ॐसवित्राप्रसू० वर्चसे ॥ १ ॥
त्र्येण्याशलल्याविनीयत्रीणिकुशतरुणान्यन्तर्दधाति ॥ ॐओषधेत्रायस्व ॥ तूष्णींक्षुरादानं । मन्त्रेणपूर्वंगृहीतत्वात् ॥ एक-
द्रव्येकर्मावृत्तौसकृन्मन्त्रवचनमितिश्रौतपरिभाषासूत्रात् । निवर्तयामीतिप्रवपति ॥ ॐनिवर्तयाम्यायुषेसुवीर्याय ॥ त्र्यायु-
षमितिसकेशानिप्रच्छिद्य ॥ ॐत्र्यायुषं० ॥ आनडुहेगोमयपिंडेप्रास्यत्यग्नेरुत्तरतोध्रियमाणे ॥ एवं द्विरपरंतूष्णीं ॥ उन्दनं
विनयनमित्यादिपूर्ववत् ॥ अथोत्तरंगोदानसुन्दति ॥ ॐसवित्राप्रसूता० ॥ त्र्येण्याशलल्याविनीय ॥ त्रीणिकुशतरुणान्य-
न्तर्दधात्योषधइति ॥ ॐओषधेत्रायस्व ॥ तूष्णींक्षुरादानं ॥ निवर्तयामीतिप्रवपति ॥ ॐनिवर्तया० ॥ अथोत्तरतोयेन-
भूरिरितिसकेशानिप्रच्छिद्य ॥ ॐयेनभूरिश्चरादिवंज्योक्चपश्चाद्धिसूर्यं ॥ तेनतेवपामिब्रह्मणाजीवातवेजीवनायसुश्लोक्या-
यस्वस्तये ॥ १ ॥ आनडुहेगोमयपिंडेप्रास्यत्यग्नेरुत्तरतोध्रियमाणे । एवंद्विरपरंतूष्णीं ॥ उंदनंविनयनमित्यादिपूर्ववत् ।
ततस्त्रिःक्षुरेणशिरःप्रदक्षिणंपरिहरति ॥ ॐयत्क्षुरेणमज्जयतासुपेशसावप्तावावपतिकेशान्छिन्धिशिरोमास्यायुःप्रमोषीः ॥ १ ॥

ततस्ताभिरद्भिःशिरःसमुद्यनापितायक्षुरंप्रयच्छति ॥ ॐअक्षण्वन्परिवप ॥ यथामङ्गलंकेशशेषकरणमित्यस्यायमर्थः ॥ कुलव्यवस्थयाशिखास्थापनं ॥ केचित्पंचशिखाः ॥ केचिदेकशिखाः ॥ यस्ययथाप्रसिद्धिस्तस्यतथाशिखास्थापनं ॥ यथा ॥ केशशेषंततःकुर्याद्यस्मिन्गोत्रेयथोचितं ॥ कुर्वन्त्यन्येशिखामात्रंमङ्गलार्थमिहक्वचित् ॥ कम्बुजानांवसिष्ठानांदक्षिणेकारयेच्छिखां ॥ द्विभागेत्रिःकश्यपानांमुण्डाश्चभृगवोमताः ॥ पञ्चचूडाआङ्गिरसएकावाजसनेयिनामिति ॥ ततोवस्त्रादिनाअनुगुप्तमेतं सकेशंगोमयपिण्डंगोष्ठेपल्वलउदकान्तेवा ॥ आचार्यायउपकल्पितंवरंददाति ॥ वरोभिलषितंद्रव्यं ॥ चूडाकरणाङ्गतयाविहितोयं वरःप्रतिगृह्यतामिति ॥ अतएवास्मिन्कर्मणिवरदानार्थंकर्तुरन्यआचार्योप्यपेक्षित इतिनृसिंहीये ॥ पित्रादेरेवाचार्यत्वेनेतरस्येतिकर्कादयः । दशब्राह्मणभोजनं । दक्षिणादानं । आशीर्ग्रहणं । अनेनचूडाकरणाख्येनकर्मणाश्रीपरमेश्वरःप्रीयतां ॥ मातॄणांमण्डपदेवतानांचविसर्जनं ॥ स्त्रीणामपिजातकर्मादिचूडाकरणान्तास्तूष्णींसंस्काराःकार्याः । होमस्तुसमन्त्रकः । तथाचरेणुः—जातकर्मादिकाःस्त्रीणांचूडाकर्मान्तिकाःक्रिया ॥ तूष्णींहोमःसमन्त्रःस्यादितिगोभिलभाषितमिति ॥ याज्ञवल्क्यः—तूष्णीमेताःक्रियाःस्त्रीणांविवाहस्तुसमन्त्रकइति ॥ इतिचूडाकरणं ॥

---

१ अत्रापरार्कः—उदङ्मुख.प्राङ्मुखोवावपनकारयेत्सुधी । केशश्मश्रुलोमनखान्युदक्संस्थानिवापयेत् ॥ दक्षिणकर्णमारभ्य वर्मार्थपापसंचये ॥ शिखावंत शिरोवपेदिति । नवसंस्कारेप्रथमेचूडाकर्मोपनयनादौ । प्रायश्चित्तार्थस्यद्वितीयोपनयनादे. पापसंचयइत्यनेनसंग्रहात् । अत्ररेणुः—वसिष्ठादक्षिणेभागेउभयत्रात्रिकश्यपौ ॥ शिखा कुर्वन्त्याङ्गिरसः शिखाभि पञ्चभिर्युतं ॥ परित.केशपंक्त्यावामुण्डाश्चभृगवोमताः ॥ कुर्वन्त्यन्येशिखामात्रमङ्गलार्थमिहक्वचिदिति ॥

**अथ दत्तपुत्रविधानं** ॥ **वसिष्ठः**—शुक्रशोणितसंभवः पुरुषो मातापितृनिमित्तकस्तस्य प्रदानविक्रयपरित्यागेषु मातापितरौ प्रभवतो नत्वेकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा स हि संतानाय पूर्वेषां नतु स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वाऽन्यत्रानुज्ञानाद्भर्तुः पुत्रं परिग्रहीष्यन्बन्धूनाहूय राजनि चावेद्य निवेशनस्य मध्ये व्याहृतिभिर्हुत्वा अदूरबान्धवं बन्धुसन्निकृष्टमेव प्रतिसंगृह्णीयात्संदेहे चोत्पन्ने दूरबान्धवं शूद्रमिव स्थापये-द्विज्ञायते ह्येकेन बहवस्त्रायन्तामिति तस्मिंश्चेत्प्रतिगृहीत औरस उत्पद्येत चतुर्थभागभागी स्याद्दत्तक इति ॥ **अस्यार्थः**—मातापितरौ प्रभवत इति । तयोरेव दानाधिकार इत्यर्थः । तथाच **याज्ञवल्क्यः**—दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेदिति ॥ अन्यत्रा-नुज्ञानाद्भर्तुरिति । इदंच भर्तृसत्वे । अन्यथा—दद्यान्माता पिता वा यं स पुत्रो दत्रिमः स्मृत इतिवत्स व्यासवचोविरोधः स्यादिति **कमलाकरभट्टाः** ॥ तथा न ज्येष्ठं पुत्रं दद्यादिति **कौस्तुभे** ॥ बन्धूनिति आत्मपितृमातृबन्धून् । राजनि ग्रामाधीशे । निवेशनं गृहं । व्याहृतिभिः व्यस्ताभिः समस्ताभिश्च । आज्यभागान्ते आहुतिचतुष्टयं हुत्वेत्यर्थः । अदूरबान्धवं बन्धुसन्निकृष्टमेव संप्रतिगृह्णीयादिति । अदूर-श्चासौ बान्धवश्चेत्यदूरबान्धवः । सन्निकृष्टः सपिण्ड इत्यर्थः । सान्निध्यं च द्विधा । सगोत्रतया स्वल्पपुरुषान्तरेण च । तत्र सगोत्रः स्वल्पपुरुषान्तरः सपिण्डो मुख्यः । तदभावे बहुपुरुषान्तरोऽपि सगोत्रः सपिण्डः । तदभावे असमानगोत्रः सपिण्डः । तस्याप्यभावे बन्धुसन्निकृष्टः । बन्धूनां सपिण्डानां सन्निकृष्टः सपिण्डः । स्वस्यासपिण्डः सोदक इत्यर्थात्पर्यवस्यति । तत्रापि सन्निकर्षो द्विविधः । सगो-त्रतया स्वल्पपुरुषान्तरेण च । स्वस्यासपिण्डोपि स्वसमानगोत्रः स्वल्पपुरुषान्तरः सपिण्डानां सपिण्डो मुख्यः । तदभावे बहुपुरुषान्त-रोपि सगोत्रः सपिण्डसपिण्डः सोदक इत्यर्थः । सपिण्डसोदकाभावे समानगोत्रः आएकविंशात् ग्राह्यः । तदभावे असमानगोत्रः असपि-ण्डोऽपि ग्राह्यः । ब्राह्मणानां सपिण्डेषु कर्तव्यः पुत्रसंग्रहः । तदभावेऽसपिण्डो वा अन्यत्र तु न कारयेदिति **शौनकीयात्** ॥ संदेहे

चोत्पन्ने दूरबान्धवं शूद्रमिव स्थापयेदिति वासिष्ठाभिधानाच्च ॥ तत्राऽसगोत्रसपिण्डेषु दौहित्रभागिनेयौ वर्ज्यौ। एवं विरुद्धसंबन्धापत्त्या पुत्रबुद्ध्यनर्हो मातुलो न ग्राह्यः। अतएव सगोत्रसपिण्डेषु भ्राता पितृव्यो वा न ग्राह्यः। शूद्रस्य तु दौहित्रभागिनेयौ ग्राह्यौ।–दौहित्रो भागिनेयश्च शूद्राणां विहितः सुतः। ब्राह्मणादित्रये नास्ति भागिनेयः सुतः क्वचिदिति वचनात्। अत्रापि भागिनेयपदं पुत्रसदृशानां सर्वेषामुपलक्षणं। विरुद्धसंबन्धस्य समानत्वात्। विरुद्धसंबन्धश्च नियोगादिना स्वयमुत्पादनायोग्यत्वं। यथा विरुद्धसंबन्धो विवाहे **गृह्यपरिशिष्टे** च दर्शितः। दंपत्योर्मिथः पितृमातृसाम्यं विरुद्धसंबन्धो यथा भार्यास्वसुर्दुहिता पितृव्यपत्नीस्वसा चेति। **अस्यार्थः**। यत्र दंपत्योर्वधूवरयोर्पितृमातृसाम्यं–वध्वा वरः पितृस्थानीयो भवति, वरस्य वा वधूर्मातृस्थानीया भवति, तादृशो विवाहो विरुद्धसंबन्धः। तत्र यथाक्रममुदाहरणद्वयं। भार्यास्वसुर्दुहिता शालिकापुत्री, पितृव्यपत्नीस्वसा पितृव्यपत्नीभगिनीचेति। तथा प्रकृते विरुद्धसंबन्धः पुत्रो वर्जनीय इति। यतो रतियोगः संभवति तादृशः कार्य इति यावत्॥ दत्तकश्च सजातीय एव ग्राह्यः। **तथाच मनुः**—माता पिता वा दद्यातां यमद्भिः पुत्रमापदि। सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्रिमः सुत इति। सदृशं सजातीयं। **योगियाज्ञवल्क्योपि**—सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिरिति॥ संदेहे चोत्पन्न इति। दूरे बान्धवो यस्यासौ दूरबान्धवः अत्यन्तदेशभाषाविप्रकृष्टः। तादृशस्य परिग्रहे कुलशीलादिविषये संदेहो भवत्येव। तस्मिन्सति तं शूद्रमिव स्थापयेत्। यावन्निर्णयं न व्यवहरेदित्यर्थः। तत्र हेतुतया श्रुतिमाह विज्ञायत इति। एकेन पुत्रेण बहवः पित्रादयस्त्रातव्या इत्येतदर्थं पुत्रपरिग्रहः। नत्वेकेन बहवः पातनीयाः। संदेहपक्षे पातनस्यापि संभवस्तस्मात्तं न व्यवहरेत् पाक्षिकस्यापि दोषस्य परिहार्यत्वात्। तस्मिन्निति। तस्मिन्दत्तके प्रतिगृहीते यद्यौरस उत्पद्येत तदा दत्तकश्चतुर्थांशं लभते न समांशमिति॥ इति **वासिष्ठार्थः**॥ ॥ यद्यप्यत्रोपवासादयो धर्मा नोक्तास्तथाप्यविरोधिनस्ते सर्वशाखाप्र-

त्ययन्यायेन शौनकाद्युक्ताश्चात्र ग्राह्याः ॥ तथाच शौनकः—अपुत्रो मृतपुत्रो वा पुत्रार्थं समुपोष्य च ॥ वाससी कुण्डले दत्वा उष्णीषं चाङ्गुलीयकं ॥ बन्धूनन्नेन संभोज्य ब्राह्मणांश्च विशेषतः ॥ दातुः समक्षं गत्वा तु पुत्रं देहीति याचयेत् । देवस्यत्वेति मन्त्रेण हस्ताभ्यां परिगृह्यच ॥ अङ्गादङ्गेत्यृचं जप्त्वा आघ्राय शिशुमूर्धनीति ॥ दातुः समक्षं गत्वेति व्याहृतिहोमोत्तरं ॥ तथाच निर्णयसिंधौ । सच होमोत्तरं जलपूर्वकं देयः । न वाङ्मात्रेण । व्याहृतिभिर्हुत्वा प्रतिगृह्णीयादिति वसिष्ठोक्तेरिति ॥

अथ वसिष्ठोक्तोदत्तकपुत्रपरिग्रहविधिः ॥ ॥ पूर्वेद्युः पवित्रपाणिःसन्स्वःकरिष्यमाणपुत्रप्रतिग्रहपूर्वांगतयोपवासंकरिष्ये इतिसंकल्पपूर्वकमुपवासंकृत्वा ॥ प्रातर्नित्यानिनिर्वर्त्य ॥ आचमनं ॥ प्राणायामः ॥ पवित्रधारणं ॥ देशकालौ-संकीर्त्य ॥ ममाप्रजास्त्वप्रयुक्तपैतृकऋणापाकरणपुंनामनरकत्राणद्वाराश्रीपरमेश्वरप्रीत्यर्थं वसिष्ठोक्तविधिनापुत्रप्रतिग्रहं करिष्ये ॥ तदङ्गत्वेनस्वस्तिपुण्याहवाचनं आचार्यवरणं विष्णुपूजनंबन्धुवर्गब्राह्मणेभ्योऽन्नदानंचकरिष्ये ॥ तत्रादौनिर्वि० गणपतिपूजनंकरिष्ये ॥ गणपतिपूजनं ॥ भोब्राह्मणाःकरिष्यमाणपुत्रप्रतिग्रहाख्यस्यकर्मणःपुण्याहं ॥ एवमग्रे । पुण्याह-वाचनान्तेआचार्यंवृत्वामधुपर्कादिनासंपूज्य ॥ विष्णुंषोडशोपचारैःसंपूजयेत् ॥ ततोबंधुवर्गब्राह्मणेभ्योऽन्नदानं ॥ तत्र-संकल्पः । पुत्रप्रतिग्रहपूर्वांगत्वेनब्राह्मणान्बंधुवर्गांश्चभोजयिष्ये । ततःस्थण्डिलपञ्चभूसंस्कारपूर्वकमग्निप्रतिष्ठापनं ॥ ततोदक्षिणतोब्रह्मासनमास्तीर्येत्यादिचरुवर्जमाज्यभागान्ते ॥ आज्येनव्यस्तसमस्तव्याहृतिभिर्होमः । ॐभूःस्वाहा ॥ इदमग्नयेनमम ॥ १ ॥ ॐभुवःस्वाहा ॥ इदंवायवेनमम ॥ २ ॥ ॐस्वःस्वाहा ॥ इदंसूर्यायनमम ॥ ३ ॥ ॐभूर्भुवःस्वः

स्वाहा ॥ इदंप्रजापतयेनमम ॥ ४ ॥ ततोभूराद्यानवाहुतयः ॥ स्विष्टकृदादिप्रणीताविमोकांतं ॥ ततोब्राह्मणैःसहदातुः समक्षंगच्छेत् ॥ एतस्मैपुत्रंदेहीत्याचार्योयाचेत ॥ ॥ ततोदाता आचम्य ॥ प्राणानायम्य ॥ देशकालौसंकीर्त्य ॥ श्रीपरमेश्वरप्रीत्यर्थंपुत्रदानंकरिष्ये ॥ इतिसंकल्प्य ॥ गणपतिंसंपूज्य ॥ यथाशक्तिचंदनादिनाप्रतिगृहीतारंसंपूज्य ॥ देशकालौस्मृत्वा ॥ इमंपुत्रंतवपैतृकऋणापाकरणपुन्नामनरकत्राणसिद्ध्यर्थंआत्मनश्चश्रीपरमेश्वरप्रीत्यर्थंतुभ्यमहंसंप्रददेनमम ॥ प्रतिगृह्णातुपुत्रंभवान् ॥ इत्युक्त्वाप्रतिग्रहीतृहस्तेसाक्षतंजलंक्षिपेत् ॥ दानसांगतासिद्ध्यर्थंयथाशक्तिहिरण्यंदद्यात् ॥ ततःप्रतिग्रहीता ॐदेवस्यत्वास० स्ताभ्यांप्रतिगृह्णामिइतिमंत्रेणहस्तद्वयेनप्रतिगृह्य ॥ स्वांकेउपवेश्य ॥ अंगादंगादितिशिशुंमूर्धन्यवजिघ्रेत् ॥ ॐअंगादंगात्सं०शतं ॥ सकृन्मंत्रेणद्विस्तूष्णीं ॥ ततोवस्त्रकुंडलाद्यलंकृतंपुत्रंगीतवाद्यैःस्वस्तिमंत्रैश्चस्वगृहमानीय ॥ पादौप्रक्षाल्य ॥ आचम्य ॥ आचार्यदक्षिणतःस्वयं ॥ स्वदक्षिणेभार्या ॥ भार्योत्संगेपुत्रइत्युपविशेत् ॥ स्वकुलाचारोचितनामकरणंयथोक्तंकार्यम् । ततआचार्यंसंपूज्य ॥ धेनुवस्त्रादिदत्वा ॥ ब्राह्मणभोजनं ॥ आशीर्ग्रहणं ॥ भूयसीदानं ॥ कर्मेश्वरार्पणंकुर्यात् ॥ इति वसिष्ठोक्तोदत्तकपुत्रप्रतिग्रहविधिः ॥ ततःप्रागसंस्कृतस्यमातृकापूजनादिजातकर्मादिसंस्कारान्कुर्यादिति ॥

अथदत्तकन्याप्रतिग्रहः ॥ दत्तकन्याप्रतिग्रहेस्त्रीशूद्रकर्तृकेदत्तपुत्रविधानेचविशेषउक्तःकात्यायनेन ॥ अभ्रात्रवृद्धवयसोप्यसंपद्दत्तपालने ॥ कुलस्योद्धरणार्थायग्राह्यकन्यांविवाहयेत् इति दत्तकन्याग्रहणेऽविशेषः ॥ स्त्रीशूद्रयोस्तुविशेषः ॥ पराशरेणशूद्र-

कर्तृकहोमोविप्रद्वारैवोक्तस्तथापिब्राह्मणस्यशूद्रत्वबाधापत्तेः ॥ अतएव दातापौराणमन्त्रान् पठेत् ॥ कुलस्योद्धरणार्थायदेवाग्निद्विजसंनिधौ ॥ वंशविस्तरणार्थायप्रतिगृह्णाम्यहंसुतं ॥ १ ॥ कन्याविषयेउत्तरार्धेभेदः ॥ अप्रजास्त्वनिवृत्त्यर्थंकन्यासत्ताप्रगृह्यतामिति ॥ कन्याविषयेसंकल्पे-विशेषः ॥ अप्रजास्त्वनिरासार्थममसमस्तपितॄणांनिरतिशयानन्दवंशोद्धारकल्पोक्तफलावाप्तयेश्रीपरमेश्वरप्रीत्यर्थंएतत्कन्यायाःस्वकन्यारूपसत्ताकरणंकरिष्यइति संकल्पेऊहः ॥ अग्रेपिपुत्रप्रतिग्रहाङ्गत्वेनेत्यत्र कन्यासत्ताकरणाङ्गत्वेनेतिविशेषः ॥ आचार्योदातारंप्रतिएतस्यैकन्यांदेहीतियाज्ञांकुर्यात् ॥ ततोदात्रादेशकालसंकीर्तनान्ते तववंशोद्धारार्थंकन्यारूपसत्तासिद्ध्यर्थंचस्वसत्तानिवृत्तिपूर्वकंतुभ्यंएतत्कन्यानिवेदनंकरिष्ये-इत्यूहः ॥ होमोत्तरं इमाकन्यांतवअप्रजास्त्वनिरासार्थंत्वयासहैकविंशतिपुरुषोद्धरणार्थंआत्मनश्चमुक्तयेवंशोद्धारकल्पोक्तफलावाप्तयेश्रीपरमेश्वर-प्रीतयेआत्मसत्तानिवृत्तिपूर्वकंतुभ्यंकन्यारूपसत्तामहंसंप्रददेनमम ॥ इतिकन्याविषयेप्रतिग्रहीतृसमीपेजलेजलंक्षिपेन्नहस्ते ॥ कन्यारूपसत्तां-प्रतिगृह्णातुभवानितिवदेत् ॥ अलंकारदानेचकन्यकापरिधानीयवस्त्रालंकाराणांदानमितिविशेषः ॥ अन्यत्सर्वंसमानं ॥

अथविद्यारंभः ॥ धर्मनौकायाम्—विद्यारंभःपञ्चमेब्देशुभःस्यात्कुंभंहित्वासौम्यसंज्ञेऽयनेर्के ॥ हस्तादित्येवायुमित्रेच शक्रेपौष्णेदस्रेत्वाष्ट्रविष्णौशुभःसः ॥ १ ॥ मन्दाऽऽरलग्नांशदिनं विहायराशौस्थिरेकृष्णदिगन्तमेव ॥ रिक्ताष्टमीषष्ठ्यनलं-विहायशुद्धेऽष्टमेचाक्षरस्वीकृतिःस्यात् ॥२॥ ॥ अथप्रयोगः ॥ ततःपञ्चमेवर्षे ज्योतिःशास्त्रोक्त उदगयने गुरुशुक्रास्तरहिते शुभमासे शुक्लपक्षे शुभदिने सुमुहूर्ते यजमानःशिशुनासहमङ्गलंस्नात्वाऽहतेवाससीपरिधायालंकृत्यधृतमङ्गलतिलकःशुभास-नउपविश्याचम्यप्राणानायम्यदेशकालसंकीर्तनांतेअस्यशिशोःलेखनवाचनादिविपुलविद्याज्ञानप्राप्तयेविद्यारंभंकरिष्ये ॥ तत्र

निर्विघ्नार्थंगणपतिपूजनंकरिष्येइतिसंकल्प्यकृत्वा ॥ ततस्तंदुलाष्टदलेगणेशंसरस्वतींकुलदेवतांगुरुंलक्ष्मीनारायणंचावाह्यअ-
क्षतपुंजेषुपंक्तिरूपेणनारदंपाणिनिंपतंजलिंसांख्यंकात्यायनंपारस्करंयास्कंकपिंजलंगोभिलंजैमिनिंविश्वकर्माणंआचार्यंव्यासं
चावाह्य ॥ स्वविद्यासूत्रंव्याकरणंभाष्यादिकंचसंस्थाप्य ॥ नाममन्त्रेणषोडशोपचारैःसंपूज्यप्रार्थयेत् ॥ सर्वविद्येत्वमाधारः
स्मृतिज्ञानप्रदायक ॥ प्रसन्नोवरदोभूत्वादेहिविद्यांस्मृतिंयशइति ॥ अनयापूजयाआवाहितदेवताःप्रीयंतां ॥ ततःस्थंडि-
लेपंचभूसंस्कारपूर्वकंलौकिकाग्निंप्रतिष्ठाप्यसंपूज्य ॥ ततोदक्षिणतोब्रह्मासनाद्याज्यभागांतंकृत्वा ॥ आज्येनावाहितदेव-
तानामष्टाष्टसंख्याहुतीर्हुत्वा ॥ ततोमहाव्याहृत्यादिस्विष्टकृदंतादशाहुतयः ॥ ततःसंस्रवप्राशनं ॥ पवित्राभ्यांमार्जनं ॥
अग्नौपवित्रप्रतिपत्तिः ॥ ब्रह्मणेपूर्णपात्रदानं ॥ प्रणीताविमोकः ॥ आपःशिवेतिमन्त्रेणविमोकजलेनमूर्धानमभिषिंचेयुः ॥
एवंहोमशेषंसमाप्य ॥ ततोबालकआवाहितदेवताअध्यापनगुरुंचनमस्कृत्य ॥ अध्यापनगुरोःसमीपेप्रत्यङ्मुखउपविश्यर-
जतादिपाटिकायांकुंकुमादिकंप्रसार्यतदुपरिसुवर्णशलाकया॥ श्रीगणेशायनमः ॥ श्रीसरस्वत्यैनमः ॥ श्रीकुलदेवतायैनमः ॥
श्रीगुरुभ्योनमः ॥ श्रीलक्ष्मीनारायणाभ्यांनमः ॥ ॐनमःसिद्धं ॥ इत्यादिलिखेत् ॥ पूजनमंत्रः ॥ ॐपावकानःसरस्व-
तीवाजेभिर्वाजिनीवती ॥ यज्ञंवष्टुधियावसुः ॥ ॐलिखितसरस्वत्यैनमः इतिमन्त्रेणषोडशोपचारैःसंपूजयेत् ॥ गुरुः
कुमारहस्तात्त्रिवारंलेखनवाचनादिकंकारयेत् ॥ अनन्तरंकुमारःदेवताक्षरंगुरुंचत्रिःप्रदक्षिणीकृत्यगुरुंसंपूज्यतस्मैचोष्णीषं

समर्प्यनमस्कृत्य ॥ आचार्यंगन्धादिभिःसंपूज्यतस्मैअन्यब्राह्मणेभ्यश्चदक्षिणांदत्वातैराशिषोगृहीत्वा सुवासिन्याकुमारंनीराज्य ॥ देवताविंसृज्य ॥ अन्येभ्यस्तांबूलादिकंप्रदापयेत् ॥ इतिविद्यारम्भविधिः ॥

अथानुपनीतधर्माः ॥ **धर्मनौकायां अनुपनीतेकामचारादि**—यावन्मौञ्जीबन्धनं कामचारभक्षौ वादो भूरिदोषाय नैव ॥ दौर्ब्राह्मण्यापादकं गृञ्जनादि ग्राह्यं सूत्रैः कामभक्षोदितं च ॥ १ ॥ अन्नाशनान्तं शिशुसंज्ञकः स्याच्चौलावसानं भवतीह बालः ॥ अग्रे कुमारो व्रतबन्धनान्तमभ्युक्षणाच्छुद्ध्यति यः शिशुः सः ॥ २ ॥ आचम्य शुद्धो भवतीह बालः स्नानात्कुमारः शुचितामुपैति ॥ दुष्टैर्युतः पातकिसूतिकाद्यैः स्पृष्टः स्पृशेच्चेन्नहि चाप्लवोस्ति ॥ ३ ॥ आप्लवः स्नानं ॥ इदं षष्ठवर्षात्पुरा नोर्ध्वमस्ति तदा स्पर्शयोगे भवेत्स्नानमेव ॥ इदं कामचारादिके तुल्यमेव शरा ५ द्धायनाद्रुद्र ११ वर्षात्पुरा तु ॥ ४ ॥ हायनं वर्षं ॥ प्रायश्चित्तं चेच्चरेत्तद्गुरुस्तन्मित्रं वातोऽन्यूनतायां न पापमिति ॥

**अथोपनयनम्** ॥ आचार्यस्य उप समीपे माणवकस्य नयनं उपनयनशब्देनोच्यत इति **गदाधरः**। उपनयनं च विधिना आचार्यसमीपनयनं अग्निसमीपनयनं वा सावित्रीवाचनं वा अन्यदङ्ग इति **स्मृत्यर्थसारे। तत्र पारस्करः**—अष्टवर्षं ब्राह्मणमुपनयेत्। गर्भाष्टमे वा। एकादशवर्षं राजन्यं। द्वादशवर्षं वैश्यं यथामङ्गलं वा। अष्टौ वर्षाण्यतीतानि यस्य सोऽष्टवर्षः। जन्मतो नवमेऽष्टमे वा वर्षे इत्यर्थः। एवमेकादशवर्षमित्यादौ। यथामङ्गलशब्दः शास्त्रान्तरोक्तकालवाचक इति। **धर्मनौकायां**—विप्रादिके नाग ८ शिवा ११ र्के ११ वर्षे शस्तं व्रतं स्यादथ कान्तिमिच्छोः ॥ अङ्के ९ थ षष्ठे धनकामुकस्य विद्यार्थिनः सप्तमहायने स्यात् ॥ १ ॥ ब्रह्मवर्चसकामस्य कार्यं

विप्रस्य पञ्चमे ॥ राज्ञो बलार्थिनः षष्ठे वैश्यस्यार्थार्थिनोऽष्टमे ॥ २ ॥ यः सर्वकामः खलु तस्य वर्षेऽष्टमे व्रतं स्यादथ केचिदूचुः ॥ विप्रस्य षष्ठं नहि शोभनं स्यादवोचदन्यो विपरीतमेतत् ॥ ३ ॥ आयुस्तेजो ब्रह्मवर्चस्वितां च ह्यन्नाद्याक्षे भूरिपश्वर्द्धिमिच्छोः ॥ वस्वं ८ का ९ श्वा ७ भ्रेन्दु १० रुद्रा ११ र्कवर्षे शस्तं मौञ्जीबन्धनं कामिनां स्यात् ॥ ४ ॥ अक्षमिन्द्रियं ॥ ॥ **अथ गौणकालः** ॥ स्वकालतः स्याद्द्विगुणं च यावद्विप्रादिकानामिह गौणकालः ॥ गजे ८ न्दुचन्द्रा ११ र्क १२ मितः स्वकालः सर्वे ततः स्युर्वृषला द्विजाद्याः ॥५॥ ॥ **अथर्तवः** ॥ विप्रं वसन्ते क्षितिपं निदाघे वैश्यं घनान्ते व्रतिनं विदध्यात् ॥ ॥ **अथमासाः** ॥ माघादिशुक्रान्तकपञ्चमासाः साधारणा वा सकलद्विजानां ॥ ६ ॥ ॥ **जन्ममासादौ मतभेदाः** । मासादि जन्मोत्थमशस्तमेव ज्येष्ठश्च मासः खलु पूर्वगर्भे ॥ जन्मोत्थमासे मतभेदमूचे यो राजमार्तण्ड इति प्रसिद्धः ॥ ७ ॥ जातं दिनं दूषयते वसिष्ठो ह्यष्टौ च गर्गो नियतं दशाऽत्रिः ॥ जातस्य पक्षं किल भागुरिश्च शेषाः प्रशस्ताः खलु जन्ममासि ॥ ८ ॥ जन्ममासे तिथौ भे च विपरीतदले सति ॥ कार्यं मङ्गलमित्याहुर्गर्गभार्गवशौनकाः ॥९॥ ॥ **गुरुबलं** । कुलीरचापान्त्यगतस्तु जीवो दुष्टोपि शस्तः शुभजीव एषः ॥ द्वि २ पञ्च ५ सप्त ७ ङ्क ९ भवै ११ श्च तुल्यो नेष्टस्तु शेषोऽर्चनतः स शस्तः ॥ १० ॥ ॥ **गुरुपूजादि** । गुरुस्त्रि ३ खा १० र्या ६ द्य १ गतः शुभः स्यात्सदर्चयाष्ट ८ व्यय १२ बन्धु ४ गः सः ॥ द्विरर्चनात्सन्नतिकालयोगेऽथवा मधौ मीनगते रवौ स्यात् ॥ ११ ॥ सिंहत्रये ५।६।७ वृषयुगे २।३ मकरे च संस्थो जीवोऽष्टमोपि नहि दुष्टफलं प्रयच्छेत् ॥ शान्त्याथवा शुभफलं प्रददाति सूरिः शान्तिः प्रयोगविधितः सकला विधेया ॥१२॥ ॥ **तिथयः** । शुक्ले द्वितीयासहिता तृतीया षष्ठीयुता पञ्चमिका प्रशस्ता ॥ दिग् १० द्वादशी १२ शाः ११ शुभदास्तु कालेऽतीते तु कामो १३ मुनि ७ कृष्णवह्निः १ ॥ १३ ॥ अतीते गौणकाले ॥ नैमित्तिकमनध्यायं गौणं शंसन्ति केचन ॥ ॥ **अथपक्षः** ॥ मुख्ये शुक्लः शुभः पक्षः कृष्णश्चान्त्यत्रिकं विना ॥१४॥ ज्ये-

ष्ठेऽपि सूर्ये मिथुने शुभं स्याद्दिना वसन्तं यदि चोपनीतः ॥ गलग्रहे च त्वपराह्णकेऽपि तदोपनीतिः पुनरप्यवश्यं ॥ १५ ॥ वसन्ते गलग्रहो न दोषायेत्यर्थः ॥ भवेदिति शेषः ॥ ॥ **गलग्रहाः दिनविभागश्च** । गलग्रहाः कामचतुष्टयं च १३।१४।१५।३०।१ रवित्रयं ७।८।९ कृष्णचतुर्थिकापि ॥ त्रिधा विभक्तस्य दिनस्य चान्त्योऽपराह्णसंज्ञो भवतीह भागः ॥ १६ ॥ यदोपनीतिः खलु नन्दभागे नीचेऽरिगेहे सति तारकेशे ॥ चरेत्पुनस्तर्ह्युपनीतिमेवानध्याययोगेऽपि चरेत्पुनः सा ॥ १७ ॥ ॥ **अनध्यायाः प्रदोषश्च** । युगादिमन्वादिषु चाष्टकासु पूर्वोत्तराभ्यां सहितासु चैवं ॥ भवत्यनध्याय इतीह सोपपदास्वपि स्यात् ॥ ॥ **सोपपदास्तिथयः** । अथ ता ब्रवीमि ॥ १८ ॥ सितज्येष्ठे द्वितीया च आश्विने दशमी सिता ॥ चतुर्थी द्वादशी माघे एताः सोपपदाः स्मृताः ॥ १९ ॥ प्रदोषोऽपि निन्द्योऽर्धरात्रौ यदा स्यात्कचित्सूर्य ७ कामौ १३ चतुर्थ्याद्ययामे ॥ अतीते तु काले मधोर्माधवस्य तृतीया सिता माघसप्तम्यपि स्यात् ॥ १९ ॥ शुभा फाल्गुने कृष्णपक्षे तृतीया क्वचिच्चेत्पुनः संस्कृतिस्तर्ह्यपि स्यात् ॥ अतीते तु काले भवेद्यः स एव पुनःसंस्कृतौ चास्ति कालो नचान्यः ॥ २० ॥ पुनःसंस्कृतिः स्यान्निमित्तान्त एव तदात्वे कृतौ पूर्व एवास्ति कालः ॥ यदा मेखला वेदपाठार्थमेव तदाप्युक्तकाले निमित्तान्ततो न ॥ २१ ॥ मेखला मौञ्जिः ॥ वेदपाठार्थं एकं वेदमधीत्य द्वितीयादिवेदाध्ययनार्थं ॥ ग्रहे रवीन्द्वोरवनिप्रकम्पे केतूद्गमोल्कापतनादिदोषे ॥ व्रते दशाहानि वदन्ति तज्ज्ञास्त्रयोदशाहानि वदन्ति केचित् ॥२२॥ ॥ **संकटे**—दाहे दिशां चैव धराप्रकम्पे वज्रप्रपातेऽथ विदारणे च ॥ केतौ तथोल्कांशुकणप्रपाते त्र्यहं न कुर्याद्व्रतमङ्गलानि ॥२३॥ वेदव्रतोपनयने स्वाध्यायाध्ययने तथा ॥ न दोषो याजुषां सोपपदास्वध्ययनेऽपि च ॥ इदमपि संकटे ॥ ॥ **अथनक्षत्राणि** ॥ हस्तत्रये पुष्यधनिष्ठयोश्च पौष्णाश्विसौम्याऽदितिविष्णुभेषु ॥ मित्रोत्तरारोहिणिभेषु शस्तः पुनर्वसौ नेति वदन्ति केचित् ॥ २५ ॥ विप्रस्यैवेति शेषः ॥ हस्तत्रयाहिश्रुतिमूलपूर्वा ऋचां वरिष्ठा अथ याजुषां च ॥ मैत्रार्कपौष्णादितिपुष्यभै-

स्तथा मृदुध्रुवैर्मौञ्जिनिबन्धनं सत् ॥ २६ ॥ हरीशार्कपुष्योत्तरावासवाद्यैः शुभं सामगानां स्मृतं मौञ्जिकर्म ॥ धनिष्ठार्कमैत्रादितिष्विन्दुपौष्णे शुभं मौञ्जिकर्मान्त्यवेदोद्भवस्य ॥२७॥ आद्यं अश्विनी ॥ ॥ **अथवाराः** ॥ जीवज्ञशुक्राः शुभदा व्रते स्युश्चन्द्रार्कवारौ किल मध्यमौ स्तः ॥ श्रेष्ठः कुजः सामगबाहुजानां सर्वत्र शाखेशदिनं प्रशस्तं ॥२८॥ ॥ **अथ शाखाधिपाः** । शाखाधिपाः सूरिसितौ कुजज्ञौ लग्नं बलं चास्य सदा शुभं स्यात् ॥ विप्राधिनाथौ गुरुभार्गवौ स्तः क्षत्रे कुजेनौ च विशां च चन्द्रः ॥ २९ ॥ गुरुज्ञभौमार्कदिनानि केचित्क्रमेण शस्तानि जगुश्चतुर्षु ॥ चतुर्षु ऋगादिषु ॥ विलग्नशुद्ध्यादि तु दैवविद्भ्यो ॥ ॥ **मेघगर्जने**—व्रतेह्नि चेद्गर्जनता तदा तु ॥३०॥ मृगादि-शक्रान्तगते रवौ तं वदन्ति कालं किल गर्जनादेः ॥ न तत्र दोषो व्रतबन्धनादावन्यत्र दोषोस्ति तु गर्जनादेः ॥ ३१ ॥ नान्दीश्राद्धं चेत्कृतं प्रातरेव मेघोद्धोषस्तर्हि ऋग्वेदिनां स्यात् ॥ मौञ्जीबन्धे नेतरेषां भवेत्स सायं मेघोद्गर्जने वृष्टियोगे ॥ ३२ ॥ चरुं दिवैव श्रपये-दवश्यं पक्के चरौ नास्ति हि दोषजातं ॥ चरावपक्वेऽध्ययनस्य विघ्नं बटोर्भवेत्तत्र तु शान्तिरुक्ता ॥ ३३ ॥ नान्दीश्राद्धात्पुरा मेघगर्जने न व्रतं भवेत् ॥ शान्तिस्त्वाकरतो ज्ञेया नोक्ता विस्तरभीतितः ॥ ३४ ॥ ॥ **अथोपनेतारः** ॥ पिताधिकारी प्रथमं ततः स्यात्पितामहो ज्येष्ठसहोदरश्च ॥ पितृव्यवृद्धावपि गोत्रजश्च ज्ञातिश्च सर्वो ह्यधिकारिवर्गः ॥ ३५ ॥ विभक्ततायामविभक्ततायां क्रमेण पितृव्यसहोदरौ च ॥ पितामहानन्तरमेव योग्यावियं व्यवस्था कमलाकरोक्ता ॥ ३६ ॥ एतत्सर्वं क्षत्रियादेर्नहि स्याद्विद्यादाने नाधिकारोस्ति तेषां ॥ विप्रो मौञ्जीबन्धसंस्कारकर्ता पौरोहित्यं यत्कुले यस्य चास्ति ॥ ३७ ॥ इति ॥

**अथ बटोर्वेदिका** ॥ प्राक्पश्चिमोर्ध्वं पदषट्कमुक्तमुदीच्ययाम्यानि पदानि पञ्च ॥ एवं गुरो ज्योतिषरत्नवेदिका बटोः शतायुर्मुनयो वदन्ति ॥ **पक्षान्तरमाह**—आचार्यस्य पदैः षड्भिश्चतुर्भिरथवा करैः ॥ विस्तृता च बटोर्वेदी चतुर्हस्ता करोन्नता ॥ इति ॥ ॥ **अथ ब-**

टो: परिधानवस्त्राणि। पारस्करः—वासाꣳसि शाणक्षौमाविकानि। ब्राह्मणक्षत्रियविशां त्रयाणां शाणक्षौमाविकानि वासांसि वस्त्राणि यथासंख्यं परिधानार्थं भवन्ति ॥ शणमयं शाणं। क्षौमं क्षुमा अतसी तद्विकारमयं। आविकं अविर्मेषस्तस्य आविकं मेषरोमनिर्मितं ॥ गौतमः—सर्वेषां कार्पासं वाऽविकृतमिति ॥ वसिष्ठः—शुक्लमहतं वासो ब्राह्मणस्य माञ्जिष्ठं क्षौमं क्षत्रियस्य पीतं कौशेयं वैश्यस्येति। कारिकायामप्येवं। कौशेयपट्टविशेष इति पारिजाते ॥ ॥ अथ कृष्णाजिनलक्षणं ॥ पारस्करः—एणेयमजिनमुत्तरीयं ब्राह्मणस्य। एणी हरिणी तस्या इदमैणेयं चर्म उत्तरीयं ब्राह्मणस्य ब्रह्मचारिणो भवति। अत्र कारिकायां प्रयोगरत्ने च विशेषः—त्र्यङ्गुलं बहिर्लोम यद्वा स्याच्चतुरङ्गुलं। एकखण्डं त्रिखण्डं वा धार्यं तदुपवीतवदिति ॥ रौरवꣳराजन्यस्य। क्षत्रियस्य ब्रह्मचारिणो रुरुनामारण्यसत्वविशेषस्तदीयं चर्म उत्तरीयं भवति ॥ आजं गव्यं वा वैश्यस्य। अजस्येदं चर्म आजं। यद्वा गव्यं गोरिदं चर्म गव्यं वैश्यस्योत्तरीयं भवति ॥ सर्वेषां वा गव्यमसति प्रधानत्वात्। असति यथोदिते चर्मणि सर्वेषां वर्णानां गव्यं चर्म भवति। कुत एतत्। पुरुषप्रधानत्वात् गव्यस्य चर्मणः ॥ ॥ अथ मौञ्जीलक्षणम् ॥ मौञ्जीरशना ब्राह्मणस्य। मुञ्जः शरस्तन्मयी मौञ्जी मेखला ब्राह्मणस्य ब्रह्मचारिणो भवति। धनुर्ज्या राजन्यस्य। धनुर्ज्या धनुषश्चापस्य ज्या गुणः मेखला क्षत्रियस्य ब्रह्मचारिणो भवति। सामर्थ्याच्च स्नायुमयी वेणुमयी वा। इयंच त्रिवृन्न कार्या ज्यात्वविनाशप्रसगात् ॥ मौर्वी वैशस्य। मुरुरिति तृणविशेषस्तन्मयी मौर्वी मेखला वैश्यस्य ब्रह्मचारिणो भवति ॥ मुञ्जाभावे कुशाश्मन्तकबल्वजानाम्। मुञ्जाभावे ब्राह्मणस्य कुशाश्मन्तकबल्वजानां संबन्धिनी रशना भवति। कुशमयी वा अश्मन्तकाख्यतृणमयी बाल्वजी वा भवतीति भर्तृयज्ञव्याख्याने लभ्यते। मुञ्जाभावशब्दोऽत्र धनुर्ज्यामौर्व्यभावोपलक्षणार्थं इति रेणुगर्गहरिहराः। मुञ्जाद्यभावे वर्णक्रमेण कुशाद्या ग्राह्या इति मदनपारिजाते ॥ ॥ मेखलाबन्धनप्रकारः—आचार्यस्त्रि-

गुणमेखलामादाय बटोः कटिदेशे प्रादक्षिण्येन त्रिर्वेष्टयति । तृतीयवेष्टने ग्रन्थयस्त्रयः पञ्च सप्त वा कार्याः । **तदुक्तं**—त्रिवृता मेखला कार्या त्रिवारं स्यात्समावृता ॥ तद्ग्रन्थयस्त्रयः कार्याः पञ्च वा सप्त वा पुनः ॥ अत्र प्रवरसंख्यानियमः । त्र्यार्षेयस्य ग्रन्थित्रयं पञ्चार्षेयस्य पञ्च सप्तार्षेयस्य सप्तेति **गर्गपद्धतौ** । वृद्धाचारोऽप्येवमेव । आचार्यकर्तृकमेखलाबन्धनं कुमारस्य मन्त्रपाठ इति **वासुदेवमुरारिमिश्रजयरामहरिहराः** ॥ ॥ **अथ दण्डलक्षणम्** ॥ पालाशो ब्राह्मणस्य दण्डः । ब्राह्मणस्य ब्रह्मचारिणः पालाशो दण्डो भवति ॥ बैल्वो राजन्यस्य । बैल्वः बिल्ववृक्षोद्भवो दण्डः क्षत्रियस्य ब्रह्मचारिणो भवति ॥ औदुम्बरो वैश्यस्य । वैश्यस्य ब्रह्मचारिण उदुम्बरवृक्षोद्भवो दण्डो भवति । आचार्येणानुक्तमपि दण्डमानमुपयुक्तत्वादविरोधित्वाच्छाखान्तरीयं ग्राह्यं । तच्च । केशसंमितो ब्राह्मणस्य दण्डो ललाटसंमितः क्षत्रियस्य घ्राणसंमितो वैश्यस्येति दण्डं प्रक्रम्योक्तमिति**जयरामभाष्ये** । इदं सूत्रं सूत्रत्वेन **हरिहरभाष्ये** तिष्ठति । भर्तृयज्ञकर्कादिग्रन्थेषु नोपलभ्यते अतः प्रक्षिप्तमेतदित्याभाति ॥ सर्वे वा सर्वेषाम् । अथवा सर्वे पालाशादयो दण्डाः सर्वेषां ब्राह्मणक्षत्रियविशामनियमेन भवन्ति । न प्रतिवर्णं जातिव्यवस्था भवति ॥

**अथ समिदाधाननिर्णयः** ॥ अथ समिदाधानमुपनयनाङ्गभूतं कर्तव्यं स्वस्वशाखोक्तविधिना । एवं प्रतिदिनमपि । अग्निकार्यं च कुर्वीत मेधावी तदनन्तरमिति **संवर्तस्मरणात्** । तदनन्तरं संध्योपासनानन्तरं । एतच्च कालद्वयेऽपि कार्यमित्याह **याज्ञवल्क्यः**—अग्निकार्यं ततः कुर्यात्संध्ययोरुभयोरपि ॥ केचित्सायमेवेच्छन्ति । **तथाच लौगाक्षिः**—सायमेवाग्निसमिन्धनमित्येक इति । **मनुस्तु**—दूरादाहृत्य समिधः संनिदध्याद्विहायसि ॥ सायं प्रातश्च जुहुयात्ताभिरग्निमतन्द्रितः ॥ दूरात् अन्यपरिगृहीतदेशादित्यर्थः । विहायसि मण्डपादौ ॥ **अन्यपरिगृहीतनिषेधमाह आपस्तम्बः**—यथाकथंचित्परपरिगृहीतमभिमन्यते स्तेनो हि प्रवहतीति । अत्र

विशेषः स्मृत्यर्थसारे—पुरास्तमयात्प्रागुदीचीं दिशि गत्वा समिधमाहरेदिति । पुरास्तमयादित्यभिधानादस्तमिते निषेधः । अत एवापस्तबः—नास्तमिते समिद्धरो गच्छति । समिन्नियमो वायुपुराणे—पालाश्यः समिधः कार्याः खादिर्यस्तदलाभतः ॥ शमीरोहितकाश्वत्थस्तदभावेऽर्कवेतसाविति ॥ ॥ अथ यज्ञोपवीतम् ॥ कार्पासक्षौमगोवालशणवल्कतृणादिकं ॥ यथासंभवमाधार्यमुपवीतं द्विजातिभिः ॥ १ ॥ शुचौ देशे शुचिः सूत्रं संहताङ्गुलिमूलके ॥ आवृत्य षण्णवत्या तत्त्रिगुणीकृत्य यत्नतः ॥ २ ॥ अब्लिङ्गकैस्त्रिभिः सम्यक्प्रक्षाल्योर्ध्ववृतं त्रिवृत् ॥ स्वप्रदक्षिणमावर्त्य सावित्र्या द्विगुणीकृतं ॥ ३ ॥ ततः प्रदक्षिणावर्तसमं स्यान्नवसूत्रकं ॥ त्रिरावेष्ट्य दृढं कृत्वा ब्रह्मविष्णवीश्वरान्नमेत् ॥ ४ ॥ तन्नवतन्तुकं कार्यं ॥ सावित्र्या त्रिगुणं कुर्यान्नवसूत्रं तु तद्भवेदिति देवलोक्तेः ॥ छन्दोगपरिशिष्टे—त्रिवृदूर्ध्ववृतं कार्यं तन्तुत्रयमधोवृतं ॥ वामावर्तवलितं त्रिगुणितं कृत्वा दक्षिणावर्तवलितं कार्यं स एकस्तन्तुः एवं त्रितन्तुकमित्यर्थः ॥ कात्यायनः—पृष्ठदेशे च नाभ्यां च धृतं यद्विन्दते कटिं ॥ तद्धार्यमुपवीतं स्यान्नातिलम्बं नचोच्छ्रितं ॥ ६ ॥ वसिष्ठः—नाभेरूर्ध्वमनायुष्यमधो नाभेस्तपःक्षयः ॥ तस्मान्नाभिसमं कुर्यादुपवीतं विचक्षणः ॥ ७ ॥ पारिजाते देवलः—उपवीतं बटोरेकं द्वे तथेतरयोः स्मृते ॥ एकमेव यतीनां स्यादिति शास्त्रस्य निश्चयः ॥ ८ ॥ बहूनि चायुःकामस्य ॥ मन्त्रः ॥ यज्ञोपवीतमिति वा व्याहृत्या वापि धारयेत् ॥ ९ ॥ यज्ञोपवीते द्वे धार्ये श्रौते स्मार्ते च कर्मणि ॥ तृतीयमुत्तरीयार्थं वस्त्राभावे तदिष्यते ॥ १० ॥ सावित्र्या दशकृत्वोद्भिर्मन्त्रिताभिस्तदुक्षयेत् ॥ विच्छिन्नं चाप्यधोयातं भुक्त्वा निर्मितमुत्सृजेत् ॥ ११ ॥ ॥ अथ सावित्र्युपदेशः ॥ पारस्करः—अथास्मै सावित्रीमन्वाहोत्तरतोऽग्नेः प्रत्यङ्मुखायोपविष्टायोपसन्नाय समीक्षमाणाय समीक्षिताय दक्षिणतस्तिष्ठत आसीनाय वैके पच्छोऽर्धर्चशः सर्वां च तृतीयेन सहानुवर्तयन् । संवत्सरेषण्मास्ये चतुर्विंशत्यहे द्वादशाहे षडहे त्र्यहे वा सद्यस्त्वेव

गायत्रीं ब्राह्मणायानुब्रूयादाग्नेयो वै ब्राह्मण इति श्रुतेरिति ॥ अस्मै ब्रह्मचारिणे । अग्नेरुत्तरतो दक्षिणतो वेति विकल्पः शाखान्तरपरः । काण्वमाध्यंदिनानां तूत्तरत एव । अथहैके दक्षिणतस्तिष्ठेत आसीनायवान्वाहुर्नतथाकुर्यादिति शतपथश्रुतेरिति । उपसन्नाय पादोपसंग्रहणपूर्वकं आचार्यं भजमानायेत्यर्थः ॥ उपसदनं नाम पादोपसंग्रहणं । तत्प्रकारः कौस्तुभे—असुकप्रवरान्वितामुकगोत्रोऽमुकशर्माभोअभिवादये इत्युक्त्वा स्वक्षिणोत्तरकर्णौ वामदक्षिणपाणिभ्यां स्पृष्ट्वा दक्षिणहस्तेन गुरोर्दक्षिणपादं वामेन वामं स्पृष्ट्वा शिरोवनमनमिति । एवं गुरुषु मातापित्रादिषु च अभिवादनपूर्वकपादस्पर्शात्मकमुपसंग्रहणं । वृद्धतरेषु तु अभिवादनमात्रं । वृद्धेषु नमस्कार इति । विस्तरश्च तत्रैव ज्ञेयः ॥ समीक्षमाणाय गुरुं । समीक्षिताय गुरुणा । सावित्रीं सवितृदेवत्यां । गायत्रीं गायत्रीछन्दस्कां । प्रणवव्याहृतिपूर्वां च तत्सवितुरिति ऋचं । तथाच गदाधरभाष्ये मदनपारिजाते लौगाक्षिः—ॐभूर्भुवःस्वरित्युक्त्वा तत्सवितुरितिसावित्रीं त्रिरन्वाह पच्छोऽर्धर्चशः सर्वामन्तत इति । तस्मादेतां गायत्रीमेव सावित्रीमनुब्रूयादिति शतपथश्रुतेः । पच्छः प्रथमं पादंपादं । अर्धर्चशः तदनु अर्धर्चमर्धर्चं । तृतीयेन सहानुवर्तयन् तदनु तृतीयेन वारेण बटुना सह सर्वामृचं आवर्तयन्पठन्सन् आचार्यो गायत्रीं सावित्रीमनुब्रूयादित्यर्थः । क्षत्रियवैश्ययोरेवं । तयोरपि आचार्यस्य शुश्रूषादिशिष्यगुणतारतम्यापेक्षाः । गायत्रीप्रदानस्य विकल्पेन संवत्सरादयः कालाः ब्राह्मणस्य तु गायत्रीप्रदानस्य सद्यःकाल एव ॥ त्रिष्टुभꣳराजन्यस्य राजन्यस्य क्षत्रियस्य त्रिष्टुभं त्रिष्टुपछन्दस्कां सावित्रीं देवसवितरिति ऋचं अनुब्रूयात् । जगतीं वैश्यस्य । वैश्यस्य जगतीं जगतीछन्दस्कां सावित्रीं विश्वारूपाणीति ऋचं अनुब्रूयादिति ॥ सर्वेषां वा गायत्रीं यद्वा सर्वेषां ब्राह्मणक्षत्रियविशां गायत्रीमेव सावित्रीं तत्सवितुरिति ऋचं अनुब्रूयात् ॥ ॥ अथाभिवादनप्रकारः ॥ तत्र याज्ञवल्क्यः—ततोऽभिवादयेद्वृद्धानसावहमिति ब्रुवन् ॥ ततोऽग्निकार्यादनन्तरमित्यर्थः । ब्रह्मपुराणे—उत्थाय मातापितरौ पूर्वमेवाभिवादयेत् ॥ आचार्यश्च

ततो नित्यमभिवाद्यो विजानता ॥ **मनुः**—लौकिकं वैदिकं चापि तथाध्यात्मिकमेववा ॥ आददीत यतो ज्ञानं तं पूर्वमभिवादयेत् ॥ अभिवादात्परं विप्रो ज्यायांसमभिवादयेत् ॥ असौनामाहमस्मीति स्वं नाम परिकीर्तयेत् ॥ विप्रेति द्विजोपलक्षणं ॥ **आपस्तम्बः**—स्वदक्षिणं बाहुं श्रोत्रसमं प्रसार्य ब्राह्मणोऽभिवादयेत् उरःसमं राजन्यो मध्यसमं वैश्यो नीचैः शूद्रः प्राञ्जलिः । **मनुः**—भोःशब्दं कीर्तयेदन्ते स्वस्य नाम्नोऽभिवादने ॥ नाम्नां स्वरूपभावो हि भोःशब्द ऋषिभिः स्मृतः ॥ आयुष्मान्भव सौम्येति वाच्यो विप्रोऽभिवादने ॥ अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्वाक्षरः प्लुतः ॥ अकारश्चास्य नाम्नोन्त इत्यस्यायमर्थः । अस्याभिवादकस्य नाम्नोन्ते योऽयमकारः । अकार इति स्वरमात्रोपलक्षणं सर्वेषां नाम्नामकारान्तत्वनियमाभावात् । स एवान्त्यस्वरः पूर्वाक्षरः पूर्वाणि नामगतान्यक्षराणि यस्य स तथोक्तः । एवंविधः प्लुतो वाच्यः न पुनरन्य एवकारो नाम्नोन्ते वाच्य इति । **तथाच वसिष्ठः**—आमन्त्रिते स्वरोऽन्त्योस्य प्लवत इति । आमन्त्रिते कर्तव्ये अभिवादकनाम्नोन्ते यः स्वरः स प्लवते । त्रिमात्रो भवतीत्यर्थः । ततश्चाभिवादनप्रत्यभिवादनयोरेवं प्रयोगो भवति—अभिवादये चैत्रनामाहमस्मि भो इति । आयुष्मान्भवसौम्य विष्णुशर्मा ३ न् इति । क्षत्रियवैश्ययोस्तु वर्मगुप्तशब्दप्रयोग इति **मदनपारिजाते** ॥ आत्मनाम गुरोर्नाम नामातिकृपणस्य च ॥ आयुष्कामो न गृह्णीयाज्ज्येष्ठपुत्रकलत्रयोरित्यादिनिषेधस्तु अभिवादनस्थलव्यतिरिक्तविषय इति विज्ञेयम् ॥ अभिवादनं च हस्तद्वयेन कार्यं । अन्यथाकरणे विष्णुना दोषसंकीर्तनात् । एतदपि विद्वद्विषयम् । **यतःसएवाह**—अजाकर्णेन विदुषो मूर्खाणामेकपाणिनेति । अजाकर्णेन श्रोत्रसमौ करौ कृत्वा पुनःसंपुटितेन करद्वयेनेत्यर्थः । अजाकर्णौ संपुटितौ यथा तथैव संपुटितं करद्वयमपीत्यजाकर्णौ । **मनुः**—यो नवेत्त्यभिवादस्य विप्रः प्रत्यभिवादनं । नाभिवाद्यः स विदुषा यथा शूद्रस्तथैव सः ॥ **यमः**—अभिवादे तु यो विप्र आशिषं न प्रयच्छति । श्मशाने जायते वृक्षः कङ्कगृध्रोपसेवितः ॥ **शातातपः**—पाखण्डं पतितं व्रात्यं महापातकिनं शठं । सोपानत्कं कृतघ्नं

च नाभिवादेत्कदाचन ॥ धावन्तं च प्रमत्तं च मूत्रोत्सर्गकृतं तथा ॥ भुञ्जानमाचमनार्हं च नास्तिकं नाभिवादयेत् ॥ वमन्तं जृम्भमाणं च कुर्वन्तं दन्तधावन । अभ्यक्तशिरसं चैव स्नातं नैवाभिवादयेत् ॥ **बृहस्पतिः**—जपयज्ञगणस्थं च समित्पुष्पकुशानलान् । उदपात्रार्घभैक्षान्नहस्तं तं नाभिवादयेत् ॥ उदक्यां सूतिकां नारीं भर्तृघ्नीं ब्रह्मघातिनीं । अभिवाद्य द्विजो मोहादहोरात्रेण शुद्ध्यति ॥ **जमदग्निः**—देवताप्रतिमां दृष्ट्वा यतिं दृष्ट्वा त्रिदण्डिनं ॥ नमस्कारं न कुर्याच्चेत्प्रायश्चित्ती भवेन्नरः ॥ **मनुः**—अभिवादनशीलस्य नित्यं वृद्धोपसेविनः । चत्वारि तस्य वर्धन्ते आयुः प्रज्ञा यशो बलं ॥ एतच्चाभिवादनमधिकवयसामेव कार्यं । **तथाच मनुः**—ज्यायांसमभिवादयेदिति । **स्मृत्यर्थसारे**—गुरवो माता स्तन्यधात्री च पितापितामहादयो मातामहश्चान्नदाता भयत्राता यश्चोपनेता च । मन्त्रविद्योपदेष्टा च तेषां पत्न्यश्चोपसंग्राह्याः । समावृत्तेन च । बाले समवयस्के चाध्यापके गुरुवच्चरेत् । मातुलाश्च पितृव्याश्च श्वशुराश्च यवीयांसोपि प्रत्युत्थायाभिवाद्याः । उपाध्यायऋत्विजो ज्येष्ठाभ्रातरश्च सर्वेषां पत्न्यश्चैवं । मातृष्वसा च सवर्णा भ्रातृभार्या च नित्यमभिवाद्या ॥ विप्रोष्य तूपसंग्राह्या ज्ञातिसंबन्धियोषितः । विप्रोष्य विप्रं कुशलं पृच्छेन्नृपमनामयं । वैश्यं क्षेमसमागम्य शूद्रमारोग्यमेव च । न वाच्यो दीक्षितो नाम्ना यवीयानपि सर्वथा । पूज्यैस्तमभिभाषेत भोभवत्कर्मनामभिरिति ॥

**अथ अतीतसंस्कारप्रायश्चित्तम्** ॥ संस्कारा अतिपद्येरन्स्वकालाच्चेत्कथंचन ॥ हुत्वानादिष्टकं कुर्याद्येतूपनयनादधः ॥ **तथा भगवांश्च**—आरभ्याधानमाचौलात्कालेऽतीते तु कर्मणां । व्याहृत्याज्यं तु संस्कृत्य हुत्वा कर्म यथाविधि ॥ कार्यमिति शेषः ॥ **तथाच पारस्करः**—कालातिक्रमे नियतवत् । **अस्यार्थः**—कालव्यतिक्रमेसति यन्नियतेषु विहितं श्रौतेषु अनाम्नातनैमित्तिकेषु यद्विहितं स्मार्तं तदेव भवति । तच्च प्रतिमहाव्याहृति सर्वाभिश्चतुर्थं सर्वप्रायश्चित्तमिति । कालव्यतिक्रमादन्यत्रापि भ्रेषे उत्पन्नेसति एतदेव भवति ।

नैमित्तिकान्तराभिधानादिति कर्कः । अत्र प्रायश्चित्तमाह—एतेष्वेकैकलोपे तु पादकृच्छ्रं समाचरेत् ॥ चौलादर्वाक्प्रकुर्वीत प्रायश्चित्तादनन्तरम् ॥ अत्र चौलादर्वाक् एतेषु एकैकलोपे पादकृच्छ्रं समाचरेदित्यन्वयः ॥ चौले त्वर्धकृच्छ्रं । तथाच—चूडाया अर्धकृच्छ्रं स्यादापदि त्वेवमीरितम् । अनापदि तु सर्वत्र द्विगुणं द्विगुणं चरेदिति ॥ तत्रापि अतिक्रान्तं गर्भाधानादि प्रसवपर्यन्तं कार्यं । तथा जातकर्मादि उपनयनात्प्राक्कार्यं । पूर्वपूर्वसंस्कारस्य उत्तरोत्तरसंस्कारात्प्राग्गौणकालः । तत्र प्रायश्चित्तं कृताकृतं ॥ प्रायश्चित्तमकृत्वा वा गौणकाले समाचरेदितिवचनात् ॥ प्रायश्चित्ते कृते पश्चादतीतमपि कर्म वै ॥ कार्यमित्येक आचार्या नेत्यन्ये तु विपश्चित इति ॥

अथप्रयोगः ॥ अस्यकुमारस्यगर्भाधानपुंसवनसीमंतोन्नयनजातकर्मनामकरणनिष्क्रमणाऽन्नप्राशनचूडाकरणसंस्काराणां स्वस्वकालातिपत्तिदोषपरिहारेणअधिकारसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंअनादिष्टप्रायश्चित्तहोममहंकरिष्ये इतिसंकल्प्य ॥ स्थण्डिलेपञ्चभूसंस्कारपूर्वकंअग्निंप्रतिष्ठाप्य (अनादिष्टप्रायश्चित्तहोमे पूर्णाहुतिवदाज्यसंस्काराइतिहरिहरः । दक्षिणतोब्रह्मासनमास्तीर्येत्यादिआघारादिस्विष्टकृदंतचतुर्दशाज्याहुतिवर्जंप्रणीताविमोकान्तकुशकण्डिकाइतिकर्कमिश्रादयः) पूर्णाहुतिवदाज्यसंस्कारकरणपक्षेपात्रासादनं । आज्यस्थाली । आज्यं । संमार्गकुशाःपंच । स्रुवः । उत्पवनपवित्रं । एकासमित् । इति । आज्यस्थाल्यामाज्यंनिरुप्यअग्नावधिश्रित्यदर्भैःस्रुवंसंमृज्यउद्वास्यपवित्राभ्यामुत्पूयअवेक्ष्यातिष्ठन्समिधमाधाय । ॐभूःस्वाहा इदमग्नयेनमम । ॐभुवःस्वाहा इदंवायवे० । ॐस्वःस्वाहा इदंसूर्याय० । ॐभूर्भुवःस्वःस्वाहा इदंप्रजापतयेनमम ॥ ॐत्वंनोअग्ने० इदमग्नीवरुणाभ्यां० । ॐसत्वन्नोअग्ने० । इदमग्नीवरुणाभ्यां० । ॐअयाश्चाग्ने०

इदमग्नये० । ॐयेतेशतं० इदंवरुणाय० । ॐउदुत्तमं० इदंवरुणाय० । अनेनअनादिष्टप्रायश्चित्तहोमेनभगवान्श्रीपरमेश्वरःप्रीयतां ॥ ॥ पुनर्देशकालौसंकीर्त्यशुभपुण्यतिथौअस्यकुमारस्यगर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मनामकरणनिष्क्रमणान्नप्राशनचूडाकरणसंस्काराणांस्वस्वकालेअकरणदोषपरिहारेणाधिकारसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थं प्रायश्चित्तंप्रतिसंस्कारंपादकृच्छ्रंचूडाकरणेअर्धकृच्छ्रं ( बुद्धिपूर्वेतुप्रतिसंस्कारंकृच्छ्रंचूडायांकृच्छ्रद्वयं ) रजतनिष्कपादार्धार्धगोमूल्यप्रत्याम्नायेनाहमाचरिष्ये । इतिसंकल्प्ययथासंकल्पंप्रत्याम्नायेनप्रायश्चित्तंकर्तव्यं । अनेनसंस्कारलोपप्रायश्चित्ताचरणेनश्रीपरमेश्वरःप्रीयतां ॥ अतीतसंस्कारकरणपक्षेयथोक्तक्रमेणसंस्काराःकार्याः । तत्रगर्भाधानपुंसवनसीमंतोन्नयनानांप्रायश्चित्तेनैवनिर्वाहः । तेषांप्रसवपर्यंतकालनियमात्नपुनस्तेषामनुष्ठानं ॥ कालांतरेजातकर्मणिक्रियमाणेमेधाजननस्तनप्रदानसर्षपहोमउदपात्रस्थापनानामभावः । अन्नप्राशनेजीविकापरीक्षायाश्चाभावः ॥ चौलस्यउपनीत्यासहेतिपक्षेउपनीतिदिनएवानुष्ठानंनपूर्वदिने । सहत्वस्यदिवसैक्येनसंनिकृष्टतरत्वात् । वृद्धाचारोप्येवम् । इतिनिर्णयसिंधुः । यदातूपनयनात्प्राक्युगपदतीतसंस्काराःक्रियंतेतदामातृकापूजनंनान्दीश्राद्धंचैकमेवनपृथक्पृथक् ॥ गणशःक्रियमाणानांमातॄणांपूजनंसकृत् ॥ सकृदेवभवेच्छ्राद्धमादौनपृथगादिष्वितिवचनात् ॥ धर्मनौकायामपि—अतीतानिकर्माणिचेत्स्युःसहैवतदाश्राद्धमेकंनभिन्नंविदध्यात् ॥ अतीतानिकर्माणितन्त्रेणकुर्याद्द्वाचैवमाचार्यअन्योन्यथात्रेति ॥ तथाचसंकल्पः ॥ अस्यकुमारस्यस्वस्वकालातिक्रान्तानामद्यक्रियमाणानांजातकर्मनामकरणनिष्क्रमणान्नप्राशनसंस्काराणांतथाचश्वःकरिष्यमाणयोःचूडाकरणोपनयनसंस्कार-

योश्चाङ्गत्वेनस्वस्तिपुण्याहवाचनंचूडाकरणोपनयनाङ्गत्वेनअविघ्नपूजनंमण्डपस्थापनं सर्वेषांसंस्काराणामङ्गत्वेनमातृकापूजनंवसोर्धारापूजनंआयुष्यमन्त्रजपंनान्दीश्राद्धंचतन्त्रेणाहंकरिष्ये । सर्वेषांसद्यःकरणपक्षेश्वःपदस्यलोपइतिविशेषः ॥ स्वस्तिवाचने भोब्राह्मणाः अस्यकुमारस्यअद्यक्रियमाणानांजातकर्मनामकरणनिष्क्रमणान्नप्राशनसंस्काराणां तथाचश्वःकरिष्यमाणयोःचूडाकरणोपनयनसंस्कारयोःपुण्याहंभवन्तोब्रुवन्तुइत्यादि ॥ इतिअतीतसंस्कारप्रायश्चित्तविधिः ॥

अथोपनयनप्रयोगः ॥ आचमनं ॥ प्राणायामः ॥ पवित्रधारणं ॥ देशकालौसंकीर्त्यशुभपुण्यतिथौममास्यकुमारस्योपनेतृत्वाधिकारसिद्धिद्वाराश्री० कृच्छ्रत्रयप्रायश्चित्तंप्रतिकृच्छ्रंकार्षापणैकगोमूल्यप्रत्याम्नायेनाहमाचरिष्यइतिसंकल्प्य प्रायश्चित्तंयथोक्तप्रत्याम्नायेनकार्यं ॥ एवंबटुरप्याचम्यदेशकालोत्कीर्तनान्तेममकामचारकामवादकामभक्षणादिदोषपरिहारार्थंस्वस्योपनेयतासिद्धिद्वाराश्रीप० कृच्छ्रत्रयप्रायश्चित्तंप्रतिकृच्छ्रंकार्षा० ॥ ततआचार्यस्तुगायत्र्युपदेशाधिकारार्थंअयुतगायत्रीजपमहंकरिष्यइतिसंकल्प्यकुर्यात्[1] ॥ [ पुनःअस्यकुमारस्यब्राह्मण्याभिव्यक्तिद्विजत्वसिद्ध्यावेदाध्ययनाधिकारसिद्ध्यर्थंश्रीप० उपनयनंकरिष्ये ॥ तदङ्गत्वेनस्वस्तिपुण्याहवाचनंअविघ्नपूजनंमण्डपस्थापनंमातृकापूजनंवसोर्धारापूजनंआयुष्यमन्त्रजपंनान्दीश्राद्धंचक० ॥ तत्रादौनिर्विघ्नतासिद्ध्यर्थंगणपतिपूजनंक० ॥ इतिसंकल्प्यतानिकृत्वा ॥ स्वस्तिवाचनेइन्द्रःप्रीयतामित्यूहः ॥ ततःकुमारस्यग्रहानुकूल्यार्थंग्रहयज्ञंकृत्वा ] ब्राह्मणान्भोजयेत्तंचपर्युप्तशिरसं । शिरसश्चवपनंभो-

१ इदंप्रायश्चित्तं—कृच्छ्रत्रय चोपनेता त्रीन्कृच्छ्रांश्च बटुश्चरेत् । आचार्यो दशसाहस्रं गायत्रीं प्रजपेत्तथा ॥ इति ज्ञेयं ।

जनात्पूर्वमेवकर्तव्यंनेदानींतदुपदेशःभूतकालनिर्देशादितिकर्कः ॥ अस्यकुमारस्योपनयनंकर्तुंतत्पूर्वाङ्गतयावपनंकरिष्यइति-
संकल्प्यतत्कारयेत् ॥ सुस्नातंबटुंपुनरुपवेश्य । अस्यकुमारस्योपनयनंकर्तुंतत्पूर्वाङ्गतयाब्राह्मणान्भोजयिष्यइतिसंकल्प्य-
तान्भोजयेत् । तत्पङ्क्तौमुण्डितशिरसंबटुंभोजयेत् । भोजनोत्तरंबटुंस्नापयित्वाबहिःशालायांवेद्यांपञ्चभूसंस्कारपूर्वकं अग्नि-
प्रतिष्ठापनं ॥ आचमनं ॥ प्राणायामः ॥ पवित्रधारणं ॥ देशकालौसंकीर्त्यशुभपुण्यतिथौअस्यकुमारस्यब्राह्मण्याभिव्य-
क्तिद्विजत्वसिद्ध्यावेदाध्ययनाधिकारार्थंश्रीप० उपनयनंकरिष्ये ॥ अलंकृतमानयन्तिआचार्यपुरुषाः । मध्येन्तःपटंधृत्वा
मङ्गलाष्टकानिपठेयुः । प्रतिष्ठामनोजूति० प्रतिष्ठितंभवति ॥ ब्रह्मवर्चसीभव ॥ पश्चादग्नेःस्वदक्षिणभागेउदङ्मुखमवस्थाप्य
ब्रह्मचर्यमागामितिब्रूहीत्याचार्योवाचयति ॥ ब्रह्मचर्यमागामितिबटुः ॥ ब्रह्मचार्यसानीतिब्रूहीत्याचार्योवाचयति । ब्रह्म-
चार्यसानीतिबटुः ॥ अथैनंवासःपरिधापयत्याचार्यः ॐयेनेन्द्रायबृहस्पतिर्वासःपर्यदधामृतं ॥ तेनत्वापरिदधाम्यायुषे-
दीर्घायुत्वायबलायवर्चसे ॥ आचमनं ॥ मेखलांबध्नीतेकुमारस्यकटिदेशेआचार्यः ॥ ॐइयन्दुरुक्तम्परिबाधमानावर्णम्प-
वित्रम्पुनतीमऽआगात् ॥ प्राणापानाभ्याम्बलमादधानास्वसादेवीसुभगामेखलेयं ॥ युवासुवासाइतिवातूष्णींवा ॥ अ-
थात्रयज्ञोपवीतपरिधानं । आचार्येण गायत्र्यादशसंख्ययाअभिमन्त्रिताभिरद्भिरभ्युक्षितंयज्ञोपवीतंदत्तंमाणवकोधारयति ।
ॐयज्ञोपवीतम्परमम्पवित्रम्प्रजापतेर्यत्सहजम्पुरस्तात् ॥ आयुष्यमग्र्यम्प्रतिमुञ्चशुभ्रंयज्ञोपवीतम्बलमस्तुतेजः ॥ १ ॥
ॐयज्ञोपवीतमसियज्ञस्यत्वायज्ञोपवीतेनोपनह्यामि ॥२॥ इतिवा ॥ ॥ आचमनं ॥ अथाजिनंप्रयच्छतितूष्णीमाचार्यः ॥

माणवकोधारयति । ॐमित्रस्यचक्षुर्धरुणम्बलीयस्तेजोयशस्विस्थविरꣳसमिद्धम् ॥ अनाहनस्यम्वसनञ्जरिष्णुपरीदम्वाज्यजि-
नन्दधेहम् ॥ १ ॥ इदमेवोत्तरीयं । आचमनं ॥ अथदण्डम्प्रयच्छत्याचार्यस्तूष्णीं ॥ तंप्रतिगृह्णातिमाणवकः ॥ ॐयोमे-
दंडःपरापतद्वैहायसोधिभूम्याम् ॥ तमहम्पुनरादद आयुषेब्रह्मणेब्रह्मवर्चसाय ॥ १ ॥ दीक्षावदेकेदीर्घसत्रमुपैतीति-
वचनात् ॥ अथास्याद्भिरञ्जलिनाञ्जलिंपूरयत्यापोहिष्ठेतितिसृभिः ॥ ॐआपोहिष्ठा० ॥ योवःशिव० ॥ तस्माऽअरंङ्ग० ॥
माणवकस्तूष्णीमूर्ध्वमुत्क्षिपति ॥ अथैनꣳसूर्यमुदीक्षयतितच्चक्षुरिति । सूर्यमुदीक्षस्वइत्याचार्यस्यप्रैषः ॥ ॐतच्चक्षुर्देव-
हितं० शृतात् ॥ १ ॥ अथास्यदक्षिणाꣳसमधिहृदयमालभते आचार्यः ॥ ॐममव्रतेतेहृदयन्दधामिममचित्तमनुचित्त-
न्तेअस्तु ॥ ममवाचमेकमनाजुषस्वबृहस्पतिष्ट्वानियुनक्तुमह्यं ॥ १ ॥ अथास्यदक्षिणꣳहस्तंगृहीत्वाह ॥ कोनामासि ॥
असावहंभो ३ इतिप्रत्याह ॥ अमुकशर्माअहंभो ३॥ अथैनमाहआचार्यः ॥ कस्यब्रह्मचार्यसीति ॥ माणवकःप्रत्याह । भवतः
इति ॥ भवतइत्युच्यमानेआचार्यःपठति ॥ ॐइंद्रस्यब्रह्मचार्यस्यग्निराचार्यस्तवाहमाचार्यस्तवासौ असौस्थानेसंबुद्ध्यंतंमा-
णवकस्यनामनिर्देशः ॥ असुकशर्मन् इति ॥ अथैनंभूतेभ्यःपरिददात्याचार्यः ॥ ॐप्रजापतयेत्वापरिददामिदेवायत्वासवित्रे-
परिददाम्यद्भ्यस्त्वौषधीभ्यःपरिददामिद्यावापृथिवीभ्यान्त्वापरिददामिविश्वेभ्यस्त्वादेवेभ्यःपरिददामिसर्वेभ्यस्त्वाभूतेभ्यः
परिददाम्यरिष्ट्यै ॥ १ ॥ प्रदक्षिणमग्निंपरीत्योपविशति आचार्यस्योत्तरतोमाणवकः ॥ ततोदक्षिणतोब्रह्मासनमास्तीर्य-
त्यादिचरुवर्जंप्रणीताविमोकांतंप्रकृतिवत् ॥ अन्वारब्धआज्याहुतीर्हुत्वाप्राशनांतेऽथैनंसꣳशास्ति ॥ ब्रह्मचार्यसीत्याचार्यः ॥

असानीतिमाणवकः ॥ अपोशान इत्याचार्यः ॥ असानि इतिमाणवकः ॥ कर्मकुरु इत्याचार्यः ॥ करवाणि इति
माणवकः ॥ मादिवासुषुप्थाः इत्याचार्यः ॥ नस्वपानि इतिमाणवकः ॥ वाचंयच्छ इत्याचार्यः ॥ यच्छानि इतिमाणवकः ॥
समिधमाधेहि इत्याचार्यः ॥ आदधानि इतिमाणवकः ॥ अपोशान इत्याचार्यः ॥ अशानीतिमाणवकः ॥ अथगायत्र्यु-
पदेशः ॥ तत्रादौआचारात्कांस्यपात्रेतंदुलान्प्रसार्यतदुपरिसुवर्णशलाकया ॐकारव्याहृतिपूर्वकंगायत्रींलिखित्वा ॥ अद्यपू०
तिथौममब्रह्मवर्चससिध्यर्थंवेदाध्ययनाधिकारसिध्यर्थंगायत्र्युपदेशांगविहितंगायत्रीसावित्रीपूजनंकरिष्ये ॥ मनोजूतिरि-
तिप्रतिष्ठाप्य ॥ श्रीश्चतेइतिषोडशोपचारैःपूजनं। अथास्मैसावित्रीमन्वाह । उत्तरतोऽग्नेःप्रत्यङ्मुखायोपविष्टाय । उपसन्नाय ।
उपसदनप्रकारः—अमुकप्रवरान्वितामुकगोत्रोमुकशर्माहंभोअभिवादयेइत्युक्त्वास्वदक्षिणोत्तरकर्णौवामदक्षिणपाणिभ्यांस्पृ-
ष्ट्वादक्षिणहस्तेनगुरोर्दक्षिणपादंवामेनवामंस्पृष्ट्वाशिरोवनमनंइत्युपसन्नाय ।आचार्यंसमीक्षमाणाय । आचार्येणसमीक्षिताय।
प्रणवव्याहृतिपूर्वकं प्रथमंपादशःपादशः । द्वितीयवारंअर्धर्चशोऽर्धर्चशः । तृतीयवारंसकलांगायत्रींमाणवकेनसहाचार्यः
पठति ॥ ॐभूर्भुवःस्वः तत्सवितुर्वरेण्यम्भर्गोदेवस्यधीमहि ॥ धियोयोनः प्रचोदयात् ॥ १ ॥ आचार्यपूजनं ॥ अत्रावसरे
ब्रह्मचारिणः समिदाधानं ॥ दक्षिणेनपाणिनाग्निंपरिसमूहति । संधुक्षयतीत्यर्थः । संधुक्षणं इंधनप्रक्षेपः ॥ वक्ष्यमाणमन्त्रैः-
पञ्चभिः ॥ ॐअग्नेसुश्रवःसुश्रवसंमाकुरु ॥ १ ॥ यथात्वमग्नेसुश्रवःसुश्रवाऽअसि ॥ २ ॥ ॐएवंमाᳪंसुश्रवःसौश्रवसं-
कुरु ॥ ३ ॥ ॐयथात्वमग्नेदेवानांयज्ञस्यनिधिपाऽअसि ॥ ४ ॥ ॐएवमहंमनुष्याणांवेदस्यनिधिपोभूयासम् ॥ ५ ॥

इति । ततःप्रदक्षिणमग्निंपर्युक्ष्यइतरथावृत्तिः । उत्थायसमिधमादधाति ॥ ॐअग्नयेसमिधमाहार्षम्बृहतेजातवेदसे ॥ यथात्वमग्नेसमिधासमिध्यसऽएवमहमायुषामेधयावर्चसाप्रजयापशुभिर्ब्रह्मवर्चसेनसमिन्धेजीवपुत्रोममाचार्योमेधाव्यहमसान्यनिराकरिष्णुर्यशस्वीतेजस्वीब्रह्मवर्चस्यन्नादोभूयासꣳस्वाहा ॥ १ ॥ एषातइतिवा ॐएषातेअग्नेसमित्तयावर्धस्वचाप्यायस्व । वर्धिषीमहिचवयमाचप्यासिषीमहिस्वाहा ॥ एवंद्वितीयांतथातृतीयां ॥ अनयोर्मंत्रयोः । समुच्चयोवा ॐअग्नयेसमि० भूयासं एषातेअग्ने० सिषीमहिस्वाहा । एवंद्वितीयांतथातृतीयां ॥ ततउपविश्यपूर्ववत्परिसमूहनपर्युक्षणे ॥ ततस्तूष्णींपाणीप्रतप्यमुखंविमृष्टे । तत्रमन्त्राः । ॐतनूपाऽअग्नेसितन्वम्मेपाहि ॥१॥ ॐआयुर्दाऽअग्नेऽस्यायुर्मेदेहि ॥२॥ ॐवर्च्चोदाऽअग्नेसिवर्च्चोमेदेहि ॥३॥ अग्नेयन्मेतन्वाऽऊनन्तन्मऽआपृण ॥४॥ ॐमेधांमेदेवःसविताऽआदधातु ॥५॥ ॐमेधांदेवीसरस्वतीआदधातु ॥६॥ ॐमेधामश्विनौदेवावाधत्तांपुष्करस्रजौ ॥७॥ इत्येतेमुखमार्जनमन्त्राः ॥ अत्रशिष्टाचारप्राप्ताः केचनपदार्थालिख्यंते ॥ शिरःप्रभृतिपादांतानिसर्वांगान्यालभ्यजपति । अङ्गानिचमऽआप्यायंतां ॥ एवमग्रेपिपूर्वमालंभस्ततोजपः हृदयमालभ्यउदकोपस्पर्शःजपति ॥ ॐवाक्चमऽआप्यायतां ॥ नासिकामालभ्य जपति ॥ ॐप्राणश्चमऽआप्यायतां ॥

१ अत्ररेणुः—प्रतिमन्त्र त्रिभिः काष्ठैरग्नेसुश्रवआदिभि. ॥ अग्नेसुश्रवइत्येकंयथात्वंस्याद्वितीयक ॥ यथात्वमग्नेदेवानामन्त्रेणापितृतीयकं ॥ इतिमंत्रत्रयेणकाष्ठत्रयप्रक्षेप तत्रमन्त्रा ॐअग्नेसु० कुरु १ । ॐयथात्व० कुरु २ । ॐयथात्व ० भूयासं० ३ । २ तिष्ठन्समिध सर्वत्रेतिश्रौतसूत्रेउक्तत्वादुत्थायेतिग्रहणंव्यर्थ सत् नायं होम. किंतुसमिदाधानमितिसूचयति । अतोत्रत्यागाभाव इतिगदाधरभाष्ये । प्रयोगरत्नेतुइदमग्नयइतित्यागोलिखित । ३ आलभ्येतिपूर्वकालिकक्त्वाप्रत्ययस्थानेल्यप.श्रवणात् ।

चिक्षुषीआलभ्यजपति ॥ ॐचक्षुश्चमऽआप्यायतां ॥ दक्षिणश्रोत्रमालभ्यजपति ॥ ॐश्रोत्रंचमऽआप्यायतां ॥ ततोवामं श्रोत्रमालभ्यजपति ॥ ॐश्रोत्रंचमऽआप्यायतां ॥ दक्षिणबाहुमालभ्यजपति ॥ ॐयशोबलंचमऽआप्यायतां ॥ ॥ वामं-बाहुमालभ्यजपति ॥ ॐयशोबलं० ॥ मन्त्रपाठमात्रंवा ॥ ततस्त्र्यायुषाणिकरोति ॥ भस्मनाललाटेग्रीवायांदक्षिणेंऽसेहृदिच त्र्यायुषमितिप्रतिमन्त्रं ॥ ॐत्र्यायुषञ्जमदग्नेः ॥ इतिललाटे ॥ ॐकश्यपस्यत्र्यायुषम् ॥ इतिग्रीवायां ॥ ॐयद्देवेषुत्र्या-युषम् ॥ इतिदक्षिणेंसे ॥ ॐतन्नोअस्तुत्र्यायुषम् ॥ इतिहृदि ॥ ततोभिवादनम् ॥ अमुकप्रवरान्वितः अमुकगोत्रः अमुक-शर्माअहंभो ३ वैश्वानर अभिवादये ॥ आयुष्मान्भवसौम्यअमुकशर्मा ३ ॥ ॥ एवंसूर्यमभिवादयेत् । एवमाचार्याभिवंदनं । तद्यथा—अमुकप्रवरान्वितामुकगोत्रोमुकशर्माहंभो ३ आचार्य अभिवादये । इत्युक्त्वास्वदक्षिणोत्तरकर्णौवामदक्षिणपाणि-भ्यांस्पृष्ट्वादक्षिणहस्तेनगुरोर्दक्षिणपादंवामेनवामंस्पृष्ट्वापादयोःशिरोवनमनं ॥ एवंगुर्वादीनप्यभिवादयेत् । अभिवाद्यां-श्चाभिवादयेत् ॥ अत्रभिक्षाचर्यचरणं ॥ भवत्पूर्वांब्राह्मणोभिक्षेत । भवन्मध्यांराजन्यः । भवदंत्यांवैश्यः ॥ तिस्रोऽप्र-त्याख्यायिन्यःषड्द्वादशाऽपरिमितावा । मातरंप्रथमामेके । अयंचप्रथमाहर्धर्मः । अथप्रयोगः । दंडंभिक्षापात्रंचप्रतिगृह्यसा-वित्र्याआदित्यमुपस्थायअग्निंप्रदक्षिणीकृत्यप्रथमंमातरंभिक्षेत ॐभवतिभिक्षांदेहि । इति ॥ दत्तायांभिक्षायां ॐस्व-स्तीतिब्रूयात् । भिक्षांभवतिदेहीतिक्षत्रियः । भिक्षांदेहिभवतीतिवैश्यः । पुरुषंप्रतितुभवन्भिक्षांदेहीतिप्रयोगः । तत-

---

१ याज्ञवल्क्य.—ब्राह्मणेषुचरेद्भैक्षमनिंद्येष्वात्मवृत्तयइति ।

आचार्यायभैक्षंनिवेदयित्वातेनभुंक्ष्वइत्युक्तःस्वीकरोति । वाग्यतोऽहःशेषंतिष्ठेदित्येके । नवाइतिविकल्पः । अहिंस्रन्नर-
ण्यात्समिधऽआहृत्यतस्मिन्नग्नौसायंसंध्योत्तरंपूर्ववत्परिसमूहनादिपूर्वकमाधायत्र्यायुषकरणांतंकृत्वावाग्यमपक्षेवाचंविसृ-
जते ॥ अयमुपनयनाग्निस्त्रिरात्रंधार्यः । त्र्यहमेतमग्निंधारयतीत्यापस्तंबोक्तेः । यावद्व्रतमग्निरक्षणमितिगर्गपद्धतौ इति-
गदाधरः । वाग्विसर्गः यावद्व्रतंतावदग्निरक्षणंत्रिरात्रंवा ॥ अतआरभ्यआब्रह्मचर्यपरिसमाप्तेर्ब्रह्मचारिणोयमनियमाःकथ्यंते ॥
ततआचार्योब्रह्मचारिणोनियमान्श्रावयेत् ॥ अधःशायीस्यात् ॥ अक्षारालवणाशीस्यात् ॥ अधःशब्दःखट्वाव्युदासार्थः ॥
दंडधारणंकर्तव्यं ॥ अरण्यात्स्वयंप्रशीर्णाःसमिधआहृत्य ॥ सायंप्रातःसंध्योपासनपूर्वकमग्निपरिचरणंकर्तव्यं ॥ स्वाध्या-
याविरोधेनगुरुशुश्रूषाचकर्तव्या ॥ सायंप्रातर्भिक्षाचर्याकर्तव्या ॥ मधुमांसाशनंनकर्तव्यं ॥ मज्जनंनकर्तव्यं ॥ उद्धृतो-
दकेनस्नायादित्यर्थः ॥ कुशासनोपरिमसुरिकाद्युपधानंकृत्वानोपविशेत् ॥ स्त्रीगमनंतन्मध्यअवस्थानंचवर्जयेत् ॥ अनृतं-
नवदेत् ॥ अदत्तादानंचौर्यंनकुर्यात् ॥ स्मृत्यंतरोक्तायमनियमाश्चानुष्ठेयाः ॥ अष्टाचत्वारिंशद्वर्षाणिवेदब्रह्मचर्यंचरेत् ॥
द्वादशद्वादशवाप्रतिवेदं । यावद्ग्रहणंवा । शयानश्चेदाचार्येणाहूतउत्थायप्रतिशृणुयात् । आसीनश्चेत्तिष्ठन् । तिष्ठंश्चेदभि-
क्रामन् । अभिक्रामंश्चेदभिधावन् । सएवंवर्तमानोसुत्रावावसत्यसुत्रावावसतीति ॥ कृतस्योपनयनकर्मणःसांगतासिद्ध्यर्थं

१ अत्रमध्याह्नसंध्याकुर्यादितिप्रयोगपारिजाते । नेतिकृष्णभट्टीये इति गदाधरः ।

पंचाशत्संख्याकान्ब्राह्मणान्भोजयिष्ये । नानानामगोत्रान्ब्राह्मणान्गंधादिभिःपूजयिष्ये । तेभ्योभूयसींदक्षिणांदातुमहमुत्सृज्ये ॥ अनेनउपनयनाख्येनकर्मणा भगवान्श्रीपरमेश्वरःप्रीयताम् ॥ इति उपनयनप्रयोगः ॥

अथाशीर्वादः ॥ हरिः ॐब्रह्मचर्यमागामित्याह ॥ ब्रह्मणऽएवैतदात्मानन्निवेदयतिब्रह्मचार्यसानीत्याहब्रह्मणऽएवैतदात्मानम्परिददात्यथैनमाहकोनामासीतिप्रजापतिर्वैकः प्राजापत्यमेवैनन्तत्कृत्वोपनयते ॥ १ ॥ अथास्यहस्तङ्गृह्णाति ॥ इन्द्रस्यब्रह्मचार्यस्यग्निराचार्यस्तवाहमाचार्यस्तवासावित्येतेवैश्रेष्ठेबलिष्ठेदेवतेऽएताभ्यामेवैनꣳश्रेष्ठाभ्याम्बलिष्ठाभ्यान्देवताभ्याम्परिददातितथाहास्यब्रह्मचारीनकाञ्चनार्तिमार्च्छतिनसयऽएवंवेद ॥ २ ॥ अथैनम्भूतेभ्यःपरिददाति ॥ प्रजापतयेत्वापरिददामिदेवायत्वासवित्रेपरिददामीत्येतेवैश्रेष्ठेवर्षिष्ठेदेवतेऽएताभ्यामेवैनꣳश्रेष्ठाभ्याम्वर्षिष्ठाभ्यान्देवताभ्याम्परिददातितथाहास्यब्रह्मचारीनकाञ्चनार्च्छतिनसयऽएवंवेद ॥ ३ ॥ अद्भ्यस्त्वौषधीभ्यःपरिददामीति ॥ तदेनमद्भ्यश्चौषधीभ्यश्चपरिददातिद्यावापृथिवीभ्यान्त्वापरिददामीतितदेनमाभ्यान्द्यावापृथिवीभ्याम्परिददातियद्योरिदꣳसर्वमधिविश्वेभ्यस्त्वाभूतेभ्यःपरिददाम्यरिष्ट्याऽइति तदेनꣳसर्वेभ्योभूतेभ्यःपरिददात्यरिष्ट्यैतथाहास्यब्रह्मचारीनकाञ्चनार्तिमार्च्छतिनसयऽएवंवेद ॥४॥ ब्रह्मचार्यसीत्याह ॥ ब्रह्मणऽएवैनन्तत्परिददात्यपोशानेत्यमृतंवाऽआपोमृतमशानेत्येवैनन्तदाहकर्मकुर्वितिवीर्यंवैकर्मवीर्यङ्कुर्वित्येवैनन्तदाहसमिधमाधेहीतिसमित्स्वात्मानन्तेजसाब्रह्मवर्चसेनेत्येवैनन्तदाहमासुषुप्थाऽइतिमामृथाऽइत्येवैनन्त-

दाहापोशानेत्यमृतँवाऽआपोमृतमशानेत्येवैनन्तदाहतदेनमुभयतोऽमृतेनपरिगृह्णातितथाहास्यब्रह्मचारीनकाञ्चनार्त्तिमार्च्छे-
तिनसयऽएवँवेद ॥ ५ ॥ अथास्मैसावित्रीमन्वाह ॥ ताँहस्मैताम्पुरासँवत्सरेन्वाहुः सँवत्सरसम्मिताव्वैगर्भाः प्रजायन्ते-
जातऽएवास्मिँस्तद्वाचन्दध्मऽइति ॥ ६ ॥ अथषट्सुमासेषु ॥ षड्वाऽऋतवःसँवत्सरस्यसँवत्सरसम्मिताव्वैगर्भाःप्रजायन्ते-
जातऽएवास्मिँस्तद्वाचन्दध्मऽइति ॥ ७ ॥ अथचतुर्विँशत्यहे ॥ चतुर्विँशतिर्वैसँवत्सरस्यार्धमासाः सँवत्सरसम्मितावै-
गर्भाःप्रजायन्तेजातऽएवास्मिँस्तद्वाचन्दध्मऽइति ॥ ८ ॥ अथद्वादशाहे ॥ द्वादशवैमासाःसँवत्सरस्यसँवत्सरसम्मितावै-
गर्भाःप्रजायन्तेजातऽएवास्मिँस्तद्वाचन्दध्मऽइति ॥ ९ ॥ अथषडहे ॥ षड्वाऽऋतवःसँवत्सरस्यसंवत्सरसम्मिताव्वैगर्भाःप्र-
जायन्तेजातऽएवास्मिँस्तद्वाचन्दध्मऽइति ॥१०॥ अथत्र्यहे ॥ त्रयोवाऽऋतवःसँवत्सरस्यसँवत्सरसम्मिताव्वैगर्भाःप्रजायन्ते-
जातऽएवास्मिँस्तद्वाचन्दध्मऽइति ॥ ११ ॥ तदपिश्लोकङ्गायन्ति ॥ आचार्योगर्भीभवतिहस्तमाधायदक्षिणम् ॥ तृतीय-
स्याँसजायतेसावित्र्यासहब्राह्मणऽइतिसद्योहत्वाव्वब्राह्मणायानुब्रूयादाग्नेयोवैब्राह्मणःसद्योवाऽअग्निर्ज्जायतेतस्मात्सद्यऽएव-
ब्राह्मणायानुब्रूयात् ॥ १२ ॥ ताँहैतामेके ॥ सावित्रीमनुष्टुभमन्वाहुर्वाग्वाऽअनुष्टुप्सदस्मिन्वाचन्दध्मऽइतिनतथाकुर्याद्यो-
हैनन्तत्रब्रूयादान्वाऽअयमस्यवाचमदितमूकोभविष्यतीतीश्वरोहतथैवस्यात्तस्मादेताङ्गायत्रीमेवसावित्रीमनुब्रूयात् ॥ १३ ॥
अथहैकेदक्षिणतः ॥ तिष्ठतेवासीनायवान्वाहुर्नतथाकुर्याद्योहैनन्तत्रब्रूयाद्धुल्वंन्वाऽअयमिममजीजनतवुल्वोभविष्यतीतीश्व-

रोहत्तथैवस्यात्तस्मात्पुरस्तादेवप्रतीचेसमीक्षमाणायानुब्रूयात् ॥ १४ ॥ तांवैपच्छोन्वाह ॥ त्रयोवैप्राणाःप्राणऽउदानोव्यान-
स्तानेवास्मिँस्तद्दधात्यथार्द्धर्चशोद्वौवाऽइमौप्राणौप्राणोदानावेवप्राणोदानावेवास्मिँस्तद्दधात्यथकृत्स्नामेकोवाअयंप्राणःऽकृत्स्न-
ऽएवप्राणमेवास्मिँस्तत्कृत्स्नन्दधाति ॥ १५ ॥ तदाहुः ॥ नब्राह्मणम्ब्रह्मचर्यमुपनीयमिथुनञ्चरेद्गर्भोवाऽएषभवतियोब्रह्मचर्य-
मुपैतिनेदिमंब्राह्मणंविपिक्तात्रेतसोजनयानीति ॥ १६ ॥ तदुवाऽआहुः ॥ काममेवचरेद्दैव्योवाऽइमाःप्रजादैव्यश्चैवमानुष्य-
श्चतावाऽइमामानुष्यःप्रजाःप्रजननात्प्रजायन्तेच्छन्दांसिवैदैव्यःप्रजास्तानिमुखतोजनयतेतत्तऽएतज्जनयतेतस्मादुकाममेव-
चरेत् ॥ १७ ॥ तदाहुः ॥ नब्रह्मचारीसन्मध्वश्नीयादोषधीनांवाऽएषपरमोरसोयन्मधुनेदन्नाद्यस्यान्तङ्गच्छानीत्यथहस्मा-
हश्वेतकेतुरारुणेयोब्रह्मचारीसन्मध्वश्नंस्त्रय्यैवाऽएतद्विद्यायैशिष्टंयन्मधुसतुरसोयस्येदङ्क्शिष्टमितियथाहवाऽऋचंवायजुर्वा-
सामवाभिव्याहरेत्तादृक्तद्यऽएवंविद्वान्ब्रह्मचारीसन्मध्वश्नातितस्मादुकाममेवाश्नीयात् ॥ १८ ॥ इत्येकादशेकाण्डेतृती-
यप्रपाठकेपञ्चमंब्राह्मणम् ॥ ॐब्रह्मवैमृत्यवेप्रजाःप्रायच्छत्तस्मैब्रह्मचारिणमेवनप्रायच्छत्सोऽब्रवीदस्तुमह्यमप्येतस्मिन्भागऽइ-
तियामेवरात्रिंसमिधन्नाहरातऽइतितस्माद्यांरात्रिम्ब्रह्मचारीसमिधन्नाहरत्यायुषऽएवतामवदायवसतितस्माद्ब्रह्मचारीस-
मिधमाहरेन्नेदायुषोवदायवसानीति ॥ १ ॥ दीर्घसत्त्रंवाऽएषऽउपैति ॥ योब्रह्मचर्यमुपैतिसयामुपयन्त्समिधमादधाति-
साप्रायणीयायांस्नास्यन्त्सोदयनीयाथयाऽअन्तरेणसत्त्र्याऽएवास्यताब्राह्मणोब्रह्मचर्यमुपयन् ॥ २ ॥ चतुर्धाभूतानिप्रवि-

शति ॥ अग्निम्पदामृत्युम्पदाचार्यम्पदात्मन्येवास्य चतुर्थः पादः परिशिष्यते ॥ ३ ॥ सयदग्नये समिधमाहरति ॥ यऽएवा-
स्याग्नौ पादस्तमेव तेन परिक्रीणाति तꣳ संस्कृत्यात्मन्धत्ते सऽएनमाविशति ॥ ४ ॥ अथयदात्मानं ॥ दरिद्रीकृत्येवाह्रीर्भू-
त्वाभिक्षते यऽएवास्य मृत्यौ पादस्तमेव तेन परिक्रीणाति तꣳ संस्कृत्यात्मन्धत्ते सऽएनमाविशति ॥ ५ ॥ अथयदाचार्यवचसङ्क-
रोति ॥ यदाचार्याय कर्म करोति यऽएवास्याचार्ये पादस्तमेव तेन परिक्रीणाति तꣳ संस्कृत्यात्मन्धत्ते सऽएनमाविशति ॥ ६ ॥
नह वै स्नात्वा ॥ भिक्षेतापह वै स्नात्वा भिक्षाञ्जयत्यप ज्ञातीनामशनायामप पितृणाꣳ सऽएवं विद्वान्यस्याऽएव भूयिष्ठꣳ श्लाघ्येत-
ताम्भिक्षेतेत्याहुस्तल्लोक्यमितिसयद्यन्याम्भिक्षितव्यान्नविन्देदपिस्वामेवाचार्यजायाम्भिक्षेताथो स्वाम्मातरन्नैनꣳ सप्तम्यभि-
क्षितातीयात्तमेवम्विद्वाꣳ समेवञ्चरन्तꣳ सर्वे वेदाऽआविशन्ति यथाहवाऽअग्निः समिद्धो रोचतऽएवꣳ ह वै सस्नात्वा रोचते यऽए-
वम्विद्वान्ब्रह्मचर्यञ्चरति ॥७॥ अष्टावष्टौ कृत्वो ॥ ब्रह्मवर्चसकामस्याभिपुणुयादित्याहुरष्टाक्षरा वै गायत्री ब्रह्म गायत्री ब्रह्मवर्चसी-
हैव भवति ॥८॥ सयः कामयेत ॥ ब्रह्मवर्चसी स्यामिति त्रिवसन्तेसऽआदधीत ब्रह्म वै वसन्तो ब्रह्मवर्चसी हैव भवति ॥९॥ शतमा-
नम्भवति ॥ शतायुर्वै पुरुषः शतेन्द्रियऽआयुरेवेन्द्रियं वीर्यमात्मन्धत्ते ॥१०॥ कां० ११, प्र० २, ब्रा० ६ ब्रह्मवर्चसीभव ॥

अथ षण्ढमूकाद्युपनयने विशेषः ॥ धर्मनौकायां ॥ षण्ढः कुब्जो वामनः पङ्गुमूकौ मत्तोन्मत्तौ ध्वस्तपुंस्त्वो जडश्च ॥ रोगार्तो
यो गद्गदः श्रोत्रहीनः शुष्काङ्गो यो वीन्द्रियः स्वासनस्थः ॥१॥ वीन्द्रियो निरिन्द्रियः । स्वासनस्थो गमनचलनादावसमर्थः ॥ विकलाङ्गश्च

एतेषां संस्काराः स्युर्यथोचितं ॥ ब्राह्मण्या ब्राह्मणाज्जातो ब्राह्मणः स इति श्रुतेः ॥ २ ॥ मत्तोन्मत्तौ न संस्कार्याविति केचित्प्रचक्षते ॥ कर्मस्वनधिकाराच्च पातित्यं नास्ति वै तयोः ॥ ३ ॥ तदपत्यं च संस्कार्यमपरे त्वाहुरन्यथा ॥ संस्कारमन्त्रहोमादीन्करोत्याचार्य एव तु ॥४॥ उपनेयांश्च विधिवदाचार्यः स्वसमीपतः ॥ आनीयाग्निसमीपं च सावित्रीं स्पृश्य वा जपेत् ॥ ५ ॥ कन्यास्वीकरणादन्यत्सर्वं विप्रेण कारयेत् ॥ एवमेव द्विजैर्जातौ संस्कार्यौ कुण्डगोलकौ ॥ ६ ॥ संस्कार्यत्वं तयोरस्ति क्षेत्रकः श्राद्धदूषकः ॥ अन्यत्प्रयोगतो ज्ञेयं स्वस्वशाखानुसारतः ॥ ७ ॥ इति ॥ तत्र प्रयोगे होममाचार्यः करोति ॥ उपनयनं आचार्यसमीपानयनं ॥ अग्निसमीपे वा ॥ सावित्रीवाचनं वा ॥ अन्यदङ्गं यथासंभवं कार्यमिति ॥ त्रयाणां पक्षाणामन्यतमेन प्रधानसिद्धिरित्याशयः ॥ मूकबधिरादेः सावित्रीवाचनासंभवे स्पृष्ट्वा आचार्येण जपः कार्यः ॥ वाचकश्चेत्तर्हि मन्त्रो लिखित्वाचार्येण दर्शयितव्यः ॥ तेन मनसा चिन्तितव्यः ॥ यथा ॥ संस्कारमन्त्रहोमादीन्करोत्याचार्यएव तु ॥ उपनेयांश्च विधिवदाचार्यस्य समीपतः ॥ आनीयाग्निसमीपे तु सावित्रीं स्पृश्य वाचयेदिति **पारस्करवचनं** ॥ कन्यास्वीकरणादन्यत्सर्वं विप्रेण कारयेदिति **पारिजाते ब्राह्मोक्तेः** । अन्यत्समानं॥ उपनेयस्य वासःपरिधानादिषु ये संस्कारमन्त्रास्तानाचार्यः पठेदित्यर्थः ॥ **बौधायन**स्त्वीदृशोपनयने तूष्णीं वासः परिधापयति तूष्णीं मेखलां तूष्णीमजिनं प्रतिमुंचति तूष्णीं दण्डं प्रयच्छतीति प्रकृत्य सर्वान्मन्त्रानाचार्य एव जपेदित्येक इत्याह तेषां त्रिरात्रोर्ध्वं न दीर्घव्रतं ॥ इति षण्ढमूकाद्युपनयनप्रकारः ॥

**अथ पुनरुपनयननिमित्तानि** ॥ **धर्मनौकायां** ॥ जग्ध्वा पलाण्डुं लशुनं शुनं च खरोष्ट्रकेभाश्वमनुष्यदुग्धं ॥ भुक्त्वा तथा गृञ्जनमप्यवश्यं चरेत्पुनःसंस्कृतितप्तकृच्छ्रे ॥ १ ॥ मृतेस्तु वार्ताश्रवणोत्तरं वा जात्यन्तराग्निग्रहतः कृताद्वा ॥ यदा समागच्छति जीवितः स योग्यः पुनःसंस्कृतिमत्यवश्यं ॥ २ ॥ प्रेतस्य शय्या प्रतिगृह्य विप्रः सौवीरसौराष्ट्रकलिङ्गवङ्गान् ॥ प्रत्यन्तवास्यङ्गकसिन्धुदेशं गत्वा

पुनःसंस्कृतिमेव कुर्यात् ॥ ३ ॥ अजं खरोष्ट्रौ महिषं वृषं च विप्रः समारुह्य तथा स्वकीये ॥ पुरीषमूत्रे सुरयापि युक्तं संप्राश्य वस्तूपनयेत्रिवर्णी ॥४॥ प्रव्रज्य विप्रः पुनरागमिष्यन्ननाशकाङ्क्षयति यश्च विप्रः ॥ आचार्यतातव्यतिरेकपित्र्यकर्ता व्रती संस्कृतिमर्हतीह ॥५॥ पित्र्यं प्रेतकर्म ॥ व्रती ब्रह्मचारी ॥ विना पितुर्ज्येष्ठसहोदराच्च विनान्नमुच्छिष्टभुजिस्तथा च ॥ स्त्रीयुक्तभुक्तिर्मधुमाषभुक्तिः श्राद्धाशनं सूतकभोजनं च ॥ ६ ॥ अनिर्दशाहेऽखिलसंधिनीनां दुग्धाशनं रोदनमप्यवश्यं ॥ तथा गणान्नं गणिकान्नमेव स्युर्वर्णिनो बन्धकराणि नूनं ॥ ७ ॥ तथा छत्राक-नियसौ पुनःसंस्कारकारिणौ ॥ खरारोहे द्विजस्यापि स्नानमाह मिताक्षरा ॥ ८ ॥ कर्मनाशाजलस्पर्शात्करतोयाविलङ्घनात् ॥ गण्डकीबाहु-तरणात्पुनःसंस्कारमर्हति ॥ ९ ॥ करतोयाजलस्पर्शात्कर्मनाशाविलङ्घनात् ॥ गौडाः पठन्ति योग्यं न स्नानप्राशस्त्यवाक्यतः ॥ १० ॥ करतोयायामिति शेषः ॥ यो ब्राह्मणः स्वीयमधीत्य वेदमध्येतुमिच्छेदपरं च वेदम् ॥ योग्यं पुनर्मौञ्जिविधानमेवमूचेऽग्रणीर्यो हरदत्त-नामा ॥ ११ ॥ नैतत्सर्वे मानयन्त्येव वाक्यं गायत्री या सर्ववेदेषु तुल्या ॥ सानूक्ता वै नोपनीतेः प्रसङ्गो वर्ज्यं ज्ञेयं तद्विधिश्चापि शास्त्रात् ॥ १२ ॥ सानूक्ता आचार्यमुखाच्छ्रवणानन्तरं स्वयमुक्ता ॥ दोषात्पुनःसंस्कृतिषु त्ववश्यं कृच्छ्रादिकं देहविशोधनार्थं ॥ कृत्वा ततः संस्कृतिकर्म कुर्याच्छास्त्राद्विधिः पश्यतु सोऽत्र नोक्तः ॥ १३ ॥ निमित्तोत्तरं कालशुद्धेरपेक्षा नचास्त्यस्य कालान्तरे सात्ववश्यं ॥ पुरा मेखलाकर्म नारीगणेऽभून्नचास्मिन्युगे मेखलाकर्म तासां ॥ १४ ॥ इति ॥ **पराशरः**—अजिनं मेखला दण्डो भैक्षचर्या व्रतानि च ॥ निवर्तते द्विजातीनां पुनःसंस्कारकर्मणि ॥ इति ॥

**अथ पुनरुपनयनम्** ॥ तच्च यत्र प्रायश्चित्तान्तरसहितं विहितं तत्र पर्षदुपदिष्टं प्रायश्चित्तं विधिवत्कृत्वा कार्यं यथोष्ट्रक्षीरपानादौ । यत्र तु जातकर्मादिसंस्कारसहितं विहितं तत्र निमित्तानन्तरमेव नक्षत्राद्यनालोच्य पर्षदुपदिष्टं प्रायश्चित्तं कृत्वा जातादिचौलान्तसंस्कारा-

न्कृत्वा कार्यं ॥ अन्यथोचितनक्षत्राद्यावश्यकं ॥ कर्ता च पितृसत्वे सएव । तदभावे पितृव्यादिः । तदभावे यःकश्चित्सपिण्डः । पुनरुपनयनं यत्र चिकीर्षितं तत्रैव जातकर्मादयः संस्काराः कार्याः ॥ तत्र संकल्पः ॥ देशकालौ निर्दिश्य अस्यकृतौर्ध्वदेहिकस्यपुनःसंस्कारद्वारा श्रीपर०र्थंजातकर्मादिपुनरुपनयनान्तानिकर्माणिकरिष्येइतिसंकल्पः ॥ सर्वोद्देशेनस्वस्तिवाचनादि । चौलेकेशवापनेश्मश्रुवपनानन्तरमितिविशेषो महद्भयसः । विवाहसंकल्पं तदर्थं स्वस्तिवाचनादिकं च स्वयमेव पृथक्कुर्यात् । निमित्तान्तरे तथा संकल्पा ऊह्याः । यत्र तु पुनरुपनयनमात्रं प्रायश्चित्तत्वेन विहितं तत्र पर्षदुपदिष्टविधिना तदेव कार्यं । तत्राचार्यः कृच्छ्रत्रयं द्वादशसहस्रं तत्सवितुरित्यस्य जपं कुर्वीत । निमित्तान्तरोपनयने संस्कार्यएव कुर्यात् ॥ ॥ ततो ग्रामात्प्राच्यामुदीच्यां वा गत्वा यत्र ग्राम्यपशुशब्दो न श्रूयते तादृशं प्रदेशं संमार्जनोपलेपनाभ्यां शोधयित्वा तत्र कृतनित्यक्रिय आचार्य उपविश्य स्वदक्षिणतः संस्कार्यमुपवेश्य देशाद्युत्कीर्तनान्ते अस्य प्रत्यन्तदेशगमनजनितदोषनिरसनेन पुनःसंस्कारसिद्धिद्वारा श्रीप०पुनरुपनयनं करिष्ये इत्येवं निमित्तानुसारि संकल्पं कृत्वा तदङ्गभूतेत्यादिमण्डपदेवताप्रतिष्ठापनान्तं कुर्यात् ॥ स्वस्तिवाचनेऽग्निः श्रीयतामिति विशेषः । पुनरुपनयनेग्निरिति बौधायनः ॥ कृतमङ्गलस्नानं संस्कार्यं भोजयित्वा वपनपक्षे संकल्पपूर्वकं वपनस्नाने कारयित्वा अन्यत्सर्वं नित्योपनयनवत् ॥ अजिनमेखलादण्डभैक्षचर्याव्रतवर्जितं सर्वं कुर्यात् ॥ इति ॥

अथ ब्रह्मचारिधर्माः ॥ धर्मनौकायां ॥ मधूच्छिष्टमांसाञ्जनस्त्रीविहिंसास्तथा शुक्रपातोपवासौ च निन्दा ॥ इनालोकनं पादुके वर्जयेद्वै सदा ब्रह्मचारी त्यजेद्दन्तकाष्ठं ॥ १ ॥ छत्रादर्शौ वर्जयेत्तैलसङ्गं रोगग्रस्तश्चेत्प्रयुञ्जीत सम्यक् ॥ ज्येष्ठभ्रातुः सद्गुरोर्भुक्तशेषं तद्वत्तातस्यापि मध्वादि निन्द्यं ॥ २ ॥ औषधार्थमिति शेषः ॥ गुरुवद्गुरुपुत्रः स्यादन्यत्रोच्छिष्टभोजनात् ॥ कांस्यभोजनताम्बूले विधवायतिवर्णिनः ॥ ३ ॥ वर्जयेयुरिति शेषः ॥ मेखलामजिनं दण्डमुपवीतं च नित्यशः ॥ कौपीनं कटिसूत्रं च ब्रह्मचारी तु धारयेत् ॥ ४ ॥

अग्नीन्धनं भैक्षचर्यामधःशय्यां गुरोर्हितं ॥ कुर्याल्लक्षणमेतेषां प्रयोगाज्ज्ञायते स्फुटं ॥ ५ ॥ इति ॥

**अथ ब्रह्मचारिधर्मलोपे प्रायश्चित्तं ॥ धर्मनौकायां** ॥ मेखलामजिनं दण्डमुपवीतं कमण्डलुं ॥ अप्सु प्रास्य विनष्टानि गृह्णीतान्यानि मन्त्रतः ॥ १ ॥ इति ॥ योऽनातुरः सप्तदिनं न कुर्याद्भिक्षाग्निकार्ये अवकीर्णवच्च ॥ तन्निष्कृतिः संपदि संप्रदिष्टा द्वे आहुती आपदि संप्रदिष्टे ॥ १ ॥ कामावकीर्ण इत्याभ्यां जुहुयादाहुतिद्वयं ॥ उपस्थानं ततः कुर्यात्संमासिंचन्त्वनेनतु ॥ २ ॥ मन्त्राश्च निष्कृतिश्चापि विज्ञानेश्वरतो द्वयं ॥ ज्ञेयं त्वथ सकृल्लोपे मानस्तोके शिवालये ॥ ३ ॥ शतं जपेद्वाष्टसहस्रसंख्यं स्नात्वा च संध्याऽकरणेपि देवीं ॥ देवीं गायत्रीं ॥ जपेच्च भिक्षाऽकरणेऽष्टदिग्भि १०८ स्तुल्यां यदाऽभ्यासमुपैति कश्चित् ॥ ४ ॥ द्वैगुण्यतः संस्कृतितः पुनश्च शुद्धि-र्भवेदग्निकृतिस्तु नित्यं ॥ संध्याद्वये स्याद्यदि वापि सायं चेद्ब्रह्मचारी मधुमाषभुक् स्यात् ॥ ५ ॥ प्राजापत्यं चरेत्कृच्छ्रं यद्वा लक्षं शिवालये ॥ तंवोधिया जपेन्मन्त्र स्त्रीसङ्गस्तस्य चेद्यदि ॥ ६ ॥ यजेद्वै निर्ऋतिं रात्रौ स्थालीपाकविधानतः ॥ मिताक्षरादिषु ज्ञेयो विस्तरस्तु विशेषतः ॥७॥ यज्ञोपवीतं यदि नाशमायाद्धुत्वाहुतीनां च चतुष्टयेन ॥ आज्येन मन्त्रैश्च नवं स दध्यान्मन्त्रास्तु शाखान्तरतोऽवगम्याः॥८॥ मन्त्रा मानोव्रतपतिसंज्ञाः ॥ नष्टेतु सूत्रे कुरुतेऽथ भुक्तिं विण्मूत्रके वा यदि तस्य शुद्धिः ॥ देव्यष्टशून्याभ्रकु १००८ संजपेन प्राणस्य रोधेन भवेदवश्यं ॥ ९ ॥ इति ॥ **बौधायनः**—अत्रशौचाचमनसन्ध्यावन्दनदर्भभिक्षाग्निकार्यराहित्यशूद्रादिस्पर्शनकौपीनकटिसूत्रयज्ञोपवीतमेखलादण्डाजिनत्यागदिवास्वापच्छत्रधारणपादुकाद्यारोहणमालाधारणोद्वर्तनानुलेपनाञ्जनजलक्रीडाद्यूतनृत्यगीतवाद्याद्यभिरतिपाखण्डादिसंभाषणपर्युषितभोजनादिब्रह्मचारिव्रतलोपजसकलदोषपरिहारार्थंब्रह्मचारीकृच्छ्रत्रयंचरेन्महाव्याहृतिहोमंचकुर्यादिति ॥

**अथ प्रयोगः ॥ आचमनं । प्राणायामः । पवित्रधारणं । देशकालौसंकीर्त्यश्रीपरमेश्वरप्रीत्यर्थंपूर्वोक्तव्रतलोपजनितसकल-**

दोषपरिहारार्थंकृच्छ्रत्रयप्रायश्चित्तपूर्वकंव्याहृतिहोमंकरिष्येइतिसंकल्प्य ॥ लौकिकाग्निं ( विटनामानं ) प्रतिष्ठाप्य । ब्रह्मवरणाद्याज्यभागान्तंकृत्वाप्रथमंव्यस्तसमस्ताभिश्चतस्रआज्याहुतीर्हुत्वा ॥ ॐभूःस्वाहा इदमग्नये० १ ॥ ॐभुवःस्वाहा इदंवायवे० २ ॥ ॐस्वःस्वाहा इदंसूर्याय० ३ ॥ ॐभूर्भुवःस्वःस्वाहा इदंप्रजापतये० ४ ॥ ॐभूरग्नयेचपृथिव्यैचमहतेचस्वाहा इदमग्नयेपृथिव्यैमहतेचनमम ५ ॥ ॐभुवोवायवेचांतरिक्षायचमहतेचस्वाहा इदंवायवेंतरिक्षायमहतेचनमम ६ ॥ ॐ सुवरादित्यायचदिवेचमहतेचस्वाहा इदमादित्यायदिवेमहतेचनमम ७ ॥ ॐभूर्भुवःसुवश्चंद्रमसेचनक्षत्रेभ्यश्चदिग्भ्यश्च महतेचस्वाहा इदंचंद्रमसेनक्षत्रेभ्योदिग्भ्योमहतेचनमम ८ ॥ ॐपाहिनोअग्नएनसेस्वाहा इदमग्नये० ९ ॥ ॐपाहिनोअग्नेविश्ववेदसेस्वाहा इदमग्नये० १० ॥ ॐयज्ञंपाहिविभावसोस्वाहा इदमग्नयेनमम ११ ॥ ॐसर्वंपाहिशतक्रतोस्वाहा इदंशतक्रतवे० १२ ॥ ॐपुनरूर्जानिवर्तस्वपुनरग्नइषायुषा ॥ पुनर्नःपाह्यंहसःस्वाहा इदमग्नये० १३ ॥ सहरय्यानिवर्तस्वाग्नेपिन्वस्वधारया ॥ विश्वप्स्न्याविश्वतस्परिस्वाहा इदमग्नयेनमम १४ ॥ पुनर्व्याहृतिभिर्हुत्वास्विष्टकृदादिवरदानांतंशेषंसमापयेदिति ॥ इदमत्यल्पधर्मलोपेप्रायश्चित्तं ॥ बहुधर्मलोपेतुप्रायश्चित्तविशेषऋग्विधानेशौनकेनोक्तः—तंवोधियाजपेन्मन्त्रंलक्षंचैवशिवालये ॥ ब्रह्मचारीस्वधर्मंचन्यूनंचेत्पूर्णमेवतदिति ॥ महानाम्न्यादिव्रतेपुलुप्तेषुतारतम्येनत्रीन्षट्द्वादशवाकृच्छ्रान्कृत्वापुनर्व्रतंप्रारभेतेतिस्मृत्यर्थसारे । तथासंध्याग्निकार्यलोपेस्नात्वाष्टसहस्रंजपः । भिक्षालोपेष्टशतं । अभ्यासेद्विगुणंपुनःसंस्कारश्चेत्युक्तं ॥ इतिब्रह्मचारिव्रतलोपेप्रायश्चित्तम् ॥

**अथ वेदारम्भः** ॥ **अत्र हरिहरः**—तत्र वेदब्रह्मचर्यं चरेदित्यनेन वेदाध्ययनाङ्गतया ब्रह्मचर्याचरणमुक्तं ॥ वेदाध्ययनारम्भस्य कालः इतिकर्तव्यताच नोक्ता ॥ केवलं समावर्तनकर्म सूत्रकारेणारब्धं वेदᳪसमाप्य स्नायादिति ॥ तत्र वेदस्यारम्भंविना समाप्तिः कर्तुमशक्येति ॥ अतउपनयनानन्तरमेववेदारम्भस्य समय इत्यवगम्यते ॥ इतिकर्तव्यताच । पुनरेतदेव व्रतादेशनविसर्गेष्विति उपाकर्महोमातिदेशाद्व्रतादेशेन वेदारम्भे प्राप्नोति ॥ **अतश्च**—उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकं ॥ वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेदिति ॥ अत्रापि नान्दीश्राद्धंविनानारभ्यते ॥ अतःकारणाज्ज्योतिःशास्त्रोक्ते शुभे दिने कार्यं ॥ **रेणुकारिकायां**—अप्रसुप्ते हरौ स स्यान्नानध्याये शुभेहनि ॥ नास्तंगते जीवसिते बाले वृद्धे मलिम्लुचे ॥ षष्ठीं रिक्तां शनिं सोमं भौमं हित्वोत्तरोडुषु ॥ मृगादिपञ्चधिष्ण्येषु मूलाश्विन्योः करत्रये ॥ पूर्वासु तिसृषूपेन्द्रभत्रये केन्द्रगैः शुभैरिति ॥ **सच स्वशाखापूर्वको वेदारम्भः** ॥ **वसिष्ठः**—पारम्पर्यागतो येषां वेदः सपरिबृंहणः ॥ यच्छाखं कर्म कुर्वीत तच्छाखाध्ययनं तथा ॥ अधीत्य शाखामात्मीयामन्यशाखां ततः परं ॥ स्वशाखां यः परित्यज्य शाखारण्डः स उच्यते ॥ **पराशरः** ॥ वेदस्याध्ययनं सर्वं धर्मशास्त्रस्य चैव हि ॥ अजानतोर्थं तद्व्यर्थं तुषाणां कण्डनं यथा ॥ **मनुः**—योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमं ॥ स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥ १ ॥ इति ॥ अत्र प्रतिवेदस्यारम्भणं पृथक्पृथक् ॥ तत्पक्षे प्रतिवेदस्याहुतिद्वयं ब्रह्मणेइत्यादिनवाहुत्यनन्तरं महाव्याहृत्यादिस्विष्टकृदन्ता दशाहुतीर्हुत्वा होमशेषं समाप्य वेदारम्भं कृत्वा अभ्यसेत् ॥ ततः परं द्वितीयस्य नान्दीश्राद्धाद्यारम्भः ॥ एवंसर्वत्र ॥ तदशक्तौ एकतन्त्रेण नान्दीश्राद्धमेकमेवेति प्रतिवेदमाहुतिद्वयं ब्रह्मणेछन्दोभ्यश्च हुत्वा अन्ते प्राजापत्यादिसप्ताहुतीर्हुत्वा अनन्तरं महाव्याहृत्यादिदशाहुतय इति ॥

**अथप्रयोगः** ॥ आचमनं । प्राणायामः । पवित्रधारणं ॥ देशकालौसंकीर्त्यशुभपुण्यतिथौ अस्यब्रह्मचारिणःस्वशाखा-

पूर्वकंवेदारम्भमहंकरिष्ये ॥ तदङ्गत्वेनस्वस्तिपुण्याहवाचनंमातृकापूजनंवसोर्द्धारापू०नान्दीश्राद्धंचकरिष्ये तत्रनिर्विघ्नार्थं गणपतिपूजनंकरिष्येइतिसंकल्प्य ॥ तानिकृत्वा ॥ ततःस्थण्डिलेपञ्चभूसंस्कारपूर्वकंसमुद्भवनामानमग्निंप्रतिष्ठाप्य ॥ ततोद-क्षिणतोब्रह्मासनमास्तीर्येत्यादिचरुवर्जमाज्यभागान्तंप्रकृतिवत् । आज्यभागाविष्ट्वाज्याहुतीर्जुहोति । अन्तरिक्षायवायव-इतियजुर्वेदे । पृथिव्याअग्नयइतिऋग्वेदे । दिवेसूर्यायेतिसामवेदे । दिग्भ्यश्चंद्रमसइत्यथर्ववेदे । ब्रह्मणेछन्दोभ्यश्चेतिसर्वत्र । प्रजापतयेदेवेभ्योऋषिभ्यःश्रद्धायैमेधायैसदसस्पतयेनुमतयइतिच एतदेवव्रतादेशनविसर्गेषु ॥ ॐअन्तरिक्षायस्वाहा-इदमन्तरिक्षायनमम ॥ ॐवायवे० इदंवायवेन० ॥ ॐब्रह्मणेस्वा० इदंब्रह्मणे० ॥ ॐछन्दोभ्यःस्वा० इदंछन्दोभ्यो० ॥ ॐपृथिव्यैस्वा० इदंपृथिव्यै० ॥ ॐअग्नयेस्वा० इदमग्नये० ॥ ॐब्रह्मणेस्वा० इदंब्र० ॥ ॐछन्दोभ्यःस्वा० इदंछन्दोभ्यो० ॥ ॐदिवेस्वा० इदंदिवे० ॥ ॐसूर्यायस्वा० इदंसूर्याय० ॥ ॐब्रह्मणेस्वा० इदंब्रह्मणे० ॥ ॐछन्दोभ्यःस्वा० इदंछन्दोभ्यो० ॥ ॐदिग्भ्यःस्वा० इदंदिग्भ्योन० ॥ ॐचन्द्रमसेस्वा० इदंचन्द्र० ॥ ॐब्रह्मणेस्वा० इदंब्रह्म० ॥ ॐछन्दोभ्यःस्वा० इदं-छन्दो० ॥ ॐप्रजापतये० इदंप्र० ॥ ॐदेवेभ्यःस्वा० इदंदेवे० ॥ ॐऋषिभ्यःस्वा० इदंऋ० ॥ ॐश्रद्धायैस्वा० इदं-श्रद्धायै० ॥ ॐमेधायै० इदंमेधायै० ॥ ॐसदसस्पतये० इदंसद० ॥ ॐअनुमतये० इदमनुम० ॥ ततोनवाहुत्यादि-प्रणीताविमोकान्तंप्रकृतिवत् । ततःशिष्टाचारात्ब्रह्मचारिणावेदसरस्वतीपूजनंकार्यं ॥ अद्यपू० तिथौब्रह्मवर्चससिद्ध्यर्थं

वेदसरस्वतीपूजनंकरिष्ये ॥ षोडशोपचारैःसंपूज्य ॥ हरिः ॐभूर्भुवःस्वः ॐतत्सवितुर्वरेण्यं० ॥ १ ॥ ॐइषेत्वोर्ज्जेत्वा-वायवःस्थदेवोवःसवितापार्पयतुश्रेष्ठतमायकर्म्मणऽआप्यायध्वमघ्न्याऽइन्द्रायभागम्प्रजावतीरनमीवाऽअयक्ष्मामावस्तेनऽ-ईशतमाघशꣳसोध्रुवाऽअस्मिन्गोपतौस्यातबह्वीर्यजमानस्यपशून्पाहि ॥ १ ॥ अग्निमीळेपुरोहितंयज्ञस्यदेवमृत्विजं ॥ होतारंरत्नधातमं ॥ १ ॥ इतिऋग्वेदः ॥ ॐअग्नऽआयाहिवीतयेगृणानोहव्यदातये ॥ निहोतासत्सिबर्हिषि ॥ १ ॥ इतिसामवेदः ॥ ॐशन्नोदेवीरभिष्टयऽआपोभवंतुपीतये ॥ शंय्योरभिस्रवन्तुनः ॥ इत्यथर्ववेदः ॥ ॐस्वस्तीत्युक्त्वा ॥ इतिस्वशाखाविधिवत्स्वशाखावेदंपरशाखाविधिवत्परशाखावेदंचपठेत् ॥ ब्राह्मणभोजनं ॥ मातृणांविसर्जनं ॥ इतिवेदारंभः॥

अथकेशांतः । तत्रपारस्करः—षोडशवर्षस्यकेशांतः । चौलोक्तोमुहूर्तः । अत्रबहिःशाला । अस्यब्रह्मचारिणः केशांताख्यंकर्माहंकरिष्ये ॥ गणपतिपूजनंस्वस्तिपुण्याहवाचनंअविघ्नपूजनंमंडपस्थापनंमातृकापूजनंवसोर्धारापूजनंआयुष्यमन्त्रजपंनान्दीश्राद्धान्तंकृत्वा अग्निं प्रतिष्ठाप्य ॥ ततोदक्षिणतोब्रह्मासनमास्तीर्येत्यादि । आचार्यायवरदानान्तंसर्वंचूडाकरणवत् । तत्रविशेषः ॥ उपकल्पनीयेवरस्थानेगौः ॥ ॐउष्णेनवायउदकेनेह्यदितेकेशश्मश्रुवपइत्युदकासेकेविशेषः॥त्रिःक्षुरेणशिरःप्रदक्षिणंपरिहरतिसंमुखंकेशांते ॥ ॐयत्क्षुरेण० प्रमोषीर्मुखं । आचार्यायगोदानं । संवत्सरंब्रह्मचर्यंअवपनंच । द्वादशरात्रंषड्रात्रंत्रिरात्रमन्ततः । इतिकेशान्तः । इदमेवगोदानमिति ॥

**अथ समावर्त्तनम्** ॥ **पारस्करः** । वेदꣳसमाप्यस्नायात् ॥ ब्रह्मचर्यंवाष्टाचत्वारिꣳशकम् । द्वादशकेप्येके । गुरुणानुज्ञातः । गुर्वनुज्ञाचकर्मांगतया ॥ नस्नानस्यकालान्तरमेतत् ॥ **वेदलक्षणमाह**—विधिर्विधेयस्तर्कश्च वेद इति ॥ विधिर्विधायकं ब्राह्मणं ॥ विधेया मन्त्राः । तर्कोऽर्थवादः । षडङ्गमेके । शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति षडङ्गानि । एभिः षडङ्गैः सहितं वेदमधीत्यावगम्य च स्नानमिच्छन्त्येके आचार्याः ॥ नकल्पमात्रे ॥ कल्पशब्देन ग्रन्थोभिधीयते । ग्रन्थमात्रे अधीते अनवबुद्धे न स्नानमिच्छन्ति ॥ अनुष्ठानायोग्यत्वात् ॥ कामंतु याज्ञिकस्य । तुशब्दः पक्षव्यावृत्तौ । काममिच्छया । याज्ञिकस्य आध्वर्यवादियज्ञविद्याकुशलस्य स्नानमिच्छन्ति ॥ **अयमर्थः**—मन्त्रब्राह्मणात्मकं वेदमधीत्य अर्थतोऽवबुध्यच स्नायादित्येकः पक्षः । साङ्गं वेदमधीत्य अर्थतोवबुध्य च स्नायादित्यपरः पक्षः । ग्रन्थमात्रमधीत्य यज्ञविद्यांचाभ्यस्य स्नायादिति तृतीयः पक्षः । यज्ञविद्याविरहेण ग्रन्थमात्रेऽधीते न स्नायादिति निषेधः । ततश्च वेदाध्ययनस्य वेदविहिताग्निहोत्रादिकर्माद्यनुष्ठानं प्रयोजनम् ॥ ॥ **अथज्योतिःशास्त्रोक्तकालः** ॥ **धर्मनौकायाम्**—व्रतोक्तमादौ शनिभौमवारे मध्याह्नकाले यदिवा पुरस्तात् ॥ विवाहतः पूर्वमिदं प्रशस्तं याम्यायने चापि विधेयमेतत् ॥ **बौधायनः**—रोहिण्यां तथोत्तरयोः फाल्गुन्योर्हस्ते चित्रायामैन्द्रे विशाखयोर्वा स्नायादिति ॥ **धर्मनौकायां**—कृत्वा पूर्वं ब्रह्मचारी व्रतलोपस्य निष्कृतिं ॥ कुर्यादिदमिदं कृत्वा त्र्यहं पूर्वमृतस्य च । आशौचं विधिना कुर्याद्यदि पूर्वं मृतिर्नहि ॥ नाशौचं जननाशौचं नास्ति पूर्वभवस्य हीति ॥ एतच्च ब्रह्मचारिव्रतलोपे प्रायश्चित्तं कृत्वा कार्यं ॥ **तदाहबौधायनः**—शौचसंध्यादर्भभिक्षाग्निकार्यराहित्यकौपीनोपवीतमेखलादण्डाजिनाधारणदिवास्वापच्छत्रपादुकास्रग्विधारणोद्वर्तनानुलेपनाञ्जनद्यूतनृत्यगीतवाद्याद्यभिरतौ ब्रह्मचारी कृच्छ्रत्रयं चरेदिति ॥

अथसमावर्तनप्रयोगः ॥ **आचमनम्** । **प्राणायामः** । **पवित्रधारणं** ॥ देशकालौसंकीर्त्यशुभपुण्यतिथौ अस्यब्रह्मचारि-

णोगृहस्थाद्याश्रमान्तरप्राप्तिद्वाराश्रीपरमेश्वरप्रीत्यर्थंसमावर्तनाख्यंकर्मकरिष्ये ॥ तदङ्गत्वेनस्वस्तिपुण्याहवाचनंमातृकापू-
जनंवसोर्धारापूजनंआयुष्यमन्त्रजपंनान्दीश्राद्धंचकरिष्ये ॥ तत्रादौनिर्विघ्नतासिद्ध्यर्थंगणपतिपूजंकरिष्येइतिसंकल्प्य तानि
कृत्वा ॥ अत्रपुण्याहवाचनान्तेसुश्रवःप्रीयतामितिवदेत् ॥ उपसंगृह्यगुरुंसमिधोभ्याधायपरिश्रितस्योत्तरतः कुशेषुप्रागग्रे-
षुपुरस्तात्स्थित्वाष्टानामुदकुंभानांयेप्स्वन्तरग्नयःप्रविष्टागोह्यउपगोह्योमयूषोमनोहाअस्खलोविरुजस्तनूदूषिरिन्द्रियहातान्वि-
जहामि । योरोचनस्तमिहगृह्णामीत्येकस्मादपोगृहीत्वातेनाभिषिंचतेतेनमामभिषिंचामिश्रियैयशसेब्रह्मणेब्रह्मवर्चसायेति ॥
ततःभोआचार्यअहंस्नास्यामिइतिब्रह्मचारिणः प्रश्नः॥ स्नाहीतिगुरुः॥ पूर्ववदुपसंगृह्यगुरुं॥ ततःपरिश्रितेपञ्चभूसंस्कारपूर्वकंसू-
र्यनामानमग्निंप्रतिष्ठाप्य ॥ ततोदक्षिणतोब्रह्मासनमास्तीर्येत्यादिचरुवर्जमाज्यभागान्तंप्रकृतिवत् ॥ तत्रविशेषः ॥ पात्रासा-
दनानन्तरंउपकल्पनीयानि ॥ संधुक्षणानि । पर्युक्षणार्थमुदकं । तिस्रः समिधः । हरिताः कुशाः । अष्टौवारिकुम्भाः । द-
धितिलवा । धौतवस्त्रं । नापितः । स्नानार्थमुदकं । औदुम्बरंकनिष्ठिकाग्रवत्स्थूलंद्वादशाङ्गुलदीर्घंसरलंसत्वचंदन्तधावन-
काष्ठंब्राह्मणस्य । दशाङ्गुलंराजन्यस्य । अष्टाङ्गुलंवैश्यस्य । उद्वर्तनद्रव्यं । स्नानार्थमुष्णोदकं । चंदनं । अहतेवाससी ॥
यज्ञोपवीतेद्वेत्रीणिवा । पुष्पाणि । उष्णीषं । कर्णालंकारौ । अञ्जनं । आदर्शः । छत्रं । उपानहौ । वैणवदंडः ॥ पवित्रच्छेदना-
दिपर्युक्षणान्तेआघारावाज्यभागौचजुहुयात् ॥ आज्यभागानन्तरंएतदेवव्रतादेशनविसर्गेष्वितिसूत्राद्व्द्वादशाहुतिहोमः ॥

ॐअन्तरिक्षायस्वाहेत्यादिअनुमतयेस्वाहेत्यन्तंवेदारम्भवत् ॥ ततोनवाहुत्यादिस्विष्टकृदन्तंदशाहुतयः । संस्रवप्राशनादि-प्रणीताविमोकांतं । ततःपरिसमूहनादित्र्यायुषकरणान्तंपूर्ववत्समिदाधानंब्रह्मचारिणः ॥ ततोगोत्रनामपूर्वकंवैश्वानरादीनामभिवादनं ॥ ततआचार्यस्यपरिश्रितस्योत्तरतोष्टानामुदकुंभानांदक्षिणोत्तराणांस्थापनं ॥ समिधोभ्याधायपरिश्रितस्योत्तरतःकुशेषुप्रागग्रेषुपुरस्तात्स्थित्वाष्टानामुदकुंभानांउदङ्मुखःप्रत्यङ्मुखोवा उदकुंभानांपुरस्तात्प्रागग्रहरितकुशास्तरणं ॥ ॐयेअप्स्वंतरग्नयःप्रविष्टागोह्यऽउपगोह्योमयूखोमनोहाअस्खलोविरुजस्तनूदूषिरिन्द्रियहातान्विजहामियोरोचनस्तमिहगृह्णामि ॥ इत्येकस्मादपोगृहीत्वा ततःस्नानकर्ताप्राङ्मुखोभूत्वातेनाभिषिञ्चतेत्मानं ॥ ॐतेनमामभिषिञ्चामिश्रियैयशसेब्रह्मणेब्रह्मवर्चसाय ॥ १ ॥ पुनर्येप्स्वन्तरग्नयइतिमन्त्रेणद्वितीयोदकुम्भादुदकमादाय ॥ ॐयेनश्रियमकृणुतांयेनावमृशतांसुराम् ॥ येनाक्ष्यावभ्यषिञ्चतांयद्वांतदश्विनायशः ॥ १ ॥ इत्यभिषिञ्चते ॥ पुनर्येप्स्वन्तरग्नयइत्यनेनतृतीयोदकुम्भादुदकमादाय ॥ ॐआपोहिष्ठा० चक्षसे ॥ १ ॥ इत्यभिषिञ्चते ॥ पुनर्येप्स्वन्तरग्नयइत्यनेनचतुर्थोदकुम्भादुदकमादाय ॥ योवः शिव० तरः ॥ १ ॥ इत्यभिषिञ्चते ॥ पुनर्येप्स्वन्तरग्नय० ॥ १ ॥ इतिमन्त्रेणपञ्चमोदकुम्भादुदकमादाय ॥ ॐतस्माऽअरंग० चनः ॥ १ ॥ इत्यभिषिञ्चते ॥ त्रिभिस्तूष्णीमितरैः पुनर्येप्स्वन्तरग्नयइत्यनेनमन्त्रेणषष्ठोदकुम्भादुदकमादायतूष्णीमभिषिञ्चते । एवं सप्तमाष्टमोदकुंभोदकाभ्यांस्नानं ॥ ततउदुत्तममितिमेखलामुन्मुच्यशिरोमार्गेण ॥ ॐउदुत्तमं० ॥ तूष्णींदण्डंनिधाय ॥ अजिनंच ॥ तूष्णींवासोन्यत्परिधायादित्यमुपतिष्ठतेब्रह्मचारी ॥ ॐउद्यन्भ्राजभृष्णुरिन्द्रोम-

रुद्भिरस्थात्प्रातर्यावभिरस्थाद्दशसनिरसि दशसनिंमाकुर्वाविदन्मागमयोघन्भ्राजभृष्णुरिन्द्रोमरुद्भिरस्थाद्दिवायावभिरस्थाच्छतसनिरसिशतसनिंमाकुर्वाविदन्मागमयोघन्भ्राजभृष्णुरिन्द्रोमरुद्भिरस्थात्सायंयावभिरस्थात्सहस्रसनिरसिसहस्रसनिंमाकुर्वाविदन्मागमय ॥ १ ॥ ततस्तूष्णींदधितिलान्प्राश्य ॥ आचम्य । जटालोमनखान्सꣳहृत्यशीतोदकेनस्नात्वा ॥ औदुम्बरेणकाष्ठेनदन्तान्धावेत ॥ ॐअन्नाद्यायव्यूहध्वꣳसोमोराजायमागमत् ॥ समेमुखंप्रमाक्ष्यतेयशसाचभगेनच ॥ १ ॥ उत्साद्यमङ्गलद्रव्येणोद्वर्त्येत्यर्थः । उष्णोदकेनपुनःस्नात्वा ॥ आचम्य ॥ पाणिभ्यामनुलेपनंनासिकयोर्मुखस्यचोपगृह्णीते ॥ ॐप्राणापानौमेतर्पयचक्षुर्मेतर्प्पयश्रोत्रम्मेतर्प्पय ॥१॥ पाण्योरवनेजनं ॥ तदुदकमञ्जलिनागृहीत्वाप्राङ्मुखःसन्दक्षिणस्यांदिशिनिषिञ्चति ॥ ॐपितरःशुन्धध्वं ॥ अपसव्येनेतिवासुदेवः ॥ उदकोपस्पर्शः ॥ तूष्णींचन्दनेनानुलिप्यजपेत् ॥ ॐसुचक्षाअहमक्षीभ्याम्भूयासꣳसुवर्चामुखेन ॥ सुश्रुत्कर्णाभ्यांभूयासम् ॥ १ ॥ अहतंवासोधौतंवाऽमौत्रेणाच्छादयीत ॥ ॐपरिधास्यैयशोधास्यैदीर्घायुत्वायजरदष्टिरस्मि ॥ शतंचजीवामिशरदःपुरूचीरायस्पोषमभिसँव्ययिष्ये ॥ १ ॥ आचम्य ॥ अथयज्ञोपवीतधारणं ॥ ॐयज्ञोपवीतम्पर० ॥ ० ॥ आचम्य ॥ अथोत्तरीयं ॥ ॐयशसामाद्यावापृथिवीयशसेन्द्राबृहस्पती ॥ यशोभगश्चमाविदद्यशोमाप्रतिपद्यतां ॥ १ ॥ एकंचेत्पूर्वस्योत्तरवर्गेणप्रच्छादयीत । आचार्यदत्ताःसुमनसःप्रतिगृह्णाति ॥ ॐयाऽआहरज्जमदग्निःश्रद्धायैकामायेन्द्रियाय ॥ ताऽअहम्प्रतिगृह्णामियशसाचभगेनच ॥ अथावबध्नीते ॥ ॐयद्यशोप्सरसामिन्द्रश्चकारविपुलंपृथु ॥ तेनसङ्ग्रथिताःसुमनसऽआबध्नामियशोमयि ॥ १ ॥ उष्णीषेणशिरोवेष्टयते ॥

ॐ युवासुवासाः परिवीतऽआगात्सऽउश्रेयान्भवतिजायमानः ॥ तन्धीरासः कवयऽउन्नयन्तिस्वाध्योमनसादेवयन्तः ॥ कर्णवेष्टकौप्रतिमुञ्चते ॥ ॐ अलङ्करणमसिभूयोलङ्करणम्भूयात् ॥ भेदेमन्त्रावृत्तिः ॥ वृत्रस्येत्यङ्क्तेक्षिणी ॥ ॐ वृत्रस्यासिकनीनकश्चक्षुर्दाअसिचक्षुर्मेदेहि ॥१॥ प्रथमंदक्षिणं ॥ ततोवाममनेनैव ॥ रोचिष्णुरसीत्यात्मानमादर्शेप्रेक्षते ॥ ॐ रोचिष्णुरसि ॥१॥ छत्रंगृह्णाति ॥ ॐ बृहस्पतेश्छदिरसिपाप्मनोमामन्तर्द्धेहितेजसोयशसोमामन्तर्द्धेहि ॥ १ ॥ उपानहौप्रतिमुञ्चतेयुगपत् ॥ ॐ प्रतिष्ठेस्थोविश्वतोमापातम् ॥ १ ॥ वैणवंदण्डमादत्ते ॥ ॐ विश्वाभ्योमानाष्ट्राभ्यस्परिपाहिसर्वतः ॥ १ ॥ मेखलोन्मोचनादिदण्डदानान्तंस्नानकर्ताकर्मकरोतिनाचार्यः ॥ दन्तप्रक्षालनादीनिनित्यमपिमन्त्रवन्तिभवन्ति ॥ वासश्छत्रोपानहश्चापूर्वाणिचेन्मन्त्रः ॥ ततआचार्यःस्नातस्यनियमान्वदेत् ॥ ॥ स्नातस्यनियमान्वक्ष्यामः ॥ कामादितरः ॥ नृत्यगीतवादित्राणिनकुर्यान्नचगच्छेत् ॥ कामंतुगीतंगायतिवैवगीतेवारमतइतिश्रुतेह्यपरं ॥ क्षेमेनक्तंग्रामान्तरंनगच्छेन्नचधावेत् ॥ उदपानावेक्षणवृक्षारोहणफलप्रपतनसंधिसर्पणविवृतस्नानविषमलंघनशुक्लवदनसंध्यादित्यप्रेक्षणभैक्षणानिनकुर्यात् नहवैस्नात्वाभिक्षेतापहवैस्नात्वाभिक्षांजयतीतिश्रुतेः ॥ वर्षत्यप्रावृतोव्रजेत् अयंमेवज्रःपाप्मानमपहनदिति ॥ अप्स्वात्मानंनावेक्षेत ॥ अजातलोम्नींविपुंसींषंढंचनोपहसेत् ॥ गर्भिणींविजन्येतिब्रूयात् ॥ सकुलमितिनकुलं ॥ भगालमितिकपालं ॥ मणिधनुरितीन्द्रधनुः ॥ गांधयंतींपरस्मैनाचक्षीत ॥ उर्वरायामनंतर्हितायांभूमावुत्सर्पंस्तिष्ठन्नमूत्रपुरीषंकुर्यात् ॥ स्वयंप्रशीर्णेनकाष्ठेनगुदंप्रमृजीत ॥ विकृतंवासोनाच्छादयीत ॥ दृढव्रतोवधत्रःस्यात् सर्वतआत्मानंगोपायेत् सर्वेषांमित्र-

मिव ॥ ( शुक्रियमध्येष्यमाणः ) ॥ तिस्रोरात्रीर्व्रतंचरेत् ॥ अमां॑सास्यमृण्मयपायी ॥ स्त्रीशूद्रशवकृष्णशकुनिशुनां- चादर्शनमसंभाषाचतैः ॥ शवशूद्रसूतकान्नानिचनाद्यात् ॥ मूत्रपुरीषेष्ठीवनंचातपेनकुर्यात् ॥ सूर्याच्चात्मानंनांतर्दधीत ॥ तप्तेनोदकार्थान्कुर्वीत ॥ अवज्योत्यरात्रौभोजनं ॥ सत्यवदनमेववा ॥ दीक्षितोप्यातपादीनिकुर्यात्प्रवर्ग्यवांश्चेत् ॥

अथ क्रमप्राप्तो विवाहोऽभिधीयते ॥ तत्र तावत्तदुपयोगितया संक्षेपेण किंचिदुच्यते। आदौ अनाश्रमिप्रायश्चित्तम्। तत्र दक्षः—अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः ॥ आश्रमेण विना तिष्ठन्प्रायश्चित्तीयते यत इति ॥ प्रायश्चित्तव्यवस्था मिताक्षरायाम्—अनाश्रमी संवत्सरं प्राजापत्यं कृच्छ्रं चरित्वाऽऽश्रमसुपेयात् द्वितीये अतिकृच्छ्रं । तृतीये कृच्छ्रातिकृच्छ्रं। अतऊर्ध्वं चान्द्रायणमिति हारीतोक्तेः। इत्यनाश्रमित्वप्रायश्चित्तम् ॥ ॥ अथ विवाहावसरः ॥ गुरवे तु वरं दत्वा स्नायीत तदनुज्ञया ॥ वेदव्रतानि वा पारं नीत्वा ह्युभयमेव वा ॥ अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् ॥ अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम् ॥ अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम् ॥ इति याज्ञवल्क्योक्तेः समावर्तनोत्तरं विवाहावसरः ॥ ॥ तत्रादौ कुलपरीक्षा ॥ तथाचाश्वलायनः—कुलमग्रे परीक्षेत ये मातृतः पितृतश्चेति यथोक्तं पुरस्तादिति ॥ गदाधरभाष्यादौ च यमः—कुलं च शीलं च वपुर्वयश्च वित्तं च विद्यां च सनाथतां च ॥ एतान्गुणान्सप्त परीक्ष्य देया कन्या बुधैः शेषमचिन्तनीयम् ॥ मनुरपि—महान्त्यपि समृद्धानि गोऽजाऽविधनधान्यतः ॥ स्त्रीसंबन्धे दशैतानि कुलानि परिवर्जयेत् ॥ हीनक्रियं निष्पुरुषं निश्छन्दो रोमशार्शसम् ॥ क्षय्यामयाव्यपस्मारिश्वित्रिकुष्ठिकुलानि च ॥ हीनक्रियं विहितक्रियारहितम् । निष्पुरुषं पुंप्रसवरहितम् । निश्छन्दो वेदाध्ययनरहितम् । रोमशं

सर्वाङ्गारूढरोमकम् । अर्शसमित्यादिपदैस्तत्तद्रोगवन्ति कुलान्युच्यन्ते । दारसंग्रहफलभूतसंततौ दोषानुवृत्तिपरिहाराय चैषा कुलपरीक्षोच्यते । कुलानुरूपाः प्रजाः संभवन्तीति **हारीतवचनात्** ॥ ॥ **अथ वरदोषाः कन्यादोषाश्च** ॥ **कात्यायनः**—उन्मत्तः पतितः कुष्ठी षण्ढश्चैव स्वगोत्रजः ॥ चक्षुःश्रोत्रविहीनश्च तथापस्मारदूषितः ॥ वरदोषाः स्मृताश्चैते कन्यादोषाः प्रकीर्तिताः ॥ **तत्रैव नारदः**—अपत्यार्थं स्त्रियः सृष्टाः स्त्री क्षेत्रं बीजिनो नराः ॥ क्षेत्रं बीजवते देयं नाऽबीजी क्षेत्रमर्हतीति ॥ **लक्षण्यां** लक्षणविशिष्टाम् । तानि **लक्षणान्याह मनुः**—अव्यङ्गाङ्गीं सौम्यनाम्नीं हंसवारणगामिनीम् ॥ तनुलोमकेशदन्तां मृद्वङ्गीमुद्वहेत्स्त्रियमिति ॥ एतानि बाह्यानि ॥ आभ्यन्तराणितु—अष्टौ पिण्डान्कृत्वेत्याद्या**श्वलायनगृह्योक्तानि** ज्ञेयानि ॥ **अनन्यपूर्विकामिति** । अन्यपूर्विकाः सप्तविधाः पुनर्भ्वः—वाचादत्ता मनोदत्ता अग्निं परिगता सप्तमं पदं नीता भुक्ता गृहीतगर्भा प्रसूता चेति **बौधायनोक्ताः** । एता न विवाह्या इत्येतदर्थं अनन्यपूर्विकामिति विशेषणम् । प्रथमवरस्य पातित्यादिबलवद्दोषनिर्णयेतु आद्यानां तिसृणां परिणयनं भवतीत्यवसरे वक्ष्यामः ॥ **कान्तां**—वरस्य चक्षुर्मनसोरानन्दकारिणीमिति विज्ञानेश्वरादयः तेन श्वशुरादिचक्षुरादेस्तत्कारित्वाभावेऽपि न दोषः ॥ **तथाच धर्मनौकायाम्**—कन्यकां विधुमुखीं मृगनेत्रां चापसंनिभभ्रुवं वृतजङ्घाम् ॥ सुन्दरस्वरयुतां शुभदन्तामुद्वहेद्वरवरः सुतनुं ताम् ॥ २ ॥ ज्योतिषोक्तघटितान्वितनाम्नीं मातृतातकुलतोपि च योग्याम् ॥ एवमेव दशदोषविहीनो नोद्वहेदपतितो दृढवीर्यः ॥ ३ ॥ नोद्वहेदित्यत्र ना उद्वहेदिति पदच्छेदः । ना पुरुषः ॥ ॥ **सापिण्ड्यलक्षणम्** ॥ अरोगिणीं भ्रातृमतीं समानगोत्रार्षहीनां वयसापि हीनाम् ॥ पितुर्जनन्याश्च सपिण्डतायामुक्तं वरः पुंस्त्वपरीक्षितः सन् ॥ ४ ॥ **असपिण्डां** सापिण्ड्यरहिताम् । तथाच **धर्मनौकायां**—पुंसः स्त्रियः शुक्ररजोंशतोऽत्र समन्वयो वंशपरम्परासु ॥ सापिण्ड्यमाहुः किल केचिदन्ये पिण्डान्वयित्वं खलु देवतैक्यात् ॥ ५ ॥ पितृव्यमातुल-

सहोदरमातुलान्यादौ नास्ति चैतदिति मा भवता तु वाच्यम् ॥ श्राद्धे यतो भवति देवगणैक्यमेषां स्त्रीणां तु पित्र्यकरणे पतिना सहै-क्यात् ॥ ६ ॥ सापिण्ड्यमेतदिह सप्तमपूरुषान्तं नोर्ध्वं भवेत्तदपि मातृकुले पितुश्च ॥ पुत्रादिषट्स्वथ च तातपितामहादिषट्स्वेव नोपरि तथा हरदत्तकस्तु ॥ ७ ॥ कूटस्थमारभ्य वधूर्वरो वा चेदष्टमस्तातकुले तदानीम् ॥ षष्ठो भवेन्मातृकुले द्वितीयादिकां वधूं मूलत उद्वहेत्सः ॥ ८ ॥ नैतच्छिष्टा आद्रियन्ते ततोऽत्र मूलात्षष्ठो वाष्टमो मूलषष्ठीम् ॥ मूलात्तद्वच्चाष्टमीं चोद्वहेत्स पक्षः श्रेयान्नास्ति पूर्वो वरीयान् ॥९॥ मूलान्मूलपुरुषात् ॥ आशौचेप्येवम् ॥ मातृबन्धुत्रयात्तातबन्धुत्रितयतः क्रमात् ॥ पञ्चमी सप्तमी कन्या न विवाह्या द्विजैः सदा ॥१०॥ ॥ **बन्धुत्रयनिरूपणम्** ॥ मातुःपितृष्वसुः पुत्रा मातुर्मातृष्वसुः सुताः ॥ मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः ॥११॥ पितुः पितृष्वसुः पुत्राः पितुर्मातृष्वसुः सुताः ॥ पितुर्मातुलपुत्राश्च विज्ञेयाः पितृबान्धवाः ॥ १२ ॥ स्वमातृमूलपुरुषात्त्रिगोत्रान्तरितां वधूम् ॥ न्यूनामपि वरः कुर्यात्पितृमूलान्न कर्हिचित् ॥ १३ ॥ यानि यानीह वाक्यानि न्यूनतां शुभतां जगुः ॥ तानि दत्तकसापत्नसंबन्धविषयाणि तु ॥१४॥ विप्रस्य क्षत्रियादीनां सापिण्ड्यविषयाणि वा ॥ अनुकल्प इति भ्रान्त्या भ्रमितव्यं न सर्वथा ॥१५॥ ॥ **मातुलकन्यावरण-विचारः** ॥ कन्योद्वाह्या मातुलस्याहुरन्ये वाक्यान्याहुः साधकान्येव तस्य ॥ योग्यं नास्त्येवास्तु वा तद्युगान्ते वर्ज्यं प्राहैतद्युगे शास्त्रमेतत् ॥ १६ ॥ तथाच शास्त्रम् ॥ गोत्रान्मातृसपिण्डाच्च विवाहो गोवधस्तथा ॥ **इत्यादित्यपुराणे** ॥ ॥ **सापिण्ड्ये मतान्तराणि** ॥ कूटस्थमारभ्य वरस्य वध्वा माता पिता पञ्चमिकाक्रमेण ॥ स्यात्सप्तमस्तर्हि सुखेन कार्या वधूर्वरेणैवमुवाच शास्त्रम् ॥ १७ ॥ संततिर्भिद्यते यस्मात्स कूटस्थस्ततः क्रमात् ॥ पञ्चमी सप्तमो माता पिता सापिण्ड्यनिर्गमः ॥ १८ ॥ जगौ सुमन्तुर्दशपूरुषान्तं सापिण्ड्यमस्यायमि-हाशयोऽस्ति ॥ तातत्रये जीवति पूर्णमेतत्पितृद्वये जीवति चैकहीनम् ॥ १९ ॥ तातेऽष्टमान्तं पुनरेव तस्मिन्मृतिं गते सप्तमपूरुषान्तम् ॥

अपुत्रजन्तोर्धनहारके तु दूरस्थिते सप्तमपूरुषान्तम् ॥ २० ॥ अधिकारः ॥ अग्रे परस्तात्पुरुषत्रयान्तं सापिण्ड्यमेतत्तु ॥ ॥ **कन्याविषये सापिण्ड्यविचारः** ॥ अथ कन्यकासु ॥ विवाहहीनासु भवेदवश्यमाशौचकाले पुरुषत्रयान्तम् ॥ २१ ॥ इदं शावाशौच एव ॥ कानीनकन्यासु च मातृवंशे त्रिपूरुषान्तं गदितं विधिज्ञैः ॥ ॥ **अथ सापत्नमातृकुले सापिण्ड्यम्** ॥ सापत्नमातामहवंशकेऽपि त्रिपूरुषान्तं गदितं परंतु ॥ २२ ॥ सवर्णमातामहवंशकेन विहीनमातामहवंश एतत् ॥ तस्मात्सदा सप्तमपञ्चमान्तः पक्षो वरिष्ठोऽस्त्यथ केचिदत्र ॥ २३ ॥ पितुः कुले सप्तमतोऽपि हीना गोत्रत्रयेणान्तरिता विवाह्या ॥ ॥ **अथ विरुद्धसंबन्धः** ॥ गुरोश्च शिष्यस्य च कन्यका तु त्याज्याऽविरुद्धापि च सर्वयत्नात् ॥ २४ ॥ सापत्नमातृभगिनी तनया च तस्याः पितृव्यपत्निभगिनी तनया च तस्याः ॥ सापत्नपुत्रस्य सुता च मातृष्वसुस्तथा ज्येष्ठसहोदरस्य ॥ २५ ॥ भार्यास्वसा मित्रसुता च कन्या गायत्रिकाया उपदेष्टुरेव ॥ वाचैव बन्ध्वादिकतां गता ये स्नेहेन बन्ध्वादिकतां गताश्च ॥ २६ ॥ कन्या तु तेषां न कदापि कार्या विरुद्धसंबन्धमिमं वदन्ति ॥ एवं वदत्यत्र तु मूलमेव चिन्त्यं जगौ निर्णयसिन्धुकारः ॥ २७ ॥ ॥ **अथ दत्तकसापिण्ड्यम्** ॥ सापिण्ड्यमुक्तं खलु दत्तकस्य स्वतातवंशेऽपि च मातृवंशे ॥ तद्वद्भवेत्पालकतातमातृवंशे क्रमात्सप्तमपञ्चमान्तम् ॥ २८ ॥ इति सापिण्ड्यम् ॥ ॥

**अथानुकल्पसापिण्ड्यम्** ॥ **धर्माब्धौ**—उद्वहेत्सप्तमादूर्ध्वं तदभावे तु सप्तमीम् ॥ पञ्चमीं तदभावे तु पितृपक्षेऽप्ययं विधिः ॥ १ ॥ सप्तमीं च तथा षष्ठीं पञ्चमीं च तथैव च ॥ एवमुद्वाहयेत्कन्यां न दोषः शाकटायनः ॥ २ ॥ तृतीयां वा चतुर्थीं वा पक्षयोरुभयोरपि ॥ विवाहयेन्मनुः प्राह पाराशर्यो यमोऽङ्गिराः ॥ ३ ॥ यस्तु देशानुरूपेण कुलमार्गेण चोद्वहेत् ॥ नित्यं स व्यवहार्यः स्याद्वेदाच्चैतत्प्रतीयते ॥ ४ ॥ इत्यादिवचनानां **चतुर्विंशतिमतषट्त्रिंशन्मतादिषूपलभ्यमानत्वात्** सापिण्ड्यसंकोचेन विवाहस्य बहु-

देशेषु दर्शनाच्च । येषां कुले देशे चानुकल्पत्वेन सापिण्ड्यसंकोचः परम्परया समागतस्तेषां सापिण्ड्यसंकोचेन विवाहो न दोषाय ॥ स्वकुलदेशविरुद्धेन सापिण्ड्यसंकोचेन विवाहे दोषो भवत्येव ॥ जनपदधर्मा ग्रामधर्माश्च तान्विवाहे प्रतीयात् ॥ येनास्य पितरो याता येन याताः पितामहाः ॥ तेन यायात्सतां मार्गं तेन गच्छन्न दुष्यतीत्यादिवाक्यैः स्वकुलदेशाचाराविरुद्धस्यैव शास्त्रस्य विवाहेऽनुसर्तव्यत्वात् ॥

अथ सापिण्ड्यसंकोचस्वीकारेपि कतिथी कन्या कतिथेन पुरुषेण विवाह्या कतिथेन न विवाह्येति व्यवस्था नोपपादिता । सापिण्ड्यदीपिकाकारादयोऽर्वाचीनास्तु—चतुर्थीमुद्वहेत्कन्यां चतुर्थः पञ्चमो वरः ॥ पाराशरमते षष्ठीं पञ्चमो नतु पञ्चमीमित्यादिवचनानां समूलत्वं निश्चित्य अशक्तैः संकटे समाश्रयणीयस्य सापिण्ड्यसंकोचस्य व्यवस्थामूचुः ॥ तथाहि चतुर्थी कन्या पितृपक्षे मातृपक्षे च चतुर्थेन पञ्चमेन वा पुंसा विवाह्या । द्वितीयतृतीयषष्ठाद्यैश्चतुर्थी नोद्वाह्या । पराशरमते पञ्चमः षष्ठी-मुद्वहेत् । द्वितीयतृतीयचतुर्थादिः षष्ठीं नोद्वहेत् । पञ्चमः पञ्चमीं नोद्वहेत् । मातृतः पितृतश्चापि षष्ठः षष्ठीं समुद्वहेदिति वचनान्तरात् षष्ठेनापि षष्ठी विवाह्या । पञ्चमषष्ठभिन्नैः षष्ठी न विवाह्येति पर्यवसन्नम् । तथा पितृपक्षे सप्तमी मातृपक्षे पञ्चमी च तृतीयाद्यैः सर्वैः परिणेया । पितृपक्षात्सप्तमीं च मातृपक्षा तु पञ्चमीमिति व्यासवचनात् । उद्वहेत्सप्तमादूर्ध्वं तदभावे तु सप्तमीम् ॥ पञ्चमीं तदभावे तु पितृपक्षेप्ययं विधिरिति चतुर्विंशतिमतोक्तेश्च पितृपक्षेपि पञ्चमी तृतीयाद्यैः परिणेया । तत्रापि मातृपक्षे पितृपक्षेपि पञ्चमेन पञ्चमी नोद्वाह्या । पञ्चमो नतु पञ्चमीमिति सर्वत्र निषेधात् । तृतीयां वा चतुर्थीं वा पक्षयोरुभयोरपीति वचनात्तु तृतीया विवाह्या प्राप्नोति तत्र व्यवस्थोच्यते—मातृपक्षे तावत्तृतीया मातुलकन्या वा मातृष्वसृकन्या वा संभवति । पितृपक्षे तु तृतीया पितृव्यकन्या पितृष्वसृकन्या वा । तत्र पितृव्यकन्या सगोत्रत्वात्त्याज्या । पैतृष्वसेयीं भगिनीं स्वस्रीयां मातुरेव च ॥ एतास्तिस्रस्तु भार्यार्थे नोपयच्छेत

बुद्धिमानिति **मनूक्तेः** पितृष्वसृमातृष्वसृकन्ये अपि त्याज्ये इति, पितृष्वसृकन्यां मातुर्भगिनीं मातृष्वसारं मातुःस्वस्रीयां मातृष्वसृकन्यामेतास्तिस्रो नोद्वहेदिति तदर्थात् मातुलकन्यैव तृतीया पूर्वोक्तरीत्या कुलपरंपरागतत्वे परिणेया । एवंच तृतीयापि तृतीयेनैव मातुलकन्यैव परिणेया न चतुर्थादिना केनापि ॥ केचित्संकटे पितृष्वसृकन्यापरिणयनमाहुः तत्र देशकुलाचाराद्व्यवस्था ज्ञातव्या ॥ **अत्रायं सापिण्ड्यदीपिकादिसिद्धार्थसंग्रहः**—तृतीया मातुलकन्यैवोद्वाह्या । चतुर्थी-चतुर्थपञ्चमाभ्यामेव । पञ्चमी पञ्चमभिन्नैस्तृतीयाद्यैः सप्तमान्तैः । षष्ठी पञ्चमषष्ठाभ्यामेव । सप्तमी तृतीयाद्यैः सप्तमान्तैरिति । अयं सापिण्ड्यसंकोचेन विवाहः संकटेष्वशक्तेन कार्यः । कन्यान्तरलाभे शक्तैर्न कार्यः । गुरुतल्पादिदोषस्मृतेः सापिण्ड्यसंकोचवाक्यानामशक्तविषयत्वस्य स्पष्टत्वात् । प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते ॥ स नाप्नोति फलं चेहेति शक्तैरनुकल्पस्वीकारे दोषोक्तेः ॥

स्पष्टप्रतिपत्तये कन्यानां कर्तव्याकर्तव्यताकोष्टकम्

| नकर्तव्यता | कर्तव्यता | कर्तव्यता |
|---|---|---|
| वरः ५ कन्या ५ | वरः ८ कन्या५।७ | वरः ६ कन्या ६ |
| वरः ७ कन्या ७ | वरः ७ कन्या ६ | वरः ८ कन्या ६ |
| वरः ६ कन्या ४ | वरः ८ कन्या ८ | वरः ४ कन्या ४।५।६ |
| एतानोद्वहेत् | एताउद्वहेत् | एताउद्वहेत् |

अथ **तृतीयकन्यापरिणयनविचारः होसिंगरामभट्टकृतः** ॥ अथ भट्टश्रीधरविरचितायां सापिण्ड्यदीपिकायामनुकल्पसापिण्ड्यनिर्णये तृतीयकन्यापरिणयने यदुक्तं तद्युक्तमयुक्तं वेति विचार्यते ॥ तत्र—तृतीयां वा चतुर्थीं वा पक्षयोरुभयोरपि ॥ विवाहयेन्मनुः प्राह पाराशर्योऽङ्गिरा यम इति वाक्यमुदाहृत्य चतुर्थीकन्याविषये स्वमनीषया किंचिद्व्याख्यायोक्तम् ॥ तथा तृतीयापि कन्या न सर्वैः परिणेया । तथाहि मातृपक्षे तावत्तृतीया कन्या मातुलकन्या मातृष्वसृकन्या वा संभवति । तथा पितृपक्षे तृतीया कन्या पितृव्यकन्या पितृष्व-

स्रकन्या वा नान्यथा । तत्र स्वपितृव्यकन्या परिणेतुं न योग्या स्वसमानगोत्रत्वात् । तथा मातृष्वस्रकन्यापि न परिणेया तन्निषेधस्य वक्ष्यमाणत्वात् । ततः स्वमातुलस्य वा स्वपितृष्वसुर्वा येन कन्या परिणीयते सा मूलपुरुषात् गणने तृतीयैव । ततश्च मातुलस्य वा पितृष्वसुर्वा कन्या सैव तृतीया । मातृपक्षे पितृपक्षे च तृतीयेनैव परिणेया नान्येन चतुर्थादिना सपिण्डेनेत्यविकृतो मूलग्रन्थ इति । तन्न मनोहरम् । पक्षयोरुभयोरपीत्युदाहृतवाक्यांशस्य निर्विषयत्वात् । यत्तु पितृपक्षे तृतीया कन्या स्वपितृष्वस्रकन्येति विषयदानमुक्तं तन्न साधु । तृतीये संगच्छावहै चतुर्थे संगच्छावहा इति, तृसां जहुर्मातुलस्येव योषा भागस्ते पैतृष्वसेयी वपामिवेत्यादिश्रुतिस्मृतिबलान्मातुलकन्योद्वाहः कार्य इत्युक्त्वाऽत्र यद्यपि पितृष्वस्रकन्योद्वाहः प्राप्तस्तथापि—अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्न तु इति निषेधाद्वचनान्तरेण तदुद्वाहस्याविधानाच्च न कार्य इत्येवं **भट्टकमलाकरादिभिः** प्राचीनैर्नवीनैः सर्वैरपि पितृष्वस्रकन्याविवाहस्य दूषितत्वात्कुत्राप्येतद्विवाहानुष्ठानाभावाच्च । यैः पितृष्वस्रकन्या परिणीयत इति सिद्धवदुक्तिस्तु यैः श्राद्धे वन्ध्यापुत्रो भोज्यते तेषामयं विधिरितिवद्द्रष्टव्या ॥ किंच स्वयमनेनैव तृतीयेनैवोक्तकन्या परिणेयेत्युक्त्वा ननु मातुलस्य पितृष्वसुर्वा कन्यायाः परिणयनं निषिद्धं ॥ **तथाच स्मृतिः**—मातुलस्य सुतामूढ्वा मातृगोत्रां तथैवच ॥ समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेदिति ॥ **अतएव मनुना**—पैतृष्वसेयीं भगिनीं स्वस्रीयां मातुरेवचेत्युपक्रम्य एतास्तिस्रस्तु भार्यार्थे नोपयच्छेत बुद्धिमानिति पितृष्वस्रकन्यायाः परिणयनं निषिद्धं ॥ पैतृष्वसेयी पितृष्वसुः कन्या । मातुर्भगिनी मातृष्वसा । मातुः स्वस्रीया मातृष्वस्रकन्या न परिणेयेति मनुवाक्यार्थः । तत्कथं मातुलकन्यायाः परिणयनमनुज्ञायत इति चेत्सत्यम् । देशभेदेन विरोधाभावादित्युक्त्वाऽनेकश्रुतिस्मृतिसंमत्या देशभेदेन मातुलकन्यापरिणयनं सम्यक्प्रसाध्य पुनर्नत्वेवं तृतीयत्वाविशेषान्मातृष्वसुः कन्या परिणेया स्यादिति चेन्नैवम् । स्वस्रीयां मातुरेव चेति तन्निषेधात् । नन्वयं निषेधो देशभेदेन व्यवस्थितः किं न स्यादिति

चेन्मैवम् । यद्धि क्वचिच्छास्त्रे विहितं क्वचिन्निषिध्यते तत्र देशादिभेदेन व्यवस्था वाच्या यथा मातुलकन्यापरिणयनम् । नचात्र क्वचिद्विहितत्वे सति क्वचित्प्रतिषिद्धत्वे व्यवस्थाकरणमस्तीत्युक्तं **भट्टश्रीधरेण** । तत्रोपक्रमशङ्काग्रन्थे मातुलकन्यया सह पितृष्वसृकन्यामुदाहृत्य अनेकप्रबन्धेन मातुलकन्यापरिणयनं प्रसाध्य पुनरुपसंहारे शङ्काग्रन्थे स्वस्त्रीयां मातुरेव चेति **मनुना** तन्निषेधादित्येवं हेतुरुपन्यस्तः सच हेतुः पैतृष्वस्रेय्यामप्यविशिष्टः, कथं मातृष्वसृकन्यैव प्रतिषिध्यते । तस्मादुपक्रमशङ्काग्रन्थान्मनूक्तहेतोरविशिष्टत्वादाकाशीरामेश्वराचारसंवादाच्च मुक्तलज्जेन त्वयापि मातृष्वसृसुता या इव पितृष्वसुःकन्याया अप्यवश्यं निषेधो वक्तव्यः । तस्माद्भवदीयव्याख्याने पक्षयोरुभयोरपीत्येतस्य निर्विषयत्वं सुस्थमिति तस्य विषयदानं तावत्पक्षद्वयकन्यापेक्षितं ग्राह्यं तादृशमपि कथंचिद्वक्तुं शक्यम् । वस्तुतस्तु वरापेक्षितमेव पक्षद्वयं ग्राह्यम् । सतिसंभवे वाक्यगतोपपदेनविवाहकर्तृसमानाधिकरणप्रधानभूतक्रियावाचकप्रत्ययान्वयस्यैव युक्तत्वात् । पञ्चमीं तदभावे तु पितृपक्षे त्वयं विधिरिति वाक्यान्तरनिदर्शनाच्च ॥ **तत्प्रकारस्त्वेवम्** ॥ मूलपुरुषो नारायणस्तस्य कन्या वा पुत्रो वा द्वितीयस्तस्य कन्या सावित्री तृतीया वधूः । यथा वरपक्षे मूलपुरुषस्त्वेक एव । तत्कन्या सरस्वती द्वितीया तत्पुत्रो देवदत्तस्तृतीयः तत्पुत्रो यज्ञदत्तश्चतुर्थो वरः । एतस्य पितृपक्षीया मूलपुरुषात्तृतीयोक्ता सावित्री वधूर्भवति । मातृपक्षे तु पितृपक्षवत्सर्वं परिकल्प्य वरपक्षे तृतीयस्थाने कन्या प्रवेशनीयेति विशेषः । एवं चतुर्थे वरे गृह्यमाणे प्रकारान्तरेणापि ऊहितुं शक्यं मनीषिभिः । तस्मादुक्तरीत्या चतुर्थेन वरेण तृतीया कन्या परिणीता चेत् पक्षयोरुभयोरपीत्येतद्व्याख्यानमतीव समंजसं स्यात् नैव तृतीयवरपक्ष इति । नचानुक्तसमुच्चयार्थो वरः कथं संभवतीति वाच्यम् । यत्रोभयोः समो दोषः परिहारोपि वा सम इति न्यायेनोक्तरीत्या तृतीयवरस्याप्यनुक्तत्वात् । नह्यनुक्तो वरो नैव संभवतीति नियमो वक्तुं शक्यते । पञ्चम्यादिकन्यानामपरिणेयत्वप्रसङ्गात् । पञ्चमीं च तथा षष्ठीं सप्तमीं च तथै-

वच ॥ पञ्चमीं तदभावे त्वित्यादिशाकटायनादिवाक्यप्रतिपादितानां सप्तमीपञ्चमीतृतीयकन्यानां वरस्यानुपादाने परिणयनं स्यात्। चतुर्थीमुद्वहेत्कन्यां चतुर्थः पञ्चमोपि वा ॥ पाराशरमते षष्ठीं पञ्चमो नतु पञ्चमीम् ॥ अन्यगोत्रादन्यगोत्रां षष्ठः षष्ठीं समुद्वहेदित्येताभ्यामेव वाक्याभ्यां चतुर्थीषष्ठ्योः कन्यकयोः वरसमर्पणे कृते तु अवशिष्टतृतीयपञ्चमसप्तमकन्यकानां वाचनिकवराभावेऽन्यथानुपपत्त्या यः कश्चिद्वरोऽवश्यं वक्तव्यः। तत्र पञ्चमो नतु पञ्चमीमित्यनेन पञ्चम्याः पञ्चमस्य निषेधे कृतेऽवशिष्टा वरा भवन्ति। तत्रापि वाचनिकवरेतराक्षेपवरविचारणायां वराधिक्यमेवापेक्ष्यते न कन्याधिक्यमित्यसकृदनुभूतशिष्टसंप्रदायः, युक्ततरश्चायं पक्षः। प्रमादात्कन्याधिक्यविवाहे विघ्नबाहुल्यस्यानुभूयमानत्वात्। पिण्डहेतुभूतयोः शुक्रशोणितयोर्मध्ये शुक्रस्य प्राबल्यात्। पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथेत्यादौ स्त्र्यपेक्षया पुरुषाधिक्यस्यैव प्रतीयमानत्वात्। नचैकत्र पुरुषाधिक्येऽन्यत्रापि कथं वराधिक्यमपेक्षत इति वाच्यम्। असतिबाधके एकत्र निर्णीतः शास्त्रार्थोऽन्यत्राप्यनुषज्यत इति न्यायप्रवृत्तेर्निरङ्कुशत्वादिति। तस्मान्मातुलकन्यातिरिक्ततृतीयकन्यानां चतुर्थ एव वरः संभवति न कदाचिदपि तृतीय इति। किंच प्रायोयं ग्रन्थकर्ता **श्रीधरः** पक्षद्वयगततृतीयकन्यायास्तृतीय एव वर इति व्याख्याता कृत्स्नधर्मशास्त्रसदाचारयोः खपुष्पायमाणो द्वितीयो वरः स्वनिबन्धेषु पुनःपुनस्तदुदाहरणाद्भागिनेयीपरिणेता मातुलः कानडजातीयो भविष्यतीति यत्किंचिदेतल्लेखनम्। नचात्र कन्याधिक्यपरिणयनेनापि कुलवृद्धिदर्शनात् पूर्वोक्तविघ्नबाहुल्यहेतुरनर्थक इति वाच्यम्। गुर्जरपुष्करण्यादौ वधूवरयोर्ज्येष्ठकनिष्ठयोः परिणयनेन समानगोत्रापरिणयनेनापि कुलवृद्धिदर्शनात् तदनुष्ठानापत्तेः, श्रुतिस्मृतिसदाचारविरुद्धगृह्यमाणकारणाचारस्य **भट्टाचार्यैः** दुराचारत्वप्रतिपादनादेतादृशशिष्टाचारदर्शनाच्चेति सम्यक्परिभावनीयं सुधीभिरिति। एवं चतुर्थ्याः कन्यायाश्चतुर्थो वरः पञ्चमो वा भवति तथा तृतीयाया अपि चतुर्थो वरः पञ्चमश्चेत्सम्यगेव। संक्रान्तिपुण्यकाले संक्रमण-

संनिहितानां नाडीनां पुण्यतमत्ववत् सापिण्ड्यनिर्णये मूलपुरुषाद्यावद्विप्रकर्षस्तावच्छ्रेय इति । विप्रकर्षे मूलपुरुषावयवयोः शुक्रशोणितयोर्ह्रासस्संभवात् । अतएव पञ्चमात्सप्तमादूर्ध्वापेक्षया तत्पूर्वगतानां तृतीयचतुर्थादीनामनुकल्पत्वं ग्रन्थकारैः सर्वैरप्युक्तम् ॥

**ननु** तृतीयायाश्चतुर्थ्याश्चतुर्थो वरः पञ्चमो वेत्युक्तन्यायेनैव साधिते चतुर्थीमुद्वहेत्कन्यां चतुर्थः पञ्चमोऽपिवेति वचनस्य वैयर्थ्यापातादितिचेन्न । तस्यान्यविषयत्वात् । तथाहि । न्यायेनैव कन्यायाः समसंख्याको वरस्तदुत्कृष्टो वेति प्राप्ते सत्यनेन वचनगतपूर्वार्धेन एकादशीमुपोष्यैव द्वादशीं समुपोषयेदिति वचनान्तरप्राप्तैकादश्युपवासवदनूद्य प्राप्तद्वादश्युपवासविधानवदुत्तरार्धार्थप्रतिपादने तात्पर्यं । यथा चतुर्थीमुद्वहेत्कन्यां चतुर्थ इत्यनेन न्यायप्राप्तां समसंख्यां पञ्चमोऽपिवेत्यनेन वराधिक्यं चानूद्योत्तरार्धगतपञ्चमो नतु पञ्चमीमित्यन्तेनावयवेनैतन्मात्रांशसमसंख्यां प्रतिषिध्य पाराशरमते षष्ठीमित्यनेनावयवेन कन्याधिक्यं च प्रतिपाद्यते तेन एतावन्मात्रसमसंख्यानिषेधः कन्योत्कर्षश्च भवति नान्यत्रेत्यवशिष्यते । तत्रापि पाराशरमते इत्युक्त्याऽन्येषां मते नायमर्थो भवतीत्यपि निश्चीयते । तत्रोत्तरार्धगतकन्याधिक्यमतभेदेन विकल्पो भवति । सच व्यवस्थितः ॥ कृते तु मानवो धर्मस्त्रेतायां गौतमस्तथा । द्वापारे शङ्खलिखितौ कलौ पाराशरस्मृतिरितिस्मरणात्कलौ पाराशरमतोक्तः कन्योत्कर्षः संभवति न युगान्तरे इति श्लिष्यते ॥ **अत्रायं संग्रहः**—तृतीया कन्या मातुलसंबन्धातिरिक्तस्थले चतुर्थेन पञ्चमेन वा परिणेया न तृतीयेन । तथा चतुर्थ्यपि । दंपत्योः साम्यपरिणयननिषेधः पञ्चयुगुलमात्रे नान्यत्र । कन्याधिक्यं तु चतुर्थपञ्चमवरोपलक्षितं षष्ठीमात्रविषयं नान्यत्र । तदपि कलौ न युगान्तरे ॥ मीमांसासहितं यस्य धर्मशास्त्रमुपस्थितम् ॥ तत्रापि विमला बुद्धिस्तेनेदं परिभाव्यताम् ॥ १ ॥ इति श्रीमद्धोसिंगोपनामकरामभट्टकृतसापिण्ड्यसंक्षेपः ॥

अथ **दीक्षितकृतः सापिण्ड्यनिर्णयः । तत्र प्रसङ्गात्पञ्चमीकन्यापरिणयविषये किंचिदुच्यते ॥ आश्वलायन-**

**गृह्यकारिकायाम्**—निदानात्पञ्चमी नारी यदि स्यात्क्रिसुताधिका। सापिण्ड्यं सर्ववर्णानां विच्छिन्नं सर्वसंमतम् ॥ १ ॥ मूलपुंसोऽष्टमौ पूज्यौ स्त्रीजौ षष्ठौ वधूवरौ ॥ वृत्तातिवृत्तसापिण्ड्यौ विवाहार्हौ स्मृतेर्वशात् ॥ २ ॥ द्वौ पुत्रौ पूर्वजातस्यातां तयोरपि च संततिः ॥ पञ्चमः पञ्चमीं कन्यां न तत्र वरयेद्द्विजः ॥ ३ ॥ द्वे कन्ये पूर्वजातस्यातां तयोरपि च संततिः ॥ पञ्चमः पञ्चमीं तत्र वरः कन्यां समुद्वहेत् ॥ ४ ॥ कन्यापुत्रौ च संभूतौ पूर्वजातसंततिस्तयोः ॥ पञ्चमः पञ्चमीं कन्यां वरस्तत्र समुद्वहेत् ॥ ५ ॥ ॥ चतुर्थीमुद्वहेत्कन्यां चतुर्थः पञ्चमोऽपि वा ॥ पाराशर्यमते षष्ठीं पञ्चमो नतु पञ्चमीम् ॥ १ ॥ चतुर्थो वरः चतुर्थीं कन्यामुद्वहेत् ॥ पञ्चमोऽपि वा वरः चतुर्थीं कन्यामुद्वहेत् ॥ चतुर्थः पञ्चमो वा वरः षष्ठीं कन्यामुद्वहेत् ॥ पञ्चमस्तु पञ्चमीं नोद्वहेत् ॥ **अत्र कश्चिदाह** ॥ पञ्चमो नतु पञ्चमीमिति निषेधाच्चतुर्थः पञ्चमीमपि कन्यामुद्वहेत् ॥ चतुर्थीमुद्वहेदित्यस्मिन्वाक्ये द्वितीयपादे चतुर्थः पञ्चमीमपीति पाठदर्शनाच्च ॥ तथा दशभिः पुरुषैः ख्याता इत्यारभ्य पाराशर्योऽङ्गिरो यम इत्यन्तसार्धत्रय उक्तास्तासामपि परिणयनं कार्यं ॥ इति दीक्षितकृते प्रयोगदर्पणे सापिण्ड्यनिर्णयः ॥

**अथ सापत्नमातृकुले सापिण्ड्यं** ॥ **धर्माब्धौ सुमन्तुः**—पितृपत्न्यः सर्वा मातरस्तद्भ्रातरो मातुलास्तद्भगिन्यो मातृष्वसारस्तद्दुहितरश्च भगिन्यस्तदपत्यानि भागिनेयानीति ॥ अत्र लक्षणया सापत्नमातृकुले चतुःपुरुषसापिण्ड्यं विवाहनिषेधाय विधीयत इति केचित् ॥ अपरेतु विवाहमात्रविषयत्वे मानाभावादाशौचादिविषयकत्वस्यापि संभवात् यावद्वाचनिकं प्रमाणमिति न्यायेन परिगणितेष्वेव सापिण्ड्यमिति वदन्ति ॥ तथाच सुमन्तुवाक्ये वाक्यभेदाश्रयणेनैवं वाक्यार्थाः पर्यवस्यन्ति ॥ पितृपत्न्यः सर्वा मातर इति प्रथमवाक्ये सापत्नमातरि मुख्यमातृवत्संमाननं तद्वधे मातृवधप्रायश्चित्तं तद्गमने मातृगमनप्रायश्चित्तं चातिदिश्यते ॥ नात्रातिक्रान्तविषये दशाहाशौचातिदेशः। त्रिरात्रविधिना बाधात् ॥ तद्भ्रातरो मातुला इत्यत्र मातुलत्वं तत्प्रयुक्तमाशौचादिकं मातुलस्य स्वभगिनीसपत्न्याः कन्योद्वाहनिषेधश्च। अत्र

मातुलत्वातिदेशेऽपि न तत्पुत्रादिषु मातुलपुत्रत्वाद्यतिदेशः। तेन बन्धुत्रयत्वप्रयुक्तमाशौचं न। मातुलकन्यादौ विवाहविधिनिषेधावपि न ॥ एव मातुलकन्यादौ पितुर्भगिनीत्वातिदेशाभावेन तत्पुत्रेप्यपि पितृष्वसृत्वाद्यतिदेशो न भवति ॥ तद्भगिन्यो मातृष्वसार इत्यत्र आशौचं विवाहनिषेधश्च मातृष्वसृपुत्रे बन्धुत्रयवत्त्वं च न ॥ सापत्नमातृष्वसृकन्याविवाहनिषेधस्तु विरुद्धसंबन्धत्वादेव वक्ष्यते ॥ तद्दुहितरश्च भगिन्य इत्यत्र आशौचं संमाननादिकंच ॥ सगोत्रत्वान्नात्र विवाहप्रसक्तिः ॥ तदपत्यानि भागिनेयानीत्यत्र आशौचं विवाहनिषेधश्च ॥ भागिनेयत्वातिदेशेऽपि तत्कन्यासु भागिनेयीकन्यात्वातिदेशो न । यावदुक्तं प्रमाणमिति न्यायादिति दिक् ॥ तद्भगिन्यो मातृष्वसार इति तु आकरे न पठितमिति **कमलाकरभट्टाः** ॥ इति सापत्नमातृकुले सापिण्ड्यं ॥ ॥

**अथ दत्तकसापिण्ड्यं** ॥ **धर्मनौकायां**—सापिण्ड्यमुक्तं खलु दत्तकस्य स्वतातवंशेऽपि च मातृवंशे ॥ तद्वद्भवेत्पालकतातमातृवंशे क्रमात्सप्तमपञ्चमान्तमिति ॥ इति दत्तकसापिण्ड्यं ॥ ॥

**अथ विरुद्धसंबन्धः** ॥ **धर्माब्धौ**—क्वचित्सापिण्ड्याभावेपि वचनादविवाहः ॥ **विरुद्धसंबन्धो गृह्यपरिशिष्टे** ॥ दंपत्योर्मिथः पितृमातृसाम्ये विरुद्धसंबन्धो यथा भार्यास्वसुर्दुहिता पितृव्यपत्नीस्वसाचेति ॥ अस्यार्थो दत्तकमीमांसायां—यत्र दंपत्योर्वधूवरयोः पितृमातृसाम्यं । वध्वाः वरः पितृस्थानीयो भवति । वरस्य वा वधूर्मातृस्थानीया भवति । तादृशो विवाहो विरुद्धसंबन्धः ॥ तत्र यथाक्रममुदाहरणद्वयं ॥ भार्यास्वसुर्दुहिता शालिकापुत्री । पितृष्वसृपत्नीस्वसा पितृव्यपत्नीभगिनी चेति । यतो रतियोगः संभवति तादृशो विवाहः कार्य इति यावदिति ॥ **धर्मनौकायां** ॥ त्याज्या विरुद्धापि च सर्वयत्नात् ॥ सापत्नमातृभगिनी तनया च तस्याः पितृव्यपत्निभगिनी तनया च तस्याः ॥ सापत्नपुत्रस्य सुता च मातृष्वसुस्तथेति ॥ तस्याः सापत्नमातृभगिन्याः । तस्याः पितृव्यपत्नीभगिन्याः

कन्या चेति । तथा मातृष्वसुः सापत्नपुत्रस्य सुताचेत्यर्थः ॥ ॥ **केचित्तु** । गुरोश्च शिष्यस्य च कन्यका तु त्याज्या तथा ज्येष्ठसहोदरस्य ॥ भार्यास्वसा मित्रसुता च कन्या गायत्रिकाया उपदेष्टुरेव ॥ वाचैव बन्ध्वादिकतां गता ये स्नेहेन बन्ध्वादिकतां गता ये ॥ कन्या तु तेषां न कदापि कार्या विरुद्धसंबन्धमिमं वदन्ति ॥ २ ॥ एवं वदन्त्यत्र तु मूलमेव चिन्त्यं जगौ निर्णयसिंधुकारः ॥ इति विरुद्धसंबन्धः ॥ ॥

**सापिण्ड्यनिर्णये यवीयसीमित्यस्य व्याख्या** ॥ **यवीयसीम्**—स्वापेक्षया न्यूनवयस्कामित्यर्थः । **अरोगिणीं** अचिकित्स्यराजयक्ष्मादिरोगरहिताम् ॥ **भ्रातृमतीं** सभ्रातृकाम् ॥ अभ्रातृकायास्तु परिणयने निषेधः स्मर्यते । **तथाच मनुः**—यस्यास्तु न भवेद्भ्राता न विज्ञायेत वा पिता ॥ नोपयच्छेत तां कन्यां पुत्रिकाधर्मशङ्कयेति ॥ तस्याः परिणयने तु **पारस्करः**—अधिरथं शतं दुहितृमत इति । दुहितृमांश्च यस्य दुहितर एव सन्ति न पुत्राः तस्मै रथाधिकं गवां शतं दत्वा दुहितरं तस्योद्वहेत् । प्रतिषिद्धा ह्यसौ नाभ्रातृकामुपयच्छेदिति वचनात्तत्परिक्रियायाधिरथगोशतदानमिति **कर्कः** । मातृमतीमिति पुत्रिकाकरणशङ्कानिवृत्त्यर्थम् । यत्र तु पुत्रिकाकरणाभावनिश्चयः तत्र अभ्रातृकामप्युद्वहेदिति **प्रयोगदर्पणे** ॥ **असमानार्षगोत्रजाम्**—ऋषेरिदं आर्षं । गोत्रप्रवर्तकस्य मुनेर्व्यावर्तकः प्रवर इत्यर्थः । गोत्रं वंशपरंपरया प्रसिद्धं । आर्षं च गोत्रं च आर्षगोत्रे । स्वसमाने आर्षगोत्रे यस्य सः समानार्षगोत्रः । तस्माज्जाता या न भवति सा असमानार्षगोत्रजा तामित्यर्थः ॥

**अथापदेवकृतो गोत्रप्रवरनिर्णयः** ॥ गणनाथं नमस्कृत्य गणनामपुरःसरं ॥ असगोत्रसगोत्रर्षिप्रविवेकः प्रतायते ॥१॥ बौधायनोक्तार्षविभिन्नमौनस्तोमानुषस्सस्मरणापदेशात् ॥ ब्रवीमि पाणिग्रहनिर्णयाय सूत्रान्तरोक्तानपि चान्यपद्यैः ॥ २ ॥ **अथ भृगवः** ॥

**तत्रादौ जामदग्न्यभृगवः** ॥ वत्सा विदा भार्गवजामदग्न्यास्तथार्ष्टिषेणाः परभार्गवाख्याः ॥ गोत्रार्षसाम्यान्न मिथो विवाह्याः कुर्वन्तु सर्वे मम सुप्रभातं ॥ ३ ॥ वत्सानां पञ्चप्रवराः—भार्गवच्यावनाप्नवानौर्वजामदग्न्येति । त्रयोवा भार्गवऔर्वजामदग्न्येति ॥ विदानांपञ्च—भार्गवच्यावनाप्नवानौर्ववैदेति ॥ त्रयोवा—भार्गवौर्वजामदग्न्येति ॥ आर्ष्टिषेणानांपञ्च—भार्गवच्यावनाप्नवानार्ष्टिषेणानूपेति ॥ त्रयोवा—भार्गवार्ष्टिषेणानूपेति । इति कात्यायनोक्ताः ॥ **अथ सूत्रान्तरोक्ताः** ॥ सूत्रान्तरे वत्सपुरोधसाख्या वात्स्याश्च वत्साय अजामदग्न्याः ॥ सगोत्रिणो वत्समुखैस्त्रिभिः स्युः कुर्वन्तु० ॥ ४ ॥ वत्सपुरोधसयोः पञ्च—भार्गवच्यावनाप्नवानवत्सपौरोधसेति ॥ वात्स्यानांत्रयः—भार्गवच्यावनाप्नवानेति ॥ अजामदग्न्यवत्सानां त्रयः—भार्गवच्यावनाप्नवानेति ॥ अन्येपि सूत्रान्तरगा अवाच्या ये बैजवा नैमथिताः सगोत्राः ॥ वत्सादिभिः पूर्वमितः प्रणीतैः कुर्वन्तु० ॥ ५ ॥ अवाच्यानांत्रयः—भार्गवच्यावनावाच्येति । बैजवनैमथितयोःपञ्च—भार्गवच्यावनाप्नवानबैजवनैमथितेति ॥ वत्सादिबैजवान्तानां परस्परमविवाहः ॥ **अथ केवलभार्गवाः** ॥ यस्कौभिधा मित्रयवश्च वैन्याः सशौनकाः केवलभार्गवाख्याः ॥ स्वंस्वं गणं प्रोज्झ्य परैर्विवाह्याः कुर्वन्तु० ॥ ६ ॥ यस्कानांत्रयः—भार्गववैतहव्यसावेतसेति ॥ मित्रयूनांत्रयः—भार्गवदैवोदासवाध्र्यश्वेति ॥ एकोवा—वाध्र्यश्वेति ॥ वैन्यानांत्रयः—भार्गववैन्यपार्थेति ॥ शौनकानामेकः—शौनकेति ॥ गार्त्समदेति वा ॥ द्वौवा—भार्गवगार्त्समदेति ॥ त्रयो वा—भार्गवशौनहोत्रगार्त्समदेति ॥ भार्गवशौनकगार्त्समदेतिवा ॥ इतिभृगुगणस्थकेवलभार्गवाः ॥ क्वचिन्निरुक्ताः खलु वेदविश्वज्योतिःप्रथाः शाठरमाठराश्च ॥ भृगोर्गणाः सप्त इमे निरुक्ताः कुर्वन्तु० ॥ ७ ॥ वेदविश्वज्योतिषांत्रयः—भार्गववेदविश्वज्योतिषेति ॥ शाठरमाठरयोस्त्रयः—भार्गवशाठरमाठरेति ॥ यस्कादिमाठरान्तानां केवलभार्गवाणां स्वस्वगणे अविवाहः ॥ इतरैः सर्वैर्विवाहो भवति ॥ इति भृगुगणाः ॥ **अथाङ्गिरसः** ॥ **तत्रादौ गौतमाङ्गिरसः** ॥ आयास्यकौमण्डकवामदेवाः कारेणुपाल्यौशनसाः शरद्वान् ॥ स्युर्गौतमा

दीर्घतमाः सगोत्राः कुर्वन्तु० ॥ ८ ॥ अयास्यानां त्रयः आङ्गिरसायास्यगौतमेति ॥ कौमण्डानां पञ्च आङ्गिरसौतथ्यकाक्षीवतगौतमकौ-
मण्डेति ॥ वामदेवानां त्रयः—आङ्गिरसगौतमवामदेवेति ॥ कारेणुपालानां त्रयः आङ्गिरसगौतमकारेणुपालेति ॥ औशनसानां त्रयः आ-
ङ्गिरसौशनसगौतमेति ॥ शरद्वतां त्रयः—आङ्गिरसगौतमशारद्वतेति ॥ दीर्घतमसां पञ्च—आङ्गिरसौतथ्यकाक्षीवतगौतमदैर्घतमसेति ॥ त्रयो वा—
आङ्गिरसौतथ्यदैर्घतमसेति ॥ गणाः के सौशिजसोमराजायास्यौशिजाख्या बृहदुक्थकाश्च ॥ आयास्यप्रभृतयः स कृताः पुरोक्ताः कुर्वन्तु० ॥ ९ ॥
औशिजानां त्रयः आङ्गिरसौशिजकाक्षीवतेति ॥ सोमराजानां त्रयः आङ्गिरससोमराजगौतमेति ॥ आयास्यौशिजानां पञ्च आङ्गिरसायास्यौ-
शिजगौतमकाक्षीवतेति ॥ बृहदुक्थानां त्रयः आङ्गिरसबार्हदुक्थगौतमेति ॥ सगोत्रेणोऽन्ये परस्परजाता औतथ्यराहूगणकक्षिवन्तः ॥
स्युर्गौतमसांगिरसैः समस्तैः कुर्वन्तु० ॥ १० ॥ औतथ्यानां त्रयः—आङ्गिरसौतथ्यगौतमेति ॥ राहूगणानां त्रयः—आङ्गिरसराहूगणगौत-
मेति ॥ कक्षीवतां पञ्च आङ्गिरसौतथ्यगौतमौशिजकाक्षीवतेति ॥ आयास्यादिकक्षीवदंतानां आङ्गिरसगौतमानां परस्परमविवाहः ॥ **अथ
भरद्वाजाङ्गिरसः** ॥ अथो भरद्वाजमुखाङ्गिरोजा ये ते भरद्वाजयुताश्च गर्गाः ॥ रौक्षायणाख्याः कपयः सगोत्राः कुर्वन्तु० ॥११॥ भर-
द्वाजानां त्रयः आङ्गिरसबार्हस्पत्यभारद्वाजेति ॥ गर्गाणां पञ्च—आङ्गिरसबार्हस्पत्यभारद्वाजसैन्यगार्ग्येति ॥ त्रयो वा—आङ्गिरससैन्यगार्ग्येति ॥
भारद्वाजसैन्यगार्ग्येति वा ॥ आङ्गिरसतैत्तिरकापिभुवेति वा ॥ रौक्षायणानां पञ्च—आङ्गिरसबार्हस्पत्यभारद्वाजवान्दनमातवचसेति ॥ कपीनां
त्रयः—आङ्गिरसआमहीयवऔरुक्षयसेति ॥ आङ्गिरसबार्हस्पत्यभारद्वाजेति वा ॥ आङ्गिरसबार्हस्पत्यकापेयेति वा ॥ भारद्वाजादिकप्यन्तानां परस्प-
रमविवाहः ॥ **अथ केवलाङ्गिरसः** ॥ स्युः केवला आङ्गिरसाः सगोत्राः स्वेस्वे गणे हारितविष्णुवृद्धाः ॥ रथीतरा मुद्गलकण्वसंज्ञाः कुर्वन्तु०
॥१२॥ हरितानां त्रयः—आङ्गिरसाम्बरीषयौवनाश्वेति ॥ मांधाताम्बरीषयौवनाश्वेति वा ॥ विष्णुवृद्धानां त्रयः—आङ्गिरसपौरुकुत्सत्रासदस्य-

वेति ॥ रथीतराणां त्रयः—आङ्गिरसवैरूपराथीतरेति ॥ आङ्गिरसवैरूपपार्षदश्वेति वा ॥ मुद्गलानां त्रयः—आङ्गिरसभार्म्यश्वमौद्गल्येति वा ॥ कण्वानांत्रयः—आङ्गिरसाजमीढकाण्वेति ॥ आङ्गिरसघोरकाण्वेति वा ॥ हरितादिकण्वान्तानां केवलाङ्गिरसां स्वस्वगणे अविवाहः ॥ क्वचित्तु कुत्सैर्हरिताः सगोत्रा रथीतराख्यैः पृषदश्वसंज्ञाः ॥ उक्ता अमी आङ्गिरसाः समस्ताः कुर्वन्तु० ॥१३॥ कुत्सानां त्रयः—आङ्गिरसमांधातृकौत्सेति ॥ एषां हरितैरविवाहः ॥ पृषदश्वानां त्रयः—आङ्गिरसपार्षदश्ववैरूपेति ॥ अष्टादंष्ट्रपार्षदश्ववैरूपेति वा ॥ एषां रथीतरैरविवाहः ॥ इत्याङ्गिरसगणाः ॥ **अथात्रयः** ॥ अथात्रिगाविष्ठिरमुद्गलाख्यवाद्भूतका अत्रिगणाश्चतुर्धा ॥ गोत्रैक्यतोऽमी न मिथो विवाह्याः कुर्वन्तु० ॥ १४ ॥ अथात्रीणां त्रयः—आत्रेयार्चनानसश्यावाश्वेति ॥ गविष्ठिराणां त्रयः—आत्रेयार्चनानसगाविष्ठिरेति ॥ आत्रेयगाविष्ठिरपौर्वातिथेति वा ॥ मुद्गलानां त्रयः—आत्रेयार्चनानसपौर्वातिथेति। वाद्भुतकानां त्रयः—आत्रेयार्चनानसवाद्भूतकेति ॥ अन्येऽत्रयः स्युस्त्रिमिताः क्वचित्तु धनंजयाश्चातिथयस्तथैव ॥ सुमङ्गला अत्रिसमानगोत्राः कुर्वन्तु० ॥ १५ ॥ धनजयानां त्रयः—आत्रेयार्चनानसधानंजयेति ॥ अतिथीनां त्रयः—आत्रेयार्चनानसातिथ्येति ॥ सुमङ्गलानां त्रयः—आत्रेयसौमङ्गलश्यावाश्वेति ॥ आद्यात्र्यादिसुमङ्गलान्तानां सर्वात्रिस्तोमानां परस्परमविवाहः ॥ इत्यत्रिगणाः ॥ **अथ कश्यपाः** ॥ अथ त्रिधा काश्यपजातवर्गास्ते नैध्रुवाः शाण्डिलरैभसंज्ञाः ॥ गोत्रैक्यतोऽन्योन्यमनन्वयाः स्युः कुर्वन्तु० ॥ १६ ॥ नैध्रुवाणां त्रयः—काश्यपावत्सारनैध्रुवेति ॥ शाण्डिलानां त्रयः—काश्यपावत्सारशाण्डिल्येति ॥ काश्यपावत्सारदेवलेति वा ॥ काश्यपआवत्सारआसितेति वा ॥ काश्यपआसितदेवलेति वा ॥ द्वौवा—दैवलासितेति ॥ रैभ्याणां त्रयः—काश्यपावत्साररैभ्येति ॥ नैध्रुवादिरैभ्यान्तानांसर्वकश्यपानां परस्परमविवाहः ॥ इति कश्यपगणाः ॥ ॥ **अथ वसिष्ठाः** ॥ अथो वसिष्ठाश्च चतुर्मिताः स्युर्वसिष्ठकौण्डिन्यपराशराश्च ॥ तथोपमन्युः समगोत्रजाताः कुर्वन्तु० ॥ १७ ॥ वासिष्ठानामेकः

प्रवरः वासिष्ठेति ॥ कौण्डिन्यानां त्रयः वासिष्ठमैत्रावरुणकौण्डिन्येति ॥ पराशराणां त्रयः—वासिष्ठशाक्त्यपाराशर्येति ॥ उपमन्यूनां त्रयः वासिष्ठेन्द्रप्रमदाभरद्वस्विति ॥ सर्ववासिष्ठानां परस्परमविवाहः ॥ **अथ विश्वामित्राः** ॥ विश्वामित्रा इन्द्रकौशिककताख्या लोहिता रौक्षका आजास्तथा अघमर्षणाश्च कुशिकाः धानंजयाः पूरणाः ॥ नराः स्युर्दश कामकायनयुताः सर्वे सगोत्रा मिथः कुर्वन्तु स्मृतितो मुनीश्वरसमूहाः सुप्रभातं मम ॥१८॥ विश्वामित्राणां त्रयः विश्वामित्रदेवरातौदलेति ॥ इन्द्रकौशिकानां द्वौ विश्वामित्रेन्द्रकौशिकेति ॥ कतानां त्रयः विश्वामित्रकात्यात्कीलेति ॥ लोहितानां त्रयः विश्वामित्राष्टकलौहितेति ॥ रौक्षकाणां त्रयः विश्वामित्ररौक्षकरैवणेति ॥ विश्वामित्रगाधिनरैवणेति वा ॥ आजानां त्रयः—विश्वामित्रमाधुच्छन्दसाज्येति ॥ अघमर्षणानां त्रयः विश्वामित्राघमर्षणकौशिकेति ॥ कुशिकानां त्रयः विश्वामित्रदेवरातौदलेति ॥ धानंजयानां त्रयः विश्वामित्रमाधुच्छन्दसधानंजयेति ॥ विश्वामित्रमाधुच्छन्दसाघमर्षणेति वा ॥ पूरणानां द्वौ—विश्वामित्रपौरणेति ॥ कामकायनानां त्रयः विश्वामित्रदेवश्रवसदैवतरसेति ॥ विश्वामित्रगणाः क्वचित्तु कथकाः सौवर्णरेतोभिधाः शालङ्कायनसाहुलाजकुशिका हैरण्यरेतोभिधाः ॥ हर्यश्वा घृतकौशिकाख्यमुनयः कापोतरेतोभिधावेणू रोहिणका इमेपि खलु कुर्युः सुप्रभातं मम ॥ १९ ॥ कथकानांत्रयः—विश्वामित्रकाथककाथकेति ॥ सुवर्णरेतसां द्वौ—विश्वामित्रसौवर्णरेतसेति ॥ शालंकायनानां त्रयः—विश्वामित्रशालंकायनकौशिकेति ॥ साहुलानां त्रयः—विश्वामित्रसाहुलमाहुलेति ॥ अजकुशिकानां त्रयः—विश्वामित्राश्मरथ्यबाहुलेति ॥ हिरण्यचेतसां द्वौ—विश्वामित्रहैरण्यरेतसेति ॥ हर्यश्वादीनांत्रयः—विश्वामित्रगाथिनरैवणेति ॥ घृतकौशिकानां द्वौ—विश्वामित्रघृतकौशिकेति ॥ कपोतरेतसांद्वौ—विश्वामित्रकपोतरेतसेति ॥ वेणूनां त्रयः—विश्वामित्रगाथिनवैणवेति ॥ रोहिणानां त्रयः—विश्वामित्रमाधुच्छन्दसरौहिणेति ॥ इन्द्रकौशिकादिरौहिणान्तानां सर्वेषां विश्वामित्राणां परस्परमविवाहः ॥ इति विश्वामित्रगणाः ॥ **अथागस्तयः** ॥ अथेध्मवाहाह्वयसांबे-

वाहाः ससोमवाहार्मिधयज्ञवाहाः ॥ अगस्तयोऽमी सकुलाश्चतुर्धा कु० ॥२०॥ इध्मवाहाना त्रयः—आगस्त्यदार्ढ्यच्युतेध्मवाहेति ॥ एकोवा—आगस्त्येति ॥ साम्भवाहानां त्रयः—आगस्त्यदार्ढ्यच्युतसाम्भवाहेति ॥ सोमवाहानां त्रयः—आगस्त्यदार्ढ्यच्युतसोमवाहेति ॥ यज्ञवाहानां त्रयः—आगस्त्यदार्ढ्यच्युतयाज्ञवाहेति ॥ सूत्रान्तरे पाणिकपौर्णमासाद्या दार्भवाहाः शुकहंसकाद्याः ॥ पुलस्त्यक्रत्वादय एकगोत्राः कु० ॥ २१ ॥ पाणिकानां त्रयः—आगस्त्यापैनायकपाणिकेति ॥ पौर्णमासाद्यानां त्रयः—आगस्त्यहैचर्चिहैभोगंकेति ॥ पुलस्त्यक्रत्वादीनां त्रयः—आगस्त्यमाहेन्द्रमायोभुवेति ॥ इध्मवाहादिपुलस्त्यक्रत्वाद्यंतानां सर्वागस्त्यानां परस्परमविवाहः ॥ इत्यगस्त्यगणाः ॥ **अथ द्विगोत्राः** ॥ साकं भरद्वाजगणैश्च विश्वामित्रैर्द्विगोत्राः कपिलाः कताश्च ॥ नो शौङ्गशैशिर्यभिधा विवाह्याः कु० ॥ २२ ॥ कपिलानां पञ्च—आङ्गिरसबार्हस्पत्यभारद्वाजवांदनमातवचसेति ॥ कतानां त्रयः—विश्वामित्रकात्यात्कीलेति ॥ शौङ्गशैशिरीणां पञ्च—आङ्गिरसबार्हस्पत्यभारद्वाजकात्यात्कीलेति ॥ आङ्गिरसबार्हस्पत्यभारद्वाजशौङ्गशैशिरेति वा ॥ त्रयोवा—आङ्गिरसकात्यात्कीलेति ॥ भारद्वाजकात्यात्कीलेति वा ॥ कपिलानां कतानां शौंगशैशिरीणां च भारद्वाजैर्विश्वामित्रैश्चसाकंनान्वयः ॥ नो काश्यपैः संकृतिभिर्वसिष्ठैर्लौगाक्षयोऽमी द्विकुला विवाह्याः ॥ अहर्वसिष्ठा निशि कश्यपाख्याः कु० ॥ २३ ॥ लौगाक्षीणां त्रयः—काश्यपावत्सारवासिष्ठेति ॥ निशिवासिष्ठस्थानेकाश्यपः । अमीलौगाक्षयः काश्यपैः संकृतिभिर्वसिष्ठैश्चसाकंनान्वयेयुः ॥ नो देवराता जमदग्निविश्वामित्रैर्द्विगोत्राः पनसास्तु चैवम् ॥ उद्वाहभाजः खलु संप्रदिष्टाः कु० ॥ २४ ॥ देवरातानां त्रयः—विश्वामित्रदेवरातौदलेति ॥ एवमेव पनसानाम् ॥ देवरातानांपनसानां च जमदग्निभिर्विश्वामित्रैश्चसाकं नान्वयः ॥ सहात्रिवर्गैश्च वसिष्ठवर्गैर्लौगाक्षिभिः संकृतिभिर्विवाह्याः ॥ नो जातुकर्ण्या न च वामरथ्याः कु० ॥ २५ ॥ जातूकर्ण्यानां त्रयः—वासिष्ठात्रेयजातूकर्ण्येति ॥ वामरथ्यानां त्रयः—आत्रेयवामरथ्ययौनिकेति ॥ जातूकर्ण्याः वामरथ्याश्चअत्रिभिर्वसिष्ठैर्लौगाक्षिभिः संकृतिभि-

श्वसाकंनान्वयेयुः ॥ स्वकीयवर्गैः सकलैर्वसिष्ठैर्लौगाक्षिभिः संकृतिपूतिमापाः ॥ नोद्वाहकर्मण्यविकारिणोऽमी कु० ॥ २६ ॥ संकृतीनत्रयः आङ्गिरसगौरवीतसांकृत्येति ॥ शाक्त्यगौरवीतिसांकृत्येति वा ॥ पूतिमापाणां सर्वं संकृतिवत् ॥ स्वकीयवर्गैः सकलैर्वसिष्ठैर्लौगाक्षिभिश्वसाकंसंकृतिपूतिमापानोविवाह्याः ॥ धनंजयाख्याः सकलात्रिविश्वामित्रैर्न पाणिग्रहणेपिणः स्युः ॥ द्विगोत्रिणोऽमी गदिताः समस्ताः कु० ॥२७॥ धनजयानां त्रयः-विश्वामित्रमाधुच्छन्दसधानंजयेति ॥ धनंजयानां सकलात्रिविश्वामित्रैः साकंनान्वयः ॥ इतिद्विगोत्राः ॥ गणान्विदित्वा प्रवरैः स्ववशवृद्धप्रणीतैरसगोत्रपूर्वान् ॥ गोत्राणि तेभ्योऽथ विनिर्णयं च ब्रवीतु विद्वान्करसग्रहार्थं ॥ (एक एव ऋषिर्यावत्प्रवरेष्वनुवर्तते ॥ तावत्समानगोत्रत्वमृते भृग्वङ्गिरोगणात् ॥१॥ पञ्चानां त्रिषु सामान्यादविवाहस्त्रिषु द्वयोः ॥ भृग्वङ्गिरोगणेष्वेवं शेषेष्वेकोपि वारयेत् ॥ २ ॥) ॥ २८ ॥ अथ **मातृगोत्रप्रवरविचारः** ॥ माध्यंदिनीयद्विजपुङ्गवेन गोत्रं पितुः सप्रवरं विवर्ज्यम् ॥ मातुस्तु गोत्रं प्रवरैर्विनैव कात्यायनाख्यो मुनिरित्युवाच ॥ २९ ॥ गान्धर्वपैशाचमुखैर्विवाहैर्विवाहितायास्तनयेन वर्ज्यम् ॥ गोत्रद्वयं सप्रवरं व्यवस्थामित्युक्तवन्तो विबुधाः समस्ताः ॥ ३० ॥ इत्यापदेवगदितं मुनिपुंगवानां सन्निर्णयं विपमगोत्रसगोत्ररूपम् ॥ नित्यं पठेदुषसि यः परमादरेण तस्येष्टकामनिवहाः सकला भवेयुः ॥ ३१ ॥ कृताग्निभूप १६३४ संमिते शकेऽब्दराजनन्दने ॥ नभोभिधानमास्यमुं चकार देवनन्दनः ॥ ३२ ॥ इत्यापदेवविरचितो गोत्रप्रवरनिर्णयः ॥

**गोत्रप्रवरयोरुच्चारणे क्रमविशेषः** ॥ श्रीमच्छंभुदेवतनयविश्वनाथदेवविरचिते गोत्रप्रवरनिर्णये—गोत्रप्रवरयोर्भेदे प्रथमं प्रवरादितः ॥ गोत्रं समुच्चरेद्धोता सत्याषाढवचोबलात् ॥ गोत्रसंबन्धं प्रथमं भेदे इति **सत्याषाढवचनम्** । गोत्रप्रथमप्रवरयोर्भेदे मौनसगोत्रः । भार्गववैतहव्यसावेतसेतित्रिप्रवरः इत्यादिरूपं गोत्रसंबन्धं प्रथमं प्रवरस्यादौ कुर्यादित्यर्थः ॥ अयं याज्ञिकानां संप्रदाय इति **शाबरस्वा-**

**मिनः** ॥ अर्थोऽयं प्रवराध्याये स्पष्ट एव प्रतीयते ॥ वरणक्रम उक्तोऽयमिष्ट्यादिविषये मयेति ॥ न चेदं सत्याषाढवचोबलात्तद्विषयमिति शङ्क्यम् । **याज्ञिकवल्लभायां कातीयगृह्यसूत्रपद्धतौ**—यदा गोत्राद्यप्रवरयोरेकत्वं तदा आदौ आर्षेयाणां उच्चारणं पश्चाद्गोत्रस्य । यत्रतु तयोर्भेदस्तत्र आदौ गोत्रं पश्चात्प्रवरा इति वाक्योद्धारपुरःसरमुक्तत्वात् ॥ एवमेव **श्रौतसूत्रपद्धतौ** याज्ञिकवल्लभायां सत्रप्रकरणे एव विवादाद्दावित्याद्युक्तत्वाच्च । इति गोत्रप्रवरयोरुच्चारणे क्रमविशेषः ॥

**समानगोत्रत्वं समानप्रवरत्वं च** ॥ एकएव ऋषिर्यावत्प्रवरेष्वनुवर्तते ॥ तावत्समानगोत्रत्वमृते भृग्वङ्गिरोगणात् ॥ **तथा**—पञ्चानां त्रिषु सामान्यादविवाहस्त्रिषु द्वयोः ॥ भृग्वङ्गिरोगणेष्वेवं शेषेष्वेकोपि वारयेत् ॥ इति ॥ ॥ **गोत्राणां प्रवराणां च संख्यामाह** ॥ गोत्राणां तु सहस्राणि प्रयुतान्यर्बुदानि च ॥ ऊनपञ्चाशदेवैषां प्रवरा ऋषिदर्शनात् ॥ ॥ **ध्रियमाणानुवृत्तिसत्तानुवृत्तिलक्षणम्** ॥ ध्रियमाणतया वापि सत्तया वानुवर्तनं ॥ एकस्य दृश्यते यत्र तद्गोत्रं तस्य कथ्यते ॥ **अस्यार्थः**—ध्रियमाणतया पठ्यमानप्रवरान्तर्भावेन । यथा आद्यानां भृगूणां द्वित्रिप्रवरसाम्ये ॥ सत्तया अधिकारेण उत्पादकत्वेन वा । ध्रियमाणतयानुवृत्तिः प्रवरेष्वेव । सत्तयानुवृत्तिस्तु गोत्रेष्वेव । विस्तरस्तु **गोत्रप्रवरदर्पणे** ज्ञेयः ॥ इति ध्रियमाणानुवृत्तिसत्तानुवृत्तिलक्षण ॥

**स्वगोत्रप्रवराज्ञाने निर्णयः** ॥ स्वगोत्रप्रवरज्ञानविधुराणां तथैवच ॥ ब्राह्मणानामथाचार्यप्रवराणां वृतिः स्मृता ॥ तथैवाचार्यप्रवरतुल्यैश्च प्रवरैरपि ॥ अनुद्वाहः स्मृतस्तेषां मुनिभिस्तत्वदर्शिभिः ॥ आचार्यगोत्रप्रवरानभिज्ञस्तु द्विजः स्वयं ॥ दत्वात्मानं तु कस्मैचित्तद्गोत्रप्रवरो भवेत् ॥ यद्वा स्वगोत्रप्रवरविज्ञानरहितः पुमान् ॥ जमदग्निगोत्रप्रवरैः स्वकार्यं हि समाचरेत् ॥ विवाहं च न तेनापि गोत्रेण तु समाचरेत् ॥ अज्ञातनिजगोत्राणामुक्तो गोत्रस्य निर्णय इति विश्वनाथदेवकृतगोत्रप्रवरनिर्णये ॥ **तत्रैव**—विकल्पे प्रवराणां तु निर्णयः श्रो-

च्यतेऽधुना ॥ प्रवरेषु विकल्पा ये ते बोद्धव्या मनीषिभिः ॥ संमतत्वाद्व्यवस्थाया नात्यन्तस्थितिरिष्यते ॥ विकल्पेषु यतस्तस्माद्व्यवस्था-श्रीयतेऽत्र तु ॥ निज वैकल्पिक पक्ष ग्रामं वृद्धक्रमात् ॥ स्मरन्ति ये नराम्तेषां त एव प्रवरा मताः ॥ तेषां तदनुसारेण सगोत्रत्वादि संभवे ॥ अनुद्वाहाद्यनुष्ठेयं उद्वाहस्तदसंभव इति ॥

**अथ मातृगोत्रनिर्णयः** ॥ अथ मातृगोत्र विवाहमाह **मनुः** असपिण्डा च या मातुरसगोत्रा च या पितुः ॥ सा द्विजानां प्रशस्ता स्त्री दारकर्मणि मैथुने इति । अर्थात् मातृपक्षे सापिण्ड्यमात्र विवाहप्रतिषेधान् मातृगोत्रे विवाहोऽप्यनुज्ञायते । अन्यथा असगोत्रा च या मातुरित्यवक्ष्यत । इति तदर्थः ॥ ॥ पर मातृगोत्रापि सर्वैर्वर्जनीयैव । मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च ॥ समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेदिति **शातातपोक्तेः** । अत्र मातृगोत्रविवाहप्रतिषेधेनैव मातुलसुताविवाहप्रतिषेधसिद्धौ मातुलग्रहणं सन्निकृष्टतरत्वात् मातृगोत्रदोषादपि दोषगौरवख्यापनार्थमिति ॥ ॥ यद्यपि सगोत्रां मातुरप्येके नेच्छन्त्युद्वाहकर्मणि । जन्मनाम्नोरविज्ञानेऽप्युद्वहेदविशङ्कित इति **व्यासोक्तेः** मातृगोत्रविवाहनिषेधस्य पाक्षिकत्वं । परं तत्र चाण्डालत्वादिदोषस्यातिगुरुत्वात् पाक्षिकदोषस्यापि परिहार्यत्वात् सर्वेषां मातृगोत्रवर्जनमिति **प्रवरमञ्जर्यामुक्तम्** ॥ तथापि पाक्षिकत्वात् कैश्चिदुदूह्यते । परं कलिवर्ज्यत्वात्सर्वैर्वर्जनीयैव ।—गोत्रान्मातुःसपिण्डाच्च विवाहो गोवधस्तथेति **हेमाद्रिमाधवीयादौ आदित्यपुराणे कलिवर्ज्येषूक्तेः** ॥ ॥

ननु मातृगोत्र माध्यंदिनीयानामपुत्रायाश्चेति सत्याषाढवचनान्माध्यंदिनीयानामेव मातृगोत्रवर्जनं नान्येषामिति कैश्चिदुच्यते तन्नु निर्मूलमेव । एतद्वचनस्य **सत्याषाढादावदर्शनात् प्रवरमञ्जरीकारैरलिखनात्** महाराष्ट्रकल्पितत्वादिति **निर्णयसिन्धौ कमलाकरभट्टै**रुक्तत्वाच्चेति ॥ तथाच **धर्मनौकायां**—मातुर्गोत्रं वर्जनीयं समस्तैर्नैतद्गोत्रं वाजिनामेव वर्ज्यं ॥ ब्रूते कश्चित् वाजिनामेव

वर्ज्यं निर्मूलं तच्चेति ॥ ॥ अत्र मातृशब्देन मुख्यैव जननी । ननु मातृत्वावच्छेदेन गौणा । तथाच **निर्णयसिंधौ** श्राद्धप्रकरणे मातृशब्दो जनन्यामेव रूढ इति **हेमाद्रि**रित्युक्तं । **मिताक्षरायां** आशौचप्रकरणे पितृपत्न्यामपि मातृव्यतिरिक्ताया स्मृत्यन्तरे विशेषो दर्शितः—पितृपत्न्यां व्यपेतायां मातृवर्ज्यं द्विजोत्तमः । संवत्सरे व्यतीते तु त्रिरात्रमशुचिर्भवेदिति । अत्र पितृपत्न्यः सर्वा मातर इति सुमन्तुवचनेन मातृशब्दः पितृपत्नीपरश्चेत् तर्हि घटभिन्नं घटमानयेति वाक्यस्याप्रामाण्यवत् अस्याः स्मृतेरप्रामाण्यं स्यात् । तस्मान्मातृशब्दो जनन्यामेव रूढ इति ॥ ॥ यत्र तु मातृशब्दस्य मातर इत्यादिवहुवचनं तत्रैव मातृशब्दगतवहुत्वात् मातृत्वावच्छेदेन गौणसापत्नमात्रादेर्ग्रहण नान्यत्रेति ॥ ॥ मातृगोत्रामित्यत्र मातुर्गोत्र यस्या इति एकवचनान्तेन मातृशब्देन साकं समासः । ननु मातृणामिति वहुवचनान्तेनेति । सगोत्रां मातुरप्येके । गोत्रान्मातुः सपिण्डाच्चेत्यादिस्मृतिगतैकवचनान्तमातृशब्दैकवाक्यत्वादिति ॥ ॥ मातृशब्दस्य जनन्यामेव रूढिबीज **मन्वर्थमुक्तावल्यां कुल्लूकभट्टाः**—माता पिता वा दद्यातां यमद्भिः पुत्रमापदि । सदृशं प्रीतिसंयुक्त स ज्ञेयो दत्रिमः सुत इति । मातेति । शुक्रशोणितसंभवः पुरुषो मातापितृनिमित्तकस्तस्य प्रदानविक्रयपरित्यागेषु मातापितरौ प्रभवत इति **वसिष्ठ**स्मरणात् माता पिता वा दद्यादिति **वसिष्ठ**स्मरणात् शुक्रशोणितसंभववत्त्वमेव मातुर्मातृत्वे पितुः पितृत्वे च बीजं । तत्त्वं च जनन्यामेव न सापत्नमातरि । अतः पुत्रस्य प्रदानविक्रयपरित्यागेषु माता वा पिता वा प्रभवति नान्यः । अतएव पितृविरहितसपत्नीपुत्रस्य जनन्यभावे प्रदानादौ सापत्नमातुरधिकारः केनापि ग्रन्थकारेण नोपात्त इति ॥

अपरंच । पत्नीदुहितृदौहित्रपितृरहितस्यापुत्रस्य मृतस्य **मिताक्षरायां** पत्नीदुहितरश्चैवेति वाक्येन मातुर्धनग्रहणाधिकार उक्तः । तत्र मातृत्वावच्छेदेन सापत्नमातुरप्यधिकारः प्रतीयते । परंतु तत्र मातापित्रोर्मध्ये पूर्वं धनाधिकारो मातुः किंवा पितुरित्येतद्विषये **वीरमि-**

**त्रोदयकारेण**—सहस्रं तु पितुर्माता गौरवेणातिरिच्यते । गर्भधारणपोषाभ्यां माता तस्माद्गरीयसी । एतद्वचनेन पुत्रस्य गर्भधारणपोषणे यत्र तत्र मातृत्वं । तत्त्वंच जनन्यामेवास्ति । अतः मातैव ग्राह्या इति ज्ञायते । गर्भधारणं पोषणं च सापत्नमातुर्न संभवति । अतः पत्नीदुहितर इति वचने पितरावित्यनेन जनन्या एव धनग्रहणाधिकारो न सापत्नमातुः । नच तदभावे सामान्यतो मातृत्वावच्छेदेन सापत्नमातुरप्यधिकारोस्त्विति वाच्यं । सकृच्छ्रुतस्य मातृशब्दस्य गौणमुख्यार्थकवृत्तिद्वयापत्तेः । यत्तु - असुताश्च पितुः पत्न्यः समानांशाः प्रकल्पिताः ॥ पितामह्यश्च सर्वास्ता मातृतुल्याः प्रकीर्तिता इति **व्यासवचनात्** यदि कुर्यात्समानांशानिति **योगीश्वरवचने** पत्नीग्रहणात् जीवद्विभागे पत्नीमात्रस्य पुत्रसमानांशवत्त्वं । पुत्रपत्नीपदयोः पितृपतियौगिकसंबन्धार्थकतया गौणमुख्यार्थकत्वानापत्तेः । पित्रोरूर्ध्वं विभागे तु पुत्रकर्तृतया तत्संबन्धिमातृप्रतीतेर्वैरूप्यादुभयपरत्वासंभवात्पुत्रवतीनामेव स्वपुत्रसमांशित्वं । अपुत्राणां तु ग्रासाच्छादनमात्रभाक्त्वमविभक्तसंसृष्टपत्नीनामिवेत्युक्तं ॥ अत्रायं निष्कर्षः । पितरावित्यत्र तु मातृशब्देन जननीसापत्नमात्रोरुभयार्थकत्वे गौणमुख्यार्थवृत्तिद्वयापत्तेर्दुर्वारत्वात्साक्षाज्जनन्येव न सापत्नमातेति ॥ ॥ यत्तु सर्वासामेकपत्नीनामिति **मनुवचनेन** अनेकासां सपत्नीनां मध्ये एका चेत्पुत्रिणी भवेत् तेन पुत्रेण सर्वा अपुत्रिण्योपि पुत्रिण्य इत्युक्तं । तदपि तासां श्राद्धादिपारलौकिकार्थमन्यः पुत्रो दत्तको न ग्राह्य इति ताः प्रत्युपदेशः । यथा अपुत्रस्य भ्रातृपुत्रे सति अन्यः पुत्रो दत्तको न ग्राह्यः स एव ग्राह्यः तद्वत् उक्तापुत्रिणीनामपीति । नत्वनेन वचनेन पितरावित्यत्र सापत्नमातुर्ग्रहणं शक्यमिति ॥ ॥ अन्यच्च **निर्णयसिंधौ मयूखादौ** च । अपुत्रश्राद्धाधिकारनिर्णये पितुरभावे माता तदभावे स्नुषा तदभावे भगिनी तत्रानुजाग्रजासोदरासोदरसमवाये भ्रातृवदित्युक्तं । तत्रापि सापत्नमातुरधिकारो नोक्तः ॥ ॥ अथ च । अपुत्रधनाधिकारिक्रमनिरूपकपत्नीदुहितर इति वाक्ये यथा भ्रातर इति पदेन सामान्यतः सोदरासोदराणामुपस्थितौ इत्थं विवेचितं सोदराणामभावे भिन्नोदरा

इति । यदिच मातृशब्देन सापत्नमातुरपि ग्रहणं तदा ग्रन्थकारैर्निर्देशः कृतः स्यादेव । नतु तथास्ति । तस्मात्सापत्नमातुर्धनग्रहणाधिकारः श्राद्धाद्यधिकारश्च नास्तीति ॥ ॥ निर्णीतमिदं जननीगोत्रमेव सर्वैर्विवाहे वर्जनीयं न सापत्नमातुर्गोत्रमिति ॥ अथ मातृगोत्रे पितृगोत्रवत् नैव तावत्प्रवरचिन्तनं । प्रवरान्पितृगोत्रे तु मातृगोत्रे न चिन्तयेत् । गोत्रमेव त्यजेन्मातुरिति कात्यायनोऽब्रवीदितिस्मृतेः । तथा पितृगोत्रप्रवरसमां नोद्वहेन्मातृगोत्रमात्रसमां नेति **काठकमाठकगृह्योक्तेश्च** ॥ ॥ यत्तु एकस्मिन्प्रवरे तुल्ये मातृगोत्रे वरस्य च । तमुद्वाहं न कुर्वीत सा कन्या भगिनी भवेदिति वचनेन मातृगोत्रे प्रवरचिन्तनमुक्तं तत्कानीनपुत्रिकादिसुतविषयकमित्यन्यत्र विस्तर इति ॥ ॥ एवं मातृगोत्रे पितृगोत्रवत् नैव तावत् समानगोत्रत्वं च । अत्र एवकारमातृशब्दयोः स्वसमभिव्याहृतपदार्थतावच्छेदकमातृगोत्रत्वावच्छिन्नान्यगोत्रसंबन्धव्यवच्छेदार्थकत्वादिति ॥ तथाचोक्तं—पञ्चानामिति वाक्ये या व्यवस्था परिकल्प्यते । पितृगोत्रे तु सा ज्ञेया मातृगोत्रे न कर्हिचित् ॥ १ ॥ नामभेदाद्गोत्रभेदो मातृगोत्रे विनिश्चितः । गणैक्येपि न तद्गोत्रमेकत्वं लभते तथेति शम् । इति श्रीमज्जनस्थानवासिना वारे इत्युपनाम्ना अण्णाशास्त्रिणा विरचितो मातृगोत्रनिर्णयः समाप्तः ॥

**मातृगोत्रविचारे** श्रीमल्लौगाक्षिभास्करप्रभृतिभिर्मातृगोत्रं माध्यंदिनीयानामपुत्रायाश्चेति सत्याषाढीयं वचो निर्मूलमप्यसाधारणं मूलमुररीकृत्य मातुर्गोत्रमपुत्रसापत्नमातुश्च गोत्रं माध्यंदिनैरेव वर्जनीयं नान्यैरित्याद्यनल्पं प्रपञ्चितं, तच्छास्त्रसंमतं वा नवेति विविच्यते ।

**अथ मातृगोत्रविचारः**—१ अस्मिन्विचारे प्रतिपदोक्त सर्वैर्निबन्धकृद्भिरविवादमादृतं **शातातपीयं वचः**—तथाहि "मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च । समानप्रवरां चैव गत्वा चान्द्रायणं चरेत्" इति । अत्र मातृगोत्रामिति पदं विचारविषयस्तत्र मातृगोत्रामित्यस्यार्थो मातामहगोत्रामिति लक्षणया स्वीकार्यः । यतोऽत्र मुख्यार्थो न संभवति । स्वगोत्राद्भ्रश्यते नारी विवाहात्सप्तमे पदे

**निर्णयसिन्धुटीकायां धर्मनौकायां**—मातुर्गोत्रं वर्जनीयं समस्तैर्नैतद्गोत्रं वाजिनामेव वर्ज्यम्। अतं कश्चिद्वाजिनामेव वर्ज्यं निर्मूलं तच्चेत्याद्युक्तेश्च। ननु मातृगोत्रं माध्यान्दिनीयानामपुत्रायाश्चेति सत्याषाढोक्तेरिति तत्र तत्र गृहीतपदकदम्बकेन माध्यन्दिनीयैरेव मातृगोत्रं वर्ज्यं न तदितरैरिति व्यवस्था साधीयसीति चेन्न। एतस्य वचनस्य **सत्याषाढ**ग्रन्थेष्वदर्शनाद्व्यवस्थाया निर्मूलत्वादत एव प्रामाणिकमूर्धन्यः **कमलाकरभट्टो निर्णयसिन्धौ** तदिदं वचनं केनचिन्महाराष्ट्रेण कल्पितमिति निरदिक्षत्। किंचैतादृशं मूर्खप्रजल्पितमिव वाक्यं भगवान् **सत्याषाढः** स्मृतिसूत्राणां प्रणेता कदाचिदपि न प्रयुञ्जीयात्तथा हि 'मातृगोत्र माध्यान्दिनीयानामपुत्रायाश्चेति हि तदीयत्वेन कल्पितं वचस्तदर्थश्च माध्यन्दिनीयैर्मातुर्गोत्रं वर्ज्यं या च सापत्नमाता अपुत्रा तस्याश्च गोत्रं वर्ज्यम्। एतादृशार्थकेऽस्मिन् वचने यदपुत्राया इति विशेपणं तन्मातृगोत्रामिति समासघटितमातृशब्दस्यैतादृशं तु वैयाकरणैर्नाद्रियते 'सविशेषणानां वृत्तिर्न वृत्तस्य विशेषणयोगो न' इति तत्सिद्धान्तात्। अन्यथा ऋद्धस्य राजपुरुष इति प्रयोगापत्तिरेवं च राजपुरुष इति समासघटितराजपदस्य यथा ऋद्धस्येति विशेषणं न सभवति। एवं मातृगोत्रामिति पदघटितमातृपदस्यापुत्रायाश्चेति विशेषणं न सङ्गच्छते। किंच मातृगोत्रामित्यत्रत्यमातृशब्दो लक्षणया मातामहपर इति पूर्वं निदर्शितम्। ततोऽपुत्राया इति पदं कथं वा लक्षितस्य विशेषणं भवेदेवं लक्षितस्य विशेषणे स्वीक्रियमाणे वृक्षशोभिते गङ्गायां घोष इत्यपि प्रयोगः स्याद्यतो गङ्गापदेन तत्र तीरं लक्षितं तस्य च वृक्षशोभिते इत्यनेन विशेषणेन भाव्यं परं तादृशं मीमांसकसमयेऽनादृतम्। एवच मीमांसाव्याकरणादिज्ञानविधुरेण केनचित्कल्पितमेतद्वचः सत्याषाढीयत्वेन। यद्यपि तुष्यतु दुर्जन इति न्यायेनैतद्वचस्सत्याषाढीयमेवाधुनानुपलभ्यमानमपि स्यात्कदाचिदित्यङ्गीक्रियते तथापि तन्माध्यन्दिनीयैरन्यैर्वा शाखीयैरङ्गीकार्यमिति न सोमनाथभट्टसम्मतम्। तथाहि 'मीमांसाशास्त्रीयप्रामाणिकप्रबन्धे **शास्त्रदीपिकाटीकायां मयूखमालिकायां** प्रथ-

माध्यायतृतीयपादे सामान्यश्रुतिकल्पनाधिकरणे कैश्चिदितिपदव्याख्यायां **सोमनाथभट्टै**रेवमुदलेखि गौतमगोभिलीये छन्दोगैरेव पठ्येते वासिष्ठं बह्वृचैः शङ्खलिखितोक्तं वाजसनेयिभिरापस्तम्बबौधायनीये तैत्तिरीयैरिति । अत्र कस्यापि शाखीयस्यादरपदत्वेन सत्याषाढवचसामग्रहणात्तन्माध्यन्दिनीयैरेवादरणीयमिति कथनं मोहविलसितं तेनानादरपदवीमर्हति । ननु 'तृतीये सङ्गच्छावहै चतुर्थे सङ्गच्छावहै' इति **शतपथब्राह्मण**वाक्यात्स्मार्तोऽयं मातुलकन्यामातुलगोत्रजकन्यापरिणयनिषेधोऽसंगत इति चेन्न । शतपथब्राह्मणोक्तवचसो लौकिकार्थवादघटितत्वेन तादृशार्थवादकल्पितश्रुत्या प्रत्यक्षस्मृतिबाधस्यानुचितत्वात् । अलौकिकार्थवादकल्पितश्रुत्यैव स्मृतिबाध इति पूर्वतन्त्रराद्धान्तात् । केचित्तु सगोत्रां मातुरप्येके नेच्छन्त्युद्वाहकर्मणि । जन्मनाम्नोरविज्ञानेऽप्युद्वहेदविशङ्कितः इति **व्याससमृत्या** समानोदकत्वपर्यन्तमेव मातृगोत्रनिषेधो न तदूर्ध्वमिति व्यवस्थापयन्ति तदसङ्गतम् । गोत्रान्मातुः सपिण्डाच्चेति कलिवर्ज्योक्तेः पूर्वोक्त**व्यासवचसो** युगान्तरपरत्वात् । एवंचायं निर्गलितोऽर्थः । सर्वशाखीयैरेव मातामहगोत्रजा न परिणेया मातृगोत्रामित्यत्र मातृपदेन जननीमातैव ग्राह्या न सापत्नमातेति शम् ॥ इति पान्होळेग्रामवासिपाठकोपाभिधश्रीधरशास्त्रिविरचितो मातृगोत्रनिर्णयः समाप्तः ॥

**अथ कन्याविवाहकालः** ॥ **पारस्करः**—विवाह उदगयन आपूर्यमाणपक्षे पुण्याहे कुमार्याः पाणिं गृह्णीयात् ॥ **धर्मनौकायाम्**—षष्ठात्परं पञ्चमतः परं वा वर्षाद्वधूनां शुभदो विवाहः ॥ दशाब्दपर्यन्तमथो यदा तु पित्रादिदातुः प्रतिबन्धनादि ॥ १ ॥ नृपान्त १६ मर्कान्त १२ मपि प्रशस्त विवाहकर्मार्थ सुखेन दाता ॥ दद्यान्न कन्यां यदि नेत्रचन्द्र १२ वर्षान्तमग्रे वरयेत्स्वयं सा ॥ २ ॥ वर्षे समे गर्भयुते विवाहः शुभो न वर्षेऽयुजि तत्र केचित् ॥ मासत्रयादूर्ध्वमयुग्मवर्षे युग्मेऽपि मासत्रयमेव यावत् ॥ ३ ॥ तावद्विवाहं शुभदं वदन्ति मुन्य ७ ब्दतोऽनन्तरमेव केचित् ॥ पुंसां समावर्तनतो विवाहोऽयुग्मे शुभः स्यादिति निश्चयोऽत्र ॥ ४ ॥ ॥ **ब्राह्म**-

णादिवर्णानां वर्णक्रमेण कन्यापरिणयनमाह पारस्करः—तिस्रो ब्राह्मणस्य वर्णानुपूर्व्येण द्वे राजन्यस्य एका वैश्यस्य सर्वेषां शूद्रामप्येके मन्त्रवर्जमिति । आनुपूर्व्येण क्रमेणेत्यर्थः ॥ ॥ **अथ गुर्वर्कबलम्** ॥ **धर्मनौकायाम्**—रवेर्गुरोश्चन्द्रमसो बलं सद्वरस्य वध्वा उभयोः क्रमेण ॥ द्वी २ पवी ५ श ११ सप्ता ७ ङ्क ९ गतो गुरुः स्याच्छस्तोऽयनेष्टोऽन्त्य १२ जला ४ ष्टम ८ स्थः ॥ १ ॥ अन्यो १।३।६।१० चंया शस्त इहास्ति नेष्टो न पूजया चापकुलीरमीने ॥ नेष्टोऽपि शस्तस्त्वथ चातिकाले गुरुस्त्रिरर्च्यः खलु चाष्टमोऽपि ॥ २ ॥ चद्वादशाब्दात्परतो विवाहः सर्वत्र शस्तो गुरुरस्ति वध्वाः ॥ रजस्वलायां गुरुशुद्धिचिन्ता न चास्त्यथोऽष्टा ८ ङ्क ९ दिगन्त १० वर्षा ॥ ३ ॥ गौरी तथा रोहिणिका च कन्या क्रमेण कन्याऽथ रजस्वलोर्ध्वम् ॥ गुर्वर्कयोः पद्मिनिनायकस्य चन्द्रस्य लग्नस्य बलं विवाहे ॥ ४ ॥ शुभमिति शेषः ॥ शान्त्यादिकं त्वाकरतो विलोक्यं ॥ ॥ **अथ सिंहस्थितगुरुशुक्रास्तादिविचारः** । सिंहे गुरौ वक्रिणि चातिचारे ॥ नष्टेपि चन्द्रे गुरुशुक्रबाल्यवार्धक्यकादौ किल चाधिमासे ॥ ५ ॥ पौषे चैत्रे व्यतीपाते गुर्वादित्ये शरद्यपि ॥ केतूद्गमे निरंशेऽर्के वर्षास्वपि कदाचन ॥ ६ ॥ विवाहव्रतयात्रादि पुरहर्म्यगृहादिकम् ॥ क्षौरं विद्योपविद्याश्च न कुर्याद्यत्नतः पुमान् ॥ ७ ॥ सिंहस्थवक्रगतोपि वर्ज्यो गुरुस्तथा लुप्तकवत्सरोपि ॥ यदातिचारात्किल पूर्वराशिं न याति सूरिः खलु लुप्तवर्षम् ॥ ८ ॥ भागीरथीगौतमीमध्यदेशे सिंहे गुरौ नोद्वहनादिकं सत् ॥ मघास्थईज्ये किल सर्वदेशे मीने रवौ चापि न शोभनं स्यात् ॥ ९ ॥ भागीरथ्युत्तरे तीरे गौतम्याश्चापि दक्षिणे ॥ विवाहादिशुभं कार्यं सिंहस्थेपि बृहस्पतौ ॥ १० ॥ ॥

**अथ कन्यादातारः** ॥ पिता पितामहो भ्राता संस्कृतो नत्वसंस्कृतः ॥ पितृवंशभवश्चैव मातृवंशभवस्तथा ॥ १ ॥ संस्कृत उपनीतः ॥ जननी च क्रमान्मातामहमातुलगोत्रजाः ॥ सर्वाभावे तु राजा स्याद्दातृक्रम उदाहृतः ॥ २ ॥ पितैव दद्यादुदरप्रसूतां तद्बन्धवो

वा तदसंनिधौ तु ॥ तस्याप्यभावे यदि वानुमत्या मातामहादेरधिकारतात्र ॥ ३ ॥ स्वयंवरे मातरि दातरि स्यान्नान्दीमुखं यत्स्वयमेव कार्यम् ॥ स्वयंवरे कन्यया । मातरि दातरिसत्यां मात्रा ॥ संकल्पमात्रं स्वयमेव कुर्यादन्यद्विजाग्र्येण तु कारयेत्सा ॥ ४ ॥ भ्रात्राद्यभावे किल यो वरस्तु स्वयं प्रकुर्यादिह वृद्धिसंज्ञम् ॥ ॥ **परकीयकन्यादानविचारः** ॥ कन्यां परस्य द्रविणादि दत्वा प्रगृह्य दद्याद्विधिवद्वराय ॥ ५ ॥ परस्य असगोत्रिणः ॥ स्वीयत्वसंपादनतो विनात्र कृतो विवाहोऽकृततां व्रजेच्च ॥ जातं यदा सप्तपदीविधानमङ्गे न जाते न पुनर्विवाहः ॥ ६ ॥

**अथ विवाहे मासविचारः** ॥ ॥ **ते च मासास्त्रिविधाः** । सौराश्चान्द्रा मिश्राश्चेति भेदेन ॥ तत्र मानं अग्रे वक्ष्यमाणानि सौरचान्द्रमिश्रमतविधायकानि वचनानि ॥ तत्र ज्योतिःशास्त्रे धर्मशास्त्रे च मीनादयो मेषादयो वा द्वादशसंक्रान्तय एव सौरमासाः प्रसिद्धाः ॥ तत्र विवाहे सौरमासविधायकानि वचनानि ॥ **प्रमिताक्षरायां ऋष्यशृङ्गः**—विवाहव्रतयज्ञेषु सौरं मानं विधीयते । **गार्ग्योऽपि**—विवाहोत्सवयज्ञेषु सौरं मानं प्रशस्यते । **वृद्धगर्गः**—विवाहादौ स्मृतः सौरो यज्ञादौ सावनः स्मृत इति ॥ **मयूखे संस्काररत्नमालायां च गर्गः**—विवाहादौ स्मृतः सौरो यज्ञादौ सावनः स्मृत इति ॥ इति सौरमासविधायकवचनानि ॥ ॥ **अथ चान्द्रमासाः** । ते च शुक्लादयः कृष्णादयो वा चैत्रादयः फाल्गुनान्ता द्वादश मासा ज्योतिःशास्त्रे धर्मशास्त्रे च प्रसिद्धाः ॥ **तत्र विवाहे चान्द्रमासविधायकानि वचनानि** ॥ **प्रमिताक्षरायां वसिष्ठः**—उद्वाहयज्ञोपनयप्रतिष्ठा तिथिव्रतक्षौरमहोत्सवाद्यम् । पर्वक्रियावास्तुगृहप्रवेशाः सर्वं हि चान्द्रेण विगृह्यते तदिति ॥ **तस्यामेव नारदः**—यात्रोद्वाहव्रतक्षौरतिथिवर्षेशनिर्णयः । पर्ववास्तूपवासादि कृत्स्नं चान्द्रेण गृह्यत इति ॥ **मयूखे संस्काररत्नमालायां च कश्यपः**—उपवासव्रतोद्वाहयात्राक्षौरोपनायनम् ।

तिथिवर्षादिलिखितं चान्द्रमानेन गृह्यत इति ॥ इति चान्द्रमासविधायकवचनानि ॥ ॥ अथ **मिश्रमासाः** । तत्र सौरचान्द्रमासयोरुभयोरैक्यं मिश्रमासलक्षणं । तेन संक्रान्तिविशिष्टा ये द्वादश चान्द्रमासास्तएव मिश्रमासा ज्योतिःशास्त्रे धर्मशास्त्रे च प्रसिद्धाः ॥ **तत्र विवाहे मिश्रमासविधायकानि वचनानि ॥ प्रमिताक्षरायां** --विन्ध्याद्रेर्दक्षिणे भागे चान्द्रो मासः प्रशस्यते । उदग्भागे तु विन्ध्यस्य सौरं मानं विधीयते । अन्येषु सर्वदेशेषु मिश्रं मानं प्रकल्पयेदिति ॥ **ब्रह्मसिद्धान्ते च**—अमावास्यापरिच्छिन्नो मासः स्याद्ब्राह्मणस्य तु । संक्रान्तिपौर्णमासीभ्यां तथैव क्षत्रवैश्ययोरिति ॥ इति मिश्रमासविधायकवचनानि ॥

**अथ सौरचान्द्रमिश्रमासानां विवाहे ग्राह्याग्राह्यविवेकः ॥ तत्रादौ सौरमासानां ग्राह्याग्राह्यत्वविवेकः** ॥ तद्विधायकवचनानि **मुहूर्तचिंतामणौ** विवाहप्रकरणे । मिथुनकुंभमृगालिवृषाजग इति ॥ **पीयूषधारायां कश्यपः**—अजगोद्वन्द्वकुंभालिमृगराशिगते रवौ । मुख्यं करग्रहं त्वन्यराशिगे न कदाचनेति ॥ १ मिथुनं प्रसिद्धं २ कुंभः प्रसिद्धः ३ मृगः मकरः ४ अलिः वृश्चिकः ५ वृषो वृषभः ६ अजो मेषः एते सौराः षण्मासाः विवाहे ग्राह्याः ॥ १ कर्कः प्रसिद्धः २ सिंहः प्र० ३ कन्या प्र० ४ तुला प्र० ५ धनुः प्र० ६ मीनः प्र० एते सौराः षण्मासाः विवाहे अग्राह्याः ॥ इति सौरमासानां विवाहे ग्राह्याग्राह्यत्वविवेकः ॥ ॥ **अथ चान्द्रमासानां ग्राह्याग्राह्यत्वविवेकः** ॥ तत्रादौ द्वादशचान्द्रमासानां शुभाशुभफलचोदना । **हेमाद्रौ संस्कारकौस्तुभे रत्नमालायां च वात्स्यः**—माघे मासे भवेदूढा कन्या सौभाग्यसंयुता । फाल्गुनोढा भवेत्साध्वी वैशाखे पुत्रिणी भवेत् । धर्मयुक्ता भवेज्ज्येष्ठे धनिनी कार्तिके भवेत् । देवपूजारता नित्यं मासे स्यात्सोमदैवत इति ॥ धनिनी स्वातन्त्र्येण धनसंग्रहवती । नित्यमित्यनेन भर्त्रादिशुश्रूषाव्यावृत्तिः सूच्यते । सोमदैवतो मार्गशीर्षः । **ज्योतिःप्रकाशे मुहूर्तसिंधौ संस्कारोद्योते निर्णयसिन्धौ प्रतापनारसिंहीये संस्कारप्रकाशे गदाध-**

**रभाष्ये संस्कारगणपतौ प्रयोगदर्पणे रत्नमालायां च व्यासः**—माघफाल्गुनवैशाखे यद्यूढा मार्गशीर्षके । ज्येष्ठे चाषाढमासे च सुभगा वित्तसंयुता ॥ श्रावणे वापि पौषे वा कन्या भाद्रपदे तथा । चैत्राश्वयुक्कार्तिकेषु याति वैधव्यतां ध्रुवमिति ॥ **शीघ्रबोधे**—माघे धनवती कन्या फाल्गुने सुभगा भवेत् । वैशाखे च तथा ज्येष्ठे पत्युरत्यन्तवल्लभा ॥ आषाढे कुलवृद्धिः स्यादन्ये मासाश्च वर्जिताः । मार्गशीर्षमपीच्छन्ति विवाहे केपि कोविदा इति ॥ इति द्वादशचान्द्रमासानां शुभाशुभफलचोदना ॥ ॥ नन्वत्र विवाहे आषाढस्य फलचोदनायां शोभनायां सत्यां **मदनरत्नसंस्कारोद्द्योतसंस्कारकौस्तुभा**दिपरिगृहीत—माघफाल्गुनवैशाखज्येष्ठमासाः शुभप्रदाः । कार्तिको मार्गशीर्षश्च मध्यमावितरेऽधमा इति **नारद**वचनेन इतरान्तःपातित्वात् आषाढस्य त्वधमत्वं ध्वन्यते ॥ तत्र । **संस्कारमयूखे संस्काररत्नमालायां च**—माघफाल्गुनवैशाखज्येष्ठमासाः शुभप्रदाः । कार्तिको मार्गशीर्षश्च मध्यमावितरेऽधमाः ॥ न कदाचिद्दशर्क्षेषु भानोरार्द्राप्रवेशनात् । विवाहं देवतानां च प्रतिष्ठां चोपनायनमिति ॥ अत्र यद्यपि शेषा निन्दितास्तथापि भानोरार्द्राप्रवेशनादिति पुनःश्रुत्या आषाढोऽभ्यनुज्ञातः । सचाषाढः आर्द्राप्रवेशनात्पूर्वं भवतीत्यन्तेन ग्रन्थेन आषाढस्य विवाहे अभ्यनुज्ञातत्वेन इतरान्तःपातित्वाभावादिति ॥ किंच । आर्द्राप्रवेशोप्यकिंचित्करः । **कौस्तुभसिंध्वादि**धर्मशास्त्रग्रन्थेषु **मार्तण्डा**दिज्योतिर्ग्रन्थेषु च आर्द्रादिप्रवेशनिषेधस्यानुक्तेः । बहवः शिष्टाश्च आर्द्रादिप्रवेशदोषं न मन्यन्त इति च ॥ नचापस्तम्बसूत्रे त्वाषाढो निषिद्ध इति वाच्यम् । तस्यापस्तम्बमात्रपरत्वादित्याह सर्वऋतव इति । सर्वऋतवो विवाहस्य शैशिरौ मासौ परिहाप्योत्तमं च नैदाघमित्या**पस्तंबसूत्रं** ॥ शैशिरौ मासौ माघफाल्गुनौ । नैदाघ उत्तमो मास आषाढः । एतद्वर्ज्यं नव मासा मुख्यः कालः इति **सुदर्शनभाष्ये आण्डविलायां ब्रह्मविद्यातीर्थैश्चोक्तं** ॥ **प्रतापनारसिंहीये संस्कारप्रकाशे**—शैशिरौ मासौ माघफाल्गुनौ । नैदाघ उत्तमो मास आषाढः । एतन्मासत्रयं वर्जयित्वा सर्वऋ-

तुषु विवाहः कार्य इति ॥ यत्पुनरत्र सूत्रे आपस्तम्बेनाषाढो विवाहे निषिध्यते । तथापि सर्वे मासा विवाहस्य शुचितपस्तपस्यवर्ज्यमित्येक इति **बौधायनसूत्र**। शुचिराषाढः । तपा माघः । तपस्यः फाल्गुनः । अत्र **बौधायनसूत्रे** एक इति पदेन **आपस्तम्बसूत्रानुवा**दात आषाढादीनां निषेधस्त्वापस्तम्बमात्रपरः नतु बौधायनाद्यन्यशाखीयपर इति स्पष्टं प्रतीयते । **कात्यायनसूत्रादावपि** एकपदस्य शाखान्तरीयानुवादपरत्वेन दृष्टत्वात् । यथा फलीकरणादौ देवेभ्यः शुंधध्वं देवेभ्यः शुंधध्वमित्येक इत्यादि । किंचापस्तम्बीया अपि आषाढादीनां निषेधं स्वसूत्रोपात्तमपि नैकान्तिकं मन्यन्ते । विहितप्रतिषिद्धानामाषाढादीनां देशभेदाद्देशाचारात् व्यवस्थेति तच्छाखीयप्रतापनारसिंहीयादिनिबन्धकर्तृणां तत्तद्ग्रन्थेषु स्वाभिप्रायाविष्कारात् ॥ ननु नाषाढप्रभृतिचतुष्ट्ये विवाहो नो पौषे न च मधुसंज्ञके विधेय इति **रत्नमाला**वचनस्य का वा गतिरिति चेत् । **निर्णयसिंधौ आचार्यचूडामणौ गर्गराजमार्तंडौ**—माङ्गल्येषु विवाहेषु कन्यासंवरणेषु च । दश मासाः प्रशस्यन्ते चैत्रपौषविवर्जिताः ॥ **ज्योतिर्निबन्धे पृथ्वीचन्द्रोदये मदनरत्ने संस्कारकौस्तुभे पुरुषार्थचिंतामणौ रत्नमालायांच भरद्वाजः**—माघफाल्गुनवैशाखज्येष्ठाषाढमृगाभिधाः । पठंते पूजिता मासाश्चातुर्वर्ण्यस्य नित्यश इति ॥ अत्र **विवाहपटले** आषाढस्य तृतीयेंऽशे प्रथितश्च करग्रह इति ॥ **संस्कारगणपतौ मुहूर्तसर्वस्वे**—सौम्यायने रवौ चैत्रहीने माघादिपञ्चके । आषाढाद्यत्रिभागे स्यान्मार्गशीर्षे परिग्रह इति ॥ **ज्योतिर्निबन्धे**—चान्द्रो दैवो मानुषो वा ग्राह्यो देशानुसारतः । शुचिः शुक्लदशम्यन्तो ग्राह्यो लग्ने च कार्तिकः ॥ दैवश्चातुर्मास्यान्तःपाती । मानुषश्चातुर्मास्याद्बहिर्भूतः ॥ **मुहूर्तचिन्तामणौ विवाहप्रकरणे** त्रिलवे शुचेरिति । इत्यादिवचोबलादाषाढपदेनाषाढाद्यत्रिभागो ज्ञेयः ॥ अनेन च निषेधः प्रत्युत्तरित एव ॥ किंच विहितप्रतिषिद्धानामाषाढादीनां देशाचाराद्देशभेदाच्च व्यवस्थाप्युक्ता **संस्काररत्नमालादौ** । सात्वग्रे तत्प्रकरणे वक्ष्यते ॥ १ माघः २ फाल्गुनः ३ वैशाखः

४ ज्येष्ठः ॥ ५ आषाढः शुक्लदशम्यंतः । ६ कार्तिकः देवोत्थापनोत्तरवर्ती । ७ मार्गशीर्षः सप्तैते चान्द्रमासा विवाहे ग्राह्याः ॥ १ चैत्रः । २ आषाढः शुक्लदशम्यनन्तरवर्ती । ३ श्रावणः । ४ भाद्रपदः । ५ आश्विनः । ६ कार्तिकः देवोत्थापनात्प्राग्वर्तमानः । ७ पौषः । सप्तैते चान्द्रमासा विवाहे अग्राह्याः ॥ इति चान्द्रमासानां ग्राह्याग्राह्यविवेकः ॥

अथ **मिश्रमासानां ग्राह्याग्राह्यत्वविवेकः** ॥ **मुहूर्तचिन्तामणौ विवाहप्रकरणे**—मिथुनगेपि रवौ त्रिलवे शुचेः । अलिमृगाजगते करपीडनं भवति कार्तिकपौषमधुष्वपि ॥ **प्रमिताक्षरायां पीयूषधारायां पुरुषार्थचिन्तामणौ रत्नमालायां निर्णयसिन्धौ च वसिष्ठः**—पौषेपि कुर्यान्मकरस्थितेऽर्के चैत्रे भवेन्मेषगतो यदा स्यात् । प्रशस्तमाषाढकृत विवाहं वदन्ति गर्गा मिथुनस्थितेऽर्क इति ॥ **धर्मनौकायां**—आषाढमासे मिथुनस्थितेऽर्क इति ॥ **विवाहपटले पीयूषधारायां चूडारत्ने च**—पौषेपि मकरस्थेऽर्के चैत्रे मेषगते रवौ । आषाढे मिथुनादित्ये केप्याहुः करपीडनमिति ॥ **पीयूषधारायां कश्यपः**—उत्तरायणगे सूर्ये मीनं चैत्रं च वर्जयेदिति ॥ **प्रमिताक्षरायां वसिष्ठः**—दिनाधिपे मेषवृषालिकुंभनृयुग्मनक्राख्यघटर्क्षसंस्थे । माघद्वये माधवशुक्रयोश्च मुख्योऽथवा कार्तिकसौम्ययोश्चेति ॥ घटस्तुला । इति ग्राह्याग्राह्यमिश्रमासवचनानि ॥ ॥ तत्रादौ **ग्राह्या मिश्रमासाः** ॥ मेषार्कविशिष्टश्चैत्रः । मिथुनार्कविशिष्टश्चाषाढाद्यत्रिलवः । तुलार्कविशिष्टः कार्तिको देवोत्थापनोत्तरवर्ती । वृश्चिकार्कविशिष्टः कार्तिकः । वृश्चिकार्कविशिष्टो मार्गशीर्षः । मकरार्कविशिष्टः पौषः । कुंभार्कविशिष्टः फाल्गुनः । मेषवृषभार्कविशिष्टो वैशाखः । वृषभमिथुनार्कविशिष्टो ज्येष्ठः । मकरकुंभार्कविशिष्टो माघः । एते नव ९ मिश्रा मासा ग्राह्याः ॥ ॥ **अथाग्राह्याश्च मिश्रमासाः** ॥ मीनार्कविशिष्टश्चैत्रः । कर्कार्कविशिष्टश्चाषाढाद्यत्रिलवः । तुलार्कविशिष्टः कार्तिको देवोत्थापनात्प्राग्वर्ती । धन्वर्कविशिष्टो मार्गशीर्षः । धन्वर्कविशिष्टः पौषः । मीना-

र्कविशिष्टः फाल्गुनः । कर्कसिंहार्कविशिष्टः श्रावणः । सिंहकन्यार्कविशिष्टो भाद्रपदः । कन्यातुलार्कविशिष्टश्चाश्विनः । एते नव ९ मिश्रमासा अग्राह्याः । इति मिश्रमासानां ग्राह्याग्राह्यत्वविवेकः ॥ ॥ **अथ सौरचान्द्रमिश्रमासानां गौणमुख्यत्वादिविचारः** । तत्र **तावद्विवाहे केवलसौरमासाश्रयणं तु गौणः पक्षः** । तदुक्तं **पीयूषधारायां केशवार्के**—प्रायः सौरं मानमिष्टं विवाहे तत्किं चान्द्रं मानमाहुः फलेन । तस्मात्सम्यक् तत्फलाप्तिस्तदैक्ये सौरो मासः केवलः किंचिदून इति ॥ कालतत्वविवेचनेपि सौरमासानां गौणत्वमेवोक्तं । तद्वचनं त्वग्रे चान्द्रमासमुख्यत्वप्रकरणे वक्ष्यते । चान्द्रमासानामेव मुख्यत्वं विवाहे । तदुक्तं **विवाहवृन्दावने**—चैत्रे मासि प्रतिपदि तिथौ वासरेर्कस्य सर्वैर्मेषादिस्थैर्गगनगतिभिर्भूर्भुवःस्वःप्रवृत्तिः । एवं पौषे मृगमुखगते भास्वति स्यान्न चासावुक्तः श्रेयान् परिणयविधाविंदुमासोस्ति तस्मादिति ॥ कालतत्वविवेचने । मासशब्दश्चान्द्र एव मुख्यस्तत्राप्यमांतके । सौरसावननाक्षत्रकृष्णादिषु यतः कुतः । त्रिंशत्तिथिसमूहे च गौण इति ॥ पीयूषधारायामपि । मासशब्देन चान्द्रा एव मासाः इंद्राग्नी यत्र हूयेते इत्याद्युक्तेरिति ॥ मिश्रमासानां तु तद्वाक्यपर्यालोचनया प्राशस्त्यार्थकत्वं । जन्माष्टमीविजयादशम्यादौ रोहिणीश्रवणादिवत् भाद्रपदापरपक्षगतकन्यार्कवच्च । तत्तद्वाक्येषु प्राशस्त्यार्थबोधकश्रेष्ठप्रशस्तादिपदानां स्पष्टतरोपादानात् । कालतत्त्वविवेचने पुरुषार्थचिंतामण्यादौ च । "वस्तुवस्तु इत्यादिना मकरार्कादियोगेनैव प्राशस्त्याभिधानादि" त्यन्तेन ग्रन्थेन स्पष्टतरमेव प्राशस्त्योपादानाच्चेति ॥ इति सौरचान्द्रमिश्रमासानां गौणमुख्यत्वादिविचारः ॥ ॥ **अथ विहितप्रतिषिद्धानामाषाढादीनां सौरचान्द्रमिश्रमासानां च देशाचाराद्देशभेदेनच व्यवस्था** ॥ **संस्कारकौस्तुभे**—विहितप्रतिषिद्धानामाषाढादीनां देशभेदेन व्यवस्थेति ॥ **संस्काररत्नमालायां**—अत्र स्मृत्युक्तानां सूत्रोक्तानां मासानां च परस्परविरोधात् देशाचाराद्व्यवस्थेति ॥ **प्रतापनारसिंहीये संस्कारप्रकाशे**—अत्र विहितप्रति-

पिद्धानां मासानां देशभेदात् शिष्टाचाराच्च व्यवस्थेति ॥ **ज्योतिर्निबन्धे**—चान्द्रो दैवो मानुषो वा ग्राह्यो देशानुसारतः । शुचिः शुक्लदशम्यन्तो ग्राह्यो लग्ने च कार्तिक इति ॥ **त्रिकाण्डमण्डनः**—चान्द्रोपि शुक्लपक्षादिः कृष्णादिरिति च द्विधा । कृष्णपक्षादिकं मासं नांगीकुर्वंति केचन । येपीच्छन्ति न तेषामपीष्टो विंध्यस्य दक्षिण इति ॥ **प्रमिताक्षरायां**—तापिनीकृष्णयोर्मध्ये चान्द्रो मासः प्रशस्यते । अन्येषु सर्वदेशेषु सौरो व्रतविवाहयोः ॥ तथा—विन्ध्याद्रेर्दक्षिणे भागे चान्द्रो मासः प्रशस्यते । उदग्भागे तु विन्ध्यस्य सौरं मानं विधीयते । अन्येषु सर्वदेशेषु मिश्रं मानं प्रकल्पयेदिति ॥ इति विहितप्रतिपिद्धानामाषाढादीनां सौरचान्द्रमिश्रमासानां च देशाचाराद्देशभेदेन च व्यवस्था ॥ ॥ **अथ विहितप्रतिपिद्धानामाषाढादीनां ब्राह्मणादिवर्णपरत्वेन व्यवस्था ॥ कालतत्त्वविवेचने**—वर्णव्यवस्थावचनविषयेषु आधानोपनयनविवाहादिषु मासो ब्राह्मणादिभिर्दर्शात एवोपादेय इति ॥ **तत्रत्यसंग्रहकारिकापि**—एषु चौलोपनयनादिषु । विवाहद्वादशाब्दादिव्रतानन्तव्रतादिषु । तृतीयाष्टमवर्षादिघटनार्थमपेक्षतः । गर्भजन्मारम्भतिथित्रिंशत्तिथिचयात्मकः । मासो ग्राह्यश्चान्द्र एव सीमन्ते पुंसवे तथेति ॥ **पुरुषार्थचिन्तामणौ रत्नमालायां**—नाषाढप्रभृति चतुष्टये विवाहो नो पौषे न च मधुसंज्ञके विधेयः । **भरद्वाजः**—माघफाल्गुनवैशाखज्येष्ठाषाढमृगाभिधाः । षडेते पूजिता मासाश्चातुर्वर्ण्यस्य नित्यशः । अत्र विहितप्रतिपिद्धाषाढादीनां देशभेदेन व्यवस्थेति केचित् । वस्तुतस्तु—पौषेपि कुर्यान्मकरस्थितेऽर्के चैत्रे भवेन्मेषगतो यदा स्यात् । प्रशस्तमाषाढकृतं विवाहं वदन्ति गर्गा मिथुनस्थितेऽर्क इति **वसिष्ठेन** मकरार्कादियोगेनैव प्राशस्त्याभिधानात् । अमावास्यापरिच्छिन्नो मासः स्याद्ब्राह्मणस्य तु । संक्रान्तिपौर्णमासीभ्यां तथैव क्षत्रवैश्ययोरिति **ब्रह्मसिद्धान्तवचनात्** । मकरार्कादियुक्ताः पौषचैत्राषाढाः क्षत्रियादीनामेव युक्ता इति बोध्यमिति ॥ इति विहितप्रतिपिद्धानामाषाढादीनां वर्णपरत्वेन व्यवस्था ॥ **देशपरत्वेन व्यवस्थायां सिद्धान्तः** ॥

अस्मद्देशस्य तपतीकृष्णयोर्मध्यदेशत्वात्, विन्ध्याद्रेर्दक्षिणभागप्रदेशत्वाच्च, मिश्रमतस्य सुतरामप्राप्तेः मिथुनार्कविशिष्टाषाढविधिः कर्कार्कविशिष्टाषाढनिषेधश्च नास्त्येवास्मत्प्रदेश इति ॥ एवं चास्मद्देशे चान्द्रमानस्यैव प्रामाण्यात् निषिद्धानिषिद्धसंक्रान्तिसत्वेपि आषाढाद्यत्रिलव एव विवाहः सर्वेषामिति ॥ इति देशपरत्वेन व्यवस्थायां सिद्धान्तः ॥ ॥ **ब्राह्मणादिवर्णपरत्वेन व्यवस्थायां सिद्धान्तः** ॥ यद्यप्यत्र **पुरुषार्थचिन्तामणौ** कैश्चित्पदेन देशभेदेन व्यवस्थाया अरुचिः प्रदर्शिता । तथापि वस्तुतस्तु इत्यादिना बोध्यमित्यन्तेन ग्रन्थेन मकरार्कविशिष्टपौषस्य मेषार्कविशिष्टचैत्रस्य मिथुनार्कविशिष्टाषाढस्य च क्षत्रियवैश्ययोरेव विधानात् तयोरेव कर्कार्कविशिष्टाषाढस्य प्रतिषिद्धत्वात् निषिद्धानिषिद्धसंक्रान्तिसत्वेपि ब्राह्मणानां चतुर्थवर्णस्य च केवलाषाढविधानाच्च आसेतुहिमाचलं मिथुनार्कविशिष्टाषाढविधिः कर्कार्कविशिष्टाषाढनिषेधश्च क्षत्रियवैश्ययोरेव न ब्राह्मणानां चतुर्थवर्णस्य चेति । ब्राह्मणवर्णचतुर्थवर्णयोस्तु संक्रान्तीनां निष्प्रयोजनत्वात् निषिद्धानिषिद्धसंक्रान्तिसत्वेपि केवलाषाढाद्यत्रिलव एव विवाह इति ॥ इति वर्णपरत्वेन व्यवस्थायां सिद्धान्तः ॥ ॥ **एवंच** हेमाद्रिकालमाधवकालतत्वविवेचनपुरुषार्थचिन्तामण्यादिपरिगृहीतेन "अमावास्यापरिच्छिन्नो मासः स्यात् ब्राह्मणस्य तु । संक्रान्तिपौर्णमासीभ्यां तथैव क्षत्रवैश्ययो"रिति **ब्रह्मसिद्धान्त**वचनेन ब्राह्मणानां चतुर्थवर्णस्य च विवाहे निषिद्धानिषिद्धसंक्रान्तीनां सत्वेप्यक्षतेः केवलाषाढादिमासानामेव प्रवृत्तिः ॥ **यथा सौरमतानुयायिभिः** चान्द्रमतेन निषिद्धेपि चैत्रे पौषे च ( क्रमेण ) मेषार्कस्य मकरार्कस्य च विहितत्वेनैव चैत्रे मेषार्के सति पौषे मकरार्के सति च विवाहः क्रियते । मीनार्के धन्वर्के तु स्वमतेन तयोर्निषिद्धत्वात् चैत्रे मीनार्के सति पौषे धन्वर्के च सति नैव विवाहः क्रियते ॥ **तथैव चान्द्रमतानुयायिभिरपि** सौरमतेन मेषार्कमकरार्कयोर्विहितत्वेपि चैत्रपौषमासयोः स्वमतेन निषिद्धत्वात् चैत्रे सत्यपि मेषार्के पौषे सत्यपि मकरार्के च नैव विवाहः क्रियते । मीनार्कधन्वर्क-

योस्तु सौरमते वर्ज्ययोरपि स्वमतेन चैत्रपौषयोर्वर्ज्यत्वादेव नैव विवाहः क्रियत इति ॥ **एवमेव तुल्यन्यायेन स्वमतेन** आषाढाद्यत्रिलवस्य देवोत्थापनादनन्तरं कार्तिकस्य मार्गशीर्षस्य फाल्गुनस्य च विहितत्वादेव सौरमतेन निषिद्धेपि कर्कार्के तुलार्के धन्वर्के मीनार्के आषाढाद्यत्रिलवे कर्कार्के सति देवोत्थापनोत्तरवर्तिकार्तिके तुलार्के सति मार्गशीर्षे धन्वर्के सति फाल्गुने मीनार्के सति च विवाहः क्रियत इति ॥ **तदेतदुक्तं सर्वं विवाहवृन्दावने** ॥ नेष्टः पौषे मृगयुजि रवावाद्दतश्चेत्रवीणैश्चारुश्चैत्रोप्यजसहचरे भास्करे सुन्दरीणां । माण्डव्याद्यैः स्मृतशुभफलः स्यान्न किं नोपयामे मीनोपि स्यादविकृतफलः फाल्गुनस्य प्रसंगात् ॥ १ ॥ झषो न निन्द्यो यदि फाल्गुने स्यादजस्तु वैशाखगतो न निन्द्यः । मध्वाश्रितौ द्वावपि वर्जनीयावित्यादिवाचामियमेव युक्तिरिति ॥ २ ॥ अजस्तु वैशाखगतो न निन्द्य इति तु उपनयनविषयं इति विवाहवृन्दावनटीकायां ॥ इत्यादि वदन्ति ते इत्यादिवाचस्तेषां इत्यादिवाचां इति व्युत्पत्तिरपि टीकायामेव ॥ अतएवास्मद्देशे वृद्धपरम्परया सर्वैः—१ आषाढाद्यत्रिलवे कर्कार्के सति, २ कार्तिके देवोत्थापनादनन्तरं—तुलार्के सति, ३ मार्गशीर्षे धन्वर्के सति, ४ फाल्गुने मीनार्के सति च, विवाहः क्रियत इति ॥ तत्राषाढाद्यत्रिलवे गोदावर्युत्तरतीरादौ कार्तिके देवोत्थापनादनन्तरं गुर्जरादौ विवाहः इत्यादि देशविशेषप्रवृत्तिमात्रे आचार एव शरणं ॥ ॥ पौषेपि कुर्यान्मकरस्थितेऽर्के इति वचनं अपवाद इत्युच्यते कैश्चित् । परं सोऽपवादो न संभवति । पूर्ववचनैर्विवाहे मासानां विधानात् पौषेपि कुर्यादित्यादिवचनैर्मकरार्कादियोगेन प्राशस्त्यमात्राभिधानात् विषयभेदेन समानविषयाभावात् ग्रन्थकारैः सौरचान्द्रमिश्रमतबोधकवचसा देशपरतया वर्णपरतया च व्यवस्थाबोधनात्परस्परं युगपत्प्राप्त्यभावाच्च । तुल्यन्यायेन प्रतिप्रसवत्वाभावोपि सुवच इति ॥ **किंच** । जन्माष्टमी विजयादशमी भाद्रपदापरपक्षादौ प्राशस्त्याभिधायका रोहिणीश्रवणकन्यार्कादियोगा यथा निर्णये अप्रयोजकाः तद्वदिमेपि प्राशस्त्याभिधायका मकरार्कमेषार्क-

मिथुनार्कादयो योगाश्चान्द्रमते निर्णये त्वप्रयोजका एवेति ॥ **अतएव पीयूषधारायां**—चान्द्रमते पौषेपि कुर्यादिति वचनं प्रागभिहितन्यायादुपेक्ष्यमित्यादिग्रन्थेनोपेक्षितमेवेति ॥ एवं मिथुनगेपि रवौ त्रिलवे शुचेरिति मुहूर्तचिन्तामणिवचनमपि मिश्रमतप्रतिपादकत्वाचान्द्रमताननुरोध्येवेति शम् ॥ तदेतत्सिद्धं सकलशास्त्रार्थपर्यालोचनया यदस्मद्देशे गोदावर्या उत्तरतीरादौ आषाढमासे शुद्धप्रतिपदमारभ्य दशमीपर्यन्तं कर्कार्केपि ब्राह्मणानां चतुर्थवर्णस्य च विवाह इति ॥ **कर्कार्कनिषेधस्तु** तापीकृष्णयोर्मध्यदेशादन्यत्रदेशे विन्ध्याद्रेर्दक्षिणभागप्रदेशादन्यत्रदेशे च क्षत्रियवैश्यवर्णमात्रपरश्च न ब्राह्मणपरश्चतुर्थवर्णपरश्चेति ॥—सर्वेषु मासेषु तु चासुरादिविवाह उक्तो वरकन्यके तु ॥ ज्येष्ठे तदा ज्येष्ठविवर्जनं स्यान्न चान्यथा ज्येष्ठविवर्जनं तु ॥ १ ॥ ॥ **अथ वेधादिदशदोषाः** ॥ वेधश्च लत्ता च तथैव पातः खार्जूरवेधो दशयोगचक्रम् ॥ युतिश्च जामित्रमुपग्रहश्च बाणाख्यवज्रे च दशैव दोषाः ॥ १ ॥ जीवेऽतिचारे गजनेत्र२८घस्रान् त्यजेत् ॥ ॥ **अथ घातचन्द्रविचारः** ॥ विवाहादिषु घातचन्द्रः ॥ न चिन्तनीयः सतु युद्धयात्रादिके विचिन्त्योऽस्ति वदामि तं वै ॥ २ ॥ भू१बाण५नन्द९हस्ताश्च रस६दि१०वह्नि३शैलजाः ७ ॥ वेदा४वसु८शिवा११दित्या१२घातचन्द्रा यथाक्रमम् ॥ ३ ॥ ॥ **अथाकालिकविद्युत्पातादिविचारः** ॥ अकालजा भवेयुश्चेद्विद्युन्नीहारवृष्टयः ॥ प्रत्यर्कपरिवेषेन्द्रचापाभ्रध्वनयो यदि ॥ ४ ॥ दोषाय मङ्गले नूनमदोषायैव कालजाः ॥ पौषादिमधुमासान्तजाता वृष्टिस्त्वकालजा ॥ ५ ॥ ग्रहणे ग्रहयुद्धे च निर्घाते भूमिकम्पने ॥ दिवसाः पञ्च सन्त्याज्या नान्दीश्राद्धे कृते सति ॥ निर्घातभूमिचलनं दोषाय तु भवेन्न हि ॥ ६ ॥ उल्कापातेन्द्रचापप्रबलघनरजोधूमनिर्घातविद्युद्दृष्टिप्रत्यर्कदोषादिषु सकलबुधैस्त्याज्यमेवैकरात्रम् ॥ दुःस्वप्ने दुर्निमित्ते ह्यशुभफलदशादुर्मनोभ्रान्तबुद्धौ चौले मौञ्जीनिबन्धे परिणयनविधौ सर्वदा त्याज्यमेव ॥ ७ ॥ केचित्तु दिग्दाहदिनं विवर्ज्य ग्रहे रवीन्द्वोर्दिनसप्तकं च ॥

भूकम्पने त्रीणि दिनानि चाहुरुल्कानिपातेपि च पञ्च धूमे ॥ ८ ॥ केतूद्गमो यावदिहास्ति तावत्कालः शुभो नैव यदा तु वृष्टिः ॥ मन्दा भवेत्तर्हि न चास्य दोषः श्राद्धे कृते वा किल वृद्धिसंज्ञे ॥ ९ ॥ दुर्निमित्तोत्तरं त्रिदिनमध्येऽल्पवृष्टौ नान्दीश्राद्धे कृते वा न दोषः ॥ ॥

**अथ प्रतिकूलम्** ॥ प्रतिकूलं ब्रुवेऽधुना ॥ वध्वा वरस्यापि कुले मृतिश्चेज्जन्तोर्भवेन्निश्चयतः परस्तात् ॥ न स्याद्विवाहः शुभदः ॥ [ **अत्र विवाहनिश्चयश्च** वैदिको लौकिको वा ग्राह्यः । तत्र वैदिको वाग्दानाख्यविधिना कृतो मुख्यः । लौकिको लग्नतिथिनिश्चयादिर्वरवध्वोः शुल्कभापाबन्धपूगीफलदानादिश्च । अत्र कुले इत्यस्य सगोत्रत्रिपुरुपात्मके इति विशेषणमध्याहर्तव्यं । अग्रे सगोत्रिणांतु त्रिपूरुपान्त प्रतिकूलमेतदित्युक्तेः । अत्र सगोत्रत्रिपुरुपेत्युक्तेर्मातामहकुलादिव्यावृत्तिः । तथाच वरस्तत्पूर्वपत्नी वरमातापितरौ वरपितामहपितामह्यावनूढापितृष्वसाचेति **पूर्वत्रिपुरुषी** । वरस्तस्य भ्राता पत्नीपुत्रानूढकन्यासहितः वरस्यानूढभगिनी वरस्य स्नुषापुत्रौ अनूढाकन्याच पौत्रस्तद्भार्या चानूढा पौत्रीचेति **परत्रिपुरुषी** । पितृव्यतत्पत्न्यौ पितृव्यपुत्रस्तत्पत्न्यावनूढा पितृव्यकन्याचेति संतानभेदे त्रिपुरुपीचेति **सगोत्रत्रिपुरुषी** पुरुपपरिगणना । एतेपामन्यतममरणे प्रतिकूलमिति पर्यवसितोऽर्थः । अत्र भ्राता पुत्रपौत्रादिश्चानुपनीतोपि त्रिवर्पादिकवया ग्राह्यः । एवमनूढभगिन्यादेरपि त्रिवर्पाधिकत्वं युक्तं भाति । एवं वधूकुलेऽप्यूह्यम् । एवमेव मण्डनमुण्डनादावपि त्रिपुरुपगणनोह्या ॥ अत्र विशेषः ]—अथ माता पिता पितृव्यश्च सहोदरश्च ॥ १ ॥ पितामहश्चैव पितामही च पितृव्यपत्नीसुतबन्धवश्च ॥ अनूढितः स्वस्रितरोपि कश्चिन्मृतो महाविघ्नकरो भवेत्सः ॥ २ ॥ संवत्सरानन्तरमेव कार्यो जाते विवाहः प्रतिकूलके तु ॥ पितुर्जनन्याः स्वसुतस्य मातुर्भ्रातुः सुतस्येतरगोत्रजस्य ॥ ३ ॥ वर्षं तदर्धं च तदर्धमर्धं सार्धैकमासं क्रमशश्च मासम् ॥ हित्वा **गणेशस्य च शान्ति**मादौ कृत्वा विवाहं प्रकरोतु यद्वा ॥ ४ ॥ अर्धं मासत्रयार्धं ॥ ततोऽपि कष्टे समुपस्थिते तु मासोत्तरं शान्तिपुरःसरं च ॥ करोतु

लग्नं ॥ ॥ **राष्ट्रभङ्गे पित्रोर्मृतौ वा** ॥ त्वथ राष्ट्रभङ्गे पित्रोर्मृतेः काल उपागते च ॥ ५ ॥ चकारेण दुर्भिक्षं गृह्यते ॥ कन्यातिकाले समुपस्थिते वा तदा सपिण्डीकरणोत्तरं तत् ॥ शान्तिस्तु सर्वत्र सगोत्रिणां तु त्रिपूरुषान्तं प्रतिकूलमेतत् ॥ ६ ॥ तत् लग्नं ॥ प्रेतकर्माण्यशेषेण न चेज्जातानि कस्यचित् ॥ चतुर्थपुरुषान्तं न चरेदाभ्युदयक्रियाम् ॥ ७॥ प्रेतकर्माण्यनिर्वर्त्य चरेन्नाभ्युदयक्रियां ॥ आचतुर्थं ततः पुंसि पञ्चमे शुभदं भवेदिति ॥८॥ ॥ **अथ मङ्गले मातृरजसि** ॥ वध्वा वरस्य वा मातृ रजोदोषे ह्युपस्थिते ॥ विवाहो नैव कर्तव्यो व्रतबन्धे समीरितम् ॥ १ ॥ **तथा प्रयोगपारिजाते। ज्योतिःसारे**—उद्वाहव्रतचूडासु माता यदि रजस्वला ॥ तदा न मङ्गलं कार्यं शुद्धौ कार्यं शुभेच्छुभिः ॥ प्रारंभात्प्राग्विवाहस्य माता यदि रजस्वला ॥ निवृत्तिस्तस्य कर्तव्या सहत्वश्रुतिचोदनात् ॥ नान्दीश्राद्धे कृते पश्चाद्यदि माता रजस्वला ॥ मौञ्जीबन्धं न कुर्वीत गार्ग्यस्य वचनं यथा ॥ **प्रयोगसारावल्यां गार्ग्यः**—मातृणां भोजनात्पूर्वं माताऽस्पृश्या भवेद्यदि ॥ तदा कर्म न कुर्वीत यावद्भोजनसंगता इति ॥ **षट्त्रिंशन्मते**—मात्रा सहैव भुञ्जीयादूर्ध्वं माता रजस्वला ॥ व्रतबन्धः प्रशस्तः स्यादित्याह भगवान्यमः ॥ नान्दीश्राद्धे कृते पश्चात्कन्यामाता रजस्वला ॥ कन्यादानं पिता कुर्यादित्याङ्गिरसभाषितं ॥ नान्दीश्राद्धे कृते यस्य भवेद्भार्या रजस्वला ॥ विवाहे नैव दोषः स्याद्दोषः स्यान्मौञ्जिबन्धने ॥ **आचार्यः**—करोत्यन्यस्य चेद्यस्तु व्रतबन्धं विनौरसं ॥ भार्या तस्य न दोषः स्याद्गुर्विणी वा रजस्वला ॥ धर्मार्थं कुरुते विप्रो मौञ्जीबन्धनमेवच ॥ न दोषो गर्भरजसोरित्याह स्मृतिसंग्रहः ॥ अथोपनयनाहे तु मुहूर्ताच्चोत्तरादथ ॥ मात्रा सहैव भुञ्जीयाद्विवाहे भार्यया सहेति ॥ तथा **प्रयोगदर्पणे श्रीमत्पद्मनाभदीक्षिता** अप्येवमेवाहुः ॥

**अथ समानसंस्कारनिर्णयः** ॥ एकमातृजयोरेकवत्सरे पुरुषस्त्रियोः ॥ न समानक्रियां कुर्यान्मातृभेदे विधीयते ॥ १ ॥ ऋतुत्र-

यस्य मध्ये चेदन्याब्दस्य प्रवेशनं ॥ तदा ह्येकोदरस्यापि विवाहस्तु प्रशस्यते ॥ अत्रत्यतुशब्देन विवाहभिन्नमेकोदरविषयं मङ्गलद्वयमब्दभेदेन भवतीति ज्ञाप्यत इति **कौस्तुभे** ॥ एकस्योद्वाहयुग्मं न कार्यमेकदिने तथा ॥ ऋतुत्रये पुमुद्वाहान्न कन्योद्वहनं भवेत् ॥ २ ॥ ऋतुत्रये द्वित्रिकुमारिकाणामेकोदराणां न विवाह इष्टः ॥ एकोदराणां च सुतासुतानां विवाहमौञ्ज्यादि न शोभनं स्यात् ॥ ३ ॥ ॥ अथ **मण्डनमुण्डनविचारः** ॥ न मण्डनान्मुण्डनमत्र कार्यं भवेद्विवाहोऽत्र तु मण्डनाख्यः ॥ व्रतं समावर्तनकं सचौलं केशान्तमेतानि तु मुण्डनानि ॥ ४ ॥ व्रतं तु कात्यायन आह मण्डनमतो विधेयं ह्युभयत्र लग्नतः ॥ ॥ **अथ संकटे** ॥ विधेयमेतद्यदि वाब्दभेदतः पुरोदितं वा श्रुति४वासरान्ततः ॥ ५ ॥ यद्वा भवेन्मण्डपभेदतोऽखिलं भिन्नोदराणां नहि मण्डपान्तरम् ॥ वेद्यन्तरे तद्विदधीत तत्र हि पूर्वोदितं चैकदिनेपि शोभनम् ॥ ६ ॥ नैतन्निषिद्धं यमयोः कदापि बन्ध्वोर्भगिन्योरपि सूनुपुत्र्योः ॥ चौलं विवाहो व्रतबन्धनादि चैकत्र कार्यं न दिनान्तरादौ ॥ ७ ॥ द्विशोभन त्वेकगृहेपि नेष्टं शुभं तु पश्चान्नवभिर्दिनैस्तु ॥ आवश्यकं शोभनमुत्सवो वा द्वारेऽथ वाचार्यविभेदतो वा ॥ ८ ॥ **तथा संस्कारकौस्तुभे मदनरत्ने वसिष्ठः**--एकोदरप्रसूतानां नाग्निकार्यत्रयं भवेत् ॥ भिन्नोदरप्रसूतानां नेतिशातातपोऽब्रवीत् ॥ १ ॥ अत्र शातातपग्रहणेन भिन्नोदरविषयाग्नित्रयस्यानित्यता ज्ञाप्यत इति ॥ ॥ अथ **गुरुलघुमङ्गलनिर्णयः** ॥ गुरुमङ्गलतः पश्चान्न कुर्याल्लघुमङ्गलं ॥ नैमित्तिकं तु कर्तव्यं नैकदा मङ्गलत्रयम् ॥ ९ ॥ ॥ **विवाहमध्ये श्राद्धदर्शादिपाते निर्णयः** ॥ विवाहमारभ्य चतुर्थमध्ये क्षयाहदर्शौ नहि शोभनौ स्तः ॥ ॥ **सपिण्डनमासिकादिनिर्णयः** ॥ विनापकर्षं नहि मङ्गलं शुभः सपिण्डनस्यापि च मासिकानां ॥ १० ॥ ॥ **प्रत्युद्वाहादिनिर्णयः** ॥ कन्याद्वयं नैकवराय दद्याद्भ्रात्रोर्द्वयोश्चापि न कन्यके द्वे ॥ कार्यं तथैवोद्वहनं मिथो न नैवैकदा मुण्डनकद्वयं स्यात् ॥ ११ ॥ यज्ञदत्तसुता देवदत्तपुत्राय दीयते ॥ देवदत्तसुता यज्ञदत्तपुत्राय दीयते ॥ १२ ॥ मिथो विवाह एवं स्यात्सर्वेषां शुभदो नहि ॥ ॥

**अथ विवाहे कन्यारजोदर्शने** ॥ असंस्कृता तातगृहे रजस्वला भवेद्धृश्चेद्वृषली मता तु सा ॥ माता पिता ज्येष्ठसहोदरश्च व्रजन्ति घोरं नरकं त्रयोऽपि ॥ १२ ॥ य उद्वहेत्तां वृषलीपतिः स्याद्योग्यो न पित्र्ये नच यज्ञदत्तयोः ॥ अतो न कन्योद्वहने विलम्बः कार्यो न पित्रा दशवर्षतोत्र ॥ १३ ॥ प्रतीक्ष्य वर्षत्रयमप्रदत्ता रजस्वला सा प्रकरोतु नूनम् ॥ स्वयंवरं तद्वरणेपि दोषो वरस्य नास्तीत्यवदन्मनुश्च ॥ १४ ॥ पितृदत्तमलंकारं न गृह्णीयात्स्वयंवरे ॥ कन्यापित्रे वरो दद्याच्छुल्कं नैव कदाचन ॥ १५ ॥ ॥ **कन्यारजोदोषे प्रायश्चित्तम्** ॥ कन्यामृतुमतीं शुद्धां कृत्वा निष्कृतिमात्मनः ॥ शुद्धिं च कारयित्वा तामुद्वहेदानृशंस्यधीः ॥ १६ ॥ पिता ऋतून्स्वपुत्र्यास्तु गणयेदादितः सुधीः ॥ दानावधि गृहे यत्नात्पालयेच्च रजोवतीम् ॥ १७ ॥ दद्यात्तदृतुसंख्या गाः शक्तः कन्यापिता यदि ॥ दातव्यैकापि निःस्वेन दाने तस्या यथाविधि ॥ १८ ॥ दद्याद्वा ब्राह्मणेष्वन्नमतिनिःस्वः सदक्षिणम् ॥ तस्यातीतर्तुसंख्येषु वराय प्रतिपादयेत् ॥ १९ ॥ उपोष्य त्रिदिनं कन्या रात्रौ पीत्वा गवां पयः ॥ अदृष्टरजसे दद्यात्कन्यायै रत्नभूषणम् ॥ २० ॥ तामुद्वहन्वरश्चापि कूष्माण्डैर्जुहुयाद्द्विजः ॥ ॥ **यज्ञपार्श्वः**—विवाहे वितते तत्रे होमकाल उपस्थिते ॥ कन्यामृतुमतीं दृष्ट्वा कथं कुर्वन्ति याज्ञिकाः ॥ १ ॥ स्नापयित्वा तु तां कन्यामर्चयित्वा यथाविधि ॥ युञ्जानामाहुतिं हुत्वा ततस्तत्रं प्रवर्तयेत् ॥ २ ॥ **बौधायनसूत्रे**—अथ यदि कन्योपस्वद्यमानावोह्यमानायां रजस्वला स्यात्तामनुमन्त्रयेत्–पुमांसौ मित्रावरुणा पुमांसावश्विनावुभौ ॥ पुमानिन्द्रश्च सूर्यश्च पुमांसं संदधात्विति ॥ अथ द्वादशरात्रमलंकृत्य प्राशयेत्पञ्चगव्यमथ शुद्धां कृत्वा विवहेत् ॥

**अथ विवाहभेदाः** ॥ अष्टौ विवाहाः किल चाश्वलायनो ब्रूतेऽथ तत्र द्विजवर्यके तु षट् ॥ श्रेष्ठो भवत्युत्तरमुत्तरं तथा क्षत्रस्य

चान्याः श्रुति४संमिताः शुभाः ॥ १ ॥ अन्या आसुरगान्धर्वराक्षसपैशाचाः ॥ विट्शूद्रयो राक्षसवर्जितास्ते श्रेष्ठा हि यद्वा विशि राक्षसः स्यात् ॥ शूद्रस्य पैशाचमुवाच कश्चिदसंस्कृतोद्भूतनरस्य चापि ॥ २ ॥ यः प्रातिलोम्येन नरः प्रसूतस्तस्यापि पैशाचमुवाच कश्चित् ॥ अत्यापदि क्षत्रियवैश्यशूद्रकाणां च पैशाचमुवाच वत्सः ॥ ३ ॥ गान्धर्वादियों विवाहोऽस्ति तस्मिन्कार्यं सर्वं तोयदानादि यत्नात् ॥ नो- चेद्भार्यात्वं हि तस्यां भवेन्न देयान्यस्मै सा वरायैव कन्या ॥ ४ ॥ कन्याहरणोत्तरं पुनर्वाग्दानादिसप्तपद्यन्तं सर्वं कार्यं ॥ मन्त्रादिना या किल संस्कृता स्यात्कन्याथवा नो किल संस्कृता स्यात् ॥ चेत्कामयेत्सा वरमेव तं वै तस्मै प्रयच्छेद्यदि नो न तस्मै ॥ ५ ॥ ॥ अथ- विवाहयज्ञादावाशौचप्राप्तौ निर्णयः ॥ दाने विवाहे कदने च यज्ञे देशस्य विघ्ने समुपस्थितेऽपि ॥ अशौचिता नापदि कन्यकाया दातुर्वरस्याथ विवाहयिष्णोः ॥ ६ ॥ विवाहयिष्णुर्विवाहकर्ता ॥ व्रते विवाहे हवने जपे च श्राद्धे मखे चेश्वरपूजनेपि ॥ आरम्भिते सूत- कमेव नास्ति भवेदनारम्भित एव सर्वम् ॥ ७ ॥ आरम्भणं स्यान्मधुपर्क एव यज्ञे विवाहे किल वृद्धिसंज्ञम् ॥ श्राद्धं च तद्वद्व्रतसत्रयोश्च संकल्पनं पैत्रमखे च पाकः ॥ ८ ॥ पैत्रमखः श्राद्धं ॥ पाकः पाकप्रोक्षणं ॥ यज्ञे विवाहे ह्युपनीतिचौले नान्दीमुखं स्वर्ग२१दशा१०ङ्ग- ६रामैः ३ ॥ दिनैश्चरेत्पूर्वमथो यदा तु नारम्भता तत्र दिनान्तरं सत्॥ ९ ॥ सामग्रिकायाः किल सिद्धतायामाशौचकाले समुपस्थिते तु ॥ कूष्माण्डिसंज्ञैर्मनुभिश्च हुत्वा सर्पिर्द्विजाग्र्याय सवत्सधेनुम् ॥ १० ॥ यद्देवादेवहेडनमित्यादयो मन्त्राः कूष्माण्डहोमे प्रसिद्धास्ते कूष्मा- ण्डीसंज्ञाः ॥ दत्वा चरेन्माङ्गलिकं च सर्वमन्नादिदानं परगोत्रिहस्तात् ॥ चेद्भोजनार्धेऽशुचिताप्रवृत्तिरन्नोदकं सर्वमपास्य विप्राः ॥ ११ ॥ पञ्चगव्यं प्राश्येति चकारार्थः ॥ अशुचिताप्रवृत्तिराशौचप्राप्तिः ॥ आचान्ताः स्युश्चान्यतोयेन शुद्धा यस्मिन्नन्ने पूर्वसंकल्पिते तु ॥ दोषो नास्तीत्याह सूरिः सुरेज्यस्तस्माद्विप्रैर्भोजनीयं सुखेन ॥ १२ ॥ यस्मिन्मङ्गले ॥ अकृते मधुपर्के तु ऋत्विजां स्यादशौचकम् ॥ जपानु-

स्थानकंर्यैवमिति शास्त्रस्य निश्चयः ॥ १२ ॥ ॥ अथ धर्मार्थं विवाहकरणं ॥ यो ब्राह्मणोद्वाहकरः स नूनं शैवं पदं गच्छति यश्च विद्वान् ॥ अनाथकन्यां तातविहीनमर्भं संस्कारयेत्तस्य न पुण्यसंख्या ॥ १ ॥ यो विप्रसंस्कारधनप्रदाता स वाजिमेधस्य फलं लभेद्धि ॥ यस्तत्र विघ्नं प्रकरोति दुष्टस्तमाशु मृत्युर्नरकं प्रयच्छेत् ॥ ॥ अथ कन्यागृहे भोजननिषेधः ॥ कन्यागेहे नैव भुञ्जीत यावत्संतानं स्यान्नैव तस्यान्नि नाद्यात् ॥ मोहाद्भुङ्क्ते तद्गृहे चेद्धि जन्तुः कुम्भीपाके नास्ति तत्रावधिश्च ॥ १ ॥ वासः प्रोक्तं मङ्गले नूतनं सत् भार्यायाः भोजनं शस्यमाहुः ॥ यात्रोद्वाहे मार्गसंयोगकेऽपि भार्यायाकं त्वेकयानं प्रशस्तं ॥ २ ॥ यात्रादौ स्त्रियासह भोजनं एकयानं च शस्तमित्यर्थः ॥ एतद्रहितं तु दोषोस्त्येव । कृते चान्द्रायणं चरेत् ॥ ॥

अथ कुम्भविवाहः ॥ वैधव्ययोगे विदिते वधूना विवाहमादौ विदधीत कुम्भे ॥ पश्चाद्विवाह्या विधिवद्वधूः सा विधिस्तु तस्याकरतोऽवधार्यः ॥१०॥ स्वर्णाम्बुपिप्पलानां च प्रतिमा विष्णुरूपिणी ॥ तया सह विवाहे तु पुनर्भूत्वं न जायते ॥११॥ विधिस्त्वाकरतो ज्ञेयः ॥

अथ विवाहनक्षत्राणि ॥ पारस्करः—त्रिषु त्रिपूत्तरादिषु स्वातौ मृगशिरसि रोहिण्यां वा इति ॥ मूलमैत्रमृगरोहिणीकरैः पौष्णमारुतमघोत्तरान्वितैः ॥ सौम्यभौमशनिवासरवर्जितं पाणिपीडनविधिर्विधीयते ॥१॥ ॥ अथानिष्टनक्षत्रादौ दानानि ॥ विपत्तारे गुडं दद्यान्निधने सति काञ्चनम् ॥ प्रत्यरे लवणं दद्याच्छागं दद्यात्रिजन्मसु ॥ २ ॥ चन्द्रे च शङ्खं लवणं च तारे तिथौ विरुद्धे त्वथ तण्डुलांश्च ॥ धान्यं च दद्यात्करणे च वारे योगे विरुद्धे कनकं प्रदेयम् ॥ ३ ॥ ॥ अथ विवाहमण्डपः ॥ नृपारत्नि १६ तुल्यो भवेन्मण्डपो वा विवाहेऽर्क १२ हस्तोऽष्टहस्तोऽथवा स्यात् ॥ अरत्निः कनिष्ठान्तहस्तो निरुक्तश्चतुर्द्वारको मध्यवेदिर्भवेत्सः ॥ १ ॥ चित्राविशाखाशततारकाश्विनीज्येष्ठाभरण्यौ शिवभाच्चतुष्टयम् ॥ हित्वा प्रशस्तं फलतैलवेदिकाप्रदानकं कण्डनमण्डपादिकम् ॥ २ ॥ अङ्गिनो गदि-

तमङ्गमाचरेद्वेदिकादलनकण्डनं तथा ॥ मण्डपाद्यथ चतुर्थिकं शुभे भे तिथौ च दिवसे विवाहजे ॥ ३ ॥ ॥ अथ **विवाहवेदिप्रमाणं** ॥ कन्याकराद्युग४करैर्विततां करोच्चां वेदीं चरेद्धनपवत्रिदिशोस्तु निम्नाम् ॥ सोपानकं बहिरियं किल पृष्ठभागे वामे गृहाद्बहिरतीव समां सुरूपाम ॥ १ ॥ हस्तोच्छ्रितां चतुर्हस्तां चतुरस्रां समंततः ॥ स्तम्भैश्चतुर्भिः संयुक्तां विवाहे वेदिकां शुभाम् ॥ २ ॥ विस्तारितां हस्तचतुष्टयेन हस्तोच्छ्रितां मन्दिरवामभागे ॥ स्तम्भैश्चतुर्भिः कृतनिर्मिताङ्गीं वेदिं विवाहे प्रवदन्ति सन्तः ॥ ३ ॥ **अथवा**—कन्याहस्तैः पञ्चभिः सप्तभिर्वा वेदिं कुर्यात्कूर्मपृष्ठोन्नताङ्गीम् ॥ रम्ये हर्म्ये कारयेद्वामभागे जायापत्योराशिषो वाचयित्वा ॥ ४ ॥ इति ॥ ॥

अथ **वाग्दानोत्तरं वरमरणे** ॥ वाग्दानतश्चेद्यदि मृत्युमाप्तो वरो वधूः सान्यवराय देया ॥ केचित्तु कन्योद्वहितापि देया न मैथुनं चेत्पुरुपस्य भुक्तम् ॥४॥ वदन्ति तत्पूर्वयुगे प्रशस्तं कलौ तु वर्ज्यं भवतीति शास्त्रं ॥ वरो यदि स्यात्पतितोऽन्यजातिः सगोत्रपण्ढादिरिदं तु तुल्यम् ॥५॥ ॥ अथ **विवाहोत्तरं वरस्य देशान्तरगमने** ॥ कन्यां प्रगृह्यापि वरो यदा चेद्देशान्तरं गच्छति तस्य मार्गम् ॥ ऋतुत्रयान्तं किल संप्रतीक्ष्य तदुत्तरं सान्यवरं प्रकुर्यात् ॥ १ ॥ **शुल्कदानेतु** ॥ दत्वा शुल्कं कन्यकायै वरो यः प्राप्तो मृत्युं कन्यका मन्यते चेत् ॥ देया प्राहुर्देवराद्याथ यो वै दत्वा शुल्कं प्रव्रजेद्दूरमार्गम् ॥२॥ मन्यते अनुमन्यते ॥ प्रतीक्ष्य मार्गं किल वत्सरान्तं वरान्तरायैव सुखेन देया ॥ विधानतो ॥ ॥ **एकदानेकवरप्राप्तौ कर्तव्यं** ॥ अथो यदि कन्यका सा ह्यनेकपुंभ्यः किल संप्रदत्ता ॥३॥ अनूढतायां किल कन्यकायां सर्वे यदैकावसरे वराश्चेत् ॥ संप्राप्नुयुस्तर्हि य एव पूर्वः स एव कन्यां वरयेन्न चान्यः ॥ ४ ॥ अन्येन यद्वस्त्रधनादि दत्तं तदेव लब्ध्वा व्रजतु स्वसद्म ॥ आद्यो विवाहावसरे वरश्चेन्न प्राप्नुयादन्यवरो लभेच्चेत् ॥ ५ ॥ यावन्नवोढास्ति हि तावदेव दत्तापि तां पूर्ववरो हरेत्सः ॥ श्रेयान्वरः पूर्ववराद्यदेवं दोपान्विते पूर्ववरेऽर्थवैवम् ॥ ६ ॥ रोगान्विताय कुलशीलविहीनपुंसेऽपस्मारिणे कुटिलवेपधराय पश्चात् ॥ लब्धा-

द्वराय च पतित्वमुपागताय दत्तां हरेदथ सगोत्रविवाहितां च ॥ ७ ॥ पुंसे वराय ॥ ॥ परिवेत्त्रादौ विचारः ॥ ज्येष्ठे पण्ढे वान्ध-बाधिर्ययुक्ते मूके कार्यः सभवे तद्विवाहः ॥ तस्याभावे तत्कनिष्ठस्य कार्यं लग्नं ब्रूते शास्त्रमेवं वसिष्ठः ॥ ८ ॥ पितृव्यपुत्रे स्वपितुः सका-शादन्यस्य पत्न्यां तनये प्रसूते ॥ मापत्नबन्धौ परिवेददोषो विवाहयज्ञानलस्वीकृतौ न ॥ ९ ॥ अनलस्वीकृतिरग्न्याधानं ॥ कुर्यान्नान्दी-श्राद्धमाद्यं पितैव पुत्रोद्वाहे कन्यकाग्राम एव ॥ कुर्यात्पुत्रः स्वद्वितीयादिलग्ने नान्दीश्राद्धं यो विशेषोऽत्र गोऽग्र ॥ १० ॥ अस्तीति शेषः ॥

अथ विनायकशान्तिप्रयोगः ॥ आचमनं । प्राणायामः । पवित्रधारणं । शान्तिसूक्तजपः । देशकालौसंकीर्त्यशुभ-पुण्यतिथौ अस्यकुमारस्यउपनयनकर्मणोनिर्विघ्नफलसिद्ध्यर्थमग्रहमस्वांविनायकशान्तिंकरिष्ये इतिसंकल्पः । गणेशपूज-नादिनान्दीश्राद्धान्तंकृत्वा आचार्यादिवरणं । एवं चतुरःपराशरमतेऽष्टौवाऋत्विजोवृणुयात् ॥ चत्वारःस्वस्तिवाचकाइति-मदनरत्ने ॥ अस्ययागस्य० ॥ १ ॥ तेषांवस्त्रादिभिःपूजनं ॥ ततःसाचार्योयजमानो रक्षोहणमित्यादिमन्त्रैःसर्षपान्वि-कीर्य ॥ पञ्चगव्यंकृत्वा कर्मभूमिंप्रोक्ष्य भूमिंपूजयेत् ॥ ततःपूर्वस्यांदिशिस्थण्डिलेपञ्चभूसंस्कारपूर्वकमग्निंप्रतिष्ठाप्यतत्पूर्वे पञ्चवर्णैःशुक्लैर्वापिष्टैर्मध्येस्वस्तिकंकृत्वातदुपरिआनडुहंचर्मप्राग्ग्रीवमुत्तरलोमतदभावेप्रागग्रकुशानास्तीर्य तत्रश्रीपर्णीपीठमु-त्तरच्छदंसंस्थाप्यतच्छ्वेतवस्त्रेणाच्छाद्यतच्चतुर्दिक्षुचत्वारिस्वस्तिकानिकृत्वातेपुप्रागादितएकवर्णांश्चतुरःकुम्भान् महीद्यौरि-

१ कन्याविवाहे—प्रतिकूलादिसभवे-विनायकोपसर्गादौ—इंगितफलकाम्यादिपुनिमित्तानुगुण संकल्पे ऊह कार्य । २ [illegible] केचिदाचर-न्तीतिशान्तिकमलाकरे ।

त्यादिमन्त्रैः पूर्णपात्रान्तंचतुर्भिर्ब्राह्मणैः पृथक्पृथङ्मन्त्रावृत्त्यास्थापयेत् ॥ तत्रविशेषः ॥ संगमोदकेनपूरणं । उद्धृतासि-
वराहेणकृष्णेनशतबाहुना ॥ मृत्तिकेहनमेपापंयन्मयादुष्कृतंकृतमिति ससमृदः ॥ गन्धनिक्षेपचन्दनागरुकेशरकस्तूरीक-
र्पूरगोरोचनगुग्गुलंनिक्षिपेदिति सर्वौषधीश्च ॥ कलशस्यमुखेविष्णुरित्यादिदेवदानव० इत्यन्तंपठेत् ॥ ततश्चतुर्दिक्षुचत्वार
ऋत्विजः त्वन्नोऽअग्नेइतिमन्त्रेणवरुणमावाह्यषोडशोपचारैःसंपूज्य ॥ आनोभद्राः० ॥ १ ॥ शन्नोवातः० ॥ २ ॥ इ-
त्यादिशान्तिमन्त्रान्पठेयुः ॥ ततआचार्योऽग्नेरीशान्यांहस्तमात्रवेदिकायांपीठेवस्त्रादौवामहीद्यौरित्यादिपूर्णपात्रान्तंकलशं
संस्थाप्य तत्रस्वर्णमयविनायकाम्बिकामूर्त्योरग्न्युत्तारणपूर्वकंप्राणप्रतिष्ठांकृत्वा ॥ ॐतत्पुरुषायविद्महेवक्रतुण्डायधीमहि ॥
तन्नोदन्तीप्रचोदयात् ॥ इतिविनायकं ॥ सुभगायैविद्महेकाममालिन्यैधीमहि ॥ तन्नोगौरीप्रचोदयात् ॥ इत्यम्बिकांच
आवाहयेत् ॥ अपरार्केहेमाद्रिमतेत्वन्याअपिदेवताउक्तास्ताश्चपरितोयथावकाशंप्रतिमास्वक्षतपुञ्जेषुवा व्योमकेशं पार्वतीं
भीमजं वसुदेवं अर्कं सोमं भौमं बुधं बृहस्पतिं शुक्रं शनैश्चरं राहुं केतुं बाहुलेयं विष्णुं एतानावाह्य नैवेद्यान्तैरुपचारैः
संपूज्य ॥ विनायकादुत्तरतःग्रहवेद्यांग्रहावाहनंकुर्यात् ॥ अद्यपू० विनायकशान्त्यङ्गत्वेनविहितं आदित्यादिग्रहाणांस्था-
पनंपूजनंचकरिष्ये ॥ तत्रतदैशान्यांकलशंसंस्थाप्यतत्रवरुणंपूजयेत् ॥ अग्निसमीपमागत्य दक्षिणतोब्रह्मासनमित्यादिचरु-
श्रपणान्तंकुर्यात् ॥ ततःगव्याज्यलोलीकृतेनगौरसर्षपकल्केनोद्वर्तितसर्वाङ्गमनौषधीभिःसर्वगन्धैश्चालिप्तशिरस्कंयजमानं
आचार्योमङ्गलवेदघोषैर्भद्रासनेउपवेशयेत् ॥ ततोयजमानःपूर्ववृतैश्चतुर्भिर्ऋत्विग्भिःस्वस्तिवाचनंकुर्यात् ॥ भोब्राह्मणाः

ममगृहेअस्यकरिष्यमाणस्यग्रहमखविनायकशान्त्याख्यस्यकर्मणः पुण्याहंभवन्तोब्रुवन्तु ॥ अस्तुपुण्याहमितिद्विजावदेयुः ॥
एवंकल्याणमित्यादि० ॥ ततोजीवत्पतिपुत्राभिःसुवासिनीभिर्नीराजनंकार्यं ताभ्यश्चयजमानोयथाशक्तिकंचुक्यादिदद्यादित्या-
चारः ॥ ततआचार्योयजमानदक्षिणतउदङ्मुखस्तिष्ठन्पूर्वस्थकलशमादाय ॥ सहस्राक्षंशतधारमृषिभिःपावनंकृतं ॥ तेन-
त्वामभिषिञ्चामिपावमान्यःपुनन्तुते ॥ १ ॥ इतिमन्त्रेणयजमानमभिषिञ्चेत् ॥ कुम्भमध्येकिंचिज्जलमवशेषणीयं ॥ दक्षि-
णंकुम्भमादाय ॥ भगंतेवरुणोराजाभगंसूर्योबृहस्पतिः ॥ भगमिन्द्रश्चवायुश्चभगंसप्तर्षयोददुः ॥ २ ॥ इतिदक्षिणकुम्भे-
नयजमानमभिषिञ्चेत् ॥ ततःपश्चिमकुम्भमादाय ॥ यत्तेकेशेषुदौर्भाग्यंसीमन्तेयच्चमूर्धनि ॥ ललाटेकर्णयोरक्ष्णोरापस्त-
द्घ्नन्तुसर्वदा ॥ ३ ॥ इतिपश्चिमकुम्भेनयजमानमभिषिञ्चेत् ॥ ततउत्तरकलशमादाय ॥ सहस्राक्षंशतधारमित्यादित्रिभि-
र्मन्त्रैरभिषिञ्चेत् ॥ ततश्चतुर्भिर्मिलितैःकुम्भैरभिषेकः ॥ तत्रमन्त्राः ॥ एतद्वैपावनंस्नानंसहस्राक्षमृषिस्मृतं ॥ तेनत्वांशत-
धारेणपावमान्यःपुनन्त्विमाः ॥ शक्रादिदशदिक्पालाब्रह्मशंकरकेशवादयः ॥ आपस्तेघ्नन्तुदौर्भाग्यंशान्तिंददतुसर्वदा ॥ ॐसु-
मित्रियानऽआपऽओषधयःसन्तुदुर्मित्रियास्तस्मैसन्तुयोऽस्मान्द्वेष्टियंचवयंद्विष्मः ॥ समुद्रागिरयोनद्योमुनयश्चपतिव्रताः ॥
दौर्भाग्यंघ्नन्तुतेसर्वेशान्तिंयच्छन्तुसर्वदा ॥ पादगुल्फोरुजङ्घास्यनितम्बोदरनाभिषु ॥ स्तनोरुबाहुहस्ताग्रग्रीवास्कंसाङ्गस-
न्धिषु ॥ नासाललाटकर्णभ्रूकेशान्तेषुचयत्स्थितं ॥ तदापोघ्नन्तुदौर्भाग्यंशान्तिंयच्छन्तुसर्वदा ॥ ततआचार्यःप्राङ्मुखोय-
जमानस्यपश्चात्तिष्ठन्सव्यपाणिनाकुशान्यजमानस्यशिरसिप्रागग्रान्निधायसार्षपंतैलमौदुम्बरस्रुवेणादाय ॥ ॐमितायस्त्वा-

हाइदंमितायनमम ॥ ॐसंमितायस्वाहाइदंसंमिता० ॥ ॐशालायस्वाहाइदंशालाय० ॥ ॐकटंकटायस्वाहाइदंकटंक-
टाय० ॥ ॐकूष्माण्डायस्वा० इदंकूष्माण्डाय० ॥ ॐराजपुत्रायस्वा० इदंराजपुत्राय० ॥ इतिपडाहुतीर्मस्तकेजुहुयात् ॥
ततोऽग्निसमीपमागत्य ॥ पवित्रेणाज्योत्पवनादिसोमायस्वाहेत्यन्तंकुर्यात् ॥ पद्भिरग्नौश्रपितचरुणाजुहुयात् ॥ ॐमिता-
यस्वा० इदंमिताय० ॥ ॐसंमितायस्वा० इदंसंमिताय० ॥ ॐशालायस्वा० इदंशालाय० ॥ ॐकटंकटायस्वा० इदंकटंक-
टाय० ॥ ॐकूष्माण्डायस्वा० इदंकूष्मांडाय० ॥ ॐराजपुत्राय० इदंराजपुत्राय० ॥ तेनैवचरुणाव्योमकेशादीनांहोमः ॥
ॐव्योमकेशायस्वा० इदंव्योमके० ॥ यथामन्त्रलिङ्गंत्यागः ॥ ॐपार्वत्यै० ॥ ॐभीमजाय० ॥ ॐवसुदेवाय० ॥ ॐअ-
र्काय० ॥ ॐसोमाय० ॥ ॐभौमाय० ॥ ॐशुक्राय० ॥ ॐबृहस्पतये० ॥ ॐबुधाय० ॥ ॐशनये० ॥ ॐसोमाय० ॥
ॐराहवे० ॥ ॐबाहुलेयाय० ॥ ॐविष्णवे० ॥ ततोयजमानेनद्रव्यत्यागःकार्यः ॥ ततोगणेशायवराहुतिः ग्रहहोम-
श्चपूर्ववत् ॥ ततः स्थापितदेवतानांपञ्चोपचारपूजा ॥ स्विष्टकृदादिप्राजापत्यान्तोहोमः ॥ ततोबलिदानंपूर्ववत् ॥ क्षेत्र-
पालबलिः ॥ शुद्धोदकेनसुस्नातोयजमानःविनायकसमीपेउपविश्य ॥ ॐतत्पुरुषायवि० तन्नोदंती० ॥ १ ॥ ॐसुभगा-
यैवि० तन्नोगौरी० ॥ २ ॥ द्वाभ्यांमन्त्राभ्यांविनायकाम्बिकाभ्यांनमः ध्यायामीत्येवंषोडशोपचारैःसंपूज्य ॥ कृताकृतत-
ण्डुलान् ॥ तिलयुक्तौदनं ॥ पक्वापक्वमत्स्यान् ॥ पक्वापक्वमांसं ॥ त्रिविधांसुरां ॥ पक्वमांसं ॥ मूलकापूपपूरिकोण्डेर-

१ भीमजो गणपति इति उद्योते ।

कत्रक[उण्डेरकाः क्षुद्रापूपास्तेपांस्त्रक्माला ] दध्यन्नपायसगुडमिश्रपिष्टमोदकलड्डूकानिचित्रसुगन्धपुष्पकूष्माण्डफलानि-
चैकपात्रेशूर्पेवाकृत्वा ॥ ॐतत्पुरुषाय० तन्नोदन्ती० ॥ १ ॥ ॐसुभगायै० तन्नोगौरी० ॥ २ ॥ विनायकाम्बिकाभ्यां-
नमः इमंउपहारंनिवेदयामि ॥ इतिनिवेद्य ॥ कुङ्कुमगन्धदूर्वासर्षपसहितोदकेनाञ्जलिमापूर्य ॥ ॐतत्पुरुषाय० ॥ ॐसु-
भगायै० ॥ २ ॥ इतिमन्त्राभ्यांविनायकाम्बिकाभ्यांइदमर्घंसमर्पयामि अर्घंदत्वा भूमौशिरःकृत्वा ॥ रूपंदेहियशोदेहि-
भगंभगवन्देहिमे ॥ पुत्रान्देहिधनंदेहिसर्वान्कामांश्चदेहिमे ॥ इतिविनायकं ॥ रूपंदेहियशोदेहिभगंभगवतिदेहिमे ॥
पुत्रान्देहिधनंदेहिसर्वकामांश्चदेहिमे ॥ इत्यम्बिकांचोपतिष्ठेत् ॥ सौभाग्यमम्बिकेदेहिभाग्यंरूपंयशोपिच ॥ स्त्रियंपुत्रांश्च
कामांश्चतथाशौर्यंचदेहिमे ॥ गणेशमातरम्बालेयत्किंचिन्मदभीप्सितं ॥ एकनाम्नैवतद्देविदेहिगौरिवरान्मम ॥ ततआ-
चार्यः शूर्पंकुशानास्तीर्यकृताकृताद्युपहारंपूर्वोक्तंसर्वंतत्रनिधायचतुष्पथेगत्वा तत्रभूमिंजलेनाभ्युक्ष्यतत्रकुशानास्तीर्य मन्त्रो-
क्तदेवताआदित्यादिमन्त्रोक्तदेवताभ्योनमःध्यायामीत्येवंपोडशोपचारैःपूजयेत् ॥ तत्रशूर्पंनिधायबलिंदद्यात् ॥ मन्त्रास्तु ॥
बलिंगृह्णन्त्विमेदेवाआदित्यावसवस्तथा ॥ मरुतश्चाश्विनौरुद्राःसुपर्णाःपन्नगाग्रहाः ॥ असुरायातुधानाश्चपिशाचामात-
रोनगाः ॥ शाकिन्योयक्षवेतालायोगिन्यःपूतनाःशिवाः ॥ जृम्भकाःसिद्धगन्धर्वानागाविद्याधरानगाः ॥ दिक्पालालो-
कपालाश्चयेचविघ्नविनायकाः ॥ जगतांशान्तिकर्तारोब्रह्माद्याश्चमहर्षयः ॥ माविघ्नामाचमेपापंमासंतुपरिपन्थिनः ॥ सौ-
म्याभवन्तुतृप्ताश्चभूतप्रेताःसुखावहाः ॥ ततोयजमानोगृहमागत्यहस्तौपादौचप्रक्षाल्याचामेत् ॥ ततःपूर्णाहुत्यादिविस-

जनान्तं । कर्मणःसंपूर्णतांवाचयित्वा ब्राह्मणभोजनं प्रणीताविमोकः ॥ श्रेयोदानं ॥ ततआचार्यंगंधादिनापूजयेत् ॥ ततोग्रहकलशोदकेनयजमानस्यसकुटुम्बस्याभिषेकः ॥ विनायकाम्बिकयोःपञ्चोपचारैःपूजांकृत्वा ॥ यांतुदेवेतिविसृज्य ॥ इमेविनायकांबिकयोर्मूर्तीआचार्यायतुभ्यमहंसंप्रददे ॥ इदंग्रहपीठंतुभ्य० ॥ अग्निंगन्धादिनासंपूज्य ॥ गच्छगच्छेतिविसृज्य ॥ कृतस्यसग्रहमखविनायकशान्त्याख्यस्यकर्मणःसांगतासिद्ध्यर्थंयथाशक्तिब्राह्मणान्भोजयिष्ये ॥ ब्राह्मणेभ्योभूयसींदत्वातेभ्यश्चाशिषोगृह्णीयात् ॥ इतिविनायकशान्तिप्रयोगः ॥

अथ श्रीशान्तिः ॥ वृद्धवसिष्ठः—प्रतिकूले तु संप्राप्ते विवाहं नैव कारयेत् ॥ अन्ते दोषविनाशाय कुर्याच्छान्तिमिमां शुभाम् ॥ श्रियेजातइति श्रियं । इदंविष्णुरिति विष्णुं । गौरीर्मिमायेति गौरीं । त्र्यम्बकमिति त्र्यम्बकं । परंमृत्योइति यमं च पूजयित्वा तिलाज्यं च हुनेदष्टोत्तरं शतम् ॥ ॐभूःस्वाहामृत्युर्नश्यतांब्रह्मपायैसुखंवर्धतांस्वाहा ॥ इति ॥ ततोहोमं समाप्याथ गोद्वयंदक्षिणाभवेत् ॥ अत्रकेचिच्चरुश्रपणपूर्वं श्रीसूक्तेनप्रतिमन्त्रंपायसंजुहतितत्रमूलंमृग्यं ॥ इतिश्रीशांतिः ॥

अथ बृहस्पतिशान्तिप्रयोगः ॥ आचमनं । प्राणायामः । पवित्रधारणं । शान्तिसूक्तजपः । देशकालौसंकीर्त्य ॥ अस्यकुमारस्योपनयनेबृहस्पत्यानुकूल्यसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंबृहस्पतिशान्तिंकरिष्ये ॥ विवाहेतु अस्याःकन्यकायाःकरिष्यमाणविवाहेबृहस्पत्यानुकूल्येत्यादियथानिमित्तमूहः ॥ तदङ्गत्वेनगणेशपूजनंस्वस्तिपुण्याहवाचनं च कृत्वा आचार्यंवृणुयात् ॥ तत्रः सर्षपान्विकीर्य पंचगव्येनआपोहिष्ठेत्यादिभिर्मन्त्रैः कर्मभूमिप्रोक्षणंसंभारप्रोक्षणंच ॥ ततः-

स्थण्डिलेपञ्चभूसंस्कारपूर्वकमग्निंप्रतिष्ठाप्य । तदीशान्यांमहीद्यौरित्यादिविधिनाकलशंसंस्थाप्यतस्मिन्पञ्चरत्नानिनिक्षिप्यव-
क्ष्यमाणाओषधीःक्षिपेत् । यूथिकादमनमधुपुष्पाणि । पत्रंभाषायांपत्रजमितिप्रसिद्धं । पलाशं सर्षपान् जटामांसीं
गुडूचीं अपामार्गं विडङ्गंशंखिनींवचांसहदेवींविष्णुक्रान्तांशतावरींकुष्ठंमांसींहरिद्रेद्वेसुरांशैलेयचन्दनंवचांकचोरंमुस्तांचेति ।
वस्त्रेणावेष्ट्यकुम्भेपूर्णपात्रंनिधायाभ्यर्च्य तत्राष्टदलोत्तरदलेहरिताक्षतनिर्मितदीर्घचतुरस्रपीठेकृताग्न्युत्तरणप्राणप्रतिष्ठांहैमीं-
बृहस्पतिप्रतिमांस्थापयेत् । ततोऽग्नेर्दक्षिणतोब्रह्मासनमास्तीर्येत्यादिआज्यभागान्तंप्रकृतिवत् ॥ ततः कलशोपरिस्थापित-
प्रतिमायांआवाहनादिषोडशोपचारैर्बृहस्पतिंपूजयेत् ॥ तत्रविशेषः ॥ पीतवस्त्रयुग्मं पीतंयज्ञोपवीतंपीतंचन्दनंपीताक्ष-
तान्चम्पकादिपीतपुष्पंबिल्वमज्जाधूपंघृतदीपंदध्योदनंनैवेद्यं दक्षिणायांपुष्परागोमाणिक्यं यथाशक्तिहेमवा । पूजान्ते-
ल्लिङ्गाभिर्वारुणीभिश्चकुम्भानुमन्त्रणं ॥ ततोद्रव्याणांत्यागः । अश्वत्थसमित्पायसाज्ययवव्रीहितिलद्रव्यैः प्रतिद्रव्यंअष्टोत्तर-
शतंहोमः । स्विष्टकृदादिप्रणीताविमोकान्तंप्रकृतिवत् । अग्नेःपूजनंबृहस्पतेर्गन्धादिभिःपूजनं । ततस्ताम्रपात्रेशुद्धोदकंप्र-
क्षिप्यतत्रपीतानिगन्धपुष्पाणिफलंचप्रक्षिप्यार्घ्यंदद्यात् ॥ गम्भीरदृढरूपाङ्गदेवेज्यसुमतेप्रभो ॥ नमस्तेवाक्पतेशान्तगृहा-
णार्घ्यंबृहस्पते इति ॥ ततोयजमानोबृहस्पतयेकृतकर्मार्पणंकुर्यात् ॥ भक्त्यायत्तेसुराचार्यहोमपूजादिसत्कृतं ॥ तत्त्वं
गृहाणशान्त्यर्थंबृहस्पतेनमोनमः ॥ इति ॥ ततः प्रार्थना ॥ जीवोबृहस्पतिःसूरिराचार्योगुरुरङ्गिराः ॥ वाचस्पतिर्देव-
मन्त्रीशुभंकुर्यात्सदाममेति ॥ ततोविसर्जनंकृत्वाचार्यंप्रणम्य सर्वोपचारसंयुक्तांगोयुक्तांप्रतिमांआचार्यायदद्यादभिषेकां-

तेवा । कुम्भोदकेनाचार्यः पुत्रदारसमेतंयजमानमभिषिच्य । आपोहिष्ठा० ३ तत्त्वायामि० ३ इत्यादिभिः ॥ पूर्वोक्तौषधिभिरनुलिप्यशुद्धोदकेनस्नात्वाआचम्य आचार्यायप्रतिमांकुम्भंवस्त्रंचदत्वा ब्राह्मणभोजनंसंकल्प्य भूयसींदक्षिणांदत्वाआशिषोगृह्णीयात् ॥ अनेनबृहस्पतिशान्त्याख्येनकर्मणापरमेश्वरःप्रीयतां ॥ इतिबृहस्पतिशान्तिः ॥

अथ मृदाहरणम् ॥ नवा९श्व७पञ्चा५ग्नि३दिने तु पूर्वतः शुभाय कार्यं किल चाङ्करार्पणम् ॥ वीजोप्तिभे शस्तदिने शुभोदये कार्येष्ववश्येषु तु तद्दिनेपि हि ॥१॥ अग्न्याधानं गर्भसंस्कारमात्रं हित्वा जातं नामकर्मापि तद्वत् ॥ कार्यं सर्वत्रेदमेतद्विधिस्तु द्रष्टव्यो वै भट्टनारायणोक्तौ ॥ २ ॥ जातं जातकर्म ॥ ॥ अथ वाग्दानम् ॥ शस्तं वाग्दानं चतुर्थ४पु५सप्त७छिद्र९श्रीरुद्रेषु११पूर्व दिनेषु ॥ लग्नोडौ वा लग्नभेऽथो वराय कन्याभ्राता पुष्पवस्त्रादि दद्यात् ॥ ३ ॥ लग्नभे विवाहोदितलग्ने ॥ इदं वरवरणं ॥ ॥

अथ वाग्दानविधिः ॥ ज्योतिर्विदादिष्टेविवाहनक्षत्रादियुतेशुभकालेप्रशस्तवेषैर्युग्मब्राह्मणैःपुरन्ध्रीभिर्ज्ञातिबान्धवैश्च सहवरपित्रादिःगन्धाक्षतपुष्पयुग्मवस्त्राभरणफलताम्बूलादिगृहीत्वातूर्यमङ्गलवाद्यादिभिर्युतःकन्यागृहेआगत्यशुभवस्त्रपीठासनेप्रत्यङ्मुखउपविशेत् ॥ तद्वदासनेकन्यापिताप्राङ्मुखउपविश्यस्ववामतःप्राङ्मुखींकन्यामुपवेशयेत् ॥ ततोवरपित्रादिः कन्याहस्तेफलताम्बूलादिदद्यात् ॥ स्वपुरतःगणपतिं कलशंचसंस्थाप्य श्रीगणपत्यादिस्मरणपूर्वकंदेशकालसंकीर्तनान्तेकरिष्यमाणकन्याविवाहाङ्गभूतंवाग्दानमहंकरिष्येइतिकन्यापितुःसंकल्पः ॥ करिष्यमाणपुत्रविवाहाङ्गभूतंकन्यानिरीक्षणंपूजनंचकरिष्येइतिवरपितुःसंकल्पः ॥ तदङ्गविहितंगणपतिपूजनंवरुणपूजनंचकरिष्येइतिउभाभ्यांसंकल्पंकृत्वागणपतिवरुण-

पूजनंकार्यं ॥ शिवाआपःसन्तु० ॥ ततोवरपित्रादिः अमुकगोत्रोत्पन्नायअमुकप्रवरान्वितायअमुकप्रपौत्रायअमुकपौत्राय अमुकपुत्रायअमुकशर्मणेवराय ॥ अमुकगोत्रोत्पन्नां अमुकप्रवरान्वितांअमुकप्रपौत्रींअमुकपौत्रींअमुकपुत्रींअमुकीनाम्नीमि-मांकन्यांभार्यात्वेनवृणीमहे इतिकन्यापितरंप्रतिब्रूयात् ॥ ततोदाताभार्यासुहृद्बन्ध्वनुमतिंगृहीत्वायथोक्तमनूद्यानन्तूद्यवावृ-णीध्वमितिवदेत् ॥ एवंपुनर्द्विःप्रयुज्य प्रदास्यामीतित्रिरुच्चैर्वदेत् ॥ ततोवरपित्रादिःकन्यानिरीक्षणपूर्वकंकुङ्कुमाक्षत-वस्त्रयुग्मभूषणताम्बूलादिभिःकन्यांस्थानेपूजयेत्संप्रदायागतमन्त्रैः ॥ ततोदातावराचार्यपूजनपूर्वकंप्रत्यङ्मुखोपविष्टंवरपि-तरंगन्धताम्बूलादिभिःपूजयेत् ॥ सचवरपितादातुराचार्यपूजनपूर्वकंप्रत्यङ्मुखोपविष्टंदातारंपूजयेत् ॥ तौचस्वस्वमान्या-न्यथाचारंदापयित्वागृह्णीयातां ॥ ततःकन्यादाताहरिद्राखण्डयुतपञ्चद्दढपूगीफलानिगन्धाक्षतसहितानिआचाराद्गृही-त्वाअमुकगोत्रोत्पन्नायअमुकप्रवरायअमुकशर्मणःप्रपौत्रायअमुकशर्मणःपौत्रायअमुकशर्मणःपुत्रायअमुकशर्मणेवराय अमुक-गोत्रांअमुकप्रवरान्वितांअमुकप्रपौत्रींअमुकपौत्रींअमुकपुत्रींअमुकनाम्नीमिमांकन्यांज्योतिर्विदादिष्टेमुहूर्तेदास्येइतिवाचासंप्र-ददेइत्युक्त्वा ॥ अव्यङ्गेऽपतितेऽक्लीबेदशदोषविवर्जिते ॥ इमांकन्यांप्रदास्यामिदेवाग्निद्विजसंनिधौ ॥ १ ॥ इति-चोक्त्वायदावध्नन्नितिमन्त्रेणहरिद्राखण्डपूगफलानिवरपित्रादिवस्त्रप्रांतेबध्वाग्रन्थिंचन्दनेनार्चयेत् ॥ ततोवरपितापूर्ववत्ह-रिद्राखण्डयुतपूगफलानिगृहीत्वा अमुकगोत्रोत्पन्नामसुकप्रवरामसुकवराविषयेभवन्तोनिश्चिताभवन्तु ॥ इतिदातृवस्त्रप्रा-न्तेपूर्ववन्मन्त्रेणबध्वाग्रन्थिंचन्दनेनार्चयेत् ॥ इत्याचारप्राप्तं ॥ ततोदाता ॥ वाचादत्तामयाकन्यापुत्रार्थंस्वीकृतात्वया ॥

कन्यावलोकनविधौनिश्चितस्त्वंसुखीभव ॥ इतिवरपितरंप्रतिपठेत् ॥ सचवरपिता ॥ वाचादत्तात्वयाकन्यापुत्रार्थंस्वीकृ-
तामया ॥ वरावलोकनविधौनिश्चितस्त्वंसुखीभव ॥ इतिकन्यापितरंप्रतिपठेत् ॥ अत्रादौस्वीकर्तरि अत्रर्थमित्याद्यूहः-
कर्तव्यः ॥ ततोब्राह्मणाः ॥ शिवाआपःसन्तु ॥ सौमनस्यमस्तु ॥ अक्षतंचारिष्टंचास्तु ॥ दीर्घमायुःश्रेयःशान्तिःपुष्टिस्तु-
ष्टिचास्तु ॥ एतद्वःसत्यमस्तु ॥ इत्युक्त्वाग्रन्थिद्वयोपरिअभिषेकंकुर्युः ॥ ततोदातापात्रस्थसिततन्दुलपुञ्जोपरिशचीमावा-
ह्यकन्याहस्तेनसंपूज्यप्रार्थयेत् ॥ देवीन्द्राणिनमस्तुभ्यंदेवेन्द्रप्रियभामिनि ॥ विवाहंभाग्यमारोग्यंपुत्रलाभंचदेहिमे ॥ इति-
शचींप्रार्थयेत् ॥ वायनसंकल्पः ॥ ततःसुवासिनीभिर्नीराजनादिमाङ्गलिकंकार्यं ॥ विप्राश्चगन्धताम्बूलादिभिःपूजिताः-
आशीर्मन्त्रान्सौभाग्यपदान्तान्पठेयुः ॥ तेच ॥ कुलायिनीघृ० सौभगाय ॥ द्यांमालेखीरन्तरिक्षंमाहिꣳसीःपृथिव्या-
संभव ॥ अयꣳहित्वास्वधितिस्तेतिजानःप्रणिनायमहतेसौभगाय ॥ संचेध्यस्वाग्नेप्रचबोधयैनमुच्चतिष्ठमहतेसौभगाय ॥
बृहस्पतेसवितर्बोधयैनꣳसꣳशितंचित्संतराꣳसꣳशिशाधि ॥ वृधयैनंमहतेसौभगाय ॥ इति ॥ तत आशिषोगृह्णी-
यात् ॥ भूयसीसंकल्पः ॥ गणपतिवरुणविसर्जनम् ॥ इतिबौधायनसूत्रमहेशभट्टिप्रयोगदर्पणानुसारेणमुख्यब्राह्मविवा-
हांगभूतोवाग्दानप्रयोगः ॥

विवाहपूर्वदिनकृत्यं ॥ ततोविवाहदिनात्पूर्वंतृतीयषष्ठनवमरहितान्यतमशुभदिनेविवाहनक्षत्रादियुतेवधूवरयोस्तैलह-
रिद्रारोपणंगोधूमपूजनंचकार्यं ॥ ततोविवाहदिनात्पूर्वदिनेकन्यापितावरपिताचसपत्नीकःकन्यापुत्राभ्यांसहमङ्गलस्नाना-

द्युत्तरं । आचमनं । प्राणायामः । पवित्रधारणं ॥ देशकालौसंकीर्त्यअस्यअमुकशर्मणःममपुत्रस्यश्वःकरिष्यमाणविवाहांग-भूतं [ इतिवरपक्षे ॥ अस्याः अमुकीनाम्न्याः ममकन्यकायाः श्वःकरिष्यमाणविवाहांगभूतं इतिकन्यापक्षे ] स्वस्तिपुण्याह-वाचनंअविघ्नपूजनंमण्डपस्थापनंमातृकापूजनंवसोर्धारापूजनं आयुष्यमंत्रजपंनान्दीश्राद्धंचाद्यकरिष्ये ॥ तत्रादौनिर्विघ्नार्थं-गणपतिपूजनंकरिष्येइतिसंकल्प्यकृत्वा ॥ अत्रपुण्याहवाचनान्तेप्रजापतिःप्रीयतामितिवदेत् ॥ ग्रहानुकूलतासिद्ध्यर्थं-ग्रहमखकरणंउभयपक्षेसमानं ॥ इत्येवंविवाहदिनात्पूर्वेद्युःसर्वंकुर्यादिति ॥ अथवासर्वमेतद्विवाहदिनेकुर्यात् ॥ ॥ प्रधा-नसंकल्पस्तु । वरपक्षेअग्निस्थापनसमयेवरकर्तृकोदारपरिग्रहसंकल्पः । कन्यापक्षे कन्यादानसमयेकन्यादातृकर्तृकः कन्या-दानसंकल्पः । वरपित्रादेस्तुवचनात्तदङ्गनान्दीश्राद्धमात्रकर्तृत्वमिति ॥ ॥ रेणुकारिकासु ॥ उक्तेकालेविवाहाङ्गंकुर्या-न्नान्दीमुखंपिता ॥ देशान्तरेविवाहश्चेत्तत्रगत्वाभवेदिदं । नमण्डपादिकंकर्मवरस्यश्राद्धमन्तरेति ॥ ॥

अथविवाहदिनकर्तव्यमुच्यते ॥ तत्रादौघटीस्थापनं ॥ तत्रयथाचारंघटीस्थापनपूजनाद्युत्तरंप्रार्थना ॥ मुख्यंत्वमसियन्त्रा-णामितिधात्रापुराकृतं ॥ भवभावायदंपत्योःकालसाधनकारणं ॥ इति ॥ ॥ अथ गौरीहरपूजनं ॥ ततःकन्यामाता-सुधालिप्तकुड्येआम्रवृक्षंकुङ्कुमेनचन्दनेनवाविलिख्यतदग्रेभूमौरङ्गवल्लिंविरच्यतत्रकोणचतुष्टयेस्थापितकलशश्रेणीनांमध्येसू-त्रवेष्टितद्रुपदंनिधायतदुपरिअग्रभागेउपलंनिधायतत्रवस्त्रेतन्दुलपुञ्जेवाअन्योन्यालिङ्गितगौरीहरयोःप्रतिमांसुवर्णरौप्यादि-निर्मितांकात्यायनीमहालक्ष्मीशचीभिःसहपूजयेत् ॥ तत्रमन्त्रः ॥ सिंहासनस्थांदेवेशींसर्वालंकारसंयुतां ॥ पीताम्बरधरं-

देवंचन्द्रार्धकृतशेखरं ॥ करेणाथसुधापूर्णकलशंदक्षिणेनतु ॥ वरदंचाभयंवामेनाश्लिष्यचतनुप्रियामिति ॥ ध्यानमन्त्रः ॥
गौरीहरमहेशानसर्वमङ्गलदायक ॥ पूजांगृहाणदेवेशसर्वदामङ्गलंकुरु ॥ इतिपूजामन्त्रः ॥ कन्यादेहप्रमाणेनसप्तविंशति-
तन्तुभिः ॥ कृतवर्तिकयादीपंप्रज्वाल्यतैलपूरितं ॥ इति ॥ सुवासिनीब्राह्मणान्भोजयेत् ॥ ततोवधूर्मङ्गलसुस्नाताद्द-
पदग्रेपरिहितासनेपीतवस्त्रंपरिधायकुङ्कुममाल्यादिभिर्भूषिताउपविश्य कुङ्कुममाल्याक्षताःपुनःपुनःगौरीहरोपरिउभाभ्यां
हस्ताभ्यांप्रक्षिपेत् ॥ इति ॥ ॥ अथशिष्टाचाराद्वरस्यसीमान्तपूजनम् ॥ अथकन्यादाताआचम्यदेशकालौसंकीर्त्य
करिष्यमाणकन्याविवाहांगत्वेनवरस्यसीमान्तपूजनंकरिष्येइतिसंकल्प्य गणपतिवरुणपूजनं ॥ ततोवरस्यपादप्रक्षालनं ॥
ॐविराजोदोहोसि० ॥ भेदेमन्त्रावृत्तिः ॥ वरस्योदकोपस्पर्शः ॥ गंधवस्त्रादिनावराचार्यपूजनं ततोज्येष्ठजामातृपूजनं ॥
ततोवरस्यपूजनं चन्दनं ॐसुचक्षाअहमक्षिभ्यां० ॥ अक्षता० ॐअनाधृष्टा० ॥ उष्णीषादिवस्त्रदानं ॥ ॐयुवासुवासा०
ॐपरिधास्यै० ॐयज्ञसामा० ॥ पुष्पमालाबंधनं ॐयाअहरत् ॐयद्यशोप्सरसा० ॥ वसोःपवित्रमसीतितैलारोपणं ॥ तैलं-
मस्तकेक्षिपेत् ॥ ततोवरहस्तेनारिकेलफलदानं ॥ ॐऋतवस्थ० ॥ अक्षीयमाणाः ॥ सुमुहूर्तमस्तु ॥ ब्राह्मणान्गन्धादिनासंपू-
ज्य भूयसीदानं गणपतिवरुणविसर्जनं आशीर्ग्रहणं ॥ अनेनसीमान्तपूजनेनश्रीपरमेश्वरःप्रीयताम् ॥ इति ॥ ॥ ततोयथाचा-
रंदुग्धगण्डूषत्यागादि कुलदेवतावन्दनं विप्रपितृमात्रादिवन्दनंचकृत्वा स्वस्तिनइंद्रइति कनिक्रददितिच ब्राह्मणैःसह-
पठन्पदातिर्वाहनारूढोवावधूगृहंगत्वासुवासिनीभिर्यथाचारंसंपूर्णकुम्भनीराजनादिनाकृतमङ्गलोवधूगृहंप्रविशेत् ॥ ॥

अथ मधुपर्कः ॥ वराय दाता मधुपर्कमाचरेद्वरस्य शाखाविधिना जयन्तः ॥ स्वकीयशाखाविधिनैव चाचरेज्जगाद चैवं नहि तच्च संमतम् ॥ १ ॥ खबाण५०दर्भैर्भवतीह धाता तदर्ध२५दर्भैरिह विष्टरः स्यात् ॥ स्वसूत्रतः स्यान्मधुपर्ककर्म घटीनिवेशादि तु दैवविद्भ्यः ॥ २ ॥ धाता ब्रह्मा ॥ भुक्त्वा हरेन्ना मधुपर्ककाले गायत्रिका चापि वधूस्तथैव ॥ प्रत्यङ्मुखस्तां हरिदिङ्मुखस्थं स्यात्तद्विधिर्गृह्यविधानतस्तु ॥ ३ ॥ ना वरः ॥ भुक्त्वेति मधुपर्के एवोपहारादौ न दोषः ॥ हरिदिक् पूर्वादिक् ॥

अथमधुपर्कप्र०॥ षडर्घ्याभवन्ति आचार्यऋत्विग्वैवाह्योराजाप्रियःस्नातकइति॥प्रतिसंवत्सरानर्हयेयुः । यक्ष्यमाणास्त्वृत्विजः ॥ आचमनं । प्राणायामः । पवित्रधारणं० ॥ शान्तिसूक्तपठनं । देशकालौसंकीर्त्य शुभपुण्यतिथौ कन्यार्थिनंगृहागतंवरंमधुपर्केणार्चयिष्ये ॥ आसनमाहार्याह आसनस्यपश्चात्प्राङ्मुखमवस्थितंवरंप्रति ॥ ॐसाधुभवानास्तामर्चयिष्यामोभवंतं ॥ ॐअर्चय ॥ इतिवरः ॥ अर्चयेतिप्रतिप्रैषंप्राहतंप्राङ्मुखोवरइतिरेणुः ॥ अन्यस्त्रिस्त्रिःप्राहविष्टरादीनि । प्रतिगृह्यतामितियजमानः । प्रतिगृह्णामीतिवरःसर्वत्र । विष्टरोविष्टरोविष्टरः ॥ प्रतिगृह्यतां ॥ प्रतिगृह्णामि ॥ विष्टरंतूष्णींवरःप्रतिगृह्यआसनेउदगग्रंनिधाय ॥ ॐवर्ष्मोऽस्मिसमानानामुद्यतामिवसूर्यः ॥ इमंतमभितिष्ठामियोमाकश्चाभिदासति ॥ १ ॥ इत्येनमभ्युपविशति ॥ पाद्यमुदकंपाद्यमुदकंपाद्यमुदकं प्रतिगृह्यतां ॥ प्रतिगृह्णामि ॥ तदुदकंवरःप्रतिगृह्य ॥ ॐविराजोदोहोऽसिविराजोदोहमशीयमयिपाद्यायैविराजोदोहः ॥ १ ॥ इतिदक्षिणंपादंस्वयंप्रक्षाल्य ॥ अनेनैवमन्त्रेणवामंप्रक्षालयति । सव्यंपादंप्रक्षाल्यदक्षिणंप्रक्षालयति ब्राह्मणश्चेद्दक्षिणंप्रथमं ॥ आचमनं ॥ पूर्ववद्द्वितीयो-

विष्टरः ॥ विष्टरोविष्टरोविष्टरः ॥ प्रतिगृह्यतां ॥ प्रतिगृह्णामि ॥ द्वितीयंविष्टरंवरःप्रतिगृह्य ॥ आसनस्याधस्तादुदगग्रंनि-
धाय ॥ ॐवर्ष्मोस्मि० इत्यनेनमन्त्रेणतस्योपरिपादौकरोति ॥ अर्घोऽर्घोऽर्घः प्रतिगृह्यतां ॥ प्रतिगृह्णामि ॥ ॐआपः
स्थयुष्माभिःसर्वान्कामानवाप्नवानि इतिप्रतिगृह्णाति ॥ तामूर्ध्नाअभिषंच्यप्रागुदग्वानिनयन्नभिमन्त्रयते ॥ ॐसमुद्रंवः
प्रहिणोमिस्वांयोनिमभिगच्छत ॥ अरिष्टाअस्माकंवीरामापरासेचिमत्पयः ॥ १ ॥ इति ॥ आचमनीयमुदकमाचमनी-
यमुदकमाचमनीयमुदकं ॥ प्रतिगृह्यतां ॥ प्रतिगृह्णामि । वरस्तूष्णींप्रतिगृह्य ॥ ॐआमागन्यशसासꣳसृजवर्चसा ॥
तम्माकुरुप्रियम्प्रजानामधिपतिम्पशूनामरिष्टिंतनूनाम् ॥ १ ॥ इत्याचामति ॥ ततोद्विराचमनं ॥ मधुपर्कोमधुपर्को-
मधुपर्कः ॥ प्रतिगृह्यतां ॥ इतिनिवेदितंमधुपर्कं ॥ दधिमधुघृतमपिहितंकाꣳस्येकाꣳस्येन किंचिदुद्घाटितंदातृहस्त-
स्थंवरः ॥ मित्रस्यत्वेतिप्रतीक्षते ॥ ॐमित्रस्यत्वाचक्षुषाप्रतीक्षे ॥ इति ॥ देवस्यत्वेतिप्रतिगृह्णाति ॥ ॐदेवस्यत्वा०
प्रतिगृह्णामि ॥ इति ॥ सव्येपाणौकृत्वापिधानंनिष्कास्यदक्षिणस्यानामिकयात्रिःप्रयौति ॥ ॐनमःश्यावास्यायान्नशने-
यत्तऽआविद्धंतत्तेनिष्कृन्तामि ॥ १ ॥ इति ॥ अनामिकांगुष्ठेनचत्रिर्निरुक्षयति ॥ प्रागुदग्वा । प्रतिप्रयवणंमंत्राभ्यासः
निरुक्षणंच ॥ तस्यत्रिःप्राश्नाति ॥ अनामिकांगुष्ठेनैव ॥ ॐयन्मधुनोमधव्यम्परमꣳरूपमन्नाद्यम् ॥ तेनाहम्मधुनोमध-
व्येनपरमेणरूपेणान्नाद्येनपरमोमधव्योन्नादोसानि ॥ १ ॥ इति ॥ प्रतिप्राशनंमंत्रावृत्तिः ॥ मधुपर्केचसोमेचनोच्छिष्टंम-
नुरब्रवीदिति ॥ मधुमतीभिर्वाप्रत्यृचं ॥ पुत्रायांतेवासिनेवोत्तरतऽआसीनायोच्छिष्टंदद्यात्सर्वंवाप्राश्नीयात्प्राग्वासंचरेनि-

नयेत् ॥ आचम्य ॥ प्राणान्संमृशति ॥ ॐवाङ्मऽआस्येस्तु ॥ इतिमुखंकराग्रेणस्पृशेत् ॥ ॐनसोर्मेप्राणोस्तु ॥ इतितर्जन्यं-
गुष्ठाभ्यां नासारंध्रद्वयंस्पृशेत् ॥ ॐअक्ष्णोर्मेचक्षुरस्तु ॥ इतिअनामिकांगुष्ठाभ्यांचक्षुर्द्वयंयुगपत् ॥ ॐकर्णयोर्मेश्रोत्रमस्तु ॥
इतिमध्यमांगुष्ठाभ्यांदक्षिणकर्णं ॥ अनेनैवमन्त्रेणवामकर्णं ॥ ॐबाह्वोर्मेबलमस्तु ॥ इतिकराग्रेणदक्षिणबाहुं ॥ एवंवामबाहुं ॥
ॐऊर्वोर्मेऽओजोस्तु ॥ इतियुगपद्धस्तेनोरू ॥ ॐअरिष्टानिमेङ्गानितनूस्तन्वामेसहसंतु इति शिरःप्रभृतिपादांतानिसर्वांगानि-
उभाभ्यांहस्ताभ्यामालभते ॥ आचान्तोदकःशासमादायगौरितित्रिःप्राह ॥ गौर्गौर्गौरितियजमानः । उत्सृज्यतामितिवरः ।
ॐमातारुद्राणान्दुहितावसूनाᳬस्वसादित्यानाममृतस्यनाभिः ॥ प्रनुवोचंचिकितुषेजनायमागामनागामदितिंवधिष्ठ ॥ म-
मचामुष्यचपाप्माहतः ॥ ॐउत्सृजततृणान्यत्त्वितिब्रूयात् ॥ १ ॥ ॐमित्यंतमुपांशु उत्सृजतेत्याद्युच्चैः ॥ अत्रशिष्टाचा-
रपरिप्राप्ताःकेचनपदार्थालिख्यंते ॥ ॐसुचक्षा० इतिगंधान् ॥ ॐअनाधृष्टेत्यक्षतान् ॥ ॐपरिधास्यैइत्यनेनपरिधानी-
यंवस्त्रं ॥ ॐयज्ञोपवीतं० इतियज्ञोपवीतद्वयं ॥ ॐयशसामेत्युत्तरीयं ॥ ॐयाऽअहरत्० इति पुष्पमालाग्रहणं ॥
अथावबध्नीतेपुष्पमालां ॥ ॐयद्यशोप्सर० ॥ अथालंकारं ॥ ॐअलंकरण० इतिप्रथमंदक्षिणकर्णे ॥ ततोनेनैववामे ॥
ततोवरोविवाहवेद्यांगत्वाशुभासनउपविश्य । आचमनं । प्राणायामः । पवित्रधारणं । देशकालौसंकीर्त्य ॥ शुभपुण्य-
तिथौधर्मार्थकामप्रजासिध्यर्थंदारपरिग्रहणंकरिष्ये तत्रपंचभूसंस्कारपूर्वकंयोजकनामाग्निप्रतिष्ठापनं ॥ ततोगृहाभ्यंतरतो

१ अमुष्येत्यस्यस्थानेयजमानस्यषष्ठ्यन्तोनामनिर्देशः । २ अयमेववरस्यप्रधानोविवाहसंकल्पः ।

गत्वाप्राङ्मुखींकन्यामवस्थाप्यप्रत्यङ्मुखोवरस्तिष्ठेत् ॥ प्रत्यङ्मुखीकन्याप्राङ्मुखोवरइतितुगदाधरभाष्ये ॥ वधूवरांतराले अवि-
धुरसुदृढसद्वृत्तयःपुरुषाउदग्दशमंतःपटंधारयेयुः ॥ तत्रदैवज्ञामंगलस्मृतीनांपठनंकुर्युः ॥ विंशोपकाउच्चारणीयाः ॥
सुमुहूर्ते ॐप्रतिष्ठइत्युच्चैःशब्दंकुर्युः ॥ वधूःकरधृतपुष्पग्रथितवरणमालांवरकंठेसमर्पयेत् ॥ उदक्संस्थंधृतांतःपटनिः-
सरणंकार्यं ॥ ततआचार्यादिद्विजगणःप्रतिष्ठामंत्रंब्राह्मणंचपठेत् ॥ ॐमनोजूतिर्जुषतामा० ॥ १ ॥ ब्राह्मणं ॥ ॐमनो-
जूतिर्जुष० ॥ १ ॥ एषवैप्रभूर्नाम० ॥ १ ॥ एषवैविभूर्नाम० ॥ २ ॥ एषवैव्यष्टिर्नाम० ॥ ३ ॥ एषवैविधृतिर्नाम०
॥ ४ ॥ एषवैव्यावृत्तिर्नाम० ॥ ५ ॥ एषवाऊर्ज्स्वान्नाम० ॥ ६ ॥ एषवैपयस्वान्नाम० ॥ ७ ॥ एषवैब्रह्मवर्चसी०
॥ ८ ॥ एषवाअतिव्याधी० ॥ ९ ॥ एषवैदीर्घोनाम० ॥ १० ॥ एषवैक्लृप्तिर्नाम० ॥११॥ एषवैप्रतिष्ठानाम० ॥१२॥
दंपत्योरविच्छिन्नाप्रीतिरस्तु ॥ ततोवरःप्राङ्मुखःकन्याप्रत्यङ्मुखीचोपविशेत् ॥ कुमार्यावासःपरिधानं ॥ ॐजरांगच्छपरि-
धत्स्ववासोभवाकृष्टीनामभिशस्तिपावा ॥ शतञ्चजीवशरदःसुवर्चारयिंचपुत्राननुसंव्ययस्वायुष्मतीदम्परिधत्स्ववासः ॥ १ ॥
इतिमन्त्रपाठोवरस्य ॥ अथोत्तरीयम् ॥ ॐयाअकृन्तन्नवयंयाअतन्वत ॥ याश्चदेवीस्तन्तूनभितोततन्थ ॥ तास्त्वादे
वीर्जरसेसंव्ययस्वायुष्मतीदम्परिधत्स्ववासः ॥ १ ॥ अथैनंसमंजयति ॥ कन्यापितापरस्परंसमंजेथामितिप्रेषयति ॥
अत्ररेणुः । परस्परंसमंजेथांतौतस्यांगच्छतस्ततः ॥ समंजंत्वितिमंत्रेणधातुरंजुगतौभवेदिति ॥ ॐसमन्जन्तुविश्वेदेवाःसमा-

पोहृदयानिनौ ॥ सम्मातरिश्वासन्धातासमुदेष्ट्रीदधातुनौ ॥ १ ॥ ततआचारप्राप्तंवधूकण्ठेमांगल्यतंतुबंधनं ॥ तत्रमन्त्रः ॥
मांगल्यतंतुनानेनममजीवनहेतुना ॥ कंठेवध्नामिसुभगेत्वंजीवशरदांशतं ॥ १ ॥ ॐयदाबध्नन्दाक्षायणाहिरण्यꣳशतानी-
कायसुमनस्यमानाः ॥ तन्मऽआवध्नामिशतशारदायायुष्मान्जरदष्टिर्यथासम् ॥ इति ॥ ततोद्विजाःपरित्वागिर्वणोगिरऽ-
इत्यनुवाकेनजुषाणोऽअप्तुराज्यस्यवेतुस्वाहेत्यंतेनवधूवराविच्छिन्नचतुर्विंशतितंतुभिर्द्विगुणीकृतसूत्रेणकंठेशानादिवेष्टयेत् य-
थाचारं ॥ अयंदेशाचारः ॥ तत्रमंत्राः ॥ ॐपरित्वागिर्वणोगिरऽइमाभवन्तुविश्वतः ॥ वृद्धायुमनुवृद्धयोजुष्टाभवन्तुजुष्टयः
॥१॥ इन्द्रस्यस्यूरसीन्द्रस्यध्रुवोसि ॥ ऐन्द्रमसिवैश्वदेवमसि ॥२॥ विभूरसिप्रवाहणोवह्निरसिहव्यवाहनः ॥ श्वात्रोसिप्रचे-
तास्तुथोसिविश्ववेदाऽउशिगसि ॥ ३ ॥ उशिगसिकविरङ्घारिरसिबम्भारिरवस्यूरसिदुवस्वाञ्छुन्ध्यूरसिमार्जालीयꣳसम्राड-
सिकृशानुःपरिषद्योसिपवमानोनभोसिप्रतक्वामृष्टोसिहव्यसूदनऽऋतधामासिस्वर्ज्योतिः ॥ ४ ॥ समुद्रोसिविश्वव्यचाऽ-
अजोस्येकपादहिरसिबुध्न्योवागस्यैन्द्रमसिसदोस्यृतस्यद्वारौमामासन्ताप्तमध्वनामध्वपतेप्रमातिरस्वस्तिमेस्मिन्पथिदेवयाने
भूयान्मित्रस्यमा ॥ ५ ॥ मित्रस्यमाचक्षुषेक्षत्वमग्नयःसगराःसगरास्थसगरेणनाम्नारौद्रेणानीकेनपातमाग्नयःपिपृतमा-
ग्नयोगोपायतमानमोवोस्तुमामाहिꣳसिष्ट ॥ ६ ॥ ज्योतिरसिविश्वरूपम्विश्वेषान्देवानाꣳसमित् ॥ त्वꣳसोमतनूकृद्भ्यो-
द्वेषोभ्योन्यकृतेभ्यऽउरुयन्तासिवरूथꣳस्वाहाजुषाणोअप्तुराज्यस्यवेतुस्वाहा ॥ ७ ॥

अथकन्या[1]दानसंकल्पः ॥ देशकालौनिर्दिश्य शुभपुण्यतिथौअस्मिन्पुण्याहेअस्याःअमुकीनाम्न्याः ममकन्यकायाः अनेनवरेणधर्मप्रजयाउभयोर्वंशयोर्वंशवृद्ध्यर्थं तथाचममसमस्तपितॄणांनिरतिशयानन्दब्रह्मलोकावाप्त्यादिकन्यादानकल्पोक्तफलावाप्तयेअनेनवरेणअस्यांकन्यकायां उत्पादयिष्यमाणसंतत्यादशपूर्वान्दशापरान्मांचएकविंशतिपुरुषानुद्धर्तुंब्राह्मविवाहविधिनाश्रीलक्ष्मीनारायणप्रीतयेकन्यादानमहंकरिष्येइतिसाक्षतकुशजलेनसंकल्प्य वधूवरपुरतो नूतनंकांस्यपात्रंनिधाय वरहस्ते ॥ शिवाआपःसन्तु ॥ सन्तुशिवाऽआपः ॥ सौमनस्यमस्तु ॥ अस्तुसौमनस्यं ॥ अक्षतंचारिष्टंचास्तु ॥ अस्त्वक्षतमरिष्टंच ॥ यत्पापंरोगःअशुभंअकल्याणंतद्दूरेप्रतिहतमस्तु ॥ यच्छ्रेयस्तदस्तु ॥ दीर्घमायुःशान्तिःपुष्टिस्तुष्टिश्चास्तु ॥ ततोवरस्यगोत्रोच्चारः ॥ सर्वत्रोच्चारोभवेत्तातपूर्वःकन्यादानेत्वाह्निलोमात्तृतीयं ॥ ऋक्शाखीयाद्यन्यशाखासुनांदीश्राद्धेप्येवंचेतिशास्त्रंब्रवीति ॥ अमुकगोत्रस्यअमुकप्रवरस्यअमुकशर्मणःप्रपौत्राय अमुकगोत्रस्यअमुकप्रवरस्यअमुकशर्मणःपौत्राय अमुकगोत्रस्यअमुकप्रवरस्यअमुकशर्मणःपुत्राय अमुकगोत्रायअमुकप्रवरायशुक्लयजुर्वेदाम्नायवाजिमाध्यंदिनीयशाखाध्यायिनेअमुकशर्मणेवराय ॥ ततःकन्यायाश्चगोत्रोच्चारः ॥ अमुकगोत्रस्यअमुकप्रवरस्यअमुकशर्मणःप्रपौत्रीं ॥

---

१ रेणुकारिकायाम्—अधिकारीह्यपत्नीको दपत्योरुपविष्टयो । जलेशदिङ्मुखी दद्यात्प्राङ्मुखाय प्रयोगत ॥ अन्यशाखासु वाक्येषु प्रतिकूलेषु सत्स्वपि ॥ नित्यस्य श्रुतिमूलस्य शिष्टाचारस्य दर्शनात् ॥ स्रग्व्यूहनश्रुते पश्चाद्विपरीतादित श्रुते ॥ अभिप्रायान्विचार्यैवं विविरेप स्फुटीकृत इति ॥ प्रयोगदर्पणे—सर्वत्र प्राङ्मुखो दाता प्रतिग्राही उदङ्मुख ॥ एष एव विधिर्भिन्नो कन्यादाने विपर्यय ॥ इति ॥

असुकगोत्रस्यअसुकप्रवरस्यअमुकशर्मणःपौत्रीं ॥ असुकगोत्रस्यअमुकप्रवरस्यअमुकशर्मणःमम पुत्रींअमुकगोत्रांअमुकप्रवरां-
कृष्णानाम्नींइमां इत्येकःपर्यायः ॥ एवमेवपुनःपर्यायद्वयमुक्त्वा ॥ वरस्यगोत्रोच्चारादिकोदादितिकामस्तुत्यंतं एकःपर्यायः॥
एवमेवपुनः पर्यायद्वयमितिसंप्रदायो वा ॥ कन्यांयथाशक्तिसालंकृतांउपकल्पितोपस्करसहितांप्रजापतिदैवतांपुराणो-
क्तशतगुणीकृतज्योतिष्टोमातिरात्रफलप्राप्तिकामःभार्यात्वेनतुभ्यमहंसंप्रददे ॥ इत्युक्त्वाअविच्छिन्नभार्यापातितजलघ-
ट्यासकुशाक्षतजलंकन्यादक्षिणहस्तंवरदक्षिणहस्तेदद्यात् ॥ ततो वरः तादृक्षांसंस्पृशन् प्रतिगृह्णाति ॥ तत्रमंत्रः ॥
ॐद्यौस्त्वाददातुपृथिवीत्वाप्रतिगृह्णातु ॥ कृतैतत्कन्यादानसांगतासिध्यर्थंइमांयथाशक्तिदक्षिणांतुभ्यमहंसंप्रददे ॥ नमम ॥
ॐस्वस्तीतिवरः ॥ ततोदाताभाजनगोभूदासीमहिषीगजाश्ववाहनगृहशय्यावस्त्रालंकारादियथाविभवंसंकल्पपूर्वकंदद्यात् ॥
ततःकन्यापितापठति ॥ यस्त्वयाधर्मश्चरितव्यःसोनयासह ॥ धर्मेचार्थेचकामेचत्वयेयंनातिचरितव्या ॥ नातिचरामी-
तिवरोब्रूयात् ॥ कोदादितिकामस्तुतिंत्रिःपठेत् ॥ ॐकोदात्कस्माऽअदात्कामोदात्कामायादात् ॥ कामोदाताकामꣳप्र-
तिग्रहीताकामैतत्ते ॥ १ ॥ अथयदन्यद्ददातिकामेनैवतद्ददातीदम्मेप्यमुत्रासदितितस्त्येतिकोदात्कस्माऽअदात्कामो-
दात्कामायादात् ॥ कामोदाताकामꣳप्रतिग्रहीताकामैतत्ते ॥ १ ॥ ॐसयꣳकामयेतमहत्प्राप्नुयामित्युदगयनऽआपूर्य-
माणपक्षेपुण्याहेद्वादशाहमुपसद्व्रतीभूत्वौदुम्बरेकꣳसेचमसेवासर्वौषधम्फलानीतिसम्भृत्यपरिसमुह्यपरिलिप्याग्निमुपसमाधा-

याघृताज्यꣳसंस्कृत्यपृथꣳस्थानक्षत्रेणमन्थꣳसन्नीयजुहोति ॥ १ ॥ यावन्तोदेवास्त्वयिजातवेदस्तिर्य्यञ्चोघ्नन्तिपुरुषस्यकामान् ॥ तेभ्योहम्भागधेयञ्जुहोमितेमातृप्ताꣳकामैस्तर्पयन्तुस्वाहा ॥ २ ॥ यातिरश्चीनिपद्यसे ऽहँविधरणीऽइति ॥ तान्त्वाघृतस्यधारयायजेसꣳराधनीमहꣳस्वाहा ॥ प्रजापतेनत्वदेतान्यन्यऽइतितृतीयाञ्जुहोति ॥ ३ ॥ ज्येष्ठायस्वाहाश्रेष्ठायस्वाहेति ॥ अग्नौहुत्वामन्थेसꣳस्रवमवनयतिप्राणायस्वाहावसिष्ठायैस्वाहेत्यग्नौहुत्वामन्थेसꣳस्रवमवनयतिवाचेस्वाहाप्रतिष्ठायैस्वाहेत्यग्नौहुत्वामन्थेसꣳस्रवमवनयतिचक्षुषेस्वाहासम्पदेस्वाहेत्यग्नौहुत्वामन्थेसꣳस्रवमवनयतिश्रोत्रायस्वाहायतनायस्वाहेत्यग्नौहुत्वामन्थेसꣳस्रवमवनयतिमनसेस्वाहाप्रजात्यैस्वाहेत्यग्नौहुत्वामन्थेसꣳस्रवमवनयतिरेतसेस्वाहेत्यग्नौहुत्वामन्थेसꣳस्रवमवनयति ॥ ४ ॥ भूतायस्वाहेति अग्नौहुत्वामन्थेसꣳस्रवमवनयतिभविष्यतेस्वाहेत्यग्नौहुत्वामन्थेसꣳस्रवमवनयतिविश्वायस्वाहेत्यग्नौहुत्वामन्थेसꣳस्रवमवनयतिसर्व्वायस्वाहेत्यग्नौहुत्वामन्थेसꣳस्रवमवनयति ॥ ५ ॥ पृथिव्यैस्वाहेति ॥ अग्नौहुत्वामन्थेसꣳस्रवमवनयत्यन्तरिक्षायस्वाहेत्यग्नौहुत्वामन्थेसꣳस्रवमवनयतिदिवेस्वाहेत्यग्नौहुत्वामन्थेसꣳस्रवमवनयतिदिग्भ्यःस्वाहेत्यग्नौहुत्वामन्थेसꣳस्रवमवनयतिब्रह्मणेस्वाहेत्यग्नौहुत्वामन्थेसꣳस्रवमवनयतिक्षत्रायस्वाहेत्यग्नौहुत्वामन्थेसꣳस्रवमवनयति ॥ ६ ॥ भूःस्वाहेत्यग्नौहुत्वामन्थेसꣳस्रवमवनयतिभुवꣳस्वाहेत्यग्नौहुत्वामन्थेसꣳस्रवमवनयतिस्वꣳस्वाहेत्यग्नौहुत्वामन्थेसꣳस्रवमवनयतिभूर्भुवꣳस्वꣳस्वाहेत्यग्नौहुत्वामन्थेसꣳस्रवमवनयति ॥ ७ ॥ अग्नयेस्वाहेति ॥ अग्नौहुत्वामन्थेसꣳ-

स्रवमवनयतिसोमायस्वाहेत्यग्नौहुत्वामन्थेसꣳस्रवमवनयतितेजसेस्वाहेत्यग्नौहुत्वामन्थेसꣳस्रवमवनयतिश्रियैस्वाहेत्यग्नौहुत्वा-
मन्थेसꣳस्रवमवनयतिलक्ष्म्यैस्वाहेत्यग्नौहुत्वामन्थेसꣳस्रवमवनयतिसावित्र्यैस्वाहेत्यग्नौहुत्वामन्थेसꣳस्रवमवनयतिसरस्वत्यैस्वा-
हेत्यग्नौहुत्वामन्थेसꣳस्रवमवनयतिविश्वेभ्योदेवेभ्यःस्वाहेत्यग्नौहुत्वामन्थेसꣳस्रवमवनयतिप्रजापतयेस्वाहेत्यग्नौहुत्वामन्थेसꣳ-
स्रवमवनयति ॥ ८ ॥ अथैनमभिमृशति ॥ भ्रमसिज्वलदसिपूर्णमसिप्रस्तब्धमस्येकसभमसिहिङ्कृतमसिहिङ्क्रियमाण-
मस्युद्गीथमस्युद्गीयमानमसिश्रावितमसिप्रत्याश्रावितमस्यार्द्रेसन्दीप्तमसिविभूरसिप्रभूरसिज्योतिरस्यन्नमसिनिधनमसिसँवर्गोसीति
॥ ९ ॥ अथैनमुद्यच्छति ॥ आमोस्यामꣳहितेमयि ॥ सहिराजेशानोधिपतिःसमाराजेशानोधिपतिङ्करोत्विति
॥ १० ॥ अथैनमाचामति ॥ तत्सवितुर्वरेण्यम्मधुवाताऋतायतेमधुक्षरन्तिसिन्धवः ॥ माध्वीर्नःसन्त्वोषधीःभूः-
स्वाहा ॥ ११ ॥ भर्गोदेवस्यधीमहि ॥ मधुनक्तमुतोषसोमधुमत्पार्थिवꣳरजः ॥ मधुद्यौरस्तुनःपिताभुवःस्वाहा-
॥ १२ ॥ धियोयोनःप्रचोदयात् ॥ मधुमान्नोवनस्पतिर्मधुमाँ २ ॥ अस्तुसूर्यः ॥ माध्वीर्गावोभवन्तुनः ॥
स्वःस्वाहेतिसर्वाञ्चसावित्रीमन्वाहसर्वाश्चमधुमतीःसर्वाश्चव्याहृतीरहमेवेदꣳसर्वम्भूयासम्भूर्भुवःस्वःस्वाहेत्यन्ततऽआचम्य-
प्रक्षाल्यपाणीजघनेनाग्निम्प्राक्शिराःसँविशति ॥ १३ ॥ प्रातरादित्यमुपतिष्ठते ॥ दिशामेकपुण्डरीकमस्यहम्मनुष्या-
णामेकपुण्डरीकम्भूयासमित्यथेतमेत्यजघनेनाग्निमासीनोवꣳशञ्जपति ॥ १४ ॥ तꣳहैतमुद्दालकऽआरुणिर्वाजसने-

याययाज्ञवल्क्यायान्तेवासिनऽउक्त्वोवाचापियऽएनꣳशुष्केस्थाणौनिषिञ्चेज्जायेरञ्छाखाःप्ररोहेयुः पलाशानीति ॥ १५ ॥
एतमुहैववाजसनेयोयाज्ञवल्क्यो ॥ मधुकायपैङ्ग्यायान्तेवासिनऽउक्त्वोवाचापियऽएनꣳशुष्केस्थाणौनिषिञ्चेज्जायेरञ्छा-
खाꣳप्ररोहेयुꣳपलाशानीति ॥ १६ ॥ एतमुहैवमधुकꣳपैङ्ग्यश्चूडायभागवित्तयेन्तेवासिनऽउक्त्वोवाचापियऽएनꣳशुष्केस्था-
णौनिषिञ्चेज्जायेरञ्छाखाꣳप्ररोहेयुꣳपलाशानीति ॥ १७ ॥ एतमुहैवचूडोभागवित्तिꣳ जानकयऽआयस्थूणायान्तेवा-
सिनऽउक्त्वोवाचापियऽएनꣳशुष्केस्थाणौनिषिञ्चेज्जायेरञ्छाखाꣳप्ररोहेयुꣳपलाशानीति ॥ १८ ॥ एतमुहैवजानकिरायः-
स्थूणꣳ सत्यकामायजाबालायान्तेवासिनऽउक्त्वोवाचापियऽएनꣳशुष्केस्थाणौनिषिञ्चेज्जायेरञ्छाखाꣳप्ररोहेयुꣳपलाशानी-
ति ॥ १९ ॥ एतमुहैवसत्यकामोजाबालान्तेवासिभ्यऽउक्त्वोवाचापियऽएनꣳशुष्केस्थाणौनिषिञ्चेज्जायेरञ्छाखाꣳप्ररोहे-
युꣳपलाशानीतितमेतन्नापुत्रायवानन्तेवासिनेवाब्रूयात् ॥ २० ॥ चतुरौदुम्बरोभवत्यौदुम्बरश्चमसऽऔदुम्बरꣳस्रुवऽऔदु-
म्बरऽइध्मऔदुम्बर्याऽउपमन्थिन्यौ ॥ २१ ॥ दशग्राम्याणिधान्यानिभवन्ति ॥ व्रीहियवास्तिलमाषाऽअणुप्रियङ्गवोगो-
धूमाश्चमसूराश्चखल्वाश्चखलकुलाश्चतान्त्सार्धम्पिष्ट्वादध्नामधुनाघृतेनोपसिञ्चत्याज्यस्यजुहोति ॥ २२ ॥ सर्वेषाꣳवाऽएष०
॥ १ ॥ ( काण्डं १४ प्र० ७ ब्रा० ५ ) सुवर्णाभिषेकोस्तु ॥ ततोदातावरंप्रार्थयेत् ॥ कन्येममाग्रतोभूयाःकन्येमेदेवि-
पार्श्वयोः ॥ कन्येमेपृष्ठतोभूयास्त्वद्दानान्मोक्षमाप्नुयाम् ॥ १ ॥ कन्यांलक्षणसंपन्नांकनकाभरणैर्युतां ॥ दास्यामिब्रह्मणे

तुभ्यंब्रह्मलोकजिगीपया ॥ २ ॥ पृथिव्यादिमहद्भूताःसाक्षिणःसर्वदेवताः ॥ इमांकन्यांप्रदास्यामिपितॄणांतारणायच ॥ ३ ॥ ममवंशकुलेजातापोपितावत्सराष्टकं ॥ तवविप्रमयादत्तापुत्रपौत्रप्रवर्द्धिनी ॥ ४ ॥ गौरींकन्यामिमांविप्रयथाशक्तिविभूपितां ॥ गोत्रायशर्मणेतुभ्यंदत्तांविप्रसमाश्रय ॥ ५ ॥ आश्रयामीतिवरः ॥ इतिकन्यादानविधिः ॥ ॥ अथाचारप्रासंकंकणगणपतिपूजनं ॥ कंकणप्रकारः ॥ वधूवरयोःपरित्वेत्यनुवाकेनवेष्टितान्कण्ठदेशस्थान्सूत्रतन्तून्अधोनिष्कास्यत्रिवलीकृत्यहरिद्राक्तान्कृत्वातेपुऊर्णायुतद्वद्धिहरिद्राखण्डंबध्वातत्कंकणंवधूवामहस्तेयदाबध्नन्निंतिमन्त्रेणवरोबध्नीयात् ॥ कटिप्रदेशस्थांस्तन्तूनूर्ध्वंनिष्कास्यतादृशकंकणंकृत्वातेनैवमन्त्रेणवरदक्षिणहस्तेवधूर्बध्नीयात् ॥ वरःशुभपुण्यतिथौविवाहांगभूतंकंकणगणपतिपूजनंकरिष्ये ॥ तत्कृत्वा ॥ बन्धनंकन्यकापूर्वंवरपूर्वंविमोचनं ॥ ॐयदाबध्नं० इति कंकणबंधनं ॥ ततआम्रपूजनंवसोःपवित्रमसीतिमन्त्रेण ॥ ततोवरःपित्राप्रत्तामादायगृहीत्वानिष्क्रामति ॥ ततोवरःपित्राजनकेनप्रत्तांसंकल्प्यदत्तांवधूंआदायप्रतिग्रहविधिनागृहीत्वापश्चात्तांहस्तेधृत्वानिष्क्रामतिगृहमध्यान्मण्डपेअग्निसमीपंगच्छेदित्यर्थः ॥ ॐयदैषिमनसादूरंदिशोऽनुपवमानोवा ॥ हिरण्यपर्णोवैकर्णःसत्वामन्मनसांकरोतु ॥ असावितिवधूनामग्रहणं ॥ मंत्रपाठोवरस्य ॥ निष्क्रमणप्रभृत्युदकुम्भंस्कन्धेकृत्वादक्षिणतोऽग्नेर्वाग्यतःस्थितोभवतिउत्तरतएकेषांइतिविकल्पः ॥ अभिषेकपर्यन्तं ॥ अथैनौसमीक्षयतिकन्यापिता परस्परंसमीक्षेथामितिप्रैषेण ॥ ॐअघोरचक्षुरपतिघ्न्येधिशिवापशुभ्यःसु-

॥१३८॥

मनाःसुवर्चाः ॥ वीरसूर्देवकामास्योनाशन्नोभवद्विपदेशंचतुष्पदे ॥ सोमःप्रथमोविविदेगन्धर्वोविविदऽउत्तरः ॥ तृतीयो-ग्निष्टेपतिस्तुरीयस्तेमनुष्यजाः ॥ सोमोददद्गन्धर्वायगन्धर्वोददद्ग्नये ॥ रयिंचपुत्रांश्चादादग्निर्मह्यमथोऽइमां ॥ सानःपूषा-शिवतमामेरयसानऽऊरूऽउशतीविहर ॥ यस्यामुशन्तःप्रहरामशेपंयस्यामुकामाबहवोनिविष्ट्यै ॥ १ ॥ ॥ एभिर्मंत्रैःपर-स्परंसमीक्षतः ॥ ततोवरोदक्षिणपादेनवधूर्वामपादेनवेदीमारुह्य ॥ प्रदक्षिणमग्निंपर्याणीयैकेपश्चादग्नेस्तेजनींकटंवादक्षि-णपादेनप्रवृत्त्योपविशति ॥ एकेआचार्याःप्रदक्षिणमग्निंपर्याणीयकन्यावस्त्रपरिधानादिकुर्वंति । तेजनीतृणपूलकः । कटः प्रसिद्धएव । तयोरन्यतरंदक्षिणपादेनपरिक्रम्यैकस्मिन्कुशास्तृतेआसनउपविशतिवरः । तद्दक्षिणतोवधूः ॥

अथविवाहेऽग्न्यन्वाधानम् ॥ करिष्यमाणविवाहहोमेदेवतापरिग्रहार्थमग्न्यन्वाधानाख्यंकर्मकरिष्ये ॥ समिद्द्वयमादाय तत्रादौवैकल्पिकपदार्थावधारणम् ॥ अग्नेर्दक्षिणतउत्तरतोवाउदकुंभधृक् । पूर्वेणब्रह्मणोगमनंअपरेणवा । उत्तरेणपात्रासाद-नंपश्चिमतोवा । ताम्रमयीआज्यस्थालीतैजसीवा । पालाश्यःसमिधःअन्ययज्ञियवृक्षोद्भवावा । प्रांचावाघारौविदिक्स्थौवा । समिद्धतमेआज्यभागौआग्नेयमुत्तरपूर्वार्धेदक्षिणपूर्वार्धेसौम्यंवा । राष्ट्रभृद्धोमः । जयाहोमः । अभ्यातानहोमः । सुगं-नःपन्थामित्युत्तरंपरंमृत्यावितिहोमः प्राशनान्तेवा । अग्नेःप्रागनडुहाजिनास्तरणमुदग्वा । पूर्णपात्रंदक्षिणावरोवा । द्वादशरात्रंब्रह्मचर्यंषड्रात्रंत्रिरात्रंवा । एतान्वैकल्पिकपदार्थानस्मिन्कर्मण्यहंकरिष्ये ॥ ॥ अथदेवताभिध्यानं ॥ प्रजा-पतिं इन्द्रं अग्निं सोमं एता आघाराज्यभागदेवताआज्येन ॥ ॥ अग्निं वायुं सूर्यं अग्नीवरुणौ अग्नीवरुणौ अग्निं वरुणं

सवितारं विष्णुं विश्वान्देवान् मरुतः स्वर्कान् वरुणं एताः सर्वप्रायश्चित्तदेवता आज्येन ॥ ॥ ऋतासाहं ऋतधामानं अग्निं गन्धर्वं ओषधीः अप्सरसः मुदः १ सꣳहितं विश्वसामानं सूर्यं गन्धर्वं मरीचीः अप्सरसः आयुवः २ सुषुम्णं सूर्यरश्मिं चन्द्रमसं गन्धर्वं नक्षत्राणि अप्सरसः भेकुरीः ३ इषिरं विश्वव्यचसं वातं गन्धर्वं अपः अप्सरसः ऊर्जः ४ भुज्युं सुपर्णं यज्ञं गन्धर्वं दक्षिणाः अप्सरसः तावाः ५ प्रजापतिं विश्वकर्माणं मनः गन्धर्वं ऋक्सामानि अप्सरसः एष्टीः ६ एता राष्ट्रभृद्देवता आज्येन ॥ ॥ चित्तं चित्तिं आकूतं आकूतिं विज्ञातं विज्ञातिं मनः शक्करीः दर्शं पौर्णमासं बृहत् रथंतरं प्रजापतिं एता जयादेवता आज्येन ॥ ॥ अग्निंभूतानामधिपतिं इन्द्रंज्येष्ठानामधिपतिं यमंपृथिव्याअधिपतिं वायुमन्तरिक्षस्याधिपतिं सूर्यंदिवोधिपतिं चन्द्रमसंनक्षत्राणामधिपतिं बृहस्पतिंब्रह्मणोधिपतिं मित्रंसत्यानामधिपतिं वरुणमपामधिपतिं समुद्रंस्रोत्यानामधिपतिं अन्नंसाम्राज्यानामधिपति सोममोषधीनामधिपतिं सवितारंप्रसवानामधिपतिं रुद्रंपशूनामधिपतिं त्वष्टारंरूपाणामधिपतिं विष्णुंपर्वतानामधिपतिं मरुतोगणानामधिपतीन् पितॄन् पितामहान् परान् अवरान् ततान् ततामहान् एताअभ्यातानदेवताआज्येन ॥ ॥ त्रिरग्निं वैवस्वतं मृत्युं आज्येन ॥ ॥ अथकन्यादेवताभिध्यानं ॥ त्रिरग्निं सकृद्धर्गं शमीपलाशमिश्रैर्लाजैः अस्मिन्विवाहकर्मण्यहंयक्ष्ये ॥ ॥ अथ वरः ॥ प्रजापतिं अग्निंस्विष्टकृतंआज्येन ॥ एताअङ्गप्रधानार्थादेवताअस्मिन्वैवाहिकेकर्मणिसद्योहंयक्ष्येइत्युक्त्वाअग्नौसमिधौप्रक्षिपेदिति ॥

ततोदक्षिणतोब्रह्मासनमास्तीर्येत्यादिचरुवर्जंपवित्रयोःप्रणीतासुनिधानांतंप्रकृतिवत् । तत्र उपकल्पनीयानि ॥ कु-

मार्याभ्राता ॥ शूर्पं ॥ शमीपलाशमिश्रालाजाः ॥ अश्मादृषदुपलं ॥ उदकुंभः ॥ दृढपुरुषः ॥ रोहितमान-
डुहंचर्म ॥ आचार्यायवरद्रव्यमिति ॥ पवित्रच्छेदनादिपर्युक्षणांतेअन्वारब्धआघारावाज्यभागौमहाव्याहृतयः सर्वप्राय-
श्चित्तं। सर्वप्रायश्चित्तप्राजापत्यान्तरमेतदावापस्थानंविवाहे । राष्ट्रभृतइत्थंजयाभ्यातानांश्चजानन् । येनकर्मणेर्च्छेदिति-
वचनात् जुहुयात् ॥ तद्यथा ॥ मनसा ॥ ॐप्रजापतयेस्वाहाइदंप्रजापतये० ॥ ॐइन्द्रायस्वाहाइदमिंद्राय० ॥ ॐअग्न-
येस्वा० इदम० ॥ ॐसोमायस्वा० इदंसो० ॥ ॥ अथभूराद्याःप्रायश्चित्ताष्टाहुतयः ॥ ॐभूःस्वाहाइदमग्नये० ॥ ॐभुवः-
स्वा० इदंवायवे० ॥ ॐस्वःस्वाहाइदंसूर्या० ॥ ॐत्वन्नोअग्ने० ॥ इदमग्नीवरु० ॥ ॐसत्वन्नोअग्ने० ॥ इदमग्नीवरु० ॥
ॐअयाश्चाग्ने० इदमग्नये० ॥ ॐयेतेशतं० इदंवरुणाय सवित्रे० ॥ ॐउदुत्तमं० ॥ इदंवरुणायादित्यायादितये० ॥ इदं
सर्वप्रायश्चित्ताख्यं ॥ ॥ अथराष्ट्रभृद्धोमः ॥ ॐऋताषाडृतधामाग्निर्गन्धर्वःसनऽइदम्ब्रह्मक्षत्रम्पातुतस्मैस्वाहावाट् ॥
इदमृतासाहेऋतधाम्नेअग्नयेगन्धर्वायनमम ॥ ॐऋताषाडृतधामाग्निर्गन्धर्वस्तस्यौषधयोप्सरसोमुदोनामताभ्युःस्वाहा ॥
इदमोषधीभ्योप्सरोभ्योमुद्भ्योनमम ॥ ॐसꣳहितोविश्वसामासूर्योगन्धर्वःसनइदम्ब्रह्मक्षत्रम्पातुतस्मैस्वाहावाट् ॥ इदं-
सꣳहितायविश्वसाम्नेसूर्यायगन्धर्वायन० ॥ ॐसꣳहितोविश्वसामासूर्योगन्धर्वस्तस्यमरीचयोप्सरसऽआयुवोनामताभ्युः-
स्वाहा ॥ इदंमरीचिभ्योप्सरोभ्यआयुभ्योन० ॥ ॐसुषुम्णःसूर्यरश्मिश्चन्द्रमागन्धर्वःसनइदम्ब्रह्मक्षत्रम्पातुतस्मैस्वाहावाट् ॥

इदंसुषुम्णायसूर्यरश्मयेचन्द्रमसेगन्धर्वायन० ॥ ॐसुषुम्णःसूर्यरश्मिश्चन्द्रमागन्धर्वस्तस्यनक्षत्राण्यप्सरसोभेकुरयोनामता-
भ्यःस्वाहा ॥ इदंनक्षत्रेभ्योप्सरोभ्योभेकुरिभ्योन० ॥ ॐइषिरोविश्वव्यचावातोगन्धर्वःसनऽइदम्ब्रह्मक्षत्रम्पातुतस्मैस्वा-
हावाट् ॥ इदमिषिरायविश्वव्यचसेवातायगन्धर्वायन० ॥ ॐइषिरोविश्वव्यचावातोगन्धर्वस्तस्यापोप्सरसऽऊर्जोनामता-
भ्यःस्वाहा ॥ इदमद्भ्योप्सरोभ्यऽऊर्ग्भ्योनमम ॥ ॐभुज्युःसुपर्णोयज्ञोगन्धर्वःसनऽइदम्ब्रह्मक्षत्रम्पातुतस्मैस्वाहावाट् ॥
इदंभुज्यवेसुपर्णाययज्ञायगन्धर्वायन० ॥ ॐभुज्युःसुपर्णोयज्ञोगन्धर्वस्तस्यदक्षिणाअप्सरसस्तावानामताभ्यःस्वाहा ॥ इ-
दंदक्षिणाभ्योप्सरोभ्यस्तावाभ्योन० ॥ ॐप्रजापतिर्विश्वकर्मामनोगन्धर्वःसनइदम्ब्रह्मक्षत्रम्पातुतस्मैस्वाहावाट् ॥ इदं-
प्रजापतयेविश्वकर्मणेमनसेगन्धर्वायन० ॥ ॐप्रजापतिर्विश्वकर्मामनोगन्धर्वस्तस्यऋक्सामान्यप्सरसऽएष्टयोनामताभ्यः-
स्वाहा० ॥ इदमृक्सामेभ्योप्सरोभ्यऽएष्टिभ्योनमम ॥ ॥ अथजयाहोमः ॥ ॐचित्तंचस्वाहा इदंचित्तायन० ॥ ॐचि-
त्तिश्चस्वा० इदंचित्त्यैन० ॥ ॐआकूतंचस्वा० इदंआकूताय० ॥ ॐआकूतिश्चस्वाहा ॥ इदंआकूत्यैन० ॥ ॐविज्ञातं-
चस्वा० इदंविज्ञातायन० ॥ विज्ञातिश्चस्वा० इदंविज्ञात्यैन० ॥ ॐमनश्चस्वा० इदंमनसे० ॥ ॐशक्करीश्चस्वा० इदंश-
क्करीभ्योन० ॥ ॐदर्शश्चस्वा० इदंदर्शाय० ॥ ॐपौर्णमासश्चस्वा० इदंपौर्णमासायन० ॥ ॐबृहच्चस्वा० इदंबृहतेन० ॥
ॐरथंतरंचस्वा० इदंरथंतराय० ॥ ॐप्रजापतिर्जयानिन्द्रायवृष्णेप्रायच्छदुग्रःपृतनाजयेषु ॥ तस्मैविशःसमनमन्तसर्वाः-

सऽउग्रःसऽइहव्योबभूवस्वाहा ॥ इदंप्रजापतयेनम० ॥ ॥ अथाभ्यातानहोमः ॥ ॐअग्निर्भूतानामधिपतिःसमाव-
त्वस्मिन्ब्रह्मण्यस्मिन्क्षत्रेस्यामाशिष्यस्याम्पुरोधायामस्मिन्कर्मण्यस्यांदेवहूत्याᳪस्वाहा ॥ इदमग्नयेभूतानामधिपतयेनमम ॥
एवमभ्यातानहोमेप्रत्याहुतौसमापत्वस्मिन्नित्यारभ्यसर्वत्रसमानं ॥ ॐइन्द्रोज्येष्ठानामधिपतिःसमावत्वस्मिन्ब्रह्मण्यस्मि-
न्क्षत्रेस्यामाशिष्यस्याम्पुरोधायामस्मिन्कर्मण्यस्यान्देवहूत्याᳪस्वाहा ॥ इदमिन्द्रायज्येष्ठानामधिपतयेन० ॥ ॐयमःपृथि-
व्याऽअधिपतिःसमाव० स्वाहा ॥ इदंयमायपृथिव्याअधिपतयेन० ॥ ॐवायुरन्तरिक्षस्याधिपतिःस० स्वाहा ॥ इदंवाय-
वेन्तरिक्षस्याधिपतयेन० ॥ ॐसूर्योदिवोधिपतिःसमा० स्वाहा ॥ इदंसूर्यायदिवोधिपतयेन० ॥ ॐचन्द्रमानक्षत्राणा-
मधिपतिःसमा० स्वाहा ॥ इदंचन्द्रमसेनक्षत्राणामधिपतयेन० ॥ ॐबृहस्पतिर्ब्रह्मणोधिपतिःसमा० स्वाहा ॥ इदंबृहस्प-
तयेब्रह्मणोधिपतयेन० ॥ ॐमित्रःसत्यानामधिपतिःसमा० स्वाहा ॥ इदंमित्रायसत्यानामधिपतयेन० ॥ ॐवरुणोपाम-
धिपतिःसमा० स्वाहा ॥ इदंवरुणायापामधिपतयेन० ॥ ॐसमुद्रःस्रोत्यानामधिपतिःसमा० स्वाहा ॥ इदंसमुद्रायस्रो-
त्यानामधिपतयेन० ॥ ॐअन्नᳪसाम्राज्यानामधिपतितन्मावत्वस्मि० स्वाहा ॥ इदमन्नायसाम्राज्यानामधिपतिनेन० ॥
ॐसोमऽओषधीनामधिपतिःसमा० स्वाहा ॥ इदंसोमायौषधीनामधिपतयेन० ॥ ॐसविताप्रसवानामधिपतिःस०
स्वाहा ॥ इदंसवित्रेप्रसवानामधिपतयेन० ॥ ॐरुद्रःपशूनामधिपतिःसमा० स्वाहा ॥ इदंरुद्रायपशूनामधिपतयेन० ॥
उदकोपस्पर्शः ॥ ॐत्वष्टारूपाणामधिपतिःसमा० स्वाहा० ॥ इदंत्वष्ट्रेरूपाणामधिपतयेन० ॥ ॐविष्णुःपर्वतानाम-

धिपतिःसमा० स्वाहा ॥ इदंविष्णवेपर्वतानामधिपतयेन० ॥ ॐमरुतोगणानामधिपतयस्तेमावन्त्वस्मि० स्वाहा ॥ इदं-मरुद्भ्योगणानामधिपतिभ्योन० ॥ ॐपितरःपितामहाःपरेवरेततास्ततामहाः ॥ इहमावन्त्वस्मिन्ब्रह्म० स्वाहा ॥ इदंपि-तृभ्यःपितामहेभ्यःपरेभ्योवरेभ्यस्ततेभ्यस्ततामहेभ्यश्चनमम ॥ उदकोपस्पर्शः ॥ एतेष्टादशमन्त्राअभ्यातानसंज्ञकाः ॥ ॥ अथाग्निरित्यादिपंचकं ॥ ॐअग्निरैतुप्रथमोदेवतानाᳬसोस्यैप्रजांमुंचतुमृत्युपाशात् ॥ तदयᳬराजावरुणोनुमन्यतांयथेयᳬ-स्त्रीपौत्रमघन्नरोदात्स्वाहा ॥ इदमग्नये० ॥ ॐइमामग्निस्त्रायतांगार्हपत्यःप्रजामस्यैनयतुदीर्घमायुः ॥ अशून्योपस्थाजी-वतामस्तुमातापौत्रमानंदमभिविबुध्यतामियᳬस्वाहा ॥ इदमग्नयेन० ॥ ॐस्वस्तिनोऽअग्नेदिवआपृथिव्याविश्वानिधे-ह्ययथायजत्र ॥ यदस्यांमयिदिविजातंप्रशस्तंतदस्मासुद्रविणंधेहिचित्रᳬस्वाहा ॥ इदमग्नये० ॥ ॐसुगंनःपंथांप्रदिशन्नऽए-हिज्योतिष्मद्ध्येह्यजरंनऽआयुः ॥ अपैतुमृत्युरमृतंमऽआगाद्वैवस्वतोनोऽअभयंकृणोतुस्वाहा ॥ इदंवैवस्वतायन० ॥ वध्व-क्षणोर्वस्त्रपटंप्रक्षिप्यतूष्णीं ॥ ॐपरंमृत्योऽअनुपरेहिपंथांयस्तेऽअन्यइतरोदेवयानात् ॥ चक्षुष्मतेशृण्वतेतेब्रवीमिमानः प्रजाᳬरीरिषोमोतवीरान्स्वाहा ॥ इदंमृत्यवेनमम० ॥ परंमृत्यवितिचैके प्राशनांते ॥ उदकोपस्पर्शः ॥ ॥ अथलाजहोमः ॥ कुमार्याभ्राताशमीपलाशमिश्रान्लाजानंजलिनांजलावावपति ॥ तान्जुहोतिसᳬहतेनतिष्ठतीवधूः ॥ ॐअर्यमणंदेवंकन्याऽ-



---

१ रेणुः । अन्योभ्रातुरभावेस्याद्वाधवोज्ञातिरेववेति ॥ २ रेणुः । वधूभ्राताऽजलौतस्यालाजानंजलिनावपेत् ॥ तिष्ठंत्यास्तिष्ठतापत्यागृहीताजलिनेवसा ॥ जुहो-त्यर्यमणंदेवमित्याद्यैस्त्रिभिरेवतान् ॥ अंजलिस्थास्त्रिधासर्वाप्राङ्मुखाप्रतिमंत्रतः ॥ प्राजापत्येनतीर्थेनदैवेनैवेतिबह्वृचा इति ॥

अग्निमयक्षत ॥ सनोऽअर्यमादेवःप्रेतोमुंचतुमापतेःस्वाहा ॥ इदमग्नयेनमम ॥ ॐइयन्नार्युपब्रूतेलाजानावपंतिका ॥
आयुष्मानस्तुमेपतिरेधन्तांज्ञातयोममस्वाहा ॥ इदमग्नयेनमम ॥ ॐइमान्लाजानावपाम्यग्नौसमृद्धिकरणंतव ॥ ममतु-
भ्यचसंवननंतदग्निरनुमन्यतामियꣳस्वाहा ॥ इदमग्नयेनम० ॥ इत्यनेनमंत्रेणांजलिस्थान्सर्वांल्लाजाञ्जुहोति ॥ मंत्रत्रयं
कन्ययावाचयतिवरः ॥ अथास्यैदक्षिणꣳहस्तमुत्तानंवरोगृह्णातिसांगुष्ठं ॥ ॐगृभ्णामितेसौभगत्वायहस्तंमयापत्याजरद-
ष्टिर्यथासः ॥ भगोऽअर्यमासवितापुरंधिर्मह्यंत्वादुर्गार्हपत्यायदेवाः ॥ अमोहमस्मिसात्वꣳसात्वमस्यमोऽअहं ॥ सामा-
हमस्मिऽऋक्त्वंद्यौरहंपृथिवीत्वं ॥ तावेहिविवहावहैसहरेतोदधावहै ॥ प्रजांप्रजनयावहैपुत्रान्विन्द्यावहैबहून् ॥ तेसं-
तुजरदष्टयःसंप्रियौरोचिष्णूसुमनस्यमानौ ॥ पश्येमशरदःशतञ्जीवेमशरदःशतꣳशृणुयामशरदःशतम् ॥ १ ॥ इतिहस्तग्रह-
णेवरस्यमंत्राः ॥ अथैनामश्मानमारोहयत्युत्तरतोग्नेर्दक्षिणपादेन ॥ वरोवध्वासहाग्नेरुत्तरतोगत्वा वध्वादक्षिणंकरंस्ववाम-
करेणदायस्वदक्षिणपाणिनावधूदक्षिणपादमादायप्रागायतांदृषदमारोहयत्येनामित्यर्थः ॥ ॐआरोहेममश्मानमश्मेवत्वꣳ-
स्थिराभव ॥ अभितिष्ठपृतन्यतोवबाधस्वपृतनायतः ॥ १ ॥ अथदृषदारूढायांवरोगाथांगायति ॥ ॐसरस्वतिप्रेदमव
सुभगेवाजिनीवति ॥ यान्त्वाविश्वस्यभूतस्यप्रजायामस्याग्रतः ॥ यस्यांभूतꣳसमभवद्यस्याम्विश्वमिदंजगत् ॥ तामद्यगा-
थांगास्यामियास्त्रीणामुत्तमंयशः ॥ १ ॥ वरःपुनर्दक्षिणकरेणतद्दक्षिणंकरंगृहीत्वाग्निंप्रदक्षिणंब्रह्माग्न्योरंतरेणपरिक्रामतः ॥
ॐतुभ्यमग्नेपर्यवहन्त्सूर्यांवहतुनासह ॥ पुनःपतिभ्योजायांदाऽग्नेप्रजयासह ॥ १ ॥ इतरथावृत्तिः ॥ एवंद्विरपरंलाजादि

चतुर्थंꣳशूर्पकुष्ठ्यासर्वांल्लाजानावपति ॥ ॐभगायस्वाहाइदंभगायनमम ॥ इतिमन्त्रंकन्ययावाचयतिवरः ॥ ततःसमा-
चारात्तूष्णींहस्तग्रहणमश्मन्यारोहणंपरिक्रमणंच ॥ नेतरथावृत्तिः ॥ त्रिःपरिणीतांप्राजापत्यꣳहुत्वा ॥ ॐप्रजाप-
तयेस्वाहाइदंप्रजापतयेनमम ॥ अथैनामुदीचीꣳसप्तपदानिप्रक्रामयति ॥ वामपादेनदक्षिणपादंनातिक्रामतियथास्या-
त्तथा ॥ ॐएकमिषेविष्णुस्त्वांनयतु ॥ इतिवरेणोक्तस्यमंत्रस्यांतेवधूर्दक्षिणंपादमुदग्दधाति ॥ तदनंतरंवामपादं ॥
एवंसर्वत्र ॥ ॐद्वेऽऊर्ज्जेविष्णुस्त्वांनयतुइतिद्वितीयं ॥ ॐत्रीणिरायस्पोषायविष्णुस्त्वांनयतु ॥ इतितृतीयं ॥
ॐचत्वारिमायोभवायविष्णुस्त्वांनयतुइतिचतुर्थं ॥ ॐपंचपशुभ्योविष्णुस्त्वांनयतु ॥ इतिपंचमं ॥ ॐषड्ऋतुभ्योविष्णु-
स्त्वांनयतुइतिषष्ठं ॥ ॐसखेसप्तपदाभवसामामनुव्रताभवविष्णुस्त्वांनयतु ॥ इतिसप्तमं ॥ केचित्प्रतिपदंकन्ययाएकैकः
प्रतिज्ञामंत्रःपठनीयः ॥ तेचयथा ॥ मिष्टान्नव्यंजनादीनिकालेसंपादयेतव ॥ आज्ञासंपादिनीतुभ्यंकन्याचैकपदेब्रवीत् ॥१॥
शुचिशृङ्गारभूषाहंवाङ्मनःकायकर्मणा ॥ नाहंपरतरंगच्छेद्वितीयेसाब्रवीदिदम् ॥ २ ॥ सुखदुःखादिकर्माणिभोक्ष्येऽहं-
चत्वयासह ॥ मनसातीवशुद्धाहंतृतीयेसाब्रवीदिदं ॥ ३ ॥ यज्ञादीनिचकर्माणिश्रौतस्मार्तक्रमेणतु ॥ त्वयासहप्रकु-
र्वेऽहंतुरीयेसाब्रवीदिदम् ॥ ४ ॥ गार्हस्थ्येचसहायाहंसुखदुःखानुवर्तिनी ॥ वंशवृद्धिंकरिष्यामिपंचमेसाब्रवीदिदम् ॥५॥
दुःखंचैवसदारिद्र्यंसुखंचैवसुशोभनं ॥ सुखेदुःखेप्यहंमित्रंषष्ठेवैसाब्रवीदिदम् ॥ ६ ॥ पतिस्त्वंचतथास्वामीमह्यंदेवैःसम-
र्पितः ॥ वंदनीयःसदामह्यंसखेसप्तपदाभव ॥ ७ ॥ इतिकन्यामन्त्राः ॥ इतिसप्तपदीक्रमणं ॥ निष्क्रमणप्रभृत्युदकु-

म्भ७ँस्कन्धेकृत्वा दक्षिणतोग्नेर्वाग्यतःस्थितोभवत्युत्तरतएकेषां । ततएनांमूर्धन्यभिषिञ्चतिवरः ॥ ॐआपःशिवाःशिव० ॥ १ ॥ आपोहिष्ठेतिचतिसृभिः ॥ ॐआपोहिष्ठा० १ योवः० २ तस्माअरंग० ३ चकारात्ततएवउदकमादाय दिवाविवाहश्चेत् अथैना७ँसूर्यमुदीक्षयति तच्चक्षुरिति । सूर्यमुदीक्षस्व ॥ ॐतच्चक्षु० शृणुयामशरदःशतं ॥ वध्वाएवमन्त्रपाठः ॥ अथास्यैदक्षिणा७ँसमधिहृदयमालभते ॥ ॐममव्रतेतेहृदयंदधामिममचित्तमनुचित्तंतेअस्तु ॥ ममवाचमेकमनाजुषस्वप्रजापतिष्ट्वानियुनक्तुमह्यं ॥ अथैनामभिमन्त्रयते ॥ ॐसुमङ्गलीरियंवधूरिमा७ँसमेतपश्यत ॥ सौभाग्यमस्यैदत्त्वायाथास्तंविपरेतन ॥ तांदृढपुरुषउन्मथ्यप्राग्वोदग्वानुगुप्तआगारआनडुहेरोहितेचर्मण्युपवेशयति । दृढपुरुषोत्रजामाता ॥ ॐइहगावोनिषीदंत्विहाश्वाइहपूरुषाः ॥ इहोसहस्रदक्षिणोजज्ञइहपूषानिषीदंतु ॥ ग्रामवचनंचकुर्युः ॥ विवाहश्मशानयोर्ग्रामःप्रमाणमितिश्रुतेः ॥ अत्रसमाचाराद्वधूंवरस्यवामभागेउपवेशयंति ॥ पतिपुत्रान्विताःसुवासिन्यःस्त्रियःवरेणवध्वाःसीमंतेसिंदूरंदापयंति ब्राह्मणाश्चाशीर्वचनंपठेयुः ॥ ॥ ॐवाममद्यसवितर्वाममुश्वोदिवेदिवेवाममस्मभ्य७ँसावीः ॥ वामस्यहिक्षयस्यदेवभूरेरयाधियावामभाज७ँस्याम ॥ १ ॥ दक्षिणतऽउहैकऽउपदधातितदेताःपुण्यालक्ष्मीर्दक्षिणतोदध्महऽइतितस्माद्यस्यदक्षिणतोलक्ष्मभवतितंपुण्यलक्ष्मीकऽइत्याचक्षतऽउत्तरतःस्त्रियाऽउत्तरतऽआयतनाहिस्त्रीतत्तत्कृतमेवपुरस्तात्त्वेवैनाऽउपदध्याद्यत्राहैवशिरस्तदेवहनूतज्जिह्वाथैताःपुण्यालक्ष्मीर्मुखतोधत्तेतस्माद्यस्यमुखेलक्ष्मभवतितंपुण्यलक्ष्मीकऽइत्याचक्षते ॥ वधूवरयोर्ब्रह्मायुष्यप्राप्तिरस्तु ॥ ततःस्विष्टकृतंहुत्वा ॥ ॐअग्नयेस्विष्टकृतेस्वाहा ॥ इदमग्नयेस्विष्टकृतेनमम ॥

ततःसंस्रवप्राशनादिप्रणीताविमोकांतं ॥ आचार्यायवरंददाति । गौर्ब्राह्मणस्यवरः । ग्रामोराजन्यस्य । अश्वोवैश्यस्य । दिवाविवाहश्चेत्अस्तमितेध्रुवंदर्शयति । रात्रौविवाहश्चेद्वरदानानंतरम् । ध्रुवमीक्षस्व ॥ ॐ ध्रुवमसिध्रुवंत्वापश्यामिध्रुवैधिपोष्येमयिमह्यंत्वादात् ॥ बृहस्पतिर्मयापत्याप्रजावतीसंजीवशरदःशतम् ॥ सायद्यपिनपश्येत्तदापश्यामीत्येवंब्रूयात् ॥ त्रिरात्रमक्षारालवणाशिनौस्याताम् ॥ अधःशयीयाताम् ॥ संवत्सरंनमिथुनमुपेयाताम् ॥ द्वादशरात्रंषड्रात्रंत्रिरात्रमन्ततः ॥ त्रिरात्रपक्षेप्याश्रीयमाणेचतुर्थीकर्मोत्तरकालंपंचम्यादिरात्रावभिगमनंकर्तव्यं । कुतएतत् । चतुर्थीकर्मण्यकृतेभार्यात्वंनोत्पद्यतेविवाहैकदेशत्वाच्चतुर्थीकर्मणःइति ॥ रेणुः—एकपात्रेसहाश्नीतकेचित्तत्प्रथमेहनि ॥ पयोवर्ज्यंहविष्यान्नमित्यवोचत्त्रिविक्रमः ॥ १ ॥ अजस्रमग्निधारणंभवेद्विवाहहोमतः ॥ ततोग्निनासहव्रजेत्प्रयाणकालतोवरः ॥ २ ॥ कथंचिदग्निनाशनंभवेत्स्वयोनिनिर्हृतिः ॥ तत्राग्न्यननुगमननिमित्तमनादिष्टप्रायश्चित्तं ॥ ॥ अथाशीर्वादः ॥ ॐ यद्वैवैतद्वाजप्रसवीयंजुहोत्येताहदेवताःसुताऽएतेनसवेनसैनैतत्सोष्यमाणोभवतिताऽएवैतत्प्रीणातिताऽअस्माऽइष्टाःप्रीताऽएतᳪंसवमनुमन्यंतेताभिरनुमतःसूयतेयस्मैवैराजानोराज्यमनुमन्यंतेसराजाभवति ॥ १ ॥ (काण्ड ९ प्रपाठक ३ ब्राह्मण २ मन्त्र ५) ॥ अथातोराष्ट्रभृतोजुहोति ॥ राजानोवैराष्ट्रभृतस्तेहिराष्ट्राणिबिभ्रत्येताहदेवताःसुताऽएतेनसवेनसैनैतत्सोष्यमाणोभवतिताऽएवैतत्प्रीणातिताऽअस्माऽइष्टाःप्रीताऽएतᳪंसवमनुमन्यंतेताभिरनुमतःसूयतेयस्मैवैराजानोराज्यमनुमन्यंतेसराजाभवति ॥ २ ॥ (काण्ड ९ प्र० ३ ब्रा० ३ म० १) ॥ अथरथशीर्षेजुहोति ॥ एषवैसवऽएतद्वै-

तत्सूयतेयस्मैतमेतादेवताःसवमनुमन्यंतेयाभिरनुमतःसूयतेयस्मैवैराजानोराज्यमनुमन्यंतेसराजाभवति ॥ ३ ॥ ( कां० ९ प्र० ३ ब्रा० ३ मं० १३ ) ॥ तत्वैदेवस्वामेव ॥ ऽएतानिहवींषिनिर्वपेदेताहदेवताःसुताऽएतेनसवेनयस्मैतत्सोष्यमाणोभवतिताऽएवैतत्प्रीणातिताऽअस्माऽइष्टाःप्रीताऽएतंसवमनुमन्यंतेताभिरनुमतःसूयतेयस्मैवैराजानोराज्यमनुमन्यंतेसराजाभवति ॥ ४ ॥ (कां० ९ प्र० ३ ब्रा० ५ मं० १२ ) ॥ अथराजानमभिश्रुत्याग्नौजुहोति ॥ एषवैससवऽएतद्वैतत्सूयतेयमस्मैतमेतादेवताःसवमनुमन्यंतेयाभिरनुमतःसूयतेयस्मैवैराजानोराज्यमनुमन्यंतेसराजाभवति ॥५॥ ( कां० ९ प्र० ४ ब्रा० १ मं० ८ ) ॥ दंपत्योरविच्छिन्नाप्रीतिरस्तु ॥ वंशाभिवृद्धिरस्तु ॥ इत्याशीर्वादः ॥ सुवासिन्योत्रनीराजनंकुर्युः ॥ मार्कंडेयवदायुष्मान्भवइतिवरदक्षिणकर्णे । सावित्रीवत्सौभाग्यवतीभव इतिवधूवामकर्णेकथयेयुः ॥ यथाशक्तिब्राह्मणभोजनसंकल्पः ॥ कर्मेश्वरार्पणंकुर्यात् ॥ इतिविवाहः ॥ ॥ कारिकायां ॥ लाजहोमेमंत्रत्रयंसूर्यस्यावेक्षणेसकृत् ॥ भगायचैकमंत्रंचकन्यापठतिपंचकं ॥ ध्रुवदर्शनकालेचषष्ठश्चैवउदाहृतइति ॥ कन्यावस्त्रपरिधानेतथाचैवोत्तरीयके ॥ तथासमीक्षाकालेचपितुर्निष्क्रमणेगृहात् ॥ अश्मन्यारोहणेचैवहस्तग्राहेतथैवच ॥ सप्तपद्यांतथाचैववधूमूर्ध्न्यभिषेचने ॥ हृदयालंभनेचैवतथैवचाभिमंत्रणे ॥ दृढपुरुषेक्रमेणैवएतान्मंत्रान्वरःपठेत् ॥ इति ॥ ॥ अथऐरिणीपूजा ॥ आचमनं । प्राणायामः ॥ शुभपुण्यतिथौमयाचतुर्भिरहोभिर्निष्पादितस्य कन्याविवाहाख्यस्यकर्मणःसांगतासिद्ध्यर्थं श्रुतिस्मृतिपुराणोक्तफलावाप्तयेकन्यादानसंपूर्णफलावाप्तयेवधूवरयोःबह्वायुष्यप्राप्त्यर्थंवंशाभिवृद्ध्यर्थंश्रीउमामहेश्वरप्रीतयेचवरमात्रेऐ-

रिणीप्रदानंकरिष्ये ॥ गणपतिपूजनं ॥ ऐरिणीपूजनं ॥ मनोजूतिरितिप्रतिष्ठा ॥ त्र्यंबकं० ततःश्रीश्चते० ॥ ऐरिण्युमामहेश्वराभ्यांनमःइतिषोडशोपचारैःसंपूज्यआचार्यपूजनंग्रामाचार्यपूजनंच ॥ ऐरिणीप्रार्थना ॥ ऐरिणित्वमुमादेवीमहेशोगिरिजापतिः ॥ अतस्त्वांपूजयिष्यामिऐरिणींसर्वकामदां ॥ सवस्त्रांचसदीपांचशूर्पैःषोडशभिर्युताम् ॥ वरमात्रेप्रदास्यामिकन्यादानस्यसिद्धये ॥ ऐरिण्याख्यंवंशपात्रंपक्वान्नैःपरिपूरितं ॥ करकैरुद्रसंख्याकैःसुवर्णपरिपूरितैः ॥ एतावदैरिणीरूपंकर्तव्यंप्रीतिवर्धनं ॥ वंशोवंशकरःश्रेष्ठोवंशोवंशसमुद्भवः ॥ वंशपात्रमिदंदानंवंशवृद्धिकरंपरं ॥ वंशानामुत्तमंदानमतःशांतिंप्रयच्छमे ॥ महद्वेणुमयंपात्रंनानापक्वान्नपूरितं ॥ सवस्त्रफलतांबूलंदंपत्योर्वंशवर्धनं ॥ वंशपात्राणिसर्वाणिमयासंपादितानिवै ॥ उमाकांतायदास्यामिममवंशाभिवृद्धये ॥ यावच्चन्द्रश्चसूर्यश्चयावत्तिष्ठतिमेदिनी ॥ तावद्विवंशवृद्धिंत्वंदेहिमेशंकरप्रिये ॥ अनयापूजयाऐरिणीस्वरूपिणौउमामहेश्वरौप्रीयेतां ॥ वरमातृहस्तेशिवाआपःसंतु ॥ संतुशिवाआपः ॥ सौमनस्यमस्तु ॥ अस्तुसौमनस्यं ॥ अक्षतंचारिष्टंचास्तु ॥ अस्त्वक्षतम० ॥ यत्पापंरोगःअशुभंअकल्याणंतद्दूरेप्रतिहतमस्तु ॥ इदंऐरिणीवंशपात्रंसदक्षिणाकंवरमात्रेतुभ्यमहंसंप्रददेनमम ॥ ततोवरगोत्रजादीन्गंधवस्त्रादिभिःसंपूज्य ॥ प्रार्थयेत् ॥ यच्छक्त्याविहितंस्वगृह्यकथितैर्मन्त्रैश्चपौराणिकैर्दानंवस्त्रजलान्नचंदनदलाद्यंवाचतुर्भिर्दिनैः ॥ दंपत्योर्ममवंशवृद्धिमनघांदत्तामुमाशंकरौन्यूनंतत्कृपयाखिलंसफलतांयातुद्विजानांनतेः ॥ १ ॥ ततोवधूगोत्रजाः ॥ ऐरिणीवंशपात्रंगृहीत्वावरगोत्रजादीनांशिरसिधारयेयुः ॥ तत्रमन्त्रः ॥ ॐघृतवतीभुवनानामभिश्रियोर्वीपृथ्वीमधुदुघेसुपे-

शंसा ॥ द्यावापृथिवीवरुणस्यधर्मणाविष्कंभितेऽअजरेभूरिरेतसा ॥ १ ॥ ततःकन्यानिवेदनम् ॥ अष्टवर्षात्वियंकन्या पुत्रवत्पालितामया ॥ इदानींतवपुत्रायदत्तास्नेहेनपाल्यतां ॥ १ ॥ इतिवरपितुरुत्सङ्गेदद्यात् ॥ पुनरुत्थाप्य ॥ अस्मदादिसुहृद्बन्धूंस्त्यक्त्वायातिभवद्गृहम् ॥ अतिस्नेहेनवैमातःकन्यांमेपरिपालय ॥ २ ॥ इतिवरमातुरुत्सङ्गेदद्यात् ॥ अष्टवर्षात्वियंकन्यातवविप्रसहायिनी ॥ स्वदेशेपरदेशेवापरिपाल्याकुलोचितं ॥ इतिवरस्योत्संगेदद्यात् ॥ इतिकन्यानिवेदनम् ॥ ब्राह्मणभोजनसंकल्पः ब्रा. पू. दक्षिणा अनेन उमामहेश्वरौप्रीयेतां इतिऐरिणी ॥ ततःपूर्ववदाम्रपूजनं ॥ अत्रावसरेवध्वावसिष्ठारुन्धतीपूजनं ॥ श्रीश्चतेइतिमन्त्रेणवसिष्ठारुन्धतीभ्यांनमःइति पञ्चोपचारैःसंपूज्य ॥ पूजान्तेगन्धपुष्पफलहिरण्योपेतमर्घंदद्यात् ॥ तत्रमन्त्रः ॥ अरुंधतिमहाभागेवसिष्ठप्रियवादिनि ॥ सौभाग्यंसंततिंदेहिगृहाणार्घंनमोस्तुते ॥ १ ॥ इत्यर्घंदत्वाप्रार्थयेत् ॥ अरुन्धतिमहाभागेवसिष्ठप्रियवल्लभे ॥ सौभाग्यंसंततिंदेहिपुत्रलाभंचदेहिमे ॥ ततःसौभाग्यवायनदानं ॥ ब्राह्मणेभ्योदक्षिणांदत्वातैराशिषोगृह्णीयात् ॥ इत्यैरिणीपूजनंप्रदानंच ॥

अथ वधूप्रवेशः ॥ वधूप्रवेशः प्रथमे तथैव शुभप्रदः पञ्चमकेथ वाह्नि ॥ द्वितीयके वाथ चतुर्थऽके वा षष्ठे वियोगामयदुःखदः स्यात् ॥ तथासंग्रहे—विवाहमारभ्य वधूप्रवेशो युग्मे तिथौ षोडशवासरान्तात् ॥ ऊर्ध्वं ततोब्देऽयुजि पञ्चमान्तादतः परस्तान्नियमो नचास्ति ॥ अयुग्मे तृतीयं त्यक्त्वा युग्मे षष्ठं विवर्जयेत् ॥ प्रासकाले व्यतीपातवैधृती संक्रमं तथा ॥ उपरागं श्राद्धदिनं वर्जयित्वा शुभेप्सुभिः ॥ नृसिंहभट्टीये—आरभ्योद्वाहदिवसात्षष्ठे वाप्यष्टमे दिने । वधूप्रवेशः संपत्त्यै दशमेऽथ समे दिने ॥ षष्ठेऽष्टमे वा दशमे दिने वा

विवाहमारभ्य वधूप्रवेशः । पञ्चाङ्गसंशुद्धिदिनं विनापि विधावसद्गोचरगेपि शस्त इति वसिष्ठोक्तेश्च ॥ वधूप्रवेशः प्रथमे तृतीये शुभप्रदः पञ्चमके तथाहि । द्वितीयके वाथ चतुर्थके वा षष्ठे वियोगामयदुःखदः स्यादिति अज्ञातवक्तृकश्लोकलिखितं पूर्वोक्तनारदवचनविरुद्धत्वान्नादर्तव्यमिति ॥ ज्योतिःशास्त्रोक्तदिवसे शुभकाले तथैव च । रात्रौ वधूप्रवेशः स्याद्दिवा नैव कदाचनेति ॥ रेणुः—इदं वधूप्रवेशनं त्रिविक्रमादिसूरयः ॥ चतुर्थकर्मणः पुरा वदन्ति सौम्यवासर इति ॥

अथप्रयोगः ॥ ज्योतिःशास्त्रोक्तशुभकाले वरःपित्रादत्तांवधूंगृहीत्वायानेउपविश्यमङ्गलवाद्यघोषपुरःसरंमङ्गलगीतपठनपरैःपुरन्ध्रीजनैराचार्यादिविप्रैः आनोभद्राःस्वस्तिनऽइन्द्रेतिसुमङ्गलसूक्तपठनपरैश्चसहस्वगृहमागत्यगृहमध्येशुभासनेप्राङ्मुखउपविश्यस्वदक्षिणतःवधूमुपवेश्य देशकालौसंकीर्त्यनववधूगृहप्रवेशांगभूतं स्वस्तिपुण्याहवाचनं महालक्ष्मीपूजनंचकरिष्ये ॥ आदौगणपतिपूजनंक० इति संकल्पंकृत्वा ॥ भोब्राह्मणाःकृतस्यनववधूगृहप्रवेशाख्यस्यकर्मणःपुण्याहमित्यादि यथाचारंतंदुलेषुइष्टनामविलिख्यमनोजूतिरितिप्रतिष्ठाप्यश्रीश्चतेइतिमन्त्रेणषोडशोपचारैर्लक्ष्मींसंपूज्य ॥ आचार्यपूजनंग्रामाचार्यपूजनं ॥ ततःशिष्टाचाराद्वधूकण्ठेसुवर्णादिमुक्ताहारंबध्वावधूवरौदुग्धंप्राशयेत् ॥ ततोवरेणलक्ष्मीपादावादायगृहमागतोहं इतिवक्तव्यं ॥ तथैववध्वासौवर्णपादावादायगृहमागताहंइतिवक्तव्यं ॥ कुलदेवतादर्शनादिकंकार्यं ॥ पूर्ववद्वसिष्ठारुंधतीपूजनं ॥ ब्राह्मणान्गंधादिभिःसंपूज्यभूयसीदानंआशीर्ग्रहणं ॥ अन्यद्यथाकुलाचारंकुर्यात् ॥ इतिवधूप्रवेशः ॥

अथवध्वागृहगमनेमध्येरथाक्षभंगे प्रायश्चित्तम् ॥ अथवधूपितृगृहाद्वरस्यवध्वाविवाहाग्निनाचसहस्वगृहगमनेरथयानेनक्रियमा-

णेऽक्षभेदनंरथवद्धमोक्षणंयुगादिभेदनंस्यात्तदनिष्टशमनंप्रायश्चित्तंविहितंसूत्रकृताराज्ञोक्षभेदेनद्धविमोक्षेयानविपर्यासेऽन्यस्यांवाव्यापत्तौस्त्रियाश्चो-
द्वहनेतमेवाग्निमुपसमाधायेत्यादि ॥ **कारिकाकारः** ॥ ततोवधूप्रवेशनं वरालयेपितुर्गृहात् ॥ भवेद्विवाहमेविधौ शुभग्रहैःसमीक्षिते ॥१॥ अजस्र-
मग्निधारणंभवेद्विवाहहोमतः ॥ तदग्निनासहव्रजेत्प्रयाणकालतोवरः ॥ कथंचिदग्निनाशनंभवेत्स्वयोनिनिर्हृतिः ॥ २ ॥ ततोऽत्रभेषजंभवेद्यथो-
क्तमस्यशेषतः ॥ वधूवरौरथेथवाहयादिकेऽधिरोहतः ॥ ३ ॥ प्रयाणकालतस्त्वथोरथाक्षभेदनंभवेत् ॥ रथस्यबंधमोक्षणंहयादिकेविपर्यात् ॥४॥
भवेदनिष्टमेववायुगादिकंनिमित्ततः ॥ प्रायश्चित्तिर्भवेदत्राप्यागूवैंकल्पपूर्विका ॥ ५ ॥ प्रायश्चित्तंकरिष्येहंततोवैवाहिकेऽनले ॥ स्थापयेत्सं-
स्कृतेदेशेस्मरेद्वैकल्पिकानथ ॥ ६ ॥ इत्याद्युक्तम् ॥

तत्रप्रयोगः ॥ शुचिर्वरआचमनंप्राणायामत्रयंकृत्वाअक्षादिभेदनिमित्तंप्रायश्चित्तंकर्तुंतदंगतयापुण्याहवाचनंमातृका-
पूजनंवसोर्धारापूजनमायुष्यमंत्रजपंनांदीश्राद्धंचकरिष्येआदौनिर्विघ्नार्थंगणेशपूजनंकरिष्येइतिसंकल्प्यकृत्वाशुचिदेशेपंचभू-
संस्कारान्कृत्वाविवाहाग्निंस्थापयित्वा ॥ पुनराचमनप्राणायामदेशकालकीर्तनांतेरथाक्षभेदनिमित्तंप्रायश्चित्तमहंकरिष्ये ॥
तत्रपूर्वेणब्रह्मणोगमनमित्यादिप्राक्तं ॥ पूर्णपात्रस्थानेधुर्यौदक्षिणाइतिवैकल्पिकानहंकरिष्ये ॥ ब्रह्मवरणाद्यासादनेवरधुर्यौ-
पर्युक्षणांतेऽनन्वारब्धःस्रुवेण इहरतिरिहरमध्वमिहधृतिरिहस्वधृतिःस्वाहा इदमग्नये० । उपसृ० अयन् राय० धरत्स्वाहा
इदमग्नये० ततआघाराद्याःस्विष्टकृदंताब्रह्मान्वारब्धोजुहुयात् संस्रवप्राशनं ॥ पवि० नम् ॥ पवि० त्तिः । ब्रह्मन्निमौधुर्यौप्रति-
गृह्यताम् ॥ ब्रह्माप्रतिगृह्णामि ॥ प्रणीताविमोकः ॥ ततोन्यद्रथादियानमुपकल्प्यतत्रवरः प्रतिक्षत्रेप्रतितिष्ठाः गोषुप्रत्यंगेषुयज्ञे १

आत्वाहार्षमं० चाचलिः । विशस्त्वा० अशत् २ वधूमुत्क्षिप्योपवेशयेत् ॥ राज्ञोक्षभेदश्चेत्पुरोहितोराजानमुपवेशयेत् परंसेनाग्निस्थापनंतत्रेतिविशेषः ॥ एतत्कर्मांगभूतंब्राह्मणभोजनंकर्तव्यं । प्रायश्चित्तिरियंसंज्ञाकर्मणोस्यबुधैःस्मृता ॥ तेननैमित्तिकत्वाच्चनांदीश्राद्धंभवेदिह ॥ इतिवध्वागृहगमनेरथाक्षभङ्गप्रायश्चित्तम् ॥

अथप्रथमाब्दे वधूनिवासः—ज्योतिर्निबन्धे ॥ उद्वाहात्प्रथमे शुचौ यदि वसेद्भर्तुर्गृहे कन्यका हन्यात्तज्जननीं क्षये निजतनुं ज्येष्ठे पतिज्येष्ठकं ॥ पौषे च श्वशुरं पतिं च मलिने चैत्रे स्वपित्रालये तिष्ठन्ती पितरं निहन्ति न भयं तेषामभावे भवेत् ॥ इति प्रथमाब्देवधूनिवासः ॥

अथचतुर्थीकर्म ॥ तत्रपारस्करः ॥ चतुर्थ्यामपररात्रे । विवाहमारभ्य चतुर्थेहनि अपररात्रे इत्यर्थः ॥ रेणुः—गृहाभ्यंतरतस्तत्स्यादप्यंगत्वान्नमंडपे ॥ स्नात्वैतदाचरेत्कर्मेत्येवंकात्यायनोऽब्रवीत् ॥ आचमनं । प्राणायामः । पवित्रधारणं । देशकालौसंकीर्त्यशुभपुण्यतिथौश्रीपर० विवाहांगभूतं चतुर्थीकर्माहंकरिष्ये ॥ तत्रगृहाभ्यंतरतः स्थण्डिलेपञ्चभूसंस्कारपूर्वकंवैवाहिकाग्निमुपसमाधाय ॥ ततोदक्षिणतोब्रह्मासनमास्तीर्यतत्रब्रह्मोपवेशनं । दक्षिणतोब्रह्माणमुपवेश्योत्तरतउदपात्रंप्रतिष्ठाप्य । ततःप्रणीताप्रणयनादिस्थालीपाकꣳश्रपयित्वाज्यभागाविष्ट्वाज्याहुतीर्जुहोति ॥ ॐअग्नेप्रायश्चित्तेत्वंदेवानांप्रायश्चित्तिरसिब्राह्मणस्त्वानाथकामऽउपधावामियास्यैपतिघ्नीतनूस्तामस्यैनाशयस्वाहा ॥ इदमग्नयेनमम ॥ ॐवायोप्रायश्चित्तेत्वंदेवानांप्रायश्चित्तिरसिब्राह्मणस्त्वानाथकामऽउपधावामियास्यैप्रजाघ्नीतनूस्तामस्यैनाशयस्वाहा ॥ इदंवायवेन० ॥ ॐसूर्य

प्रायश्चित्तेत्वन्देवानाम्प्रायश्चित्तिरसिब्राह्मणस्त्वानाथकामऽउपधावामियास्यैपशुघ्नीतनूस्तामस्यैनाशयस्वाहा ॥ इदंसूर्याय-नम० ॥ ॐचंद्रप्रायश्चित्तेत्वंदेवानांप्रायश्चित्तिरसिब्राह्मणस्त्वानाथकामऽउपधावामियास्यैगृहघ्नीतनूस्तामस्यैनाशयस्वाहा ॥ इदंचंद्रायन० ॥ ॐगंधर्वप्रायश्चित्तेत्वंदेवानाम्प्रायश्चित्तिरसिब्राह्मणस्त्वानाथकामऽउपधावामियास्यैयशोघ्नीतनूस्तामस्यै-नाशयस्वाहा ॥ इदंगंधर्वायनमम ॥ ततःस्थालीपाकमभिघार्य स्थालीपाकस्यजुहोति ॥ ॐप्रजापतयेस्वाहा ॥ इदंप्र० ॥ हुत्वाहुत्वैतासामहुतानासुदपात्रेसंस्रवान्समवनयति । ततःस्विष्टकृदादिप्रणीताविमोकांतंप्रकृतिवत् ॥ प्राशनांते तत एतांमूर्धन्यभिषिञ्चति । ततइतिउदपात्रादुदकंगृहीत्वापंचपल्लवैरभिषिंचतिवरः । ॐयातेपतिघ्नीप्रजाघ्नीपशुघ्नीगृहघ्नी-यशोघ्नीनिंदितातनूर्जारघ्नींततऽएनांकरोमिसाजीर्यत्वंमयासहासौ ॥ असावितिद्वितीयांतंवध्वानामगृह्णाति । वेणीनाम्नी-मिति ॥ अथैनांस्थालीपाकंप्राशयति ॥ ॐप्राणैस्तेप्राणान्त्सन्दधाम्यस्थिभिरस्थीनिमांसैर्मांसानित्वचात्वचम् ॥ १ ॥ अयंवधूसंस्कारएव । अतश्चरोरुपघातेअन्यचरोरुत्पादनमिति । वधूःशुद्ध्यर्थमाचामेत् । तस्मादेवंविच्छ्रोत्रियस्यदारेणनो-पवासमिच्छेदुतह्येवंवित्परोभवति । तामुदूह्ययथर्तुप्रवेशनं । शिष्टाचारंकुर्यात् ॥ यथाशक्तिब्राह्मणभोजनसंकल्पः ॥ भूय-सीदानं आशीर्ग्रहणं ॥ इतिचतुर्थीकर्मप्रयोगः ॥ ॥

अथदेवकोत्थापनं ॥ तत्रकालः ॥ समेचादिवसेकुर्याद्देवकोत्थापनंबुधः ॥ षष्ठंचविषमंनेष्टंमुक्त्वापंचमसप्तमौ ॥ १ ॥ मंडपोद्वासनंकार्यंसमेवाविषमेदिने ॥ समेषष्ठदिनंवर्ज्यंविषमेत्रिनवंत्यजेदिति ॥ २ ॥ आचमनं । प्राणायामः । पवित्र-

धारणं । देशकालौसंकीर्त्यममगृहेषट्सुषट्सुमासेषुशोभनप्राप्त्यर्थंस्थापितदेवतानांउत्थापनंमंडपोद्वासनं स्वस्तिपुण्याहवाचनंचकरिष्येनिर्विघ्नतासिद्ध्यर्थंगणपतिपूजनंकरिष्ये इति संकल्प्य कृत्वा ॥ स्वस्तिवाचनेभोब्राह्मणाः मयाक्रियमाणयोः देवकोत्थापनमंडपोद्वासनाख्यकर्मणोःपुण्याहंभवंतोब्रुवंतु ॥ ॐपुण्याहं ॥ एवंकल्याणंऋद्धिंस्वस्तिश्रीरिति ॥ ततः स्थापितदेवतानांपंचोपचारैरुत्तरपूजनंकार्यं ॥ ततोविसर्जनं ॥ ॐउत्तिष्ठब्रह्मणस्प० ॥ यान्तुमातृगणाःसर्वेस्वशक्त्यापूजितामया ॥ इष्टकामप्रसिद्ध्यर्थंपुनरागमनायच ॥ १ ॥ इतिविसृज्यमण्डपमध्येआनीयआम्रशाखानांवेष्टनान्युन्मुच्यवंशपात्रेतत्सर्वंनिधायसाक्षतंजलंप्रक्षिप्य । ततोबहिःशालामारभ्यगृहाभ्यंतरतःस्थापितस्थलपर्यंतंशूर्पेण त्रिवारंजलधारांपातयेत् ॥ तत्रमन्त्राः ॥ ॐस्वस्तिनइंद्रोवृद्धश्रवाः० १ ॐद्यौःशांति० २ ॐयतोयतः० ३ इति ॥ मातृपल्लवैःसपत्नीकंयजमानमभिषिच्य शूर्पस्थमातृपल्लवान्गृहोपरिशुचौदेशेनिक्षिप्य ॥ ईशानकोणप्रदेशेमण्डपवितानं विमुच्य ॥ ततःसूत्रवेष्टितेद्वेपूगीफलेआचार्योगृहीत्वायजमानायआशिषंदद्यात् ॥ ततोयजमानः ॥ भोब्राह्मणाः अस्मद्गोत्रेषट्सुषट्सुमासेषुशोभनानिसंत्वितिभवंतोब्रुवंतु ॥ संतुशोभनानीत्याचार्यः ॥ इतित्रिरुक्त्वाब्राह्मणभोजनसंकल्पः । ब्राह्मणान्गन्धादिभिःपूजयेत्भूयसींचदद्यात् ॥ इतिदेवकोत्थापनम् ॥

अथ द्विरागमनम् ॥ नीहारांशुदिनोत्तरादितिगुरुब्रह्मानुराधाश्विनीशक्रे भास्करवायुविष्णुवरुणत्वाष्ट्रे प्रशस्ते तिथौ ॥ कुम्भाजालिगते रवौ शुभकरे प्रासोदये भार्गवे जीवज्ञास्फुजितांदिने नववधूवेश्मप्रवेशः शुभः ॥ १ ॥ माघफाल्गुनवैशाखे शुक्लपक्षे

शुभेदिने ॥ गुर्वादित्यविशुद्धौ स्यान्नित्यं पत्नीद्विरागमः ॥ २ ॥ द्विरागमनेऽधिमासविष्णुशयनमासौ समवत्सराः प्रतिशुक्रादिदोषोऽस्तादिदोषाश्च वर्ज्याः ॥ द्विरागमोपि यदि विवाहमारभ्य षोडशदिनमध्ये क्रियते तदा प्रतिशुक्रादिदोषोऽस्तादिदोषश्च नास्ति ॥ यथा—द्विरागमः षोडशवासरांतरेकादशाहे समवासरेषु ॥ नचात्र ऋक्षं न तिथिर्न योगो न वारशुद्ध्यादि विचारणीयम् ॥ केवलाङ्गिरसकेवलभृगुभरद्वाजवसिष्ठकश्यपात्रिवत्सगोत्राणां प्रतिशुक्रदोषो न ॥ रेवत्यश्विनीभरणीकृत्तिकाद्यचरणेषु चन्द्रेसति शुक्रस्यान्धत्वात्प्रतिशुक्रदोषो न ॥ दुर्भिक्षे देशविप्लवे विवाहे तीर्थगमने एकनगरग्रामयोश्च प्रतिशुक्रदोषो न ॥ इति द्विरागमः ॥ ॥ ॥ **विवाहे भार्ययासह भोजनमाहाङ्गिराः**—ब्राह्मण्यासह योऽश्नीयादुच्छिष्टं वा कदाचन ॥ तत्र दोषं न मन्यन्ते सर्वे एव मनीषिणः ॥ १ ॥ अश्नीयातामेकपात्रे विवाहेषु वधूवरौ ॥ तत्र दोषं न मन्यन्ते आचारश्रेषसंभवमिति ॥ **संग्रहे**—एकासनं चैकशय्यामेकपात्रे च भोजनं ॥ एकत्र मङ्गलस्नानमेकयानाधिरोहणं ॥ कुर्वन्विवाहे एतानि भवेद्विप्रो न दोषभागिति ॥ ॥ **अथाभ्युदयिकश्राद्धोत्तरं देवकोत्थापनपर्यन्तं निषिद्धकर्माणि गार्ग्यः**—नान्दीश्राद्धे कृते पश्चाद्यावन्मातृविसर्जनं ॥ दर्शश्राद्धं क्षयश्राद्धं स्नानं शीतोदकेन च ॥ अपसव्यं स्वधाकारं नित्यश्राद्धं तथैवच ॥ ब्रह्मयज्ञं चाध्ययनं नदीसीमान्तलङ्घनं ॥ उपवासव्रतं चैव श्राद्धभोजनमेव च ॥ नैव कुर्युः सपिण्डाश्च मण्डपोद्वासनावधि ॥ १ ॥ अत्र चतुःपुरुषं सापिण्ड्यं ॥ आचातुर्थं नैव कुर्युः पंचमे शुभदं भवेदितिवाक्यात् ॥ मार्तंडेऽपि आतुर्यादितिवाक्याच्च इति **संस्कारमुक्तावल्याम्** ॥ अत्र नित्यश्राद्धनिषेधेन तत्कार्यविहितपितृयज्ञनिषेधसिद्धेः स्वधाकारग्रहणं तत्सहितवैश्वदेवनिषेधार्थं ॥ आचारसंवादलाभाच्चेति बहव इत्युक्तं **स्मृतिकौस्तुभे** ॥ निरग्निकविषयोऽयं वैश्वदेवनिषेधः न साग्निकविषयः ॥ कुर्यात्पञ्चमहायज्ञान्नित्यशः सूतकं विनेतिवाक्यात् इतिशिवप्रसादकृते **प्रयोगदीपे संस्कारमुक्तावल्यां** च । तथान्यच्च । अभ्यङ्गे सूतके

रात्रौ विवाहे पुत्रजन्मनि ॥ माङ्गल्येषु च सर्वेषु न धार्यं गोपिचन्दनं ॥ १ ॥ इति द्विरागमनादि ॥

**अथ मातृविसर्जनानन्तरं अब्दपर्यन्तं निषेधमाह वसिष्ठः**—स्नानं सचैलं तिलमिश्रकर्म प्रेतानुयानं कलशप्रदानं ॥ अपूर्वतीर्थामरदर्शनं च विवर्जयेन्मङ्गलतोऽब्दमेकं ॥ १ ॥ पितृणामुद्देशेन कलशदानमित्यर्थः ॥ ॥ **अत्रापवादः** ॥ तीर्थे संवत्सरे प्रेते पितृयज्ञे महालये ॥ कृतोद्वाहोऽपि कुर्वीत पिण्डनिर्वपणं सदेति ॥ मासषट्कं विवाहादौ व्रतप्रारम्भणेऽपि च ॥ जीर्णभाण्डादि न त्याज्यं गृहसंमार्जनं तथेति ॥ ॥ **श्मश्रुकरणे**—ऊर्ध्वं विवाहात्पुत्रस्य तथाच व्रतबन्धनात् ॥ आत्मनो मुंडनं चैव वर्षं वर्षार्धमेव च ॥ त्रिमासं वा त्रिपक्षं वा न कुर्वीत कदाचनेति ॥ ॥ **अथ कन्यागृहे भोजननिषेधः** ॥ **भविष्ये**—अप्रजायां तु कन्यायां न भुञ्जीत कदाचन ॥ दौहित्रस्य मुखं दृष्ट्वा किमर्थमनुशोचति ॥ न भुञ्जीतेत्यत्र कन्यागृहे इति शेषः ॥ **अपरार्के आदित्यपुराणे**—अप्रजायां तु कन्यायां नाश्नीयात्कन्यकागृहे ॥ ब्राह्मादिविधिना कन्यां दत्वाश्नीयात्कदाचन ॥ अथ भुञ्जीत मोहाच्चेत्स याति नरकं ध्रुवमिति ॥ ब्राह्मविवाहविधिना दातुं योग्यां कन्यां दत्वा कदापि तस्याः गृहे नैवाश्नीयादित्यर्थः ॥ **शाकलकारिकास्वपि**—दुहित्रन्नं न भुञ्जीयाद्यावत्तस्या भवेत्सुतः ॥ अन्यथा यस्तु भुञ्जीत दानं तस्य वृथा भवेत् । कन्यायास्त्वप्रसूताया यो भुनक्त्यन्नमाग्रहात् ॥ अघं स केवलं भुङ्क्ते प्राजापत्येन शुध्यतीति ॥

**अथवरस्यमृतभार्यत्वपरिहारोपायः**—तदुक्तं बृहद्याज्ञवल्क्येन ॥ परिवेत्तृत्वपापेनमृतभार्यत्वमाप्नुयात् ॥ तद्दोषपरिहारार्थंप्राजापत्यत्रयंतथा ॥ चांद्रायणत्रयंचैकेअनेकेद्विगुणंचरेत् ॥ एकेएकभार्यामरणेइदंप्रायश्चित्तं ॥ अनेकेअनेकभार्यामरणेतुएतत्प्रायश्चित्तंद्विगुणंचरेदित्यर्थः ॥ गणेशंपूजयेदादौपुण्याहंवाचयेद्द्विजैः ॥ दुर्गाग्निविष्णुप्रतिमाःस्थापयेत्पूजयेत्ततः ॥ त्रिभिस्तुदेवताप्रीत्यैहुनेदष्टाधिकायुतं ॥ आहुतिं चरुणाज्येनप्रतिद्रव्यैर्वसंख्यया ॥ दुर्गाग्निविष्णुमंत्रैश्चपुनःपुनरितीरितइति ॥

अथप्रयोगः ॥ सुदिनेसुस्नातोयजमानआसनेउपविश्याचम्यप्राणानायम्यदेशकालकीर्तनांतेममभृतभार्यत्वदोषनिरास-द्वाराश्रीपरमेश्वरप्रीत्यर्थंवक्ष्यमाणप्रकारेणअष्टाधिकायुतसंख्ययाचर्वाज्यहवनंकरिष्ये ॥ तत्रादौनिर्विघ्नतार्थंगणपतिपूजनं स्वस्तिपुण्याहवाचनंआचार्यादिवरणंदिग्रक्षणंपञ्चगव्यकरणंभूमिपूजनंअग्निस्थापनंकलशानांस्थापनंदुर्गाग्निविष्णुदेवतानां स्थापनंपूजनंचकरिष्येइतिक्रमेणकृत्वा ॥ देवतामंत्रास्तु ॥ अम्बेअम्बिकेइतिदुर्गां ॥ त्वन्नोअग्नेतववदेवेति अग्निं ॥ इदं-विष्णुरितिविष्णुं ॥ ततोदक्षिणतोब्रह्मासनादिपवित्रयोःप्रणीतासुनिधानांतंकृत्वान्वादध्यात् ॥ तद्यथा ॥ तत्रप्रजापतिं-इंद्रंअग्निंसोमंएताःआघाराज्यभागदेवताःएकैकयाहुत्याआज्येनअत्रप्रधानंदुर्गांअग्निंविष्णुंचस्वस्वमंत्रेणअष्टषष्टितमाधिक-षोडशशतसंख्ययाचरुहोमंतथाचपुनरत्रप्रधानदेवतानांस्वस्वमंत्रेणपूर्वोक्तसंख्ययाआज्यहोमंशेषेणस्विष्टकृतंअग्निंवायुंसूर्यंअ-ग्नीवरुणौअग्नीवरुणौपुनरग्निंवरुणंसवितारंविष्णुंविश्वान्देवान्मरुतःस्वर्कान्वरुणंआदित्यंअदितिंप्रजापतिंएदादेवताआज्येनै-कैकयाहुत्याअस्मिन्कर्मण्यहंयक्ष्ये ॥ इत्यन्वाधानं ॥ त्यागकालेअष्टोत्तरायुतसंख्याहुतिपर्याप्तंचर्वाज्यद्रव्यंयथामंत्रलिंगं-दुर्गायैअग्नयेविष्णवेचनममेतित्यागंकुर्यात् ॥ प्रथमंगणेशायवराहुतिंदत्वाअन्वाधानोक्तरीत्याहवनंकार्यं ॥ पूजास्विष्टेति क्रमेणहोमशेषंसमाप्यदशविप्रान्भोजयेदिति ॥ हवनाहुतिक्रमोयथा ॥ आज्यभागांतेपूर्वंअम्बेअम्बिकेइतिमंत्रेणदुर्गायैचर्वा हुतयः १६६८ ॥ त्वन्नोऽअग्नेइतिअग्नयेचर्वाहुतयः १६६८ ॥ इदंविष्णुरितिविष्णवेचर्वाहुतयः १६६८ अनंतरंअम्बेदुर्गा०

आज्याहुतयः १६६८ ॥ त्वन्नो० अग्नयेआज्याहुतयः १६६८ ॥ इदं० विष्णवेआज्याहुतयः १६६८ ॥ एवमेवप्रकारेणसर्वाहुतयः१०००८अष्टोत्तरायुताभवंति ॥ अथवाकस्यचिद्ब्राह्मणस्यविवाहंकुर्यात् ॥ ॥ इतिमृतभार्यत्वपरिहारोपायः ॥

अथ पुनर्विवाहः ॥ विवाहकाले यदि जन्मलग्नलग्नोडुचन्द्रग्रहदोषयुक्ते ॥ आशौचकालाद्यशुभान्विते वा पुनर्विवाहः किल तत्र कार्यः ॥ सुरापिनी व्याधियुतातिधूर्ता वन्ध्याऽर्थनाशाऽप्रियवादिनी च ॥ सुताप्रसूर्भर्तृद्रुहा मृतप्रजा विवर्जनीया पुरुषेण पत्नी ॥ सुता कन्या ॥ वन्ध्याष्टमे वा दशमे विवर्ज्या वर्षे सुतासूः शिव११सूर्ययो१२श्च ॥ पञ्चेन्दुवर्षे दशमे मृतप्रजा सुदुष्टशब्दा तु तदैव वर्ज्या ॥ दुष्टशब्दा अप्रियभाषिणी ॥ यः कामकामी नयनाभिरामां रामां द्वितीयां परिवोढुमिच्छेत् ॥ तां तोषयित्वा धनतः क्षमश्चेदुद्वाहयेत्स्त्रीमपरां सुखेन ॥ तां प्रथमां ॥ प्रीयंवदां प्रीतिकरीं सुदक्षां पुत्रप्रसूं त्यक्तुमुपक्रमेद्यः ॥ स स्वतृतीयांशधनं हि तस्यै दद्याच्च निःस्वो भरणं प्रकुर्यात् ॥ त्यक्ता पत्नी रोषिता निर्गमेच्चेत्सा रोद्धव्या पालनीया कुले स्वे ॥ वस्त्राद्यन्नाद्यं च तस्यै प्रदद्यादित्थं हेमाद्रिर्निबन्धो ब्रवीति ॥ ॥ **अनेकभार्यस्य कर्मणि ज्येष्ठाया एवाधिकारः** ॥ योऽनेकभार्योऽखिलशस्तकर्म सवर्णया साकमिह प्रकुर्यात् ॥ बह्वृचः सवर्णा यदि पूर्वया तत्सुकर्म कुर्यान्नतु तां विना सत् ॥ शस्तकर्म पुण्याहवाचनाग्निहोत्रादि ॥ इतिपुनर्विवाहः ॥

**अथ साग्नेर्द्वितीयविवाहेऽग्निनिर्णयः** ॥ **छन्दोगपरिशिष्टे कात्यायनः**—सदारोन्यान्पुनर्दारान्कथंचित्कारणान्तरात् ॥ य इच्छेदग्निमान्कर्तुं क्व होमोऽस्य विधीयते ॥ स्वेग्नावेव भवेद्धोमो लौकिके न कदाचन ॥ नह्याहिताग्नेः स्वं कर्म लौकिकेग्नौ विधीयत इति । **प्रायश्चित्ताध्याये देवपद्धतौ च**—भार्यायां विद्यमानायां द्वितीयामुद्वहेद्यदि ॥ तदा वैवाहिकं कर्म कुर्यादावसथाग्निमानित्यादि यत् तच्छंदोगविषयम् । कातीयानां तु पञ्चसु बहिःशालायां विवाहे इत्यादिसूत्रे बहिःशालाविधिनैव लौकिकाग्नेरर्थसिद्धत्वाद्विवाहादयश्चागृह्या-

ग्निविषया इति कर्कभाष्यात्तद्द्वितीयादिविवाहे च वैवाह्ये सति लौकिक इति गंगाधरभाष्याच्च लौकिकाग्नावेव होमः नावसथ्ये इति। विस्तरस्तु रुद्रकल्पद्रुमादौ द्रष्टव्यः ॥

**अथ भार्यायांविद्यमानायांद्वितीयविवाहेऽधिवेदनीयतामाह याज्ञवल्क्यः**—सुरापी व्याधिता धूर्ता वन्ध्यार्थघ्न्यप्रियंवदा ॥ स्त्रीप्रसूश्चाधिवेत्तव्या स्त्र्यन्तरं कारयेदिति ॥ ॥ **अधिवेदने कालप्रतीक्षामाह मनुः** ॥ वन्ध्याष्टमेऽधिवेत्तव्या दशमे तु मृतप्रजा॥ एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनीति ॥ ॥ **विवाहान्तरे विशेषः**—एकामुत्क्रम्य कामार्थमन्यां लब्धुं य इच्छति ॥ समर्थस्तोषयित्वार्थैः पूर्वोढामपरां वहेत् ॥ **याज्ञवल्क्यः**—आज्ञासंपादिनीं दक्षां वीरसूं प्रियवादिनीं ॥ त्यजन्दायतृतीयांशमद्रव्यो भरणं स्त्रियः ॥ सधनो धनतृतीयांशमधनोऽशनाच्छादनात्मकभरणं च दद्यादित्यर्थः ॥ ॥ **अथ स्त्रीनिधने द्वितीयपरिणयनकालमाह सिंधौ**—प्रमदामृतिवासरादितः पुनरुद्वाहविधिर्वरस्य च ॥ विषमे परिवत्सरे शुभो युगुले चापि मृतिप्रदो भवेदिति ॥

**अथ कुंभविवाहः** ॥ **अयंविषयोगेसमुत्पन्नकन्यावैधव्ययोगहरः** ॥ तत्र विषयोगस्त्रिविधः—सूर्यभौमार्किवारेषु तिथिभद्राशताभिधम् ॥ आश्लेषाकृत्तिकानांगे तत्र जाता विषाङ्गना ॥ जनुर्लग्ने रिपुक्षेत्रसंस्थितः पापखेचरः ॥ द्विसाम्यमपि योगेऽस्मिन्संजाता विषकन्यका ॥ लग्ने शनैश्चरो यस्याः सुतेऽर्किर्नवमे कुजः ॥ विशाख्या सापि नोद्वाह्या त्रिविधा विषकन्यका ॥ **तद्दोषपरिहारोपायः**—सावित्र्यादिव्रतं कृत्वा वैधव्यविनिवृत्तये ॥ अश्वत्थादिभिरुद्वाह्या दद्यात्तां चिरजीविने इति ॥ **अन्यच्च**—बालवैधव्ययोगे तु कुम्भद्रुप्रतिमादिभिः ॥ कृत्वा लग्नं ततः पश्चात्कन्योद्वाह्येति चापरे ॥ कुम्भः प्रसिद्धः ॥ द्रुप्रतिमेति स्वर्णमयाश्वत्थद्रुमप्रतिमा ॥ तैः सहानूढाकन्योद्वाह्या ॥ **अत्र पुनर्भूदोषो न** ॥ **उक्तंच विधानखण्डे**—स्वर्णद्रुपिप्पलानां च प्रतिमा विष्णुरूपिणी ॥ तया सह विवाहे

तु पुनर्भूत्वं न जायते ॥ सूर्यारुणसंवादे—विवाहात्पूर्वकाले तु चन्द्रताराबलान्विते ॥ कुम्भं संस्थाप्य विधिवत्तत्र द्रुप्रतिमां यजेत् ॥ मधुपर्कादिकं दत्वा तदग्रे कन्यकां नयेत् ॥ विवाहोक्तेन मन्त्रेण कुम्भेन सह चोद्वहेत् ॥ सूत्रेण वेष्टयेत्पश्चाद्दशतन्तुविधानतः ॥ कुङ्कुमालंकृतं देहं तयोरेकान्तमन्दिरे ॥ ततः कुम्भं च निःसार्य प्रभज्य सलिलाशये ॥ ततोऽभिषेचनं कुर्यात्पञ्चपल्लववारिभिः ॥ ततोऽलंकारवस्त्राढ्यां वराय प्रतिपादयेदिति ॥

अथप्रयोगः ॥ कर्ताविष्णुमंदिरेगत्वाआसनेप्राङ्मुखउपविश्य ॥ आचमनादिदेशकालकीर्तनांते अस्याःममकन्यायाःनक्षत्रादियोगेनग्रहयोगेनपुनर्भूदोषाभावेनचविषाख्ययोगसंभववैधव्यारिष्टपरिहारार्थंश्रीपर० कुंभविवाहंकरिष्ये ॥ तत्रादौगणपतिपूजनादिनांदीश्राद्धान्तंकृत्वाचार्यंवृत्वा ॥ ततस्तण्डुलाष्टदलेमहीद्यौरित्यादिक्रमेणकलशंप्रतिष्ठाप्यपूर्णपात्रंनिधायवस्त्रयुग्मेनसंवेष्ट्यतत्रवरुणंसंपूज्य ॥ तत्राग्न्युत्तारणप्राणप्रतिष्ठापूर्वकंस्वर्णमयविष्णुरूपाश्वत्थद्रुमप्रतिमांप्रतिष्ठाप्यषोडशोपचारैःसंपूज्यप्रार्थयेत् ॥ तत्रमन्त्रः ॥ वरुणाङ्गस्वरूपायजीवनानांसमाश्रय ॥ पतिंजीवयकन्यायाश्चिरंपुत्रसुखंकुरु ॥ देहिविष्णोवरंदेवकन्यांपालयदुःखतइति ॥ ततोमधुपर्कवस्त्रालंकारार्पणं ॥ अन्तःपटंकन्याकुम्भांतरालेधृत्वामङ्गलपद्याष्टकंपठित्वा ओंप्रतिष्ठेत्यन्तःपटंनिःसार्य कन्यायैवस्त्रोपवस्त्रमङ्गलतंतुबन्धनसमीक्षणान्तंमन्त्रपठनेनदत्वा ॥ दशावरंअधस्तादुपरिचकुंभंकन्यांचपरित्वेत्यनुवाकेनसूत्रंसंवेष्ट्य कुम्भस्थविष्णवेकन्यांसमर्पयेत् ॥ मन्त्रस्तु ॥ गौरींकन्यामिमांश्लक्ष्णांयथाशक्तिविभूषितां ॥ ददामिविष्णवेतुभ्यंसौभाग्यंदेहिसर्वदा ॥१॥ विष्णुरूपिणेश्वत्थकुंभायेमांकन्यांश्रीरूपिणींसंप्रददेइतिसम-

र्पयेत् ॥ ततोवेष्टितसूत्रात्कुंभंनिःसार्यजलेप्रमज्य ॥ ततआचार्यःशुद्धजलेनऐन्द्रवारुणपावमानीयमन्त्रैःपल्लवेनकन्यामभि-
षिच्यशुद्धवाससीपरिधाप्यवैवाह्यवस्त्रादिकंसर्वमाचार्यायदद्यात् ॥ अनघाद्याहमस्मीतितित्रिवारंकन्यावदेत् ॥ एवमस्त्विति
द्विजोब्रूयात् ॥ आचार्यायवरंदत्वातस्मादाशिषोगृहीत्वाकर्मेश्वरायार्पयेत् ॥ इतिकुंभविवाहः ॥ ॥ अथ विष्णुमूर्ति-
दानं बालवैधव्यहरं ॥ तत्प्रकारोनारदेनोक्तः—ब्राह्मणं साधुमामन्त्र्य संपूज्य विविधार्हणैः ॥ तस्मै दद्याद्विधानेन वि-
ष्णोर्मूर्तिंचतुर्भुजां ॥ शुद्धवर्णसुवर्णेन पलैकां च सुलक्षणां ॥ तदर्धेनतदर्धेनवित्तशक्त्यनुसारतः ॥ निर्मितां रुचिरां शङ्ख-
गदाचक्राब्जसंयुतां ॥ दधानां वाससी पीते कुमुदोत्पलमालिकां ॥ सदक्षिणां च तां दद्यान्मन्त्रमेतमुदीरयेदिति ॥ प्रयो-
गस्तु ॥ देशकालकीर्तनांतेममवैधव्यारिष्टनिरसनार्थंअखंडसौभाग्यप्राप्तयेचविष्णुप्रतिमादानंकरिष्ये ॥ ताम्रपात्रंतंदुलै-
रापूर्यतदुपरिस्वर्णमयींकृताग्न्युत्तारणप्राणप्रतिष्ठांविष्णुप्रतिमांचतुर्भुजायुधान्वितांप्रतिष्ठाप्यषोडशोपचारैःपूजयेत् ॥ पू-
जाकालेपीतांबरादिवस्त्राणिकुंडलाद्यलंकारान् कुमुदादिपुष्पमालाश्चार्पयित्वाप्रणमेत् ॥ भगवन्कमलाकान्तसर्वमंगलदा-
यक । हत्वासर्वाण्यरिष्टानिसौभाग्यंचाभिवर्धय ॥ १ ॥ इतिसंप्रार्थ्य ॥ प्रतिगृहीतारंब्राह्मणंसंपूज्यार्चितप्रतिमांसोपस्क-
रांदद्यात् ॥ दानमन्त्रस्तु ॥ यन्मयाप्राच्यजनुषिघ्नंत्यापतिसमागमं ॥ विषोपविषशस्त्राद्यैर्हतोवातिसुरक्तया ॥ प्राप्य-
मानंमहाघोरंयशःसौख्यधनापहं ॥ वैधव्याद्यतिदुःखौघंनाशयसुखलब्धये ॥ बहुसौभाग्यदात्रींचमहाविष्णोरिमांतनुं ॥
सौवर्णींप्रतिमांशक्त्यातुभ्यंसंप्रददेद्विज ॥ १ ॥ इमांमयार्चितांविष्णुप्रतिमांसोपस्करांवैधव्यारिष्टनिरासार्थंअखंडसौभा-

ग्यप्रासयेचअमुकशर्मणेब्राह्मणायतुभ्यमहंसंप्रददेइतिदत्वा ॥ यथाशक्तिसुवर्णदक्षिणांदत्वातस्मादाशिषोगृहीत्वा ॥ कन्याअनघाद्याहमस्मीतित्रिर्वदेत् ॥ एवमस्त्वितिविप्रोक्तिंगृहीत्वा ब्राह्मणान्भोजयेत् ॥ इतिविष्णुप्रतिमादानम् ॥

अथार्कविवाहः ॥ धर्माब्धौ—तृतीया मानुषीकन्या नोद्वाह्या म्रियते हि सा ॥ विधवा वा भवेत्तस्मात्तृतीयेऽर्कं समुद्वहेत् ॥ संग्रहे—चतुर्थादिविवाहार्थं तृतीयेऽर्कं समुद्वहेत् ॥ आदित्यदिवसे वापि हस्तर्क्षे वा शनैश्चरे ॥ शुभेदिने वा पूर्वाह्णे कुर्यादर्कविवाहकम् ॥ इति ॥ अथप्रयोगः ॥ तत्रक्रियमाणविवाहात्प्राक्चतुष्टयदिनाधिकव्यवहितेरविवारेशनिवारेवाहस्तनक्षत्रेशुभदिवसेग्रामात्प्राच्यामुदीच्यांवासुपुष्पफलयुतमर्कंगत्वातस्याधस्ताद्भागेस्थंडिलंविरच्य॥अर्कस्यपश्चिमतउपविश्य । आचमनं । प्राणायामः । पवित्रधारणं । देशकालौसंकीर्त्यममतृतीयमानुषीविवाहजन्यदोषपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थंतृतीयमर्कविवाहंकरिष्ये ॥ तदंगत्वेनस्वस्तिपुण्याहवाचनंमातृकापूजनंवसोर्धारापूजनंआयुष्यमंत्रजपंनांदीश्राद्धंआचार्यवरणंचकरिष्ये ॥ तत्रादौनिर्विघ्नार्थंगणपतिपूजनंक॰॥ नांदीश्राद्धंहेम्नाकर्तव्यं ॥ नांदीश्राद्धांतंकृत्वा आचार्यवरणं॥ आचार्यप्रार्थनं—कन्यापितायथासूर्योदेवानांचप्रजापतिः ॥ तथात्वमर्कप्रदानार्थमाचार्यत्वंकुरुप्रभो ॥ आचार्यस्तुयथा॰॥ यावत्कर्मसमाप्येततावत्त्वंसंनिधोभव ॥ ततआचार्योवरंस्वशाखयामधुपर्केणार्चयेत् ॥ शुभपुण्यतिथौअर्कविवाहार्थमागतंवरंमधुपर्केणार्चयिष्ये ॥ॐसा-

१ यदिजीवद्द्वितीयपत्नीकस्तृतीयापरिणयतितदाबदरीमातुलिंगीदाडिमीधात्रीषुमध्येकयाचिदेकयासहकर्तव्यंविधानंनत्वर्कयेतिनिश्चय इतिविधानमालायाम् ॥

घुभवता० तं ॥ ॐअर्चय ॥ इत्यादिअलंकरणमसिभूयोलंकरणंभूयादित्यलंकुर्यात् ॥ ततोवरः अर्कस्यपुरतःस्थित्वा ॥ त्रिलोकवासिन्सप्ताश्वछाययासहितोरवे ॥ तृतीयोद्वाहजंदोषंनिवारयसुखंकुरु ॥ इत्यर्कंप्रार्थ्य ॥ आकृष्णेनेति मन्त्रेणछाया सहितंसूर्यमर्कआवाहयेत् ॥ ॐआकृष्णेनरजसा० पश्यन् ॥ ॐभूर्भुवःस्वःछायासहितसूर्यायनमःछायासहितसूर्यमावा-हयामि ॥ ततअर्कंश्वेतवस्त्रेणसूत्रेणचावेष्ट्यषोडशोपचारैःपूजयेत् ॥ तत्रनैवेद्यंगुडौदनः ॥ आपोहिष्ठेतितिसृभिर्मन्त्रैरभिषि-च्यप्रदक्षिणीकुर्वन्प्रार्थयेत् ॥ ममप्रीतिकरायेयंमयास्पृष्टापुरातनी ॥ अर्कजाब्रह्मणासृष्टाह्यस्माकंपरिरक्षतु ॥ इतिप्रदक्षि-णीकुर्वन्जपेत् ॥ नमस्तेमंगलेदेविनमःसवितुरात्मजे ॥ त्राहिमांकृपयादेविपत्नीत्वंमइहागता ॥ कातीयानांवेद्यांअग्नि-प्रतिष्ठापूर्वकंविवाहउच्यतेअतःकारणादत्रउत्तरदिग्भागेसंपादितेस्थंडिलेपञ्चभूसंस्कारपूर्वकमग्निंप्रतिष्ठाप्यततःप्रत्यङ्मुखोवर-स्तिष्ठन्नर्कंप्रार्थयेत् ॥ अर्कत्वंब्रह्मणासृष्टःसर्वप्राणिहितायच ॥ वृक्षाणामादिभूतस्त्वंदेवानांप्रीतिवर्धनः ॥ तृतीयोद्वाहजंदो-षंमृत्युंचाशुविनाशय ॥ इतिप्रार्थना ॥ ततःअंतःपटंधृत्वाद्विजैर्मंगलाष्टकानिपठितव्यानि ॥ तदेवलग्नान्तेअंतःपटमुदग-पसार्यअर्कस्योपरिअक्षतान्क्षिपेत् । ततःप्राङ्मुखोर्कसमीपेतिष्ठेत् ॥ देशकालौसंकीर्त्यशुभपुण्यतिथौतृतीयोद्वाहानिष्टदोषप-रिहारद्वाराश्रीसवितृसूर्यनारायणप्रीत्यर्थंब्राह्मविवाहविधिनाआर्कींकन्यादानमहंकरिष्ये ॥ वरहस्तेशिवाआपःसन्तु० तृती-योद्वाहजदोषपरिहारोऽस्तु ॥ वरस्यगोत्रोच्चारः ॥ भारद्वाजगोत्रस्य आंगिरसबार्हस्पत्यभारद्वाजेतित्रिप्रवरस्यरुद्रदत्तश-र्मणःप्रपौत्रायविष्णुदत्तशर्मणःपौत्रायब्रह्मदत्तशर्मणःपुत्राययज्ञेशशर्मणेवराय ॥ काश्यपगोत्रस्य काश्यपवत्सारनैध्रुवेतित्रि-

प्रवरस्यआदित्यस्यप्रपौत्रीं सवितुःपौत्रींसूर्यस्यपुत्रींआर्कीनाम्नीमिमांकन्यांसूर्यदैवत्यांश्रीसवितृसूर्यनारायणप्रीत्यर्थंअमुकशाखाध्यायिनेतुभ्यंभार्यात्वेनाहंसंप्रददे ॥ इत्युक्त्वासकुशजलंवरहस्तेक्षिपेत् ॥ ॐअर्ककन्यामिमांविप्रयथाशक्तिविभूषितां ॥ गोत्रायशर्मणेतुभ्यंदत्तांविप्रसमाश्रय ॥ इतिदानमन्त्रः ॥ कृतार्कदानसांगतासिद्ध्यर्थंइमांदक्षिणांतुभ्यमहंसंप्रददे ॥ स्वस्तीतिवरोब्रूयात् ॥ ततोवरःअर्कोपरिगंधाक्षतपुष्पयुतोदकपूर्णांस्त्रीनंजलीन्दद्यात् ॥ तत्रमन्त्राः ॥ ॐयज्ञोमेकामःसमृध्यतां ॥ ॐधर्मोमेकामःसमृध्यतां ॥ ॐयशोमेकामःसमृध्यतां ॥ इत्यञ्जलिदानं ॥ ततोगायत्र्यापरित्वेत्यादिनावापञ्चावृतासूत्रेणार्कमावेष्टयेत् ॥ तत्सूत्रंपुनःपंचगुणंकृत्वाअर्कस्यदक्षिणस्कंधं बृहत्सामेतिमन्त्रेणयदाबध्नन्निितिमन्त्रेण वारक्षार्थंबध्नीयात् ॥ ॐबृहत्सामक्षत्रभृद्वृद्धवृष्ण्यंत्रिष्टुभौजःशुभितमुग्रवीरं ॥ इंद्रस्तोमेनपंचदशेनमध्यमिदंवातेनसगरेणरक्ष ॥ ॐयदाबध्नन्० इतिवा ॥ ततोऽर्कस्यदिक्षुविदिक्षुचअष्टौकुंभान्संस्थाप्यवस्त्रेणत्रिसूत्रेणचावेष्ट्यहरिद्रागंधाद्यंतःक्षिप्त्वा तेषुनाम्नामहाविष्णुमावाह्यपोडशोपचारैःपूजयेत् । दक्षिणतोब्रह्मासनास्तरणादिपर्युक्षणांते ॥ ॐप्रजापतयेस्वाहा० । ॐइंद्रायस्वा० । ॐअग्नयेस्वा० ॥ ॐसोमायस्वा० ॥ आज्यभागांते ॥ संगोभिरित्यस्यांगिरसोबृहस्पतिस्त्रिष्टुप् अर्कविवाहांगभूताज्यहोमेविनियोगः ॥ ॐसंगोभिरांगिरसोनक्षमाणोभगइवेदर्यमणंनिनाय ॥ जनेमित्रोनदंपतीअनक्तिबृहस्पतेवाजयाशूंरिवाजौस्वाहा ॥ इदंबृहस्पतयेनमम ॥ यस्मैत्वेत्यस्यवामदेवोऽग्निस्त्रिष्टुप् अर्कविवाहांगभूताज्यहोमेविनि० ॥ ॐयस्मैत्वाकामकामायवयंसम्राड्यजामहे ॥ तमस्मभ्यंकामंदत्वाथेदंघृतंपिबस्वाहा ॥ इदमग्नयेनमम ॥ ततोव्यस्तसम-

स्तव्याहृतिभिः ॥ ॐभूःस्वाहा इदमग्नये न० ॥ ॐभुवःस्वाहा इदंवायवे० ॥ ॐस्वःस्वाहा इदंसूर्याय० ॥ ॐभूर्भुवःस्वः-
स्वाहा इदंप्रजापतये० ॥ ततोभूराद्याःप्राजापत्यंतानवाहुतयः ॥ ततःस्विष्टकृत् ॥ संस्रवप्राशनं ॥ पवित्राभ्यांमार्जनं ॥
अग्नौपवित्रप्रतिपत्तिः ॥ ब्रह्मणेपूर्णपात्रदानं ॥ कृतस्यअर्कविवाहाख्यस्यकर्मणःसांगतासिद्ध्यर्थंब्रह्मन्निदंपूर्णपात्रंदक्षिणा-
त्वेनतुभ्यमहंसंप्रददे ॥ प्रणीताविमोकः ॥ ॐआपःशिवाः० ॥ अथार्कंप्रदक्षिणीकृत्यप्रार्थयेत् ॥ मयाकृतमिदंकर्मस्थाव-
रेषुजरायुणा ॥ अर्कापत्यानिनोदेहितत्सर्वंक्षंतुमर्हसि ॥ इतिसंप्रार्थ्य ॥ ऋचंवाचमितिशांतिसूक्तंजप्त्वाआचार्यायगोयुग्म-
दानं ॥ ततोदशाष्टौवाब्राह्मणान्भोजयेत् ॥ भूयसीसंकल्पः ॥ उपस्करणंसर्वंसाचार्याययद्यात् ॥ कुंभेषुमहाविष्णुंसंपू-
ज्यविसृजेत् ॥ अग्निविसर्जनं ॥ अनेनयथाज्ञानेनकृतेनअर्कविवाहनेश्रीसवितृसूर्यनारायणःप्रीयताम् ॥ तेनतृतीयमानुषी-
विवाहजन्यदोषापनोदोभवतु ॥ यस्यस्मृत्या० नमः ३ ॥ मधुपर्ककालेस्वधृतवस्त्राणिगुरवेदत्वाअन्यानिधारयेत् ॥ इति
प्रयोगदर्पणधर्माब्धिनिर्णयसिन्ध्वनुसारेणार्कविवाहः ॥ इति शुक्लयजुःशाखीयकर्मकांडप्रदीपेसंस्कारप्रकरणंसमाप्तं ॥



# अथाह्निकाचारप्रकरणम् ॥ ३ ॥

श्रीगणेशाय नमः ॥ अथसंस्कारप्रकरणोत्तरंक्रमप्राप्तमाह्निकाचारप्रकरणमारभ्यते ॥ तत्र प्रातःकर्तव्यमाहदक्षः—प्रातरुत्थायकर्तव्यंयद्द्विजेनदिनेदिने । तत्सर्वंसंप्रवक्ष्यामिद्विजानामुपकारकम् ॥ उदयास्तमयंयावन्नविप्रःक्षणिकोभवेत् । नित्यनैमित्तिकैर्युक्तःकाम्यैश्चान्यैरगर्हितैरिति ॥ आश्वलायनः—अथोच्यतेगृहस्थस्यनित्यकर्मयथाविधि ॥ यत्कृत्वानृण्यमाप्नोतिदैवात्पित्र्याच्चमानुषात् ॥ अथात्रब्राह्ममुहूर्तादास्वापंकर्माण्युच्यन्ते ॥ ब्राह्मोमुहूर्तश्चद्वेधा-अन्त्ययामात्मकोरात्रेरुपान्त्यमुहूर्तश्च । मनुः—ब्राह्मेमुहूर्तेबुध्येतधर्मार्थौचानुचिन्तयेत् ॥ कायक्लेशांश्चतन्मूलान्वेदतत्त्वार्थमेवच॥ इति ॥ वेदस्यतत्वार्थं ब्रह्मकर्मात्मकमित्यर्थः ॥ अत्रस्मरणीयमाहव्यासः—

प्रातःस्मरणम् ॥ तत्रादौभारतसावित्रीपाठः—महर्षिर्भगवान्व्यासः कृत्वेमां संहितां पुरा ॥ श्लोकैश्चतुर्भिर्धर्मात्मा पुत्रमध्यापयच्छुकं ॥ १ ॥ मातापितृसहस्राणि पुत्रदारशतानि च ॥ संसारेष्वनुभूतानि यान्ति यास्यन्ति चापरे ॥ २ ॥ हर्षस्थानसहस्राणि भयस्थानशतानि च ॥ दिवसेदिवसे मूढमाविशन्ति न पण्डितं ॥ ३ ॥ ऊर्ध्वबाहुर्विरौम्येष नच कश्चिच्छृणोति मे ॥ धर्मादर्थश्च कामश्च स किमर्थ न सेव्यते ॥४॥ न जातु कामान्न भयान्न लोभाद्धर्मं त्यजेज्जीवितस्यापि हेतोः ॥ धर्मो नित्यः सुखदुःखे त्वनित्ये जीवो नित्यो हेतुरस्य

---

१ अस्य लक्षणं विष्णुपुराणे—रात्रेः पश्चिमयामस्य मुहूर्तो यस्तृतीयकः । स ब्राह्म इति विज्ञेयो विहितः स प्रबोधने ॥ पञ्चपञ्च उष काल सप्तपञ्चारुणोदयः । अष्टपञ्च भवेत्प्रातस्तत सूर्योदय स्मृतः ॥ इति ।

त्वनित्यः ॥ ५ ॥ इमां भारतसावित्रीं प्रातरुत्थाय यः पठेत् ॥ स भारतफलं प्राप्य परं ब्रह्माधिगच्छति ॥ ६ ॥ यो गोशतं कनकशृङ्ग-
मयं ददाति विप्राय वेदविदुषे च बहुश्रुताय ॥ पुण्यां च भारतकथां शृणुयाच्च नित्यं तुल्यं फलं भवति तस्य च तस्य चैव ॥ ७ ॥ ॥
॥ **प्रातःस्मरणे विशेषः** ॥ प्रातरारभ्य सायान्तं सायान्तात्प्रातरेव च ॥ यत्करोमि जगन्नाथ तदस्तु तव पूजनम् ॥ १ ॥ यत्रैव
यत्रैव मनो मदीयं तत्रैव तत्रैव तव स्वरूपम् ॥ यत्रैव यत्रैव शिरो मदीयं तत्रैव तत्रैव पदद्वयं ते ॥ २ ॥ त्वत्पदसरसिजसेवाहीनं दीनं
सदा पराधीनं ॥ तारय तारय कृपया भवभयभीतं परेश परिपाहि ॥ ३ ॥ महादेव महादेव महादेवेति यो वदेत् ॥ एकेनैव भवेन्मोक्षो
द्वाभ्यां शंभुर्ऋणी भवेत् ॥ ४ ॥ महादेव महादेव महादेवेति वादिनम् ॥ वत्सं गौरिव गौरीशो धावन्तमनु धावति ॥ ५ ॥
**अथ भानोःश्लोकाः सद्धर्मचिन्तामणौ** ॥ ॥ प्रातःस्मरामिखलुतत्सवितुर्वरेण्यंरूपंहिमण्डलमृचोऽथतनुर्यजूंषि ॥ सामानियस्यकि-
रणाःप्रभवादिहेतुंब्रह्माहरात्मकमलक्ष्यमचिन्त्यरूपम् ॥ १ ॥ प्रातर्नमामि तरणिं तनुवाङ्मनोभिर्ब्रह्मेन्द्रपूर्वकसुरैर्नुतमर्चितंच ॥ वृष्टिप्रमोचन-
विनिग्रहहेतुभूतंत्रैलोक्यपालनपरंत्रिगुणात्मकंच ॥ २ ॥ प्रातर्भजामिसवितारमनन्तशक्तिंपापौघशत्रुभयरोगहरंपरंच ॥ तंसर्वलोककलना-
त्मककालमूर्तिंगोकण्ठबन्धनविमोचनमादिदेवम् ॥३॥ श्लोकत्रयमिदंभानोःप्रातःप्रातःपठेत्तुयः ॥ ससर्वव्याधिनिर्मुक्तःपरंसुखमवाप्नुयात् ॥४॥
॥ **अथविघ्नेशस्यप्रा०स्म०** ॥ प्रातःस्मरामिगणनाथमनाथबन्धुंसिन्दूरपूरपरिशोभितगण्डयुग्मम् ॥ उद्दण्डविघ्नपरिखण्डनचण्डदण्डमाख-
ण्डलादिसुरनायकवृन्दवन्द्यम् ॥ १ ॥ प्रातर्नमामिचतुराननवन्द्यमानमिच्छानुकूलमखिलंचवरंददानम् ॥ तंतुन्दिलंद्विरसनप्रिययज्ञसूत्रंपुत्रं
विलासचतुरंशिवयोःशिवाय ॥ २ ॥ प्रातर्भजाम्यभयदंखलुभक्तशोकदावानलंगणविभुंवरकुञ्जरास्यम् ॥ अज्ञानकाननविनाशनहव्यवाहमु-
त्साहवर्धनमहंसुतमीश्वरस्य ॥ ३ ॥ श्लोकत्रयमिदंपुण्यंसदासाम्राज्यदायकम् ॥ प्रातरुत्थायसततंयःपठेत्प्रयतःपुमान् ॥ ४ ॥ ॥ अथ

देव्याः स० चि० ॥ प्रातःस्मरामिशरदिन्दुकरोज्ज्वलाभांसद्रत्नवत्सकलकुण्डलहारशोभाम् ॥ दिव्यायुधोर्जितसुनीलसहस्रहस्तारक्तोत्पलाभच-
रणांभवतींपरेशाम् ॥ १ ॥ प्रातर्नमामिमहिषासुरचण्डमुण्डशुम्भासुरप्रमुखदैत्यविनाशदक्षाम् ॥ ब्रह्मेन्द्ररुद्रमुनिमोहनशीललीलांचण्डींसम-
स्तसुरमूर्तिमनेकरूपाम् ॥ २ ॥ प्रातर्भजामिभजतामखिलार्थदात्रींधात्रींसमस्तजगतांदुरितापहत्रीम् ॥ संसारबन्धनविमोचनहेतुभूतांमायां-
परांसमधिगम्यपरस्यविष्णोः ॥ ३ ॥ श्लोकत्रयमिदंदेव्याश्चण्डिकायाःपठेन्नरः ॥ सर्वान्कामानवाप्नोतिविष्णुलोकेमहीयते ॥ ४ ॥ ॥
**अथशिवस्यस० चि०** ॥ प्रातःस्मरामिभवभीतिहरंसुरेशंगङ्गाधरंवृषभवाहनमम्बिकेशम् ॥ खट्वाङ्गशूलवरदाभयहस्तमीशंसंसाररोगह-
रमौषधमद्वितीयम् ॥ १ ॥ प्रातर्नमामिगिरिशंगिरिजार्धदेहंसर्गस्थितिप्रलयकारणमादिदेवम् ॥ विश्वेश्वरंविजितविश्वमनोभिरामंसंसाररोग०
॥ २ ॥ प्रातर्भजामिशिवमेकमनन्तमाद्यंवेदान्तवेद्यमनघंपुरुषंमहान्तम् ॥ नामादिभेदरहितंषड्भावशून्यंसंसार० ॥ ३ ॥ प्रातःसमुत्थाय-
शिवंविचिन्त्यश्लोकत्रयंयेऽनुदिनंपठन्ति ॥ तेदुःखजातंबहुजन्मसंचितंहित्वापदंयान्तितदेवशंभोः ॥ ४ ॥ ॥ **अथविष्णोराचारम-**
**यूखे** ॥ प्रातःस्मरामिभवभीतिमहार्तिशान्त्यैनारायणंगरुडवाहनमब्जनाभम् ॥ ग्राहाभिभूतवरवारणमुक्तिहेतुंचक्रायुधंतरुणवारिजपत्र-
नेत्रम् ॥ १ ॥ प्रातर्नमामिमनसावचसाचमूर्ध्नापादारविन्दयुगुलंपरमस्यपुंसः ॥ नारायणस्यनरकार्णवतारणस्यपारायणप्रवणविप्रपरायणस्य
॥ २ ॥ प्रातर्भजामिभजतामभयंकरंतंप्राक्सर्वजन्मकृतपापभयापहत्यै ॥ योग्राहवक्त्रपतिताङ्घ्रिगजेन्द्रघोरशोकप्रणाशमकरोद्धृतशङ्खचक्रः
॥ ३ ॥ श्लोकत्रयमिदंविष्णोःप्रातःकालेपठेत्तुयः ॥ लोकत्रयगुरुस्तस्मैदद्यादात्मपदंहरिः ॥ ४ ॥ ॥ **अथरामचन्द्रस्य आह्निक-**
**कर्मप्रकाशे** ॥ प्रातःस्मरामिरघुनाथमुखारविन्दंमन्दस्मितंमृदुलभाषिविशालभालम् ॥ कर्णावलम्बिचलकुण्डलशोभिगण्डंकर्णान्तदी-
र्घनयनंनयनाभिरामम् ॥ १ ॥ प्रातर्नमामिरघुनाथकरारविन्दंरक्षोगणायभयदंवरदंनिजेभ्यः ॥ यद्राजसंसदिविभज्यमहेशचापंसीताकरग्रह-

णमङ्गलमापसद्यः ॥ २ ॥ प्रातर्भजामिरघुनाथपदारविन्दंपद्माङ्कुशादिशुभरेखिसुखावहंमे ॥ योगीन्द्रमानसमधुव्रतसेव्यमानंशापापहंसपदि-
गौतमधर्मपत्न्याः ॥ ३ ॥ प्रातर्वदामिवचसारघुनाथनामवाग्दोषहारिसकलंशमलंकरोति ॥ यत्पार्वतीस्वपतिनासहभोक्तुकामाप्रीत्यासह-
स्रहरिनामसमंजजाप ॥ ४ ॥ प्रातःश्रयेश्रुतिनुतांरघुनाथमूर्तिंनीलाम्बुदोत्पलसितेतररत्ननीलाम् ॥ आमुक्तमौक्तिकविशेषविभूषणाढ्यांध्येयां-
समस्तमुनिभिर्जनमुक्तिहेतुम् ॥ ५ ॥ यःश्लोकपञ्चकमिदंप्रयतःपठेत्तुनित्यंप्रभातसमयेपुरुषःप्रबुद्धः ॥ श्रीरामकिंकरजनेषुसएवमुख्योभूत्वा-
प्रयातिहरिलोकमनन्यलभ्यम् ॥ ६ ॥ ॥ **ब्रह्मादिस्तुतिः** ॥ ॥ ब्रह्मामुरारिस्त्रिपुरान्तकारीभानुःशशीभूमिसुतोबुधश्च ॥ गुरुश्चशुक्रः-
शनिराहुकेतव कुर्वन्तुसर्वेममसुप्रभातम् ॥ १ ॥ भृगुर्वसिष्ठःक्रतुरङ्गिराश्चमनुःपुलस्त्यःपुलहश्चगौतमः ॥ रैभ्योमरीचिश्च्यवनश्चदक्षःकुर्वन्तु०
॥ २ ॥ सनत्कुमारःसनकःसनन्दनःसनातनोऽप्यासुरिपिङ्गलौच ॥ सप्तस्वराःसप्तरसातलानिकुर्वन्तु० ॥ ३ ॥ सप्तार्णवाःसप्तकुलाचलाश्च-
सप्तर्षयोद्वीपवनानिसप्त ॥ भूरादिकृत्वाभुवनानिसप्तकुर्वन्तु० ॥ ४ ॥ पृथ्वीसगन्धासरसास्तथापःस्पर्शीचवायुर्ज्वलनःसतेजाः ॥ नभःसशब्दं-
महतासहैवकुर्वन्तु० ॥ ५ ॥ इत्थंप्रभातेपरमंपवित्रंपठेत्स्मरेद्वाशृणुयाच्चतद्वत् ॥ दुःस्वप्ननाशस्त्विहसुप्रभातंभवेच्चनित्यंभगवत्प्रसादात् ॥ ६ ॥
**पुण्यश्लोकस्मरणं** ॥ वैन्यंपृथुंहैहयमर्जुनंचशाकुंतलेयंभरतंनलंच ॥ रामंचयोवैस्मरतिप्रभातेतस्यार्थलाभोविजयश्चहस्ते ॥ १ ॥ बलिर्वि-
भीषणोभीष्मःप्रह्लादोनारदोध्रुवः ॥ षडेतेवैष्णवाःप्रोक्ताःस्मरणंपापनाशनम् ॥ २ ॥ अश्वत्थामाबलिर्व्यासोहनूमांश्चविभीषणः ॥ कृपःपर-
शुरामश्चसप्तैतेचिरजीविनः ॥ ३ ॥ सप्तैतान्संस्मरेन्नित्यंमार्कण्डेयमथाष्टमम् ॥ जीवेद्वर्षशतंसाग्रमपमृत्युविवर्जितः ॥ ४ ॥ अहल्याद्रौपदी-
सीतातारामन्दोदरीतथा ॥ पञ्चकंनास्मरेन्नित्यंमहापातकनाशनम् ॥ ५ ॥ कर्कोटकस्यनागस्यदमयन्त्यानलस्यच ॥ ऋतुपर्णस्यराजर्षेःकीर्तनं-
कलिनाशनम् ॥ ६ ॥ धर्मोविवर्धतियुधिष्ठिरकीर्तनेनपापंप्रणश्यतिवृकोदरकीर्तनेन ॥ शत्रुर्विनश्यतिधनंजयकीर्तनेनमाद्रीसुतौकथयतांनभव-

न्तिरोगाः ॥ ७ ॥ पुण्यश्लोकोनलोराजापुण्यश्लोकोयुधिष्ठिरः ॥ पुण्यश्लोकाचवैदेहीपुण्यश्लोकोजनार्दनः ॥ ८ ॥ विश्वेशंमाधवंढुण्ढिदण्ड-
पाणिंचभैरवम् ॥ वन्देकाशींगुहांगङ्गांभवानींमणिकर्णिकाम् ॥ ९ ॥ इत्यादिपौराणश्लोकान्पठित्वा प्रातरग्निमित्यादिमन्त्रान्पठेत् ॥

हरिः ॐप्रातरग्निंप्रातरिन्द्र॑ᳬहवामहेप्रातर्मित्रावरुणाप्रातरश्विना । प्रातर्भगंपूषणंब्रह्मणस्पतिंप्रातःसोमसुतरुद्र॑ᳬहुवेम
॥ १ ॥प्रातर्जितंभगमुग्र॑ᳬहुवेमवयंपुत्रमदितेर्योविधर्ता ॥ आध्रश्चिद्यंमन्यमानस्तुरश्चिद्राजाचिद्यंभगंभक्षीत्याह ॥ २ ॥
भगप्रणेतर्भगसत्यराधोभगेमांधियमुदवाददन्नः ॥ भगप्रणोजनयगोभिरश्वैर्भगप्रनृभिर्नृवन्तःस्याम ॥ ३ ॥ उतेदानींभग-
वंतःस्यामोतप्रपित्वउतमध्येअह्नाम् ॥ उतोदितामघवन्त्सूर्यस्यवयंदेवाना॑ᳬसुमतौस्याम ॥ ४ ॥ भगऽएवभगवाँऽअस्तु-
देवास्तेनवयंभगवंतःस्याम । तंत्वाभगसर्वऽइज्जोहवीतिसनोभगपुरऽएताभवेह ॥ ५ ॥ समध्वरायोषसोनमंतदधिक्रा-
वेवशुचयेपदाय । अर्वाचीनंवसुविदंभगंनोरथमिवाश्वावाजिनऽआवहंतु ॥ ६ ॥ अश्वावतीर्गोमतीर्नऽउषासोवीरवतीः-
सदमुच्छन्तुभद्राः ॥ घृतंदुहानाविश्वतःप्रपीतायूयंपातस्वस्तिभिःसदानः ॥ ७ ॥ इतिप्रातःस्मरणं संपूर्णम् ॥

प्रातर्दर्शनीयाः । **नागदेवः**—श्रोत्रियं सुभगां गां च वह्निमग्निचितं तथा । प्रातरुत्थाय यः पश्येदापद्भ्यः स प्रमुच्यते ॥ भार-
द्वाजमयूराणा चाषस्य नकुलस्य च । प्रभाते दर्शनं श्रेष्ठं वामपृष्ठे विशेषतः ॥ ॥ **अथ दर्शनानर्हानाह**—पापिष्ठं दुर्भगं चान्धं
नग्नमुत्कृत्तनासिकम् । प्रातरुत्थाय यः पश्येत्तत्कलेरुपलक्षणम् ॥ भल्लातकं कर्षफलं काकमार्जारमूषकान् । क्लीबं च गर्दभं चैव न पश्ये-
त्प्रातरेवहि ॥ ॥ **प्रातःस्वकरदर्शनंआचारदीपे**—कराग्रे वसते लक्ष्मीः करमध्ये सरस्वती । करमूले स्थितो ब्रह्मा प्रभाते करदर्श-

नम् ॥ ॥ **भूमिप्रार्थना मदनपारिजाते**—समुद्रवसने देवि पर्वतस्तनमण्डिते । विष्णुपत्नि नमस्तुभ्यं पादस्पर्शं क्षमस्व मे ॥ त्वं देव्यादिवराहेण रसायाः स्थानमिच्छता । उद्धृतासि नमस्तुभ्यं पाप्मानं मे प्रणाशय ॥ इति ॥

**सूत्रपुरीषोत्सर्गविधिः ॥ पारस्करः**—तिष्ठन्न मूत्रपुरीषे कुर्यात् । स्वयंप्रशीर्णेन काष्ठेनगुदंप्रमृजीत । विकृतंवासोनाच्छादयीत । मूत्रपुरीषेष्ठीवनंचातपेनकुर्यादिति । ततःप्रातःसमुत्थायकुर्याद्विण्मूत्रमेवच ॥ नैर्ऋत्यामिषुविक्षेपमतीत्याभ्यधिकंभुवः ॥ इति ॥ तत्र पूर्वोक्तब्राह्ममुहूर्तेउत्थायाचम्यइष्टदेवतांनमस्कृत्यप्रातःस्मरणंविधायरविंगुरुंचनमस्कृत्य ग्रामाद्बहिर्नैर्ऋत्यामिषुक्षेपात्ययेशुद्धमृत्तिकांससिकतांजल-[illegible] कीटादिरहितस्थलंगत्वामृज्जलपात्रेनिधाय अयज्ञियैरनार्द्रैस्तृणैर्भूमिमाच्छाद्यप्रावृतशिराःपृष्ठतःकण्ठलम्बितयज्ञोपवीतोयद्येकवस्त्रश्चेद्दक्षिणकर्णेनिहितयज्ञोपवीतोमौनीघ्राणास्येपिधायदिवोदङ्मुखोरात्रौदक्षिणामुखोमूत्रपुरीषेउत्सृज्य लोष्ठादिनागुदंपरिमृज्यगृहीतशिश्नउत्थाय पूर्वगृहीतमृज्जलपात्रेगृहीत्वार्द्रामलकमात्रमृज्जलैर्द्विवारंलिङ्गशौचंकृत्वार्धप्रसृतितदर्धार्धैर्मृज्जलैस्त्रिवारमपानंशोध्य पुनर्जलैरेवलिङ्गगुदेप्रक्षाल्यशुद्धमृत्तिकयैकवारंहस्तंप्रक्षाल्य शुद्धभूमिमागत्यान्यमृज्जलैर्दशवारंवामकरंप्रक्षाल्य ततःकरद्वयंसप्तवारंतावद्भिरेवमृज्जलैःप्रक्षाल्यवामदक्षिणपादौ प्रत्येकंत्रिःप्रक्षाल्यान्यजलेनद्वादशगण्डूषान्वामभागेकृत्वाजलपात्रत्रिःपर्युक्ष्यजलबिन्दून्जलेनिक्षिप्योपवीतीद्विराचामेत् ॥ मूत्रमात्रोत्सर्गेतुपूर्ववदेकवारंलिङ्गंप्रक्षाल्यवामकरंत्रिःप्रक्षाल्य करद्वयंद्विःप्रक्षाल्यैकैकयामृदापादौप्रक्षाल्यगण्डूषचतुष्टयंविधायाचामेत् ॥ उक्तशौचाकरणेप्रायश्चित्तं स्मृतिरत्नावल्याम् ॥ गायत्र्यष्टशतंचैवप्राणायामत्रयंतथा इति ॥ जपेदितिशेषः ॥ इतिमूत्रपुरीषोत्सर्गविधिः ॥

**दन्तधावनम् ॥ पारस्करः**—औदुम्बरेणदन्तान्धावेत—अन्नाद्यायव्यूहध्वꣳसोमोराजाऽयमागमत् । समेमुखंप्रमार्क्ष्यतेयशसाचभगेनचेति ॥ **अत्रिः** ॥ मुखेपर्युषितेनित्यंभवत्यप्रयतोनरः ॥ तदार्द्रकाष्ठंशुष्कंवाभक्षयेद्दन्तधावने ॥ उत्थायनेत्रेप्रक्षाल्यशुचिर्भूत्वासमाहितः ॥

परिजप्यचमन्त्रेणभक्षयेद्दन्तधावनं॥ शुचिर्भूत्वाविण्मूत्रोत्सर्गेणशुचिर्भूत्वेत्यर्थः॥ प्रतिपत्षष्ठ्यष्टमीनवम्येकादशीचतुर्दशीपञ्चदशीसंक्रान्तिव्यतीपातव्रतोपवासश्राद्धदिनार्कभौमशुक्रमंददिननिषिद्धदिनातिरिक्तदिनेषु ब्राह्मणोद्वादशाङ्गुलप्रमाणेनदशाङ्गुलप्रमाणेनवा कनिष्ठाङ्गुलिवत्स्थूलेन तिंतिण्यादिविहितवृक्षोद्भवेनचूर्णीकृताग्रेणप्रक्षालितेनशुष्केणार्द्रेणवा ॥ आयुर्बलंयशोवर्चःप्रजाःपशून्वसूनिच ॥ ब्रह्मप्रज्ञांचमेधांचत्वंनोदेहिवनस्पते ॥ इतिमन्त्रेणाभिमन्त्रितेनकाष्ठेन–मुखदुर्गन्धिनाशायदन्तानांचविशुद्धये ॥ ष्ठीवनायचगात्राणांकुर्वेहंदन्तधावनं ॥ इतिमन्त्रमुक्त्वा दन्तान्संशोध्यरजतादिनिर्मितयाजिह्वोल्लेखिन्यापर्णादिनावाजिह्वामुलिख्यद्वादशगण्डूषांश्चकृत्वा ॐकारंगायत्रींचस्मृत्वाशिखांबध्नीयात् ॥इति॥

**आचमनसूत्रम्** ॥ अथातआचमनविधिंव्याख्यामःप्राङ्मुखउदङ्मुखोवाभूत्वाबद्धशिखोयज्ञोपवीतिरंतर्जानुःशुचौदेशेप्रभूतैरुदकैराचामतिनतद्भिन्नोष्ठेननविरलाङ्गुलिभिर्नतिष्ठन्नचहसन्नापिफेनबुद्बुदयुतंब्रह्मतीर्थेनत्रिःपिबेद्भिःप्रमृज्यद्विराचमनीयं । ब्राह्मणस्यदक्षिणहस्तेपञ्चतीर्थानिभवन्ति अङ्गुष्ठमूलेब्रह्मतीर्थंकनिष्ठिकांगुलिमूलेप्रजापतितीर्थंतर्जन्यंगुष्ठमध्येपैतृकतीर्थंअंगुल्यग्रेदैवतीर्थंमध्येऽग्नितीर्थमित्येतानितीर्थानि। प्रथमंयत्पिबतितेनऋग्वेदःप्रीणातिद्वितीयंयत्पिबतितेनयजुर्वेदःप्रीणातितृतीयंयत्पिबतितेनसामवेदःप्रीणातिचतुर्थंयत्पिबतितेनाथर्ववेदेतिहासपुराणानिप्रीणंतियदङ्गुलिभ्यःस्रवतितेननागयक्षकुबेराःसर्वेदेवाःसर्वेवेदा प्रीणन्तियत्पादाभ्युक्षणंकरोतिपितरस्तेनप्रीणन्तियन्मुखमुपस्पृशत्यग्निस्तेनप्रीणातियन्नासिकेउपस्पृशतिवायुस्तेनप्रीणातियच्चक्षुरुपस्पृशत्यादित्यस्तेनप्रीणातियच्छ्रोत्रमुपस्पृशतिदिशस्तेनप्रीणन्तियन्नाभिमुपस्पृशति ब्रह्मातेनप्रीणातियद्धृदयमुपस्पृशत्यात्मातेनप्रीणातियच्छिरउपस्पृशतिरुद्रस्तेनप्रीणातियद्बाहूउपस्पृशतिविष्णुस्तेनप्रीणातिमध्यमानामिकयामुखं तर्जन्यङ्गुष्ठेननासिकासनामिकाङ्गुष्ठेनचक्षुःश्रोत्रेकनिष्ठिकाङ्गुष्ठेननाभिंहस्ततलेनहृदयंसर्वाभिरङ्गुलीभिःशिरोग्रेणबाहूतस्मात्सर्वदेवमयोब्राह्मणोदेहेनेत्याहभगवान्कात्यायनोभगवान्कात्यायनः ॥ इत्याचमनसूत्रम् ॥

**अथश्रौत्याचमनम्** ॥ ॐतत्सवितुर्वरेण्यं पिबेत् ॥ ॐभर्गोदेवस्यधीमहि पिबेत् ॥ ॐधियोयोनःप्रचोदयात् पिबेत् ॥ ॐआपोहिष्ठामयोभुवः सव्यहस्तंस्पृशेत् ॥ ॐतानऊर्जेदधातन दक्षिणंहस्तंस्पृशेत् ॥ ॐमहेरणायचक्षसे अङ्गुष्ठानामिकाभ्यांदक्षिणगण्डं ॥ ॐयोवःशिवतमोरसः वामगण्डं ॥ ॐतस्यभाजयतेहनः अङ्गुष्ठमूलेनोर्ध्वोष्ठं ॥ ॐउशतीरिवमातरः अधरोष्ठं ॥ ॐतस्माअरंगमामवः दक्षिणकरं ॥ ॐयस्यक्षयायजिन्वथ वामकरं ॥ ॐआपोजनयथाचनः पादौ ॥ ॐभूःपादयोः ॥ ॐभुवःशिरसि ॥ ॐस्वःमुखे ॥ ॐमहःअङ्गुष्ठतर्जनीभ्यांदक्षिणनासापुटे ॥ ॐजनःतथैववामनासापुटे ॥ ॐतपःअङ्गुष्ठानामिकाभ्यांदक्षिणनेत्रे ॥ ॐसत्यं तथैववामनेत्रे ॥ ॐअङ्गुष्ठाभ्यांदक्षिणकर्णे ॥ ॐआपोज्योतीरसोमृतं तथैववामकर्णे ॥ ॐब्रह्म कनिष्ठाङ्गुष्ठाभ्यांनाभिंस्पृशेत् ॥ ॐभूर्भुवःस्वरोम् पाणितलेनहृदयं स्पृशेत् ॥ पुनरोंकारेणशिरःस्पृशेत् ॥ ॐशिरसि इति ॥ ॥ अथवा ॥ देव्याः पादैस्त्रिभिःपीत्वाअब्लिंगैर्नवभिःस्पृशेत् ॥ सप्तव्याहृतिभिश्चैवगायत्र्यासशिरैःस्पृशेदिति ॥ तद्यथा ॥ ॐतत्सवितुर्वरेण्यंपिबेत् ॥ ॐभर्गोदेवस्यधीमहि पि० ॥ धियोयोनःप्रचोदयात् पि० ॥ आपोहिष्ठामयोभुवः सव्यहस्तं ॥ तानऊर्जेदधातन दक्षिणहस्तं ॥ महेरणायचक्षसे अङ्गुष्ठमूलेनदक्षिणगल्लं ॥ योवःशिवतमोरसः तेनैववामगल्लं ॥ तस्यभाजयतेहनः अङ्गुष्ठमूलेनोर्ध्वाधरोष्ठे ॥ उशतीरिवमातरः इतिकरौ ॥ तस्माअरंगमामवः इति दक्षिणपादं ॥ यस्यक्षयायजिन्वथ वामपादं ॥ आपोजनयथाचनःशिरः ॥ भूः तर्जन्यङ्गुष्ठाभ्यां दक्षिणनासापुटे ॥ भुवः ताभ्यांवामनासापुटे ॥ स्वः अङ्गुष्ठानामिकाभ्यां

---

१ **अथाचमनम्** । **वृद्धपराशरः**—कृत्वाथशौचंप्रक्षाल्यपादौहस्तौचमृज्जलै । निबद्धशिखकक्षस्तुद्विजआचमनंचरेत् ॥ **तस्यत्रैविध्यमाह**—आचमनंत्रिधाप्रोक्तश्रौत-स्मार्त-पुराणत । ब्रह्मयज्ञादिकेकुर्याच्छ्रुतेराचमनंद्विज ॥ सध्यायाकर्मकालेचस्मृतेराचमनंस्मृतम् ॥ शौचाचारेतथायानेस्पृष्टास्पृष्टेचचर्वणे ॥ पुराणाचमनंकुर्यान्नामभि केशवादिभि ॥ इति ॥

दक्षिणनेत्रे ॥ महःवामनेत्रे ॥ जनःकनिष्ठिकाङ्गुष्ठाभ्यांदक्षिणकर्णे ॥ तपः वामकर्णे ॥ सत्यं सर्वाङ्गुलिभिःनाभिं ॥ तत्सवितुर्वरेण्यं सर्वाङ्गुलिभिः हृदयं ॥ भर्गोदेवस्यधीमहि तथैव दक्षिणबाहुं ॥ धियोयोनःप्रचोदयात् वामबाहुं ॥ आपोज्योतीरसोमृतं तथैवभ्रूमध्यं ॥ ब्रह्मभूर्भुवः स्वरोम् शिरसि ॥ इतिवाजसनेयिनां श्रौताचमनविधिः ॥ ॥ **अथस्मार्ताचमनम्** ॥ अन्तर्जानुकरःशुचौदेशेशुचिजलंकरेगृहीत्वा मुक्ताङ्गुष्ठकनिष्ठःकृतवामकरतर्जनीस्पर्शोब्राह्मेणतीर्थेन निःशब्दंत्रिस्तूष्णींअपआचम्य । अङ्गुष्ठमूलेनमुखंद्विरुन्मृज्य । जलेनेतिसर्वत्र । संहताभिरग्र्यङ्गुलीभिर्मुखं । तर्जन्यङ्गुष्ठाभ्यांनासिकां । अङ्गुष्ठानामिकाभ्यांचक्षुषी । अङ्गुष्ठानामिकाभ्यांश्रोत्रे । कनिष्ठिकाङ्गुष्ठाभ्यांनाभिं । पाणितलेनहृदयं । उदकोपस्पर्शः । सर्वाभिरङ्गुलीभिःशिरः । अङ्गुल्यग्रैर्बाहुद्वयं । इतियाज्ञवल्क्यस्मृतिछन्दोगपरिशिष्टानुसारीस्मार्ताचमनविधिः ॥ ॥ ॥ **अथपुराणाचमनम्**[2] ॥ शुचौदेशेदर्भपाणिर्भूमिष्ठपादोन्तर्जानुहस्तः प्राङ्मुखउदङ्मुखोवोपविश्य संहताङ्गुलिनामुक्ताङ्गुष्ठकनिष्ठिकेन

---

१ प्रक्षाल्यहस्तौपीत्वाचसकृदोष्ठौस्पृशेत्तत ॥ सहताङ्गुष्ठमूलेनद्वि प्रमृज्यततोमुखम् ॥ धृत्वाकरावभिमृशेत्सहताङ्गुलिभिर्जलम् ॥ अद्भिर्वामकरेसिच्यताभि पादौच सस्पृशेत् ॥ अङ्गुल्यग्रैस्त्रिभिर्मध्यैराचम्योर्ध्वमुपस्पृशेत् ॥ मध्येमध्येजलंस्पृष्ट्वास्पृशेन्नासादिकान्क्रमात् ॥ अङ्गुष्ठेनप्रदेशिन्याघ्राणपश्चादुपस्पृशेत् । अङ्गुष्ठानामिकाभ्यांचचक्षु श्रोत्रेपृथक्पृथक् ॥ अङ्गुष्ठेपकनिष्ठाभ्यानाभिपश्चादुपस्पृशेत् ॥ तलेनहृदयंस्पृष्ट्वाअङ्गुलीभि शिरस्तथा ॥ अङ्गुलीभिर्दक्षिणाभिर्बाहुमूलद्वयंस्पृशेत् ॥ अनेनविधिनाविप्र कुर्यादाचमनसदा ॥ २ केशवाद्यैस्त्रिभि पीत्वाद्वाभ्याप्रक्षालयेत्करौ ॥ द्वाभ्यामोष्ठौतुसमृज्यद्वाभ्यामुन्मार्जनतथा ॥ एकेनहस्तंप्रक्षाल्यपादावपितथैकत ॥ सप्रोक्ष्यैकेनमूर्धानंतत सकर्षणादिभि ॥ आस्यनासाक्षिकर्णाश्चनाभिहृत्कभुजान्स्पृशेत् ॥ एवमाचमनकृत्वासाक्षान्नारायणोभवेदिति ॥ **शङ्खः**—तर्जन्यङ्गुष्ठयोगेनस्पृशेन्नासापुटद्वयम् । अङ्गुष्ठानामिकाभ्याचचक्षु श्रोत्रंपुन पुनः ॥ कनिष्ठागुष्ठयोर्नाभिहृदयंचतलेनवै ॥ सर्वाभिस्तुतत शीर्षबाहुंचाग्रेणसंस्पृशेत् ॥ **कूर्मपुराणे**—स्वाहान्तंप्राश्नयेदम्बु नमोन्तंस्पर्शयेदथ ॥ **स्कान्दे**—प्रणवेननमोन्तेनअद्भिरङ्गानिसस्पृशेत् ॥ इति ॥ सबुध्यन्तै.केशवादिनामभिरित्यादिप्रणवपूर्वनमोन्तैरितिचविद्यारण्यैरुक्तम् ॥

वामेनान्वारब्धेनपाणिनाशुद्धजलंगृहीत्वाब्राह्मतीर्थेनत्रिःपिबेत् ॥ ॐकेशवायस्वाहा ॥ ॐ नारायणायस्वाहा ॥ ॐमाधवायस्वाहा ॥ गोविन्दायनमः विष्णवेनमः इतिद्वाभ्यांकरौप्रक्षाल्य ॥ मधुसूदनायनमः त्रिविक्रमायनमः इतिद्वाभ्यां अङ्गुष्ठमूलेनोष्ठौसंमृज्य ॥ वामनायनमः श्रीधरायनमः इतिद्वाभ्यांमुखमुन्मार्ज्य ॥ हृषीकेशायनमः वामकरंप्रोक्ष्य ॥ पद्मनाभायनमः पादौसंप्रोक्ष्य ॥ दामोदरायनमः मूर्धानं ॥ संकर्षणायनमः संहतमध्यमाङ्गुलित्रयेणास्यं ॥ वासुदेवायनमः प्रद्युम्नायनमः द्वाभ्यांअङ्गुष्ठतर्जनीभ्यांनासापुटे ॥ अनिरुद्धायनमः पुरुषोत्तमायनमः अङ्गुष्ठानामिकाभ्यांचक्षुषी ॥ तथैव अधोक्षजायनमः नारसिंहायनमः श्रोत्रे ॥ अच्युतायनमः कनिष्ठिकाङ्गुष्ठाभ्यांनाभिं ॥ जनार्दनायनमः पाणितलेन हृदयं ॥ उपेन्द्रायनमः शीर्षं ॥ हरयेनमः श्रीकृष्णायनमः अग्रेण बाहूस्पृशेत् ॥ इति ॥ अशक्ताववसराभावेच त्रिभिःपीत्वाहस्तौप्रक्षाल्यश्रोत्रंस्पृशेत् ॥ इतिसंक्षिप्ताचमनप्रकारः ॥

प्रातःस्नानविधिः ॥ शिखाबन्धनं ॥ आचमनं ॥ प्राणायामः ॥ प्रार्थना ॥ नमामिगङ्गेतवपादपङ्कजंसुरासुरैर्वन्दितदिव्यरूपं ॥ भुक्तिंचमुक्तिंचददासिनित्यंभावानुसारेणसदानराणां ॥ १ ॥ यागतिर्योगयुक्तानांमुनीनामूर्ध्वरेतसां ॥ सागतिःसर्वजन्तूनांगौतमीतीरवासिनां ॥ २ ॥ त्वंराजासर्वतीर्थानांत्वमेवजगतःपिता ॥ याचितंतीर्थंमेदेहितीर्थराजनमोस्तुते ॥ ३ ॥ ॥ अर्घ्याः ॥ ब्रह्माद्रिशिखरोत्पन्नेत्रिकण्टकविराजिते ॥ गौतमप्रार्थितेगङ्गेगृहाणार्घ्यंनमोस्तुते ॥१॥ नमोगङ्गेमहागङ्गेमहादेवस्यवल्लभे ॥ वहतेत्वांमहादेवोगोदावरिनमोस्तुते ॥ २ ॥ त्र्यम्बकस्यजटोद्भूतेगौतमस्याघनाशिनि ॥ सप्तधासागरंयान्तिगोदावरिनमोस्तुते ॥ ३ ॥ अरुणावरुणयोर्मध्येयत्रप्राचीसरस्वती ॥ तत्रस्नात्वाचपीत्वाच

सर्वपापैःप्रमुच्यते ॥ ४ ॥ रेवातीरेतपःकुर्यान्मरणंजाह्नवीतटे ॥ दानंदद्यात्कुरुक्षेत्रेतत्त्रयंगौतमीतटे ॥५॥ ॥ संकल्पः ॥
इहपृथिव्यां जम्बूद्वीपेभारतखण्डेदण्डकारण्येगोदावर्याःदक्षिणेतीरेरामक्षेत्रेरामाश्रमे श्रीमद्भगवतोमहापुरुषस्यविष्णोराज्ञयाप्रवर्तमानस्य आद्यब्रह्मणोद्वितीयेपरार्धेश्वेतवाराहकल्पेवैवस्वतमन्वन्तरे अष्टाविंशतितमेकलियुगेप्रथमचरणेबौद्धावतारेशालिवाहनशाकेअस्मिन्प्रवर्तमानेअमुकनाम्निसंवत्सरे अमुकायनेअमुकर्तौअमुकमासेअमुकपक्षेअमुकतिथौअमुकवासरे अमुकदिवसनक्षत्रेयोगेकरणेअमुकराशिस्थितेचंद्रेअमुकराशिस्थितेश्रीसूर्येअमुकराशिस्थितेदेवगुरौशेषेषुग्रहेषुयथायथंस्थानस्थितेषुसत्सुएवंगुणविशेषणवतिदेशेकालेचममात्मनःश्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं कायिकवाचिकमानसिकसांसर्गिकाद्यशेषपापक्षयार्थंशरीरशुद्ध्यर्थंगोदावरीतीर्थेस्नानमहंकरिष्ये ॥ आपोअस्मानितिस्नात्वा ॥ ॐ आपोऽअस्मान्मातरःशुन्धयन्तुघृतेननोघृतप्वःपुनन्तु ॥ विश्वᳫँहिरिप्रंप्रवहन्तिदेवीः ॥ १ ॥ उदिदाभ्यइत्युन्मज्य ॥ ॐ उदिदाभ्यःशुचिरापूतएमि ॥२॥ नन्दिनीनलिनीसीतामालतीचमलापहा ॥ विष्णुपादाब्जसंभूतागङ्गात्रिपथगामिनी ॥ भागीरथीभोगवती जाह्नवीत्रिदशेश्वरी ॥ द्वादशैतानिनामानिस्नानकालेसदापठेत् ॥ गोदावरिनमस्तुभ्यंनमस्तेपापहारिणि ॥ अनुज्ञांदेहिमेमातःशुद्धस्नानंकरोम्यहं ॥ ३ ॥ पापोहंपापकर्माहंपापात्मापापसंभवः ॥ त्राहिमांकृपयागोदेसर्वपापहराभव ॥ इतिसामान्योनित्यस्नानविधिः ॥

**पुराणस्नानविधिः** ॥ **पाद्मे**—नैर्मल्यं भावशुद्धिश्च विनास्नानं न जायते । तस्मान्मनोविशुद्ध्यर्थं स्नानमादौ विधीयते ॥ अनुद्धृतैरुद्धृतैर्वा जलैःस्नानंसमाचरेत् । तीर्थंप्रकल्पयेद्विद्वान्मूलमन्त्रेणमन्त्रवित् ॥ ॐनमोनारायणायेतिमूलमन्त्रउदाहृतः । दर्भपाणिस्तुविधिनाह्याचान्तःप्रयतःशुचिः ॥ चतुर्हस्तसमायुक्तंचतुरस्रंसमन्ततः । प्रकल्प्यावाहयेद्गङ्गामेभिर्मन्त्रैर्विचक्षणः ॥ विष्णोःपादप्रसूतासिवैष्णवीविष्णुपूजिता । पाहिनस्त्वेनसस्तस्मादाजन्ममरणान्तकात् ॥ तिस्रःकोट्योऽर्धकोटीचतीर्थानांवायुरब्रवीत् । दिविभुव्यन्तरिक्षेचतानितेसन्तु जाह्नवि ॥ नन्दिनीत्येवतेनामदेवेषुनलिनीतिच । वृन्दापृथ्वीचसुभगाविश्वकायाशिवासिता ॥ विद्याधरीसुप्रसन्नातथालोकप्रसाधनी । क्षेम्याचजाह्नवीचैवशान्ताशान्तिप्रदायिनी ॥ एतानिपुण्यनामानिस्नानकालेप्रकीर्तयेत् । भवेत्सन्निहितातस्यगङ्गात्रिपथगामिनी ॥ सप्तवाराभिजप्तेनकरसंपुटयोजितम् । मूर्ध्निकुर्याज्जलंभूयस्त्रिचतुःपंचसप्तवा ॥ स्नानंकुर्यान्मृदातद्वदामन्त्र्यचविधानतः । अश्वक्रान्तेरथक्रान्तेविष्णुक्रान्तेवसुंधरे । मृत्तिकेहरमेपापंयन्मयादुष्कृतंकृतम् ॥ उद्धृतासिवराहेणकृष्णेनशतबाहुना । आरुह्यममगात्राणिसर्वपापंव्यपोहय ॥ नमस्तेसर्वलोकानांप्रभवारणिसुव्रते । इति ॥

**स्नानानुकल्पाः** ॥ **योगियाज्ञवल्क्यः**—कालदोषादसामर्थ्यान्नशक्नोतियदाह्यसौ । तदास्मृत्वाऋषिभ्यस्तुमन्त्रैर्दृष्टंतुमार्जनम् ॥ शंनआपस्तुद्रुपदाआपोहिष्ठाघमर्षणम् । एतैश्चतुर्भिर्मन्त्रैस्तुमन्त्रस्नानमुदाहृतम् ॥ **जाबालिः**—अशिरस्कंभवेत्स्नानंस्नानाशक्तौतुकर्मिणाम् । आर्द्रेणवाससावापिमार्जनंदैहिकंविदुः ॥ ॥ **आग्नेयादिस्नानप्रकाराः** । **हारीतः**—आग्नेयंभस्मनास्नानमद्भि-

---

१ अयंचस्नानविधि सर्वशाखिसाधारण. सर्ववर्णसाधारणश्च सकोचेप्रमाणाभावात् पुराणोक्तकरणेसर्वाधिकारश्रवणाच्च । अनधीतवेदंप्रतिचायमेवस्नानविधि - प्रशस्तइति ।

वारुणमुच्यते । आपोहिष्ठेतिचब्राह्मं वायव्यंगोरजःस्मृतम् ॥ यत्तुसातपवर्षेणस्नानंदिव्यमिहोच्यते । एतैस्तुमन्त्रतःस्नात्वातीर्थानांफलमाप्नुयात् ॥ इति[1] ॥ स्पर्शास्पर्शाद्यनेकेस्नानहेतवआकरतोज्ञेयाः विस्तरभियानेह संगृहीताः ॥ ॥ **स्नानफलंयोगियाज्ञवल्क्यः**— अगम्यागमनात्स्तेयात्पापेभ्यश्चप्रतिग्रहात् । रहस्याचरितात्पापान्मुच्यतेस्नानमाचरन्निति ॥

**भस्मधारणम्** ॥ अथातोभस्मत्रिपुण्ड्रधारणविधिंव्याख्यास्यामः सद्योजातंप्रपद्यामि० वामदेवायनमो० अघोरेभ्योऽथघोरेभ्यो० तत्पुरुषायविद्महे० ईशानःसर्वविद्यानां० इति पञ्चभिर्मनुभिर्नर्योऽवसथ्यान्यतरत् संभवेभस्मपरिगृह्यसव्येकृत्वादक्षिणेनाऽपिधाय ॐअग्निरितिभस्म वायुरितिभस्म जलमितिभस्म स्थलमितिभस्म व्योमेतिभस्म सर्वꣳहवाइदंभस्म मनइत्येतानिचक्षूꣳषिभस्मानीतित्रिरभिमन्त्र्य ॐआपोज्योतीरसोमृतंब्रह्मभूर्भुवःस्वरोमितितस्मिन्नपआसिच्य । ॐमानस्तोके० इतिसंक्षुभ्य । ॐईशानःसर्वविद्यानां० इतिशिरउद्धूल्य । ॐतत्पुरुषाय० इतिमुखं । ॐअघोरेभ्य० इतिहृदयं । ॐवामदेवाय० इतिगुह्यं । ॐसद्योजातं० इतिपादौ । ॐइतिप्रणवेनसर्वाङ्गानि । यास्यप्रथमारेखासागार्हपत्यश्चाकारोरजोभूर्लोकश्चात्माक्रियाशक्तिर्ऋग्वेदःप्रातःसवनंमहादेवोदेवता । यास्यद्वितीयारेखासाचदक्षिणाग्निरुकारः सत्वमन्तरिक्षमन्तरात्मेच्छाशक्तिर्यजुर्वेदोमाध्यंदिनꣳसवनंमहेश्वरोदेवता । यास्यतृतीयारेखासआहवनीयोमकारस्तमोद्यौः परमात्माज्ञानशक्तिः सामवेदस्तृतीयꣳसवनं शिवोदेवताइतिध्यायन् ॐत्र्यम्बकंयजामहे इति त्र्यायुषमिति द्वाभ्यामृग्भ्यांमध्यमाङ्गुलीभिरनुलोमꣳशिरोललाटवक्षःस्कन्धेषुतिर्यक्तिस्रोरेखाःप्रकुर्वीत , मध्यरेखांविलोमामङ्गुष्ठेनकृत्वानुलोममनामातर्जनीभ्याꣳरेखाद्वयंवातिस्रोरेखाएववाकुर्वीतनोद्धूलनं । नेत्रयुग्मप्रमाणास्ताः । रुद्रजपहोमार्चनेषुअन्यत्रापिचैतन्नित्यं । शांभवंव्रतमेतत्सर्वेषुवेदेषुवेदवादिभिरुक्तं । तत्समाचरेन्मुमुक्षुरपुनर्भवाय ॥ इति ॥

---

1 कालदोषोऽतिवृष्ट्यादि तेनस्नानजनयितव्यरोगसभावनायामाप्लाव्यस्नानंनकुर्यात् । असामर्थ्यमुत्पन्नरोगत्वम् । अत्रेष्टोवस्त्रपरिधानादिविस्तरःपूर्वंपरिभाषायामालोचनीयः ।

रुद्राक्षधारणम् ॥ तत्र—विविक्तदेशेचसुखासनस्थःशुचिःसमग्रीवशिरःशरीरः । अत्याश्रमस्थः सकलेन्द्रियाणिनिरुध्यभक्त्या-स्वगुरुंप्रणम्य । अत्याश्रमेपाशुपतदीक्षायांवर्तमानःअत्याश्रमस्थइत्यर्थः । हृत्पुण्डरीकंविरजंविशुद्धंविचिन्त्य मध्येविशदंविशोकं । तथादिमध्यान्तविहीनमेकंविभुंचिदानन्दमरूपमद्भुतं । उमासहायंपरमेश्वरंप्रभुंत्रिलोचनंनीलकण्ठंप्रशान्तं ॥ इति बृहज्जाबालोपनिषदु-क्तप्रकारेणोमासहायंशिवंध्यात्वा । ॐत्र्यंबकंयजामहे० इत्यनेन शैवषडक्षरेणवा परीक्षितरुद्राक्षाणांप्रतिष्ठामन्त्रयोरन्यतरेण धारणम् । रुद्राक्षधारणंपुण्यंकैनवासदृशंभवेत् । महाव्रतमिदंप्राहुर्मुनयस्तत्वदर्शिनः । इत्युपक्रम्य—सहस्रंधारयेद्यस्तुरुद्राक्षाणांधृतव्रतः । तंनम-न्तिपुरासर्वेयथारुद्रस्तथैवसः । अभावेतुसहस्रस्यबाह्वोःषोडशषोडश । एकंशिखायांकरयोर्द्वादशद्वादशैवहि । द्वात्रिंशत्कण्ठदेशेतुचत्वा-रिंशच्चमस्तके । एकैककर्णयोःषट्षट्वक्षस्यष्टोत्तरंशतं । योधारयतिरुद्राक्षान्रुद्रवत्सोपिपूज्यते । मुक्ताप्रवालस्फटिकरूप्यवैदूर्यकाञ्चनैः । समेतान्धारयेद्यस्तुरुद्राक्षान्सशिवोभवेत् । केवलान्वापिरुद्राक्षान्यथालाभंबिभर्तियः । तंनस्पृशन्तिपापानितमांसीवविभावसुं । इति ॥ ॥ रुद्राक्षधारणसंख्यामाहबोपदेवः—रुद्राक्षान्कण्ठदेशेदशनपरिमितान्मस्तकेविंशतीद्वेषट्षट्कर्णप्रदेशेकरयुगलकृतेद्वादशद्वादशैव । बाह्वोरिंदोः कलाभिर्नयनयुगकृतेएकमेकंशिखायांवक्षस्यष्टाधिकंयःकलयतिशतकंसस्वयंनीलकण्ठः । इतिरुद्राक्षधारणं ॥ ॥ अथ रुद्राक्षाभि-मन्त्रणम् ॥ विनामन्त्रेणयोधत्तेरुद्राक्षान्भुविमानवः । सयातिनरकंघोरंयावदिन्द्राश्चतुर्दश । इतिस्कान्दात् ॐनमइतिप्रत्येकं अष्टो-त्तरशतंजपित्वाशिवायनमइतिप्रक्षाल्यरुद्राक्षान्धारयेत् इतिनिर्णयसिन्धौ । पंचामृतंपञ्चगव्यंस्नानकालेप्रयोजयेत् । रुद्राक्षस्यप्रतिष्ठायां मन्त्रंपञ्चाक्षरंतथा । त्रैयम्बकादिमन्त्रंचतथातत्रप्रयोजयेत् ॥ इतिरुद्राक्षाभिमन्त्रणम् ॥

**अथ त्रिकालसंध्यापद्धतिविवरणम्** ॥ **आचारमयूखे—अथ संध्यावन्दनं** ॥ **तस्यच नित्यत्वमाह मरीचिः**—संध्या येन न विज्ञाता संध्या येनानुपासिता । जीवमानो भवेच्छूद्रो मृतः श्वा चाभिजायते इति । अहरहःसंध्यामुपासीतेति श्रुतिश्च ॥ **तत्रैव शुचित्वसंपादनेन कर्माङ्गतामाह दक्षः**—संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु । यदन्यत्कुरुते कर्म न तस्य फलभाग्भवेदिति ॥ **कर्मप्रदीपे कात्यायनः**—अनर्हः कर्मणां विप्रः संध्याहीनो यतः स्मृत इति ॥ ॥ **संध्यायाः कर्माङ्गता** । अङ्गता च प्रातःसंध्याया एवेतिकेचित् ॥ **युक्तंतु**—वचनान्तरप्राप्ततत्संध्याकालोत्तरभावितत्कर्माङ्गता संध्यात्रयस्याप्यविशेषात् ॥ **अत्रिः**—संध्यात्रयं तु कर्तव्यं द्विजेनात्मविदा सदेति ॥ **कर्मप्रदीपे कात्यायनः**—एतत्संध्यात्रयं प्रोक्तं ब्राह्मण्यं यत्र तिष्ठति । यस्य नास्त्यादरस्तत्र न स ब्राह्मण उच्यते ॥ संध्यालोपाच्च चकितः स्नानशीलश्च यः सदा । तं दोषा नोपसर्पन्ति गरुत्मन्तमिवोरगा इति ॥ ॥ **संध्याशब्दार्थः तत्रैव**—अत्र संध्यापदं संध्यासु कर्तव्यत्वात्–संधिरूपकालप्राप्तेः तत्प्रख्यतया कर्मनाम दर्शपूर्णमासादिवत् ॥ **तच्च**—कर्मोपासनाख्यं ध्यानं ॥ तदेवच प्रधानं ॥ संध्यामुपासते ये तु सततं शंसितव्रताः । विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनं इति फलसंबन्धात् । अतो रणे अर्जुनादिभिरङ्गेष्वसामर्थ्यात् सूर्योपासनमात्रं प्रधानमकारीति ॥ **भारते**—ते तथैव महाराज दंशिता रणमूर्धनि । संध्यागतं सहस्रांशुमादित्यमुपतस्थिर इति ॥ **तथाच तैत्तिरीये**—उद्यन्तमस्तंयन्तमादित्यमभिध्यायं कुर्वन्ब्राह्मणो विद्वान्सकलं भद्रमश्नुते असावादित्यो ब्रह्मैव सन् ब्रह्माप्येति य एवं वेदेति । कुर्वन् गायत्रीजपं । भद्रं ईप्सितं फलं । ब्रह्मैवेत्यादि अज्ञानाज्जीवतां प्राप्तो येन ध्यानेन ब्रह्माप्नोतीत्यर्थः ॥ ॥ **संध्येति कर्मनाम** ॥ **व्यासः**—संध्येति सूर्यगं ब्रह्म संधानादविभागतः । ब्रह्माद्यैः सकलैर्भूतैः स्तम्बान्तैः सच्चिदात्मनः ॥ तस्य दासोऽहमस्मीति सोहमस्मीति वा मतिः । भवेदुपासकस्येति ह्येवं

बहुविदो विदुः ॥ **आदित्यस्यैव कालभेदेन नामान्याह सएव**—गायत्रीनाम पूर्वाह्णे सावित्री मध्यमे दिने । सरस्वती च सायाह्ने सैव संध्या त्रिषु स्मृतेति ॥ संधिकालोपास्यत्वात्संध्येति **माधवः** । सम्यग्ध्येयत्वात्संध्येति **नृसिंहः** । उभयथा ध्येयः सूर्यएव ॥ ॥ **शौचाचाराः याज्ञवल्क्यस्मृतौ**—त्रिःप्राश्यापो द्विरुन्मृज्य खान्यद्भिः समुपस्पृशेत् । अद्भिस्तु प्रकृतिस्थाभिर्हीनाभिः फेनबुद्बुदैः ॥ हृत्कण्ठतालुगाभिस्तु यथासंख्यं द्विजातयः । शुद्ध्येरन् स्त्री च शूद्रश्च सकृत्स्पृष्टाभिरन्ततः । स्नानमब्दैवतैर्मन्त्रैर्मार्जनं प्राणसंयमः । सूर्यस्य चाप्युपस्थानं गायत्र्याः प्रत्यहं जपः ॥ प्राणानायम्य संप्रोक्ष्य तृचेनाब्दैवतेन तु । जपन्नासीत सावित्रीं प्रत्यगातारकोदयात् ॥ संध्यां प्राक्प्रातरेवंहि तिष्ठेदासूर्यदर्शनात् । ततोऽभिवादयेद्वृद्धानसावहमिति ब्रुवन् ॥ इति ॥ ॥ **अत्र मिताक्षरा**—अहोरात्रयोः संधौ या क्रिया विधीयते सा संध्या तत्राहः संपूर्णादित्यमण्डलदर्शनयोग्यः कालः । तद्विपरीता रात्रिरिति । **मनुः**—पूर्वां संध्यां जपंस्तिष्ठेत्सावित्रीमार्कदर्शनात् । पश्चिमां तु समासीनः सम्यगृक्षविभावनात् ॥ पूर्वां संध्यां जपंस्तिष्ठन्नैशमेनो व्यपोहति । पश्चिमां तु समासीनो मलं हन्ति दिवाकृतं ॥ न तिष्ठति तु यः पूर्वां नोपास्ते यश्च पश्चिमां । स शूद्रवद्बहिष्कार्यः सर्वस्माद्द्विजकर्मणः ॥ ॥ **गायत्रीजपस्य प्राधान्यं** । **अत्र मनुस्मृतिटीका**—अत्रच फलवत्त्वाज्जपः प्रधानं । स्थानासने त्वङ्गे । फलवत्संनिधौ अफलं तदङ्गमिति न्यायात् । संध्ययोर्वेदविद्विप्रो वेदपुण्येन युज्यते । सहस्रकृत्वस्त्वभ्यस्य इतिच पूर्वं जपात्फलमुक्तं । **मेधातिथिस्तु** स्थानासनयोरेव प्राधान्यमाह ॥ ॥ **गायत्रीवर्णविशेषः स्मृत्यन्तरे**—गायत्री तु भवेद्रक्ता सावित्री शुक्लवर्णिका । सरस्वती तथा कृष्णा उपास्या वर्णभेदत इति ॥ ॥ गायत्रीरूपाणि **तत्रैव**—गायत्री ब्रह्मरूपा तु सावित्री रुद्ररूपिणी । सरस्वती विष्णुरूपा उपास्या रूपभेदत इति ॥ ॥ **अभेदेन गायत्र्युपासना** । **व्यासः**—न भिन्नां प्रतिपद्येत गायत्रीं ब्रह्मणा

सह । सोहमस्मीत्युपासीत विधिना येनकेनचिदिति ॥ **माध्यंदिनीयेशोपनिषच्च**—हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखं । योऽसावादित्ये पुरुषः सोसावहं ॥ इति ॥ **तत्रैव**—प्रतिग्रहान्नदोषात्तु पातकादुपपातकात् । गायत्री प्रोच्यते यस्मा[illegible]न्तं त्रायते यतः ॥ सवितृद्योतनात्सैव सावित्री परिकीर्तिता । जगतः प्रसवित्री वा वाग्रूपत्वात्सरस्वती ॥ व्यासोक्तौ गायत्रीपदस्य मन्त्रे प्रयोगस्तु प्रतिपाद्यादि[illegible]येन सहाभेदोपचारादिति **नृसिंहः** ॥ **स्मृत्यन्तरे**—गायत्रीं चिन्तयेद्यस्तु हृत्पद्मे समुपस्थितां । धर्माधर्मविनिर्मुक्तः स याति परमां गतिमिति ॥ ॥ **संध्याकालः** ॥ **आचारमयूखे धर्मसारे**—उत्तमा तारकोपेता मध्यमा लुप्ततारका । अधमा सूर्यसहिता प्रातःसंध्या त्रिधा मता ॥ उत्तमा सूर्यसहिता मध्यमा लुप्तभास्करा । अधमा तारकोपेता सायंसंध्या त्रिधा मतेति ॥ **अग्निस्मृतौ**—संध्याकालः प्रागुदयाद्विप्रस्य द्विमुहूर्तकः । क्षत्रियस्य तदर्धं स्यात्तदर्धं स्याद्विशोप्युत ॥ तथैवास्तमिते तेषां वैश्यादीनामयं क्रम इति ॥ **दक्षः**—रात्र्यन्तयामनाडी द्वे संध्याकालोऽयमुच्यते । दर्शनाद्रविरेखायास्तदन्तो मुनिभिः स्मृतः ॥ अध्यर्धयामादासायं संध्या माध्याह्निकीष्यते इति ॥ ॥ **संध्यादेशस्तत्रैव व्यासः**—गृहे त्वेकगुणा संध्या गोष्ठे दशगुणा स्मृता । शतसाहस्रिका नद्यामनन्ता विष्णुसन्निधौ ॥ बहिःसंध्या दशगुणा गर्तप्रस्रवणेषु च । ख्याते तीर्थे शतगुणा ह्यनन्ता जाह्नवीजले ॥ **शातातपः**—अनृतं मद्यगन्धं च दिवामैथुनमेव च । पुनाति वृषलस्यान्नं बहिःसंध्या ह्युपासितेति ॥ विहरणलोपप्रसगेन बहिर्गमने अवकाशाभावे—संध्यात्रयं तु कर्तव्यं द्विजेनात्मविदा सदा । उभे संध्ये तु कर्तव्ये ब्राह्मणैस्तु गृहेष्वपीति ॥

**अथ संध्यापद्धतिः** ॥ **तत्रादौ १ शिखाबन्धनं** ॥ **स्नानसूत्रे** ॥ कुशोपग्रहो बद्धशिखी नित्यं यज्ञोपवीतीति ॥ **कर्मप्रदीपे कात्यायनः**—सदोपवीतिना भाव्यं सदा बद्धशिखेन च । विशिखो व्युपवीतश्च यत्करोति न तत्कृतमिति ॥ तत्र बन्धने मन्त्रस्तु कल्पद्रुमे—

रक्षार्थंतुशिखाग्रंथिरूर्ध्वकेशीतिमंत्रतइति ॥ इदं पुरुषार्थं क्रत्वर्थं चेति **रुद्रकल्पद्रुमे** ॥ ॥ २ **आसनोपवेशनं** ॥ **कर्मप्रदीपे कात्यायनः**—तिष्ठन्नासीनः प्रह्वो वा नियमो यत्र नेदृशः । तदासीनेन कर्तव्यं न प्रह्वेण न तिष्ठता इति ॥ आसनानि परिभाषायां आचारमयूखे वा द्रष्टव्यानि ॥ ॥ **आसनोपवेशनमन्त्रः । आचारमयूखे व्यासः**—पृथिव्या मेरुपृष्ठं तु ऋषिरित्यभिधीयते । सुतलं छन्द इत्याहुः कूर्मो वै देवता स्मृता ॥ मेरोरारोहणे तस्य विनियोगः प्रकीर्तित इति ॥ ऋषिच्छन्दोदैवतविनियोगानां ज्ञानमात्रं नतु प्रयोगकाले उच्चारणावश्यकता इति रुद्रकल्पद्रुमे परिभाषायां द्रष्टव्यं ॥ ॥ ३ **भस्मधारणं** ॥ **तत्र प्रथमप्रयोगः बृहज्जाबालोपनिषदि**—अथ जनको ह वैदेहो याज्ञवल्क्यमुपसमेत्योवाच भगवन् त्रिपुण्ड्रं नो ब्रूहीति सहोवाच सद्योजातादिपञ्चब्रह्ममत्रैः परिगृह्याग्निरितिभस्मेत्यभिमन्त्र्य मानस्तोक इति समुद्धृत्य त्र्यायुषमिति जलेन संमृज्य त्र्यम्बकमिति शिरोललाटवक्षःस्कन्धेषु धृत्वा पूतो भवति मोक्षीभवति शतरुद्रेण यत्फलमवाप्नोति तत्फलमश्नुते स एष भस्मज्योतिरिति वै याज्ञवल्क्य इति ॥ **द्वितीयप्रयोगस्त्वाचारमयूखे** ॥ **पुलस्त्यः**—अग्निरित्यादिभिर्मंत्रैः शुद्धं भस्माभिमन्त्रितं । शिवमन्त्रेण तद्धार्यं मन्त्रेणाष्टाक्षरेण वा ॥ गायत्र्या वाथ देवर्षे मन्त्रेण प्रणवेन वा ॥ **स्मृतिरत्नावल्यां**—ललाटे हृदये नाभौ गलांसे नाभिसंधिषु । पृष्ठदेशे शिरस्येवं स्थानेष्वेतेषु धारयेदिति ॥ **त्रिपुण्ड्रलक्षणं काशीखण्डे**—भ्रुवोर्मध्यं समारभ्य यावदन्तो भवेद्भ्रुवोः । मध्यमानामिकाङ्गुल्योर्मध्ये तु प्रतिलोमतः ॥ अङ्गुष्ठेन कृता रेखा त्रिपुण्ड्रः सोऽभिधीयते ॥ इति ॥ **कात्यायनः**—मध्याङ्गुलित्रयेणैव स्वदक्षिणकरस्य च । त्रिपुण्ड्रं धारयेद्विद्वान्सर्वकिल्बिषनाशनमिति ॥ **आचमनं** ॥ **सव्येकुशोपग्रहः** ॥ **दक्षिणे पवित्रधारणं** ॥ **तथाच कर्मप्रदीपे**—सव्ये पाणौ कुशान्कृत्वा कुर्यादाचमनक्रियां । ह्रस्वाः प्रचरणीयाः स्युः कुशा दीर्घास्तु बर्हिषः ॥ दर्भाः पवित्रमित्युक्तमतः संध्यादिकर्मसु । सव्यः सोपग्रहः कार्यो दक्षिणः सपवित्रक इति ॥

**आचारमयूखे अगस्त्यसंहितायां**—केशवाद्यैस्त्रिभिः पीत्वा द्वाभ्यां प्रक्षालयेत्करौ । द्वाभ्यामोष्ठौ तु संमृज्य द्वाभ्यामुन्मार्जनं तथा ॥ एकेन हस्तं प्रक्षाल्य पादावपि तथैकतः । संप्रोक्ष्यैकेन मूर्धानं ततः संकर्षणादिभिः ॥ आस्यं नासाक्षिकर्णौ च नाभ्युरः कं भुजौ स्पृशेत् । एवमाचमनं कृत्वा साक्षान्नारायणो भवेत् ॥ अत्रैतानि केशवादिचतुर्विंशतिनामानि चतुर्थ्यन्तानि नमोन्तानि प्रथमैकवचनान्तानि वोच्चार्याणि ॥ केचित्तु संबुद्ध्यन्तान्युच्चारयन्ति । तत्रापि हरिपदं विष्णुपदं चाविभक्तिकमुच्चारयन्ति तत्साधूनेव प्रयुञ्जीतेति वचनाच्चिन्त्यमिति ॥ **अत्राचारमयूखे** सर्वसाधारणतया आचमनं श्रौतं स्मार्तं पौराणमिति त्रिप्रकारमुक्तं । कर्मविशेषपरत्वेन आचमनविशेषस्य व्यवस्था नोपात्ता । इतरैर्ग्रन्थकर्तृभिः सोपात्ता । श्रौतकर्मसु श्रौतमाचमनं । संध्यादिस्मार्तकर्मसु स्मार्तं । एतस्मादन्यत्र पौराणमिति ॥ बहूनामाचारात् अस्मिन्प्रयोगे पौराणमङ्गीकृतं । सूत्रोक्तसंध्यायां स्मार्तमाचमनं प्रदर्शितं ॥ मनोमनः वाक्वागित्यादिना इन्द्रियस्पर्शस्तु कुत्रापि निबन्धादौ नोपलभ्यते । एवमग्रे सुमित्रिया इति जलादानं दुर्मित्रिया इति जलप्रक्षेपश्च । स्नानकर्माङ्गं वर्तते ॥ ॥ ५ **प्राणायामः** ॥ **प्राणायामस्य आचमनोत्तरकालीनत्वं** । आचम्य त्रिरायम्यासूनिति कातीयस्नानसूत्रात् ॥ **प्राणायामलक्षणं कर्मप्रदीपे** भूराद्यास्तिस्र एवैता महाव्याहृतयोऽव्ययाः । महर्जनस्तपःसत्यं गायत्री च शिरस्तथा ॥ आपोज्योतीरसोऽमृतं ब्रह्मभूर्भुवःस्वरिति शिरः । प्रतिप्रतीकं प्रणवमुच्चारयेदन्ते च शिरसः । एता एतां सहानेन तथैव दशभिः सह । त्रिर्जपेदायतप्राणः प्राणायामः स उच्यत इति ॥ ॥ ६ **पुण्डरीकाक्षस्मरणं** ॥ **मदनपारिजाते संवर्तः**—अथाचम्य कुशैर्युक्त आसने समुपस्थितः । करसंपुटकं कृत्वा संध्यां नित्यं समारभेत् ॥ नत्वाथ पुण्डरीकाक्षमुपात्ताघप्रशान्तये । ब्रह्मवर्चसकामार्थं प्रातःसंध्यामुपास्महे ॥ इत्थं कृत्वा तु संकल्पमिति ॥ ॥ ७ **संकल्पः ग्रन्थपद्धत्यनुसारी** ॥ ॥ ८ **मन्त्राचमनं** ॥ **धर्मसिन्धौ** । **कातीयानां**

**संध्याप्रयोगे**—बह्वृचस्तु संकल्पाद्यन्ते सूर्यश्चेति मन्त्राचमनं कृत्वा आपोहिष्ठेति तिसृभिः प्रतिपादमार्जनान्ते अघमर्षणं कार्यं । नतु मार्जनद्वयं कार्यमित्याहुरिति ॥ **मार्जनद्वयं तु** सूर्यश्चेतिमन्त्राचमनात्प्राक् आपोहिष्ठेतितिसृभिरेकं मार्जनं ॥ सूर्यश्चेति मन्त्राचमनोत्तरं द्वितीयं आपोहिष्ठेति तिसृभिरपरं मार्जनं ॥ इत्येवं मार्जनद्वयं ॥ प्रथमं मार्जनं ऋग्विधानाद्युक्तं । द्वितीयं मार्जनं कात्यायनोक्तं ॥ सूर्यश्चेत्याचमनमन्त्रस्तु आश्वलायनगृह्यपरिशिष्टोक्तः । एवं आपः पुनन्त्वित्ययं मध्याह्नसंध्यायामाचमनमन्त्रः । सायंसंध्यायां अग्निश्चमेत्याचमनमन्त्रश्च आश्वलायनगृह्यपरिशिष्टोक्तएवेति ॥ **इदं मन्त्राचमनं शाखान्तरीयमपि** ॥ हरिहरभाष्ये त्रिमल्लसुतकृतस्नानभाष्ये नागदेवाह्निके संध्यामन्त्रार्थभाष्ये प्राचीनपद्धतिषु च आदृतं ॥ ॥ **९ मार्जनं** ॥ **कर्मप्रदीपे**—शिरसो मार्जनं कुर्यात्कुशैः सोदकबिन्दुभिः । प्रणवो भूर्भुवःस्वश्च सावित्री च तृतीयका ॥ अब्दैवत्यं तृचं चैव चतुर्थमितिमार्जनं इति ॥ **आचारमयूखे प्रजापतिः**—ऋगन्ते मार्जनं कुर्यात्पादान्ते वा समाहितः । अर्धर्चान्तेऽथवा कुर्याच्छिष्टानां मतमीदृशमिति ॥ **मार्जनस्य मन्त्राचमनोत्तरकालीनत्वं तु आचारमयूखे**—मन्त्राचमनमुक्त्वा अथ द्वितीयं मार्जनं । **कात्यायनः**-प्रणवोभूरित्यादिना उक्तं ॥ ॥

**१० अघमर्षणं** ॥ **कर्मप्रदीपे**—करेणोद्धृत्य सलिलं घ्राणमासज्य तत्र च । जपेदनायतासुर्वा त्रिःसकृद्वाघमर्षणमिति ॥ **अघमर्षणमन्त्रः स्नानसूत्रे**—अन्तर्जलेऽघमर्षणं त्रिरावर्तयेत् द्रुपदादिवेत्यादि ॥ अघमर्षणं ऋतंचसत्यंचेत्येतत्सूक्तं इति हरिहरभाष्ये त्रिमल्लसुतकृतभाष्ये च ॥ ऋतंचेति त्र्यर्चंसूक्तं ऋक्संहितायां तैत्तिरीयसंहितायां च पठितं । तत्र भेदस्तु ततोरात्र्यजायतेतिऋक्पाठः । ततोरात्रिरजायतेति तैत्तिरीयपाठः । तत्रकोवाग्राह्य इति संशये–कातीयैराश्वलायनीयमघमर्षणसूक्तं ग्राह्यं नतु तैत्तिरीयं **याज्ञवल्क्येनो**दीर्णत्वादिति अद्वैतनिर्णये निर्णीतं ॥ **आचारमयूखे**—ऋतंचेतितृचंवापि द्रुपदांवाजपेदृचं । द्रुपदाच वाजसनेयके । ॐद्रुपदादि० मैनस इति ॥

**आश्वलायनगृह्यपरिशिष्टे**—तदुदकमवीक्षमाणो वामतो भुवि तीव्रपातेन क्षिप्त्वा तं पाप्मानं वज्रहस्तं सहस्रधा दलितं भावयेदिति ॥ **आ० म०** कातीयमार्जनोत्तरं अघमर्षणस्योक्तत्वादघमर्षणस्य मार्जनोत्तरकालीनता ॥ ॥ **११ आचम्य**। इदमाचमनं पापपुरुषनिरसनहेतुकं शिष्टैः क्रियते तच्च निबन्धादौ क्वापि नोपलभ्यते ॥ ॥ **१२ अर्घ्यत्रयप्रदानं** ॥ **कर्मप्रदीपे**—उत्थायार्कं प्रति प्रोहेत्त्रिकेनाञ्जलिनाम्भस इति ॥ **गृह्यपरिशिष्टे**—अथाचम्य दर्भपाणिः पूर्णमुदकाञ्जलिमादित्याभिमुखः स्थित्वा प्रणवव्याहृतिपूर्वया सावित्र्या विनिवेदयन्नुत्क्षिपेत्तदेवार्घ्यनिवेदनमिति ॥ अथेत्यघमर्षणानन्तरं । पाठक्रमादिति ॥ **आचारमयूखे**—अर्घ्यदानं तच्च अङ्गं । न प्रधानं । फलसंबन्धाभावादिति **तत्रैव संग्रहे**—मुक्तहस्तेन दातव्यं मुद्रां तत्र न कारयेत् । तर्जन्यङ्गुष्ठयोगे तु राक्षसी मुद्रिका स्मृता ॥ राक्षसी मुद्रिकार्घ्येण तत्तोयं रुधिरं भवेत् ॥ जलेष्वर्घ्यं प्रदातव्यं जलाभावे शुचिस्थले । संप्रोक्ष्य वारिणा सम्यक्ततोऽर्घ्यं तु प्रदापयेदिति ॥ सायमुपविश्यार्घ्यदानं बह्वृचपरं तैत्तिरीयपरं च ॥ अस्माकं तु संध्यात्रयेपि तिष्ठतैवार्घ्यदानं । उत्थायार्कं प्रतिप्रोहेत् । एतत्संध्यात्रयं प्रोक्तमिति कर्मप्रदीपे कात्यायनवचनादिति ॥ एवं संध्यात्रयार्घ्यदाने गायत्रीमन्त्र एव ॥ मध्याह्नसंध्यार्घ्यदाने मन्त्रान्तरं शाखान्तरपरमिति **मदनपारिजाते** ॥ **मध्वाचार्यसंध्याभाष्ये**—एकं तु शत्रुनाशाय द्वितीयं हयनाशने । राक्षसानां वधायैकं दद्यादर्घ्यत्रयं बुध इति ॥ **मदनपारिजाते कश्यपः**—त्रिंशत्कोट्यो महावीर्या मन्देहानाम राक्षसाः । कृष्णातिदारुणा घोराः सूर्यमिच्छन्ति खादितुं ॥ ततो देवगणाः सर्वे ऋषयश्च तपोधनाः । उपासते तदा संध्यां प्रक्षिपन्त्युदकाञ्जलिं ॥ दह्यन्ते तेन ते दैत्या वज्रीभूतेन वारिणा । एतस्मात्कारणाद्विप्राः संध्यां नित्यमुपासत इति ॥ अर्घ्यदानोत्तरं दक्षिणनासाचक्षुःश्रोत्रस्पर्शः क्रियते तत्र मूलं नोपलभामहे ॥ ॥ **१३ प्रदक्षिणीकरणं** ॥ प्रदक्षिणं परिभ्रमन्स्वपरितो जलं भ्रामयेत् ॥ **मदनपारिजाते श्रुतिः**—यत्प्रदक्षिणं प्रक्रमन्ति तेन पाप्मानमव-

धुन्वन्तीति ॥ **कर्मप्रदीपे**—रक्षयेद्वारिणात्मानं परिक्षिप्य समंतत इति ॥ **आचारमयूखे गृह्यपरिशिष्टे**—अर्घ्यदानोत्तरं-असावा-द्वित्योब्रह्मेति प्रदक्षिणं परिभ्रमन्परिषिच्याप उपस्पृश्येति ॥ ॥ **१४ सूर्योपस्थानं** ॥ **मदनपारिजाते व्यासः**—संध्यात्रयेप्येकमेव उपस्थानं प्रचक्षते । उद्वयमुदुत्यं चित्रं तच्चक्षुस्तिष्ठेद्दिवाकरमिति ॥ **स्नानसूत्रे**—पुष्पाण्यम्बुमिश्राण्यूर्ध्वं प्रक्षिप्योर्ध्वबाहुः सूर्यमुदीक्षन्तु द्वयमुदुत्यं चित्रं तच्चक्षुरिति ॥ हरिहरभाष्ये त्रिमल्लसुतभाष्ये संध्याभाष्ये नागदेवाह्निकेप्येवमेवोपस्थानं ॥ **कर्मप्रदीपे**—उत्थायार्कं प्रति प्रोहेत्त्रिकेनाञ्जलिनाम्भसः । उच्चित्रमृग्द्वयेनाथ चोपतिष्ठेदनन्तरं ॥ संध्याद्वयेप्युपस्थानमेतदाहुर्मनीषिणः । मध्येत्वह्न उपर्यस्य विभ्राडादीच्छया जपेत् ॥ तदसंसक्तपार्ष्णिर्वा एकपादर्धपादपि । कुर्यात्कृताञ्जलिर्वापि ऊर्ध्वबाहुरथापि वा ॥ यत्र स्यात्कृच्छ्रभूयस्त्वं श्रेयसोपि मनीषिणः । भूयस्त्वं ब्रुवते तत्र कृच्छ्राच्छ्रेयो ह्यवाप्यत इति ॥ एतेन मदनपारिजाते आचारमयूखे च गायत्रीजपोत्तरं उपस्थानमुक्तं । **प्रातश्च** मित्रस्य च० १ देवस्त्वास० २ उत्थायबृ० ३ वसवस्त्वा० ४ इति मन्त्रचतुष्टयमुक्तं । **सायं** इमं मे० १ तत्त्वायामि० २ त्वंनो०३ सत्वंनो० ४ इति वरुणमन्त्रचतुष्टयं चोक्तं तत्सर्वं बह्वृचबौधायनादिशाखान्तरपरं तत्सूत्रे तथोक्तत्वादिति ॥ ॥ **१५ गायत्रीजपः** ॥ **तत्रादौ षडङ्गन्यासाः आचारमयूखे गृह्यपरिशिष्टे**—षड्भिस्तदङ्गमन्त्रैर्यथाङ्गमात्मनिन्यस्यात्मानं तद्रूपं भावयेत् । तद्यथा—तत्सवितुर्हृदयायनम इति हृदये । वरेण्यंशिरसेस्वाहेति शिरसि । भर्गोदेवस्य शिखायैवषडिति शिखायां । धीमहिकवचायहुमिति उरसि । धियोयोनोनेत्रत्रयायवौषडिति नेत्रललाटेषुन्यस्याथ प्रचोदयात् अस्त्रायफडिति करतलेस्त्रमिति ॥ षडङ्गन्यासः कार्योनवाकार्यो न्यासविधेरवैदिकत्वादिति गृह्यपरिशिष्टे स्पष्टं । एतेनाऽक्षरन्यासपादन्यासादीनां मुद्रादिविधेः शापविमोचनविधेश्च तान्त्रिकत्वेनाऽवैदिकत्वादनावश्यकत्वं वेदितव्यं इति धर्मसिन्धौ ॥ हरिहरभाष्यादावनादृतं ॥ **तथाच गृह्यपरिशिष्टे**—एषोऽङ्गन्यास एवमप्येके नेच्छन्ति स हि विधिरवैदिक इति ॥ ॥ **गायत्र्या-**

**वाहनं मदनपारिजाते-अथ जपः । तत्र व्यासः**—तेजोसीतिमन्त्रेण गायत्रीमावाहयेद्द्विजः । उपस्थाय तुरीयेण नमस्कृत्य जपेच्च तमिति ॥ **गायत्री त्र्यक्षरेति** गायत्रीहृदयानुसारेण ध्यानं पद्धतौ । एवं मध्याह्नसंध्यायां सावित्रीमिति ध्यानं सायंसंध्यायां वृद्धां सरस्वतीमितिध्यानं च गायत्रीहृदयानुसारेण ज्ञेयं ॥ इदं संध्यात्रयावाहनं **मदनपारिजाते** । तत्रागच्छवरदे इति **आश्वलायनगृह्यपरिशिष्टे** । मुक्ताविद्रुमेति **पद्धतौ** ॥ ॥ **गायत्रीजपः** ॥ **याज्ञवल्क्यः**—जपन्नासीत सावित्रीं प्रत्यगातारकोदयात् । संध्यां प्राक्प्रातरेवं हि तिष्ठेदासूर्यदर्शनात् ॥ **मनुः**—पूर्वां संध्यां जपंस्तिष्ठेत्सावित्रीमार्कदर्शनात् । पश्चिमां तु समासीनः सम्यगृक्षविभावनात् ॥ **कर्मप्रदीपे**—तिष्ठेदोदयनात्पूर्वां मध्यमामपि शक्तितः । आसीनोडूद्गमाच्चान्त्यां संध्यां पूर्वादिकां जपेत् ॥ **आचारमयूखे गृह्यपरिशिष्टे**—मन्त्रार्थमनुसंदधानः प्रणवव्याहृतिपूर्विकां सावित्रीं जपेदिति ॥ **आचारमयूखे भगवान्**—सायं प्रातश्च मध्याह्ने सावित्रीं वाग्यतो जपेत् । सहस्रपरमां देवीं शतमध्यां दशावराम् ॥ गायत्रीं संस्मरेद्धीमान्हृदि वा सूर्यमण्डले । मनःसंतोषणं शौचं मौनं मन्त्रार्थचिन्तनं ॥ अव्यग्रत्वमनिर्वेदो जपसंपत्तिहेतवः ॥ **तत्रैव व्यासः**—अष्टोत्तरशतं नित्यमष्टाविंशतिमेव वा । विधिना दशकं वापि त्रिकालेषु जपेद्बुधः ॥ **विश्वामित्रः**—उत्तमं मानसं जप्यमुपांशु मध्यमं विदुः । अधमं वाचिकं प्राहुः सर्वमन्त्रेषु वै द्विजाः ॥ **वृद्धमनुः**—वस्त्रेणाच्छाद्य तु करं दक्षिणं यः सदा जपेत् । तस्य तत्सफलं जप्यं तद्धीनमफलं स्मृतम् ॥ **गौतमः**—गच्छतस्तिष्ठतो वापि स्वेच्छया कर्म कुर्वतः । अशुचेर्वा विनासंख्यां तत्सर्वं निष्फलं भवेत् ॥ **बौधायनः**—नाभेरधः संस्पर्श कर्मसंयुक्तो वर्जयेदिति । **हारीतः**—रजतेन्द्राक्षकैर्माला तथैवाङ्गुलिपर्वभिः । शस्तं स्याच्छङ्खमणिभिः प्रवालैश्च सहस्रकं । स्फटिकैर्दशसाहस्रं मौक्तिकैर्लक्षमुच्यते । पद्माक्षैर्दशलक्षं तु सौवर्णैः कोटिरुच्यते । कुशग्रन्थ्या च रुद्राक्षैरनंतफलमुच्यते ॥ **प्रजापतिः**—अष्टोत्तरशतं कुर्याच्चतुःपञ्चाशिकां तथा । सदा विंशतिकां वापि ततो नैवाधिका

मता ॥ अनामिकाद्विपर्वादिकनिष्ठादीन्यनुक्रमात् । तर्जनीमूलपर्यन्ता करमाला प्रकीर्तिता ॥ ॥ १६ **गायत्रीजपान्ते प्रदक्षिणा** **मदनपारिजाते**—विश्वतश्चक्षुरिति मन्त्रेण जपान्ते भास्करं द्विजः । कुर्यात्प्रदक्षिणां चैवं उपविश्यासने ततः ॥ इति ॥ ॥ १७ **गायत्रीजपनिवेदनं** ॥ **मदनपारिजाते**—देवागातुविदोमन्त्रेण कुर्याज्जपविसर्जनम् । प्रातःसंध्याङ्गभूतेन गायत्र्या जपितेन च ॥ यथासंख्येन जप्तेन ब्रह्मा मे प्रीयतां रविः ॥ ॥ १८ **दिशस्तद्देवताः संध्यां च नमस्कुर्यात्** ॥ **आचारमयूखे गृह्यपरिशिष्टे**—प्रदक्षिणं दिशः साधिपानत्वाऽथ संध्यायै सावित्र्यै गायत्र्यै सरस्वत्यै सर्वाभ्यो देवताभ्यश्च नमस्कृत्येति ॥ **धर्मसिंधौ**—अत्र ऋक्शाखोक्तवद्दिग्वन्दनं केचित्कुर्वन्तीति ॥ मदनपारिजाते इदं दिग्वन्दनं नोपात्तं ॥ ॥ १९ **गायत्रीविसर्जनं** ॥ **आचारमयूखे गृह्यपरिशिष्टे**—तत उत्तमे शिखरे देवि भूम्यां पर्वतमूर्धनि ॥ ब्राह्मणैरभ्यनुज्ञाता गच्छ देवि यथासुखमिति संध्यां विसृज्येति ॥ यदक्षरमित्यादयः श्लोकाः प्राचीनपद्धतौ ॥ उत्तमे शिखरे देवि० आ० गृ० प० । तै० आ० प्र० १० अ० ३६ । तत्र नमःसवित्रे इति आदित्यहृदयस्थः ॥ ॥ २० **अभिवादनं** ॥ **याज्ञवल्क्यः**—ततोऽभिवादयेद्वृद्धानसावहमिति ब्रुवन् । ततः गायत्रीजपोत्तरं । अभिवादनं नाम गोत्रोच्चारपूर्वकं पादोपसंग्रहः इति हरिहरभाष्यादौ ॥ ॥ **समापनं** ॥ कर्मोपक्रमात् कर्मणः समाप्तिः । आरब्धस्यान्तगामित्वात् । यस्यस्मृत्येत्यादि कर्मणः संपूर्णताकरणम् ॥ ॥ **भूम्युपसंग्रहः** ॥ **आचारमयूखे गृह्यपरिशिष्टे**—आसत्यलोकात्पातालादालोकालोकपर्वतात् । ये सन्ति ब्राह्मणा देवास्तेभ्यो नित्यं नमोनमः ॥ इति नमस्कृत्य भूमिमुपसंगृह्येति ॥ इतिस्मृत्युक्तत्रिकालसंध्यापद्धतिविवरणं ॥

अथ प्रातःसंध्याप्रयोगः ॥ **शिखाबन्धनं** । ॐऊर्ध्वकेशिविरूपाक्षिमांसशोणितभोजने ॥ तिष्ठदेविशिखाबंधेचामुंडेचापराजिते ॥ १ ॥ आसनोपवेशनं ॥ ॐपृथिवित्वयाधृतालोकादेवित्वंविष्णुनाधृता । त्वंचधारयमांदेविपवित्रंचास-

नंकुरु ॥ १ ॥ भस्मधारणं ॥ भस्मग्रहणं । अभिमन्त्रणं । ॐअग्निरितिभस्म वायुरितिभस्म जलमितिभस्म स्थलमितिभस्म व्योमेतिभस्म सर्वꣳहवाइदंभस्म मनइत्येतानिचक्षूंषिभस्मानि ॥ १ ॥ धारणं ॥ ॐत्र्यम्बकंयजामहेसुगन्धिंपुष्टिवर्धनं। उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमामृतात् ॥ २ ॥ ललाटे १ हृदये २ नाभौ ३ कण्ठे ४ स्कन्धयोः ५ बाहुसंधिषु ६ पृष्ठे ७ शिरसिच ८ ॥ आचमनं ॥ सव्येकुशोपग्रहः ॥ दक्षिणेपवित्रधारणं ॥ ॐकेशवायनमः १ ॐनारायणायनमः २ ॐमाधवायनमः ३ त्रिभिराचम्य ॥ ॐगोविंदायनमः ४ ॐविष्णवेनमः ५ द्वाभ्यांहस्तौप्रक्षाल्य ॥ ॐमधुसूदनायनमः ६ ॐत्रिविक्रमायनमः ७ द्वाभ्यामोष्ठौसंमृज्य ॥ ॐवामनायनमः ८ ॐश्रीधरायनमः ९ द्वाभ्यामोष्ठावुन्मृज्य ॥ ॐहृषीकेशायनमः १० हस्तंप्रक्षाल्य ॥ ॐपद्मनाभायनमः ११ पादौप्रक्षाल्य ॥ ॐदामोदरायनमः १२ शिरःप्रोक्षेत् ॥ ॐसंकर्षणायनमः १३ मुखं ॥ ॐवासुदेवायनमः १४ ॐप्रद्युम्नायनमः १५ द्वाभ्यांनासिके ॥ ॐअनिरुद्धायनमः १६ ॐपुरुषोत्तमायनमः १७ द्वाभ्यांचक्षुषी ॥ ॐअधोक्षजायनमः १८ ॐनारसिंहायनमः १९ द्वाभ्यांश्रोत्रे ॥ ॐअच्युतायनमः २० नाभिं ॥ ॐजनार्दनायनमः २१ हृदयं ॥ उद० ॥ ॐउपेन्द्रायनमः २२ शिरः ॥ ॐहरयेनमः २३ ॐश्रीकृष्णायनमः २४ द्वाभ्यांबाहू ॥ सर्वत्रसजलंस्पृशेत् ॥ प्राणायामः ॥ ॐभूः ॐभुवः ॐस्वः ॐमहः ॐजनः ॐतपः ॐसत्यं ॐतत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि । धियोयोनःप्रचोदयात् ॥ ॐआपोज्योतीरसोऽमृतंब्रह्मभूर्भुवःस्वरो३म् ॥ एवंत्रिः ॥ पुण्डरीकाक्षस्मरणं ॥ अपवित्रःपवित्रोवासर्वावस्थां

गतोपिवा । यः स्मरेत्पुण्डरीकाक्षंसबाह्याभ्यन्तरः शुचिः ॥ ॐपुंडरीकाक्षायनमः ॥ संकल्पः ॥ ममउपात्तदुरितक्षयार्थं
श्रीपरमेश्वरप्रीत्यर्थंपरब्रह्मावासयेप्रातःसंध्योपासनमहंकरिष्ये ॥ मन्त्राचमनं ॥ ॐसूर्यश्चमामन्युश्चमन्युपतयश्चमन्युकृ-
तेभ्यः पापेभ्योरक्षन्तां । यद्रात्र्यापापमकार्षं । मनसावाचाहस्ताभ्यां । पद्भ्यामुदरेणशिश्ना । रात्रिस्तदवलुम्पतु । यत्किं-
चदुरितंमयि । इदमहंमाममृतयोनौसूर्येज्योतिषिजुहोमिस्वाहा ॥ आचम्य ॥ ॥ सोदकैःकुशैःशिरसिमार्जनं । पादान्ते-
अर्धर्चान्तेऋगन्तेवा ॥ ॐ १ भूर्भुवःस्वः २ तत्सवितु० दयात् ॥ ॐआपोहिष्ठामयोभुवः । तानऽऊर्जेदधातन । महे-
रणायचक्षसे १ ॥ योवः शिवतमोरसः । तस्यभाजयतेहनः । उशतीरिवमातरः २ ॥ तस्माअरंगमामवः । यस्यक्ष-
यायजिन्वथ । आपोजनयथाचनः ३ ॥ अघमर्षणं ॥ दक्षिणकरेजलमादाय । तस्मिन्नासिकामासज्य । प्राणान्निरुध्य-
अनिरुध्यवा । त्रिःसकृद्वा । द्रुपदांजपेत् ॥ अघमर्षणंत्र्यृचंवा ॥ ॐद्रुपदादिवमुमुचानःस्विन्नःस्नातोमलादिव । पूतंप-
वित्रेणेवाज्यमापःशुन्धन्तु मैनसः ॥ १ ॥ ऋतंचसत्यंचाभीद्धात्तपसोऽध्यजायत । ततोरात्र्यजायतततःसमुद्रोअर्णवः
॥१ ॥ समुद्रादर्णवादधिसंवत्सरोअजायत ॥ अहोरात्राणिविदधद्विश्वस्यमिषतोवशी ॥२॥ सूर्याचन्द्रमसौधातायथापूर्वम-
कल्पयत् । दिवंचपृथिवींचान्तरिक्षमथोस्वः ॥ ३ ॥ तज्जलमनवलोक्यवामभागेभूमौरभसाक्षिपेत् ॥ आचम्य ॥ अर्घ्यदानं
॥ ३ ॥ प्राङ्मुखस्तिष्ठन् ॥ ॐभूर्भुवःस्वः ॥ तत्सवितु० यात् ॥ १ ॥ प्रातःसंध्याब्रह्मरूपिणेश्रीसवित्रेसूर्यनारायणायइदम-

र्घ्यंदत्तंनमम ॥ प्रदक्षिणंपरिभ्रमन् स्वपरितोजलंभ्रामयेत् ॥ ॐअसावादित्योब्रह्म ॥ १ आचम्य ॥ सूर्योपस्थानं ॥
ऊर्ध्वबाहुःसूर्यमुदीक्षन् ॥ ॐउद्वयंतमसस्परिस्वःपश्यन्तउत्तरं । देवंदेवत्रासूर्यमगन्मज्योतिरुत्तमं १ ॥ उदुत्यंजातवेदसं-
देवंवहन्तिकेतवः । दृशेविश्वायसूर्यं २ ॥ चित्रंदेवानामुदगादनीकंचक्षुर्मित्रस्यवरुणस्याग्नेः । आप्राद्यावापृथिवीऽअन्त-
रिक्षꣳसूर्यऽआत्माजगतस्तस्थुषश्च ३ ॥ तच्चक्षुर्देवहितंपुरस्ताच्छुक्रमुच्चरत् । पश्येमशरदःशतंजीवेमशरदःशतꣳशृणु-
यामशरदःशतंप्रब्रवामशरदःशतमदीनाःस्यामशरदःशतंभूयश्चशरदःशतात् ४ ॥ गायत्रीषडंगन्यासाः ॥ ॐतत्सवितुर्हृ-
दयायनमः ॥ हृदये ॥ ॐवरेण्यंशिरसेस्वाहा ॥ शिरसि ॥ ॐभर्गोदेवस्यशिखायैवषट् ॥ शिखायां ॥ ॐधीमहिकवचा-
यहुं ॥ हृदये ॥ ॐधियोयोनःनेत्रत्रयायवौषट् ॥ नेत्रललाटेषु ॥ ॐप्रचोदयात् अस्त्रायफट् ॥ करतले ॥ गायत्र्या-
वाहनं ॥ ॐतेजोसिशुक्रमस्यमृतमसिधामनामासिप्रियंदेवानामनाधृष्टंदेवयजनमसि १ ॥ गायत्रींत्र्यक्षरांबालांसाक्षसू-
त्रकमण्डलुं । रक्तवस्त्रांचतुर्हस्तांहंसवाहनसंस्थितां ॥ ऋग्वेदेनकृतोत्सङ्गांसर्वदेवनमस्कृतां । ब्रह्माणींब्रह्मदैवत्यांब्रह्मलोक-
निवासिनीं ॥ आवाहयाम्यहंदेवीमायान्तींसूर्यमण्डलात् । आगच्छवरदेदेवित्र्यक्षरेब्रह्मवादिनि । गायत्रिछन्दसांमातर्ब्र-
ह्मयोनेनमोस्तुते ॥ गायत्र्याउपस्थानं ॥ ॐगायत्र्यस्येकपदीद्विपदीत्रिपदीचतुष्पद्यपदसिनहिपद्यसे । नमस्तेतुरीयायद-
र्शतायपदायपरोरजसेसावदमाप्रापत् १ ॥ ध्यानं ॥ मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैर्मुक्ताबिन्दुसरोजबद्धसु-

कुटांतत्त्वार्थवर्णात्मिकां । गायत्रींवरदाभयाङ्कुशकरांपात्रंकपालंशिरःशङ्खंचक्रमथारविन्दयुगुलंहस्तैर्वहन्तींभजे १ ॥ गा-
यत्रीजपः ॥ प्रातःप्राङ्मुखस्तिष्ठन्मौनीमन्त्रार्थमनुचिन्तयन्नेकाग्रचित्तःसन्गायत्रीजपंकुर्यादामण्डलदर्शनात् ॥ अष्टोत्तरश-
तमष्टाविंशतिर्दशवारंवा॥ ॐभूर्भुवःस्वः। तत्सवितु०दयात् १॥ जपान्तेसूर्यंप्रदक्षिणीकृत्य॥ ॐविश्वतश्चक्षुरुतविश्वतोमुखो-
विश्वतोबाहुरुतविश्वतस्पात् । संबाहुभ्यांधमतिसंपतत्रैर्द्यावाभूमीजनयन्देवएकः ॥१॥ एकंचक्रंरथेयस्यदिव्यंकनकभूषितं ।
समेभवतुसुप्रीतःपद्महस्तोदिवाकरः १ ॥ उपविश्य ॥ जपनिवेदनं ॥ ॐदेवागातुविदोगातुंवित्वागातुमित । मनसस्पत-
इमंदेवयज्ञꣳस्वाहावातेधाः १ ॥ अनेनप्रातःसंध्याप्रधानभूतेनअमुकसंख्याकेनकृतेन गायत्रीजपाख्येनकर्मणाभगवान्ब्रह्म-
स्वरूपीश्रीसवितासूर्यनारायणःप्रीयताम् ॥ दिशस्तद्देवताःसंध्यांचनमस्कुर्यात् ॥ ॐप्राच्यैदिशेनमः ॐइन्द्रायनमः १
ॐआग्नेय्यैदिशेनमः ॐअग्नयेनमः २ ॐदक्षिणायैदिशेनमः ॐयमायनमः ३ ॐनैर्ऋत्यैदिशेनमः ॐनिर्ऋतयेनमः ४
ॐपश्चिमायैदिशेनमः ॐवरुणायनमः ५ ॐवायव्यैदिशेनमः ॐवायवेनमः ६ ॐउदीच्यैदिशेनमः ॐसोमायनमः ७
ॐईशान्यैदिशेनमः ॐईशानायनमः ८ ॐऊर्ध्वायैदिशेनमः ॐब्रह्मणेनमः ९ अवाच्यैदिशेनमः ॐअनंतायनमः १०
ॐसंध्यायैनमः ॐसावित्र्यैनमः ॐगायत्र्यैनमः ॐसरस्वत्यैनमः ॐसर्वाभ्योदेवताभ्योनमः ॥ गायत्रीविसर्जनं ॥ यद-
क्षरपदभ्रष्टं मात्राहीनंतथाभवत् । तत्सर्वंक्षम्यतांदेविप्रसीदपरमेश्वरि १ ॥ विसर्गबिन्दुमात्राश्चपदपादाक्षराणिच । न्यू-

नानिचातिरिक्तानिक्षमस्वपरमेश्वरि २ ॥ नमःसवित्रेजगदेकचक्षुषेजगत्प्रसूतिस्थितिनाशहेतवे । त्रयीमयायत्रिगुणात्मधारिणेविरञ्चिनारायणशंकरात्मने ३ ॥ उत्तमेशिखरेजाताभूम्यांपर्वतमूर्धनि । ब्राह्मणेभ्योऽभ्यनुज्ञातागच्छदेवियथासुखं ४ ॥ विसर्जितावेदमातर्द्विजानांपापनाशिनि । सर्वकामप्रदेनित्यंगच्छदेविनमोस्तुते ॥ ५ ॥ अभिवादनं ॥ काश्यप १ आवत्सार २ नैध्रुवे ३ तित्रिप्रवरान्वितकाश्यपगोत्रोत्पन्नःशुक्लयजुर्वेदाम्नायवाजिमाध्यन्दिनीयशाखाध्यायीवामदेवशर्माब्रह्मचारीअहंभो ३ वैश्वानरअभिवादयामि ॥ भो ३ सूर्यअभि० ॥ भो ३ आचार्यअभि० ॥ समापनं ॥ अनेनप्रातःसंध्याख्येनकर्मणाभगवान्ब्रह्मस्वरूपीश्रीसवितासूर्यनारायणःप्रीयताम् ॥ ॐतत्सद्ब्रह्मार्पणमस्तु ॥ यस्यस्मृत्याचनामोक्त्यातपोयज्ञक्रियादिषु ॥ न्यूनंसंपूर्णतांयातिसद्योवन्देतमच्युतम् १ ॥ ॐअच्युतायनमः ॥ ॐगयायैनमः ॥ ॐगदाधरायनमः ॥ ॐपुण्डरीकाक्षायनमः ॥ ॐविष्णवेनमः ३॥ भूम्युपसंग्रहः ॥ आसत्यलोकात्पातालादालोकालोकपर्वतात् । येसन्तिब्राह्मणादेवास्तेभ्योनित्यंनमोनमः १ ॥ नमस्कृत्य ॥ द्विराचामेत् ॥ इतिप्रातःसंध्या ॥

अथ सूत्रोक्तासंध्या ॥ कर्मप्रदीपे द्वितीये प्रपाठके प्रथमः खण्डः कात्यायनः—अत ऊर्ध्वं प्रवक्ष्यामि संध्योपासनकं विधिं । अनर्हः कर्मणां विप्रः संध्याहीनो यतः स्मृतः ॥१॥ सव्ये पाणौ कुशान्कृत्वा कुर्यादाचमनक्रियां । ह्रस्वाः प्रचरणीयाः स्युः कुशा दीर्घास्तु बर्हिषः ॥ २ ॥ दर्भाः पवित्रमित्युक्तमतः संध्यादिकर्मणि । सव्यः सोपग्रहः कार्यो दक्षिणः सपवित्रकः ॥ ३ ॥ रक्षयेद्वारिणात्मानं परिक्षिप्य समंततः । शिरसो मार्जनं कुर्यात्कुशैः सोदकबिन्दुभिः ॥ ४ ॥ प्रणवो भूर्भुवःस्वश्च सावित्रीच तृतीयका । अब्दैवत्यं तृचं चैव

चतुर्थमिति मार्जनं ॥ ५ ॥ भूराद्यास्तिस्र एवैता महाव्याहृतयोऽव्ययाः । महर्जनस्तपःसत्यं गायत्री च शिरस्तथा ॥ ६ ॥ आपोज्योतीरसोऽमृतंब्रह्मभूर्भुवः स्वरिति शिरः । प्रतिप्रतीकंप्रणवमुच्चारयेदन्तेच शिरसः ॥ ७ ॥ एता एतां सहानेन तथैव दशभिः सह । त्रिर्जपेदायतप्राणः प्राणायामः स उच्यते ॥ ८ ॥ करेणोद्धृत्य सलिलं घ्राणमासज्य तत्रच । जपेदनायतासुर्वा त्रिः सकृद्वाघमर्षणं ॥ ९ ॥ उत्थायार्कं प्रतिप्रोहेत्त्रिकेणाञ्जलिनाम्भसः । उच्चित्रमृग्द्वयेनाथ चोपतिष्ठेदनन्तरं ॥ १० ॥ संध्याद्वयेप्युपस्थानमेतदाहुर्मनीषिणः । मध्येत्वह्न उपर्यस्य विभ्राडादीच्छया जपेत् ॥ ११ ॥ तदसंसक्तपार्ष्णिर्वा एकपादर्धपादपि । कुर्यात्कृताञ्जलिर्वापि ऊर्ध्वबाहुरथापिवा ॥ १२ ॥ यत्र स्यात्कृच्छ्रभूयस्त्वं श्रेयसोपि मनीषिणः । भूयस्त्वं ब्रुवते तत्र कृच्छ्राच्छ्रेयो ह्यवाप्यते ॥ १३ ॥ तिष्ठेदोदयनात्पूर्वां मध्यमामपि शक्तितः । आसीनोद्गमाचान्त्यां संध्यां पूर्वादिकां जपेत् ॥ १४ ॥ एतत्संध्यात्रयं प्रोक्तं ब्राह्मण्यं यत्र तिष्ठति । यस्य नास्त्यादरस्तत्र न स ब्राह्मण उच्यते ॥१५॥ संध्यालोपाच्च चकितः स्नानशीलश्च यः सदा । तं दोषा नोपसर्पन्ति गरुत्मन्तमिवोरगाः ॥१६॥ इति ॥ **स्मार्ताचमनं** ॥ **कर्मप्रदीपे प्रथमप्रपाठके । १ खण्डे कात्यायनः**—त्रिःप्राश्यापो द्विरुन्मृज्य मुखमेतान्युपस्पृशेत् । आस्यनासाक्षिकर्णांश्च नाभिवक्षःशिरोंसकान् ॥ संहताभिस्त्र्यङ्गुलीभिरास्यमेवमुपस्पृशेत् । अङ्गुष्ठानामिकाभ्यांच चक्षुःश्रोत्रे पुनःपुनः । कनिष्ठाङ्गुष्ठयोर्नाभिं हृदयं तु तलेनवै । सर्वाभिस्तु शिरः पश्चाद्बाहू चाग्रेण संस्पृशेदिति ॥ इति सूत्रोक्तत्रिकालसंध्यापद्धतिविवरणं ॥

**अथ सूत्रोक्तत्रिकालसंध्या** ॥ तूष्णींशिखाबन्धः । तूष्णीमासनोपवेशनं । भस्मधारणं । भस्मनात्र्यायुषमितिललाटे ॥ ॐत्र्यायुषंजमदग्नेः । ग्रीवायां । ॐकश्यपस्यत्र्यायुषं । दक्षिणेंऽसे । ॐयद्देवेषुत्र्यायुषं । हृदिच । ॐतन्नोअस्तुत्र्यायुषं । स्मार्ताचमनं ॥ तत्रादौसव्येकुशोपग्रहः । दक्षिणेपवित्रधारणं । तूष्णींत्रिराचम्य । द्विर्मुखमुन्मृज्य । अङ्गान्यालभेत ।

संयुक्ताभिस्तिसृभिरङ्गुलीभिर्मुखं । तर्जन्यङ्गुष्ठाभ्यांनासिके । अङ्गुष्ठानामिकाभ्यांचक्षुषी । अङ्गुष्ठानामिकाभ्यांश्रोत्रे । कनिष्ठाङ्गुष्ठाभ्यांनाभिं । करतलेनहृदयं । सार्वाभिरङ्गुलिभिःशिरः । अङ्गुल्यग्रैर्भुजौ ॥ इतिस्मार्ताचमनं ॥ प्रदक्षिणंपरिभ्रमन्स्वपरितस्तूष्णींजलंभ्रामयेत् ॥ सोदकैःकुशैःशिरसिमार्जनं । ॐ १ भूर्भुवःस्वः २ तत्सवितु० यात् ३ आपोहिष्ठा० योवःशिव० तस्माअरं० ४ ॥ प्राणायामः ॥ ॐभूः ॐभुवः ॐस्वः ॐमहः ॐजनः ॐतपः ॐसत्यं ॐतत्सवितु० यात् ॥ ॐआपोज्योती० स्वरोरम् ॥ अघमर्षणम् ॥ दक्षिणेजलमादायतस्मिन्नासिकामासज्यप्राणान्निरुध्यानिरुध्यवा त्रिःसकृद्वा द्रुपदांजपेत् ॥ ॐद्रुपदादिवमुमुचानःस्विन्नःस्नातोमलादिव । पूतंपवित्रेणेवाज्यमापःशुन्धन्तुमैनसः १ ॥ तज्जलमनवलोक्यवामभागेभूमौरभसाक्षिपेत् ॥ अर्घ्यत्रयदानं ॥ उत्थायार्कंप्रतिप्रोहेत् ॥ ॐभूर्भुवःस्वः । ॐतत्सवितु० यात् ॥ श्रीसवित्रेसूर्यनारायणायेदमर्घ्यंदत्तंनमम इतित्रिः ॥ ३ ॥ मध्याह्नसंध्यायांतुसजलपुष्पैरर्घ्यदानंत्रिरितिविशेषः ॥ सूर्योपस्थानं ॥ ॐउद्वयं १ उदुत्यं० २ चित्रंदे० ३ तच्चक्षु० ४ मध्याह्नसंध्यायांतुशक्तौसत्यांइच्छयागायत्र्याचयथाशक्तिविभ्राडित्यनुवाक—१७ पुरुषसूक्त—१६ शिवसंकल्प—६ मण्डलब्राह्मणै—२२रित्युपस्थाय । आदित्यंप्रदक्षिणीकृत्य । नमस्कुर्यादितिविशेषः ॥ यथाशक्तिगायत्रीजपः । यस्यस्मृत्येत्यादि ॥ विष्णवेनमः ३ ॥ इतिसूत्रोक्तात्रिकालसंध्या ॥

आशौचेसंध्याविचारः ॥ आचारमयूखे भरद्वाजः—सूतके मृतके वापि प्राणायाममत्रकम् । तथा मार्जनमत्रांस्तु मनसोच्चार्य मार्जयेत् ॥ गायत्रीं सम्यगुच्चार्य सूर्यायार्घ्यं निवेदयेत् । मार्जनं तु नवा कार्यमुपस्थानं न चैव हीति ॥ गायत्र्यापि दशवारं

जप्येत्याह—आपन्नश्चाशुचिः काले तिष्ठन्नपि जपेद्दशेत्याश्वलायनोक्तेः। आपन्न आपद्ग्रस्तः। अशुचिराशौचवान् ॥ अज्ञान्तरेष्वसामर्थ्येपि अर्घ्यप्रक्षेप आवश्यकः। जलाभावे महामार्गे बन्धने त्वशुचावपि। उभयोः संध्ययोः काले रजसा वार्घ्यमुत्सृजेदित्यग्निस्मृतेः। अशुचौ आशौच इत्यर्थः ॥ **श्रीकृष्णपण्डितविरचिततैत्तिरीयसंध्याभाष्ये जमदग्निः**—राष्ट्रभङ्गे नृपक्रोधे रोगार्ते सूतकेऽपि च। संध्यावन्दनविच्छित्तिर्न दोषाय कथंचनेति ॥ ॥ **संध्याकालातिक्रमे प्रायश्चित्तं अग्निहोत्रिनारायणविरचितायां कर्मानुगायां संस्काररत्नावल्यां**—संध्याकाले व्यतिक्रान्ते जपं कृत्वा पुनर्मनः। ऋचंवाचंतृचं जप्त्वा ततः संध्यां समाचरेत् ॥ इदंतु आचार्यस्यैव कार्यानुरोधने नत्वन्यत्रेति ॥ ॥ **संध्योपासनलोपे तु तत्रैव**—संध्याग्निकार्यलोपे तु गायत्र्यष्टसहस्रकं। स्वास्थ्येप्यमैक्ष्यकरणे शतमष्टोत्तरं जपेदिति ॥ **मदनपारिजाते अकृतसंध्यस्य सूर्योदये सति प्रायश्चित्तं स्मर्यते**—आदित्योऽभ्युदियाद्यस्य संध्योपास्तिमकुर्वतः। स्नात्वा प्राणांस्त्रिरायम्य गायत्र्यष्टशतं जपेदिति ॥ **धर्मसिंधौ**—संध्यात्रये कालातिक्रमे प्रायश्चित्तार्थमेकमर्घ्यमधिकं दत्वा रात्रौ प्रहरपर्यन्तं दिनोक्तकर्माणि कुर्यात्। ब्रह्मयज्ञं सौरं च वर्जयेत् ॥ ॥ **सर्वथा संध्यालोपे** प्रतिसंध्यमेकोपवासः। अयुतमष्टोत्तरसहस्रं वा गायत्रीजपः। अशक्तौ प्रतिसंध्यालोपे शतगायत्रीजपः। द्व्यहं त्र्यहं लोपे तदावृत्तिः। ततःपरं कृच्छ्रादिकल्पयमिति ॥

**यज्ञोपवीनधारणे विशेषः श्रुतौ**—दक्षिणं बाहुमुद्धरतेऽवधत्ते सव्यमिति यज्ञोपवीतमेतदेव विपरीतं प्राचीनावीत९ संवीतं मानुष्यमिति ॥ **मनुः**—उद्धृते दक्षिणे पाणावुपवीत्युच्यते द्विजः। सव्ये प्राचीनावीती स्यान्निवीती कण्ठसंजने इति ॥ **यज्ञोपवीतनिर्माणधारणविधी बौधायनसूत्रे**—अथातो यज्ञोपवीतक्रियां व्याख्यास्यामः। ब्राह्मणेन तत्कन्यया वा कृतं सूत्रमानीय। भूरिति

प्रथमां षण्णवतिं मिनोति । भुव इति द्वितीयां । स्वरिति तृतीयां । मित्वा पलाशपत्रे संस्थाप्य । आपोहिष्ठेति तिसृभिः हिरण्यवर्णाः शुचय इति चतसृभिः पवमानःसुवर्जन इत्यनुवाकेन सावित्र्याचाभिषिच्य । वामहस्ते कृत्वा । त्रिःसंताड्य । भूरग्निंचेत्येतैस्त्रिभिर्वलितं कृत्वा । भूर्भुवःस्वश्चन्द्रमसंचेत्येतेन ग्रन्थिं कृत्वा । ॐकारमग्निंनागान्यमपितॄन्प्रजापतिंवायुंसूर्यंविश्वान्देवान् नवतन्तुषु क्रमेण विन्यस्य संपूजयेत् । देवस्यत्वेत्युपवीतमादाय । उद्वयंतमसस्परीत्यादित्याय दर्शयित्वा । यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥ इति धारयेत् । इत्याहभगवान्बौधायनइति ॥ ॥ **एतावत्कर्तुमशक्तौदेवलः**—ग्रामान्निष्क्रम्य संख्याय षण्णवत्यङ्गुलीषु तत् । तावत्त्रिगुणितं सूत्रं प्रक्षाल्याब्लिङ्गकैस्त्रिभिः ॥ देवागारेऽथवा गोष्ठे नद्यां वान्यत्र वा शुचौ । सावित्र्या त्रिवृतं कुर्यान्नवतन्तु तु तद्भवेत् ॥ कार्पासं त्रिवृतं श्लक्ष्णं निदध्याद्वामहस्तके । सावित्र्या दशकृत्वोद्भिर्मंत्रिताभिस्तदुक्षयेत् ॥ हरिब्रह्मेश्वरेभ्यश्च प्रणम्य परिपूज्य च । यज्ञोपवीतमिति वा व्याहृत्या वापि धारयेत् ॥ इति । उक्षयेदिति स्वार्थे णिच् । तूष्णीमेवोर्ध्ववृतत्वादिलक्षणविशिष्टं यज्ञोपवीतं निर्माय । सावित्र्या आपोहिष्ठादिभिर्मंत्रिताभिरद्भिर्दशवारं सावित्र्यैवाभ्युक्ष्य । यज्ञोपवीतंपरममितिमन्त्रेण व्याहृतिभिर्वा धारयेदिति ॥ **स्मृत्यर्णवे**—यज्ञोपवीतेनोपव्ययामि दीर्घायुत्वायसुप्रजास्त्वायसुवीर्यायसर्वेषांवेदानामाधिपत्याय यशसेब्रह्मवर्चसाय । इति यज्ञोपवीतधारणे मन्त्रउक्तः ॥ ॥ **यज्ञोपवीतशब्दार्थः** । **स्मृतिसारे**—यज्ञाख्यः परमात्मा य उच्यते चैव होतृभिः । उपवीतं ततोस्येदं तस्माद्यज्ञोपवीतकमिति ॥ **स्मृतिप्रकाशे**—ज्ञातृविज्ञेययोरैक्यमविजानन्द्विजोत्तमः । न त्यजेदात्मनः सूत्रं ब्राह्मं ब्रह्मविनिर्मितं ॥ सिसृक्षुरेकएवाग्रे समासीनः शिवः स्वयं । दृष्ट्वा गुणमयीं मायां सूत्ररूपमिवाकरोत् ॥ तयोस्तदात्मकं विष्णुं सृष्ट्वा पालं दिवौकसां । स्वयं ब्रह्माभवत्क्रुद्धो रुद्रश्चास्य क्षयाय सः ॥ ज्ञानात्मकेन हरिणा ब्रह्मात्मनि शिवेऽव्यये । तत्सूत्रमुपवीतत्वाद्ब्रह्मसूत्रमितिस्मृतं ॥

यज्ञेन चोपवीतत्वाद्यज्ञसूत्रं विदुर्बुधाः । तदाज्ञया वृतत्वाच्च ब्रह्मणा ब्रह्मसूत्रकं ॥ तावल्लोकास्त्रयो वेदास्त्रयो देवास्त्रयोऽग्नयः । शिवसृष्टास्त्रयो-वर्णास्त्रिवृत्सूत्रं समाश्रयेत् ॥ सद्ग्रन्थिमाश्रयंस्तारस्त्रिमात्रो नादसंयुतः ॥ तद्ग्रन्थगं च सावित्री वेदमाता शिवाज्ञया ॥ एवं द्वादशदैवत्यं ब्रह्मसूत्रं द्विजन्मनां । ब्रह्माग्रे कल्पयामास वेदार्हाणामनुत्तमम् ॥ भवन्ति ब्राह्मणा नाम वेदार्हाश्च त्रयस्त्विह । यावत्प्रभृति वामांसे ब्रह्मसूत्रं द्विजस्य तत् । गुरुः प्रतिष्ठापयति काले प्रभृति संयतः ॥ तावत्प्रभृति तस्यैव पिताऽचार्यः स उच्यते । माता च तस्य सावित्री द्वितीयं जन्म चोच्यते ॥ आकटेस्तत्प्रमाणं स्याद्दीर्घं सूत्रं तथास्थितं ॥ आयुर्हरत्यतिह्रस्वमतिदीर्घं तपोहरं ॥ सिद्धार्थफलमानेन स्थूलं स्यादुपवीतकं । यशोहरमतिस्थूलमतिसूक्ष्मं धनापहं ॥ पवित्रं परमं शुद्धमायुष्यं च शुभावहं ॥ औजस्यं ब्रह्मवर्चस्यं ब्रह्मसूत्रं तथोदितं ॥ यज्ञोपवीतं परमं पवित्रं विभूषणं ब्राह्मणलक्षणं च । पद्मासनस्थेन पितामहेन उत्पादितं मङ्गलसूत्रमेतत् ॥ यज्ञोपवीतस्योत्पत्तिं जानाति ब्राह्मणो न चेत् । स वै वहति भाराय पुस्तकानि यथा वृषः ॥ इति ॥

यज्ञोपवीतधारणविधिः ॥ आचमनं ॥ प्राणायामः ॥ देशकालौसंकीर्त्य । श्रौतस्मार्तनित्यकर्मानुष्ठानवेदाध्ययनाद्विजत्वसिद्ध्यर्थंयज्ञोपवीतधारणमहंकरिष्ये ॥ यज्ञोपवीतप्रक्षालनं ॥ ॐआपोहिष्ठा० १ योवःशिव० २ तस्माअरं० ३ ॥ वामहस्तेनिधाय ॥ दशवारंगायत्र्याद्भिःसंप्रोक्ष्य । ॐविष्णवेनमः ॐब्रह्मणेनमः ॐरुद्रायनमः इति संपूज्य । नमस्कृत्य । दक्षिणंबाहुमुद्धृत्यसव्येंसेधारयेत् ॥ ॐयज्ञोपवीतं परमंपवित्रं प्रजापतेर्यत्सहजंपुरस्तात् । आयुष्यमग्र्यंप्रतिमुञ्च शुभ्रं य-

ज्ञोपवीतंबलमस्तुतेजः १ ॥ द्विराचमनं ॥ जीर्णयज्ञोपवीतविसर्जनं ॥ अनेनयज्ञोपवीतधारणेन श्रीपरमेश्वरः प्रीयतां ॥ इति यज्ञोपवीतधारणविधिः ॥

अथसूर्यस्यद्वादशनमस्काराः ॥ आचमनादिदेशकालोत्कीर्तनांते ममआयुरारोग्यैश्वर्यप्राप्त्यर्थंश्रीसूर्यनारायणप्रीत्यर्थं द्वादशनमस्काराख्यंकर्मकरिष्ये ॥ ध्यानं ॥ ध्येयःसदासवितृमण्डलमध्यवर्तीनारायणःसरसिजासनसंनिविष्टः । केयूरवान्मकरकुण्डलवान्किरीटीहारीहिरण्मयवपुर्धृतशङ्खचक्रः १ ॥ १ ॐमित्रायनमः । २ ॐरवयेनमः । ३ ॐसूर्यायनमः । ४ ॐभानवेनमः । ५ ॐखगायनमः । ६ ॐपूष्णेनमः । ७ ॐहिरण्यगर्भायनमः । ८ ॐमरीचयेनमः । ९ ॐआदित्यायनमः । १० ॐसवित्रेनमः । ११ ॐअर्कायनमः । १२ ॐभास्करायनमः ॥ ॐमित्ररविसूर्यभानुखगपूषहिरण्यगर्भमरीच्यादित्यसवित्रर्कभास्करेभ्योनमः ॥ विनतातनयोदेवःकर्मसाक्षीसुरेश्वरः । सप्ताश्वःसप्तरज्जुश्चअरुणोमेप्रसीदतु १ ॥ ॐकर्मसाक्षिणेअरुणायनमः ॥ आदित्यस्यनमस्कारंयेकुर्वन्तिदिनेदिने । जन्मान्तरसहस्रेषुदारिद्र्यंनोपजायते ॥ अनेनद्वादशनमस्काराख्येनकर्मणाभगवान्श्रीसूर्यनारायणःप्रीयतां ॥ तीर्थप्राशनं ॥ अकालमृत्युहरणंसर्वव्याधिविनाशनं । सूर्यपादोदकंतीर्थंजठरेधारयाम्यहं ॥ इतिसूर्यस्यद्वादशनमस्काराः ॥

अथतृचाकल्पनमस्कारविधिः ॥ आचमनादि एवंगुणविशेषणवतिदेशेकालेचश्रीसूर्यनारायणप्रीत्यर्थं तृचाकल्पनमस्काराख्यंकर्मकरिष्ये ॥ ध्येयःसदा० इत्यादिश्रीसूर्यंध्यात्वा ॥ ॐह्रां उद्यन्नद्यमित्रमहः ह्रां । ॐमित्रायनमः । १ । ॐह्रीं

आरोहन्नुत्तरांदिवं ह्रीं ॐरवयेनमः । २ । ॐह्रूं हृद्रोगंममसूर्य ह्रूं ॐसूर्यायनमः । ३ । ॐह्रैं हरिमाणंचनाशय ह्रैं ॐभानवेनमः । ४ । ॐह्रौं शुकेषुमेहरिमाणं ह्रौं ॐखगायनमः । ५ । ॐह्रः रोपणाकासुदध्मसि ह्रः ॐपूष्णेनमः । ६ । ॐह्रां अथोहारिद्रवेषुमे ह्रां ॐहिरण्यगर्भायनमः । ७ । ॐह्रींहरिमाणंनिदध्मसि ह्रीं ॐमरीचयेनमः । ८ । ॐह्रूं उदगादयमादित्यः ह्रूं ॐआदित्यायनमः । ९ । ॐह्रैं विश्वेनसहसासह ह्रैं ॐसवित्रेनमः । १० । ॐह्रौं द्विषन्तंमह्यंरन्धयन् ह्रौं ॐअर्कायनमः । ११ । ॐह्रः मोअहंद्विषतेरधं ह्रः ॐभास्करायनमः । १२ । ॐह्रांह्रीं उद्यन्नद्यमित्रमहआरोहन्नुत्तरांदिवं ह्रांह्रीं ॐमित्ररविभ्यांनमः । १३ । ॐह्रूंह्रैं हृद्रोगंममसूर्यहरिमाणंचनाशय ह्रूंह्रैं ॐसूर्यभानुभ्यांनमः । १४ । ॐह्रौंह्रः शुकेषुमेहरिमाणंरोपणाकासुदध्मसि ह्रौंह्रः ॐखगपूषभ्यांनमः । १५ । ॐह्रांह्रीं अथोहारिद्रवेषुमेहरिमाणंनिदध्मसि ह्रांह्रीं ॐहिरण्यगर्भमरीचिभ्यांनमः । १६ । ॐह्रूंह्रैं उदगादयमादित्योविश्वेनसहसासह ह्रूंह्रैं ॐआदित्यसवितृभ्यांनमः । १७ । ॐह्रौंह्रः द्विषन्तंमह्यंरन्धयन्मोऽअहंद्विषतेरधं ह्रौंह्रः ॐअर्कभास्कराभ्यांनमः । १८ । ॐह्रांह्रींह्रूंह्रैं उद्यन्नद्यमित्रमहआरोहन्नुत्तरांदिवं । हृद्रोगंममसूर्यहरिमाणंचनाशय ह्रांह्रींह्रूंह्रैं ॐमित्ररविसूर्यभानुभ्योनमः । १९ । ॐह्रौंह्रःह्रांह्रीं शुकेषुमेहरिमाणंरोपणाकासुदध्मसि । अथोहारिद्रवेषुमेहरिमाणंनिदध्मसि ह्रौंह्रःह्रांह्रीं ॐखगपूषहिरण्यगर्भमरीचिभ्योनमः । २० । ॐह्रूंह्रैंह्रौंह्रः उदगादयमादित्योविश्वेनसहसासह । द्विषंतंमह्यंरन्धयन्मोऽअहंद्विषतेरधं ह्रूं ह्रैं ह्रौं ह्रः ॐआदि-

त्यसवित्रर्कभास्करेभ्योनमः । २१ । ॐ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः उद्यन्नद्यमित्रमहआरोहन्नुत्तरांदिवं । हृद्रोगंममसूर्यहरिमाणंचनाशय ॥ शुकेषुमेहरिमाणंरोपणाकासुदध्मसि । अथोहारिद्रवेषुमेहरिमाणंनिदध्मसि ॥ उदगादयमादित्योविश्वेनसहसासह । द्विषन्तंमह्यंरधयन्मोऽअहंद्विषतेरधं ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः मित्ररविसूर्यभानुखगपूषहिरण्यगर्भमरीच्यादित्यसवित्रर्कभास्करेभ्योनमः । २२ । एवमेव । २३ । २४ । आदित्यस्यनमस्कारंयेकुर्वन्तिदिनेदिने । जन्मान्तरसहस्रेषुदारिद्र्यंनोपजायते ॥ १ ॥ अनेकतृचाकल्पविधिनैकावृत्तिनमस्काराख्येनकर्मणाश्रीसूर्यनारायणःप्रीयताम् ॥

अथहंसकल्पः ॥ आदित्यस्यनमस्कारंयेकुर्वन्तिदिनेदिने ॥ जन्मान्तरसहस्रेषुदारिद्र्यंनोपजायते ॥ १ ॥ आरोग्यंभास्करादिच्छेच्छ्रियमिच्छेद्धुताशनात् ॥ ज्ञानंमहेश्वरादिच्छेन्मोक्षमिच्छेज्जनार्दनात् ॥ २ ॥ बह्वल्पंवास्वगृह्योक्तंयस्यकर्मप्रचोदितं ॥ तस्यतावतिशास्त्रार्थंकृतेसर्वंकृतंभवेत् ॥ ३ ॥ अथमाध्यंदिनीयानांहंसमन्त्रेणोक्तः श्रीसूर्यार्घ्यप्रदानविधिरुच्यते ॥ ॥ अथप्रयोगः ॥ सुमुखश्चैक० ॥ शुभपुण्यतिथौहरिहरब्रह्मात्रिमूर्तिस्वरूपश्रीसवितृसूर्यनारायणप्रीत्यर्थं ममशरीरेउत्पन्नोत्पत्स्यमानमहारोगनिखिलांगवेदनानिरासार्थंक्षिप्रारोग्यदीर्घायुःप्राप्त्यर्थंहंसकल्पोक्तविधिनापादार्धचैकचैनत्रिरावृत्तेनअमुकावृत्तिसंख्ययातिलरक्ततन्दुलयवदूर्वादर्भरक्तपुष्परक्तचन्दनमिश्रितोदकेनताम्रार्घ्यपात्रेणसूर्यार्घ्यप्रदानंकरिष्ये ॥ तदङ्गगणपतिपूजनंकरिष्ये ॥ तथाभूशुद्ध्यादिकंशरीरशुद्ध्यर्थंपुरुषसूक्तन्यासांश्चकरिष्ये ॥ अथहंसकल्पशापमोचनार्थंयथा-

शक्तिगायत्रीजपमन्त्रं० ॥ अथन्यासः ॥ ॐ हंसइतिमन्त्रस्यवामदेवऋषिः जगतीच्छन्दः श्रीसूर्योदेवतासूर्यार्घ्यप्रदानेनम-
स्कारन्यासेचार्विनियोगः ॥ ॐ हंसइतिमन्त्रस्यवामदेवऋषिः शिरसि ॥ ॐ जगतीच्छन्दःमुखे ॥ ॐ सर्वरोगापहर्ताजग-
दात्मासूर्योदेवता हृदये० ॥ ॐ ब्रह्मक्षत्रंरुपंतत्वंह्रांह्रींह्रूंह्रैंह्रौंह्रः इतिबीजानिनाभौ ॥ ॐ श्रींकींल्कंआधारे ॥ ॐ ह्रांह्रीं-
ह्रूंह्रैंह्रौंह्रःह्रांह्रींह्रूंह्रैंह्रौंह्रः हंसःशुचिषदगु० ऋतंबृहत् ॐ ह्रांह्रींह्रूंह्रैंह्रौंह्रःह्रांह्रींह्रूंह्रैंह्रौंह्रः मित्ररविसूर्यभानुखगपूषाहिरण्य-
गर्भमरीच्यादित्यसवित्रर्कभास्करेभ्योनमः सर्वाङ्गे ॥ अथकरन्यासः ॥ ॐ ह्रां ॐ हंसःशुचिषत् ॐ ह्रां ॐ मित्रायनमः अ-
ङ्गुष्ठाभ्यांनमः ॥ ॐ ह्रीं ॐ वसुरन्तरिक्षसत् ॐ ह्रीं ॐ रवयेनमः तर्जनीभ्यांनमः ॥ ॐ ह्रीं ॐ होतावेदिषत् ॐ ह्रूं ॐ सूर्याय-
नमः मध्यमाभ्यांनमः ॥ ॐ ह्रैं ॐ अतिथिर्दुरोणसत् ॐ ह्रैं ॐ भानवेनमः अनामिकाभ्यांनमः ॥ ॐ ह्रौं ॐ नृषत् ॐ ह्रौं
ॐ खगायनमः कनिष्ठिकाभ्यांनमः ॥ ॐ ह्रः ॐ वरसत् ॐ ह्रः ॐ पूष्णेनमः करतलकरपृष्ठाभ्यांनमः ॥ अथहृदयादिन्यासः ॥
ॐ ह्रां ॐ ऋतसत् ॐ ह्रां ॐ हिरण्यगर्भायनमः हृदयायनमः ॥ ॐ ह्रीं ॐ व्योमसत् ॐ ह्रीं ॐ मरीचयेनमः शिरसेस्वाहा ॥
ॐ ह्रूं ॐ अब्जागोजाः ॐ ह्रूं ॐ आदित्यायनमः शिखायैवषट् ॥ ॐ ह्रैं ॐ ऋतजाअद्रिजाः ॐ ह्रैं ॐ सवित्रेनमः कवचायहुं ॥
ॐ ह्रौं ॐ ऋतम् ॐ ह्रौं ॐ अर्कायनमः नेत्रत्रयायवौषट् ॥ ॐ ह्रः ॐ बृहत् ॐ ह्रः ॐ भास्करायनमः अस्त्रायफट् ॥ अथध्या-
नम् ॥ ध्येयः सदासवितृमण्डलमध्यवर्तीनारायणः सरसिजासनसंनिविष्टः ॥ केयूरवान्मकरकुण्डलवान्किरीटीहारीहिर-

ण्मयवपुर्धृतशङ्खचक्रः ॥ १ ॥ सशङ्खचक्रंरविमंडलेस्थितंकुशेशयाक्रान्तमनन्तमच्युतम् ॥ भजामिबुद्ध्यातपनीयमूर्तिंसुरो-
त्तमंचित्रविभूषणोज्ज्वलम् ॥ २ ॥ इतिध्यानम् ॥ ततोवामभागेकलशपूजनं ॥ वरुणोपरिसमुद्राप्रदर्शनम् ॥ ततःप्र-
क्षालितेऽर्घपात्रे ॐहृदयायनमः इतिमन्त्रेणगन्धपुष्पंनिक्षिप्यप्रणवेनजलेनापूर्यतदर्घ्यपात्रस्थजलंकिंचित्कलशेनिक्षिप्यशेष-
जलेनपूजाद्रव्याणियागभूमिमात्मानंचप्रोक्ष्य ॥ ततःशङ्खघण्टापूजनं ॥ ततोयन्त्रपूजनं ॥ रक्तचन्दनेनाष्टदलंविलिख्य ॥
ॐनमोभगवतेसर्वाभरणसंपन्नायत्रिगुणात्मधारिणेश्रीसूर्यायनमः ॥ भोसूर्यसपरिवारअस्मिन्पात्रेआवाहितोभव ॥ स्था-
पितोभव ॥ संनिधोभव ॥ संनिरुद्धोभव ॥ अवगुण्ठितोभव ॥ अस्त्रेणसंरक्षितोभव ॥ धेनुमुद्रयाअमृतीकृतोभव ॥
योसौपरात्परोदेवःश्रीसूर्यःपरमेश्वरः ॥ यज्ञदेशमिहायातुपूजार्थंसूर्यमण्डलात् ॥ ॐश्रीसूर्यायनमःध्यायामि ॥ अथ-
षोडशोपचारपूजनं ॥ ॐह्रां ॐहंसःशुचिषत् ॐह्रां ॐमित्रायनमः आवाहयामि ॥ ॐह्रीं ॐवसुरन्तरिक्षसत् ॐह्रीं
ॐरवयेनमः आसनार्थेअक्षतान्० ॥ ॐह्रूं ॐहोतावेदिषत् ॐह्रूं ॐसूर्यायनमःपाद्यंस० ॥ ॐह्रैं ॐअतिथिर्दुरोणसत्
ॐह्रैं ॐभानवेनमः अर्घ्यंस० ॥ ॐह्रौं ॐनृषत् ॐह्रौं ॐखगायनमःआचमनीयं० ॥ ॐह्रः ॐवरसत् ॐह्रः ॐपूष्णे-
नमःमलापकर्षस्नानं० ॥ अथपञ्चामृतस्नानं ॥ ॐह्रां ॐऋतसत् ॐह्रां ॐहिरण्यगर्भायनमपयःस्नानं० ॥ ॐह्रीं ॐव्यो-
मसत् ॐह्रीं ॐमरीचयेनमः दधिस्नानं ॥ ॐह्रूं ॐअब्जागोजाः ॐह्रूं ॐआदित्यायनमःघृतस्नानं० ॥ ॐह्रैं ॐऋतजाअ-
द्रिजाः ॐह्रैं ॐसवित्रेनमःमधुस्नानं० ॥ ॐह्रौं ॐऋतं ॐह्रौं ॐअर्कायनमः शर्करास्नानं० ॥ ॐह्रः ॐबृहत् ॐह्रः

ॐभास्करायनमः शुद्धोदकस्नानं० ॥ ॐह्रांह्रीं ॐहुं(ँ)सःशुचिषद्वसुरन्तरिक्षसत् ॐह्रांह्रीं ॐमित्ररविभ्यांनमःआचमनीयं० ॥ पञ्चोपचारैःसंपूज्यपुरुषसूक्तेनाभिषेकंकुर्यात् ॥ ॐह्रूंह्रैं ॐहोतावेदिषदतिथिर्दुरोणसत् ॐह्रूंह्रैं ॐसूर्यभानुभ्यां नमःवस्त्रंस० ॥ ॐह्रौंह्रः ॐनृषद्वरसत् ॐह्रौंह्रः ॐखगपूषभ्यांनमःउपवीतं० ॥ ॐह्रांह्रीं ॐऋतसद्व्योमसत् ॐह्रांह्रीं ॐहिरण्यगर्भमरीचिभ्यांनमःचन्दनं० ॥ ॐह्रूंह्रैं ॐअब्जागोजाऋतजाअद्रिजाः ॐह्रूंह्रैं ॐआदित्यसवितृभ्यांनमःअक्षतान्० ॥ ॐह्रौंह्रः ॐऋतंबृहत् ॐह्रौंह्रः ॐअर्कभास्कराभ्यांनमःपुष्पंस० ॥ अथाङ्गपूजा ॥ ॐआदित्यायनःपादौपूजयामि ॥ ॐसवित्रेनमःजङ्घेपू० ॥ ॐसूर्याय०जानुनीपू० ॥ ॐभानवेनमः ऊरूपू० ॥ ॐपूष्णेनमःकटिंपू० ॥ ॐगभस्तिनेनमः नाभिंपू० ॥ ॐमार्तण्डायनमःहृदयंपू० ॥ ॐजगच्चक्षुषेनमःकण्ठंपू० ॥ ॐतिमिरनाशकाय० मुखंपू० ॥ ॐजातवेदसेनमःनेत्रेपू० ॥ ॐतेजोरूपायनमः शिरःपूजयामि ॥ इत्यङ्गपूजा ॥ अथद्वादशदलेषु ॥ ॐमित्रायनमः ॥ ॐरवयेनमः ॥ ॐसूर्याय० ॥ ॐभानवे० ॥ ॐखगाय० ॥ ॐपूष्णेन० ॥ ॐहिरण्यगर्भाय० ॥ ॐमरीचये० ॥ ॐआदित्याय० ॥ ॐसवित्रे० ॥ ॐअर्काय० ॥ ॐभास्कराय० ॥ ततःअष्टदलेषु ॥ ॐमार्तण्डाय० ॥ ॐभानवेन० ॥ ॐआदित्याय० ॥ ॐहंसाय० ॥ ॐतपनाय० ॥ ॐसूर्याय० ॥ ॐदिवाकराय० ॥ ॐभास्कराय० ॥ ततोमध्ये ॥ ॐमासाधिपतयेनमः ॥ ततःअष्टदिक्षु ॥ ॐइन्द्रायनमः ॥ ॐअग्नये० ॥ ॐयमाय० ॥ ॐनिर्ऋतये० ॥ ॐवरुणाय० ॥ ॐवायवे० ॥ ॐसोमाय० ॥ ॐईशानाय० ॥ अथचतुर्द्वारेषु ॥ ॐऋग्वेदाय० ॥ ॐयजुर्वेदाय० ॥ ॐसामवेदाय० ॥ ॐअथर्वणवे-

दाय० ॥ स्थापितदेवताःपञ्चोपचारैः पूजयेत् ॥ ॐह्रांह्रींह्रूंह्रैं ॐहꣳसःशुचिषद्वसुरंतरिक्षसद्धोतावेदिषदतिंथिर्दुरोणसत् ॐह्रांह्रींह्रूंह्रैं ॐमित्ररविसूर्यभानुभ्योनमःधूपं० ॥ ॐह्रौंह्रः ह्रांह्रीं ॐनृषद्वरसदृतसद्योमसत् ॐह्रौंह्रः ह्रांह्रीं ॐखगपूषहिरण्यगर्भमरीचिभ्योनमःदीपंसं० ॥ ॐह्रूंह्रैंह्रौंह्रः ॐअब्जागोजाऋतजाअद्रिजाऋतंबृहत् ॐह्रूंह्रैंह्रौंह्रः ॐआदित्यसवित्रर्कभास्करेभ्योनमःनैवेद्यंसं० ॥ नैवेद्यानन्तरं आचमनीयंसं० ॥ ॐह्रांह्रींह्रूंह्रैं ह्रौंह्रः ह्रांह्रींह्रूंह्रैंह्रौंह्रः ॐहꣳसःशुचिषद्वसु०बृहत् ॐह्रांह्रींह्रूंह्रैंह्रौंह्रः ह्रांह्रींह्रूंह्रैंह्रौंह्रः ॐमित्ररविसूर्यभानुखगपूषहिरण्यगर्भमरीच्यादित्यसवित्रर्कभास्करेभ्योनमःपूगीफलंताताम्बूलंसं० ॥ ॐह्रां० ह्रः ह्रां० ह्रः ॐहꣳसःशु० बृहत् ॐह्रां० ह्रः ह्रां० ह्रः ॐमित्ररवि० भास्करेभ्योनमःदक्षिणांसं० ॥ ॐह्रां० ह्रः ह्रां० ह्रः ॐमित्ररवि०भास्करेभ्योनमः नीराजनदीपं० ॥ पुनः तथैव ॥ मन्त्रपुष्पाञ्जलिंसं० ॥ नमस्करोमि ॥ ततःसूर्योपस्थानं ॥ ॐअग्निमीळेनमस्तुभ्यमिषेत्वोर्जेस्वरूपिणे ॥ अग्नआयाहिवीतस्त्वंनमस्तेज्योतिषांपते ॥ १ ॥ हिमघ्नायतमोघ्नायरक्षोघ्नायचवैनमः ॥ कृतघ्नघ्नायदेवायतस्मैसूर्यात्मनेनमः ॥ २ ॥ कालात्मासर्वभूतात्मावेदात्माविश्वतोमुखः ॥ जन्ममृत्युजराव्याधिसंसारभयनाशनः ॥ दारिद्र्यव्यसनध्वंसीश्रीमान्पातुदिवाकरः ॥ ४ ॥ अथप्रार्थना ॥ ॐनमःसूर्यायशांतायसगुणायादिहेतवे ॥ निवेदयामिचात्मानंत्वंगतिःपरमंमम ॥ १ ॥ नमःसवित्रेजगदेकचक्षुषेजगत्प्रसूतिस्थितिनाशहेतवे ॥ त्रयीमयायत्रिगुणात्मधारिणेविरिंचिनारायणशंकरात्मने ॥२॥ उदयेब्रह्मणोरूपंमध्याह्नेतुमहेश्वरः॥

अस्तमानेस्वयंविष्णुस्त्रैमूर्तिस्तुदिवाकरः ॥ ३ ॥ इतिप्रार्थना ॥ ततःसूर्यगायत्रीजपः ॥ ॐभास्करायविद्महेमहद्द्युतिक-
रायधीमहि ॥ तन्नोआदित्यःप्रचोदयात् ॥ द्वादशवारंजपित्वा ॥ अथसूर्यगायत्र्यर्घः ॐआदित्यायनमः अर्घ्यंसमर्प-
यामि ॥ ॐसूर्यायनमः इदमर्घ्यंस० ॥ ततः अरुणार्घः ॥ ॐविनतातनयोदेवः सर्वसाक्षीसुरेश्वरः ॥ सप्ताश्वः सप्तरज्जु-
श्चअरुणोमेप्रसीदतु ॥ अरुणायनमः इदमर्घ्यंस० ॥ ॐएहिसूर्यसहस्रांशोतेजोराशेजगत्पते ॥ अनुकंपयमांभक्त्यागृहा-
णार्घ्यंनमोस्तुते ॥ अरुणायनमः इदमर्घ्यंस० ॥ ततोऽर्घ्यप्रदानं ॥ ततस्ताम्रपात्रेरक्तचन्दनयवरक्ततन्दुलतिलदूर्वादर्भ-
रक्तपुष्पबिल्वमिश्रितोदकं अर्घ्यपात्रेगृहीत्वाअवनिकृतजानुमण्डलः अर्घ्यदानंकुर्यात् ॥ तद्यथा ॥ हꣳसइतिमन्त्रस्यवाम-
देवऋषिः जगतीच्छन्दः श्रीसूर्योदेवता अर्घ्यदानेविनियोगः ॥ ॐह्रां ॐहꣳसःशुचिषत् ॐह्रां ॐमित्रायनमः इदमर्घ्यं
समर्पयामि ॥ १ ॥ ॐह्रीं ॐवसुरन्तरिक्षसत् ॐह्रीं ॐरवयेनमः इदमर्घ्यं० ॥ २ ॥ ॐह्रूं ॐहोतावेदिषत् ॐह्रूं ॐसू-
र्यायनमः इदमर्घ्यं० ॥ ३ ॥ ॐह्रैं ॐअतिथिर्दुरोणसत् ॐह्रैं ॐभानवेनमः इदमर्घ्यंस० ॥ ४ ॥ ॐह्रौं ॐनृषत् ॐह्रौं
ॐखगायनमः इदमर्घ्यं० ॥ ५ ॥ ॐह्रः ॐवरसत् ॐह्रः ॐपूष्णेनमः इदमर्घ्यंस० ॥ ६ ॥ ॐह्रां ॐऋतसत् ॐह्रां
ॐहिरण्यगर्भायनमः इदमर्घ्यं० ॥७॥ ॐह्रीं ॐव्योमसत् ॐह्रीं ॐमरीचयेनमः इदमर्घ्यं० ॥ ८ ॥ ॐह्रूंॐ अब्जागोजाः
ॐह्रूं ॐआदित्यायनमः इदमर्घ्यं० ॥ ९ ॥ ॐह्रैं ॐऋतजाअद्रिजाः ॐह्रैं ॐसवित्रेनमः इदमर्घ्यं० ॥ १० ॥ ॐह्रौं ॐऋ-

तम् ॐह्रौं ॐअर्काय नमः इदमर्घ्यं० ॥ ११ ॥ ॐह्रः ॐबृहत् ॐह्रः ॐभास्कराय नमः इदमर्घ्यं० ॥ १२ ॥ ॐह्रांह्रीं
ॐहंसःशुचिषद्वसुरन्तरिक्षसत् ॐह्रांह्रीं ॐमित्ररविभ्यांनमः इदमर्घ्यं० ॥ १३ ॥ ॐह्रूंह्रैं ॐहोतावेदिषदतिथिर्दुरोण-
सत् ॐह्रूंह्रैं ॐसूर्यभानुभ्यां नमः इदमर्घ्यं० ॥१४॥ ॐह्रौंह्रः ॐनृषद्वरसत् ॐह्रौंह्रः ॐखगपूषभ्यांनमः इदमर्घ्यं० ॥१५॥
ॐह्रांह्रीं ॐऋतसद्व्योमसत् ॐह्रांह्रीं ॐहिरण्यगर्भमरीचिभ्यांनमः इदमर्घ्यं० ॥ १६ ॥ ॐह्रूंह्रैं ॐअब्जागोजाऋतजाअ-
द्रिजाः ॐह्रूंह्रैं ॐआदित्यसवितृभ्यांनमः इदमर्घ्यं० ॥ १७ ॥ ॐह्रौंह्रः ॐऋतंबृहत् ॐह्रौंह्रः ॐआदित्यसवितृभ्यांनमः
इदमर्घ्यं० ॥ १८ ॥ ॐह्रांह्रींह्रूंह्रैं ॐहंसःशुचिषद्वसुरन्तरिक्षसद्धोतावेदिषदतिथिर्दुरोणसत् ॐह्रांह्रींह्रूंह्रैं ॐमित्ररविसू-
र्यभानुभ्योनमः इदमर्घ्यं० ॥ १९ ॥ ॐह्रौंह्रःह्रांह्रीं ॐनृषद्वरसदृतसद्व्योमसत् ॐह्रौंह्रःह्रांह्रीं ॐखगपूषहिरण्यगर्भमरीचि-
भ्योनमः इदमर्घ्यं० ॥ २० ॥ ॐह्रूंह्रैंह्रौंह्रः ॐअब्जागोजाऋतजाअद्रिजाऋतंबृहत् ॐह्रूंह्रैंह्रौंह्रः ॐआदित्यसवित्रर्कभा-
स्करेभ्योनमः इदमर्घ्यं० ॥२१॥ ॐह्रांह्रींह्रूंह्रैंह्रौंह्रः ह्रांह्रींह्रूंह्रैंह्रौंह्रः ॐहंसःशुचिषत्० बृहत् ॐह्रांह्रींह्रूंह्रैंह्रौंह्रः ह्रांह्रींह्रूंह्रैं-
ह्रौंह्रः ॐमित्ररविसूर्यभानुखगपूषहिरण्यगर्भमरीच्यादित्यसवित्रर्कभास्करेभ्योनमः इदमर्घ्यं० ॥२२॥ ॐह्रां० ह्रः ह्रां० ह्रः
ॐहंसःशुं० बृहत् ॐह्रां० ह्रः ह्रां० ह्रः ॐमित्ररवि० भास्करेभ्योनमः इदमर्घ्यं० ॥२३॥ ॐह्रां० ह्रः ह्रां० ह्रः ॐहंसः-
शुं० बृहत् ॐह्रां० ह्रः ह्रां० ह्रः ॐमित्ररवि० भास्करेभ्योनमः इदमर्घ्यं० ॥ २४ ॥ एकावृत्तिंद्विगुणीकृत्वाततोर्घ्यवत्साष्टा-

ङ्गंप्रणमेत् ॥ ततउत्तरपूजनं ॥ अद्यतिथौ सवितृसूर्यनारायणप्रीत्यर्थंउत्तरपूजनंक० ॥ षोडशोपचारैःसंपूज्य ॥ अनेनोत्तरपूजनेन श्रीसवितृसूर्यनारायणःप्रीयतां ॥ ततःपूर्ववन्न्यासंकृत्वा ॥ अथविसर्जनं ॥ गच्छगच्छपरंस्थानंस्वस्थानेपरमेश्वर ॥ यत्रब्रह्मादयोदेवाविविदुःपरमंपदं ॥ अथक्षमापनं ॥ अर्घ्यपूजादिकंचैवयत्कृतंत्वदनुग्रहात् ॥ तेनमेकर्मणादेवप्रीतोभववरप्रद ॥ हीनोविभक्तिवर्णैश्चव्यंजनैरक्षरैस्तथा ॥ तत्सर्वंक्षम्यतांदेवप्रसीदपरमेश्वर ॥ अनुस्वारविहीनश्चअर्घ्येण्वाम्रेडितस्यच ॥ दोषाःप्रयान्तुनाशंत्वंत्वत्प्रसादाद्दिवाकर ॥ परिपूर्णंस्वयंवन्द्यंपरानन्दंसमाश्रितं ॥ यन्निरुद्धोसिदेवेशतत्सर्वंक्षन्तुमर्हसि ॥ न्यूनातिदोषरहितंकृतकर्ममयाविभो ॥ भवेत्पूर्णंकृपासिन्धोक्षमस्वचनमोस्तुते ॥ यानिकानिचेतिप्रदक्षिणा ॥ अन्यथाशरणं० ॥ मन्त्रहीनं० ॥ आवाहनंन० ॥ यदक्षरप० ॥ विसर्गबिन्दु० ॥ गतंपापं० ॥ ततःसनकादिपूजनं ॥ मूलमन्त्रेणतीर्थंगृहीत्वा ॥ एतयात्रगन्धपुष्पधूपदीपनैवेद्यताम्बूलदक्षिणाप्रदक्षिणाएकावृत्तिसंख्ययार्घ्यप्रदाननमस्कारसहितयाअनयायथासंभवपूजयाश्रीसवितृसूर्यनारायणःप्रीयतांनमम ॥ ॐतत्सद्ब्रह्मार्पणमस्तु ॥ इतिहंसकल्पोक्तार्घ्यप्रदानविधिः ॥

अथतुलसीपूजा ॥ आचमनादि ॥ ध्यायेचतुलसीदेवींश्यामांकमललोचनां । प्रसन्नपद्मकह्लारवराभयचतुर्भुजां ॥ किरीटकेयूरधरांकुण्डलादिविभूषितां । धवलांशुकसंवीतांपद्मासननिषेदुषीं ॥ ध्यानं ॥ देवित्रैलोक्यजननिसर्वभूतैकपावनि । आगच्छभगवत्यत्रप्रसीदतुलसिप्रिये ॥ आवाहनं ॥ सर्वदेवमयेदेविसर्वदाविष्णुवल्लभे । देविस्वर्णमयंदिव्यंगृहाणासनमुत्तमं ॥ आसनं ॥ सर्वदेवमयाकारेसर्वदेवनमस्कृते ।

इदंपाद्यंगृहाणत्वंतुलसिसंप्रसीदमे ॥ पाद्यं ॥ सर्वतीर्थमयाकारेसर्वगर्भनिषेविते । इदमर्घ्यंगृहाणत्वंदेविदैत्यान्तकेप्रिये ॥ अर्घ्य ॥ सर्वलोकस्यरक्षार्थसदासंनिधिकारिणि । गृहाणतुलसिप्रीत्याइदमाचमनीयकं ॥ आचमनीयं ॥ गङ्गादिभ्योनदीभ्यश्चसमानीतमिदंजलं । स्नानार्थंतुलसिस्वच्छंप्रीत्यासंप्रतिगृह्यतां ॥ स्नानं ॥ क्षीरोदमथनोद्भूतंचन्द्रलक्ष्मीसहोदरं । गृह्यतांपरिधानार्थमिदंलक्ष्मीसहोदरे ॥ वस्त्रं ॥ श्रीगन्धंकुङ्कुमंदिव्यंकर्पूरागरुसंयुतं । कल्पितंतेमहादेविप्रीत्यर्थंप्रतिगृह्यतां ॥ गन्धं ॥ नीलोत्पलसुकह्लारमालत्यादीनिशोभने । पद्मानिगन्धवन्त्याद्येपुष्पाणिप्रतिगृह्यतां ॥ पुष्पं ॥ धूपंगृहाणदेवेशिमनोहारिसुगुग्गुलुं । आज्यमिश्रंचतुलसिभक्त्याभीष्टप्रदायिनि ॥ धूपं ॥ अज्ञानतिमिरांधस्यज्ञानदीपप्रदायिनि । त्वयाश्रीतुलसिप्रीत्यादीपोयंप्रतिगृह्यतां ॥ दीपं ॥ नमस्तेजगतांनाथेप्राणिनांप्रियदर्शने । यथाशक्तिमयादत्तंनैवेद्यंप्रतिगृह्यतां ॥ नैवेद्यं ॥ नमोभगवतिश्रेष्ठेनारायणिजगन्मये । तुलसित्वरयादेविपानीयंप्रतिगृह्यतां ॥ पानीयं ॥ अमृतेऽमृतसंभूतेतुलस्यमृतरूपिणि । कर्पूरादिसमायुक्तंताम्बूलंप्रतिगृह्यतां ॥ तांबूलं ॥ दक्षिणेदक्षिणकरेस्वभक्तानांप्रियंकरे । करोमितेसदाभक्त्याविष्णुकान्तेप्रदक्षिणां ॥ प्रदक्षिणां ॥ नमोनमोजगद्धात्र्यैजगदाद्यैनमोनमः । नमोनमोजगद्भूत्यैनमस्तेपरमेश्वरि ॥ नमस्कारं ॥ प्रसीदममदेवेशिकृपयापरमेश्वरि । अभीष्टफलसिद्ध्यर्थंकरुणांकुरुमेसदा ॥ प्रार्थना ॥ इतितुलसीपूजासमाप्ता ॥

**अथदेवपूजानिर्णयः** ॥ **कूर्मपुराणे**—ब्रह्माणं शंकरं सूर्यं तथैव मधुसूदनम् । अन्यांश्चाभिमतान्देवान्भक्त्या त्वक्रोधनो नरः । स्वमन्त्रैरर्चयेन्नित्यं पत्रैः पुष्पैस्तथाम्बुभिः ॥ **नृसिंहपुराणे**—जलदेवं नमस्कृत्य ततो गच्छेद्गृहं बुधः । पौरुषेण च सूक्तेन ततो विष्णुं समर्चयेदिति ॥ **महाभारते**—कलौ कलिमलध्वंसं सर्वपापहरं हरिम् । येऽर्चयन्ति नरा नित्यं तेऽपि वन्द्या यथा हरिः ॥ इति । मन्त्रा वैदिकाः नाममन्त्रा वा । अतएव **ब्राह्मे**—ओंकारादिसमायुक्तं नमस्कारान्तसंयुतम् । स्वनाम सर्वसत्वानां मन्त्र इत्यभिधीयते ॥

अनेनैव विधानेन मन्त्रपुष्पं निवेदयेत् । एकैकस्य प्रकुर्वीत यथोद्दिष्टक्रमेण त्विति ॥ **तत्रैव**—मन्त्राच्छतगुणं प्रोक्तं भक्त्या लक्षगुणोत्तरम् । भक्तिमन्त्रसमेतं तु कोटिकोटिगुणोत्तरम् ॥ ॥ **पञ्चायतनान्याह बोपदेवः**—**शंभौ** मध्यगते हरीनहरभूदेव्यो, **हरौ** शंकरेभास्ये-नागसुता, **रवौ** हरगणेशाजाम्बिकाः स्थापिताः, । **देव्यां** विष्णुहरैकदन्तरवयो, **लम्बोदरे**ऽजेश्वरेनार्याः शंकरभागतोऽतिसुखदा व्यस्तास्तु ते हानिदा इति ॥

॥ पञ्चायतनस्थापनप्रकारः ॥

पूर्वादिक्

(उत्तरा — left; दक्षिणा — right)

| | | | | | |
|---|---|---|---|---|---|
| | विष्णुः २   सूर्य ३ | शंकरः २   गणेश ३ | शकर २   गणेशः ३ | विष्णु २   शंकरः ३ | विष्णुः २   शंकरः ३ |
| | शंकरः १ | विष्णु १ | सूर्य. १ | देवी १ | गणेशः १ |
| | देवी ५   गणेशः ४ | देवी ५   सूर्यः ४ | देवी ५   विष्णुः ४ | सूर्यः ५   गणेशः ४ | देवीः ५   सूर्यः ४ |

पश्चिमा

अत्र पञ्चानामप्येकस्यावाहनादिनमस्कारान्तं पूजाकाण्डं कृत्वा परस्यापीत्येवं काण्डानुसमयः । मुख्ये पुष्पाञ्जलिं दत्वा गणेशाद्यर्चनं भवेत् । गणेश एव मुख्यश्चेत्तत्र सूर्यक्रमाद्भवेदिति वचनेन क्रमाभिधानात् । मुख्ये प्रधानदेवतायां । पुष्पाञ्जलिशब्देन च तदन्ता पूजा लक्ष्यते, पुष्पाञ्जल्यन्तरं वा विधीयत इति । **शारदातिलकटीकायाम्**—युक्तंतु मुख्यत्वोक्त्या तत्प्रतियोगिकाङ्गत्वलाभेन चैकप्र-

योगविधिकल्पनं तेन चैककालत्वावगतेः—वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्तीतिवत्सर्वेषामावाहनं ततः स्थापनमिति पदार्थानुसमयएव । सतु मुख्ये पुष्पाञ्जल्यन्तां पूजां कृत्वाङ्गदेवतायाः पूजायां कार्य इति दिक् ॥ ॥ **पुष्पादिविचारः भविष्यत्पुराणे**—पुष्पैररण्यसंभूतैः पत्रैर्वा गिरिसंभवैः । अपर्युषितनिश्छिद्रैः प्रोक्षितैर्जन्तुवर्जितैः ॥ आत्मारामोद्भवैर्वापि भक्त्या संपूजयेत्सुरान् । कृमिकीटावपन्नानि शीर्णपर्युषितानि च ॥ स्वयं पतितपुष्पाणि त्यजेदुपहतानि च । उपहतानि मलादिभिः । मुकुलैर्नार्चयेद्देवमपक्कं न निवेदयेत् ॥ फलं च कृमिविद्धं च प्रयत्नात्तद्विवर्जयेत् ॥ अलाभे तु सुपुष्पाणां पत्राण्यपि निवेदयेत् । पत्राणामप्यलाभे तु फलान्यपि निवेदयेत् ॥ फलानामप्यलाभे तु तृणगुल्मौषधीरपि । ओषधीनामलाभे तु भक्त्या भवति पूजितः । प्रत्येकमुक्तपुष्पेण दशसौवर्णिकं फलम् । स्रजापि नृपशार्दूल तदेव द्विगुणं भवेत् ॥ **विष्णुधर्मोत्तरे**—धर्मार्जितैर्धनक्रीतैर्यः कुर्यात्केशवार्चनम् । उद्धरिष्यत्यसंदेहं सप्तपूर्वांस्तथा परानिति । इदं विप्रातिरिक्तपरम् । समित्पुष्पकुशादीनि ब्राह्मणः स्वयमाहरेत् । शूद्रानीतैः क्रयक्रीतैः कर्म कुर्वन्पतत्यध इति **भविष्ये** ब्राह्मणग्रहणादिति भ्रातृचरणाः । लक्षपुष्पार्चनादौ तु क्रयक्रीतमपि देयमिति **मन्त्रकोशकारः** ॥ ॥ **पुष्पादिवहन् न नमस्कार्यः** । समित्पुष्पकुशादीनि वहन्तं नाभिवादयेत् । तद्धारी चैव नान्यान्हि निर्माल्यं तद्भवेत्तयोः ॥ तथा—देवोपरि धृतं यच्च वामहस्ते धृतं च यत् । देवतास्तन्न गृह्णन्ति पुष्पं निर्माल्यतां गतमिति ॥ नित्यपूजार्थं परोपवनादेरपि ग्राह्यं । नच तच्चौर्य—देवतार्थं च कुसुममस्तेयं मनुरब्रवीदिति वचनात् ॥ पूजार्थं पुष्पादि न याचेत्—याचितैः पत्रपुष्पाद्यैर्यः करोति ममार्चनमिति **वाराहे** तस्यापराधिषु गणितत्वात् ॥ ॥ **पुष्पादीनां पर्युषितकालेयत्ता—आ० म० भविष्यत्पुराणे**—प्रहरं तिष्ठते जाती करवीरमहर्निशम् । तुलस्यां बिल्वपत्रे च जलजेषु च सर्वशः ॥ न पर्युषितदोषोस्ति मालाकारगृहेषु च ॥ ॥ **देवपरत्वेन विहितनिषिद्धपुष्पाणि** ॥ मुद्गराणि कदम्बानि

रात्रौ देयानि भास्करे । कनकानि कदम्बानि रात्रौ देयानि शंकरे । दिवा चान्यानि पुष्पाणि दिवा रात्रौ च मल्लिका ॥ **तत्रैव**—जाती शमी कुशाः कुङ्कुमल्लिकाकरवीरजम् । नागपुन्नागकाशोकरक्तनीलोत्पलानि च । चम्पकं बकुलं चैव पद्मं बिल्वं पवित्रकम् । एतानि सर्वदेवानां विहितानि समानि च ॥ कङ्कु कुब्जकं । नागो नागकेसरं । पाटला च शमीपत्रं दुर्गायास्तु हिताहितम् । विहितं प्रतिषिद्धं चेत्यर्थः । कुन्दं पलाशकुसुमं दूर्वा च शिवपूजने । कुमुदं कुङ्कुमं द्रोणं तगरं सूर्यपूजने । विहितनिषिद्धमित्यर्थः । कुङ्कुममत्र पुष्पं । अवकः कर्णिकारस्तु किंकिरातो हरेस्तथा । किंकिरातः पीताम्रकः । तिलकं मालती बाणस्तुलसी भृङ्गराजकम् । तमालं शिवदुर्गार्थं निषिद्धं विहितं भवेत् । बाणः करसला इति प्रसिद्धः । जयः काशः श्वेतपद्मं श्वेतमन्दारकं तथा । दुर्गायाश्चैव विष्णोश्च निषिद्धं विहितं भवेत् । जया जयन्ती । अगस्तिरतिमुक्तश्च तिरीटं च हरे हरौ । अपामार्गस्य पुष्पं च दुर्गायाश्च हिताहितम् । अतिमुक्तो माधवीलता । तिरीटं लोध्रं । धत्तूरं शिंशपापुष्पं मन्दारश्चापराजिता । सूर्यविष्ण्वोर्न विहितं दमनं शिवसूर्ययोः ॥ ॥ **शिवे निषिद्धानि**—केतकी चातिमुक्तश्च कुन्दो यूथो मदन्तिका । शिरीषसर्जबन्धूककुसुमानि विवर्जयेत् ॥ अङ्कोलं पत्रकुसुमं करजेन्द्रतरूद्भवम् । शिवे विवर्जयेत्कुन्दमुन्मत्तं च तथा हरौ । देवीनामर्कमन्दारौ सूर्यस्य तगरं तथेति । **विष्णुः**—अर्कनिषेधो दुर्गेतरविषयः । **दुर्गापूजाधिकारे** करवीरार्कपुष्पैरित्युक्तत्वात् ॥ ॥ **विष्णौ निषिद्धानि । विष्णुः**—नोग्रगन्धीनि पुष्पाणि नच कण्टकितं तथा । कण्टकितमपि शुक्लं सुगन्धि दद्यात् । न रक्तं । कुङ्कुमजं जलजं च रक्तमपि दद्यात् । अजलजमपि पाटलादि संध्याकरवीरपारिभद्रशमीपत्रपलाशाशोककुशवर्जं न दद्यात् ॥ **विष्णुधर्मोत्तरे**—कुटजशाल्मलीपुष्पशैरीषक्रकचधत्तूरकृष्णपुष्पार्कं च विष्णौ निषिद्धम् ॥ **नृसिंहपुराणे**—मालायोग्यताराहित्ये सति निर्माल्यं भवतीत्युक्तं । तुलसीचन्दनादीनां च न निर्माल्यतेत्युक्तं । तेन प्रातःकालेप्यपनयने न दोषः ॥ ॥

**सूर्यस्य विहितानि भविष्यत्पुराणे**—मालती मल्लिका चैव दूर्वाकाशोऽतिमुक्तकः । पाटलाकरवीराणि जपा जयन्तिरेव च ॥ चम्पको रोतकः कन्दो बाणो बर्बरमल्लिका । अशोककर्णिकारौ च तथैवाप्याटरूपकः ॥ शतपत्राणां चान्यानि बकुलं च विशेषतः । अगस्तिकिंशुकौ तद्वत्पूजार्थं भास्करस्य च ॥ विहितानीतिशेषः ॥ **अथ पत्राणि**—बिल्वपत्रं शमीपत्रं भृङ्गराजस्य पत्रकं । तमालपत्रं च हरेः सद्यस्तुष्टिकरं रवेः ॥ तुलसीकालतुलसी तथा रक्तं च चन्दनं । केतकीपत्रकुसुमं सदैव तपनप्रियं ॥ ॥ **शिवप्रियपुष्पाणि**—करवीरको बकश्चैव अर्क उन्मत्तकस्तथा । पाटला बृहती चैव तथाच गिरिकर्णिका ॥ तथा काशस्य पुष्पाणि मन्दारश्चापराजिता । शमीपुष्पाणि चान्यानि कुब्जकं शाखिनी तथा ॥ अपामार्गस्तथा पद्मं शमीपत्रं सरोचकं । चम्पकोशीरतगरं तथा वै नागकेसरं ॥ पुंनागं किंकिरातं च द्रोणपुष्पं तथा शुभं ॥ शिंशपोदुम्बरश्चैव जपा मल्ली तथैव च । पुष्पाणि यज्ञवृक्षस्य तथा बिल्वं प्रियं शिवे ॥ कुङ्कुमस्य च पुष्पाणि तथा वैकङ्कतस्य च । नीलं च कुमुदं चैव तथा रक्तोत्पलानि च ॥ सुरभीणि च सर्वाणि स्थलजान्यौकजानि च । गृह्णामि शिरसा देवि यो मे भक्त्या निवेदयेत् ॥ शाखिनी मयूरशिखा । नीलोत्पलसहस्रस्य यो मालां संप्रयच्छति । शिवाय विधिवद्भक्त्या तस्य पुण्यफलं शृणु ॥ कल्पकोटिसहस्राणि कल्पकोटिशतानि च । वसेच्छिवपुरे श्रीमान् शिवतुल्यपराक्रमः ॥ अर्ककरवीरधत्तूरादिपुष्पदानफलं शिवलोकप्राप्तिः ॥ **शिवधर्मे**—तस्मात्पुष्पप्रदानेन लिङ्गेषु प्रतिमासु च । अशीतिवर्षकोटीनां दुर्गतिं न नरो व्रजेत् ॥ शुष्काण्यपि च पत्राणि श्रीवृक्षस्य सदैव हि । प्रदातव्यानीति शेषः । **भविष्ये**—धत्तूरकैश्च यो लिङ्गं सकृत्पूजयते नरः । स गोदानफलं प्राप्य शिवलोके महीयते ॥ ॥ **विष्णोः प्रियपुष्पाणि नारसिंहपुराणे**—मल्लिकामालतीजातीकेतक्यशोकचम्पकैः । पुंनागनागबकुलैः पद्मकैरुत्पलादिभिः ॥ एतैरन्यैश्च कुसुमैः प्रशस्तं पूजनं हरेः ॥ **वामनपुराणे**—जाती शताह्वा सुमना कुन्दं चाम्बुपुट-

स्तथा । बाणं च चम्पकाशोकं करवीरं च यूथिका ॥ पारिभद्रं पाटला च बकुलं गिरिशालिनी । तिलकं जासुवनजं पीतजं तगरं त्वपि ॥ एतानि हि प्रशस्तानि कुसुमान्यच्युतार्चने । सुरभीणि तथान्यानि वर्जयित्वा तु केतकीं ॥ केतकीं धत्तूरमिति केचित् । वनकेतकीत्यपरे । शताह्वाऽशोक इति प्रसिद्धः । सुमनाः सुवर्णजातिः । अम्बुपुटकः कर्णिकारः । जासुवनजं जपा । गिरिशालिनी श्वेतकुटजं ॥ **अथ पत्राणि**—अपामार्गस्य प्रथमं भृङ्गराजमतःपरम् । तस्माच्च खदिरं श्रेष्ठं ततोपि कुशपत्रकं ॥ तस्माद्दमनकं श्रेष्ठं ततो बिल्वस्य पत्रकं । बिल्वपत्रादपि हरेस्तुलसीपत्रमुत्तमं ॥ एतेषां तु यथालाभं पत्रैर्यश्चार्चयेद्धरिं । सर्वपापविनिर्मुक्तो विष्णुलोके महीयते ॥ **नरसिंहपुराणे**—कृष्णमूर्धनि विन्यस्ता तुलसीपत्रमञ्जरी । सुवर्णकोटिपुण्यानां पुण्यं यच्छत्यतोऽधिकं ॥ **तुलसीरोपणमन्त्रः**—महाप्रसादजननी सर्वसौभाग्यवर्धिनी । आधिव्याधिहरा नित्यं तुलसि त्वं नमोस्तु ते ॥ द्रोणपुष्पे तथैकस्मिन्साधकाय निवेदिते । दश दत्वा सुवर्णानि तत्फलं लभते नरः ॥ अगस्तिकुसुमैर्देवं योऽर्चयेच्च जनार्दनम् । दर्शनात्तस्य देवर्षे नरकान्कोनु यास्यति ॥ द्रोणपुष्पं खादिरं च शमी बिल्वं बकं तथा । बकं बकुलं । नद्यावर्तं करवीरं तथा श्वेतं च किंशुकं ॥ कुशपुष्पं तमालं च चम्पकाशोककेतकी ।..............
त्रिसंध्यं श्वेतजा तु या ॥ कुन्दं च शतपुष्पं च मल्लिका जातिपुष्पकं । पूर्वपूर्वसहस्रेभ्योऽधिकं स्यादुत्तरोत्तरं ॥ जातीपुष्पसहस्रेण यच्छेन्मालां सुशोभनां । विष्णवे विधिवद्भक्त्या तस्य पुण्यफलं शृणु ॥ कल्पकोटिसहस्राणि कल्पकोटिशतानि च । वसेद्विष्णुपुरे श्रीमान्विष्णुतुल्यपराक्रमः ॥ मञ्जरी सहकारस्य केशवोपरि नारद । यच्छन्ति ये महात्मानो गोकोटिफलभागिनः ॥ तिलपात्रप्रदानस्य फलं प्राप्नोत्यसंशयं ॥ पुरंध्रिः पूर्वदेशे पङ्गुरिति प्रसिद्धा ॥ ॥ **दुर्गायाः प्रियपुष्पाणि देवीपुराणे**—शृणु शुक्र प्रवक्ष्यामि पुष्पाध्यायं समासतः । ऋतुकालोद्भवैः पुष्पैर्मल्लिकाजातिपुष्पकैः । सितरक्तैस्तथा पुष्पैः पद्मैश्च पाण्डुरैस्तथा । किंशुकैस्तगरैश्चैव किंकिरातैः सचम्पकैः ॥ बकुलै-

श्चैव मन्दारैः कुन्दपुष्पैस्तिरीटकैः । करवीरार्कपुष्पैश्च शैंशिपैश्चापराजितैः ॥ सितरक्तैस्तथा पीतैः कृष्णैश्चैव चतुर्विधैः । धत्तूरकादिपुष्पैश्च बन्धुकागस्तिसंभवैः ॥ मदनैः सिन्धुवारैश्च सुरभिमरुबकैस्तथा । लताभिर्ब्रह्मवृक्षस्य दूर्वाकुन्दैः सुशोभनैः ॥ मञ्जरीभिः कुशानां च बिल्वपत्रैः सुशोभनैः । रक्तान्वितैस्तथा सर्वैर्जलजैः स्थलसंभवैः ॥ पत्रैः पुष्पैर्यथान्यायं सर्वौषधिमयैः शुभैः । धान्यानां सर्वपत्रैश्च पुष्पैश्चैव प्रपूजयेत् ॥ बिल्वपत्रैः पूजने राजसूयफलं । करवीरस्रजा अग्निष्टोमफलं । बकुलस्रजा वाजपेयफलं । द्रोणस्रजा राजसूयफलं । एवमन्यदपि ॥ इति पुष्पपत्रादिविचारः ॥ ॥ **अथ धूपादि भविष्ये**—देवदारुसमेतं च सर्जश्रीवासकुन्दुरुं । श्रीफलं चाज्यमिश्रं च दग्ध्वाप्नोति परां गतिं ॥ सर्जः शालरसः । श्रीवासः सरलद्रवः । कुन्दुरुः शैलेयमिति **स्मार्तः** । सल्लकीनिर्यास इति **दामोदरः** । एभ्यः सौगन्धिकं धूपं पट्सहस्रगुणोत्तरं । अगरं शतसाहस्रं द्विगुणं वा सिताङ्गुलं ॥ गुग्गुलं घृतसंयुक्तं साक्षाद्गृह्णाति शंकरः । **दीपः तथा**—तैलेनापि हि यो दद्याद्धृतभावेन मानवः । तेन दीपप्रदानेन शिववद्राजते भुवि ॥ ॥ **नैवेद्यः नन्दिकेश्वरे**—अथ भक्त्या शिवः पूज्यो नैवेद्यमुपकल्पयेत् । यद्यदेवात्मनः श्रेयस्तदीशाय प्रकल्पयेत् ॥ **भविष्ये तु**—शालितण्डुलप्रस्थं तु कुर्यादन्नं सुसंस्कृतम् । शिवाय तु चरुं दद्याच्चतुर्दश्यां समाहितः ॥ **शैवसर्वस्वे स्कान्दे**—एकमाम्रफलं पक्वं यः शंभोर्विनिवेदयेत् । वर्षाणामयुतं भोगैः शिवलोके महीयते ॥ एकं मोचाफलं पक्वं यः शिवाय निवेदयेत् । सर्वभक्ष्यमहाभोगैः शिवलोके महीयते ॥ मोचा कदली ॥ **प्रदक्षिणा शिवधर्मे**—लिङ्गवेदी भवेद्देवी लिङ्गं साक्षान्महेश्वरः । तयोः संपूजनात्स्यातां देवी देवश्च पूजितौ ॥ सव्यं व्रजेत्ततोऽसव्यं प्रणालं नैव लङ्घयेत् । एकीभूतमना रुद्रे यः कुर्यात्त्रिः प्रदक्षिणं । छिन्नस्तेन भवेद्ग्रन्थिर्न तस्य पुनरुद्भवः ॥ **नमस्कारः भविष्ये**—जानुभ्यां चैव पाणिभ्यां शिरसा च विचक्षणः । कृत्वा प्रणामं देवेशे सर्वान्कामानवाप्नुयात् ॥ **लिङ्गपुराणे**—गन्धधूपनमस्कारैर्मुखवाद्यैश्च सर्वशः । यो मामर्चयते

तत्र तस्य तुष्याम्यहं सदा ॥ ॥ **निर्माल्यमहिमा स्कान्दे**—निर्माल्यं यो हि मद्भक्त्या शिरसा धारयिष्यति । अशुचिर्भिन्नमर्यादो नरः पापसमन्वितः । नरके पच्यते घोरे तिर्यग्योनौ च संभवेत् ॥ ब्रह्महापि शुचिर्भूत्वा निर्माल्यं यस्तु धारयेत् । तस्य पापं महच्छीघ्रं नाशयिष्ये महाव्रतैः ॥ शुचिः स्नानादिनेत्यर्थः ॥ **बह्वृचपरिशिष्टे**—अग्राह्यं शिवनिर्माल्यं पत्रं पुष्पं फलं जलम् । शालग्रामशिलास्पर्शात्सर्वं याति पवित्रताम् ॥ इति ॥

अथ **पूजायतनानि** ॥ **अग्निपुराणे**—अप्स्वग्नौ हृदये सूर्ये स्थण्डिले प्रतिमासु च । पट्टस्वेतेषु हरेः सम्यगर्चनं मुनिभिः स्मृतं ॥ **स्कान्दे**—कामासक्तोऽथवा क्रुद्धः शालग्रामशिलार्चनात् । भक्त्या वा यदि वाऽभक्त्या कलौ मुक्तिमवाप्नुयात् ॥ वैवस्वतभयं नास्ति तथाच कलिकालजं । यः कथां कुरुते विष्णोः शालग्रामशिलाग्रतः ॥ शालग्रामशिलायास्तु प्रतिष्ठा नैव विद्यते । महापूजां तु कृत्वादौ पूजयेत्तां ततो बुध इति ॥ ॥ **शिवायतनं भारते**—सदा तं यजते यस्तु श्रद्धया मुनिपुंगव । लिङ्गे वा स्थण्डिले वापि शंकरं विधिपूर्वकं ॥ युगदोषं विनिर्जित्य रुद्रलोके प्रमोदत इति ॥ **भविष्ये**—बाणलिङ्गानि राजेन्द्र ख्यातानि भुवनत्रये । न प्रतिष्ठा न संस्कारस्तेषामावाहनं तथेति ॥ **हेमाद्रौ**—ब्राह्मणैर्वासुदेवस्तु नृपैः संकर्षणस्तथा । प्रद्युम्नः पूज्यते वैश्यैरनिरुद्धस्तु शूद्रजैरिति ॥ **विष्णुधर्मोत्तरे**—पञ्चवक्त्रो वासुदेवः षड्भिः प्रद्युम्नकः स्मृतः । संकर्षणः सप्तवक्त्रोऽनिरुद्ध एकादशैः स्मृतः ॥ चत्वारो ब्राह्मणैः पूज्यास्त्रयो राजन्यजातिभिः । वैश्यैर्द्वावेव संपूज्यौ तथैकः शूद्रजातिभिरिति ॥ **स्मृत्यन्तरे**—एकमूर्तिर्न पूज्यैव गृहिणा भूतिमिच्छता । अनेकमूर्तिसंपन्नः सर्वान्कामानवाप्नुयादिति तत्काम्यपूजापरं त्रैवर्णिकपरं वा शूद्रस्यैकविधानात् । **यदपि**—शालग्रामाः समाः पूज्या विषमा न

कदाचन । समेषु द्वितयं नेष्टं विषमेष्वेकमेहीति, तत्र पादत्रयं विप्रपरं, तत्राप्याद्यार्धं—चत्वारो ब्राह्मणैः पूज्या इत्यस्यैवार्थमनुवदति । तृतीयपादस्तु–अनेकमूर्तिसंपन्न इत्यनेकताप्राप्तौ द्वयोर्निषेधकः । अन्त्यपादस्तु शूद्रपरः ॥ **यत्तु विष्णुधर्मोत्तरे**—शालग्रामशिलां वापि चक्राङ्कितशिलां तथा । ब्राह्मणः पूजयेन्नित्यं क्षत्रियादिर्न पूजयेदिति, तत् क्षत्रियादिरादिर्यस्येति मध्यमपदलोपिबहुव्रीहिगर्भेण तद्गुणसंविज्ञानबहुव्रीहिणा शूद्रपरं । **तथाचापस्तम्बः**—प्रणवोच्चारणाच्चैव शालग्रामशिलार्चनात् । ब्राह्मणीगमनाच्चापि शूद्रश्चाण्डालतां व्रजेत् । एतदपि शूद्रस्य स्पर्शसहितपूजानिषेधार्थं ।–ब्राह्मणस्यैव पूज्योऽहं शुचेरप्यशुचेरपि । स्त्रीशूद्रकरसंस्पर्शो वज्रस्पर्शाधिको ममेति लैङ्गोक्तेः–स्त्रीणामनुपनीतानां शूद्राणां च नराधिप । स्पर्शने नाधिकारोस्ति विष्णोर्वा शंकरस्य चेति–शूद्रो वाऽनुपनीतो वा स्त्री वापि पतितोऽथवा । केशवं वा शिवं वापि स्पृष्ट्वा नरकमश्नुते इति **बृहन्नारदीयाच्च** भट्टचरणाः । तत् स्त्रीशूद्रयोः साक्षात्पूजननिषेधकमिति युक्तं । अतएव **पाद्मे**—ब्राह्मणक्षत्रवैश्यानां त्रयाणां मुनिसत्तम । अधिकारः स्मृतः सद्भिः शालग्रामशिलार्चने ॥ स्त्रीशूद्रपतितादीनां पण्ढादीनां विकर्मणां । नैवाधिकारो विज्ञेयः शालग्रामशिलार्चने ॥ दीक्षायुक्तैस्तथा शूद्रैर्मद्यपानविवर्जितैः । कर्तव्यं ब्राह्मणद्वारा शालग्रामशिलार्चनमिति ॥ **चमत्कारचिन्तामणौ**—नार्च्या गृहेऽश्मजा मूर्तिश्चतुरङ्गुलतोऽधिका । न वितस्त्यधिका धातुसंभवा श्रेय इच्छतेति ॥ ॥ **तत्रैव**—द्वारकाशैलसंभूतं यस्तोयं पिबते कलौ । पापानि तस्य नश्यन्ति शतजन्मार्जितान्यपि ॥ धृते शिरसि पीते च सर्वास्तुष्यन्ति देवताः । प्रायश्चित्तं हि पापानां कलौ पादोदकं हरेरिति । शिलैव शैलं स्वार्थेऽण् । द्वारकाशिलातोयपानविधेः सापि शालग्रामेण सह पूज्येति केचित् । तत्तोयपानमात्रं पूजायां तु मानाभाव इत्यपरे ॥ ॥ **अथ विष्णोर्गन्धपुष्पादि** । कलौ यच्छन्ति ये विष्णोस्तुलसीकाष्ठचन्दनं । विष्णुप्रीतिकरं मर्त्या उत्तरां यान्ति ते भुवं ॥ योऽर्चयेन्मालतीपुष्पैर्न भूयस्तपनो भवेत् । अहो मुष्टास्ते नष्टास्ते पतिताः कलिकन्दरे ॥

यैर्नार्चितो हरिर्भक्त्या कमलैरसितैः सितैरिति । **पाद्मे**—कार्तिके केतकीपुष्पं येन दत्तं हरेः कलौ । दीपदानं च देवर्षे तारितं तेन वै कुलमिति ॥ **अन्यच्च** । केशकीटादिविद्धानि निशिपर्युषितानि च । स्वयं पतितपुष्पाणि त्यजेत्परहृतान्यपि ॥ इति ॥

**अथ पूजेतिकर्तव्यता । आग्नेयपुराणे**—अर्चनं संप्रवक्ष्यामि विष्णोरमिततेजसः । यत्कृत्वा मुनयः सर्वे परं निर्वाणमाप्नुयुः ॥ विना भस्मत्रिपुण्ड्रेण विना रुद्राक्षमालया । पूजितोपि महादेवो न तस्य स्यात्फलप्रदः । तस्मान्मृदापि कर्तव्यं ललाटे तु त्रिपुण्ड्रकम् ॥ आनुष्टुभस्य सूक्तस्य त्रिष्टुबन्तस्य देवता । पुरुषो यो जगद्बीजं ऋषिर्नारायणः स्मृतः ॥ प्रथमां विन्यसेद्वामे द्वितीयां दक्षिणे करे । तृतीयां वामपादे च चतुर्थीं दक्षिणे न्यसेत् ॥ पञ्चमीं वामजानौ च षष्ठीं वै दक्षिणे न्यसेत् । सप्तमीं वामकट्यां तु अष्टमीं दक्षिणे तथा ॥ नवमीं नाभिमध्ये तु दशमीं हृदये तथा । एकादशीं कण्ठमध्ये द्वादशीं वामबाहुके ॥ त्रयोदशीं दक्षिणे तु तथैवास्ये चतुर्दशीं । अक्ष्णोः पञ्चदशीं चैव विन्यसेन्मूर्ध्नि षोडशीं ॥ यथा देहे तथा देवे न्यासं कृत्वा यथाविधि । न्यासेन तु भवेत्सोपि स्वयमेव जनार्दनः ॥ एवं न्यासविधिं कृत्वा पश्चात्पूजां समाचरेत् ॥ पूर्वयावाहयेद्देवं आसनं तु द्वितीयया । पाद्यं तृतीयया तद्वच्चतुर्थ्यार्घ्यं प्रदापयेत् ॥ पञ्चम्याचमनं दद्यात्षष्ठ्या स्नानं समाचरेत् । सप्तम्या तु ततो वासोऽप्यष्टम्या चोपवीतकं ॥ नवम्या चन्दनं दद्याद्दशम्या पुष्पमेव च । एकादश्या तथा धूपं द्वादश्या दीपमेव हि ॥ नैवद्यं तु त्रयोदश्या नमस्कारे चतुर्दशी । प्रदक्षिणे पञ्चदशी वर्जने षोडशी तथा ॥ वर्जने विसर्जने । स्नाने वस्त्रे च नैवेद्ये दद्यादाचमनीयकं । पुनः षोडशभिर्मन्त्रैर्दद्यात्पुष्पाणि षोडश ॥ हुत्वा षोडशभिर्मन्त्रैः षोडशान्नस्य चाहुतीः ॥ तच्च सर्वं जपेद्भूयः पौरुषं सूक्तमेव च । षण्मासात्सिद्धिमाप्नोति ह्येवमेव समर्चयन्निति ॥ ॥ **यत्तु भागवते**—उद्वासावहने न स्तः स्थिरायामुद्धवार्चने । अस्थिरायां विकल्पः स्यात्स्थण्डिले च भवेद्द्वयमिति ॥ **यदपि स्कान्दे**—शालिग्रामार्चने नैव आवाहनविसर्जने । शालग्रामे हि भगवान्स-

मुद्धृतः सदा हरिरिति आवाहनविसर्जने निषिद्धे ॥ तत्र तदृचोविनियोगो **मन्त्रराजविधौ**—आवाहनऋचा दद्यात्पूर्वं पुष्पाञ्जलिं हरेः । तस्यैवोन्मुखताप्राप्त्यै यागे चोद्वासने ऋचा ॥ अन्ते पुष्पाञ्जलिं दद्याद्यागसंपूर्तिसिद्धय इति ॥ ॥ **तत्रैव**—प्रतिमापट्टयन्त्राणां नित्यं स्नानं न कारयेत् । कारयेत्पर्वदिवसे यथामलनिवारणमिति । वस्त्रमपि न प्रत्यहं नियमेन नूतनमेव समर्पणीयं-वस्त्रमभ्युक्षणाच्छुद्ध्येदपरं तु दिने दिने इति **तत्वसागरोक्तेः** । अपरं पुष्पादि । **तत्रैव**—यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठन्ति देवताः । न निर्माल्यं भवेत्तावत्स्वर्णरूप्यविभूषणमिति ॥ इतिपूजेतिकर्तव्यता ॥

**अथ शिवपूजाप्रकारः । बौधायनः**—अथातो महादेवस्याहरहः परिचर्याविधिं व्याख्यास्यामः । स्नात्वा शुचौ देशे गोमयेनोपलिप्य प्रतिकृतिं कृत्वाऽक्षतपुष्पैर्यथालाभमर्चयेत् । सहपुष्पोदकेन महादेवमावाहयेत् । ॐभूर्महादेवमावाहयामि । ॐभुवःमहादेवमावाहयामि । ॐस्वःमहादेवमावाहयामि । इत्यावाह्य । आयातु भगवान्महादेव इत्यथ स्वागतेनाभिनन्दति स्वागतममुना स्वागतं भगवते महादेवाय तत्स्वासनं कूतमास्तां भगवान्महादेव इत्यत्र कूर्चं ददाति भगवतोऽयं कूर्चो दर्भमयस्त्रिवृद्धरितः सुवर्णस्तं जुषस्वेति । अत्र स्थानानि कल्पयन्ति । अग्रतो ब्रह्मणे कल्पयामि । दक्षिणतः स्कन्दाय कल्पयामि विनायकाय कल्पयामि । पश्चिमतः स्थूलाय कल्पयामि । उत्तरत उमायै कल्पयामि । नन्दिकेश्वराय कल्पयामीति कल्पयित्वाथ सावित्र्या पात्रमभिमन्त्र्य प्रक्षाल्य त्रिरपः पवित्रमध्यआनीय सहपवित्रेणादित्यं दर्शयेत् ॐमित्यृतमितिस्नानं ॐस्वरिति रुद्रेण पाद्यं दद्यात् प्रणवेनार्घ्यं अथ व्याहृतिभिर्निर्माल्यं व्यपोह्योत्तरतश्चण्डायनमः इत्यथैवं स्नापयित्वा आपोहिष्ठामयोभुव इति तिसृभिर्हिरण्यवर्णाः शुचयः पावका इति चतसृभिः पवमानः सुवर्जन इत्यनेनानुवाकेन स्नापयित्वाऽद्भिस्तर्पयति भवं देवं तर्पयामि शर्वं देवं तर्पयामि ईशानं देवं तर्पयामि पशुपतिं

देवं तर्पयामि रुद्रं देवं तर्पयामि उग्रं देवं तर्पयामि भीमं देवं तर्पयामि महान्तं देवं तर्पयामीति तर्पयित्वाऽथैतानि वस्त्रयज्ञोपवीतान्याचमनीयान्युदकेन व्याहृतिभिर्दत्वा व्याहृतिभिः प्रदक्षिणमुदकं परिषिच्य नमस्तेरुद्र मन्यव इति गन्धं दद्यात् सहस्राणि सहस्रश इति पुष्पं दद्यात् ईशानं त्वा भुवनानामधिश्रियं इतिचाक्षतान्दद्यात् सावित्र्या धूपं उद्दीप्यस्वेति दीपं देवस्यत्वासवितुः प्रसवेऽश्विनोर्बाहुभ्यां भगवते महादेवाय जुष्टं चरुं निवेदयामीति नैवेद्यं अथाष्टभिर्नामधेयैरष्टौ पुष्पाणि दद्यात् भवायदेवायनमः शर्वायदेवायनम ईशानाय देवायनमः पशुपतयेदेवायनमो रुद्रायदेवायनम उग्रायदेवायनमो भीमायदेवायनमो महतेदेवायनमो ब्रह्मणेनमो विष्णवेनमः स्कन्दायनमः पिनाकायनमः शूरायनमो महाकालायनमो नन्दिकेश्वरायनम इति चरुशेषेणाष्टभिर्नामधेयैरष्टाहुतीर्जुहोति भवायदेवायस्वाहेत्यष्टाभिर्हुत्वाऽथ शिष्टैर्गन्धमाल्यैर्ब्राह्मणानलंकृत्याथैनमृग्यजुःसामभिः स्तुवन्ति सहस्राणिसहस्रश इत्यनुवाकंजपित्वा अन्यांश्च रौद्रान्मन्त्रान्यथाशक्त्या एकैकं भूर्भुवःस्वर्महरों भगवते महादेवाय च रुद्रस्योद्वासकाले ॐमहादेवमुद्वासयामीति रुद्रमुद्वास्य । प्रयातुभगवानीशः सर्वलोकनमस्कृतः । अनेन हविषा तृप्तः पुनरागमनाय च । पुनः संदर्शनाय चेति प्रतिमास्थानेषु अप्स्वग्नावावाहनविसर्जनवर्जं समानमन्यत् महत्स्वस्त्ययनमाचक्षत इत्याहभगवान्बौधायन इति ॥ **कौर्मे**—न विष्ण्वाराधनात्पुण्यं विद्यते कर्म वैदिकं । तस्मादनादिमध्यान्तं नित्यमाराधयेद्धरिं ॥ अथवा देवमीशानं भगवन्तं सनातनं । आराधयेन्महादेवं भावपूतो महेश्वरं ॥ मन्त्रेण रुद्रगायत्र्या प्रणवेनाथवा पुनः । रुद्रगायत्री तत्पुरुषायविद्महे इत्याद्या । ईशानेनाथवा रुद्रं त्र्यम्बकेन समाहितः । पुष्पैः पत्रैरथाद्भिर्वा चन्दनाद्यैर्महेश्वरं । तथोन्नमःशिवायेति मन्त्रेणानेन पूजयेत् ॥ नमस्कुर्यान्महादेवं ऋतंसत्यमितीश्वरं । निवेदयीत चात्मानं यो ब्रह्माणमितीश्वरे ॥ प्रदक्षिणं द्विजः कुर्यात्पञ्चब्रह्माणि वा जपेत् । ध्यायीत देवमीशानं व्योममध्यगतं शिवमिति ॥

**अथ पार्थिवपूजा ।** **नन्दिपुराणे**—आयुष्मान्बलवान्श्रीमान्पुत्रवान्धनवान्सुखी । वरमिष्टं लभेल्लिङ्गं पार्थिवं यः समर्चयेत् ॥ तस्मात्तु पार्थिवं लिङ्गं ज्ञेयं सर्वार्थसाधकं ॥ **भविष्ये**—मृद्भस्मनोः शकृत्पिण्डं ताम्रकांस्यमयं तथा । कृत्वा लिङ्गं सकृत्पूज्य वसेत्कल्पायुप दिवि ॥ राज्यवित्तप्रदं लिङ्गं स्फाटिकं सर्वकामदं । नर्मदागिरिजं श्रेष्ठमन्यदपिहि लिङ्गवत् ॥ कृत्वा पूजय विप्रेन्द्र लप्स्यसे चेहितं फलं । लिङ्गवल्लिङ्गाकारं ॥ **तिथितत्वे**—अक्षादल्पपरिमाणं न लिङ्गं कुत्रचिन्नरः । कुर्वीताङ्गुष्ठतो ह्रस्वं न कदाचित्समाचरेत् ॥ अङ्गुष्ठतस्तद्बृहत्पर्वग्रन्थितः । अङ्गुष्ठाङ्गुलिमानं तु यत्रयत्रोपदिश्यते । तत्रतत्रबृहत्पर्वग्रन्थिभिर्मिनुयात्सदेति ॥ **छन्दोगपरिशिष्टात्** ॥ **शिवधर्मे**—सहस्रमर्चयेल्लिङ्गं निरयं स न गच्छति । रुद्रलोकमवाप्नोति भुक्त्वा भोगाननुत्तमान् ॥ **तथा**—वालुकानि च लिङ्गानि पार्थिवानि च कारयेत् । सहस्रपूजनात्सोपि लभते वाञ्छितं फलं ॥ **देवीपुराणे**—मृदाहरणसंघट्टप्रतिष्ठाह्वानमेवच । स्नपनं पूजनं चैव विसर्जनमतः परं ॥ हरो महेश्वरश्चैव शूलपाणिः पिनाकधृक् । पशुपतिः शिवश्चैव महादेव इति क्रमात् ॥ ॥ **अत्रानुष्ठानम्** ॥ ॐहरायनम इति मृदाहरणं । ॐमहेश्वरायनम इति संघट्टनं । ॐशूलपाणे इह सुप्रतिष्ठितो भवेति प्रतिष्ठा । ध्यायेन्नित्यंमहेशमिति ध्यात्वा । पिनाकधृगिहागच्छेत्यावाह्य । ॐपशुपतयेनम इति स्नपनं । एवं पाद्यं । ॐनमः शिवायनमइति एवमर्घ्यादिना पूजयेत् । विसर्जनात्पूर्वं भविष्योत्तरपुराणोक्तं स्वभावप्रसिद्धैशान्यादिषु अष्टदिक्षु वामावर्तेन पूजनं ॐशर्वाय क्षितिमूर्तयेनमः । ॐभवाय जलमूर्तयेनमः । ॐरुद्राय अग्निमूर्तयेनमः । ॐउग्राय वायुमूर्तयेनमः । ॐभीमाय आकाशमूर्तयेनमः । ॐपशुपतये यजमानमूर्तयेनमः । ॐमहादेवाय सोममूर्तये नमः । ॐईशानाय सूर्यमूर्तयेनमः । मूर्तयोऽष्टौ शिवस्यैताः पूर्वादिक्रमयोगतः । आग्नेय्यन्ताः प्रयोज्यास्तु वेद्यां लिङ्गे शिवं यजेत् । ततः । ॐमहादेव क्षमस्वेति संहारमुद्रया विसर्जयेदिति ॥

अथदेवपूजा ॥ तत्रादौवैदिकपूजाप्रयोगः ॥ आचमनं ॥ प्राणायामः ॥ संकल्पः ॥ धर्मार्थकाममोक्षचतुर्विधपुरुषार्थ-सिध्यर्थंश्रीपरमेश्वरप्रीत्यर्थं विष्णवादिदेवतापूजनंकरिष्ये ॥ पुरुषसूक्तन्यासाः ॥ आदौदेहे ॥ पश्चाद्देवे ॥

ॐसहस्रशीर्षेति वामकरे १
ॐपुरुषएवेदमिति दक्षिणकरे २
ॐएतवानस्येति वामपादे ३
ॐत्रिपादूर्ध्वमिति दक्षिणपादे ४
ॐततोविराडिति सव्यजानुनि५

ॐतस्माद्यज्ञात्सर्वेति दक्षजानुनि६
ॐतस्मात्, ऋचइति वामकटौ ७
ॐतस्मादश्वाइति दक्षिणकटौ ८
ॐतंयज्ञमिति नाभौ ९
ॐयत्पुरुषमिति हृदये १०

ॐब्राह्मणोस्येति कण्ठे ११
ॐचन्द्रमाइति वामबाहौ १२
ॐनाभ्याआसीदिति दक्षिणबाहौ १३
ॐ यत्पुरुषेणेति मुखे १४

ॐसप्तास्येति नेत्रयोः १५
ॐयज्ञेनयज्ञमिति मूर्ध्नि १६

ॐसहस्रशीर्षेत्यावाहनं ॥ १
ॐपुरुषएवेत्यासनं ॥ २
ॐएतावानस्येतिपाद्यं ॥३
ॐत्रिपादूर्ध्वेत्यर्घः ॥ ४
ॐततोविराडित्याचमनीयं ॥ ५

ॐतस्माद्यज्ञात्सर्वहुतःसंभृतेति-स्नानं ॥ ६ आचमनीयं ॥
ॐतस्माद्यज्ञात्सर्वहुतऋचेति-वस्त्रं ॥ ७ आचमनीयं ॥
ॐतस्मादश्वेत्युपवीतं ॥८आच०॥

ॐतंयज्ञमितिगन्धान् ॥९
ॐयत्पुरुषमितिपुष्पाणि१०
ॐब्राह्मणोस्येतिधूपः ॥ ११
ॐचन्द्रयामनसेतिदीपः १२
ॐनाभ्याआसीदितिनैवेद्यं १३ आचमनीयं ॥

ॐयत्पुरुषेणेति-नमस्कारः॥१४
ॐसप्तास्यासन्निति-प्रदक्षिणाः॥१५
ॐयज्ञेनयज्ञमिति-पुष्पांजलिः ॥१६

ततः पुरुषसूक्तेनप्रतिमन्त्रंषोडशपुष्पसमर्पणं ॥ ततःस्थंडिलेपंचभूसंस्कारपूर्वकमग्निंप्रतिष्ठाप्य ॥ दक्षिणतोब्रह्मासनमास्तीर्येत्यादिचरुंश्रपयित्वा ॥ आज्यभागांतंकृत्वापुरुषसूक्तेनप्रतिमंत्रंषोडशचर्वाहुतीर्हुत्वा ॥ स्विष्टकृदादिप्रणीताविमोकान्तंकुर्यात् ॥ ततःपुरुषसूक्तजपः ॥ अनयापूजयाविष्णवादिदेवताःप्रियंतां ॥ यस्यस्मृत्येत्यादि ॥ इतिवैदिकपूजा ॥

अथदेवपूजा ॥ तत्रायंवैदिकतान्त्रिकपौराणेतित्रिविधमिश्रपूजाप्रयोगः ॥ उदयात्पूर्वंनिर्माल्यमपसार्य यथाकालंपूजारम्भः ॥ आचमनं ॥ प्राणायामः ॥ द्यौःशान्ति० ॥ यतोयतःसु० ॥ सुशान्तिर्भवतु ॥ ॐलक्ष्मीनारायणाभ्यांनमः । उमामहेश्वराभ्यांनमः । वाणीहिरण्यगर्भाभ्यांनमः । शचीपुरन्दराभ्यांनमः । मातापितृचरणेभ्योनमः । इष्टदेवताभ्योनमः । कुलदेवताभ्योनमः । ग्रामदेवताभ्योनमः । स्थानदेवताभ्योनमः । वास्तुदेवताभ्योनमः । गुरुभ्योनमः । सर्वेभ्योब्राह्मणेभ्योनमोनमः । सिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतयेनमः ॥ पुण्यंपुण्याहंदीर्घमायुरस्त्वितिभवन्तोब्रुवन्तु ॥ पुण्यंपुण्याहंदीर्घमायुरस्तु ॥ सुमुखश्चैकदन्तश्चकपिलोगजकर्णकः । लम्बोदरश्चविकटोविघ्ननाशोगणाधिपः १ ॥ धूम्रकेतुर्गणाध्यक्षोभालचन्द्रोगजाननः । द्वादशैतानिनामानियःपठेच्छृणुयादपि २ ॥ विद्यारम्भेविवाहेचप्रवेशेनिर्गमेतथा । संग्रामेसंकटेचैवविघ्नस्तस्यनजायते ३ ॥ शुक्लाम्बरधरंदेवंशशिवर्णंचतुर्भुजं । प्रसन्नवदनंध्यायेत्स-

१ देवार्चनमपि प्रातर्होमोत्तर चतुर्थभागे ब्रह्मयज्ञोत्तरं वा कार्यं—विधायदेवतापूजाप्रातर्होमादन्तर । कुर्वीतदेवतापूजाजपयज्ञादनन्तरमितिकालद्वयं ।

वंविघ्नोपशान्तये ४ ॥ अभीप्सितार्थसिद्ध्यर्थंपूजितोयःसुरासुरैः । सर्वविघ्नहरस्तस्मैगणाधिपतयेनमः ५ ॥ सर्वमङ्गलमाङ्गल्येशिवेसर्वार्थसाधिके । शरण्येत्र्यम्बकेगौरिनारायणिनमोऽस्तुते ६ ॥ सर्वदासर्वकार्येषुनास्तितेषाममङ्गलं । येषां हृदिस्थोभगवान्मङ्गलायतनंहरिः ७ ॥ तदेवलग्नंसुदिनंतदेवताराबलंचन्द्रबलंतदेव । विद्याबलंदैवबलंतदेवलक्ष्मीपतेतेऽङ्घ्रियुगंस्मरामि ८ ॥ लाभस्तेषांजयस्तेषांकुतस्तेषांपराजयः । येषामिन्दीवरश्यामोहृदयस्थोजनार्दनः ९ ॥ यत्रयोगेश्वरः कृष्णोयत्रपार्थोधनुर्धरः । तत्रश्रीर्विजयोभूतिर्ध्रुवानीतिर्मतिर्मम १० ॥ सर्वेष्वारब्धकार्येषुत्रयस्त्रिभुवनेश्वराः । देवादिशन्तुनःसिद्धिं ब्रह्मेशानजनार्दनाः ११ ॥ ॐविष्णुर्विष्णुर्विष्णुः ॥ संकल्पः ॥ ॐइहपृथिव्यामित्यादि (प्रातःस्नानसंकल्पवत्) देशकालौनिर्दिश्य ॥ तिथिर्विष्णुस्तथावारोनक्षत्रंविष्णुरेवच । योगश्चकरणंचैवसर्वंविष्णुमयंजगत् ॥ एवंगुणविशेषणवतिदेशेकालेच मम आत्मनःश्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं ममसकुटुम्बस्यसपरिवारस्य आधिदैविकाधिभौतिकाध्यात्मिकत्रिविधतापशमनपूर्वकंक्षेमस्थिताऽऽयुरारोग्यपुत्रपौत्रादिसंततिसंपत्तिसकलमनईप्सितकामनासिद्ध्यर्थं श्रीविष्णुशिवगणेशसूर्याम्बिकाप्रमुखदेवतानां यथामिलितैरावाहनादिषोडशोपचारैःपूजनमहंकरिष्ये ॥ तत्रादौनिर्विघ्नतासिद्ध्यर्थंगणपतिस्मरणंक० ॥ ॐगणानांत्वा० धम् ॥ वक्रतुण्डमहाकायकोटिसूर्यसमप्रभ ॥ निर्विघ्नंकुरुमेदेवसर्वकार्येषु सर्वदा ॥ शरीरशुद्धिद्वारापूजाधिकारसिद्ध्यर्थंपुरुषसूक्तन्यासाः निर्दिष्टवैदिकपूजावत् ॥ आदौस्वदेहे ॥ तथैवपश्चाद्देवशरीरे ॥

कलशेवरुणपूजनं ॥ ॐतत्त्वायामि० प्रमोषीः ॥ पाशपाणेनमस्तुभ्यंपद्मिनीजीवनायक । देवतापूजनंयाव त्तावत्त्वंसं-
निधौभव ॥ वरुणायनमः वरुणमावाहयामि ॥ गन्धाक्षतपुष्पैःसंपूज्य ॥ गङ्गाद्यावाहनं ॥ सर्वेसमुद्राःसरितस्तीर्थानिजल-
दानदाः । आयान्तुदेवपूजार्थंदुरितक्षयकारकाः १ ॥ कलशस्यमुखेविष्णुःकण्ठेरुद्रःसमाश्रितः । मूलेतत्रस्थितोब्रह्मा-
मध्येमातृगणाःस्मृताः २ ॥ कुक्षौतुसागराःसप्तसप्तद्वीपावसुन्धरा । ऋग्वेदोथयजुर्वेदःसामवेदोह्यथर्वणः ३ ॥ अङ्गै-
श्चसहिताःसर्वेकलशाम्बुसमाश्रिताः ४ ॥ धेनुमुद्रयाअमृतीकृतोभव ॥ कलशोदकेनकर्मभूमिंपूजासंभारान् आत्मानं च
संप्रोक्षेत् ॥ शङ्खघण्टाराधनं ॥ ॐपाञ्चजन्यायविद्महेपावमानायधीमहि । तन्नःशङ्खःप्रचोदयात् ॥ शङ्खंचन्द्रार्कदैवत्यं
कुक्षौवरुणदैवतं । पृष्ठेप्रजापतिश्चैवअग्रेगङ्गासरस्वती ॥ त्वंपुरासागरोत्पन्नोविष्णुनाविधृतःकरे । नमितःसर्वदेवैश्चपाञ्च-
जन्यनमोस्तुते ॥ आगमार्थंतुदेवानांगमनार्थंतुरक्षसां । कुरुघण्टेमहानादंदेवताह्लादकारणं ॥ शङ्खघण्टाभ्यांनमःगन्धा-
क्षतपुष्पैःसंपूज्य ॥ शङ्खेशङ्खमुद्रांप्रदर्श्य घण्टायांगरुडमुद्रांप्रदर्श्य । घण्टानादंकृत्वा । शङ्खोदकेनपूजासंभारानात्मानंच
प्रोक्षेत् ॥ ॥ ॐसहस्रशीर्षेत्यावाहनं ॥ शालग्रामादौप्रतिष्ठितमूर्त्यादावावाहनाभावात्पुष्पाञ्जल्यर्पणं ॥ ॐइदंविष्णु०
पांसुरे ॥ शान्ताकारंभुजगशयनंपद्मनाभंसुरेशं विश्वाधारंगगनसदृशंमेघवर्णंशुभाङ्गं ॥ लक्ष्मीकान्तंकमलनयनंयोगिभिर्ध्या-

---

१ वामाङ्गुष्ठं तु सगृह्य दक्षिणेन तु मुष्टिना । कृत्वोत्तानं ततो मुष्टिमङ्गुष्ठं तु प्रसारयेत् ॥ वामाङ्गुल्यस्तथाश्लिष्टा. संयुक्ता. सुप्रसारिता. । दक्षिणाङ्गुष्ठसस्पृष्टाज्ञेयैषा-शङ्खमुद्रिका ॥ २ मिथस्तर्जनिकेश्लिष्टेश्लिष्टावङ्गुष्ठकौतथा । मध्यमानामिके तु द्वौ पक्षाविव विचालयेत् । एषागरुडमुद्रास्याद्विष्णो. संतोषवर्धिनी ।

नगम्यं वन्देविष्णुंभवभयहरंसर्वलोकैकनाथम् १ ॥ ॐत्र्यम्बकंयजा० तात् ॥ ध्यायेन्नित्यंमहेशंरजतगिरिनिभंचारुचन्द्रा-
वतंसंरत्नाकल्पोज्ज्वलाङ्गंपरशुमृगवराभीतिहस्तंप्रसन्नं । पद्मासीनंसमन्तात्स्तुतममरगणैर्व्याघ्रकृत्तिंवसानं विश्वाद्यंविश्ववन्द्यं
निखिलभयहरंपञ्चवक्त्रंत्रिनेत्रं २ ॥ ॐगणानांत्वा० गर्भधम् ॥ श्वेताङ्गंश्वेतवस्त्रंसितकुसुमगणैःपूजितंश्वेतगन्धैः क्षीरा-
ब्धौरत्नदीपैः सुरनरतिलकंरत्नसिंहासनस्थं । दोर्भिःपाशाङ्कुशाब्जाभयवरमनसंचन्द्रमौलिंत्रिनेत्रं ध्यायेच्छान्त्यर्थमीशंगण-
पतिममलंश्रीसमेतंप्रसन्नं ३ ॥ ॐआकृष्णेनरजसा० पश्यन् ॥ ध्येयःसदासवितृमण्डलमध्यवर्ती नारायणःसरसिजास-
नसंनिविष्टः । केयूरवान्मकरकुण्डलवान्किरीटी हारीहिरण्मयवपुर्धृतशङ्खचक्रः ४ ॥ ॐअम्बेअम्बिके० सिनीम् ॥ श्या-
माङ्गींशशिशेखरांनिजकरैर्दानंचरक्तोत्पलं रत्नाढ्यंकलशंपरंभयहरंसंबिभ्रतींशाश्वतीं । मुक्ताहारलसत्पयोधरनतांनेत्रत्रयोल्ला-
सिनीं संध्यायेत्सुरपूजितांहरवधूंरक्तारविन्दस्थिताम् ॥ आगच्छभगवन्देवस्थानेचात्रस्थिरोभव । यावत्पूजांकरिष्येहंताव-
त्त्वसंनिधोभव १ ॥ श्रीविष्णुशिवगणेशसूर्याम्बिकाप्रमुखाराध्यदेवताभ्योनमः आवाहयामि ध्यायामि ॥ ॐपुरुषएवेदमि-
त्यासनं ॥ सिंहाङ्कितंरत्नपीठंनानारत्नोपशोभितं । अनेकशक्तिसंयुक्तमासनंप्रतिगृह्यताम् ॥ आसनंसमर्पयामि ॥ ॐएता-
वानस्येतिपाद्यं । पाटलोशीरकर्पूरसुरभिस्वादुशीतलं । तोयमेतत्सुखस्पर्शंपाद्यार्थंप्रतिगृह्यतां ॥ पाद्यंस० ॥ ॐत्रिपा-
दूर्ध्वेत्यर्घः ॥ अर्घ्यंगृहाणदेवेशगन्धपुष्पाक्षतैःसह । पुण्यदंशङ्खतोयाक्तंमयातुभ्यंनिवेदितं ॥ अर्घ्यंसम० ॥ ॐततोवि-
राडित्याचमनीयं ॥ गङ्गादिसर्वतीर्थेभ्योमयाप्रार्थनयाहृतं । तोयमाचमनीयार्थंदेवेशप्रतिगृह्यतां ॥ आचमनीयंस० ॥

ॐतस्माद्यज्ञात्सर्वहुतः संभृतमितिस्नानं ॥ गङ्गाचयमुनाचैवगोदावरीसरस्वती । तापीपयोष्णीरेवाचताभ्यःस्नानार्थमा-
हृतं ॥ स्नानीयंस० ॥ ॥ पंचामृतस्नानं ॥ पयःपृथिव्यामितिपयःस्नानं ॥ ॐपयःपृथिव्यांपयओषधीषुपयोदिव्यन्तरि-
क्षेपयोधाः । पयस्वतीःप्रदिशःसन्तुमह्यं ॥ १ ॥ देवैस्तुवन्दिताधेनुःसर्वपापप्रणाशिनी । तत्क्षीरमाहृतंदेवस्नानार्थंप्रतिगृ-
ह्यतां ॥ इतिपयःस्नानं ॥ दधिक्राव्णइतिदधिस्नानं ॥ ॐदधिक्राव्णोऽअकारिषंजिष्णोरश्वस्यवाजिनः । सुरभिनोमुखा-
करत्प्रणआयूंषितारिषत् ॥ चन्द्रमण्डलसंकाशंसर्वदेवप्रियंदधि । स्नानार्थंतेप्रयच्छामिप्रीतोभवसुरप्रिय ॥ इतिदधि-
स्नानं ॥ घृतंमिमिक्षइतिघृतस्नानं ॥ ॐघृतंमिमिक्षेघृतमस्ययोनिर्घृतेश्रितोघृतम्वस्यधाम । अनुष्वधमावहमादयस्वस्वा-
हाकृतंवृषभवक्षिहव्यं ॥ आज्यंसुराणामाहारआज्यंयज्ञेप्रतिष्ठितं । आज्यंपवित्रंपरमंस्नानार्थंप्रतिगृह्यतां ॥ इतिघृतस्नानं ॥
मधुवाताइतिमधुस्नानं ॥ ॐमधुवाताऋतायतेमधुक्षरन्तिसिन्धवः । माध्वीर्नःसन्त्वोषधीः ॥ मधुनक्तमुतोषसोमधु-
मत्पार्थिवंरजः । मधुद्यौरस्तुनःपिता ॥ मधुमान्नोवनस्पतिर्मधुमाँ अस्तुसूर्यः । माध्वीर्गावोभवन्तुनः ॥३॥ माक्षिकं-
परमंदिव्यंसुस्वादुमधुरंमधु । तेजःपुष्टिकरंदेवस्नानार्थंप्रतिगृह्यतां ॥ इतिमधुस्नानं ॥ अपांरसमितिशर्करास्नानं ॥
ॐअपांरसमुद्वयसंसूर्येसन्तंसमाहितं । अपांरसस्ययोरसस्तंवोगृह्णाम्युत्तममुपयामगृहीतोसीन्द्रायत्वाजुष्टंगृह्णाम्ये-
षतेयोनिरिन्द्रायत्वाजुष्टतमं ॥ इक्षुरससमुद्भूताशर्करापुष्टिकारिका । मलापहारिकादिव्यास्नानार्थंप्रतिगृह्यतां ॥ शर्करा-

स्नानंस० ॥ पञ्चामृतंमयानीतंपयोदधिघृतंमधु । शर्कराभिःसमायुक्तंस्नानार्थंप्रतिगृह्यतां ॥ पञ्चामृतस्नानंस० ॥ गन्धद्वारामितिगन्धोदकस्नानं ॥ ॐगन्धद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीं । ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियं ॥ मलयाचलसंभूतचन्दनागरुवासितं । तोयमेतत्सुखस्पर्शं स्नानार्थंप्रतिगृह्यतां ॥ गन्धोदकस्नानं ॥ आपोहिष्ठेतितिसृभिःशुद्धोदकस्नानं ॥ चंदनं । अक्षतान् । पुष्पाणि । धूपं[1] । दीपं । नैवेद्यं । ताम्बूलं । दक्षिणां । मन्त्रपुष्पाञ्जलिंचसमर्पयामि ॥ अनयापञ्चामृतस्नानाङ्गपञ्चोपचारपूजयाश्रीअमुकदेवताप्रीयतां ॥ ॥ ततः शङ्खोदकेनमहाभिषेकः (अत्रयथासंभवं पुरुषसूक्तं । रुद्रः । गणपत्यथर्वशीर्षं । सूर्याथर्वशिरः । हिरण्यसूक्तं । सर्वेषांवा एष० षिञ्चति । ॐशान्तिः ३ । अमृताभिषेकोस्तु । सकलारिष्टोपद्रवशान्तिरस्तु ॥ स्नानान्तेआचमनीयंस०[2] ॥ ॐतस्माद्यज्ञात्सर्वहुतऋचइतिवस्त्रं । सूक्ष्मतन्तुमयंवस्त्रंकार्पासेनविनिर्मितं । मयोपपादितंतुभ्यंवासश्चप्रतिगृह्यतां । वस्त्रंस० । आचमनीयं० ॥ ॐतस्मादश्वेत्युपवीतं । नवभिस्तन्तुभिर्युक्तं त्रिगुणंदेवतामयं । उपवीतंमयादत्तंगृहाणपरमेश्वर ॥ यज्ञोपवीतंस० ॥ आचमनीयं ॥ ॐतंयज्ञमितिगन्धान् ॥ श्रीखण्डंचन्दनंदिव्यंगन्धाढ्यंसुमनोहरं । विलेपनंसुरश्रेष्ठचन्दनं प्रतिगृह्यतां ॥ चन्दनंस० ॥ ॐस्वर्णघर्मःस्वाहास्वर्णार्कःस्वाहास्वर्णशुक्रःस्वाहास्वर्णज्योतिःस्वाहास्वर्णसूर्यःस्वाहा ॥ अनेकरत्नखचितंसर्वाभरणभूषितं । गृहाण-

१ स्नाने धूपे च दीपे च घण्टादेर्नादमाचरेत् ॥ २ स्नानेवस्त्रेचनैवेद्येदद्यादाचमनीयकम् ॥

भूपणंदेवइष्टसिद्धिंचदेहिमे ॥ अलंकारान् ॥ ॐअक्षन्नमीमदन्तुह्यवप्रियाअधूषत । अस्तोषतस्वभानवोविप्रानविष्ठयामती-
योजान्विन्द्रतेहरी ॥ अक्षताश्वसुरश्रेष्ठकुङ्कुमाक्ताःसुशोभिताः । मयानिवेदिताभक्त्यागृहाणपरमेश्वर ॥ अक्षतान्स० ॥
ॐअहिरिवभोगैःपर्येतिबाहुंज्यायाहेतिंपरिबाधमानः । हस्तघ्नोविश्वावयुनानिविद्वान्पुमान्पुमांसंपरिपातुविश्वतः ॥
हरिद्रा ॥ हरिद्रापीतवर्णाचसर्वसौभाग्यदायिनी । तयात्वांपूजयिष्यामिसौभाग्यंदेहिसर्वदा ॥ कुङ्कुमं ॥ कुङ्कुमं-
कान्तिदंदिव्यंकामिनीकामसंभवं । कुङ्कुमेनार्चितेदेविसर्वसिद्धिप्रदाभव ॥ परिमलद्रव्याणि ॥ कण्ठसूत्रंताडपत्रंहरि-
द्राकुङ्कुमाञ्जनं । सिन्दूरादिप्रदास्यामिसौभाग्यंदेहिमेऽव्यये ॥ अबीरं । हरिद्रांकुङ्कुमंचैवसिन्दूरंकज्जलान्वितं । सौ-
भाग्यद्रव्यसंयुक्तंगृहाणपरमेश्वर ॥ परिपमलद्रव्याणिसौभाग्यद्रव्याणिचस० ॥ ॐयत्पुरुषंव्यदधुरिति पुष्पाणि । मा-
ल्यादीनिसुगन्धीनिमालत्यादीनिवैप्रभो । मयाहृतानिपुष्पाणिगृहाणपरमेश्वर ॥ करवीरादिकुसुमैश्चम्पकैर्बकुलैःशुभैः ।
शतपत्रैश्चकह्लारैरर्चयेपरमेश्वरं ॥ यथालाभंपुष्पाणिस० ॥ ॐइदंविष्णुर्विच० । तुलसींहेमरूपांचरत्नरूपांचमञ्जरीं । भव-
मोक्षप्रदांतुभ्यमर्पयामिहरेप्रियां ॥ तुलसीदलानिस० ॥ ॐनमोबिल्मिनेचकवचिनेचनमः । ॐनमःपुर्णायेतिवा ॥
त्रिदलंत्रिगुणाकारंत्रिनेत्रंचत्रियायुधं । त्रिजन्मपापसंहारमेकबिल्वंशिवार्पणम् ॥ बिल्वपत्राणिस० ॥ ॐकाण्डात्का-
ण्डात्० । त्वंदूर्वेऽमृतसंपन्नेशतमूलेशताङ्कुरे ॥ शतंनाशयपापानिदीर्घायुष्यं च देहिमे ॥ दूर्वाङ्कुरान्स० ॥ शमीशमयते-
पापंशमीशत्रुविनाशिनी । अर्जुनस्यधनुर्धारिरामस्यप्रियवादिनि ॥ शमीपत्राणिस० ॥ ॐब्राह्मणोस्येतिधूपः । वनस्पति-

रसोद्भूतोगन्धाढ्योगन्धवत्तमः । आघ्रेयःसर्वदेवानांधूपोयंप्रतिगृह्यताम् ॥ धूपंसम० ॥ ॐचन्द्रमामनसोजातइति-
दीपः । साज्यंसुवर्तिसंयुक्तंवह्निनायोजितंमया । दीपंगृहाणदेवेशत्रैलोक्यतिमिरापहं ॥ भक्त्यादीपंप्रयच्छामि देवाय-
परमात्मने । त्राहिमांनरकाद्घोराद्दीपोयंप्रतिगृह्यतां ॥ दीपंसम० ॥ ॐनाभ्याआसीदितिनैवेद्यं ॥ नैवेद्यंगृह्यतांदेवभ-
क्तिंमेह्यचलांकुरु । ईप्सितंमेवरंदेहिपरत्रचपरांगतिं ॥ पूर्वापोशनं ॥ प्राणायस्वाहा अपानाय० व्यानाय० उदानाय०
समानाय० ५ मध्येपानीयं । उत्तरापोशनं । हस्तप्रक्षालनं । मुखप्रक्षालनं । आचमनीयं । करोद्वर्तनार्थेचन्दनं० ।
ॐनमःपुर्णायेतिताम्बूलं । पूगीफलंमहद्दिव्यंनागवल्लीदलैर्युतं । कर्पूरैलासमायुक्तंताम्बूलंप्रतिगृह्यतां ॥ ताम्बूलंस० ॥
ॐहिरण्यगर्भेतिदक्षिणां ॥ हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः । अनन्तपुण्यफलदमतःशान्तिंप्रयच्छमे ॥ दक्षिणांस० ॥
ॐयाःफलिनीतिफलं ॥ इदंफलंमयादेवस्थापितंपुरतस्तव । तेनमेसुफलावाप्तिर्भूयाज्जन्मनिजन्मनि ॥ फलंस० ॥
आरार्तिक्यं ॥ ॐइदꣳहविः प्र० ॐअग्निर्देवता ॥ निर्गुणसगुणा० लवथवती० सुखकर्ता० दुर्गेदुर्घट० पञ्चायतनार्तिः०
करुणापारावारा० कर्पूरमन्त्रः । कदलीगर्भसंभूतंकर्पूरंचप्रदीपितं । आरार्तिक्यमहंकुर्वेपश्यमेवरदोभव । कर्पूरपूरेणम-
नोहरेणसुवर्णपात्रोदरसंस्थितेन । प्रदीप्तभासासहसंगतेननीराजनंतेजगदीशकुर्वे ॥ कर्पूरगौरंकरुणावतारंसंसारसारंभुज-
गेन्द्रहारं । सदावसन्तंहृदयारविन्देभवंभवानीसहितंनमामि ॥ आरार्तिक्यंसम० ॥ ॐयत्पुरुषेणेतिनमस्कारः ॥ ल-
क्ष्मीपतेत्वांगिरिजापतेत्वांगणेश्वरत्वांचदिवाकरत्वां । भोअम्बिकेत्वांप्रणमामिभक्त्यादयार्द्रदृष्ट्यासततंसमीक्षमां ॥ उरसा-

शिरसादृष्ट्यामनसावचसातथा । पद्भ्यांकराभ्यांजानुभ्यांप्रणामोऽष्टाङ्गउच्यते ॥ नमस्कारंस० ॥ ॐसुप्तास्यासन्निति प्रद-
क्षिणा ॥ यानिकानिचपापानिजन्मान्तरकृतानिच । तानितानिविनश्यन्तिप्रदक्षिणपदेपदे ॥ प्रदक्षिणांस० ॥ ॐयुञ्जे-
नंयज्ञं० इतिपुष्पाञ्जलिः ॥ पुष्पाञ्जलिमिमंदेवनानापुष्पमनोहरं । प्रसीदाननदेवेशतुष्टोभवसुरेश्वर ॥ इति पुष्पाञ्जलिः ॥
पुनःषोडशभिर्मन्त्रैर्दद्यात्पुष्पाणिषोडश । हुत्वाषोडशभिर्मन्त्रैःषोडशान्नस्यचाहुतीः ॥ ततः स्थण्डिलेपञ्चभूसंस्कारपूर्वकमग्निं-
प्रतिष्ठाप्य ॥ दक्षिणतोब्रह्मासनमास्तीर्येत्यादिचरुंश्रपयित्वाआज्यभागान्तंकृत्वापुरुषसूक्तेनप्रतिमन्त्रंषोडशचर्वाहुतीर्हुत्वा-
ततःपुरुषसूक्तेनपुनःस्तुत्वा ॥ क्षमापनं ॥ अन्यथाशरणंनास्तित्वमेवशरणंमम । तस्मात्कारुण्यभावेनक्षमस्व परमेश्वर ॥
मन्त्रहीनंक्रियाहीनं भक्तिहीनं जनार्दन । यत्पूजितंमयादेवपरिपूर्णंतदस्तुमे ॥ आवाहनंनजानामिनजानामितवार्चनं । पू-
जांचैवनजानामिक्षम्यतांपरमेश्वर ॥ गतंपापंगतंदुःखंगतंदारिद्र्यमेवच । आगतासुखसंपत्तिःपुण्याच्चतवदर्शनात् ॥ अप-
राधसहस्राणिक्रियन्तेहर्निशंमया । दासोऽयमितिमांमत्वाक्षमस्वपरमेश्वर ॥ आयुर्विद्यांधनंसौख्यंयशःशौर्यंचपुष्कलं । पुत्रा-
न्देहिधनंदेहिसर्वान्कामांश्चदेहिमे ॥ इतिप्रार्थना ॥ अथपार्षदपूजाविष्णोः ॥ विष्वक्सेनोद्धवाक्रूराःसनकाद्याःशुकादयः ।
महाविष्णुप्रसादंवैसर्वेगृह्णन्तुवैष्णवाः ॥ शिवस्य ॥ बाणरावणचण्डीशनन्दिभृङ्गिरिटादयः । सदाशिवप्रसादंतेसर्वेगृह्णन्तुशां-
भवाः ॥ गणेशस्य ॥ गणेशोगालवोगार्ग्योमुद्गलश्चसुधाकरः । गणेशस्यप्रसादंतेसर्वेगृह्णन्तुगाणपाः ॥ सूर्यस्य ॥ माठरःपि-
ङ्गलोदण्डश्चण्डांशोःपारिपार्श्वकाः । प्रभाकरप्रसादंतेसर्वेगृह्णन्तुपार्षदाः ॥ देव्याः ॥ शक्तिरुच्छिष्टचाण्डालीगणेशःसवि-

ताशशी । महादेवीप्रसादंतेसर्वेगृह्णन्तुपार्षदाः ॥ पार्षददेवताभ्योनमःगन्धाक्षतपुष्पाणिसमर्पयामि । नमस्करोमि ॥ शङ्खभ्रामणं ॥ शङ्खमध्येस्थितंतोयंभ्रामितंकेशवोपरि । अङ्गलग्नंमनुष्याणांब्रह्महत्यांव्यपोहति ॥ शङ्खेजलंप्रपूर्यगन्धपुष्पैःसंपूज्यदेवोपरिभ्रामयन् तदुदकेनस्वात्मानंमार्जयेत् ॥ अनयापूजयाश्रीविष्ण्वाद्यावाहितदेवताःप्रीयन्ताम् ॥ यस्यस्मृत्याचनामोक्त्यातपःपूजाक्रियादिषु । न्यूनंसंपूर्णतांयातिसद्योवन्देतमच्युतं ॥ विष्णवेनमोविष्णवेनमोविष्णवेनमः ॥ तीर्थग्रहणं ॥ अकालमृत्युहरणंसर्वव्याधिविनाशनं । विष्णुपादोदकंपीत्वाशिरसाधारयाम्यहं ॥ विप्रपादोदकंपीत्वाविष्णुपादोदकंपिबेत् ॥ प्रदक्षिणापरिसंख्या ॥ एकाचण्ड्यारवेःसप्ततिस्रःकार्याविनायके । हरेश्चतस्रःकर्तव्याःशिवस्यार्धप्रदक्षिणा ॥ वृषंचण्डंवृषंचैवसोमसूत्रंपुनर्वृषं । चण्डंचसोमसूत्रंचपुनश्चण्डंपुनर्वृषं ॥ अपसव्यंयतीनां तुसव्यंतुब्रह्मचारिणां । सव्यापसव्यंगृहिणामेवंशंभोःप्रदक्षिणा ॥ आग्नेयेसव्यंव्रजेत्ततोऽपसव्यंप्रणालंनैवलङ्घयेत् ॥ बह्वृचपरिशिष्टे–एकांविनायकेकुर्याद्वेसूर्येतिस्रईश्वरे । चतस्रःकेशवेकुर्यात्सप्ताश्वत्थेप्रदक्षिणाइति ॥ इतिदेवपूजासमाप्ता ॥

अथस्नानसूत्रम् ॥ अथातोनित्यस्नानंनद्यादौमृद्गोमयकुशतिलसुमनसआहृत्योदकान्तंगत्वाशुचौदेशेस्थाप्यप्रक्षाल्यपाणिपादंकुशोपग्रहोबद्धशिखी यज्ञोपवीत्याचम्योरुꣳहीतितोयमामन्त्र्यावर्तयेद्येतेशतमितिसुमित्रियानइत्यपोञ्जलिनादायदुर्मित्रियाइतिद्वेष्यंप्रतिनिषिञ्चेत्कटिंबस्त्यूरुजंघेचरणौकरौमृदात्रिस्त्रिःप्रक्षाल्याचम्यनमस्योदकमालभेदङ्गानिमृदेदविष्णुरितिसूर्याभिमुखोनिमज्जेदापोअस्मानितिस्नात्वोदिदाभ्यइत्युन्मज्यनिमज्योन्मज्याचम्यगोमयेनविलिम्पेन्मानस्तोकइति ॥ ततोऽभिषिञ्चेदिमंमेवरुणेतिचतसृभिर्मापउदुत्तमंमुञ्चन्त्वयवभृथेत्यन्तेचैतन्निम-

ज्योन्मज्याचम्यदर्भैः पावयेदापोहिष्ठेतिमृभिरिदमापोहविष्मतीर्देवीरापइतिद्वाभ्यामपोदेवाद्रुपदादिवशंनोदेवीरपा ५ रसमपोदेवीःपुनन्तुमेतिनव-
भिश्चित्पतिर्मेत्योङ्कारेणव्याहृतिभिर्गायत्र्याचादावन्तेचान्तर्जलेघमर्षणत्रिरावर्तयेद्द्रुपदादिवायंगौरीरितिवात्र्यचैंप्राणायामंवासशिरसमोमितिवावि-
ष्णोर्वास्मरणं ॥ १ ॥ उत्तीर्यधौतेवाससीपरिधायमृदोरूकरौप्रक्षाल्याचम्यत्रिरायम्यासून्पुष्पाण्यम्बुमिश्राण्यूर्ध्वंप्रक्षिप्योर्ध्वबाहुःसूर्यमुदीक्षन्नु-
द्वयमुदुत्यंचित्रंदेवानामितितच्चक्षुरितिगायत्र्याचयथाशक्तिविभ्राडित्यनुवाकपुरुषसूक्तशिवसंकल्पमण्डलब्राह्मणैरित्युपस्थायादित्यंप्रदक्षिणीकृत्य
नमस्कृत्योपविशेद्दर्भपुदर्भपाणिःस्वाध्यायंचयथाशक्त्यादावारभ्यवेदं ॥ २ ॥ ततस्तर्पयेद्ब्रह्माणंपूर्वंविष्णु ५ रुद्रंप्रजापतिंदेवांश्छन्दा ५ सिवेदा-
नृषीन्पुराणाचार्यान्गन्धर्वानितराचार्यान्संवत्सरंचसावयवंदेवीरप्सरसोदेवानुगान्नागान्सागरान्पर्वतान्सरितोमनुष्यान्यक्षान्रक्षा ५ सिपिशाचान्सु-
पर्णान्भूतानिपशून्वनस्पतीनोषधीर्भूतग्रामश्चतुर्विधस्तृप्यतामित्योंकारपूर्वंततोनिवीतीमनुष्यान्सनक ५ सनन्दन ५ सनातनंकपिलमासुरिंवोढुंपञ्च-
शिखंततोपसव्यतिलमिश्रंकव्यवाडनल ५ सोमंयममर्यमणमग्निष्वात्तान्सोमपोवर्हिषदोयमांश्चैके यमायधर्मराजायमृत्यवेचान्तकायवैवस्वताय-
कालायसर्वभूतक्षयायौदुम्बरायदध्नायनीलायपरमेष्ठिनेवृकोदरायचित्रायचित्रगुप्तायवैनमइत्येकैकस्यतिलैर्मिश्रांस्त्रींस्त्रीन्दद्याज्जलाञ्जलीन् ॥ याव-
ज्जीवकृतंपापंतत्क्षणादेवनश्यतीतिजीवत्पितृकोप्येतानन्यांश्चेतरोदीरतामङ्गिरसआयन्तुनऽऊर्जंवहन्तीपितृभ्योयेचेहमधुवाताऽइतित्र्यचंजपन्त्र-
सिञ्चेत्तृप्यध्वमितित्रिर्नमोवइत्युक्त्वामातामहानांचैवंगुरुशिष्यर्त्विग्ज्ञातिबान्धवानतर्पितादेहाद्रुधिरंपिबन्तीतिवासोनिष्पीड्याचम्यब्राह्मवैष्णव-
रौद्रसावित्रमैत्रावरुणैस्तल्लिङ्गैर्मन्त्रैरर्चयेददृश्रमस्यह ५ सइत्युपस्थायप्रदक्षिणीकृत्यदिशश्चदेवताश्चनमस्कृत्योपविश्यब्रह्माग्निपृथिव्योषधीर्वाग्वाच-
स्पतिर्विष्णुर्महद्भ्योऽद्भ्योपांपतयेवरुणायनमइतिसंवर्चसेतिमुखंविमृष्टेदेवागातुविदइतिविसर्जयेदेषएवस्नानविधिरेषएवस्नानविधिः ॥ इति-
स्नानसूत्रम् ॥

अथ नित्यस्नानम् ॥ अथातोनित्यस्नानं ॥ नद्यादौ मृद्गोमयकुशतिलसुमनसआह्त्य (भस्मापामार्गदूर्वायवगन्धांश्च) (पञ्चगव्यंवा) उदकान्तंगत्वा ॥ शुचौदेशेस्थाप्य ॥ प्रक्षाल्यपाणिपादं ॥ कुशोपग्रहोबद्धशिखीयज्ञोपवीती ॥ आचम्य ॥ प्राणानायम्य ॥ पवित्रधारणं ॥ प्रार्थना ॥ त्वंराजासर्वतीर्थानांत्वमेवजगतःपिता ॥ याचितंतीर्थमेदेहिसर्वपापैःप्रमुच्यते ॥ उत्तिष्ठन्तुमहद्भूतायेकेचिद्भूमिपालकाः ॥ भूतानामविरोधेनस्नानकर्मसमारभे ॥ तीक्ष्णदंष्ट्रमहाकायकल्पान्तदहनोपम ॥ भैरवाय नमस्तुभ्यमनुज्ञांदातुमर्हसि ॥ आपस्त्वमसिदेवेशज्योतिपांपतिरेवच ॥ पापंनाशयमेदेववाङ्मनःकायकर्मजम् ॥ अर्घाः ॥ ब्रह्माद्रिशिखरोत्पन्नेत्रिकण्टकविराजिते ॥ गौतमप्रार्थितेगङ्गेगृहाणार्घ्यंनमोस्तुते ॥ १ ॥ नमोगङ्गेमहागङ्गेमहादेवस्यवल्लभे ॥ यहतेत्वांमहादेवोगोदावरिनमोस्तुते ॥ २ ॥ त्र्यम्बकस्यजटोद्भूतेगौतमस्याघनाशिनि ॥ सप्तधासागरंयान्तिगोदावरिनमोस्तुते ॥ ३ ॥ तपनात्त्वंसमुत्पन्नेतपनेपापनाशिनि ॥ धर्मद्रवेतिविख्यातेपापंमेहरगौतमि ॥ ४ ॥ अरुणावरुणयोर्मध्येयत्रप्राचीसरस्वती ॥ तत्रस्नात्वाचपीत्वाचगोदावरिनमोस्तुते ॥ ५ ॥ देशकालौसंकीर्त्यश्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थंकायिकवाचिकमानसिकसांसर्गिकचतुर्विधाशेषपापक्षयार्थं( अध्यायोत्सर्गोपाकर्मनिमित्तंगण )स्नानमहंकरिष्ये ॥ उरुꣳहीतितोयमामन्त्र्य ॥ ॐउरुꣳहिराजावरुणश्चकारसूर्यायपन्थामन्वेतवाऽउ ॥ अपदेपादाप्रतिधातवेकरुतापवक्ताहृदयाविधश्चित् ॥ नमोवरुणायाभिष्ठितोवरुणस्यपाशः ॥ आवर्तयेद्येतेशतमिति ॥ ॐयेतेशतंवरुणयेसहस्रंयज्ञियाःपाशावितताममहान्तः ॥ तेभिर्नोअद्यसवितोतविष्णुर्विश्वेमुञ्चन्तुमरुतःस्वर्काः ॥ सुमित्रियानइत्यपोंजलि-

नादाय ॥ ॐसुमित्रियानआपओषधयःसन्तु ॥ दुर्मित्रियाइतिद्वेष्यंप्रतिनिषिंचेत् ॥ ॐदुर्मित्रियास्तस्मैसन्तुयोस्मान्द्वे-
ष्टियंचवयंद्विष्मः ॥ कटिंबस्त्यूरुजंघेचरणौकरौमृदात्रिस्त्रिःप्रक्षाल्य ॥ आचम्य ॥ नमस्योदकं ॥ ॐगोदावर्यैनमः ॥
आलभेदङ्गानिमृदेदंविष्णुरिति ॥ मृत्तिकाग्रहणं । सव्यहस्तेसंपुटंकृत्वा । ॐअश्वक्रान्तेरथक्रान्तेविष्णुक्रान्तेवसुंधरे ।
उद्धृतासिवराहेणकृष्णेनशतबाहुना । मृत्तिकेब्रह्मपूतासिकाश्यपेनाभिवन्दिते । मृत्तिकेहरमेपापंयन्मयादुष्कृतंकृतं । त्वं-
याहतेनपापेनगच्छामिपरमांगतिं ॥ ॐइदंविष्णुर्विचक्रमेत्रेधानिदधेपदं । समूढमस्यपाꣳसुरे ॥ आपोअस्मानिति-
स्नात्वा ॥ सूर्याभिमुखोनिमज्जेत् ॥ ॐआपोअस्मान्मातरःशुन्धयन्तुघृतेननोघृतप्वःपुनन्तु । विश्वꣳहिरिप्रंप्रवहन्ति-
देवीः ॥ उदिदाभ्यइत्युन्मज्ज्य ॥ ॐउदिदाभ्यःशुचिरापूतएमि ॥ निमज्ज्योन्मज्ज्य ॥ आचम्य ॥ गोमयेनविलिम्पे-
न्मानस्तोकइति । ॐअग्रमग्रंचरन्तीनामोषधीनांवनेवने । तासामृषभपत्नीनांपवित्रंकायशोधनं ॥ तन्मेरोगांश्चशोकांश्च ।
पापंमेहरगोमय ॥ ॐमानस्तोकेतनयेमानआयुषिमानोगोषुमानोअश्वेषुरीरिषः । मानोवीरान्रुद्रभामिनोवधीर्हविष्मन्तःस-
दमित्त्वाहवामहे ॥ उदकोपस्पर्शः ॥ भस्मस्नानं ॥ सर्वेषामेवदेवानांपूज्योरुद्रोधिदेवता । तस्मात्पवित्रंभस्मैवतेनस्नानम
घापहं ॥ ॐअग्निरितिभस्म । वायुरितिभस्म । जलमितिभस्म । स्थलमितिभस्म । व्योमेतिभस्म । सर्वꣳहवाइ-
दंभस्म । मनइत्येतानिचक्षूꣳषिभस्मानि ॥ ॐत्र्यायुषंजमदग्नेःकश्यपस्यत्र्यायुषं । यद्देवेषुत्र्यायुषंतन्नोअस्तुत्र्या-

युषं ॥ आचम्य । ततोऽभिषिञ्चेदिमंमेवरुणेतिचतसृभिर्मापउदुत्तमंमुञ्चन्त्यवभृथेति ॥ अन्तेचैतत् ॥ ॐइमंमेवरुण-
श्रुधीहवमद्याचमृडय । त्वामवस्युराचके ॥ १ ॥ तत्त्वायामिब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः । अहेडमा-
नोवरुणेहबोध्युरुशꣳसमानआयुःप्रमोषीः ॥ २ ॥ त्वंनोअग्नेवरुणस्यविद्वान्देवस्यहेडोअवयासिसीष्ठाः । यजिष्ठोवह्नित-
मःशोशुचानोविश्वाद्वेषाꣳसिप्रमुमुग्ध्यस्मत् ॥ ३ ॥ सत्वन्नोअग्नेवमोभवोतीनेदिष्ठोअस्याउषसोव्युष्टौ । अवयक्ष्वनोव-
रुणꣳरराणोवीहिमृडीकꣳसुहवोनएधि ॥ ४ ॥ मापोमौषधीर्हिꣳसीर्द्धाम्नोधाम्नोराजँस्ततोवरुणनोमुञ्च । यदाहुरघ्न्याइतिव-
रुणेतिशपामहेततोवरुणनोमुञ्च ॥ ५ ॥ उदुत्तमंवरुणपाशमस्मदवाधमंविमध्यमꣳश्रथाय । अथावयमादित्यव्रतेतवाना-
गसोअदितयेस्याम ॥ ६ ॥ मुञ्चन्तुमाशपथ्यादथोवरुण्यादुत । अथोयमस्यपड्वीशात्सर्वस्माद्देवकिल्बिषात् ॥ ७ ॥ अव-
भृथनिचुम्पुणनिचेरुरसिनिचुम्पुणः । अवदेवैर्देवकृतमेनोयासिषमवमर्त्यैर्मर्त्यकृतंपुरुराव्णोदेवरिषस्पाहि ॥८ ॥ निमज्ज्यो-
न्मज्ज्य ॥ आचम्य ॥ (अपाघमित्यपामार्गैःपावनंत्रिः ॥ ॐअपाघमपकिल्बिषमपकृत्यामपोरपः । अपामार्गत्वमस्मदप-
दुःष्वप्न्यꣳसुव ॥ परित्यज्यआचम्य ॥ काण्डात्काण्डादितिदूर्वाभिस्त्रिः ॥ ॐकाण्डात्काण्डात्प्ररोहन्तीपरुषःपरुषस्परि ।
एवानोदूर्वेप्रतनुसहस्रेणशतेनच ॥ परित्यज्य । आचम्य) ॥ दर्भैःपावयेदापोहिष्ठेतितिसृभिरिदमापोहविष्मतीर्देवीरापइ-
तिद्वाभ्यामपोदेवाद्धुपदादिवशन्नोदेवीरपाꣳरसमपोदेवीःपुनन्तुमेतिनवभिश्चित्पतिर्मेति ॐकारेणव्याहृतिभिर्गायत्र्याचा-

दावन्तेच ॥ ॐपुनातु । ॐभूःपुनातु । ॐभुवःपुनातु । ॐस्वःपुनातु । ॐतत्सवि० यात् ॥ ॐआपोहिष्ठामयोभुवस्तानऊर्जे-
दधातन । महेरणायचक्षसे । १ ॥ योवःशिवतमोरसस्तस्यभाजयतेहनः । उशतीरिवमातरः । २ ॥ तस्माअरङ्गमामवोयस्य-
क्षयायजिन्वथ । आपोजनयथाचनः । ३ ॥ इदमापःप्रवहतावद्यंचमलंचयत् । यच्चाभिदुद्रोहानृतंयच्चशेपेअभीरुणम् ॥
आपोमातस्मादेनसःपवमानश्चमुञ्चतु । ४ ॥ हविष्मतीरिमाआपोहविष्माँ२आविवासति । हविष्मान्देवोअध्वरोहविष्माँ२
अस्तुसूर्यः । ५ ॥ देवीरापोअपान्नपाद्योवऊर्मिर्हविष्यइन्द्रियावान्मदिन्तमः । तंदेवेभ्योदेवत्रादत्तशुक्रपेभ्योयेषांभागस्थ-
स्वाहा । ६ ॥ कार्षिरसिसमुद्रस्यत्वाक्षित्याउन्नयामि । समापोअद्भिरग्मतसमोषधीभिरोषधीः । ७॥ अपोदेवामधुमती-
रगृभ्णन्नूर्जस्वतीराजस्वश्चितानाः । याभिर्मित्रावरुणावभ्यषिञ्चन्याभिरिन्द्रमनयन्नत्यरातीः । ८ ॥ द्रुपदादिवमुमुचानः-
स्विन्नःस्नातोमलादिव । पूतंपवित्रेणेवाज्यमापःशुन्धन्तुमैनसः । ९ ॥ शन्नोदेवीरभिष्टयआपोभवन्तुपीतये । शंयोरभि-
स्रवन्तुनः । १०॥ अपाᳬरसमुद्वयसᳬसूर्येसन्तᳬसमाहितम् । अपाᳬरसस्ययोरसस्तंवोगृह्णाम्युत्तममुपयामगृहीतोसीन्द्रा-
यत्वाजुष्टंगृह्णाम्येषतेयोनिरिन्द्रायत्वाजुष्टतमम् । ११ ॥ अपोदेवीरुपसृजमधुमतीरयक्ष्मायप्रजाभ्यः । तासामास्थाना-
दुज्जिहतामोषधयःसुपिप्पलाः । १२ ॥ पुनन्तुमापितरःसोम्यासःपुनन्तुमापितामहाःपुनन्तुप्रपितामहाः । पवित्रेणशत-
तायुषा । पुनन्तुमापितामहाःपुनन्तुप्रपितामहाः । पवित्रेणशतायुषाविश्वमायुर्व्यश्नवै । १३ ॥ अग्नआयूᳬषिपवसआ-

सुवोर्जमिषंचनः । आरेबाधस्वदुच्छुनां । १४ ॥ पुनन्तुमादेवजनाःपुनन्तुमनसाधियः । पुनन्तुविश्वाभूतानिजातवेदःपुनीहिमा । १५ ॥ पवित्रेणपुनीहिमाशुक्रेणदेवदीद्यत् । अग्नेक्रत्वाक्रतूँरनु । १६ ॥ यत्तेपवित्रमर्चिष्यग्नेविततमन्तरा । ब्रह्मतेनपुनातुमा । १७ ॥ पवमानःसोअद्यनःपवित्रेणविचर्षणिः । यःपोतासपुनातुमा । १८ ॥ उभाभ्यांदेवसवितःपवित्रेणसवेनच । मांपुनीहिविश्वतः । १९ ॥ वैश्वदेवीपुनतीदेव्यागाद्यस्यामिमाबह्व्यस्तन्वोवीतपृष्ठाः । तयामदन्तःसधमादेषुवयंस्यामपतयोरयीणाम् । २० ॥ ॐचित्पतिर्मापुनातुवाक्पतिर्मापुनातुदेवोमासवितापुनात्वच्छिद्रेणपवित्रेणसूर्यस्यरश्मिभिः । तस्यतेपवित्रपतेपवित्रपूतस्ययत्कामःपुनेतच्छकेयम् । २१ ॥ ॐपुनातु । ॐभूःपुनातु । ॐभुवःपुनातु । ॐस्वःपुनातु । ॐतत्सवि० यात् ॥ दर्भान्परित्यज्य ॥ आचम्य ॥ पुनरिमंमेइत्यष्टभिः ॥ ॐइमंमे० १ तत्त्वायामि० २ त्वन्नोअग्ने० ३ सत्वन्नो अग्ने० ४ मापोमौषधी० ५ उदुत्तमं० ६ मुञ्चन्तुमा० ७ अवभृथ० ॥ आचम्य-(पंचगव्यस्नानं॥ गोमूत्रंगोमयंक्षीरंदधिसर्पिःकुशोदकम्॥ पञ्चगव्यमितिप्रोक्तंसर्वपापप्रणाशनम्॥ यत्त्वगस्थिगतंपापंदेहेतिष्ठतिमामके ॥ स्नानाच्चपञ्चगव्यस्यदहत्यग्निरिवेन्धनम् ॥ आचम्य ॥) नन्दिनीनलिनीसीतामालतीचमलापहा ॥ विष्णुपादाब्जसंभूतागङ्गात्रिपथगामिनी ॥ भागीरथीभोगवतीजाह्नवीत्रिदशेश्वरी । द्वादशैतानिनामानिस्नानकालेसदापठेत् ॥ गोदावरिनमस्तुभ्यंनमस्तेपापहारिणि ॥ अनुज्ञांदेहिमेमातःशुद्धस्नानंकरोम्यहम् ॥ पापोहंपापकर्माहंपापात्मापापसंभवः ॥

त्राहिमांकृपयागोदेसर्वपापहराभव ॥ अन्तर्जलेघमर्षणंत्रिरावर्तयेत् द्रुपदादिवायंगौर्वात्र्यचंप्राणायामंवासशिरसमोमिति-
वाविष्णोर्वास्मरणम् ॥ सशिराःप्रणायामः अशिरा वा ॥ ॐविष्णवेनमः ॥ शक्त्यपेक्षयाइमेविकल्पाः ॥ ॥ ऋतंचं-
सत्यंचाभीद्धात्तपसोध्यजायत । ततोरात्र्यजायततततःसमुद्रोअर्णवः ॥ समुद्रादर्णवादधिसंवत्सरोअजायत । अहोरात्रा-
णिविदधद्विश्वस्यमिषतोवशी ॥ सूर्याचन्द्रमसौधातायथापूर्वमकल्पयत् । दिवंचपृथिवींचान्तरिक्षमथोस्वः ॥ ३ ॥
ॐद्रुपदादिवमुमुचानःस्विन्नस्नातोमलादिव । पूतंपवित्रेणेवाज्यमापःशुन्धन्तुमैनसः ॥ १ ॥ ॐआयंगौःपृश्निरक्रमीदसं-
दन्मातरंपुरः । पितरंचप्रयन्त्स्वः ॥ १ ॥ अन्तश्चरतिरोचनास्यप्राणादपानती । व्यख्यन्महिषोदिवम् ॥२॥ त्रिंशद्धाम-
विराजतिवाक्पतङ्गायधीयते । प्रतिवस्तोरहद्युभिः ॥ ३ ॥ उत्तीर्य ॥ धौतवाससीपरिधाय ॥ मृदोरूकरौप्रक्षालयेत् ॥

अथमध्याह्नसंध्या ॥ शिखाबन्धनादिभूम्युपसंग्रहान्तंसर्वंप्रातःसंध्योपासनवत् ॥ तत्रसंकल्पमन्त्राचमनअर्घ्यउपस्था-
नआवाहनध्यानजपनिवेदनसमापनेषुविशेषः ॥ संकल्पः ॥ ममउपात्तदुरितक्षयार्थंरुद्रावाप्तयेमध्याह्नसंध्योपासनमहंक-
रिष्ये ॥ मन्त्राचमनं ॥ ॐआपःपुनन्तुपृथिवींपृथ्वीपूतापुनातुमां । पुनन्तुब्रह्मणस्पतिर्ब्रह्मपूतापुनातुमां ॥ यदुच्छिष्टम-
भोज्यंयद्वादुश्चरितंमम । सर्वंपुनन्तुमामापोऽसतांचप्रतिग्रहंस्वाहा ॥ अर्घ्यदानं ॥ पुष्पमिश्रोदकाञ्जलिमादायसूर्याभि-
मुखस्तिष्ठन्गायत्र्याएकमर्घ्यंदद्यात् ॥ मध्याह्नसंध्यारुद्ररूपिणे श्रीसवि० दत्तंनमम ॥ १ ॥ उपस्थानं ॥ ऊर्ध्वबाहुःसूर्य-

मुदीक्षन् ॥ उद्वयं १ उदुत्यं० २ चित्रंदे० ३ तच्चक्षुर्दे० ४ ॐभूर्भुवःस्वः तत्सवितु० यात् ५ शक्तौसत्यांइच्छया ॥ यथाशक्तिविभ्राडित्यनुवाकः १७ पुरुषसूक्त १६ शिवसंकल्प ६ मण्डलब्राह्मणै २२ रित्युपस्थाय ॥ आदित्यंप्रदक्षिणीकृत्यनमस्कृत्य ॥ आवाहनं ॥ सावित्रींयुवतींशुक्लांशुक्लवस्त्रांत्रिलोचनां । त्रिशूलिनींवृषारूढांचन्द्रलेखाविभूषितां ॥ यजुर्वेदकृतोत्सङ्गांरुद्राणींरुद्रदैवतां । कैलासविहितावासामायान्तींसूर्यमण्डलात् ॥ वरदांत्र्यक्षरांसाक्षाद्देवीमावाहयाम्यहं ॥ आगच्छवरदेदेवित्र्यक्षरेब्रह्मवादिनि । सावित्रींछन्दसांमातरुद्रयोनेनमोस्तुते ॥ गायत्रीजपः ॥ सूर्याभिमुखस्तिष्ठन्हृदयेदक्षिणहस्तंनिधाययथाशक्तिजपंकुर्यात् ॥ निवेदनं ॥ अनेनमध्याह्नसंध्याप्रधानभूतेन अमुकसंख्य० भगवान्रुद्रस्वरूपीश्रीसवि०ताम् ॥ समापनं ॥ अनेनमध्याह्नसंध्योपासनाख्येनकर्मणाभगवान्रुद्रस्वरूपीसवि०ताम् ॥ इतिमध्याह्नसंध्या ॥

अथसूर्योपस्थानं ॥ आचमनं । प्राणायामः । पवित्रधारणं । इहपृथिव्यामित्यादि एवंगुणविशेषणवतिदेशेकालेचममात्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं श्रीसूर्यनारायणप्रीत्यर्थं सूर्योपस्थानमहंकरिष्ये ॥ गायत्र्यापुष्पाण्यम्बुमिश्राण्यूर्ध्वंक्षिप्त्वाऊर्ध्वबाहुःसूर्यमुदीक्षन् उद्वयमुदुत्यंचित्रंतच्चक्षुरितिगायत्र्याचयथाशक्तिविभ्राडित्यनुवाकपुरुषसूक्तशिवसंकल्पमण्डलब्राह्मणैरुपतिष्ठेत् ॥ ॐउद्वयंतमस० । १ ॐउदुत्यंजातवेदसं० २ । ॐचित्रंदेवाना० ३ । ॐतच्चक्षुर्देवहितं०

1 उद्वयमित्यादियज्ञाप्रतइलन्ताउपस्थानीयामन्त्रारुद्राध्यायेसन्तीतीनात्रसगृहीता ।

४। ॐतत्सवितु० ५। ॐविभ्राड्बृहत् १७ अनुवाकः ६। ॐसहस्रशीर्षा० १६ इतिपुरुषसूक्तं ७। ॐयज्जाग्रतोदूर० ६ इतिशिवसंकल्पः ८। मण्डलब्राह्मणं । ॐयदेतन्मण्डलंतपतितन्महदुक्थंताऽऋचःसऽऋचाँल्लोकोथयदेतदर्चिर्दीप्यतेतन्महाव्रतंतानिसामानिससाम्नाँल्लोकोथयऽएषऽएतस्मिन्मण्डलेपुरुषःसोग्निस्तानियजूꣳषिसयजुषांल्लोकः । १ ॥ सैषात्रय्येवविद्यातपतितद्धैतदप्यविद्वाꣳसऽआहुस्त्रयीवाऽएषाविद्यातपतीतिवाग्घैवतत्पश्यन्तीवदति ।२॥सऽएषऽएवमृत्युर्यऽएषऽएतस्मिन्मण्डलेपुरुषोथैतदमृतंयदेतदर्चिर्दीप्यतेतस्मान्मृत्युर्नम्रियतेमृतेह्यन्तस्तस्मादुनदृश्यतेमृतेह्यन्तः ।३॥ 'तदेषश्लोकोभवति'—अन्तरंमृत्योरमृतमित्यवरꣳह्येतन्मृत्योरमृतंमृत्यावमृतमाहितमित्येतस्मिन्हिपुरुषऽएतन्मण्डलम्प्रतिष्ठितंतपतिमृत्युर्विवस्वन्तंवस्तऽइत्यसौवाऽआदित्योविवस्वानेषह्यहोरात्रेविवस्तेतमेषवस्तेसर्वतोह्येनेनपरिवृतोमृत्योरात्माविवस्तीत्येतस्मिन्हिमण्डलऽएतस्यपुरुषस्यात्मैतदेषश्लोकोभवति । ४ ॥ तयोर्वाऽएतयोरुभयोरेतस्यचार्चिषऽएतस्यचपुरुषस्यैतन्मण्डलंप्रतिष्ठातस्मान्महदुक्थम्परस्मैनशꣳसेन्नेदेतांप्रतिष्ठांछिनदाऽइत्येताꣳहमप्रतिष्ठांछिन्तेऽजोमहदुक्थंपरस्मैशꣳसतितस्मादुक्थशसंभूयिष्ठंपरिचक्षतेप्रतिष्ठाछिन्नोहिभवतीत्यधिदेवतम् । ५ ॥ 'अथाधियज्ञम्' यदेतन्मण्डलंतपत्ययꣳसरुक्मोथयदेतदर्चिर्दीप्यतऽइदंतत्पुष्करपर्णमापोह्येताऽआपःपुष्करपर्णमथयऽएषऽएतस्मिन्मण्डलेपुरुषोयमेवसयोयꣳहिरण्मयःपुरुषस्तदेतद्वैतत्रयꣳसंस्कृत्यैहोपधत्तेतद्यज्ञस्यैवानुशꣳस्यामूर्द्धमुत्क्रामतितदेतमप्येतियऽएषतपतितस्मादग्निनाद्रि-

येतपरिहन्तुममुत्रह्येषतदाभवतीत्युऽएवाधियज्ञम् । ६ ॥ 'अथाध्यात्मम्' यदेतन्मण्डलंतपतियश्चैषरुक्मऽइदंतच्छुक्लम-
क्षन्नथयदेतदर्चिर्दीप्यतेयच्चैतत्पुष्करपर्णमिदंतत्कृष्णमक्षन्नथयऽएषऽएतस्मिन्मण्डलेपुरुषोयश्चैषहिरण्मयःपुरुषोयमेवसयो-
यंदक्षिणेक्षन्पुरुषः । ७ ॥ सऽएषऽएवलोकंपृणतामेषसर्वोग्निरभिसम्पद्यतेतस्यैतन्मिथुनंयोयꣳसव्येक्षन्पुरुषोर्द्धमुहैतदात्म-
नोयन्मिथुनंयदावैसहमिथुनेनाथसर्वोथकृत्स्नःकृत्स्नतायैतद्यत्तेद्वैभवतोद्वन्द्वꣳहिमिथुनंप्रजननंतस्माद्द्वेद्वेलोकंपृणेऽउपधीयेते-
तस्माद्द्वाभ्यांद्वाभ्यांचितिंप्रणयन्ति । ८ ॥ सऽएषऽएवेन्द्रः । योयंदक्षिणेक्षन्पुरुषोथेयमिन्द्राणीताभ्यांदेवाऽएतांविधृ-
तिमकुर्वन्नासिकांतस्माज्जायायाअन्तेनाश्नीयाद्वीर्य्यवान्हास्माज्जायतेवीर्य्यवन्तमुहसाजनयतियस्याऽअन्तेनाश्नाति । ९ ॥
तदेतद्देवव्रतꣳराजबन्धवोमनुष्याणामनुतमांगोपायन्तितस्मादुतेपुत्त्रीर्य्यवाञ्जायतेमृतवाकावयसाꣳसाक्षिप्रश्येनंजनयति
। १० ॥ तौहृदयस्याकाशंप्रत्यवेत्यमिथुनीभवतस्तौयदामिथुनस्यान्तंगच्छतोथहैतत्पुरुषःस्वपितितद्यथाहैवेदम्मानुषस्यमि-
थुनस्यान्तंगत्वासंविदऽइवभवत्येवꣳहैवैतदसंविदऽइवभवतिदैवꣳह्येतन्मिथुनंपरमोह्येषऽआनन्दः । ११ ॥ तस्मादेवंवि-
त्स्वप्यात् ॥ लोक्यꣳहैतेऽएवतद्देवतेमिथुनेनप्रियेणधाम्नासमर्द्धयतितस्मादुहस्वपन्तंधुरेवनबोधयेन्नेदेतेदेवतेमिथुनीभवन्त्यौ-
हिनसानीतितस्मादुहैतत्सुषुपुषःश्लेष्मणमिवमुखंभवत्येतेऽएवतद्देवतेरेतःसिञ्चतस्तस्माद्रेतसऽइदꣳसर्वꣳसंभवतियदिदंकिंच
। १२ ॥ सऽएषऽएवमृत्युः ॥ यऽएषएतस्मिन्मण्डलेपुरुषोयश्चायंदक्षिणेक्षन्पुरुषस्तस्यहैतस्यहृदयेपादावतिहतौताहैत-

॥१९२॥

दाच्छिद्योत्क्रामतिसयदोत्क्रामत्यथहैतत्पुरुषोम्रियतेतस्मादुहैतन्म्रेतमाहुराच्छेद्यस्येति । १३ ॥ एषऽउएवप्राणः । एषु-
हीमाःसर्वाःप्रजाःप्रणयतितस्यैतेप्राणाःस्वाःसयदास्वपित्यथैनमेतेप्राणाःस्वाऽअपियन्तितस्मात्स्वाप्ययःस्वाप्ययोहवैतᳪ
स्वप्नऽइत्याचक्षतेपरोक्षम्परोक्षकामाहिदेवाः । १४ ॥ सऽएतैःसुप्तःनकस्यचनवेदनमनसासङ्कल्पयतिनवाचान्नस्यरसंविज्ञा-
जानातिनप्राणेनगन्धंविजानातिनचक्षुषापश्यतिनश्रोत्रेणशृणोत्येतᳪह्येतेतदापीताभवन्तिसऽएषऽएकःसन्प्रजासुबहुधा-
व्याविष्टस्तस्मादेकासतीलोकम्पृणासर्वमग्निमनुविभवत्यथयदेकऽएवतस्मादेका । १५ ॥ तदाहुः । ऽएकोमृत्युर्बहवऽइ-
त्येकश्चबहवश्चेतिहब्रूयाद्यदहासावमुत्रतेनैकोथयदिहप्रजासुबहुधाव्याविष्टस्तेनोबहवः । १६ ॥ तदाहुः । ऽअन्तिकेमृ-
त्युर्दूराऽइत्यन्तिकेचदूरेचेतिहब्रूयाद्यदहायमिहाध्यात्मंतेनान्तिकेथयदसावमुत्रतेनोदूरे । १७ ॥ तदेषःश्लोकोभवति । अ-
न्नेमात्यपश्रितोरसानाᳪसंक्षरेमृतऽइतियदेतन्मण्डलंतपतितदन्नमथयऽएषऽएतस्मिन्मण्डलेपुरुषःसोत्तासऽएतस्मिन्नन्नेप-
श्रितोभातीत्यधिदेवतम् । १८ ॥ ‘अथाध्यात्मम्’—इदमेवशरीरमन्नमथयोयंदक्षिणेक्षन्पुरुषःसोत्तासऽएतस्मिन्नन्नेपश्रि-
तोभाति । १९ ॥ तमेतमग्निरित्यध्वर्यवऽउपासते । यजुरित्येषहीदᳪसर्वंयुनक्तिसामेतिच्छन्दोगाऽएतस्मिन्हीदᳪसर्वᳪस-
मानमुक्थमितिबह्वृचाऽएषहीदᳪसर्वमुत्थापयतियातुरितियातुविदऽएतेनहीदᳪसर्वंयतंविषमितिसर्पाःसर्पाऽइतिसर्पवि-
दऽऊर्गितिदेवारयिरितिमनुष्यामायेत्यसुराःस्वधेतिपितरोदेवजनऽइतिदेवजनविदोरूपमितिगन्धर्वागन्धऽइत्यप्सरसस्तंय-
थायथोपासतेतदेवभवतितद्धैनान्भूत्वावतितस्मादेनमेवंवित्सर्वैरेवैतैरुपासीतसर्वᳪहैतद्भवतिसर्वᳪहैनमेतद्भूत्वाऽवति ॥२०

सुऽएषत्रीष्टकोग्निः ॥ ऋगेकायजुरेकासामैकातद्याङ्काञ्चात्रर्चोपदधातिरुक्मुऽएवतस्याऽआयतनमथयांयजुषापुरुषऽएवतस्याऽआयतनमथया ᳪ सुाम्नापुष्करपर्णमेवतस्याऽआयतनमेवंत्रीष्टक ᳪ ॥२१॥ तेवाऽएतेऽउभे ॥ ऽएषचरुक्मुऽएतच्चपुष्करपर्णमेतंपुरुषमुपीतऽउभेह्यृक्सामेयजुरपीतएवंवेकेष्टक ᳪ ॥ २२ ॥ सुऽएषुऽएवमृत्युः ॥ सुऽएषुऽएतस्मिन्मण्डलेपुरुषो-यश्चायंदक्षिणेक्षन्पुरुषःसुऽएषुऽएवंविदऽआत्माभवतिसयदैवंविदस्माँल्लोकात्प्रैत्त्यथैतमेवात्मानमभिसंभवतिसोमृतोभवति-मृत्युर्ह्यस्यात्माभवति ॥ २३ ॥ इतिमण्डलब्राह्मणं । आदित्यंप्रदक्षिणीकृत्य ॥ ॐविश्वतश्चक्षु० देवऽएकः ॥ १ ॥ नमस्कृत्य ॥ ॐनमःसवित्रेज० शंकरात्मने ॥ १ ॥ उपविशेत् ॥ अनेनसूर्योपस्थानाख्येनकर्मणाभगवान्श्रीसूर्यनारायणःप्रीयतां । इतिसूर्योपस्थानम् ॥

अथकातीयसूत्रानुसारीब्रह्मयज्ञः ॥ उपविशेद्दर्भेपुदर्भपाणिः स्वाध्यायंचयथाशक्त्यादावारभ्यवेदं ॥ आचमनं । प्राणायामः । पवित्रधारणं ॥ एवंगुणविशेषणवतिदेशेकालेचश्रीपरमेश्वरप्रीत्यर्थंयथाशक्तिब्रह्मयज्ञेनाहंयक्ष्ये । इषेत्वादिखंब्रह्मान्तंविवस्वानपश्यत् । सर्वाणिच्छन्दांसिगायत्र्यादीनि । सर्वाऋचआग्नेय्यः । सर्वाणियजू ᳪ षिवायव्यानि । सर्वाणिसामानिसौराणि । सर्वाणिब्राह्मणानिसौराणि । ब्रह्मयज्ञारम्भेविनियोगः ॥ ब्रह्मयज्ञारंभेयथाविधिस्नात्वासर्वोपद्रवनाशनंछन्दःपुरुष ᳪ शरीरेन्यसेत् ॥ ॐतिर्यग्बिलायचमसायोर्ध्वबुध्नायछन्दःपुरुषायनमःमुखे । ॐगौतमभरद्वाजाभ्यांनमःनेत्रयोः । ॐविश्वामित्रजमदग्निभ्यांनमःश्रोत्रयोः । ॐवसिष्ठकश्यपाभ्यांनमः नासिकयोः । ॐअत्रयेनमःवाचि । वाक्स्थानंहृदयं । उदको-

पस्पर्शः । ॐगायत्र्यैछन्दसेनमः । ॐअग्नयेनमः शिरसि । ॐउष्णिहेछन्दसेनमः । ॐसवित्रेनमः ग्रीवायां । ॐबृहत्यैछन्द-
सेनमः । ॐबृहस्पतयेनमःअनूके । अनूकःपृष्ठवंशः । ॐबृहद्रथन्तरायछन्दसेनमः । ॐद्यावापृथिवीभ्यांनमः बाह्वोः । ॐ-
त्रिष्टुभेछन्दसेनमः । ॐइन्द्रायनमःमध्ये । मध्यमुदरं । ॐजगत्यैछन्दसेनमः । ॐआदित्यायनमः श्रोण्योः । ॐअतिच्छ-
न्दसेछन्दसेनमः । ॐप्रजापतयेनमःलिङ्गे । ॐयज्ञायज्ञियायछन्दसेनमः । ॐवैश्वानरायनमः गुदे । उदको० । ॐअनुष्टु-
भेछन्दसेनमः । ॐविश्वेभ्योदेवेभ्योनमःऊर्वोः । ॐपङ्क्त्यैछन्दसेनमः । ॐमरुद्भ्योनमःजानुनोः । ॐद्विपदायैछन्दसे-
नमः । ॐविष्णवेनमः पादयोः । ॐविच्छन्दसेछन्दसेनमः । ॐवायवेनमः प्राणेषु । प्राणाः वायोःसंचारस्थानंनासिका ।
ॐन्यूनाक्षरायछन्दसेनमः । ॐअद्भ्योनमः सर्वाङ्गेषु ॥ एवꣳसर्वाङ्गेषुयोजयित्वा वेदमयःसंपद्यते । शापानुग्रहसमर्थोभ-
वति । ब्राह्मंतेजश्चवर्धते । नकुतश्चिद्भयंविन्दते । ऋङ्मयोयजुर्मयःसाममयस्तेजोमयोऽमृतमयःसंभूयब्रह्मैवाभ्येति ॥ ॐभूर्भु-
वःस्वः तत्सवितु० दयात् ॥ ॐइषेत्वोर्जेत्वावायवस्थदेवोवः सविताप्रार्पयतुश्रेष्ठतमायकर्मणऽआप्यायध्वमघ्न्याइन्द्रायभागंप्र-
जावतीरनमीवाअयक्ष्मामावस्तेनईशतमाघशꣳसोध्रुवाअस्मिन्गोपतौस्यातबह्वीर्यजमानस्यपशून्पाहि ॥१॥ वसोः पवित्रम् ॥
हिरण्मयेनपात्रेण । सत्यस्यापिहितंमुखं ॥ योसावादित्येपुरुषः सोसावहं ॥२॥ ॐखंब्रह्म ॥ व्रतमुपैष्यन्नन्तरेणाहवनीयंच-
गार्हपत्यंचप्राङ्तिष्ठन्नपउपस्पृशति । तद्यदपउपस्पृशत्यमेध्योवैपुरुषोयदनृतंवदतितेनपूतिरन्तरतोमेध्यावाआपोमेध्योभू-
त्वाव्रतमुपायानीतिपवित्रंवाआपः पवित्रपूतोव्रतमुपायानीतितस्माद्वाअपउपस्पृशति ॥ १ ॥ सोग्निमेवाभीक्षमाणोव्रतमु-

पैति ॥ ॐप्राश्नीपुत्रादासुरिवासिनःप्राश्नीपुत्रआसुरायणादासुरायणआसुरेरासुरिर्याज्ञवल्क्याद्याज्ञवल्क्यउद्दालकादुद्दालकोरुणादरुणउपवेशेरुपवेशिःकुश्रेःकुश्रिर्वाजश्रवसोवाजश्रवाजिह्वावतोबाध्योगाज्जिह्वावान्बाध्योगोऽसिताद्वार्षगणादसितोवार्षगणोहरितात्कश्यपाद्धरितःकश्यपःशिल्पात्कश्यपाच्छिल्पःकश्यपःकश्यपान्नैध्रुवेःकश्यपोनैध्रुविर्वाचोवागम्भिण्याआम्भिण्यादित्यादादित्यानीमानिशुक्लानियजूंषिवाजसनेयेनयाज्ञवल्क्येनाख्यायन्ते २ ॥ ॐअग्निमीळेपुरोहितंयज्ञस्यदेवमृत्विजं ॥ होतारंरत्नधातमं ॥ ॐअग्नआयाहिवीतयेगृणानोहव्यदातये ॥ निहोतासत्सिबर्हिषि ॥ ॐशन्नोदेवीरभिष्टयआपोभवन्तुपीतये ॥ शंयोरभिस्रवन्तुनः ॥ चतुर्वेदानन्तरंअङ्गानिपठेत् ॥ अथशिक्षांप्रवक्ष्यामि । अथातोऽधिकारःफलयुक्तानिकर्माणि । अथातोगृह्यस्थालीपाकानांकर्म । वृद्धिरादैच् । गौः । ग्मा । समाम्नायःसमाम्नातः । मयरसतजभनलगसंमितं । पञ्चसंवत्सरमयंयुगाध्यक्षं । अथातोधर्मजिज्ञासा । अथातोब्रह्मजिज्ञासा । योगीश्वरंयाज्ञवल्क्यं । नारायणंनमस्कृत्य । इतिविद्यातपोयोनिरयोनिर्विष्णुरीडितः । वाग्यज्ञेनार्चितोदेवःप्रीयतांचजनार्दनः ॥ अनेनब्रह्मयज्ञाख्येनकर्मणाभगवान्श्रीपरमेश्वरःप्रीयताम् । तत्सद्ब्रह्मार्पणमस्तु॥ यस्यस्मृत्या० ॥ अच्युताय० । विष्णवेनमः ३ ॥ इतिकातीयसूत्रानुसारीब्रह्मयज्ञः ॥

अथकातीयसूत्रानुसारीतर्पणप्रयोगः । आचमनं । प्राणायामः । पवित्रधारणं । एवंगुणविशेषणवतिदेशेकालेचश्रीपरमेश्वरप्रीत्यर्थंतर्पणमहंकरिष्ये ॥ ततस्तर्पयेत् दैवतीर्थेन । सकुशजलेनेतिसर्वत्र ॥ ॐब्रह्मातृप्यतां १ । ॐविष्णुस्तृ-

प्यतां २। ॐरुद्रस्तृप्यतां ३ उदको०। ॐप्रजापतिस्तृप्यतां ४। ॐदेवास्तृप्यन्तां ५। ॐछन्दाᳫंसितृप्यन्तां ६। ॐवेदास्तृप्यन्तां ७। ॐऋषयस्तृप्यन्तां ८। ॐपुराणाचार्यास्तृप्यन्तां ९। ॐगन्धर्वास्तृप्यन्तां १०। ॐइतराचार्यास्तृप्यन्तां ११। ॐसंवत्सरःसावयवस्तृप्यतां १२। ॐदेव्यस्तृप्यन्तां १३। ॐअप्सरसस्तृप्यन्तां १४। ॐदेवानुगास्तृप्यन्तां १५। ॐनागास्तृप्यन्तां १६। ॐसागरास्तृप्यन्तां १७। ॐपर्वतास्तृप्यन्तां १८। ॐसरितस्तृप्यन्तां १९। ॐमनुष्यास्तृप्यन्तां २०। ॐयक्षास्तृप्यन्तां २१। ॐरक्षाᳫंसितृप्यन्तां २२। उदको०। ॐपिशाचास्तृप्यन्तां २३। ॐसुपर्णास्तृप्यन्तां २४। ॐभूतानितृप्यन्तां २५। ॐपशवस्तृप्यतां २६। ॐवनस्पतयस्तृप्यन्तां २७। ॐओषधयस्तृप्यन्तां २८॥ ॐभूतग्रामश्चतुर्विधस्तृप्यतां २९॥ ॥ ततोनिवीतीमनुष्यान् यवमिश्रं उदङ्मुखेन प्राजापत्येनतीर्थेनद्विर्द्विः। ॐसनकस्तृप्यतां १। ॐसनन्दनस्तृ २। ॐसनातनस्तृ ३। ॐकपिलस्तृ० ४। ॐआसुरिस्तृ० ५। ॐवोढुस्तृ० ६। ॐपञ्चशिखस्तृ० ७॥ ततोपसव्यं दक्षिणाभिमुखेन पितृतीर्थेन एकैकस्यातिलैर्मिश्रांस्त्रींस्त्रीन्दद्याज्जलाञ्जलीन्॥ ॐकव्यवाडनलस्तृ० १। ॐसोमस्तृ० २। ॐयमस्तृ० ३। ॐअर्यमातृ० ४। ॐअग्निष्वात्ताःपितरस्तृप्यन्तां ५। ॐसोमपाःपितरस्तृप्यन्तां ६। ॐबर्हिषदःपितरस्तृप्यन्तां ७॥ यमांश्चैके॥ ॥ ॐयमायनमः १। ॐधर्मराजायनमः २। ॐमृत्यवेनमः ३। ॐअन्तकायनमः ४। ॐवैवस्वतायनमः ५। ॐकालायनमः ६। ॐसर्वभूतक्षयायनमः ७। ॐऔदुम्बरायनमः ८। ॐदध्नायनमः ९। ॐनीलायनमः १०। ॐपरमेष्ठिनेनमः ११। ॐवृकोद-

रायनमः १२ । ॐचित्रायनमः १३ । ॐचित्रगुप्तायनमः १४ ॥ जीवत्पितृकोऽप्येतान् ॥ अन्यांश्चेतरः ॥ गोत्रोच्चारः– तातास्म्बात्रितयं सपत्नजननी मतामहादित्रयं सस्त्रि स्त्रीतनयादि तातजननीस्वभ्रातरः सस्त्रियः । तातास्म्बात्मभगिन्यपधवयुग्जायापिता सद्गुरुः शिष्याप्ताः पितरो महालयविधौ तीर्थे तथा तर्पणे ॥ १ ॥ तर्पणेप्रथमाप्रोक्ता ॥ अमुकसगोत्रः अस्मत्पिता अमुकशर्मावसुरूपस्तृप्यतां । इदंजलं तस्मैस्वधानमः । अस्मत्पितामहः रुद्ररूपस्तृ० । अस्मत्प्रपितामहःआदित्यरूपस्तृ० । अमुकसगोत्रा अस्मन्माता अमुकीदावसुरूपातृप्यतां । इदंजलंतस्यैस्वधानमः । अस्मत्पितामही रुद्ररूपातृ० । अस्मत्प्रपितामहीआदित्यरूपातृ० । अस्मत्सापत्नमातावसुरूपातृ० ॥ उदीरतामङ्गिरसआयन्तुनऊर्जंवहन्तीपितृभ्योयेचेहमधुवाताइतित्र्यचं जपन् प्रासिंचेत् ॥ तृप्यध्वमितित्रिः ॥ ॐउदीरतामवरऽउत्परासऽउन्मध्यमाःपितरःसोम्यासः । असुंयईयुरवृकाऋतज्ञास्तेनोवन्तुपितरोहवेषु ॥ १ ॥ अङ्गिरसोनःपितरोनवग्वाऽअथर्वाणोभृगवःसोम्यासः ॥ तेषांवयꣳसुमतौयज्ञियानामपिभद्रेसौमनसेस्याम ॥२॥ आयन्तुनःपितरःसोम्यासोग्निष्वात्ताःपथिभिर्देवयानैः । अस्मिन्यज्ञेस्वधयामदन्तोधिब्रुवन्तुतेवन्त्वस्मान् ॥ ३ ॥ ऊर्जंवहन्तीरमृतंघृतंपयःकीलालंपरिस्रुतं ॥ स्वधास्थतर्पयतमेपितॄन् ॥४॥ पितृभ्यःस्वधायिभ्यःस्वधानमः पितामहेभ्यःस्वधायिभ्यःस्वधानमः प्रपितामहेभ्यःस्वधायिभ्यःस्वधानमः ॥ अक्षन्पितरोमीमदन्तपितरोतीतृपन्तपितरःपितरःशुन्धध्वं ५ ॥ येचेहपितरोयेचनेहयांश्चविद्मयाꣳ उचनप्रविद्म ॥ त्वंवेत्थयतितेजातवेदःस्वधाभिर्यज्ञꣳसुकृतंजुषस्व ६ ॥ मधुवाता० ७ । मधुनक्तं० ८ । मधुमान्नो० ९॥ तृप्यध्वं ३॥ ॐनमो-

व॒ᳩपितरोरसाय॒नमोव॒ᳩपितरᳩशोपाय॒नमोवः पितरोजीवाय॒ नमोव॒ᳩपितरᳩस्वधायैनमोव॒ᳩपितरोघोराय॒नमोवः पितरोमन्य-
वेनमोव॒ᳩपितरᳩपितरोनमोव॒ः ॥१॥ मातामहानांचैवं ॥ द्वितीयगोत्रः अस्मन्मातामहः । अस्मत्प्रमातामहः । अस्मद्वृ-
द्धप्रमातामहः । अस्मन्मातामही । अस्मत्प्रमातामही । अस्मद्वृद्धप्रमातामही । अस्मत्पत्नी । अस्मत्तनयः । अस्मद्दुहिता ।
अस्मत्पितृव्यः । अस्मन्मातुलः । अस्मद्भ्राता । अस्मत्पितृभगिनी । अस्मन्मातृभगिनी । अस्मद्भगिनी । अस्मच्छ्वशुरः ।
अस्मच्छ्वश्रूः । अस्मद्गुरुः । अस्मच्छिष्यः । अस्मदासः ॥ आब्रह्मस्तम्बपर्यन्तंदेवर्षिपितृमानवाः । तृप्यन्तुपितरः सर्वमातृ-
मातामहादयः ॥ अतीतकुलकोटीनांसप्तद्वीपनिवासिनां । आब्रह्मभुवनाल्लोकादिदमस्तुतिलोदकं ॥ येबान्धवाबान्धवाये-
येन्यजन्मनिबान्धवाः । तेसर्वेतृप्तिमायान्तुमयादत्तेनवारिणा ॥ येकेचास्मत्कुलेजाताअपुत्रागोत्रिणोमृताः । तेगृह्णन्तु
मयादत्तंवस्त्रनिष्पीडनोदकं ॥ वासोनिष्पीड्य । आचम्य । ब्राह्मवैष्णवरौद्रसावित्रमैत्रवारुणैस्तल्लिङ्गैरर्चयेत् ॥ ॐयत्तेप-
वित्रमर्चिष्यग्नेवितितमन्तरा । ब्रह्मतेनपुनातुमा ॥ ब्रह्मणेनमः ब्रह्माणंपूजयामि ॥ १ ॥ ॐइदंविष्णुर्विचक्रमेत्रेधानिदधेपदं ॥
समूढमस्यपाᳩसुरे ॥ विष्णवे० विष्णुंपू० ॥२॥ ॐनमस्तेरुद्रमन्यवउतोतइषवेनमः । बाहुभ्यामुततेनमः ॥ रुद्राय० रुद्रं-
पू० ॥३॥ ॐतत्सवितु० यात् ॥ सवित्रे० सवितारंपू० ॥ ४ ॥ ॐमित्रस्यचर्षणीधृतोवोदेवस्यसानसि ॥ द्युम्नंचित्रश्रव-
स्तमं ॥ मित्राय० मित्रंपू० ॥ ५ ॥ ॐयदाहुरघ्न्याऽइतिवरुणेतिशपाहेततोवरुणनोमुंच । वरुणाय० वरुणंपू० ॥ ६ ॥
अदश्रᳩहᳩसइत्युपस्थाय ॥ ॐहᳩसᳩशुचिषद्वसुरन्तरिक्षसद्धोतावेदिषदतिथिर्दुरोणसत् ॥ नृषद्वरसदृतसद्व्योमसदब्जागो-

जाऋतुजाअद्रिजाऋतंबृहत् ॥ २ ॥ ॐअदृश्रमस्यकेतवोविरश्मयोजनाँ२ अनु ॥ भ्राजन्तोअग्नयोयथा ॥ उपयामगृ-
हीतोसिसूर्यायत्वाभ्राजायैषतेयोनिःसूर्यायत्वाभ्राजाय ॥ सूर्यभ्राजिष्ठभ्राजिष्ठस्त्वंदेवेष्वसिभ्राजिष्ठोहंमनुष्येषुभूयासं ॥ १ ॥
प्रदक्षिणीकृत्य ॥ दिशश्चदेवताश्चनमस्कृत्य । ॐप्राच्यैदिशेनमः ॥ ॐइन्द्रायनमः ॥ १ ॥ ॐआग्नेय्यैदिशेनमः ॥ ॐ
अग्नयेनमः ॥ २ ॥ ॐदक्षिणस्यैदिशेनमः ॥ ॐयमायनमः ॥ ३ ॥ ॐनिर्ऋत्यैदिशेनमः ॥ ॐनिर्ऋतयेनमः ॥ ४ ॥
ॐपश्चिमायैदिशेनमः ॥ ॐवरुणायनमः ॥ ५ ॥ ॐवायव्यैदिशेनमः ॥ ॐवायवेनमः ॥ ६ ॥ ॐउदीच्यैदिशेनमः ॥
ॐसोमायनमः ॥ ७ ॥ ॐईशान्यैदिशेनमः ॥ ॐईशानायनमः ॥ ८ ॥ ॐऊर्ध्वायैदिशेनमः ॥ ॐब्रह्मणेनमः ॥९॥
ॐअवाच्यैदिशेनमः ॥ ॐअनन्तायनमः ॥१०॥ उपविश्यब्रह्माग्निपृथिव्योषधिवाग्वाचस्पतिविष्णवेमहद्भ्योऽद्भ्योपांपतये
(वरुणायनमइतिसर्वत्र ॥ उदकदानसहितोनमस्कारःसर्वत्र) ॥ ॐब्रह्मणेनमः ॥१॥ ॐअग्नयेनमः ॥२॥ ॐपृथिव्यैनमः
॥३॥ ॐओषधिभ्योनमः ॥४॥ ॐवाचेनमः ॥५॥ ॐवाचस्पतयेनमः ॥६॥ ॐविष्णवेनमः ॥७॥ ॐमहद्भ्योनमः ॥८॥
ॐअद्भ्योनमः ॥९॥ ॐअपांपतयेनमः ॥१०॥ ॐवरुणायनमः ॥११॥ संवर्चसेतिमुखंविमृष्टे ॥ ॐसंवर्चसापयसासंतनू-
भिरगन्महिमनसासꣳशिवेन ॥ त्वष्टासुदत्रोविदधातुरायोनुमार्ष्टुतन्वोयद्विलिष्टं ॥ १ ॥ देवागातुविदइतिविसर्जयेत् ॥
ॐदेवागातुविदोगातुंवित्वागातुमित ॥ मनसस्पतइमंदेवयज्ञꣳस्वाहावातेधाः ॥ एषस्नानविधिरेषस्नानविधिः ॥ अने-
नतर्पणाख्येनकर्मणाभगवान्श्रीपरमेश्वरःप्रीयतां ॥ ॐतत्सद्ब्र० ॥ विष्णवेनमः ३ ॥ इतिकातीयानुसारीतर्पणप्रयोगः ॥

अथपञ्चमहायज्ञाः । तत्रादौ वैश्वदेवः ॥ वैश्वदेवादन्नादुद्धृत्य । घृतेनाभिघारणं । कूष्माण्डीभिरुद्धृतान्नप्रोक्षणं । ॐयद्दे-वादेवहेडनंदेवासश्चकृमावयं ॥ अग्निर्मातस्मादेनसोविश्वान्मुञ्चत्वꣳहसः ॥ १ ॥ यदिदिवायदिनक्तमेनाꣳसिचकृमावयं ॥ वायुर्मातस्मादेनसोविश्वान्मुञ्चन्त्वꣳहसः २ ॥ यदिजाग्रद्यदिस्वप्नऽएनाꣳसिचकृमावयं ॥ सूर्य्योमातस्मादेनसोविश्वान्मुञ्च-त्वꣳहसः ॥३॥ इति ॥ आचमनं । प्राणायामः । सव्येकुशोपग्रहः । दक्षिणेपवित्रधारणं । देशकालौसंकीर्त्यएवंगुणविशे-षणवतिदेशेकालेच ममपञ्चसूनाजनितपापक्षयपूर्वकनित्यकर्मानुष्ठानसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंपञ्चमहायज्ञैरहंयक्ष्ये । इतिसंकल्प्य । पञ्चभूसंस्कारपूर्वकमग्निप्रतिष्ठापनं । दर्भैःपरिसमुह्य । गोमयेनोपलिप्य । यज्ञकाष्ठेनोल्लिख्य । अनामि-काङ्गुष्ठेनोद्धृत्य । उदकेनाभ्युक्ष्य अग्निमुपसमाधाय । चत्वारिशृङ्गेत्यग्निंध्यायेत् ॥ ॐचत्वारिशृङ्गात्रयोऽअस्यपादाद्वेशी-र्षेसप्तहस्तासोऽअस्य ॥ त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्यांऽआविवेश ॥ १ ॥ एषोहदेवइत्यावाहनं ॥ ॐएषोहदेवः-प्रदिशोनुसर्वाःपूर्वोहजातःसऽउगर्भेऽअन्तः ॥ सएवजातःसजनिष्यमाणःप्रत्यङ्जनास्तिष्ठतिसर्वतोमुखः ॥ १ ॥ अग्नेनये-तिपञ्चोपचारैःपूजनं । ॐअग्नेनयसुपथारायेअस्मान्विश्वानिदेववयुनानिविद्वान् ॥ युयोध्यस्मज्जुहुराणमेनोभूयिष्ठांतेनमउ-क्तिंविधेम १ ॥ ॐपावकनाम्नेवैश्वानरायनमः इदमनुलेपनं । इमानिपुष्पाणि । अयंधूपः । अयंदीपः । इदंनैवेद्यं । ॐमु-खंयःसर्वदेवानांहव्यभुक्कव्यभुक्तथा । पितृणांचनमस्तस्मैविष्णवेपावकात्मने ॥ इतिनमस्कारः । प्रदक्षिणमग्नेःपर्युक्षणं ।

इतरथावृत्तिः । दक्षिणंजान्वाच्य । दैवतीर्थेन । सुसमिद्धेग्नौजुहुयात् ॥ ॐभूर्भुवःस्वःस्वाहा ॥ इदंप्रजापतयेनमम ॥ १ ॥
ॐभूःस्वाहा । इदमग्नयेनमम ॥२॥ ॐभुवःस्वाहा । इदंवायवेनमम ॥३॥ ॐस्वःस्वाहा । इदंसूर्यायनमम ॥४॥ ॐदेव-
कृतस्यैनसोवयजनमसिस्वाहा ॥ इदमग्नयेनमम ॥५॥ ॐमनुष्यकृतस्यैनसोवयजनमसिस्वाहा ॥ इदमग्नयेनमम ॥६॥ ॐपि-
तृकृतस्यैनसोवयजनमसिस्वाहा ॥ इदमग्नयेनमम ॥७॥ आत्मकृतस्यैनसोवयजनमसिस्वाहा ॥ इदमग्नयेनमम ॥८॥ ॐएन-
सएनसोवयजनमसिस्वाहा ॥ इदमग्नयेनमम ॥ ९ ॥ ॐयच्चाहमेनोविद्वाँश्चकारयच्चाविद्वाँस्तस्यसर्वस्यैनसोवयजनमसि-
स्वाहा ॥ इदमग्नयेनमम ॥१०॥ ॐप्रजापतयेस्वाहा ॥ इदंप्रजापतयेनमम ॥११॥ ॐअग्नयेस्विष्टकृतेस्वाहा ॥ इदमग्नये-
स्विष्टकृतेनमम ॥१२॥ इत्ययंद्वादशाहुतिहोमोदेवयज्ञः ॥ ॥ ॐधात्रेनमः । इदंधात्रेनमम १ ॥ ॐविधात्रेनमः इदंविधा-
त्रेनमम ॥२॥ इतिदक्षिणोत्तरयोर्द्वारशाखयोः ॥ ॐवायवेनमः । इदंवायवेनमम ६ ॥ इतिप्रागादिप्रतिदिशं ॥ ॐप्राच्यै-
दिशेनमः । इदंप्राच्यैदिशेनमम ७ ॥ ॐदक्षिणायैदिशेनमः । इदंदक्षिणायैदिशेनमम ८ ॥ ॐप्रतीच्यैदिशेनमः । इदंप्र-
तीच्यैदिशेनमम ९ ॥ ॐउदीच्यैदिशेनमः । इदंउदीच्यैदिशेनमम १० ॥ इतिप्रागादिप्रतिदिशं ॥ ॐब्रह्मणेनमः । इदं-
ब्रह्मणेनमम ११ ॥ ॐअन्तरिक्षायनमः । इदमन्तरिक्षायनमम १२ ॥ ॐसूर्यायनमः । इदंसूर्यायनमम १३ ॥ इतित्रयं
प्राक्संस्थंमध्येदद्यात् ॥ ॐविश्वेभ्योदेवेभ्योनमः । इदंविश्वेभ्योदेवेभ्योनमम १४ ॥ ॐविश्वेभ्योभूतेभ्योनमः । इदंवि-

श्वेभ्योभूतेभ्योनमम १५ ॥ इतिद्वयंतेपामुत्तरतः ॥ ॐउपसेनमः । इदमुपसेनमम १६ ॥ ॐभूतानांचपतयेनमः । इदंभूतानांचपतयेनमम १७॥ इतिद्वयंतयोरुत्तरतः ॥ इत्ययंसप्तदशबलिर्भूतयज्ञः ॥ ॥ ततोऽपसव्यंकृत्वा । दक्षिणाभिमुखोभूत्वा । सव्यंजान्वाच्य । ॐपितृभ्यःस्वधानमः । इदंपितृभ्यःस्वधानमम १८ ॥ इतिब्रह्मादिबलित्रयस्यदक्षिणतः पितृतीर्थेनदद्यात् ॥ सव्यं ॥ उदकोपस्पर्शः ॥ इत्ययंपितृयज्ञः ॥ ॥ तत्पात्रंनिर्णिज्य । तन्निर्णेजनोदकं । ॐयक्ष्मैतत्तेनिर्णेजनंनमः । इदंयक्ष्मणेनमम १९ ॥ इतिब्रह्मादिबलित्रयस्यउत्तरापरस्यांदिशिनिनयेत् ॥ ततोनित्यश्राद्धं ॥ ततोब्रह्मयज्ञः ॥ ततःकण्ठेकृत्वा । ग्रासचतुष्टयपर्याप्तमन्नमुद्धृत्यब्राह्मणायउदकपूर्वंदद्यात् ॥ ॐहन्ततेऽन्नं २० ॥ पुनरुदकदानं ॥ इतिमनुष्ययज्ञः ॥ हन्तकारानन्तरंदेवतानैवेद्यं ॥ ततोगोग्रासः ॥ सुरभिर्वैष्णवीमातानित्यंविष्णुपदेस्थिता । गोग्रासोहिमयादत्तःसुरभेप्रतिगृह्यतां ॥ इदंगोभ्योनमम ॥ ततःकाकादिबलीन्बहिर्दद्यात् ॥ ऐन्द्रवारुणवायव्यायाम्यावैनैर्ऋतास्तथा । वायसाःप्रतिगृह्णन्तुभूमौपिण्डंमयार्पितं ॥१॥ इदंवायसेभ्योनमम ॥ श्वानौद्वौश्यामशबलौवैवस्वतकुलोद्भवौ ॥ ताभ्यांपिण्डंप्रयच्छामिस्यातामेतावहिंसकौ ॥ २ ॥ इदंश्वभ्यांनमम ॥ देवामनुष्याःपशवोवयांसिसिद्धाश्चयक्षोरगदैत्यसंघाः । प्रेताःपिशाचास्तरवःसमस्तायेचान्नमिच्छन्तिमयाद्यदत्तं ॥ ३ ॥ इदंदेवादिभ्योनमम ॥ पिपीलिकाःकीटपतङ्गिकाद्याबुभुक्षिताःकर्मनिबन्धबद्धाः । तृप्त्यर्थमन्नंहिमयाप्रदत्तंतेपामिदंतेमुदिताभवन्तु ॥ ४ ॥ इदंपिपीलिकादिभ्योनमम ॥

ततःपादौप्रक्षाल्य । आचम्य । शालांप्रविश्य । त्र्यायुषमितिभस्मनाललाटेग्रीवायांदक्षिणे(ंऽ)सेहृदिचप्रतिमन्त्रं ॥ ॐत्र्यायुषंजमदग्नेः॥ ॐकश्यपस्यत्र्यायुषं ॥ॐयद्देवेषुत्र्यायुषं ॥ ॐतन्नोअस्तुत्र्यायुषं १ ॥ यथार्हमतिथीन्बालादींश्चसंभोज्यस्वयंभुञ्जीतेति ॥ ॥ अकृतेवैश्वदेवेतुभिक्षुकेगृहमागते । उद्धृत्यवैश्वदेवार्थंभिक्षुकंतुविसर्जयेत् १ ॥ इतिपञ्चमहायज्ञप्रयोगः ॥

शिष्टास्तु अग्नेःपश्चात् स्वाग्रतः उदकेचतुरस्रंमण्डलंकृत्वातदुपरिभूतयज्ञादिबलिदानं कुर्वन्ति ॥ तद्यथा—

बलिहरणम्

पूर्व.

| | | | | |
|---|---|---|---|---|
| ॐविधात्रेनमः २ | | ॐप्राच्यैदिशेनमः ७ | | ॐधात्रेनमः १ |
| | | ॐवायवेनमः ३ | | |
| ॐवायवेनमः ६ | ॐविश्वेभ्योभूते. १५ | ॐसूर्यायनमः १३ | ॐपितृभ्यःस्वधानमः १८ | ॐवायवेनमः ४ |
| ॐउदीच्यैनमः १० | ॐभूतानांचप० १७ | ॐअन्तरिक्षायनमः १२ | | ॐदक्षिणायै० ८ |
| | ॐविश्वेभ्योदेवे. १४ | ॐब्रह्मणेनमः ११ | | ॐहन्तते० |
| ॐयक्ष्मैतत्ते १९ | ॐउपसेनमः १६ | ॐप्रतीच्यैनमः ९ | | इदंसनकादिभ्योनमम २० |
| | | ॐवायवेनमः ५ | | |

उत्तर. दक्षिण.

पश्चिम.

**अथभोजनविचारः।** **बृहद्विष्णुः**—स्नात्वा यथावद्धुत्वा च देवर्षिपितृतर्पणं। कृतेजाप्ये हुतेवह्नौ शुद्धवस्त्रसमन्वितः॥ प्रशस्तपाणिपादस्तु भुञ्जीत प्रयतो गृही॥ **मनुः**—सायंप्रातर्द्विजातीनामशनं श्रुतिनोदितं। नान्तरा भोजनं कुर्यादग्निहोत्रसमो विधिः॥ **कात्यायनः**—द्विरन्नं मुनिभिः प्रोक्तं विप्राणामप्रवासिनां। नित्यमह्नि तमस्विन्यां सार्धप्रहरयामतः॥ **भोजने दिङ्नियमः।** **देवलः**—उपलिप्ते शुचौ देशे पादौ प्रक्षाल्य वाग्यतः। प्राङ्मुखोऽन्नं तु भुञ्जीत शुचिः पीठमधिष्ठितः॥ **मनुः**—आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्वी दक्षिणामुखः। श्रियं प्रत्यङ्मुखो भुङ्क्ते ऋणं भुङ्क्ते उदङ्मुखः॥ पुत्रवांस्तु गृहे नित्यं नाश्नीयादुत्तरामुखः। सोमवारे तथाभ्यङ्गं वर्जयेत्तु सदा बुधः॥ **प्रयोगपारिजाते**—पितरौ जीवमानौ चेन्नाश्नीयाद्दक्षिणामुखः। तयोस्तु जीवतोरेकस्तथैव नियमः स्मृतः॥ अनिशं मातृहीनानां यशस्यं दक्षिणामुखं॥ **भोजने वर्ज्यासनानि।** **प्रचेताः**—गोशकृन्मृण्मयं भिन्नं तथा पालाशपिप्पलं। लोहबद्धं तथैवार्कं वर्जयेदासनं बुधः॥ **भोजनार्हपात्राणि।** **पैठीनसिः**—सौवर्णे राजते ताम्रे पद्मपालाशपत्रयोः। भाजने भोजने चैव त्रिरात्रं फलमश्नुते॥ पालाशपद्मपत्रेषु गृही भोजनमाचरेत्॥ **आह्निककारिकासु**—ब्रह्मपत्रेषु यो भुङ्क्ते मासमेकं निरंतरं। चान्द्रायणसमं पुण्यं कृतस्यापि चतुर्गुणं॥ **भोजने वर्ज्यपात्राणि।** **व्यासः**—मृण्मये पर्णपृष्ठे वा आयसे ताम्रभाजने। नाश्नीयादपि चेद्भुंक्ते नरकं सोऽधिगच्छति॥ **पैठीनसिः**—वटार्काश्वत्थपत्रेषु कुम्भीतिन्दुकजेषु च। श्रीकामो नतु भुञ्जीत कोविदारकरञ्जयोः॥ **प्रचेताः**—ताम्बूलाभ्यञ्जने चैव कांस्यपात्रे च भोजनं। यतिश्च ब्रह्मचारी च विधवा च विवर्जयेत्॥ **अत्रिः**—आयसेन तु पात्रेण यदन्नमुपदीयते। तदन्नमपवित्रं स्यात्त्याज्यं वै सर्वकर्मणि॥ **लघुव्याससंहितायां**—यो भुङ्क्ते वेष्टितशिरा यश्च भुङ्क्ते विदिङ्मुखः। सोपानत्कश्च यो भुङ्क्ते सर्वं विद्यात्तदासुरं॥ नार्धरात्रे न मध्याह्ने नाजीर्णे नार्द्रवस्त्रधृक्। नच भिन्नासनगतो न शयानः स्थितोपि वा॥

नोपानत्पादुकी चापि नच संविलपन्नपि ॥ तथा—पादुकास्थो न भुञ्जीत पर्यङ्के संस्थितोपि वा । श्वचाण्डालादिदृष्टो वा भोजनं परिवर्जयेत् ॥ **मण्डलप्रमाणं ब्रह्मपुराणे**—उपलिप्ते समे स्थाने शुचौ श्लक्ष्णे प्रकल्पिते । चतुरस्रं त्रिकोणं च वर्तुलं चार्धचन्द्रकं ॥ कर्तव्यमानुपूर्व्येण ब्राह्मणादिषु मण्डलं ॥ वितस्तिमात्रं चतुरङ्गुलं वा कोणैश्चतुर्भिर्विदधीत मण्डलं । प्राणाग्निहोत्रार्थमिदं समुक्तं महानुभावेन च हारितेन ॥ द्वादशाङ्गुलमानं तु व्रतिनां योगिनां सदा । चतुरङ्गुलं विधातव्यं त्रिकोणं प्रेतकर्मणि ॥ हस्तौ पादौ मुखं पात्रं मण्डलं चार्द्रपञ्चकः । प्रकुर्याद्भोजनं राजन्गृहस्थाश्रमतत्परः । दैवे कायेऽथवा पैत्र्ये उक्तवान्कमलापतिः ॥ **अन्नपरिवेषणं स्मृत्यन्तरे**—शाकादीन्पुरतः स्थाप्य भक्ष्यभोज्यं च वामतः । अन्नं मध्ये प्रतिष्ठाप्य दक्षिणे घृतपायसं ॥ ओदने परमान्ने च आज्यपात्रं यदि स्थितं । तदाज्यं च भवेद्रक्तं तदन्नं मांसमुच्यते ॥ **मनुः**—दर्व्या देयं शृतान्नं च समस्तं व्यञ्जनादिकं । अपक्वं स्नेहपक्वं च नतु दर्व्या कदाचन ॥ **पैठीनसिः**—लवणं व्यंजन चैव घृतं तैलं तथैव च । लेह्यं पेयं च विविधं हस्तदत्तं न भक्षयेत् ॥ **शातातपः**—हस्तदत्तानि चान्नानि प्रत्यक्षं लवणं तथा । वर्जनीयं प्रयत्नेन ब्राह्मणेन विशेषतः ॥ **अत्रिः**—घृतं वा यदि वा तैलं ब्राह्मणो नखनिःसृतं । न भुञ्जीत न दद्याच्च भुक्त्वा पादं समाचरेत् ॥ **ग्रासमानं विश्वामित्रकल्पे**—कुक्कुटाण्डप्रमाणं तु ग्रासमानं विधीयत इति ॥ **पङ्क्तिवारणे गोभिलः**—एकपंक्त्युपविष्टानां दुष्कृतं यद्दुरात्मनः । सर्वेषां तत्समं तेषां यावत्पङ्क्तिर्न भिद्यते ॥ **पराशरः**—एकपंक्त्युपविष्टानां विप्राणां सहभोजने । यद्येकोपि त्यजेत्पात्रं शेषमन्नं न भोजयेत् ॥ **अतएव**—अग्निना भस्मना चैव स्तम्भेन सलिलेन वा ॥ द्वारेण चैव मार्गेण पङ्क्तिभेदो बुधैः स्मृतः ॥ **अन्नस्तुतिर्ब्राह्मे**—अन्नं दृष्ट्वा प्रणम्यादौ प्राञ्जलिं कारयेत्ततः । अस्माकं नित्यमस्त्वेतदिति भक्त्याथ वन्दयेत् ॥ **मनुः**—चित्राहुतिबलीन्दद्याद्बलिहीनं न भोजयेत् । तत्र स्थाने करस्पर्शे न भोक्तव्यं कदाचन ॥ **अन्यच्च**—अमृ-

तोपस्तरणमसि स्वाहेत्यपः पिबेत् । करेण सलिले विष्णुं ध्यात्वा ब्रह्म पिबेदपः ॥ प्राणाग्निहोत्रं जुहुयाच्छेषं भुङ्क्ते द्विजोत्तमः । स्वाहान्ताः प्रणवाद्याश्च नाम्ना मन्त्राः प्रकीर्तिताः ॥ जिह्वया च ग्रसेदन्नं दन्तान्तैस्तन्न संस्पृशेत् । अनिन्द्यं भक्षयेदन्नं वाग्यतोऽन्नमकुत्सयन् । पञ्च-ग्रासान्महामौनं प्राणाद्यांश्च समाचरेत् ॥ **प्राणाग्निहोत्रं विश्वामित्रकल्पे**—प्राणाग्निहोत्रं वक्ष्यामि सर्वयज्ञेषु दुर्लभं । यज्ज्ञात्वा मुच्यते जन्तुर्जन्ममृत्युजरादिभिः ॥ विधिना भुज्यते येन मुच्यते स ऋणत्रयात् । कुलान्युद्धरते विप्रो नरकादेकविंशति ॥ सर्वयज्ञफलप्राप्तिः सर्व-लोकेषु गच्छति । हृत्पुण्डरीकमरणिं मनोन्मथनसञ्ज्ञकं । वायुरज्वा मथेदग्निमात्माध्वर्युः प्रकीर्तितः ॥ **भोजनप्रकारः । पुलस्त्यः**—अश्नीयात्तन्मना भूत्वा पूर्वं तु मधुरान्नकं । लवणाम्लौ तथा मध्ये कटु तिक्तादिकं ततः ॥ **विष्णुपुराणे**—प्राग्द्रवं पुरुषोऽश्नीयान्मध्ये च कठिनाशनः । अन्ते पुनर्द्रवाशी तु बलारोग्यैर्न मुञ्चति ॥ जठरं पूरयेदर्धमन्नैर्भागं जलस्य च । वायोः संचारणार्थाय चतुर्थमवशेष-येत् ॥ **ग्रासेयत्ता । आपस्तम्बः**—अष्टौ ग्रासा मुनेर्भक्ष्याः षोडशारण्यवासिनः । द्वात्रिंशत्तु गृहस्थस्य ह्यमितं ब्रह्मचारिणः ॥ **भोजने विशेषनियमाः**—वामहस्ते जलं धृत्वा मणिबन्धे निधाय च । भुञ्जमानः पिबन्वारि नोच्छिष्टं मनुरब्रवीत् ॥ यः पुनर्भोजनं कुर्वन्नश्नन्तं संस्पृशेद्द्विजः । ततस्तेन न भोक्तव्यं भुक्त्वा चान्द्रायणं चरेत् ॥ **व्यासः**—विघसाशी भवेन्नित्यं नित्यं चामृतभोजनः । विघसे भुक्तशेषं तु यज्ञशिष्टं तथामृतम् ॥ पञ्चार्द्रो भोजनं कुर्यात्प्राङ्मुखो मौनमाश्रितः । हस्तौ पादौ तथैवास्यमेषु पञ्चार्द्रता मता ॥ **बृहस्पतिः**—न स्पृशेद्वामहस्तेन भुञ्जानोऽन्नं कदाचन । न पादौ न शिरो बस्तिं न पदा भाजनं स्पृशेत् ॥ **बौधायनः**—भोजनं हवनं दानमुपहारः प्रतिग्रहः । बहिर्जानु न कार्याणि तद्वदाचमनं स्मृतम् ॥ **बृहस्पतिः**—धृतपात्रस्तु भुञ्जीत पञ्च ग्रासान्महामुने । शेषमुद्धृत्य भोक्तव्यं पित्र्यर्थं नतु चोद्धरेत् ॥ **रात्रिभोजने दीपनाशे**—नृणां भोजनकाले तु यदि दीपो विनश्यति । तदन्नं पा-

णिना स्पृष्ट्वा सावित्रीं मनसा जपेत् ॥ पुनर्दीपं ततो लब्ध्वा शेपं भुञ्जीत कामतः । अन्यदन्नं न भोक्तव्यं भुक्त्वा चान्द्रायणं चरेत् ॥ **शतपदगमनं**—भोजनान्ते शतपदं गत्वा ताम्बूलभक्षणं । शयनं वामकुक्षौ चेद्वैषज्ये किं प्रयोजनं ॥ **धन्वन्तरिः**—भुक्त्वा राजवदासीत यावदन्नक्लमो गतः । ततः शतपदं गत्वा वामपार्श्वे तु संविशेत् ॥ **नारदः**—निर्माल्यं तुलसीपत्रं भक्षयेद्भोजनोत्तरं । शुद्धो भवति तत्काल एवं सर्वं विधीयते ॥ **मनुः**—ताम्बूले च फले चैव भुक्ते स्नेहानुलेपने । दन्तलग्नस्य संस्पर्शे नोच्छिष्टं मनुरब्रवीत् ॥ **नारदः**—अगस्त्यं कुम्भकर्णं च शनिं च वडवानलम् । आहारपचनार्थाय स्मरेद्भीमं च पञ्चमं ॥ आतापी मारितो येन वातापी च निपातितः । समुद्रः शोषितो येन स मेऽगस्त्यः प्रसीदतु ॥ इत्युक्त्वा तु स्वहस्तेन परिमार्ज्य निजोदरं । अनायासप्रदायीनि कुर्यात्कर्माण्यतन्द्रितः ॥

**अथ सूत्रानुसारी भोजनविधिः ॥ अथातः श्रुतिस्मृतीरनुसृत्यभोजनविधिंव्याख्यास्यामः ॥ आचान्तः । धृतोत्तरीयवस्त्रः । धृतश्रीखण्डगन्धपुण्ड्रः । भोजनशालामागत्य । गोमयेनोपलिप्य शुचौदेशेविहितपीठाधिष्ठितः । नित्यंप्राङ्मुखः । नदक्षिणामुखः । नप्रत्यङ्मुखः । नविदिङ्मुखः । श्रीकामश्चेत्प्रत्यङ्मुखः । सत्यकामश्चेदुदङ्मुखः । यशस्कामश्चेद्दक्षिणामुखः । जीवन्मातृकवर्जं । हस्तपादास्येपु पञ्चस्वार्द्रः । नीवारचूर्णगौरमृदाभस्मनोदकेनवामण्डलं कुर्यात् । चतुष्कोणं ब्राह्मणस्य त्रिकोणं क्षत्रियस्य मण्डलाकृतिर्वैश्यस्याभ्युक्षणंशूद्रस्य—यथाचक्रायुधोविष्णुस्त्रैलोक्यंपरिरक्षति ॥ एवंमण्डलवार्येतत्सर्वभूतानिरक्षतु । इति । तत्रभूमौनिहितपात्रेन्नेपरिविष्टे । ॐपितुंनुस्तोषंमहोधर्माणंतविषीम् ॥ यस्यत्रितोव्योज-**

सावृत्रंविपर्वम॒र्दयत्॥१॥इत्यन्नꣳसंस्तुत्य ॥ ॐमानस्तोकेतनयेमानआयुषिमानोगोषुमानोअश्वेषुरीरिषः॥ मानोवीरान्रुद्रभा-
मिनोवधीर्हविष्मन्तःसदमित्त्वाहवामहे॥१॥नमोवꣳकिरिकेभ्योदेवानाꣳहृदयेभ्योनमोविचिन्वत्केभ्योनमोविक्षिणत्केभ्यो-
नमआनिर्हतेभ्यः॥२॥नमःशंभवायचमयोभवायचनमः शंकरायचमयस्करायचनमःशिवायचशिवतरायच॥३॥इत्यभिमन्त्र्य-
प्रोक्षयेत्। ॐसत्यंत्वर्तेनपरिषिञ्चामि। इतिप्रातः। ऋतंत्वासत्येनपरिषिञ्चामि। इतिसायं। ॐतेजोसिशुक्रमस्यमृतमसि ॥१॥
इत्यन्नमभिमृश्य । ॐअग्निरस्मिजन्मनाजातवेदाघृतंमेचक्षुरमृतंमआसन् ॥ अर्कस्त्रिधातूरजसोविमानोजस्रोघर्मोहविरस्मि-
नाम॥१॥ इत्यात्मानमग्निंध्यात्वा । ॐभूपतयेस्वाहानमः । ॐभुवनपतयेस्वाहानमः। ॐभूतानांपतयेस्वाहानमः। इति ॥
ॐचित्रायस्वाहानमः । ॐचित्रगुप्तायस्वाहानमः । ॐसर्वेभ्योभूतेभ्यःस्वाहानमः । इतिवा । दिवाप्रणवादिकैः स्वाहा-
नमोन्तैर्मन्त्रैः प्रतिमन्त्रंबलीन्हरेत् ॥ ॐअन्तश्चरसिभूतेषुगुहायांविश्वतोमुखः ॥ त्वंब्रह्मत्वंयज्ञस्त्वंवषट्कारस्त्वमोंकार-
स्त्वंविष्णोःपरमंपदम् । ॐअमृतोपस्तरणमसिस्वाहा । इतिविष्णुमन्त्रमभिध्यायन्नाचम्यान्नममृतंध्यायन् मौनीहस्तचा-
पल्यादिरहितोमुखेपञ्चप्राणाहुतीर्जुहोति ॥ अङ्गुष्ठप्रदेशिनीमध्यमाभिः प्रथमा ॐप्राणायस्वाहा । अङ्गुष्ठमध्यमानामि-
काभिः द्वितीया ॐअपानायस्वाहा । अङ्गुष्ठानामिकाकनिष्ठिकाभिः तृतीया ॐव्यानायस्वाहा । कनिष्ठिकातर्जन्य-
ङ्गुष्ठैः चतुर्थी ॐसमानायस्वाहा । सर्वाभिरङ्गुलीभिःसाङ्गुष्ठाभिः पञ्चमी ॐउदानायस्वाहा ॥ इतिक्रमंयाज्ञवल्क्योम-

न्यते । उदानायस्वाहेतिशौनकबौधायनौ । याज्ञवल्क्योदितक्रमोवाजसनेयिनाम् । दन्तैर्नोपस्पृशेत् जिह्वयाग्रसेत् । अ-ङ्गुष्ठानामिकाग्राह्यान्नैनैताआहुतयइतिहारीतव्याख्यातारः । सर्वाभिरेताइतिबौधायनः ॥ मौनंत्यक्त्वा प्राग्द्रवरूपमश्नी-यान्मध्येकठिनमन्तेपुनर्द्रवाशीस्यान्मधुरपूर्वं लवणाम्लौमध्ये कटुतिक्तादीन्पश्चाद्यथासुखंभुञ्जीत । भुञ्जानोवामहस्तेनान्नं नस्पृशेन्नपादौनशिरोनबस्तिंनपराभोजनᳪस्पृशेदेवंयथारुचिभुक्त्वा भुक्तशेषमन्नमादाय ॥—मद्भुक्तोच्छिष्टशेषंयेभुञ्जतेपि-तरोधमाः । तेषामन्नंमयादत्तमक्षय्यमुपतिष्ठतु ॥ इतिपितृतीर्थेनदत्वा । ॐअमृतापिधानमसिस्वाहा। इति हस्तगृहीता-नामपामर्धंपीत्वार्धंभूमौनिक्षिपेत् ॥ रौरवेपूयनिलयेपद्मार्बुदनिवासिनाम् ॥ अर्थिनाᳪसर्वभूतानामक्षय्यमुपतिष्ठतु ॥ इति । तस्माद्देशादपसृत्यगण्डूषशलाकादिभिस्तर्जनीवर्जमास्यᳪशोधयेत् ॥ नभार्यादर्शनेश्नीयान्नभार्ययासहनसंध्ययोर्न-मध्याह्नेनार्धरात्रेनायज्ञोपवीतीनार्द्रशिरानार्द्रवासानैकवासानशयानोनताम्रभाजनेनभिन्नेनराजतसौवर्णशङ्खस्फटिककांस्य-भाजनवर्जं नलौहेनमृन्मयेनसंधिसᳪस्थितेनभुविनपाणौनसर्वभोजीस्यात्किंचिद्भोज्यंपरित्यजेदन्यत्रघृतपायसदधिसक्तुप-ललमधुभ्यः । साध्वाचान्तो दक्षिणपादाङ्गुष्ठेपाणिंनिःस्रावयेत् । अङ्गुष्ठमात्रःपुरुषोअङ्गुष्ठंचसमाश्रितः । ईशःसर्वस्यज-गतःप्रभुःप्रीणातुविश्वभुक् । इति । ॐश्वात्राᳫपितार्भवतयूयमापोअस्माकमन्तरुदरेसुशेवाः । ताऽअस्मभ्यमयक्ष्माऽअन-मीवाऽअनागसᳫस्वदन्तुदेवीᳫ ॥ इतिनाभिमालभेत । अमृताइत्यतःप्राक्—अगस्त्यंवैनतेयंचशनिंचवडवानलम् । आहा-रपरिणामार्थंस्मरेद्भीमंचपञ्चमम् ॥ इत्युदरमालभ्य—शर्यातिंचसुकन्यांचच्यवनंशुक्रमश्विनौ । भोजनान्तेस्मरेन्नित्यंतस्य

चक्षुर्नहीयते ॥ इतिस्मृत्वा मुखशुद्धिंकुर्यात् । नमोभगवतेवाजसनेयाययाज्ञवल्क्यायनमोभगवतेवाजसनेयाययाज्ञवल्क्याय ॥ इतिकातीयभोजनसूत्रानुसारीभोजनविधिःपरिसमाप्तः ॥

अथस्मृत्यनुसारीभोजनविधिः । भूमौउदकेनचतुरस्रमण्डलकरणं । ॐयथाचक्रधरोविष्णुस्त्रैलोक्यंपरिरक्षति । एवंमण्डलवार्येतत्सर्वभूतानिरक्षतु ॥ तदुपरिपात्रनिधानं । तत्रपरिविष्टमन्नमभिमन्त्र्य । ॐभूर्भुवःस्वः । तत्सवितुर्वरेण्यं० यात् । प्रोक्षेत् ॥ ॐसत्यंत्वर्तेनपरिषिञ्चामि । इतिदिवा । ॐऋतंत्वासत्येनपरिषिञ्चामि । इति रात्रौ । दिवैवत्रीन्बलीन्दद्यात् । ॐभूपतयेस्वाहानमः १ । ॐभुवनपतयेस्वाहानमः २ । ॐभूतानांपतयेस्वाहानमः ३ । ॐअन्तश्चरतिभूतेषुगुहायांविश्वतोमुखः । त्वंब्रह्मत्वंयज्ञस्त्वंवषट्कारस्त्वमोङ्कारस्त्वंविष्णोःपरमंपदं ॥ ॐअमृतोपस्तरणमसिस्वाहा । इत्याचम्य । वामेनपात्रमालभ्यवाग्यतःसन्मुखेपञ्चप्राणाहुतीर्जुहोति । ॐप्राणायस्वाहा १ । ॐअपानायस्वाहा ॥ ॐव्यानायस्वाहा । ॐसमानायस्वाहा । ॐउदानायस्वाहा । शिखामुक्तिंकृत्वा । यथारुचिभुञ्जीत ॥ ॥ अथभुक्तशेषमन्नमादाय ॥ मद्भुक्तोच्छिष्टशेषंयेभुञ्जतेपितरोधमाः । तेषामन्नंमयादत्तमक्षय्यमुपतिष्ठतु । इतिपितृतीर्थेनदत्वा । ॐअमृतापिधानमसिस्वाहा । इतिहस्तगृहीतानामपामर्धंपीत्वा । अर्धंभूमौनिक्षिपेत् ॥ रौरवेपूयनिलयेपद्मार्बुदनिवासिनां । अर्थिनां सर्वभूतानामक्षय्यमुपतिष्ठतु ॥ शिखांबध्वा । तस्माद्देशादपसृत्य । मुखंशोधयेत् । द्वादशगण्डूषांस्त्यक्त्वा । आचम्य । दक्षिणपादाङ्गुष्ठेपाणिंनिःस्रावयेत् । अङ्गुष्ठमात्रःपुरुषः० इति । ॐश्रद्धायांप्राणे० पीता० इतिनाभिमालभ्य ॥ अग-

स्त्यंवैनतेयं० इत्युदरमालभ्य । शर्यातिंचसुकन्यांच इति स्मृत्वा । ताम्बूलेनमुखशुद्धिंकुर्यात् ॥ इतिस्मृत्युक्तःसंक्षिप्तभोजनविधिः ॥ इतोयावदस्तंपाठप्रवचनपुराणश्रवणदेवदर्शनादिनासदाचारेणकालयापनम् ॥

**ताम्बूलभक्षणं।** **मार्कण्डेयः**—भूयोप्याचम्य कर्तव्यं ततस्ताम्बूलभक्षणं। **वसिष्ठः**—सुपूगं च सुपत्रं च चूर्णेन च समन्वितं। अदत्त्वा द्विजदेवेभ्यस्ताम्बूलं वर्जयेद्बुधः। एकपूगं मुखारोग्यं द्विपूगं निष्फलं भवेत्। अतिश्रेष्ठं त्रिपूगं च ह्यधिकं नैव दुष्यति। पर्णमूले भवेद्व्याधिः पर्णाग्रे पापसंभवः। जीर्णपर्णं क्षिपेदायुः शिरा बुद्धिविनाशिनी। तस्मादग्रं च मूलं च शिरां चैव विशेषतः। जीर्णपर्णं वर्जयित्वा ताम्बूलं भक्षयेद्बुध इति ॥ ॥ **भोजनोत्तरकृत्यं।** **दक्षः**—इतिहासपुराणाद्यैः षष्ठसप्तमकौ नयेत्। अष्टमे लोकयात्रा तु बहिःसंध्या ततः पुनः ॥ **यमः**—रवेरस्तमयात्पूर्वं घटिकैका यदा भवेत्। सायंसंध्यामुपास्याथ कुर्याद्धोमं च पूर्ववत् ॥

अथसायंसंध्या ॥ शिखाबन्धनादिभूम्युपसंग्रहान्तंसर्वंप्रातःसंध्योपासनवत् ॥ संकल्पमन्त्राचमनअर्घ्यउपस्थानआवाहनध्यानजपनिवेदनसमापनेषुविशेषः ॥ संकल्पः ॥ ममउपात्तदुरितक्षयार्थंश्रीपरमेश्वरप्रीत्यर्थंविष्णवावासयेसायंसंध्योपासनमहंकरिष्ये ॥ मन्त्राचमनं ॥ ॐअग्निश्चमामन्युश्चमन्युपतयश्चमन्युकृतेभ्यः ॥ पापेभ्योरक्षन्तां । यदह्नापापमकार्षं । मनसावाचाहस्ताभ्यां । पद्भ्यामुदरेणशिश्ना । अहस्तदवलुम्पतु । यत्किंचदुरितंमयि । इदमहंमाममृतयोनौसत्येज्योतिषिजुहोमिस्वाहा ॥ अर्घ्यदानं ॥ पश्चिमाभिमुखस्तिष्ठन् गायत्र्याअर्घ्यत्रयंदद्यात् ॥ उपस्थानं ॥ अञ्जलिंबध्वातिष्ठन्नेवोपस्थानंपूर्ववत् ॥ आवाहनं ॥ वृद्धांसरस्वतींकृष्णांकृष्णवस्त्रांचतुर्भुजां । शङ्खचक्रगदापद्महस्तांगरुडवाहनां ॥ साम-

वेदकृतोत्सङ्गांवैष्णवींविष्णुदैवतां । बदर्याश्रमवासांतामायान्तींसूर्यमण्डलात् ॥ वरदांत्र्यक्षरांसाक्षाद्देवीमावाहयाम्यहं ॥ आगच्छवरदेदेवित्र्यक्षरेविष्णुवादिनि । सरस्वतिच्छन्दोमातर्विष्णुयोनेनमोस्तुते ॥ जपः ॥ पश्चिमाभिमुखउपविश्यनासाग्रेदक्षिणहस्तंनिधाय आनक्षत्रदर्शनाज्जपेत् ॥ निवेदनं ॥ अनेनसायंसंध्याप्रधानभूतेन अमुकसंख्याकेनगा० भगवान्विष्णुस्वरूपीसवितासू०ताम् ॥ समापनं ॥ अनेनसायंसंध्योपासनाख्येनकर्मणाभगवान्विष्णुस्वरूपीश्रीसवितासूर्यनारायणःप्रीयतां ॥ इतिसायंसंध्या ॥

सायंदीपादि ॥ मरीचिः—रवेरस्तं समारभ्य यावत्सूर्योदयो भवेत् । यस्य तिष्ठेद्गृहे दीपस्तस्य नास्ति दरिद्रता ॥ आयुर्दः प्राङ्मुखो दीपो धनदः स्यादुदङ्मुखः । प्रत्यङ्मुखो दुःखदोऽसौ हानिदो दक्षिणामुखः ॥ कार्पासवर्तिका प्रोक्ता दीपकृत्येषु सर्वदा । नचैव स्थापयेद्दीपं साक्षाद्भूमौ कदाचन ॥ कोशजं रोमजं वस्त्रं वर्तिकार्ये न योजयेत् । न मिश्रीकृत्य दद्यात्तु दीपं स्नेहे घृतादिकमिति ॥ दीपप्रार्थना—दीपज्योतिः परब्रह्म दीपज्योतिर्जनार्दनः । दीपो हरतु मे पापं संध्यादीप नमोस्तु ते ॥ शुभं करोतु कल्याणमारोग्यसुखसंपदः । शत्रुबुद्धिविनाशं च दीपज्योतिर्नमोस्तु ते ॥ इति । दीपनिर्वापणं—दीपनिर्वापणात्पुंसः कूष्माण्डच्छेदनात्स्त्रियः । अचिरेणैव कालेन वंशनाशो भवेद्ध्रुवम् ॥ ॥ पञ्चोपचारैर्देवपूजांआरार्तिक्यंचकृत्वा रामरक्षासहस्रनामादिपाठंकृत्वा रात्रिभोजनादि निर्वर्तयेत् ॥

अथस्वापकालः ॥ गार्ग्यः—शुचिदेशं विविक्तं तु गोमयेनोपलेपयेत् । वैदिकैर्गारुडैर्मन्त्रैरभिमन्त्र्य स्वपेत्ततः ॥ वि-

ष्णुपुराणे—रात्रिसूक्तं जपेत्स्मृत्वा देवांश्च सुखशायिनः । नमस्कृत्वाव्ययं विष्णुं समाधिस्थः स्वपेन्निशि ॥ सुखशायिनआहगोभिलः—अगस्तिर्माधवश्चैव मुचुकुन्दो महामुनिः । कपिलो मुनिरास्तीकः पञ्चैते सुखशायिन इति ॥ स्वापेशिरोनियमः—प्राच्यां दिशि शिरः शस्तं याम्यायामथवा नृप । तथैव स्वपतः पुंसो विपरीतं तु रोगदमिति ॥ गार्ग्यः—स्वगृहे प्राक्शिराः शेते श्वाशुर्ये दक्षिणाशिराः । प्रत्यक्शिराः प्रवासे तु न कदाचिदुदक्शिरा इति ॥ मङ्गल्यं पूर्णकुम्भं तु शिरस्स्थाने निधापयेत् । आधौतशुष्कपादस्तु स्वाचान्तः शयने शुचौ ॥ अभीष्टदेवतां स्मृत्वा संविशेन्मङ्गलध्वनौ । रात्रिसूक्तं जपेद्रात्रौ रात्रिक्षामो भवेन्नरः ॥ क्षामः शान्तः । तथा—पूर्वरात्रे व्यतीते तु स गच्छेद्रतिमन्दिरं । पादौ प्रक्षालयेत्पूर्वं पश्चाच्छय्यां समाविशेत् ॥ धौतवस्त्रं च ताम्बूलं संयोगं च शुभावहं ॥ स्त्रीकृत्यं—भर्तुः पादौ नमस्कृत्य पश्चाच्छय्यां समाविशेदिति ॥ पुंसो रतिः—संस्मृत्य परमात्मानं पत्नीजंघे प्रसारयेत् । योनिं स्पृष्ट्वा जपेत्सूक्तं विष्णुर्योनिं प्रजापतेः । रेतः सिञ्चेत्ततो योन्यां तस्माद्गर्भं बिभर्ति सेति ॥ याज्ञवल्क्यः—षोडशर्तुर्निशाः स्त्रीणां तस्मिन्युग्मासु संविशेत् । ब्रह्मचार्येव पर्वाण्याद्याश्चतस्रस्तु वर्जयेत् । यथाकामी भवेद्वापि स्त्रीणां वरमनुस्मरन्निति ॥ मनुः—तासामाद्याश्चतस्रस्तु निन्दितैकादशी तथा । त्रयोदशी च शेषास्तु प्रशस्ता दश रात्रयः । अमावास्याष्टमी चैव पौर्णमासी चतुर्दशी । ब्रह्मचारी भवेन्नित्यमप्यृतौ स्नातको द्विज इति ॥ शयनेवर्ज्यस्थानानि । मार्कण्डेयः—शून्यालये श्मशाने च एकवृक्षे चतुष्पथे । महादेवगृहे वापि मातृवेश्मनि न स्वपेत् ॥ न यक्षाणामायतने स्कन्दस्यायतने तथा । कुलच्छायासु

च तथा शर्करालोष्टपांसुषु ॥ न स्वपेच्च तथा दर्भे विना दीक्षां कथंचन । धान्यगोधनविप्राणां गुरूणां च तथोपरि ॥ नाकाशे सर्वतः शून्ये न च चैत्यद्रुमे तथेति ॥ निषिद्धशय्या विष्णुपुराणे—न विशालां न वा भग्नां नासमां मलिनां तथा । नच दन्तमयीं शय्यामधितिष्ठेदनास्तृतां ॥ नतु जन्तुमयीमिति क्वचित्पाठः ॥ दन्तमयीं मृतहस्तिदन्तमयीं । निद्रासमये तु—निद्रासमयमासाद्य ताम्बूलं वदनात्त्यजेत् । पर्यङ्कात्प्रमदां भालात्पुण्ड्रं पुष्पाणि मस्तकादिति ॥ आह्निकफलम्—नान्यो विमुक्तये पन्था मुक्त्वाऽऽश्रमविधिं स्वकम् । तस्मात्कर्माणि कुर्वीत तुष्टये परमेष्ठिन इति ॥ इत्याह्निकाचारदिक् ॥

अथ पञ्चाङ्गरुद्रन्यासाः ॥ तत्रादौ भूशुद्धिभूतशुद्धिप्राणप्रतिष्ठाऽन्तर्मातृकाबहिर्मातृकान्यासाः । अत्रसर्वत्रमूलंदेवीभागवतेमन्त्रमहोदधौकल्पद्रुमेचद्रष्टव्यं ॥ तत्रभूशुद्ध्यादीनांतान्त्रिकत्वात्तान्त्रिकेष्वेवमन्त्रेषु पूजाजपादियोग्यताजनकत्वं । नवैदिकमन्त्रेषु । वैदिकप्रमाणाभावात् । अतोभूशुद्ध्यादीनांवैदिकेष्वनावश्यकत्वमितिकल्पद्रुमः ॥ ॥ आचमनं । प्राणायामः । देशकालौसंकीर्त्यएवंगुणविशेषणवतिदेशेकालेच अशेषपापक्षयकामः धर्मार्थकाममोक्षाणामन्यतमकामोवाश्रीपरमेश्वरप्रीत्यर्थंअमुकरुद्रजपंहोमंअभिषेकंवाकरिष्ये । तदङ्गत्वेनभूशुद्धिभूतशुद्धिप्राणप्रतिष्ठान्तर्मातृकाबहिर्मातृकान्यासान्पञ्चाङ्गमहारुद्रन्यासांश्चकरिष्येइतिसंकल्पःकार्यः ॥

अथभूशुद्धिः । तत्रादौद्वारपूजा । गृहद्वारमथागत्यद्वारपूजांसमाचरेत् ॥ ॐअस्त्रायफट् । इत्यभिमन्त्रितेनजलेनद्वारं

संप्रोक्ष्य । ऊर्ध्वे । ॐगंगणेशायनमः । दक्षिणे । ॐमंमहालक्ष्म्यैनमः । वामे । ॐसंसरस्वत्यैनमः । पुनर्दक्षिणे । ॐविं-
विघ्नायनमः । ॐगंगङ्गायैनमः । ॐयंयमुनायैनमः । पुनर्वामे । ॐक्षंक्षेत्रपालायनमः । ॐसंस्वःसिन्धवेनमः । ॐयं-
यमुनायैनमः । पुनर्दक्षिणे । ॐधंधात्रेनमः । ॐविंविधात्रेनमः । पुनर्दक्षिणे । ॐशंशङ्खनिधयेनमः । पुनर्वामे । ॐपं-
पद्मनिधयेनमः । ततः । ॐद्वांद्वारपालेभ्योनमः । इतिसर्वत्रगन्धाक्षतपुष्पैःसंपूजयेत् ॥ इतिद्वारपूजा ॥ द्वारपूजांविधाये-
त्थंप्रविश्यार्चनमन्दिरं ॥ आसनोपवेशनं ॥ पृथ्वित्वयेतिमन्त्रस्यमेरुपृष्ठऋषिः सुतलंछन्दः कूर्मोदेवताआसनेविनियोगः ।
ॐपृथ्वित्वयाधृतालोकादेवित्वंविष्णुनाधृता । त्वंचधारयमांदेवि पवित्रं कुरु चासनं ॥ ॐविश्वशक्त्यैनमः ।
ॐमायाशक्त्यैनमः । ॐकूर्मासनायनमः । ॐयोगासनायनमः । ॐअनन्तासनायनमः । ॐविमलासनायनमः ।
ॐपरमसुखासनायनमः । ॐआत्मासनायनमः । इतिपुष्पादिनाआत्मनआसनदानं । उपविश्य ॥ शिखा-
बन्धनं ॥ ऊर्ध्वकेशि विरूपाक्षिमांसशोणितभोजने । तिष्ठदेविशिखाबन्धेशिखाबन्धंकरोम्यहं ॥ इति शिखांबध्वा ॥
भूतोत्सादनं ॥ ॐअपसर्पन्तुतेभूतायेभूताभूमिसंस्थिताः । येभूताविघ्नकर्तारस्तेनश्यन्तुशिवाज्ञया ॥ अपक्रामन्तुभूतानि
पिशाचाःसर्वतोदिशं । सर्वेषामविरोधेनब्रह्मकर्मसमारभे ॥ इतिमन्त्राभ्यांवामपादेन त्रिवारंभूमिताडनं ॥ भूरसीति-
मन्त्रस्यप्रजापतिर्ऋषिः प्रस्तारपङ्क्तिश्छन्दः स्वयमातृण्णादेवता भूशुद्धौविनियोगः । भूमौहस्तंदत्वाभूरसीतिमन्त्रजपः ।
ॐभूरसिभूमिरस्यदितिरसिविश्वधायाविश्वस्यभुवनस्यधर्त्री ॥ पृथिवींयच्छपृथिवींदृꣳहपृथिवींमाहिꣳसीः ॥१॥ इतिभू-

तोत्सादनमेवभूशुद्धिः ॥ अथनमस्काराः ॥ ॐगंगणेशायनमः । ॐगुंगुरुभ्योनमः । ॐपंपरमगुरुभ्योनमः । ॐपरात्परगुरुभ्योनमः । ॐइष्टदेवतायैनमः । योभूतानामितिमन्त्रस्यकौण्डिन्यऋषिःपङ्क्तिश्छन्दः नारायणोदेवताभैरवनमस्कारेवि० । ॐयोभूतानामधिपतिर्यस्मिँल्लोकाऽअधिश्रितः । यईशेमहतोमहाँस्तेनंगृह्णामित्वामहंमयिगृह्णामित्वामहं ॥ क्षेत्राधिपतयेभैरवायनमः ॥ इतिनमस्काराः ॥ ततःप्राणायामः ॥ प्राणानायम्यतारेणपूरकुम्भकरेचकैः । द्वात्रिंशताचतुःषष्ट्याक्रमात्षोडशसंख्यया ॥ तारःप्रणवः । प्रणवेनप्राणायामः । ॐ३२ द्वात्रिंशद्वारंपूरकं ॥ ॐ६४ चतुःषष्टिवारंकुम्भकं । ॐषोडशवाररेचकं ॥ इतिप्राणायामः ॥ दिग्बन्धः ॥ ॐतीक्ष्णदंष्ट्रमहाकायकल्पान्तदहनोपम । भैरवायनमस्तुभ्यमनुज्ञांदातुमर्हसि ॥ सर्वभूतनिवारकायशार्ङ्गायसशरायसुदर्शनायास्त्रराजायहुंफट्स्वाहा । अनेनतालत्रयंकृत्वा स्वस्यपरितःसर्वदिक्षु अस्त्रमुद्राप्रदर्शनं । इतिदिग्बन्धः ॥ इतिभूशुद्धिः ॥

अथभूतशुद्धिः ॥ देवार्चायोग्यताप्राप्त्यैभूतशुद्धिंसमाचरेत् । मूलाधारस्थितांदेवींकुण्डलींपरदेवतां ॥ बिसतन्तुनिभांविद्युत्प्रभांध्यायेत्समाहितः । मूलाधारतउत्थाप्यसंगतांहृदयाम्बुजे ॥ सुषुम्णामार्गमाश्रित्याऽऽदायजीवंहृदम्बुजात् । प्रदीपकलिकाकारांब्रह्मरन्ध्रगतांस्मरेत् ॥ जीवंब्रह्मणिसंयोज्यहंसमन्त्रेणसाधकः ॥ ॐहंसःसोहं ॥ अथभूतोपसंहारः ॥ पादादिब्रह्मरन्ध्रान्तंस्थितंभूतगणंस्मरेत् ॥ स्ववर्णबीजाकृतिभिर्युक्तंतद्विधिरुच्यते ॥ पादादिजानुपर्यन्तंचतुष्कोणंसवज्रकं । लंबीजाढ्यंस्वर्णवर्णंस्मरेदवनिमण्डलं ॥ जान्वाद्यानाभिचन्द्रार्धनिभंपद्मद्वयाङ्कितं । वंबीजयुक्तंश्वेताभमम्भसोमण्डलंस्म-

रेत् ॥ नाभेर्हृदयपर्यन्तंत्रिकोणंस्वस्तिकासनं । रंबीजेनयुतंरक्तंस्मरेत्पावकमण्डलं ॥ हृदोभ्रूमध्यपर्यन्तंवृत्तंषड्बिन्दुलाञ्छितं । यंबीजयुक्तंधूम्राभंनभस्वन्मण्डलंस्मरेत् ॥ आब्रह्मरन्ध्रंभ्रूमध्याद्वृत्तंस्वच्छंमनोहरं । हंबीजयुक्तमाकाशमण्डलंप्रविचिन्तयेत् ॥ एवंभूतानिसंचिन्त्यप्रत्येकंप्रविलापयेत् । भुवंजलेजलंवह्नौवह्निंवायौनभस्यमुं । विलाप्यखमहंकारेमहत्तत्वेप्यहंकृतिं ॥ महान्तंप्रकृतौमायामात्मनिप्रविलापयेत् । शुद्धःसच्चिन्मयोभूत्वाचिन्तयेत्पापपूरुषं ॥ वामकुक्षिस्थितंकृष्णमङ्गुष्ठपरिमाणकं । विप्रहत्याशिरोयुक्तंकनकस्तेयबाहुकं । मदिरापानहृदयंगुरुतल्पकटीयुतं । पापसंयोगपद्द्वन्द्वमुपपातकरोमकं ॥ खड्गचर्मधरंदुष्टमधोवक्त्रंसुदुःसहं । वायुबीजंस्मरन्वायुंसंपूर्यैनंविशोषयेत् ॥ पूरकं । यं १६ इतिषोडशवारंजपेत् । वह्निबीजंस्मरन्नित्यंनिर्दहेत्पापपूरुषं ॥ कुम्भकं । रं ६४ इतिचतुःषष्टिवारंजपेत् । वायुबीजेनतद्रक्षांबहिर्निष्काश्य यत्नतः ॥ रेचकं । यं ३२ इतिद्वात्रिंशद्वारंजपेत् ॥ सुधाबीजेनदेहोत्थंभस्मसंप्लावयेत्सुधीः ॥ वं १६ इतिषोडशवारंजपेत् ॥ विशुद्धमुकुलाकारंजपन्बीजंविहायसः । मूर्धादिपादपर्यन्तान्यङ्गानिरचयेत्सुधीः ॥ हं १६ इतिषोडशवारंजपेत् ॥ आकाशादीनिभूतानिपुनरुत्पादयेच्चितः । अखण्डब्रह्मपश्चास्यःप्रेरकःपुरुषस्ततः ॥ प्रकृतिर्महत्प्रकृतेस्ततोहंत्रिगुणात्मकः ॥ ततआकाशः ॥ आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यःपृथिवी । पृथिव्याओषधयः । ओषधीभ्योऽन्नं । अन्नाद्रेतः । रेतसःपुरुषः । सवाएषपुरुषोऽन्नरसमयः ॥ सोहंमन्त्रेणचात्मानमानयेद्धृदयाम्बुजे ॥ ॐहंसःसोहं । कुण्डलीं जीवमादायपरसङ्गात्सुधामयं । संस्थाप्यहृदयाम्भोजेमूलाधारगतंस्मरेत् ॥ इतिभूतशुद्धिः ॥

अथप्राणप्रतिष्ठा ॥ भूतशुद्धिंविधायैवंप्राणस्थापनमाचरेत् ॥ अस्यश्रीप्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुरुद्राऋषयः ऋग्य-
जुःसामानिच्छन्दांसि प्राणशक्तिर्देवता आंबीजं ह्रीं शक्तिः क्रौंकीलकं प्राणप्रतिष्ठायांविनियोगः ॥ ऋष्यादिन्यासाः ॥
ॐब्रह्मविष्णुरुद्रेभ्यऋषिभ्योनमः । शिरसि । ॐऋग्यजुःसामभ्यश्छन्दोभ्योनमः । मुखे । ॐप्राणशक्त्यैदेवतायैनमः ।
हृदये । उदको० । ॐआँबीजायनमः । गुह्ये । ॐह्रींशक्तयेनमः । पादयोः । ॐक्रौंकीलकायनमः । सर्वाङ्गे । इतिऋ-
ष्यादिन्यासः ॥ अथकवर्गादिषडङ्गन्यासाः ॥ ॐङं कं खं घं गं । आकाशवाय्वग्निसलिलपृथिव्यात्मने हृदयायनमः ।
इतिहृदये । उद० । ॐञं चं छं झं जं । शब्दस्पर्शरूपरसगन्धात्मने शिरसेस्वाहा । इति शिरसि । ॐ णं टं ठं ढं डं । श्रो-
त्रत्वक्चक्षुर्जिह्वाघ्राणात्मनेशिखायै वषट् । इतिशिखायां । ॐ नं तं थं धं दं । वाक्पाणिपादपायूपस्थात्मने कवचायहुं ।
इतिकवचे । ॐ मं पं फं भं बं । वक्तव्यादानगमनानंदात्मने नेत्रत्रयायवौषट् । इतिनेत्रत्रये । ॐ शं यं रं वं लं हं षं लं सं क्षं ।
बुद्धिमनोहंकारचित्तात्मने अस्त्रायफट् । इत्यस्त्रे । इतिकवर्गादिषडङ्गन्यासाः ॥ अथबीजन्यासाः ॥ नाभेरारभ्यापा-
दान्तं । आं इतिपाशबीजं । हृदयादारभ्यनाभ्यन्तं । ह्रीं इतिशक्तिबीजं । मस्तकादारभ्यहृदयान्तं । क्रौं इत्यङ्कुशबीजं
न्यसेत् । इतिबीजन्यासाः ॥ अथदशहृदयन्यासाः ॥ ॐयंत्वगात्मनेनमः १ । ॐ रंअसृगात्मनेनमः २ । ॐलंमांसात्म-
नेनमः ३ । ॐवं मेदआत्मनेनमः ४ । ॐशं अस्थ्यात्मनेनमः ५ । ॐपं मज्जात्मनेनमः ६ । ॐसं शुक्रात्मनेनमः ७ ।
ॐहों ओजआत्मनेनमः ८ । ॐहं प्राणात्मनेनमः ९ । ॐसंजीवात्मनेनमः १० इतिहृदयेन्यसेत् । उद० । इतिदश-

हृदयन्यासाः ॥ ॐ यं रं लं वं शं षं सं हं ळं क्षं । इतिमस्तकादिपादान्तंव्यापकंकुर्यात् ॥ ॐमण्डूकादिपरतत्वान्तदेवता-भ्योनमः । ॐजयादिपीठशक्तिभ्योनमः । ॐआंह्रींक्रोंपीठायनमः । इतिनत्वा ॥ एवंदेहमयेपीठेध्यायेद्देवीममुप्रदां ॥ अथध्यानं ॥ रक्ताम्भोधिस्थपोतोल्लसदरुणसरोजाधिरूढाकराब्जैःपाशंकोदण्डमिक्षूद्भवमथगुणमप्यङ्कुशंपञ्चबाणान् । बिभ्राणासृक्कपालंत्रिनयनलसितापीनवक्षोरुहाढ्यादेवीबालार्कवर्णाभवतुसुखकरीप्राणशक्तिःपरानः ॥ इतिध्यानं ॥ ध्यायन्हृदिकरंधृत्वात्रिर्जपेत्तन्मनुंसुधीः ॥ प्राणप्रतिष्ठामन्त्रः ॥ ॐआँ ह्रीं क्रों यँ रँ लँ वँ शँ षँ सँ हों ॐ क्षँ सँ हँ सः ह्रीं ॐ हं सः २० ममप्राणाइहप्राणाः ॥ ॐआं० सः २० ममजीवइहस्थितः ॥ ॐआं० सः २० ममसर्वेन्द्रियाणि ॥ ॐआं० सः २० ममवाङ्मनश्चक्षुःश्रोत्रजिह्वाघ्राणप्राणाइहागत्यसुखंचिरंतिष्ठन्तु स्वाहा २८। ॐ क्षं सं हं सः ह्रीं ॐ ॥ १३८ एवमष्टात्रिंशदधिकशताक्षरंप्राणप्रतिष्ठामन्त्रंत्रिर्जप्त्वानिजवपुर्ज्योतीरूपंध्यायेत् ॥ उद० ॥ प्रणवस्यपञ्चदशावृत्तीःकृत्वा ॥ अनेनममास्यदेहस्यजातकर्मादिपञ्चदशसंस्काराःसंपद्यन्तां । अयंदेहःसर्वकर्मारम्भयोग्योजातइतिभावयेत् । इतिप्राणप्रतिष्ठा ॥

अथमातृकान्यासाः ॥ एवंप्राणान्प्रतिष्ठाप्यमातृकान्यासमाचरेत् । अकाराद्याःक्षकारान्तावर्णाःप्रोक्तास्तुमातृकाः ॥ आदौमातृकार्णैःप्राणायामत्रयं । षोडशस्वरैःपूरकः । कादिभिर्मान्तैर्वर्णैःकुम्भकः । यादिभिःक्षान्तैर्वर्णैरेचकः ॥ ॐअं-आं इं ईं उं ऊं ऋं ॠं ऌं ॡं एं ऐं ओं औं अं अः १६ । इति पूरकं ॥ ॐ कं खं गं घं ङं । चं छं जं झं ञं । टं ठं डं ढं णं । तं थं दं धं नं । पं फं बं भं मं । इतिकुम्भकं ॥ ॐ यं रं लं वं शं षं सं हं ळं क्षं । इतिरेचकं । इतिपंचाशन्मातृकाः ५० ॥ यथापर्वत-

धातूनांदोषान्दहतिपावकः । एवमन्तर्गतंपापंप्राणायामेनदह्यते ॥ अस्यश्रीमातृकासरस्वतीमन्त्रस्य ब्रह्माऋषिः गायत्री-छन्दः मातृकासरस्वतीदेवता हलोबीजानि स्वराःशक्तयः अखिलावाप्तयेन्यासेविनियोगः ॥ ऋष्यादिन्यासाः ॥ ॐब्र-ह्मणेऋषयेनमः । शिरसि । ॐगायत्र्यैछन्दसेनमः । मुखे । ॐमातृकासरस्वत्यैदेवतायैनमः । हृदये । उद० । ॐहल्भ्यो-बीजेभ्योनमः । गुह्ये । ॐस्वरेभ्यःशक्तिभ्योनमः । पादयोः । इतिऋष्यादिन्यासाः ॥ अथकादिवर्गषडङ्गन्यासाः ॥ ॐ अं कं खं गं घं ङं आं । हृदयायनमः । उद० । ॐ इं चं छं जं झं ञं ईं । शिरसेस्वाहा । ॐ उं टं ठं डं ढं णं ऊं । शिखायै-वषट् । ॐ एं तं थं दं धं नं ऐं । कवचायहुं । ॐओं पं फं बं भं मं औं । नेत्रत्रयायवौषट् । ॐ अं यं रं लं वं शं षं सं हं क्षं अः । अस्त्रायफट् ॥ इतिकादिवर्गषडङ्गन्यासाः । अथध्यानं ॥ पञ्चाशल्लिपिभिर्विभक्तमुखदोःपन्मध्यवक्षस्थलांभास्वन्मौलि-निबद्धचन्द्रशकलामापीनतुङ्गस्तनीं । मुद्रामक्षगुणंसुधाढ्यकलशंविद्यांचहस्ताम्बुजैर्बिभ्राणांविशदप्रभांत्रिनयनांवाग्देवता-माश्रये ॥ इतिध्यानं । ॐसकलपीठदेवताभ्योनमः । ॐसकलपीठशक्तिभ्योनमः । ॐमातृकायोगपीठायनमः । इति-गन्धाक्षतपुष्पैःसंपूज्य ॥ ॥ अथान्तर्मातृकान्यासाः ॥ ॐ अं आं इं ईं उं ऊं ऋं ॠं लृं ॡं एं ऐं ओं औं अं अः नमः १६ । इतिकण्ठेषोडशदलकमले । ॐ कं खं गं घं ङं चं छं जं झं ञं टं ठं नमः १२ । इतिहृदये द्वादशदलकमले । उद० । ॐ डं ढं णं तं थं दं धं नं पं फं नमः १० । इतिनाभौदशदलकमले । ॐ बं भं मं यं रं लं नमः ६ । इतिलिङ्गेषट्दलकमले । ॐ वं शं षं सं ४ । इतिगुदेचतुर्दलकमले । ॐ हं क्षं २ । इतिभ्रूमध्येद्विदलकमले ॥ अथध्यानं । आधारेलिङ्गनाभिप्रकटितहृदये

तालुमूलेललाटेद्वैपत्रेपोडशारेद्विदशदशदलेद्वादशर्धेचतुष्के । वासान्ते बालमध्ये डफकटसहितेकण्ठदेशेस्वराणां हं क्षं तत्वार्थयुक्तंसकलदलगतंवर्णरूपंनमामि ॥ इति अन्तर्मातृकान्यासाः ॥ ॥ अथबहिर्मातृकान्यासाः ॥ सर्वत्रादावोंकारः ॥ ॐअंनमःललाटे १ आंनमःमुखवृत्ते २ इंनमः दक्षिणनेत्रे ३ ईंनमः वामनेत्रे ४ उं नमः दक्षिणकर्णे ५ ऊं नमः वामकर्णे ६ ऋं नमः दक्षिणनासापुटे ७ ॠं नमः वामनासापुटे ८ ऌं नमः दक्षिणगण्डे ९ ॡं नमः वामगण्डे १० एंनमः ऊर्ध्वोष्ठे ११ ऐंनमः अधरोष्ठे १२ ओंनमः ऊर्ध्वदन्तपङ्क्तौ १३ औंनमः अधोदन्तपङ्क्तौ १४ अं नमः मूर्ध्नि १५ अः नमः आस्ये १६ कं नमः दक्षिणबाहुमूले १७ खं नमः दक्षिणकूर्परे १८ गं नमः दक्षिणमणिबन्धे १९ घंनमः दक्षिणहस्ताङ्गुलिमूले २० ङंनमः दक्षिणहस्ताङ्गुल्यग्रे २१ चंनमः वामबाहुमूले २२ छंनमः वामकूर्परे २३ जंनमः वाममणिबन्धे २४ झंनमः वामहस्ताङ्गुलिमूले २५ ञंनमः वामहस्ताङ्गुल्यग्रे २६ टंनमः दक्षिणपादमूले २७ ठंनमः दक्षिणजानुनि २८ डंनमः दक्षिणगुल्फयोः २९ ढंनमः दक्षिणपादाङ्गुलिमूले ३० णंनमः दक्षिणपादाङ्गुल्यग्रे ३१ तंनमः वामपादमूले ३२ थंनमः वामजानुनि ३३ दंनमः वामगुल्फयोः ३४ धंनमः वामपादाङ्गुलिमूले ३५ नंनमः वामपादाङ्गुल्यग्रे ३६ पंनमः दक्षिणपार्श्वे ३७ फंनमः वामपार्श्वे ३८ बंनमः पृष्ठे ३९ भंनमः नाभौ ४० मंनमः उदरे ४१ यंनमः हृदये ४२ । उद० । रंनमः दक्षिणांसे ४३ लंनमः ककुदि ४४ वंनमः वामांसे ४५ शंनमः हृदयादिदक्षिणहस्तान्तं ४६ षंनमः हृदयादिवामहस्तान्तं ४७ संनमः हृदयादिदक्षिणपादान्तं ४८ हंनमः हृदयादिवामपादान्तं ४९ क्षंनमः हृदयादिमुखान्तं ५० ॥ अत्र बिन्दु-

युक्तत्वमक्षराणांवीर्ययोजनार्थमितिसंप्रदायः ॥ इतिबहिर्मातृकान्यासाः ॥ इतिमातृकान्यासः ॥

अथपञ्चाङ्गमहारुद्रन्यासाः ॥ तेचानादेशेअङ्गुष्ठानामिकाभ्यांकार्याः । आदेशेतुयथादेशं । तत्रादौछन्दःपुरुषन्यासः । सचकृताकृतः । करणेऽभ्युदयः । अकरणेनवैगुण्यं । एवमग्रे ॥ ॥ ॐतिर्यग्बिलायचमसायोर्ध्वबुध्नायछन्दःपुरुषायनमः । शिरसि । ॐगौतमभरद्वाजाभ्यांनमः । नेत्रयोः । ॐविश्वामित्रजमदग्निभ्यांनमः । श्रोत्रयोः । भेदेमन्त्रावृत्तिःसर्वत्र । ॐवसिष्ठकश्यपाभ्यांनमः । नासिकयोः । ॐअत्रयेनमः । वाचि । वाक्स्थानंहृदयं । उद० । ॐगायत्र्यैछन्दसेनमः । ॐअग्नयेनमः । शिरसि । ॐउष्णिहेछन्दसेनमः । ॐसवित्रेनमः । ग्रीवायां । ॐबृहत्यैछन्दसेनमः । बृहस्पतयेनमः । अनूके । अनूकःपृष्ठवंशः । ॐबृहद्रथंतराभ्यांछन्दोभ्यांनमः । ॐद्यावापृथिवीभ्यांनमः । बाह्वोः । ॐत्रिष्टुभेछन्दसेनमः । ॐइन्द्रायनमः । मध्ये । मध्यमुदरं । ॐजगत्यैछन्दसेनमः । ॐआदित्यायनमः । श्रोण्योः । ॐअतिच्छन्दसेछन्दसेनमः । ॐप्रजापतयेनमः । लिङ्गे । ॐयज्ञायज्ञियायछन्दसेनमः । ॐवैश्वानरायनमः । गुदे । ॐअनुष्टुभेछन्दसेनमः । ॐविश्वेभ्योदेवेभ्योनमः । ऊर्वोः । ॐपङ्क्त्यैछन्दसेनमः । ॐमरुद्भ्योनमः । जानुनोः । ॐद्विपदायैछन्दसेनमः । ॐविष्णवेनमः । पादयोः । ॐविच्छन्दसेछन्दसेनमः । ॐवायवेनमः । प्राणेषु । प्राणा वायोःसंचारस्थानं नासिका । ॐन्यूनाक्षरायछन्दसेनमः । ॐअद्भ्योनमः । सर्वाङ्गेषु ॥ इतिब्रह्मयज्ञोक्तश्छन्दःपुरुषन्यासः ॥ अथपुरश्चरणंकृताकृतं ॥ ॥ ॐकारस्यब्रह्माऋषिः दैवीगायत्रीछन्दः परमात्माअग्निर्देवता । महाव्याहृतीनांप्रजापतिर्ऋषिः यथाक्रमं दैवीगायत्री-

दैव्युष्णिकुदैवीगायत्रीछन्दांसि । यथाक्रमं अग्निर्वायुःसूर्योदेवताः । चत्वारिशृङ्गाइतिमन्त्रस्य प्रजापतिर्ऋषिः साध्या-
वाऋषयः त्रिष्टुप्छन्दः मन्त्रोक्तऋषभरूपोयज्ञपुरुषोदेवता । सशिरसोजातवेदसइतिमन्त्रस्यकश्यपऋषिः त्रिष्टुप्छन्दः अ-
ग्निर्जातवेदादेवता । सर्वेषांपुरश्चरणेविनियोगः ॥ ॐभूर्भुवःस्वः । चत्वारिशृङ्गा० आविवेश १ ॥ जातवेदसेसुनवामसो-
ममरातीयतोनिदहातिवेदः ॥ सनःपर्षदतिदुर्गाणिविश्वानावेवसिन्धुंदुरितात्यग्निः २ ॥ अक्षरंब्रह्मसदनंवेदानांशिर
उत्तमं । जातवेदश्छन्दसांमातब्रह्मभूर्भुवःस्वरोम् ३ ॥ अक्षरमितिशिरः ॥ इत्येतेषांमन्त्राणांसकृज्जपएवात्रपुरश्चरणं ॥ ॥
अथ पञ्चाङ्गमहारुद्रन्यासाः ॥ तत्रादौपञ्चाङ्गन्यासः प्रथमः ॥ मनोजूतिरितिहृदये १ ॥ मनोजूतिरितिमन्त्रस्य आङ्गिर-
सोबृहस्पतिर्ऋषिः यजुः विश्वेदेवादेवताः हृदयेन्यासेवि० ॥ ॐमनोजूतिर्जु० प्रतिष्ठ १ ॥ मन्त्रान्ते । हृदयायनमः ।
उद० । हृदयंस्पृष्ट्वामन्त्रंसस्वरंजपेत् । एवमग्रेपिसर्वत्र । अबोध्यग्निरिति शिरसि २ ॥ अबोध्यग्निरितिमन्त्रस्यबुधगविष्ठि-
रावृषीत्रिष्टुप्छन्दः अग्निर्देवता शिरसिन्यासेवि० ॥ ॐअबोध्यग्निःसमिधाजनानांप्रतिधेनुमिवायतीमुषासं । यह्वाइवप्र-
वयामुज्जिहानाःप्रभानवःसिस्रतेनाकमच्छ २ ॥ मन्त्रान्तेशिरसेस्वाहा ॥ मूर्धानमितिशिखायां ३ ॥ मूर्धानमितिमन्त्रस्य
भरद्वाजऋषिःत्रिष्टुप्छन्दःवैश्वानरोग्निर्देवताशिखायांन्यासेवि० । ॐमूर्धानंदि० जनयन्तदेवाः ३ ॥ मन्त्रान्ते शिखायै-
वषट् ॥ मर्माणितइतिकवचे ४ । मर्माणितइतिमन्त्रस्यअप्रतिरथऋषिःत्रिष्टुप्छन्दः लिङ्गोक्तसोमवरुणौदेवतेकवचन्या-
सेवि० । ॐमर्माणितेव० मंदन्तु ४ ॥ मन्त्रान्तेकवचायहुं ॥ मानस्तोकइत्यस्त्रे ५ ॥ मानस्तोकइतिमन्त्रस्यकुत्सऋषिः

जगतीछन्दः एकोरुद्रोदेवता अस्त्रन्यासेवि० । ॐमानस्तोके० हवामहे ५ ॥ अस्त्रान्ते अस्त्रायफट् । इत्यस्त्रे । इति-पञ्चाङ्गन्यासःप्रथमः ॥ १ ॥ ॥ अथदिग्बन्धसहितःशिखाद्यस्त्रान्तएकोनविंशत्यङ्गन्यासोद्वितीयः ॥ यातेरुद्रइतिशिखायां । यातेरुद्रइतिमन्त्रस्य परमेष्ठीऋषिः अनुष्टुप्छन्दः एकोरुद्रोदेवताशिखायांन्यासेवि० । ॐयातेरुद्रशिवा० चाकशीहि १ ॥ अस्मिन्महतीति शिरसि ॥ अस्मिन्महत्यर्णवइति मन्त्रस्यपरमेष्ठीऋषिः अनुष्टुप्छन्दः एकोरुद्रोदेवताशिरसिन्यासेवि० । ॐअस्मिन्मह० तन्मसि २ ॥ असंख्यातासहस्राणीतिललाटे ॥ असंख्यातासहस्राणीतिमन्त्रस्य परमेष्ठीऋषिः अनुष्टुप्छन्दः बहवोरुद्रादेवताललाटेन्यासेवि० ॥ ॐअसंख्यातास० तन्मसि ३ ॥ त्र्यम्बकमितिद्वौनेत्रयोः ॥ तर्जनीमध्यमाभ्यां । त्र्यम्बकमितिद्वयोर्मन्त्रयोः क्रमेणवसिष्ठः प्रजापतिर्ऋषिः अनुष्टुप्छन्दः रुद्रोदेवतानेत्रयोर्न्यासेवि० । त्र्यम्बकंयजा० मृतात् १ ॥ ॐत्र्यम्बकंयजा० मामुतः २ ॥ ४ ॥ मानस्तोकइतिनासिकायां । मानस्तोकइतिमन्त्रस्य कुत्सऋषिः जगतीछन्दः एकोरुद्रोदेवतानासिकायांन्यासेवि० । ॐमानस्तोके० हवामहे ५ ॥ अवतत्यधनुरितिमुखे । अवतत्यधनुरितिमन्त्रस्यपरमेष्ठीऋषिः अनुष्टुप्छन्दः एकोरुद्रोदेवतामुखेन्यासेवि० । ॐअवतत्यध० सुमनाभव ६ ॥ नीलग्रीवौद्वौकंठे । नीलग्रीवाइतिद्वयोर्मन्त्रयोःपरमेष्ठीऋषिः अनुष्टुप्छन्दः बहवोरुद्रादेवताः कण्ठन्यासेवि० । ॐनीलग्रीवाःशि० तन्मसि १ ॥ ॐनीलग्रीवाःशि० तन्मसि २ ॥ ७ ॥ नमस्तआयुधायेतिप्रकोष्ठयोः ॥ नमस्तआयुधायेतिमन्त्रस्यपरमेष्ठीऋषिः अनुष्टुप्छन्दः एकोरुद्रोदेवताप्रकोष्ठयोर्न्यासेविनि० । ॐनमस्तआयु० धन्वने ८ ॥ मणिबन्धादुपरि-

भागः कूर्परादधोभागःप्रकोष्ठः ॥ येतीर्थानीतिहस्तयोः । येतीर्थानीतिमन्त्रस्य परमेष्ठीऋषिः अनुष्टुप्छन्दः बहवोरुद्रादेवता
हस्तयोर्न्यासेवि० । ॐयेतीर्थानि प्र० तन्मसि ९ ॥ नमोवःकिरिकेभ्यइतिहृदये ॥ नमोवःकिरिकेभ्यइतिमन्त्रस्यपरमे-
ष्ठीऋषिःयजुःबहवोरुद्रादेवताहृदयेन्यासेवि० । ॐनमोवःकिरि० आनिर्हतेभ्यः १० ॥ उद० ॥ नमोहिरण्यबाहवइति-
नाभौ । नमोहिरण्यबाहवइतिमन्त्रस्यपरमेष्ठीऋषिः यजुःबहवोरुद्रादेवतानाभौन्यासेवि० । ॐनमोहिरण्यबाहवे०नमः ११ ॥
इमारुद्रायेतिगुह्ये । इमारुद्रायेतिमन्त्रस्यकुत्सऋषिः जगतीछन्दः एकोरुद्रोदेवतागुह्येन्यासेवि० । ॐइमारुद्राय० तुरम्
१२ ॥ मानोमहान्तमित्यूर्वोः ॥ मानोमहान्तमितिमन्त्रस्यकुत्सऋषिः जगतीछन्दः एकोरुद्रोदेवताऊर्वोर्न्यासेवि० ।
ॐमानोमहान्त० रीरिषः १३ ॥ एपतइतिजानुनोः ॥ एपतइतिमन्त्रस्यप्रजापतिर्ऋषिः यजुः रुद्रोदेवताजानुनोर्न्या-
सेवि० । ॐएपतेरुद्र० पशुः १४ ॥ अवरुद्रमितिजङ्घयोः ॥ अवरुद्रमितिमन्त्रस्यप्रजापतिर्ऋषिःपङ्क्तिश्छन्दः रुद्रोदेवता
जङ्घयोर्न्यासेवि० । ॐअवरुद्रम० ययात् १५ ॥ अध्यवोचदितिकवचे ॥ अध्यवोचदितिमन्त्रस्यपरमेष्ठीऋषिःपङ्क्तिश्छन्दः
एकोरुद्रोदेवताकवचन्यासेवि० । ॐअध्यवोच० परासुव १६ ॥ नमोबिल्मिनइत्युपकवचे ॥ नमोबिल्मिनइतिमन्त्रस्य
परमेष्ठीऋषिःयजुःबहवोरुद्रादेवताःउपकवचेन्यासेवि० । ॐनमोबिल्मिने० यच १७ ॥ कवचाद्विपरीतंकवचमुपकवचं ।
कवचोपरिकवचमुपकवचमितिवा ॥ नमोस्तुनीलग्रीवायेतितृतीयनेत्रे ॥ नमोस्तुनीलग्रीवायेतिमन्त्रस्यपरमेष्ठीऋषिः अनु-
ष्टुप्छन्दः एकोरुद्रोदेवतातृतीयनेत्रन्यासेवि० ॥ मुष्टितोविमुक्तयामध्यमयातृतीयनेत्रे ॥ ॐनमोस्तुनीलग्रीवाय० कर-

न्नमः १८ ॥ प्रमुञ्चधन्वनइत्यस्त्रे । प्रमुञ्चधन्वनइतिमन्त्रस्यपरमेष्ठीऋषिः अनुष्टुप्छन्दः एकोरुद्रोदेवता अस्त्रेन्यासेवि० ।
ॐप्रमुञ्चधन्वनु०व्वप १९ ॥ यएतावन्तश्चेतिदिग्बन्धः । यएतावन्तश्चेतिमन्त्रस्यपरमेष्ठीऋषिः अनुष्टुप्छन्दः बहवोरुद्रादे-
वताः दिग्बन्धनेवि० ॥ ॐयएतावन्तश्च० तन्मसि २० ॥ इतिदिक्षुविदिक्षुचपरस्परंतर्जन्यङ्गुष्ठाग्रास्फोटनेनदिग्बन्धः ।
इतिदिग्बन्धसहितःशिखाद्यस्त्रान्तएकोनविंशत्यङ्गन्यासोद्वितीयः ॥ २ ॥ ॥ अथदशार्णन्यासस्तृतीयः ॥ ॐनःमूर्ध्नि १ ।
ॐनमःनासिकायां २ । ॐमोंनमःललाटे ३ । ॐभंनमःमुखे ४ । ॐगंमनःकण्ठे ५ । ॐवंनमःहृदये ६ । उद० । ॐतें-
नमःदक्षिणकरे ७ । ॐरुंनमः वामकरे ८ । ॐद्रांनमःनाभौ ९ ॥ ॐयंनमःपादयोः १० ॥ इतिदशार्णन्यासस्तृतीयः
॥३॥ ॥ पादादिमूर्धान्तःपञ्चानुवाकन्यासःकृताकृतः ॥ सद्योजातमितिपादयोः । सद्योजातमितिमन्त्रस्यसद्योजातऋषिः
त्रिष्टुप्छन्दःब्रह्मादेवतापादयोर्न्यासेवि० । कनिष्ठिकाङ्गुष्ठेनपादयोः ॥ ऋद्धिःसिद्धिर्धृतिर्लक्ष्मीर्मेधाकान्तिःस्वधाप्रभा ।
सद्योजातकलाह्येताअष्टौचपरिकीर्तिताः १ ॥ ॐसद्योजातंप्र० यनमः १ ॥ वामदेवायेतिगुह्ये । वामदेवायेतिमन्त्रस्यवामदे-
वऋषिः जगतीछन्दः विष्णुर्देवतागुह्येन्यासेवि० । अनामिकाङ्गुष्ठेनोरुमध्ये ॥ रजोरक्षारतिःपाल्याकामासंजीविनीप्रिया ।
बुद्धिःक्रियाचधात्रीचभ्रामिणीमोहिनीज्वरा ॥ वामदेवकलाह्येतास्त्रयोदशवरानने २ ॥ ॐवामदेवाय० न्मनायनमः २ ॥
अघोरेभ्यइतिहृदये । अघोरेभ्यइतिमन्त्रस्यअघोरऋषिःअनुष्टुप्छन्दः रुद्रोदेवताहृदयंन्यासेविनियोगः मध्यमाङ्गुष्ठेनहृदये ॥
तमोमोहाक्षमानिद्राव्याधिर्मृत्युःक्षुधातृषा । अघोरस्यकलाह्येताअष्टौचपरिकीर्तिताः ३ ॥ ॐअघोरेभ्यो० रूपेभ्यः ३ ॥

तत्पुरुषायेतिमुखे । तत्पुरुषायेतिमन्त्रस्यतत्पुरुषऋषिः गायत्रीछन्दः रुद्रोदेवतामुखेन्यासेवि० । तर्जन्यङ्गुष्ठेनवक्त्रे ॥ निवृत्तिश्चप्रतिष्ठाचविद्याशान्तिस्तथैवच । तत्पुरुषकलाह्येताश्चतस्रश्चनसंशयः ४ ॥ ॐतत्पुरुषायवि० दयात् ४ ॥ ईशान इतिमूर्ध्नि ॥ ईशानइतिमन्त्रस्यईशानऋषिः अनुष्टुप्छन्दः ईशानोदेवतामूर्ध्निन्यासेवि० । लिङ्गमुद्रयामूर्ध्नि ॥ शशिनीचाङ्गदाह्वष्टामरीचीज्वालिनीतथा ॥ ईशानस्यकलाःपञ्चनिरञ्जनपदानुगाः ५ ॥ ईशानःसर्व० शिवोम् ६ ॥ इतिपादादिमूर्धान्तःपञ्चानुवाकन्यासः ॥ ॥ हंसहंसेतियोब्रूयाद्धंसोनामसदाशिवः । एवंन्यासविधिंकृत्वाततःसंपुटमारभेत् ॥ १ ॥ अथसंपुटीकरणंचतुर्थोन्यासः ॥ ४ ॥ ॥ पुटिताञ्जलिप्रदर्शनंसंपुटीकरणं ॥ त्रातारमितिप्राच्यां ॥ त्रातारमितिमन्त्रस्य गर्गऋषिः त्रिष्टुप्छन्दः इन्द्रोदेवता प्राच्यांसंपुटीकरणेनमस्कारेचविनियोगः ॥ ॐत्रातारमिन्द्र० धात्विन्द्रः १ ॥ प्राच्यां ॐइन्द्रायनमः १ ॥ त्वंनोअग्नइत्याग्नेय्यां । त्वंनोअग्नइतिमन्त्रस्य हिरण्यस्तूपआङ्गिरसऋषिः जगतीछन्दः अग्निर्देवता आग्नेय्यांसंपुटीकरणे नमस्कारेवि० ॥ ॐत्वंनोअग्ने० स्तवव्रतं । आग्नेय्यां । ॐअग्नयेनमः २ ॥ सुगंनःपन्थामितिदक्षिणस्यां । सुगंनःपन्थामितिमन्त्रस्यप्रजापतिर्ऋषिः त्रिष्टुप्छन्दःवैवस्वतोदेवतादक्षिणस्यांसंपुटीकरणेनमस्कारेवि० ॥ ॐसुगंनःपन्था० कृणोतु । दक्षिणस्यां ॐयमायनमः ३ ॥ असुन्वन्तमितिनैर्ऋत्यां ॥ असुन्वन्तमितिमन्त्रस्यप्रजापतिर्ऋषिःत्रिष्टुप्छन्दःनिर्ऋतिर्देवतानैर्ऋत्यांसंपुटीकरणेनमस्कारेवि० ॐअसुन्वन्तम० तुभ्यमस्तु ॥ नैर्ऋत्यांनिर्ऋतयेनमः ४ ॥ तत्त्वायामीतिप्रतीच्यां । तत्त्वायामीतिमन्त्रस्यशुनःशेपऋषिः त्रिष्टुप्छन्दः वरुणोदेवतापश्चिमायांसंपुटीकरणेनमस्कारेचवि० । ॐतत्त्वा-

यामि० प्रमोषीः ॥ प्रतीच्यां । ॐवरुणायनमः ५ ॥ आनोनियुद्भिरितिवायव्यां । आनोनियुद्भिरितिमन्त्रस्यवसिष्ठऋषिः

त्रिष्टुप्छन्दः वायुर्देवतावायव्यांसंपुटीकरणेनमस्कारेचवि० । ॐआनोनि० सदानः ॥ वायव्यां । ॐवायवेनमः

६ ॥ वयꣳसोमेत्युदीच्यां । वयꣳसोमेतिमन्त्रस्यबन्धुर्ऋषिः गायत्रीछन्दः सोमोदेवताउदीच्यांसंपुटीकरणे-

नमस्कारेचवि० । ॐवयꣳसोम० महि ॥ उदीच्यां । ॐसोमायनमः ७ ॥ तमीशानमितीशान्यां । तमीशानमि-

तिमन्त्रस्यगौतमऋषिःजगतीछन्दःविश्वेदेवादेवताः ईशान्यांसंपुटीकरणेनमस्कारेचवि० । ॐतमीशानंजगत० स्वस्तये ॥

ईशान्यां । ॐईशानायनमः ८ ॥ अस्मेरुद्राइत्यूर्ध्वायां । अस्मेरुद्राइतिमन्त्रस्यप्रगाथऋषिःत्रिष्टुप्छन्दःब्रह्मादेवताऊर्ध्वा-

यांसंपुटीकरणेनमस्कारेचवि० । ॐअस्मेरुद्रा० देवाः ॥ ऊर्ध्वायां । ॐब्रह्मणेनमः ९ ॥ स्योनापृथिवीत्यवाच्यां । स्यो-

नापृथिवीतिमन्त्रस्यमेधातिथिर्ऋषिःगायत्रीछन्दः पृथिवीदेवता अवाच्यांसंपुटीकरणेनमस्कारेचवि० ॥ ॐस्योनापृथि०

प्रथाः ॥ अवाच्यां । ॐअनन्तायनमः १० ॥ एवमात्मनिरौद्रीकरणंकृत्वात्वगस्थिगतैःपापैःप्रमुच्यते । सर्वभूतेष्वपराजि-

तोभवति ॥ यक्षरक्षोगन्धर्वभूतप्रेतपिशाचब्रह्मराक्षसयमदूतशाकिनीडाकिनीसर्पश्वापदतस्कराद्युपद्रवाःसर्वेज्वलन्तंपश्य-

न्तुमांरक्षन्तु ॥ इतिसंपुटीकरणाख्यश्चतुर्थोन्यासः ॥४॥ ॥ अथदेवयाज्ञिकोक्तोनामन्यासःकृताकृतः ॥ ॐरुद्रायनमःशि-

रसि १ । ॐचन्द्रशेखरायनमः ललाटे २ । ॐत्रिलोचनायनमःनेत्रयोः ३ । ॐभैरवायनमः श्रोत्रयोः ४ । ॐशंकराय-

नमःघ्राणे ५ । ॐपशुपतयेनमःमुखे ६ । ॐनीलग्रीवायनमःकण्ठे ७ । ॐव्यापकायनमः हृदये ८ । उद० । ॐगङ्गा-

धरायनमः करयोः ९। ॐशिवायनमः नाभौ १०। ॐवामदेवायनमःगुह्ये ११ । ॐत्र्यम्बकायनमः जङ्घयोः १२ ॥ ॐसर्वज्ञायनमः पादयोः १३। ॐशिवायनमःसर्वत्र ॥ इतिदेवयाज्ञिकोक्तोनामन्यासः ॥ ॥ अथषडङ्गन्यासःपञ्चमः ५ ॥ यज्जाग्रतइतिपण्णांशिवसंकल्पऋषिःत्रिष्टुप्छन्दःमनोदेवताहृदयन्यासेवि० ॥ मुष्टिविनिर्गताङ्गुष्ठौहृदयेकृत्वा ॥ ॐयज्जाग्रतइति षड्चोजपेत् ६ ॥ मन्त्रान्ते। ॐहृदयायनमः १ ॥ सहस्रशीर्षेतिषोडशर्चोनारायणःपुरुषऋषिःआद्यानांपञ्चदशानामनुष्टुप्छन्दः अन्त्यायास्त्रिष्टुप्छन्दः जगद्बीजंपुरुषोदेवताशिरसिन्यासेवि० ॥ मुष्टिविनिर्गताङ्गुष्ठौनिस्तर्जनीशिरसिकृत्वा। ॐसहस्रशीर्षेति षोडशर्चोजपेत् १६ । मन्त्रान्ते। ॐशिरसेस्वाहा २ ॥ अद्भ्यःसंभृतइतिषड्चस्योत्तरनारायणस्य नारायणःपुरुषऋषिः आद्यानांतिसृणांत्रिष्टुप्छन्दः चतुर्थपञ्चमयोरनुष्टुप्छन्दः अन्त्यायास्त्रिष्टुप्छन्दःआदित्योदेवताशिखायांन्यासेवि० ॥ मुष्टिपुटौकरौकृत्वाअङ्गुष्ठावधःप्रसक्ताग्रौकनिष्ठिकांचोर्ध्वतःशिखायांकृत्वा। ॐअद्भ्यःसंभृतइतिषड्चोजपेत् ६ ॥ मन्त्रान्ते। ॐशिखायैवषट् ३ ॥ आशुःशिशानइतिसप्तदशानामप्रतिरथऋषिः आद्यानांद्वादशानांत्रिष्टुप्छन्दः इन्द्रोदेवताअवसृष्टेत्यनुष्टुप्छन्दः इषुर्देवता। प्रेतेत्यनुष्टुप्छन्दःयोद्धादेवता। असौयेतितित्रिष्टुप्छन्दः मरुतोदेवता । यत्रबाणाइतिपङ्क्तिश्छन्दःलिङ्गोक्ता इन्द्रबृहस्पत्यदित्योदेवताः। मर्माणितइतित्रिष्टुप्छन्दःलिङ्गोक्ते सोमवरुणौदेवते। कवचेन्यासेवि० ॥ अङ्गुष्ठौप्रसक्ताग्रौतर्जन्यौचत्रिकोणवत्कृत्वा मूर्ध्निपश्चान्मुखंकृत्वाउभयपार्श्वतःकरौहृदयंनयन्सन्। ॐआशुःशिशानइतिसप्तदशर्चोजपेत् १७। मन्त्रान्ते। ॐकवचायहुं ४ ॥ विभ्राडित्यस्यविभ्राट्सौर्यऋषिःजगतीछन्दः। उदुत्यमितितिसृ-

णांप्रस्कण्वऋषिः गायत्रीछन्दः। चतुर्णांसूर्योदेवता। तंप्रत्नथेत्यस्यकश्यपआवत्सारऋषिःजगतीछन्दःविश्वेदेवादेवता। अयं-
वेनइत्यस्यवेनऋषिः त्रिष्टुप्छन्दःसोमोदेवता। चित्रमित्यस्यकुत्सऋषिः त्रिष्टुप्छन्दः। आनइत्यस्यागस्त्यऋषिःत्रिष्टुप्छन्दः।
यदद्येत्यस्यश्रुतकक्षसुतकक्षावृषीगायत्रीछन्दः। तरणिरित्यस्य प्रस्कण्वऋषिःगायत्रीछन्दः। तत्सूर्यस्येतिद्वयोः कुत्सऋ-
षिःत्रिष्टुप्छन्दः। बण्महानितिद्वयोर्जमदग्निर्ऋषिः आद्यस्यबृहतीछन्दः उत्तरस्यसतोबृहतीछन्दः। श्रायन्तइत्यस्यनृमेधा-
ऋषिः बृहतीछन्दः। अद्यादेवाइत्यस्यकुत्सऋषिः त्रिष्टुप्छन्दः। चित्रमित्यादीनामद्यादेवाइत्यन्तानांदशानांसूर्योदेवता।
आकृष्णेनेत्यस्यहिरण्यस्तूपआङ्गिरसऋषिः त्रिष्टुप्छन्दःसवितादेवता। नेत्रत्रयेन्यासेविनियोगः। नेत्रोन्मुखंहस्तंकृत्वा-
सक्ताङ्गुष्ठकनिष्ठिकांचकृत्वामध्यमांकिंचित्प्रसार्यइतराङ्गुलीरपश्यन्। ॐविभ्राड्बृह० इत्यादिसप्तदशर्चोजपेत् १७। म-
न्त्रान्ते। ॐनेत्रत्रयायवौषट् ५॥ नमस्तइतिचतुर्दशानांपरमेष्ठीप्रजापतिर्देवावाऋषयः मानइतिद्वयोःकुत्सऋषिः। आ-
द्यानुवाकेप्रथमागायत्रीतिस्रोनुष्टुभःतिस्रःपङ्क्तयःसप्तानुष्टुभःद्वेजगत्यौ सर्वासामेकरुद्रोदेवता अस्त्रेन्यासेवि०। ॐनम-
स्तेरु० इत्यादिषोडशर्चोजपेत् १६। मन्त्रान्ते। ॐअस्त्रायफट्। इतिपरस्परंतालंकुर्वन्नस्त्रंन्यसेत् ६। नमस्तइतिसकलाध्या-
योवाऽस्त्रं ६६। इतिषडङ्गन्यासःपञ्चमः ५॥ एषतइतियोनिमुद्राप्रदर्शनं। ऋष्यादिकंपूर्ववत्। योनिमुद्राप्रदर्शनेवि०।
ॐएषतेरुद्र०पशुः १। इतियोनिमुद्राप्रदर्शनं॥ तल्लक्षणंमहार्णवे। मध्यमेकुटिलेकृत्वातर्जन्युपरिसंस्थिते। अनामिका-
मध्यगतेतथैवहिकनिष्ठिके १॥ सर्वाएकत्रसंयोज्याअङ्गुष्ठपरिपीडिताः। एषातुप्रथमामुद्रायोनिमुद्रेतिसंज्ञितेति २॥ ॥

अथात्मनःश्रीरुद्ररूपेणध्यानम् ॥ पञ्चास्यंसौम्यमात्मानंसर्वाभरणभूषितं । मृगलाञ्छनमूर्धानंशुद्धस्फटिकसंनिभं १ ॥ फणासहस्रविस्फूर्जदुरगेन्द्रोपवीतिनं । सप्तार्चिर्विज्वलज्जालजटाजूटकिरीटिनं २ ॥ सहस्रकरविभ्राजत्खट्वाङ्गेनविभूषितं । ब्रह्माण्डखण्डवत्काशत्कपालवरधारिणं ३ ॥ देदीप्यमानंचन्द्रार्कज्वलदग्नित्रिनेत्रिणं । त्रैलोक्यद्युतिकृद्भास्वत्स्कन्धेकपालमालिनं ४ ॥ दीप्तनक्षत्रमालावदक्षमालाधरंद्विजः । निःशेषवारिसंपूर्णकमण्डलुकरंविभुं ५ ॥ जगदाधैर्यकृन्नादंमुञ्चन्डमरुधारिणं । केयूरबद्धनागेन्द्रमूर्धमणिविराजितं ६ ॥ घर्घराव्यक्तनिर्गच्छद्गंभीरारावनूपुरं । सहेमपट्टनीलाभव्याघ्रचर्मोत्तरीयकं ७ ॥ विद्युल्लताप्रभागङ्गाभातमूर्धंसुरार्चितं । समस्तभुवनाधारधरणिमात्मनिस्थितं ८ ॥ त्रैलोक्यवनितामूर्धनतदेहार्धपार्वतिं । लक्षसूर्यप्रभाभास्वत्त्रैलोक्यकृतपाण्डुरं ९ ॥ अमृतप्लुतदृष्टाङ्गंदिव्यभोगसमाकुलं । दिग्देवतासमायुक्तंसुरासुरनमस्कृतं १० ॥ नित्यंशाश्वतमव्यक्तंव्यापिनंनंदनंध्रुवं । द्विजोध्यात्वैवमात्मानंसम्यग्रुद्रस्वरूपिणं ११ ॥ संप्रध्वस्तान्तरायःसन्ततोयजनमारभेत् १२ ॥ यजनंपूजनं ॥ इत्यात्मनःश्रीरुद्ररूपेणध्यानं ॥ ॥ अथगौरीध्यानं ॥ गौरींचतुर्भुजांचण्डींत्रिनेत्रांमुकुटोज्ज्वलां । पद्मदर्पणहस्तांचवरदाभयहस्तकां १ ॥ दिव्यवस्त्रपरीधानांदिव्यालंकारभूषितां । प्रसन्नवदनांध्यायेच्छिवोत्सङ्गेचवामतः २ ॥ गणाधिपंचोत्तरतोध्यात्वास्कन्दंनियोजयेत् । द्वारदेशेतुचण्डार्कनन्दिभृङ्गिकिरीटिनः ३ ॥ इतिपञ्चाङ्गरुद्रन्यासाः ॥ इतिशुक्लयजुःशाखीयकर्मकाण्डप्रदीपे आह्निकाचारप्रकरणेभूशुद्धिभूतशुद्धिप्राणप्रतिष्ठान्तर्मातृकाबहिर्मातृकान्यासाः पञ्चाङ्गमहारुद्रन्यासाश्च समाप्ताः ॥

अथरुद्रपूजनं ॥ दर्पणे—१ नमस्तइत्यावाहनं ॥ २ चतुःस्त्रक्तिरित्यासनं ॥ ३ नमःस्त्रुत्यायेतिपाद्यं ॥ ४ नमःशंभवायेत्यर्घः ॥ ५ त्र्यम्बकमित्याचमनीयं ॥ ६ मानस्तोकइतिस्नानं ॥ ७ नमोहिरण्यबाहवइत्यस्त्रं ॥ ८ नमोवःकिरिकेभ्यइत्युपवीतं ॥ ९ नमःश्वभ्यइतिगन्धाः ॥ १० नमःपार्यायचेतिपुष्पाणि ॥ ११ नमःकपर्दिनेचेतिधूपः ॥ १२ नमआशवेचेतिदीपः ॥ १३ नमोज्येष्ठायचेतिनैवेद्यं ॥ १४ नमस्तक्षभ्यइतिताम्बूलं ॥ १५ नमःश्वभ्यइतिदक्षिणाः ॥ १६ नमोह्रस्वायचेतिपुष्पाञ्जलिः ॥ इतिदर्पणोक्तारुद्रपूजा ॥

अथाभिषेकादौरुद्रैकादशिन्यादिप्रकाराः ॥ तत्ररुद्रस्यपञ्चभेदाः । तेच ॥ रूपं १ रुद्री २ रुद्रः ३ महारुद्रः ४ अतिरुद्रः ५ चेति । रूपंसकृदावर्तनं । रुद्रीएकादशिनी । रुद्रोलघुरुद्रः । महारुद्राऽतिरुद्रौप्रसिद्धौ । तदुक्तंमहाकल्पेनन्दिकेश्वरशतानन्दसंवादे—शृणुष्वभोमहाप्राज्ञरुद्रभेदान्वदामिते । रुद्राःपञ्चविधाःप्रोक्तादेशिकैरुत्तरोत्तरम् ॥ साङ्गस्त्वाद्योरूपकाख्यःसशीर्षोरुद्रउच्यते । एकादशगुणैस्तद्वत्रुद्रीसंज्ञोद्वितीयकः ॥ एकादशभिरेताभिस्तृतीयोलघुरुद्रकः । लघ्वेकादशभिःप्रोक्तोमहारुद्रश्चतुर्थकः ॥ पञ्चमःस्यान्महारुद्रैरेकादशभिरंतिमः । अतिरुद्रःसमाख्यातःसर्वेभ्योह्युत्तमोत्तमः ॥ इति ॥

अथरुद्रस्यषडङ्गानि ॥ तदुक्तंमहाकल्पेनन्दिकेश्वरशतानन्दसंवादे—शिवंसंकल्पंहृदयंसूक्तंस्यात्पौरुषंशिरः । प्राहुर्नारायणंचैवशिखांतस्योत्तराभिधम् ॥ आशुःशिशानःकवचंनेत्रंविभ्राड्बृहत्स्मृतम् । शतरुद्रीयमस्त्रंस्यात्षडङ्गक्रमईरितः । इति ॥

१ शिवसंकल्पेत्येकैकस्य क्रमाणामान्।

सप्तदशर्चमप्रतिरथंकवचं ॥ आशुःशिशानइतिद्वादशर्चमप्रतिरथमित्याहुस्तस्माद्ब्रह्माप्रतिरथंजपत्याशुःशिशानोवृषभोनभीमइ-
त्येताभिरैन्द्रीभिर्द्वादशभवन्तीतिश्रुतेरितिरुद्रसूत्रे । रुद्रकल्पद्रुमे अप्रतिरथंआशुःशिशानइतिद्वादशर्चमेवनिर्णीतं । सर्वानुक्रम-
णिकायामपि आशुरैन्द्रीद्वादशत्रिष्टुभोऽप्रतिरथइतिआशुःशिशानइतिद्वादशर्चस्याप्रतिरथसंज्ञाउक्ता । कर्काचार्यास्तु श्रा-
द्धसूत्रभाष्येपित्र्यमन्त्रान्पुरुषसूक्तमप्रतिरथमन्यानिचपवित्राणीत्यत्राप्रतिरथंआशुःशिशानइतिसप्तदशेतिव्याख्यातवन्तः ।
आहवनीयेप्रणीयमानेअप्रतिरथस्यद्वादशकुर्वन्नितिकात्यायनसूत्रेणसप्तदशर्चस्यैवाप्रतिरथेतिसंज्ञाषष्ठ्याअवसीयते । यदि-
द्वादशर्चस्यैवाप्रतिरथसंज्ञास्यात् । तदाप्रतिरथमितिद्वितीयैवसूत्रितास्यादित्यभिप्रायस्तेषाम् । युक्तंचैतत् । रुद्रजपादौ
यर्माप्रतिरथंतस्याविभ्राड्बृहच्चलोचनमित्यत्रसप्तदशर्चस्यैवशिष्टानांपाठात् इतितस्मिन्रुद्रान्जपित्वाप्रतिरथꣳराक्षोघ्नंचसूक्त-
मित्यस्मिन्सूत्रे दीक्षितकामदेवकृतभाष्ये । एवंचाप्रतिरथस्याशुःशिशानइतिसप्तदशैवऋचः । नद्वादशेत्यर्थः । रौ-
द्राध्यायस्यआद्योनुवाकःषोडशर्चएवशतरुद्रियमित्येके । सकलोरुद्राध्यायएवशतरुद्रियमित्यपरेच । इत्यस्त्राङ्गविषयेपक्ष-
द्वयं । पञ्चाङ्गानितैत्तिरीयाणांषडङ्गानिनियमेनवाजसनेयिनां इतिपञ्चाङ्गानांषडङ्गानांचव्यवस्थितोविकल्पः ॥ ॥ रुद्र-
पाठक्रममाह तत्रैवमहाकल्पेनन्दिकेश्वरशतानन्दसंवादे—पूर्वमङ्गानिसंजप्यरुद्राध्यायंततोजपेत् । तिसृणांमहाव्याहृती-
नाꣳरुद्रस्यचादावितिचत्वारोन्तेचैवमित्यष्टौप्रणवाः । अष्टप्रणवयुक्तꣳरुद्रꣳसकृज्जपेत् । रौद्राध्यायꣳरुद्रमित्याचक्षतइति-
रुद्रसूत्रम् ॥ तदन्तेसप्तमन्त्रांश्चवयꣳसोममहच्छिरः । उग्रश्चेतियजुर्मन्त्रंजटामाहुर्जपेदिति । सप्तमन्त्रानितिकाण्वाभि-

प्रायं । तेषांसंहितायांसप्तकण्डिकानामेवसमाम्नानात् । माध्यंदिनानांतुवयꣳसोमेत्यष्टर्चैएव ॥ परशुरामः—लिङ्गो-
क्तादेवताश्चास्यउग्रश्चत्रितयंयजुः । विनियोगोजटाजाप्येकेचित्सप्तजपन्त्यृचः । इति । तेनउग्रश्चेतिमन्त्रत्रयं सप्तमन्त्रावा-
जटाइतिपक्षद्वयं । तत्रदेवयाज्ञिकादिभिस्तु—साङ्गस्त्वाद्योरूपकाख्यःसशीर्षोरुद्रउच्यतइत्यादिपूर्वोक्तवाक्येपुहेमाद्रिमहा-
र्णवादिनिबन्धेपुजटाजपविध्यदर्शनाज्जटाजपोनोपात्तः । तेनजटाजपःकृताकृतइत्युक्तं । एवंवयꣳसोमेतिमहच्छिरोजपो-
पिकृताकृतः । क्वचिद्विहितत्वेनक्वचिच्चाविहितत्वेनेति । अतश्चअनयोर्जपात्फलाधिक्यंनतुतदकरणेरुद्रवैगुण्यं । गुणविशे-
पेफलविशेषइतिकात्यायनोक्तेरिति ॥ एवं—नमकंचमकंचैवपौरुषंसूक्तमेवच । नित्यंत्रयंप्रयुञ्जानोब्रह्मलोकेमहीयते ॥ इ-
तिकाशीदीक्षितपद्धतौचमकजपोप्युक्तः । परंतद्वचनंस्वतन्त्रफलार्थतयानमकादित्रिकप्रयोगविधानपरम् । साङ्गस्त्वाद्योरू-
पकाख्यःसशीर्षोरुद्रउच्यते । इत्यादिपूर्वोदाहृतवाक्यैश्चमकजपस्याविधानाभावात् बृहत्पराशरादावप्यनभिधानाच्च वा-
जसनेयिनांचमकजपोवैकल्पिकएवेत्युक्तं । एवंचचमकजपोपिकृताकृतः । तत्रचमकजपकरणपक्षेमहच्छिरोजपानन्तरंच-
मकजपःकार्यइतिदेवयाज्ञिकादयः । केचित्तुचमकजपपक्षेनमहच्छिरोजपः । महच्छिरोजपपक्षेतुनचमकजपः । नमकज-
पान्तेउभयोर्विधानात् । पौर्वापर्यनियमेतयोःप्रमाणाभावाच्च । अतएवयेमहच्छिरोजपमाचरन्तिनतेचमकजपमाचरन्ति ।
येतुचमकजपमाचरन्तिनतेमहच्छिरोजपमाचरन्तीत्याहुः । इदमेवयुक्ततरमिति । अन्तेऋचंवाचमितिसकलःशान्त्यध्यायः-
सर्वत्र । द्यौःशान्तिरितिकण्डिकाजपोवा । ॐशान्तिःशान्तिःशान्तिरितित्रिरुच्चारणंवा ॥ ॥ तथाचसकृदावर्तनस्वरूपम् ।

साङ्गस्त्वाद्योरूपकाख्यः सशीर्षोरुद्रउच्यत इति । तथाचशिवसंकल्पं हृदयं ६। पौरुषंसूक्तंशिरः १६ । अद्भ्यःसंभृतः शिखा ६ । आशुःशिशानःकवचं १७। विभ्राट्नेत्रत्रयं १७। रौद्राध्यायस्य प्रथमोनुवाकः १६ । रौद्राध्यायःसकलोवा अस्त्रं ६६ । इतिषडङ्गानि । तदनन्तरंसकलोरौद्राध्यायःसकृत् ॥ सच । ॐभूः ॐभुवः ॐस्वः ॐनमस्तेरुद्र० जम्भेदध्मः ६६ ॐभूः ॐभुवः ॐस्वः ॐइत्यष्टप्रणवयुक्तः । वयꣳसोमेतिमहच्छिरोवा ८ । वाजश्चमे २९ इत्यष्टावनुवाकावा । उग्रश्चेतितिस्रः ३ सप्त ७ वेतिजटाजपोवा । ऋचंवाचमितिशान्त्यध्यायः २४ । द्यौःशान्तिरितिकण्डिकावा । ॐशान्तिःशान्तिरितित्रिरुच्चारणंवा ॥ इतिरूपकापरपर्यायसकृदावर्तनस्वरूपम् ॥ ॥ अथरुद्रैकादशिनीविचारःप्रयोगदर्पणे—एकादशोर्ध्वरूपाणित्वङ्गानिचसकृज्जपेत् । अङ्गान्यादौशिरश्चान्तेरुद्रैकादशिनीस्मृता ॥ अङ्गानिशिवसंकल्पादीनिशतरुद्रियपर्यन्तानिषडङ्गानिजस्वाएकादशवारंऊर्ध्वरूपसंज्ञकंरुद्राध्यायंसकलंजस्वाअन्तेवयꣳसोमेत्यनुवाकरूपंशिरोयदाजप्यतेतदासारुद्रीप्रसिद्धाभवति ॥ केचित्तु—साङ्गमाद्यंजपेद्रुद्रंकेवलानिनवान्तरे । साङ्गंसशीर्षकंचान्त्यंनिरङ्गमितिकेचनेति । अत्रादावन्तेसाङ्गजपपक्षेचप्रधानभूतस्यरुद्रस्यएकादशावृत्तयोनजाताइतिरुद्राणांसमाप्तिंविनाअन्तरापुनःषडङ्गन्यासस्तत्रनकिंचित्प्रमाणंपश्यामः ॥ तस्मादेकादशोर्ध्वरूपाणीतिप्रथमःपक्षःसाधुरिति ॥ शान्तिकमलाकरे—यत्तुकातीयाःकाण्वाश्चपरशुरामीयंपठन्ति—साङ्गमाद्यंजपेद्रुद्रंकेवलानिनवान्तरे । साङ्गंसशीर्षकंचान्त्यंनिरङ्गमितिकेचनेति । अन्त्यंरूपंपठित्वाङ्गानीतिकेचित् । अन्येतुसंपुटेमानाभावात् प्रथमावृत्तिवदादावङ्गानिततोस्ततो वयꣳ

सोमेत्यष्टावृचःशीर्षं उग्रश्चेतिसप्तजटापाठश्चेत्याहुस्तद्वचनाभावान्निर्मूलमन्धपरंपरामात्रमित्युपेक्ष्यमिति ॥ अथरुद्रैकादशिन्यांप्रतिरुद्रंवाजश्चमइत्यष्टानुवाकानामेकादशधाकृतानां एकमेकंजपेत् इति । तद्यथा—आद्येपठितेरुद्रेवाजश्चमइतिचतस्रः ४ । द्वितीयेसत्यंचेतिचतस्रः ४ । तृतीयेऊर्क्चेतिचतस्रः ४ । तुरीयेअश्माचेतितिस्रः ३ । पञ्चमेअग्निश्चेतिअर्धेन्द्रसंज्ञाः ३ इतिपञ्चानुवाकाः । षष्ठेअंशुश्चेतिग्रहसंज्ञाः ३ । सप्तमेअग्निश्चमेघर्मश्चमेइतियज्ञक्रतुसंज्ञे २ । अष्टमे एकाचेति अयुग्मस्तोमसंज्ञा १ । नवमेचतस्रश्चमइतियुग्मस्तोमसंज्ञा १ । दशमेत्र्यविश्चमइतिवयःसंज्ञे २ । एकादशेवाजायस्वाहेतिनामग्रहकल्पसंज्ञे २ । इतित्रयोनुवाकाविभक्ताः । एवमष्टानुवाकानांएकादशधाविभागः श्रुत्युक्तोपिविषयान्तराभावाच्चयनविषयकएवेतिबोध्यं ॥ अतएवशान्तिकमलाकरे—'तत्वंतुविभागेष्वनुवाकत्वाभावान्नमकानुवाकेष्वेकादशानामनुवाकानामेकमेकंवाजपे' दितिबौधायनसूत्रहेमाद्र्यादावनुवाकानुषंगाचान्त्यस्यैवाष्टमस्यचमकानुवाकस्यत्रिरभ्यासोयुक्तः ॥ सामिधेनीवृद्धौस्तोमवृद्धौप्रयाजवृद्धौचअन्त्यस्यैवमन्त्रस्याभ्यासेनसंख्यापूरणवदित्युक्तं ॥ एवंच अष्टसुनमकावर्तनेपुक्रमेणचमकानां अष्टावनुवाकाः । नवमदशमैकादशेपु अष्टमस्यैवानुवाकस्यावृत्तिः । एवमेकादशानुवाकाइत्यर्थः । तथाचआद्येपठितेरुद्रेवाजश्चमे ४ द्वितीयेसत्यंचमे ४ तृतीयेऊर्क्चमे ४ चतुर्थेअश्माचमे ३ पञ्चमेअग्निश्चमइन्द्रश्चमे ३ षष्ठेअंशुश्चमे ५ सप्तमेएकाचमे ४ अष्टमेवाजायस्वाहा २ नवमेवाजायस्वाहा २ दशमेवाजायस्वाहा २ एकादशेवाजायस्वाहा २ एवमे-

कादशानुवाकाः । अन्यत्सर्वंपूर्वोक्तसकृदावर्तनवत् ॥ ॥ अथलघुरुद्रस्वरूपं ॥ रुद्रैकादशिनीत्वेषासर्वकामफलप्रदा । एकादशगुणासैवरुद्रइत्यभिधीयते ॥ रुद्रोलघुरुद्रइत्यर्थः । इतिलघुरुद्रस्वरूपं ॥ ॥ अथमहारुद्रस्वरूपं ॥ रुद्रएकादशगुणोमहानित्यभिधीयते । रुद्रो लघुरुद्रः एकादशगुणितोमहारुद्रः ॥ इतिमहारुद्रस्वरूपं ॥ ॥ अथातिरुद्रस्वरूपं ॥ महानेकादशगुणस्त्वतिरुद्रइहोच्यते ॥ महान्महारुद्रः एकादशगुणः अतिरुद्रइत्यर्थः ॥ रुद्रकल्पद्रुमेचास्मिन्रुद्रभेदानिरूपिताः । विदुपानन्तदेवेनतेनतुष्यतुशंकरः ॥ इति ॥

अथरुद्राष्टाध्यायी ॥ अथशिवसंकल्पंत्द्दयंप्रथमोऽध्यायः ॥ ॐयज्जाग्ग्रतोदूरमुदैतिदैवन्तदुसुप्तस्यतथैवैति । दूरंगमञ्ज्योतिषाञ्ज्योतिरेकन्तन्मेमनः शिवसङ्कल्पमस्तु ॥ १ ॥ येनकर्माण्यपसोमनीषिणोयज्ञेकृण्वन्तिविदथेषुधीराः । यदपूर्वंयक्षमन्तःप्रजानान्तन्मेमनः शिवसङ्कल्पमस्तु ॥ २ ॥ यत्प्रज्ञानमुतचेतोधृतिश्चयज्ज्योतिरन्तरमृतम्प्रजासु । यस्मान्नऽऋतेकिञ्चनकर्मक्रियतेतन्मेमनः शिवसङ्कल्पमस्तु ॥ ३ ॥ येनेदम्भूतम्भुवनम्भविष्यत्परिगृहीतममृतेनसर्वम् । येनयज्ञस्तायतेसप्तहोतातन्मेमनः शिवसङ्कल्पमस्तु ॥ ४ ॥ यस्मिन्नृचःसामयजूꣳषियस्मिन्प्रतिष्ठितारथनाभाविवाराः । यस्मिँश्चित्तꣳसर्वमोतम्प्रजानान्तन्मेमनः शिवसङ्कल्पमस्तु ॥ ५ ॥ सुषारथिरश्वानिवयन्मनुष्यान्नेनीयतेभीशुभिर्वाजिनऽइव । हृत्प्रतिष्ठन्यदजिरञ्जविष्ठन्तन्मेमनः शिवसङ्कल्पमस्तु ॥ ६ ॥ इतिरुद्रेप्रथमोऽध्यायः ॥ १ ॥ ॥ अथपौरुषंसूक्तंशिरोद्विती-

योऽध्यायः ॥ ॐ ॥ सहस्रशीर्षापुरुषःसहस्राक्षःसहस्रपात् । सभूमिꣳसर्वतस्पृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ १ ॥ पुरुषए-
वेदꣳसर्वंयद्भूतंयच्चभाव्यम् । उतामृतत्वस्येशानोयदन्नेनातिरोहति ॥ २ ॥ एतावानस्यमहिमातोज्ज्यायाँश्चपूरुषः ।
पादोस्यविश्वाभूतानित्रिपादस्यामृतन्दिवि ॥ ३ ॥ त्रिपादूर्ध्वऽउदैत्पुरुषःपादोस्येहाभवत्पुनः । ततोविष्वङ्व्यक्रा-
मत्साशनानशनेऽअभि ॥ ४ ॥ ततोविराडजायतविराजोऽअधिपूरुषः । सजातोऽअत्यरिच्यतपश्चाद्भूमिमथोपुरः ॥५॥
तस्माद्यज्ञात्सर्वहुतःसम्भृतम्पृषदाज्यम् । पशूँस्ताँश्चक्रेवायव्यानारण्यान्ग्राम्याश्चये ॥ ६ ॥ तस्माद्यज्ञात्सर्वहुतऋचःसा-
मानिजज्ञिरे । छन्दाꣳसिजज्ञिरेतस्माद्यजुस्तस्मादजायत ॥ ७ ॥ तस्मादश्वाऽअजायन्तयेकेचोभयादतः । गावोहज-
ज्ञिरेतस्मात्तस्माज्जाताऽअजावयः ॥ ८ ॥ तंयज्ञम्बर्हिषिप्रौक्षन्पुरुषञ्जातमग्रतः । तेनदेवाऽअयजन्तसाध्याऽऋषयश्चये
॥ ९ ॥ यत्पुरुषंव्यदधुःकतिधाव्यकल्पयन् । मुखङ्किमस्यासीत्किम्बाहूकिमूरूपादाऽउच्येते ॥ १० ॥ ब्राह्मणोस्यमु-
खमासीद्बाहूराजन्यःकृतः । ऊरूतदस्ययद्वैश्यःपद्भ्याꣳशूद्रोऽअजायत ॥ ११ ॥ चन्द्रमामनसोजातश्चक्षोःसूर्योअजायत ।
श्रोत्राद्वायुश्चप्राणश्चमुखादग्निरजायत ॥ १२ ॥ नाभ्याऽआसीदन्तरिक्षꣳशीर्ष्णोद्यौःसमवर्त्तत । पद्भ्याम्भूमिर्दिशःश्रो-
त्रात्तथालोकाँ २ ऽअकल्पयन् ॥ १३ ॥ यत्पुरुषेणहविषादेवायज्ञमतन्वत । वसन्तोऽस्यासीदाज्यङ्ग्रीष्मऽइध्मःशरद्ध-
विः ॥ १४ ॥ सप्तास्यासन्परिधयस्त्रिःसप्तसमिधःकृताः । देवायद्यज्ञन्तन्वानाऽअबध्नन्पुरुषम्पशुम् ॥ १५ ॥ यज्ञेन-

यज्ञेनयज्ञमयजन्तदेवास्तानिधर्माणिप्रथमान्यासन् । तेहनाकम्महिमानः सचन्तयत्रपूर्वेसाध्याःसन्तिदेवाः ॥ १६ ॥ इतिरुद्रे-
द्वितीयोऽध्यायः ॥ २ ॥ ॥ अथोत्तरनारायणंशिखातृतीयोऽध्यायः ॥ ॐअद्भ्यःसम्भृतःपृथिव्यैरसाच्चविश्वकर्मणः
समवर्त्तताग्रे । तस्यत्वष्टाविदधद्रूपमेतितन्मर्त्यस्यदेवत्वमाजानमग्रे ॥ १ ॥ वेदाहमेतम्पुरुषम्महान्तमादित्यवर्णन्तमसः
परस्तात् । तमेवविदित्वातिमृत्युमेतिनान्यःपन्थाविद्यतेयनाय ॥ २ ॥ प्रजापतिश्चरतिगर्भेऽअन्तरजायमानोबहुधावि-
जायते । तस्ययोनिम्परिपश्यन्तिधीरास्तस्मिन्हतस्थुर्भुवनानिविश्वा ॥ ३ ॥ योदेवेभ्यआतपतियोदेवानाम्पुरोहितः ।
पूर्वोयोदेवेभ्योजातोनमोरुचायब्राह्मये ॥ ४ ॥ रुचम्ब्राह्मञ्जनयन्तोदेवाअग्रेतदब्रुवन् । यस्त्वैवम्ब्राह्मणोविद्यात्तस्यदेवाऽ-
असन्वशे ॥ ५ ॥ श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तम् । इष्णन्निषाणामुम्मऽइषाणसर्व्व-
लोकम्मऽइषाण ॥ ६ ॥ इतिरुद्रेतृतीयोऽध्यायः ॥ ३ ॥ ॥ अथाप्रतिरथंसप्तदशर्चैकवचंचतुर्थोऽध्यायः ॥ ॐ ॥
आशुःशिशानोवृषभोनभीमोघनाघनःक्षोभणश्चर्षणीनाम् । सङ्क्रन्दनोनिमिषएकवीरःशतꣳसेनाऽअजयत्साकमिन्द्रः
॥ १ ॥ सङ्क्रन्दनेनानिमिषेणजिष्णुनायुत्कारेणदुश्च्यवनेनधृष्णुना । तदिन्द्रेणजयततत्सहध्वंयुधोनरऽइषुहस्तेनवृष्णा ॥२॥
सऽइषुहस्तैःसनिषङ्गिभिर्वशीसꣳस्रष्टासयुधऽइन्द्रोगणेन । सꣳसृष्टजित्सोमपाबाहुशर्ध्युग्रधन्वाप्रतिहिताभिरस्ता ॥ ३ ॥
बृहस्पतेपरिदीयारथेनरक्षोहामित्राँ २ ऽअपबाधमानः । प्रभञ्जन्त्सेनाःप्रमृणोयुधाजयन्नस्माकमेध्यविताऽरथानाम् ॥ ४ ॥

बलविज्ञायस्थविरःप्रवीरःसहस्वान्वाजीसहमानऽउग्रः। अभिवीरोअभिसत्त्वासहोजाजैत्रमिन्द्ररथमातिष्ठगोवित् ॥ ५ ॥
गोत्रभिदङ्गोविदंवज्रबाहुञ्जयन्तमज्मप्रमृणन्तमोजसा । इमꣳसजाताऽअनुवीरयध्वमिन्द्रꣳसखायोऽअनुसꣳरभध्वम् ॥ ६ ॥
अभिगोत्राणिसहसागाहमानोदयोवीरःशतमन्युरिन्द्रः । दुश्च्यवनःपृतनाषाडयुध्योस्माकꣳसेनाऽअवतुप्रयुत्सु ॥ ७ ॥ इन्द्र-
आसान्नेताबृहस्पतिर्दक्षिणायज्ञःपुरएतुसोमः । देवसेनानामभिभञ्जतीनाञ्जयन्तीनाम्मरुतोयन्त्वग्रम् ॥ ८ ॥ इन्द्रस्यवृष्णो
वरुणस्यराज्ञऽआदित्यानाम्मरुताꣳशर्द्धउग्रम् । महामनसाम्भुवनच्यवानाङ्घोषोदेवानाञ्जयतामुदस्थात् ॥९॥ उद्धर्षयमघव-
न्नायुधान्युत्सत्त्वनाम्मामकानाम्मनाꣳसि । उद्वृत्रहन्वाजिनांवाजिनान्युद्रथानाञ्जयतांयन्तुघोषाः ॥१०॥ अस्माकमिन्द्रः
समृतेषुध्वजेष्वस्माकंयाइषवस्ताजयन्तु । अस्माकंवीराऽउत्तरेभवन्त्वस्माँ२ऽउदेवाऽअवताहवेषु ॥११॥ अमीषाञ्चित्तम्प्रति-
लोभयन्तीगृहाणाङ्गान्यप्वेपरेहि । अभिप्रेहिनिर्दहहृत्सुशोकैरन्धेनामित्रास्तमसासचन्ताम् ॥१२॥ अवसृष्टापरापतशरव्ये-
ब्रह्मसꣳशिते । गच्छामित्रान्प्रपद्यस्वमामीषाङ्कञ्चनोच्छिषः ॥१३॥ प्रेताजयतानरऽइन्द्रोवःशर्मयच्छतु । उग्रावःसन्तुबाह-
वोनाधृष्यायथासथ ॥१४॥ असौयासेनामरुतःपरेषामभ्यैतिनऽओजसास्पर्द्धमाना । ताङ्गूहततमसापव्रतेनयथामीअन्यो-
अन्यन्नजानन् ॥१५॥ यत्रबाणाःसम्पतन्तिकुमाराविशिखाइव । तन्नइन्द्रोबृहस्पतिरदितिःशर्मयच्छतुविश्वाहाशर्मयच्छतु
॥१६॥ मर्माणितेवर्मणाच्छादयामिसोमस्त्वाराजामृतेनानुवस्ताम् । उरोर्वरीयोवरुणस्तेकृणोतुजयन्तन्त्वानुदेवामदन्तु

॥१७॥ ॥ इतिरुद्रेचतुर्थोऽध्यायः॥४॥ विभ्राडितिसप्तदशर्चोऽनुवाकोनेत्रत्रयंपंचमोऽध्यायः ॥ॐ॥ विभ्राड्बृहत्पिबतुसा-
म्यम्मध्वायुर्द्दधद्यज्ञपतावविह्रुतम् । वातजूतोयोअभिरक्षतित्त्मनाप्रजाःपुपोषपुरुधाविराजति ॥१॥ उदुत्त्यञ्जातवेदसन्देवं
वहन्तिकेतवः । दृशेविश्श्वायसूर्य्यम् ॥२॥ येनापावकचक्षसाभुरण्यन्तञ्जनाँऽअनु । त्वंवरुणपश्यसि ॥३॥ दैव्यावध्वर्यूऽआ-
गतᳬरथेनसूर्य्यत्त्वचा । मद्ध्वायज्ञᳬसमञ्जाथे । तम्प्रत्क्कथाऽयंवेनश्चित्रन्देवानाम् ॥ ४ ॥ तम्प्रत्क्कथापूर्व्वथाविश्श्वथेमथाज्ज्येष्ठ-
तातिम्बर्हिषदᳬस्वर्व्विदम् । प्रतीचीनंवृजनन्दोहसेधुनिमाशुञ्जयन्तमनुयासुवर्द्धसे ॥५॥ अयंवेनश्चोदयत्पृश्निगर्भाज्ज्योति-
र्ज्जरायूरजसोविमाने । इममपाᳬसङ्गमेसूर्य्यस्यशिशुन्नविप्प्रामतिभीरिहन्ति ॥ ६ ॥ चित्रन्देवानामुदगादनीकञ्चक्षुर्म्मित्रस्यव-
रुणस्याग्नेः । आप्राद्यावापृथिवीअन्तरिक्षᳬसूर्य्यआत्माजगतस्तस्थुषश्च ॥७॥ आनइडाभिर्व्विदथेसुशस्तिविश्श्वानरःसविता
देवएतु । अपियथायुवानोमत्सथानोविश्श्वञ्जगदभिपित्वेमनीषा ॥ ८ ॥ यदद्यकच्चवृत्रहन्नुदगाअभिसूर्य्य । सर्व्वन्तदिन्द्रतेवशे
॥९॥ तरणिर्व्विश्श्वदर्शतोज्ज्योतिष्कृदसिसूर्य्य । विश्श्वमाभासिरोचनम् ॥१०॥ तत्सूर्य्यस्यदेवत्वन्तन्महित्वम्मद्ध्याकर्त्तोर्व्विततᳬ
सञ्जभार । यदेदयुक्तहरितःसधस्थादाद्रात्रीवासस्तनुतेसिमस्मै ॥११॥ तन्मित्रस्यवरुणस्याभिचक्षेसूर्य्योरूपङ्कृणुतेद्योरुपस्थे ।
अनन्तमन्यद्रुशदस्यपाजःकृष्णमन्यद्धरितःसम्भरन्ति ॥१२॥ बण्महाँ २ असिसूर्य्यबडादित्यमहाँ २ असि । महस्तेसतोमहि-
मापनस्यतेद्धादेवमहाँ २ असि ॥ १३ ॥ बट्सूर्य्यश्रवसामहाँ २ असिसत्रादेवमहाँ २ असि । मन्ह्नादेवानामसुर्य्यःपुरोहितोविभु-

ज्योतिरदाभ्यम् ॥१४॥ श्रायन्तऽइवसूर्यंविश्वेदिन्द्रस्यभक्षत । वसूनिजातेजनमानओजसाप्रतिभागन्नदीधिम ॥ १५ ॥
अद्यादेवाउदितासूर्यस्यनिरꣳहसःपिपृतानिरवद्यात् । तन्नोमित्रोवरुणोमामहन्तामदितिःसिन्धुःपृथिवीउतद्यौः ॥१६॥
आकृष्णेनरजसावर्त्तमानोनिवेशयन्नमृतम्मर्त्यञ्च । हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन् ॥१७॥ इतिरुद्रेपंचमोऽध्यायः ॥ ५ ॥ ॥ नमस्तइतिषोडशर्चोऽनुवाकःसकलाध्यायोवाऽस्यपष्ठोऽध्यायः ॥ॐ॥ नमस्तेरुद्रमन्यवऽउतोतऽइषवेनमः । बाहुभ्यामुततेनमः ॥ १ ॥ यातेरुद्रशिवातनूरघोरापापकाशिनी । तयानस्तन्वाशन्तमयागिरिशन्ताभिचाकशीहि ॥२॥ यामिषुङ्गिरिशन्तहस्तेबिभर्ष्यस्तवे । शिवाङ्गिरित्रताङ्कुरुमाहिꣳसीःपुरुषञ्जगत् ॥३॥ शिवेनवचसात्वागिरिशाच्छावदामसि । यथानःसर्वमिज्जगदयक्ष्मꣳसुमनाअसत् ॥४॥ अध्यवोचदधिवक्ताप्रथमोदैव्योभिषक् । अहींश्चसर्वाञ्जम्भयन्सर्वाश्चयातुधान्योधराचीःपरासुव ॥ ५ ॥ असौयस्ताम्रोऽअरुणउतबभ्रुःसुमङ्गलः । येचैनꣳरुद्राअभितोदिक्षुश्रिताःसहस्रशोवैषाꣳहेडईमहे ॥ ६ ॥ असौयोवसर्पतिनीलग्रीवोविलोहितः । उतैनंगोपाअदृश्रन्नदृश्रन्नुदहार्यःसदृष्टोमृडयातिनः ॥ ७ ॥ नमोस्तुनीलग्रीवायसहस्राक्षायमीढुषे । अथोयेअस्यसत्वानोहन्तेभ्योकरन्नमः ॥ ८ ॥ प्रमुञ्चधन्वनस्त्वमुभयोरार्त्न्योर्ज्याम् । याश्चतेहस्तइषवःपराताभगवोवप ॥ ९ ॥ विज्ज्यन्धनुःकपर्दिनोविशल्योबाणवाँ२उत । अनेशन्नस्ययाऽइषवआभुरस्यनिषङ्गधिः ॥ १० ॥ यातेहेतिर्मीढुष्टमहस्तेबभूवतेधनुः । तयास्मान्विश्वतस्त्वमयक्ष्मयापरि-

भुज ॥११॥ परिंतेधन्न्वंनोहेतिरस्मान्न्वृणक्तुविश्वतः॑ । अथोयइंषुधिस्तवारेअस्मन्निधेहितम् ॥ १२ ॥ अवतत्यधनुष्ट्वᳬसहं-
स्राक्षशतेंषुधे । निशीर्य्यंशल्यानाम्मुखांशिवोनः॑सुमनांभव ॥ १३ ॥ नमंस्तआयुंधायानांततायधृष्णवें । उभाभ्यामुततेनमों
बाहुभ्यान्तवधन्वंने ॥ १४ ॥ मानोंमहान्तंमुतमानोंअर्भकम्मानुऽउक्षन्तमुतमानंउक्षितम् । मानोंवधीःपितरम्मोतमा-
तरम्मानंःप्रियास्तन्न्वोरुद्ररीरिषः ॥१५॥ मानंस्तोकेतनंयेमानुऽआयुंषिमानोगोषुमानोअश्वेषुरीरिषः । मानोंवीरान्रुद्रभा-
मिनोंवधीर्हविष्मन्तःसदमित्त्वांहवामहे ॥ १६ ॥ इतिरुद्रेषोडशर्चोऽनुवाकः ॥ नमोहिरंण्यबाहवे । सेनान्येंदिशाञ्चपत-
येनमोनमोंवृक्षेभ्योहरिंकेशेभ्यःपशूनाम्पतंयेनमोनमंःशष्पिञ्जरायुत्त्विषीमतेपथीनाम्पतंयेनमोनमोहरिंकेशायोपवीतिनें
पुष्टानाम्पतंयेनमोनमोंबभ्लुशायं ॥ १७ ॥ नमोंबभ्लुशायं । व्व्याधिनेन्नानाम्पतंयेनमोनमोंभवस्यहेत्यैजगंताम्पतंयेनमो-
नमोंरुद्रायांततायिनेंक्षेत्राणाम्पतंयेनमोनमंःसूतायाहंन्त्यैवनांनाम्पतंयेनमोनमोरोहिंताय ॥ १८ ॥ नमोरोहिंताय ।
स्थपतंयेवृक्षाणाम्पतंयेनमोनमोंभुवन्तयेंवारिवस्कृतायौषंधीनाम्पतंयेनमोनमोंमन्त्रिणेंवाणिजायकक्षाणाम्पतंयेनमोनमंउ-
च्चैर्घोषायाक्रन्दयंतेपत्तीनाम्पतंयेनमोनमंःकृत्स्नायतयां ॥ १९ ॥ नमंःकृत्स्नायतया । धावंतेसत्त्वंनाम्पतंयेनमोनमःस-
हमानायनिव्व्याधिनंआव्व्याधिनींनाम्पतंयेनमोनमोंनिषङ्गिणेंककुभायंस्तेनानाम्पतंयेनमोनमोंनिचेरवेंपरिचरायारण्यानां-
म्पतंयेनमोनमोवञ्चंते ॥ २० ॥ नमोवञ्चंते । परिवञ्चंतेस्तायूनाम्पतंयेनमोनमोंनिषङ्गिणंऽइषुधिमतेतस्कंराणाम्पतंये

नमोनमः सृकायिभ्योजिघांꣳसद्भ्योमुष्णताम्पतयेनमोनमोसिमद्भ्योनक्तञ्चरद्भ्योविकृन्तानाम्पतयेनमः ॥ २१ ॥ नमउ-
ष्णीषिणे । गिरिचरायकुलुञ्चानाम्पतयेनमोनमइषुमद्भ्योधन्वायिभ्यश्चवोनमोनमआतन्वानेभ्यः प्रतिदधानेभ्यश्चवोन-
मोनमआयच्छद्भ्योस्यद्भ्यश्चवोनमोनमोविसृजद्भ्यः ॥ २२ ॥ नमोविसृजद्भ्यो । विध्यद्भ्यश्चवोनमोनमः स्वपद्भ्योजाग्र-
द्भ्यश्चवोनमोनमःशयानेभ्यआसीनेभ्यश्चवोनमोनमस्तिष्ठद्भ्योधावद्भ्यश्चवोनमोनमः सभाभ्यः ॥ २३ ॥ नमः सभा-
भ्यः । सभापतिभ्यश्चवोनमोनमोश्वेभ्योश्वपतिभ्यश्चवोनमोनमआव्याधिनीभ्योविविध्यन्तीभ्यश्चवोनमोनमउगणा-
भ्यस्तृꣳहतीभ्यश्चवोनमोनमोगणेभ्यः ॥ २४ ॥ नमोगणेभ्यो । गणपतिभ्यश्चवोनमोनमोव्रातेभ्योव्रातपतिभ्यश्च-
वोनमोनमोगृत्सेभ्योगृत्सपतिभ्यश्चवोनमोनमोविरूपेभ्योविश्वरूपेभ्यश्चवोनमोनमःसेनाभ्यः ॥ २५ ॥ नमःसेनाभ्यः ।
सेनानिभ्यश्चवोनमोनमोरथिभ्योऽअरथेभ्यश्चवोनमोनमः क्षत्तृभ्यः सङ्ग्रहीतृभ्यश्चवोनमोनमोमहद्भ्योऽअर्भकेभ्यश्चवो-
नमः ॥ २६ ॥ नमस्तक्षभ्यो । रथकारेभ्यश्चवोनमोनमःकुलालेभ्यःकर्मारेभ्यश्चवोनमोनमोनिषादेभ्यः पुञ्जिष्ठेभ्यश्चवो-
नमोनमः श्वनिभ्योमृगयुभ्यश्चवोनमोनमःश्वभ्यः ॥ २७ ॥ नमःश्वभ्यः । श्वपतिभ्यश्चवोनमोनमोभवायचरुद्रायच-
नमः शर्वायचपशुपतयेचनमोनीलग्रीवायचशितिकण्ठायचनमः कपर्दिने ॥ २८ ॥ नमः कपर्दिने । च्व्युप्तकेशायच-
नमः सहस्राक्षायचशतधन्वनेचनमोगिरिशयायचशिपिविष्टायचनमोमीढुष्टमायचेषुमतेचनमोह्रस्वाय ॥ २९ ॥ नमो-

ह्रस्वाय । चवामनायचनमोबृहतेचवर्षीयसेचनमोवृद्धायचसवृधेचनमोग्र्यायचप्रथमायचनमआशवे ॥ ३० ॥ नमआ-
शवे । चाजिरायचनमःशीघ्र्यायचशीभ्यायचनमऊर्म्यायचावस्वन्यायचनमोनादेयायचद्वीप्यायच ॥ ३१ ॥ नमोज्ज्ये-
ष्ठाय । चकनिष्ठायचनमःपूर्वजायचापरजायचनमोमध्यमायचापगल्भायचनमोजघन्यायचबुध्न्यायचनमःसोभ्याय ॥३२॥
नमःसोभ्याय । चप्रतिसर्यायचनमोयाम्यायचक्षेम्यायचनमःश्लोक्यायचावसान्यायचनमउर्वर्यायचखल्यायचनमोव-
न्याय ॥ ३३ ॥ नमोवन्याय । चकक्ष्यायचनमःश्रवायचप्रतिश्रवायचनमआशुषेणायचाशुरथायचनमःशूरायचाव-
भेदिनेचनमोबिल्मिने ॥ ३४ ॥ नमोबिल्मिने । चकवचिनेचनमोवर्मिणेचवरूथिनेचनमःश्रुतायचश्रुतसेनायचनमोदु-
न्दुभ्यायचाहनन्यायचनमोधृष्णवे ॥ ३५ ॥ नमोधृष्णवे । चप्रमृशायचनमोनिषङ्गिणेचेषुधिमतेचनमस्तीक्ष्णेषवेचायुधि-
नेचनमःस्वायुधायचसुधन्वनेच ॥ ३६ ॥ नमःस्रुत्याय । चपथ्यायचनमःकाट्यायचनीप्यायचनमःकुल्यायचसरस्या-
यचनमोनादेयायचवैशन्तायचनमःकूप्याय ॥ ३७ ॥ नमःकूप्याय । चावट्यायचनमोवीध्र्यायचातप्यायचनमोमे-
घ्यायचविद्युत्यायचनमोवर्ष्यायचावर्ष्यायचनमोवात्याय ॥ ३८ ॥ नमोवात्याय । चरेष्म्यायचनमोवास्तव्यायचवास्तु-
पायचनमःसोमायचरुद्रायचनमस्ताम्रायचारुणायचनमःशङ्गवे ॥ ३९ ॥ नमःशङ्गवे । चपशुपतयेचनमउग्रायचभी-
मायचनमोग्रेवधायचदूरेवधायचनमोहन्त्रेचहनीयसेचनमोवृक्षेभ्योहरिकेशेभ्योनमस्ताराय ॥ ४० ॥ नमःशम्भवाय ।

चमयोभवायचनमः शङ्करायचमयस्करायचनमः शिवायचशिवतरायच ॥ ४१ ॥ नमः पार्याय । चावार्यायचनमः प्रत-
रणायचोत्तरणायचनमस्तीर्थ्यायचकूल्यायचनमः शष्प्यायचफेन्यायचनमः सिकत्याय ॥ ४२ ॥ नमः सिकत्याय । च-
प्रवाह्यायचनमः किꣳशिलायचक्षयणायचनमः कपर्दिनेचपुलस्तयेचनमऽइरिण्यायचप्रपथ्यायचनमोव्व्रज्याय ॥ ४३ ॥
नमोव्व्रज्याय । चगोष्ठ्यायचनमस्तल्प्यायचगेह्यायचनमोहृदय्यायचनिवेष्प्यायचनमः काट्यायचगह्वरेष्ठायचनमः शुष्क्या-
य ॥ ४४ ॥ नमः शुष्क्याय । चहरित्यायचनमः पाꣳसव्यायचरजस्यायचनमोलोप्यायचोलप्यायचनमऽऊर्व्यायच-
सूर्व्यायचनमः पर्णाय ॥ ४५ ॥ नमः पर्णाय । चपर्णशदायचनमऽउद्गुरमाणायचाभिघ्नतेचनमऽआखिदतेचप्रखिदते-
चनमऽइषुकृद्भ्योधनुष्कृद्भ्यश्चवोनमोनमोवः किरिकेभ्योदेवानाꣳहृदयेभ्योनमोविचिन्वत्केभ्योनमोविक्षिणत्केभ्योनमऽआ-
निर्हतेभ्यः ॥ ४६ ॥ द्रापेऽअन्धसस्पतेदरिद्रनीललोहित । आसाम्प्रजानामेषाम्पशूनाम्माभेर्मारोङ्मोचनः किञ्चनाम-
मत् ॥ ४७ ॥ इमारुद्राय । तवसेकपर्दिनेक्षयद्वीरायप्रभरामहेमतीः । यथाशमसद्द्विपदेचतुष्पदेविश्वम्पुष्टङ्ग्रामेऽअस्मि-
न्ननातुरम् ॥ ४८ ॥ याते । रुद्रशिवातनूः शिवाविश्वाहाभेषजी । शिवारुतस्यभेषजीतयानोमृडजीवसे ॥ ४९ ॥ परि-
नोरुद्रस्यहेतिर्वृणक्तुपरित्वेषस्यदुर्मतिरघायोः । अवस्थिरामघवद्भ्यस्तनुष्वमीढ्वस्तोकायतनयायमृड ॥ ५० ॥ मीढुष्टम-
शिवतमशिवोनः सुमनाभव । परमेवृक्षऽआयुधन्निधायकृत्तिंवसानऽआचरपिनाकम्बिभ्रदागहि ॥ ५१ ॥ विकिरिद्रवि-

लोहितनमस्तेऽअस्तुभगवः । यास्तेसहस्रꣳहेतयोन्यमुस्मन्निवपन्तुताः ॥ ५२ ॥ सहस्राणिसहस्रशोबाह्वोस्तवहेतयः ।
तासामीशानोभगवःपराचीनामुखाकृधि ॥ ५३ ॥ असंख्याताsहस्राणियेरुद्राऽअधिभूम्याम् । तेषाꣳसहस्रयोजनेव-
धन्वानितन्मसि ॥ ५४ ॥ अस्मिन्महत्यर्णवेन्तरिक्षेभवाऽअधि । तेषाꣳसहस्रयोजनेवधन्वानितन्मसि ॥ ५५ ॥ नील-
ग्रीवाःशितिकण्ठादिवꣳरुद्राऽउपश्रिताः । तेषाꣳसहस्रयोजनेवधन्वानितन्मसि ॥ ५६ ॥ नीलग्रीवाःशितिकण्ठाःशु-
र्वाअधःक्षमाचराः । तेषाꣳसहस्रयोजनेवधन्वानितन्मसि ॥ ५७ ॥ येवृक्षेषु । शष्पिञ्जरानीलग्रीवाविलोहिताः ।
तेषाꣳसहस्रयोजनेवधन्वानितन्मसि ॥ ५८ ॥ येभूतानामधिपतयोविशिखासःकपर्दिनः । तेषाꣳसहस्रयोजनेवध-
न्वानितन्मसि ॥ ५९ ॥ येपथाम्पथिरक्षयऽऐलबृदाआयुर्युधः । तेषाꣳसहस्रयोजनेवधन्वानितन्मसि ॥ ६० ॥ येती-
र्थानि । प्रचरन्तिसृकाहस्तानिषङ्गिणः । तेषाꣳसहस्रयोजनेवधन्वानितन्मसि ॥ ६१ ॥ येन्नेषु । विविध्यन्तिपात्रेषु-
पिबतोजनान् । तेषाꣳसहस्रयोजनेवधन्वानितन्मसि ॥ ६२ ॥ यऽएतावन्तश्चभूयाꣳसश्चदिशोरुद्रावितस्थिरे । ते-
षाꣳसहस्रयोजनेवधन्वानितन्मसि ॥६३॥ नमोस्तु । रुद्रेभ्योयेदिवियेषांवर्षमिषवः । तेभ्योदशप्राचीर्दशदक्षिणादशप्रती-
चीर्दशोदीचीर्दशोर्ध्वाः । तेभ्योनमोअस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः ॥६४॥ नमोस्तु ।
रुद्रेभ्योयेन्तरिक्षेयेषांवातऽइषवः । तेभ्योदशप्राचीर्दशदक्षिणादशप्रतीचीर्दशोदीचीर्दशोर्ध्वाः । तेभ्योनमोऽअस्तुतेनो-

वन्तुतेनोमृडयन्तुतेयन्द्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः ॥ ६५ ॥ नमोस्तु । रुद्रेभ्योयेपृथिव्यांयेषामन्नमिषवः । तेभ्योद-
शप्राचीर्दशदक्षिणादशप्रतीचीर्दशोदीचीर्दशोर्द्ध्वाः । तेभ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्मोयश्चनोद्वेष्टितमेषाञ्ज-
म्भेदध्मः ॥६६॥ इतिरुद्रेषष्ठोऽध्यायः ॥६॥ ॥ वयꣳसोमेतिमहच्छिरःसप्तमोऽध्यायोवैकल्पिकः ॥ ॐ ॥ वयꣳसोमव्व्रते-
तवमनस्तनूषुबिभ्रतः । प्रजावन्तꣳसचेमहि ॥१॥ एषते । रुद्रभागःसहस्वस्राम्बिकयातञ्जुषस्वस्वाहैषतेरुद्रभागऽआखुस्तेपशुः
॥ २ ॥ अवरुद्रमदीमह्यवदेवंत्र्यम्बकम् । यथानोवस्यसस्करद्यथानःश्रेयसस्करद्यथानोव्व्यवसाययात् ॥ ३ ॥ भेषजमसि ।
भेषजङ्गवेश्वायपुरुषायभेषजम् । सुखम्मेषायमेष्यै ॥ ४ ॥ त्र्यम्बकंयजामहेसुगन्धिम्पुष्टिवर्द्धनम् । उर्व्वारुकमिवबन्धना-
न्मृत्योर्मुक्षीयमामृतात् । त्र्यम्बकंयजामहेसुगन्धिम्पतिवेदनम् । उर्व्वारुकमिवबन्धनादितोमुक्षीयमामुतः ॥५॥ एतत्ते ।
रुद्रावसन्तेनपरोमूजवतोतीहि । अवततधन्वापिनाकावसःकृत्तिवासाऽअहिꣳसन्नःशिवोतीहि ॥ ६ ॥ त्र्यायुषञ्जमदग्नेः-
कश्यपस्यत्र्यायुषम् । यद्देवेषुत्र्यायुषन्तन्नोऽअस्तुत्र्यायुषम् ॥७॥ शिवोनामासिस्वधितिस्तेपितानमस्तेऽअस्तुमामाहिꣳसीः ।
निवर्त्तयाम्यायुषेन्नाद्यायप्रजननायरायस्पोषायसुप्रजास्त्वायसुवीर्य्याय ॥८॥ इतिरुद्रेसप्तमोऽध्यायः ॥७॥ उग्रश्चेतिजटाऽ-
ध्यायोवैकल्पिकः ॥ ॐ ॥ उग्रश्च । भीमश्चध्वान्तश्चधुनिश्च । सासह्वाँश्चाभियुग्वाचविक्षिपःस्वाहा ॥१॥ अग्निꣳहृदयेना-
शनिꣳहृदयाग्रेणपशुपतिङ्कृत्स्नहृदयेनभवंयक्ना । शर्व्वम्मतस्नाभ्यामीशानम्मन्युनामहादेवमन्तःपर्शव्येनोग्रन्देवंवनिष्ठुनाव-

सिष्ठहनुꣳशिङ्गीनिकोश्याभ्याम् ॥२॥ उग्रंलोहितेन । मित्रꣳसौव्व्रत्येनरुद्रन्दौर्व्व्रत्येनेन्द्रम्प्रक्रीडेनमरुतोबलेनसाद्ध्यान्प्रमुदा ।
भवस्यकण्ठ्यꣳरुद्रस्यान्तःपार्श्व्यम्महादेवस्ययकृच्छर्वस्यवनिष्ठुःपशुपतेःपुरीतत् ॥ ३ ॥ लोमभ्यꣳस्वाहा । लोमभ्यꣳस्वाहा-
त्वचेस्वाहात्वचेस्वाहालोहितायस्वाहालोहितायस्वाहामेदोभ्यꣳस्वाहामेदोभ्यꣳस्वाहामाꣳसेभ्यःस्वाहामाꣳसेभ्यःस्वाहा-
स्नावभ्यःस्वाहास्नावभ्यःस्वाहास्थभ्यःस्वाहास्थभ्यःस्वाहामज्जभ्यःस्वाहामज्जभ्यःस्वाहा । रेतसेस्वाहापायवेस्वाहा ॥ ४ ॥
आयासायस्वाहा । प्रायासायस्वाहासंयासायस्वाहावियासायस्वाहोद्यासायस्वाहा । शुचेस्वाहाशोचतेस्वाहाशोचमानायस्वा-
हाशोकायस्वाहा ॥ ५ ॥ तपसेस्वाहा । तप्यतेस्वाहातप्यमानायस्वाहातप्तायस्वाहाघर्म्मायस्वाहा । निष्कृत्यैस्वाहाप्रायश्चि-
त्त्यैस्वाहाभेषजायस्वाहा ॥६॥ यमायस्वाहान्तकायस्वाहामृत्यवेस्वाहा । ब्रह्मणेस्वाहाब्रह्महत्यायैस्वाहाविश्वेभ्योदेवेभ्यःस्वा-
हाद्यावापृथिवीभ्याꣳस्वाहा ॥७॥ इतिरुद्रेजटाऽध्यायः ॥८॥ वाजश्चमेत्यष्टानुवाकाःसप्तमोऽध्यायोवैकल्पिकः ॥ ॐ ॥
वाजश्च । मेप्रसवश्चमेप्रयतिश्चमेप्रसितिश्चमेधीतिश्चमेक्रतुश्चमेस्वरश्चमेश्लोकश्चमेश्रवश्चमेश्रुतिश्चमेज्ज्योतिश्चमेस्वश्च-
मेयज्ञेनकल्पन्ताम् १। प्राणश्च । मेपानश्चमेव्यानश्चमेसुश्चमेचित्तञ्चमऽआधीतञ्चमेवाक्चमेमनश्चमेचक्षुश्चमेश्रोत्रञ्चमेदक्ष-
श्चमेबलञ्चमेयज्ञेनकल्पन्ताम् ॥ २ ॥ ओजश्च । मेसहश्चमऽआत्माचमेतनूश्चमेशर्मचमेवर्मचमेङ्गानिचमेस्थीनिचमेपरूꣳषि-
चमेशरीराणिचमऽआयुश्चमेजराचमेयज्ञेनकल्पन्ताम् ॥ ३ ॥ ज्यैष्ठ्यञ्च । मऽआधिपत्त्यञ्चमेमन्युश्चमेभामश्चमेमश्चमेम्भ-

॥२२१॥

श्चमेज्येमाचमेमहिमाचमेवरिमाचमेप्रथिमाचमेवर्षिमाचमेद्राघिमाचमेवृद्धञ्चमेवृद्धिश्चमेयज्ञेनकल्पन्ताम् ॥ ४ ॥ सत्यञ्च ।
मेश्रद्धाचमेजगच्चमेधनञ्चमेविश्वञ्चमेमहश्चमेक्रीडाचमेमोदश्चमेजातञ्चमेजनिष्यमाणञ्चमेसूक्तञ्चमेसुकृतञ्चमेयज्ञेनकल्पन्ताम्
॥ ५ ॥ ऋतञ्च । मेमृतञ्चमेयक्ष्मञ्चमेनामयच्चमेजीवातुश्चमेदीर्घायुत्वञ्चमेनमित्रञ्चमेभयञ्चमेसुखञ्चमेशयनञ्चमेसूषाश्चमेसु-
दिनञ्चमेयज्ञेनकल्पन्ताम् ॥ ६ ॥ यन्ताच । मेधर्ताचमेक्षेमश्चमेधृतिश्चमेविश्वञ्चमेमहश्चमेसंविच्चमेज्ञात्रञ्चमेसूश्चमेप्रसूश्च-
मेसीरञ्चमेलयश्चमेयज्ञेनकल्पन्ताम् ॥ ७ ॥ शंचमेमयश्चमेप्रियञ्चमेनुकामश्चमेकामश्चमेसौमनसश्चमेभगश्चमेद्रविणञ्चमेभ-
द्रञ्चमेश्रेयश्चमेवसीयश्चमेयशश्चमेयज्ञेनकल्पन्ताम् ॥ ८ ॥ ऊर्क्च । मेसूनृताचमेपयश्चमेरसश्चमेघृतञ्चमेमधुचमेसग्धिश्च-
मेसपीतिश्चमेकृषिश्चमेवृष्टिश्चमेजैत्रञ्चमऽऔद्भिद्यञ्चमेयज्ञेनकल्पन्ताम् ॥ ९ ॥ रयिश्च । मेरायश्चमेपुष्टञ्चमेपुष्टिश्चमेवि-
भुचमेप्रभुचमेपूर्णञ्चमेपूर्णतरञ्चमेकुयवञ्चमेक्षितञ्चमेन्नञ्चमेक्षुच्चमेयज्ञेनकल्पन्ताम् ॥ १० ॥ वित्तञ्च । मेवेद्यञ्चमेभूतञ्चमे-
भविष्यच्चमेसुगञ्चमेसुपथ्यञ्चमऽऋद्धञ्चमऽऋद्धिश्चमेक्लृप्तञ्चमेक्लृप्तिश्चमेमतिश्चमेसुमतिश्चमेयज्ञेनकल्पन्ताम् ॥ ११ ॥ व्री-
हयश्च । मेयवाश्चमेमाषाश्चमेतिलाश्चमेमुद्गाश्चमेखल्वाश्चमेप्रियङ्गवश्चमेणवश्चमेश्यामाकाश्चमेनीवाराश्चमेगोधूमाश्चमे-
मसूराश्चमेयज्ञेनकल्पन्ताम् ॥ १२ ॥ अश्माच । मेमृत्तिकाचमेगिरयश्चमेपर्वताश्चमेसिकताश्चमेवनस्पतयश्चमेहिरण्य-
ञ्चमेयश्चमेश्यामञ्चमेलोहञ्चमेसीसञ्चमेत्रपुचमेयज्ञेनकल्पन्ताम् ॥ १३ ॥ अग्निश्च । मऽआपश्चमेवीरुधश्चमऽओषधय

श्चमेकृष्टपच्याश्चमेकृष्टपच्याश्चमेग्राम्याश्चमेपशवआरण्याश्चमेवित्तञ्चमेवित्तिश्चमेभूतञ्चमेभूतिश्चमेयज्ञेनकल्पन्ताम् ॥१४॥ वसुच । मेवसतिश्चमेकर्मचमेशक्तिश्चमेर्थश्चमऽएमश्चमऽइत्याचमेगतिश्चमेयज्ञेनकल्पन्ताम् ॥ १५ ॥ अग्निश्च । मऽइन्द्रश्चमेसोमश्चमऽइन्द्रश्चमेसविताचमऽइन्द्रश्चमेसरस्वतीचमऽइन्द्रश्चमेपूषाचमऽइन्द्रश्चमेबृहस्पतिश्चमऽइन्द्रश्चमेयज्ञेनकल्पन्ताम् ॥१६॥ मित्रश्च । मऽइन्द्रश्चमेवरुणश्चमऽइन्द्रश्चमेधाताचमऽइन्द्रश्चमेत्वष्टाचमऽइन्द्रश्चमेमरुतश्चमऽइन्द्रश्चमेविश्वेचमेदेवाऽइन्द्रश्चमेयज्ञेनकल्पन्ताम् ॥ १७ ॥ पृथिवीच । मऽइन्द्रश्चमेन्तरिक्षञ्चमऽइन्द्रश्चमेद्यौश्चमऽइन्द्रश्चमेसमाश्चमऽइन्द्रश्चमेनक्षत्राणिचमऽइन्द्रश्चमेदिशश्चमऽइन्द्रश्चमेयज्ञेनकल्पन्ताम् ॥१८॥ अꣳशुश्च । मेरश्मिश्चमेदाभ्यश्चमेधिपतिश्चमऽउपाꣳशुश्चमेन्तर्यामश्चमऽऐन्द्रवायवश्चमेमैत्रावरुणश्चमऽआश्विनश्चमेप्रतिप्रस्थानश्चमेशुक्रश्चमेमन्थीचमेयज्ञेनकल्पन्ताम् ॥ १९ ॥ आग्रयणश्च । मेवैश्वदेवश्चमेध्रुवश्चमेवैश्वानरश्चमऽऐन्द्राग्नश्चमेमहावैश्वदेवश्चमेमरुत्वतीयाश्चमेनिष्केवल्यश्चमेसावित्रश्चमेसारस्वतश्चमेपात्नीवतश्चमेहारियोजनश्चमेयज्ञेनकल्पन्ताम् ॥ २० ॥ स्रुचश्च । मेचमसाश्चमेवायव्यानिचमेद्रोणकलशश्चमेग्रावाणश्चमेधिषवणेचमेपूतभृच्चमऽआधवनीयश्चमेवेदिश्चमेबर्हिश्चमेवभृथश्चमेस्वगाकारश्चमेयज्ञेनकल्पन्ताम् ॥ २१ ॥ अग्निश्च । मेघर्मश्चमेर्कश्चमेसूर्यश्चमेप्राणश्चमेश्वमेधश्चमेपृथिवीचमेदितिश्चमेदितिश्चमेद्यौश्चमेङ्गुलयःशक्वरयोदिशश्चमेयज्ञेनकल्पन्ताम् ॥ २२ ॥ व्रतञ्च । मऽऋतवश्चमेतपश्चमेसंवत्सरश्चमेहोरात्रेऽऊर्वष्ठीवेबृह-

द्रथ तुरेचंमेयज्ञेनकल्पन्ताम् ॥ २३ ॥ एकाच । मेतिस्रश्चमेतिस्रश्चमेपञ्चचमेपञ्चचमेसप्तचमेसप्तचमेनवचमेनवचमऽएका-
दशचमऽएकादशचमेत्रयोदशचमेत्रयोदशचमेपञ्चदशचमेपञ्चदशचमेसप्तदशचमेसप्तदशचमेनवदशचमेनवदशचमऽएकविꣳ-
शतिश्चमऽएकविꣳशतिश्चमेत्रयोविꣳशतिश्चमेत्रयोविꣳशतिश्चमेपञ्चविꣳशतिश्चमेपञ्चविꣳशतिश्चमेसप्तविꣳशतिश्चमेसप्त-
विꣳशतिश्चमेनवविꣳशतिश्चमेनवविꣳशतिश्चमऽएकत्रिꣳशच्चमऽएकत्रिꣳशच्चमेत्रयस्त्रिꣳशच्चमेयज्ञेनकल्पन्ताम् ॥२४॥ चत-
सश्च । मेष्टौचमेष्टौचमेद्वादशचमेद्वादशचमेषोडशचमेषोडशचमेविꣳशतिश्चमेविꣳशतिश्चमेचतुर्विꣳशतिश्चमेचतुर्विꣳशति-
श्चमेष्टाविꣳशतिश्चमेष्टाविꣳशतिश्चमेद्वात्रिꣳशच्चमेद्वात्रिꣳशच्चमेषट्त्रिꣳशच्चमेषट्त्रिꣳशच्चमेचत्वारिꣳशच्चमेचत्वारिꣳशच्चमे-
चतुश्चत्वारिꣳशच्चमेचतुश्चत्वारिꣳशच्चमेष्टाचत्वारिꣳशच्चमेयज्ञेनकल्पन्ताम् ॥ २५ ॥ त्र्यविश्च । मेत्र्यवीचमेदित्यवाट्चमेदि-
त्यौहीचमेपञ्चाविश्चमेपञ्चावीचमेत्रिवत्सश्चमेत्रिवत्साचमेतुर्यवाट्चमेतुर्यौहीचमेयज्ञेनकल्पन्ताम् ॥२६॥ पष्ठवाट्च । मेप-
ष्ठौहीचमऽउक्षाचमेवशाचमऽऋषभश्चमेवेहच्चमेनड्वाँश्चमेधेनुश्चमेयज्ञेनकल्पन्ताम् ॥२७॥ वाजायस्वाहा । प्रसवायस्वाहा-
पिजायस्वाहाक्रतवेस्वाहावसवेस्वाहाहर्पतयेस्वाहान्हेमुग्धायस्वाहामुग्धायवैनꣳशिनायस्वाहाविनꣳशिनऽआन्त्यायनायस्वा-
हान्त्यायभौवनायस्वाहाभुवनस्यपतयेस्वाहाधिपतयेस्वाहाप्रजापतयेस्वाहा । इयन्तेराण्मित्राययन्तासियमनऽऊर्जेत्वावृष्ट्यै-
त्वाप्रजानान्त्वाधिपत्याय ॥२८॥ आयुर्यज्ञेन । कल्पताम्प्राणोयज्ञेनकल्पताञ्चक्षुर्यज्ञेनकल्पताꣳश्रोत्रंयज्ञेनकल्पताम्वाग्यज्ञे-

नेकल्पताम्मनोयज्ञेनकल्पतामात्मायज्ञेनकल्पताम्ब्रह्मायज्ञेनकल्पताञ्ज्योतिर्यज्ञेनकल्पताᳬस्वर्यज्ञेनकल्पताम्पृष्ठंयज्ञेनकल्प-
तांयज्ञोयज्ञेनकल्पताम्। स्तोमश्चयजुश्चऽऋक्चसामचबृहच्चरथन्तरञ्च। स्वर्देवाऽअगन्मामृताऽअभूमप्रजापतेःप्रजाऽअभूम-
वेट्स्वाहा ॥२९॥ इतिरुद्रेसप्तमोऽध्यायः ॥७॥ ॥ अथऋचंवाचमितिचतुर्विंशत्यर्चःशांत्यर्थोवैश्वदेवोऽष्टमोऽध्यायः ॥ ॐ॥
ऋचंवाचम्प्रपद्येमनोयजुःप्रपद्येसामप्राणम्प्रपद्येचक्षुःश्रोत्रम्प्रपद्ये । वागोजःसहौजोमयिप्राणापानौ ॥१॥ यन्मेछिद्रञ्चक्षु-
षोहृदयस्यमनसोवातितृण्णम्बृहस्पतिर्मेतद्दधातु ॥ शन्नोभवतुभुवनस्ययस्पतिः ॥२॥ भूर्भुवःस्वः । तत्सवितुर्वरेण्यम्भर्गो-
देवस्यधीमहि । धियोयोनःप्रचोदयात् ॥ ३ ॥ कयानश्चित्रऽआभुवदूतीसदावृधःसखा । कयाशचिष्ठयावृता ॥ ४ ॥
कस्त्वा । सत्योमदानाम्मᳬहिष्ठोमत्सदन्धसः । दृढाचिदारुजेवसु ॥५॥ अभीषुणः । सखीनामविताजरितॄणाम् । शतम्भ-
वास्यूतिभिः ॥६॥ कयात्वन्नऽऊत्याभिप्रमन्दसेवृषन् । कयास्तोतृभ्यऽआभर ॥७॥ इन्द्रोविश्वस्यराजति । शन्नोऽअस्तुद्वि-
पदेशञ्चतुष्पदे ॥८॥ शन्नोमित्रःशंवरुणःशन्नोभवत्वर्यमा । शन्नऽइन्द्रोबृहस्पतिःशन्नोविष्णुरुरुक्रमः ॥९॥ शन्नोवातः ।
पवताᳬशन्नस्तपतुसूर्यः । शन्नःकनिक्रदद्देवःपर्जन्योऽअभिवर्षतु ॥१०॥ अहानिशम्भवन्तुनःशᳬरात्रीःप्रतिधीयताम् ।
शन्नऽइन्द्राग्नीभवतामवोभिःशन्नऽइन्द्रावरुणारातहव्या । शन्नऽइन्द्रापूषणावाजसातौशमिन्द्रासोमासुवितायशंयोः ॥११॥
शन्नोदेवीरभिष्टयऽआपोभवन्तुपीतये । शंयोरभिस्रवन्तुनः ॥ १२ ॥ स्योनापृथिवि । नोभवानृक्षरानिवेशनी । यच्छा-

नुःशर्मसुप्रथाः ॥ १३ ॥ आपोहि । ष्ठामयोभुवुस्तानऽऊर्जेदधातन । मुहेरणायुचक्षसे ॥ १४ ॥ योवःशिवतमोरसुस्त-
स्यभाजयतेहनः । उशुतीरिवमातरः ॥ १५ ॥ तस्माऽअरङ्गमामवोयस्युक्षयायुजिन्वथ । आपोजुनयथाचनः ॥ १६ ॥
द्यौःशान्तिरुन्तरिक्षुङ्शान्तिः पृथिवीशान्तिरापुःशान्तिरोषधयुःशान्तिः । वनुस्पतयुःशान्तिर्विश्वेदेवाःशान्तिर्ब्रह्मशा-
न्तिःसर्वुशान्तिःशान्तिरेवशान्तिःसामाशान्तिरेधि ॥ १७ ॥ दृतेदृङ्हमामित्रस्यमाचक्षुषासर्वाणिभूतानिसमीक्षन्ताम् ।
मित्रस्याहञ्चक्षुषासर्वाणिभूतानिसमीक्षे । मित्रस्युचक्षुषासमीक्षामहे ॥ १८ ॥ दृतेदृङ्हमा । ज्योक्तेसन्दशिजीव्यासु-
ञ्ज्योक्तेसन्दशिजीव्यासम् ॥ १९ ॥ नमस्तेहरसेशोचिषेनमस्तेऽअस्त्वुर्चिषे । अुन्याँस्तेऽअस्मत्तपन्तुहेतयः पावुकोअुस्म-
भ्यंङ्शिवोभव ॥ २० ॥ नमस्ते । अस्तुविद्युतेनमस्तेस्तनयित्नवे । नमस्तेभगवन्नस्तुयतुःस्वःसुमीहसे ॥ २१ ॥ यतोय-
तःसमीहसेततोनोऽअभयङ्कुरु । शन्नःकुरुप्रजाभ्योभयन्नःपशुभ्यः ॥ २२ ॥ सुमित्रियानुऽआपुऽओषधयःसन्तुदुर्मित्रि-
यास्तस्मैसन्तुयोस्मान्द्वेष्टियञ्चवयंद्विष्मः ॥ २३ ॥ तच्चक्षुर्देवहितम्पुरस्ताच्छुक्रमुच्चरत् । पश्येमशुरदःशुतञ्जीवेमशुरदःशु-
तङ्शृणुयामशुरदःशुतंप्रब्रवामशुरदःशुतमदीनाःस्यामशुरदःशुतम्भूयश्चशुरदःशुतात् ॥ २४ ॥ इतिरुद्रेऽष्टमःशा-
न्त्यध्यायः ॥ ॥ द्यौःशांतिरितिकंडिकावा ॥ ॐशांतिःशांतिःशांतिरितित्रिरुच्चारणंवा ॥ इतिरुद्राष्टाध्यायीसमाप्ता ॥
॥ अथपंचब्रह्ममंत्राः ॥ ॐसुद्योजातंप्रपद्यामिसुद्योजातायवैनमोनमः । भुवेभवेनातिभवेभवस्वमांभुवोद्भवायुनमः ॥

॥ ५ ॥ वामदेवायनमोज्येष्ठायनमः श्रेष्ठायनमोरुद्रायनमःकालायनमःकलविकरणायनमोबलविकरणायनमोबलायनमो-
बलप्रमथनायनमःसर्वभूतदमनायनमोमनोन्मनायनमः ॥ ६ ॥ अघोरेभ्योथघोरेभ्योघोरघोरतरेभ्यः । सर्वेभ्यःसर्व-
शर्वेभ्योनमस्तेअस्तुरुद्ररूपेभ्यः ॥ ७ ॥ तत्पुरुषायविद्महेमहादेवायधीमहि । तन्नोरुद्रःप्रचोदयात् ॥ ८ ॥ ईशानःसर्व-
विद्यानामीश्वरःसर्वभूतानाम् । ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्माशिवोमेअस्तुसदाशिवोम् ॥ ९ ॥ इतिपंचब्रह्ममंत्राः ॥ ॥

श्रीसूक्तम् ॥ हिरण्यवर्णामितिपञ्चदशर्चस्यसूक्तस्य ॥ आनन्दकर्दमचिक्लीतेन्दिरासुताऋषयः ॥ आद्यास्तिस्रोनुष्टुभः ॥
चतुर्थीबृहती ॥ पञ्चमीषष्ठ्यौत्रिष्टुभौ ॥ ततोष्टावनुष्टुभः ॥ अन्त्याप्रस्तारपङ्क्तिः ॥ श्रीर्देवता ॥ जपेविनियोगः ॥
ॐ ॥ हिरण्यवर्णांहरिणींसुवर्णरजतस्रजां ॥ चन्द्रांहिरण्मयींलक्ष्मींजातवेदोमआवह ॥ तांमआवहजातवेदोलक्ष्मीमनप-
गामिनीं ॥ यस्यांहिरण्यंविन्देयंगामश्वंपुरुषानहं ॥ अश्वपूर्वांरथमध्यांहस्तिनादप्रबोधिनीं ॥ श्रियंदेवीमुपह्वयेश्रीर्मादेवीजु-
षतां ॥ कांसोस्मितांहिरण्यप्राकारामार्द्रांज्वलन्तींतृप्तांतर्पयन्तीं ॥ पद्मेस्थितांपद्मवर्णांतामिहोपह्वयेश्रियं ॥ चन्द्रांप्रभासां-
यशसाज्वलन्तींश्रियंलोकेदेवजुष्टामुदारां ॥ तांपद्मिनीमींशरणमहंप्रपद्येऽलक्ष्मीर्मेनश्यतांत्वांवृणे ॥ १ ॥ आदित्यवर्णेतप-
सोधिजातोवनस्पतिस्तववृक्षोथबिल्वः ॥ तस्यफलानितपसानुदन्तुमायान्तरायाश्चबाह्याअलक्ष्मीः ॥ उपैतुमांदेवसखःकी-
र्तिश्चमणिनासह ॥ प्रादुर्भूतोसुराष्ट्रेस्मिन्कीर्तिमृद्धिंददातुमे ॥ क्षुत्पिपासामलांज्येष्ठामलक्ष्मींनाशयाम्यहं ॥ अभूतिमसमृ-

द्धिंचसर्वांनिर्णुदमेगृहात् ॥ गन्धद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीं ॥ ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियं ॥ मनसःकाम-
माकूतिंवाचःसत्यमशीमहि ॥ पशूनांरूपमन्नस्यमयिश्रीःश्रयतांयशः ॥ २ ॥ कर्दमेनप्रजाभूतामयिसंभवकर्दम ॥ श्रियंवा-
सयमेकुलेमातरंपद्ममालिनीं ॥ आपःस्रजन्तुस्निग्धानिचिक्लीतवसमेगृहे ॥ निचदेवींमातरंश्रियंवासयमेकुले ॥ आर्द्रांयःक-
रिणींयष्टिंसुवर्णांहेममालिनीं ॥ सूर्यांहिरण्मयींलक्ष्मींजातवेदोमआवह ॥ आर्द्रांपुष्करिणींपुष्टिंपिङ्गलांपद्ममालिनीं ॥ च-
न्द्रांहिरण्मयींलक्ष्मींजातवेदोमआवह ॥ तांमआवहजातवेदोलक्ष्मीमनपगामिनीं ॥ यस्यांहिरण्यंप्रभूतंगावोदास्योश्वान्
विन्देयंपुरुषानहं ॥ ३ ॥ यःशुचिःप्रयतोभूत्वाजुहुयादाज्यमन्वहं ॥ सूक्तंपञ्चदशर्चंचश्रीकामःसततंजपेत् ॥ (पद्माननेप-
द्मऊरूपद्माक्षीपद्मसंभवे ॥ तन्मेभजसिपद्माक्षियेनसौख्यंलभाम्यहं ॥ अश्वदायैगोदायैधनदायैमहाधने ॥ धनंमेलभतांदे-
विसर्वकामांश्चदेहिमे ॥ पद्माननेपद्मविपद्मपत्रेपद्मप्रियेपद्मदलायताक्षि ॥ विश्वप्रियेविश्वमनोनुकूलेत्वत्पादपद्मंमयिसंनि-
धत्स्व ॥ पुत्रपौत्रधनंधान्यंहस्त्यश्वादिगवेरथं ॥ प्रजानांभवसीमाताआयुष्मन्तंकरोतुमे ॥ धनमग्निर्धनंवायुर्धनंसूर्योधनंवसुः ॥
धनमिन्द्रोबृहस्पतिर्वरुणंधनमस्तुते ॥ वैनतेयसोमंपिबसोमंपिबतुवृत्रहा ॥ सोमंधनस्यसोमिनोमह्यंददातुसोमिनः ॥ नक्रो-
धोनचमात्सर्यंनलोभोनाशुभामतिः ॥ भवन्तिकृतपुण्यानांभक्तानांश्रीसूक्तंजपेत् ॥ सरसिजनिलयेसरोजहस्तेधवलतरांशु-
कगन्धमाल्यशोभे ॥ भगवतिहरिवल्लभेमनोज्ञेत्रिभुवनभूतिकरिप्रसीदमह्यं ॥ विष्णुपत्नींक्षमांदेवींमाधवींमाधवप्रियां ॥

लक्ष्मींप्रियसखींदेवींनमाम्यच्युतवल्लभां ॥ महालक्ष्मीचविद्महेविष्णुपत्नीचधीमहि ॥ तन्नोलक्ष्मीःप्रचोदयात् ॥ श्रीवर्चस्वमायुष्यमारोग्यमाविधात्शोभमानंमहीयते ॥ धान्यंधनंपशुंबहुपुत्रलाभंशतसंवत्सरंदीर्घमायुः ॥ इतिश्रीसूक्तं ॥

नारायणाथर्वशीर्षम् ॥ ॐ अथपुरुषोहवैनारायणोऽकामयतप्रजाःसृजेयेति । नारायणात्प्राणोजायते । मनःसर्वेन्द्रियाणिच । खंवायुर्ज्योतिरापःपृथिवीविश्वस्यधारिणी । नारायणाद्ब्रह्माजायते । नारायणाद्विष्णुर्जायते । नारायणाद्रुद्रोजायते । नारायणादिन्द्रोजायते । नारायणात्प्रजापतिःप्रजायते । नारायणाद्द्वादशादित्यारुद्रावसवःसर्वाणिछन्दांसि । नारायणाद्देवाःसमुत्पद्यन्ते । नारायणात्प्रवर्तन्ते । नारायणेप्रलीयन्ते । अथादित्योनारायणः । ब्रह्मानारायणः । शिवश्चनारायणः । शक्रश्चनारायणः । कालश्चनारायणः । दिशश्चनारायणः । ऊर्ध्वंचनारायणः । अधश्चनारायणः । अन्तर्बहिश्चनारायणः । नारायणएवेदꣳसर्वंयद्भूतंयच्चभाव्यम् । निष्कलोनिरञ्जनोनिर्विकल्पोनिराख्यातःशुद्धोदेवएकोनारायणोनद्वितीयोऽस्तिकश्चित् । यएवंवेद । सविष्णुरेवभवतिसविष्णुरेवभवति । ॐमित्यग्रेव्याहरेत् । नमइतिपश्चात् । नारायणायेत्युपरिष्टात् । ॐमित्येकाक्षरम् । नमइतिद्वेअक्षरे । नारायणायेतिपञ्चाक्षराणि । एतद्वैनारायणस्याष्टाक्षरंपदं । योहवैनारायणस्याष्टाक्षरंपदमध्येति । अनुपब्रवतःसर्वमायुरेति । विन्दतेप्रजांरायस्पोषंगौपत्यंततोऽमृतत्वमश्नुतेततोऽमृतत्वमश्नुतइति । प्रत्यगानन्दंब्रह्मपुरुषंप्रणवस्वरूपं । अकारउकारोमकारइति । तानेकधासंयोज्यतदेवतदोमिति । यमुक्त्वामुच्यतेयोगीजन्म-

संसारबन्धनात् । ॐनमोनारायणायेतिमन्त्रोपासकःवैकुण्ठभुवनंगच्छति । तदिदंपरमंपुण्डरीकंविज्ञानघनं । तस्मात्तडिदाभमात्रं । ब्रह्मण्योदेवकीपुत्रोब्रह्मण्योमधुसूदनः । सर्वभूतस्थमेकंवैनारायणम् । कारणरूपंपरब्रह्मकम् ॥ ॥ एतदथर्वशीर्षंयोऽधीते । सायमधीयानोदिवसकृतंपापंनाशयति । प्रातरधीयानोरात्रिकृतंपापंनाशयति । सायंप्रातःप्रयुंजानोअपापोभवति । मध्यंदिनमादित्याभिमुखोऽधीयानःसद्यःपञ्चमहापातकोपपातकेभ्योमुच्यते । सर्ववेदपारायणपुण्यंलभते । श्रीनारायणसायुज्यमवाप्नोति । यएवंवेद । इत्युपनिषत् ॥ इतिनारायणाथर्वशीर्षम् ॥

शिवाथर्वशीर्षम् ॥ ॐदेवाहवैस्वर्गलोकमायंस्तेरुद्रमपृच्छन्कोभवानिति ॥ सोऽब्रवीदहमेकःप्रथममासोद्वर्तामिचभविष्यामिचनान्यःकश्चिन्मत्तोव्यतिरिक्तइति । सोऽन्तरादन्तरंप्राविशद्दिशश्चान्तरंप्राविशत्सोऽहंनित्यानित्योव्यक्ताव्यक्तोब्रह्माब्रह्माहंप्राञ्चःप्रत्यञ्चोऽहंदक्षिणाञ्चउदञ्चोऽहमधश्चोर्ध्वश्चाहंदिशश्चप्रतिदिशश्चाहंपुमानपुमान्स्त्रियश्चाहंसावित्र्यहंगायत्र्यहंत्रिष्टुब्जगत्यनुष्टुप्चाहंछन्दोऽहंसत्योऽहंगार्हपत्योदक्षिणाग्निराहवनीयोहंगौरहंगौर्यहमृगहंयजुरहंसामाहमथर्वांगिरसोऽहंज्येष्ठोऽहंश्रेष्ठोऽहंवरिष्ठोऽहमापोहंतेजोऽहंगुह्योऽहमरण्योऽहमक्षरमहंपुष्करमहंपवित्रमहमुग्रंच बलिश्चपुरस्ताज्ज्योतिरित्यहमेवसर्वेभ्योमामेवसस‍र्वःसमायोमांवेदसदेवान्वेदसर्वांश्चवेदान्सांगानपि ब्रह्मब्राह्मणैश्चगांगोभिर्ब्राह्मणान्ब्राह्मणेनहविर्हविपाआयुरायुपासत्यंसत्येनधर्मेणधर्मंतर्पयामिस्वेनतेजसा । ततोहवैतेदेवारुद्रमपृच्छन्तेदेवारुद्रमपश्यन्तेदेवारुद्रमध्यायन्तेदेवाऊर्ध्वबाहवोरुद्रंस्तुवन्ति १ ॥ ॐयोवैरुद्रःसभगवान्यश्चब्रह्मातस्मैवैनमोनमः १ ॥ योवैरुद्रःसभगवान्यश्चविष्णुस्त-

स्मैवैनमोनमः २ ॥ योवैरुद्रःसभगवान्यश्चस्कंदस्तस्मै० ३ ॥ योवैरुद्रःसभगवान्यश्चेन्द्रस्तस्मैवैनमो० ४ ॥ योवैरुद्रःस-भगवान्यश्चाग्निस्तस्मै० ५ ॥ योवैरुद्रःसभगवान्यश्चवायुस्तस्मैवैनमो० ६ ॥ योवैरुद्रःसभगवान्यश्चसूर्यस्तस्मैवैनमो० ७॥ योवैरुद्रःसभगवान्यश्चसोमस्तस्मैवैनमो० ८ ॥ योवैरुद्रःसभगवान्येऽष्टौग्रहास्तस्मैवैनमो० ९ ॥ योवैरुद्रःसभगवान्ये-चाष्टौप्रतिग्रहास्तस्मै० १० ॥ योवैरुद्रःसभगवान्यच्चभूस्तस्मैवैनमो० ११ ॥ योवैरुद्रःसभगवान्यच्चभुवस्तस्मै० १२ ॥ योवैरुद्रःसभगवान्यच्चस्वस्तस्मैवैनमो० १३ ॥ योवैरुद्रःसभगवान्यच्चमहस्तस्मै० १४ ॥ योवैरुद्रःसभगवान्याचपृथिवी-तस्मै० १५ ॥ योवैरुद्रःसभगवान्यच्चान्तरिक्षंतस्मैवैनमो० १६ ॥ योवैरुद्रःसभगवान्याचद्यौस्तस्मै० १७ ॥ योवैरुद्रः सभगवान्याश्चापस्तस्मै० १८ ॥ योवैरुद्रःसभगवान्यच्चतेजस्तस्मै० १९ ॥ योवैरुद्रःसभगवान्यश्चकालस्तस्मै० २० ॥ योवैरुद्रःसभगवान्यश्चयमस्तस्मै० ॥ २१ ॥ योवैरुद्रःसभगवान्यश्चमृत्युस्तस्मै० २२ ॥ योवैरुद्रःसभगवान्यच्चामृतं-तस्मै० २३ ॥ योवैरुद्रःसभगवान्यच्चाकाशंतस्मै० २४॥योवैरुद्रःसभगवान्यच्चविश्वंतस्मै० २५ ॥ योवैरुद्रःसभगवान्यच्च-स्थूलंतस्मै० २६ ॥ योवैरुद्रःसभगवान्यच्चसूक्ष्मंतस्मै० २७ ॥ योवैरुद्रःसभगवान्यच्चशुक्लंतस्मै० २८ ॥ योवैरुद्रःसभग-वान्यच्चकृष्णंतस्मै० २९ ॥ योवैरुद्रःसभगवान्यच्चकृत्स्नंतस्मै० ३० ॥ योवैरुद्रःसभगवान्यच्चसत्यंतस्मै० ३१ ॥ योवै-रुद्रःसभगवान्यच्चसर्वंतस्मै० ३२ ॥ २ ॥ भूस्तेआदिर्मध्यंभुवस्तेस्वस्तेशीर्षंविश्वरूपोऽसिब्रह्मैकस्त्वंद्विधात्रिधावृद्धिस्त्वंशां-तिस्त्वंपुष्टिस्त्वंहुतमहुतंदत्तमदत्तंसर्वमसर्वंविश्वमविश्वंकृतमकृतंपरमपरंपरायणंचत्वं । अपामसोममसृताअभूमागन्मज्यो-

तिरविदामदेवान् । किंनूनमस्मान्कृणवदरातिःकिमुधूर्तिरमृतमर्त्यस्य । सोमसूर्यपुरस्तात्सूक्ष्मःपुरुषः । सर्वंजगद्धितंवा-
एतदक्षरंप्राजापत्यंसौम्यंसूक्ष्मंपुरुषंग्राह्यमग्राह्येणभावंभावेन सौम्यंसौम्येनसूक्ष्मंसूक्ष्मेणवायव्यंवायव्येनग्रसतितस्मैमहाग्रा-
सायवैनमोनमः । हृदिस्थादेवताःसर्वाहृदिप्राणाःप्रतिष्ठिताः । हृदित्वमसियोनित्यंतिस्रोमात्राःपरस्तुसः । तस्योत्तरतः-
शिरोदक्षिणतःपादौ यउत्तरतःसओंकारःयओंकारःसप्रणवःयःप्रणवःससर्वव्यापीयःसर्वव्यापीसोऽनंतःयोऽनंतस्तत्तारंयत्ता-
रंतच्छुक्लंयच्छुक्लंतत्सूक्ष्मंयत्सूक्ष्मंतद्वैद्युतंयद्वैद्युतंततत्परं ब्रह्मयत्परंब्रह्मसएकःयएकःसरुद्रःयोरुद्रःसईशानःयईशानःसभगवान्-
महेश्वरः ॥ ३ ॥ अथकस्मादुच्यतेओंकारःयस्मादुच्चार्यमाणएवप्राणानूर्ध्वमुत्क्रामयतितस्मादुच्यतेओंकारः । अथकस्मा-
दुच्यतेप्रणवःयस्मादुच्चार्यमाणएवऋग्यजुःसामाथर्वांगिरसंब्रह्मब्राह्मणेभ्यःप्रणामयतिनामयतिचतस्मादुच्यतेप्रणवः । अथ-
कस्मादुच्यतेसर्वव्यापीयस्मादुच्चार्यमाणएवयथास्नेहेनपललपिंडमिवशांतरूपमोतप्रोतमनुप्राप्तोव्यतिषक्तश्चतस्मादुच्यतेसर्व-
व्यापी । अथकस्मादुच्यतेऽनंतःयस्मादुच्चार्यमाणएवतिर्यगूर्ध्वमधस्ताच्चास्यांतोनोपलभ्यतेतस्मादुच्यतेऽनंतः । अथकस्मा-
दुच्यतेतारंयस्मादुच्चार्यमाणएषगर्भजन्मव्याधिजरामरणसंसारमहाभयात्तारयतित्रायतेचतस्मादुच्यतेतारं । अथकस्मादु-
च्यतेशुक्लंयस्मादुच्चार्यमाणएवक्लंदतेक्लामयतिचतस्मादुच्यतेशुक्लं । अथकस्मादुच्यतेसूक्ष्मंयस्मादुच्चार्यमाणएवसूक्ष्मोभूत्वाश-
रीराण्यधितिष्ठतिसर्वाणिचांगान्यभिमृशतितस्मादुच्यतेसूक्ष्मं । अथकस्मादुच्यतेवैद्युतंयस्मादुच्चार्यमाणएवव्यक्तेमहतितम-
सिद्योतयतितस्मादुच्यतेवैद्युतं । अथकस्मादुच्यतेपरंब्रह्मयस्मात्परमपरंपरायणंचबृहद्बृहत्याबृंहयतितस्मादुच्यतेपरंब्रह्म ।

अथकस्मादुच्यतेएकः यः सर्वान्प्राणान्संभक्ष्यसंभक्षणेनाजः संसृजतिविसृजतितीर्थमेकेव्रजंतितीर्थमेकेदक्षिणाः प्रत्यंचउदंचः-
प्रांचोऽभिव्रजंत्येकेतेपांसर्वेपामिहसंगतिः साकंसएकोऽभूदंतश्चरतिप्रजानांतस्मादुच्यतेएकः । अथकस्मादुच्यतेरुद्रः यस्माद्द-
षिभिर्नान्यैर्भक्तैर्द्रुतमस्यरूपमुपलभ्यतेतस्मादुच्यतेरुद्रः । अथकस्मादुच्यतेईशानः यः सर्वान्देवानीशतेईशानीभिर्जननीभि-
श्चशक्तिभिः । अभित्वाशूरणोनुमोदुग्धाइवधेनवः । ईशानमस्यजगतः स्वर्दृशमीशानमिंद्रतस्थुषइतितस्मादुच्यतेईशानः ।
अथकस्मादुच्यतेभगवान्महेश्वरः यस्माद्भक्तान्ज्ञानेनभजत्यनुगृह्णातिचवाचंसंसृजतिविसृजतिचसर्वान्भावान्परित्यज्यात्म-
ज्ञानेनयोगैश्वर्येणमहतिमहीयतेतस्मादुच्यतेभगवान्महेश्वरः । तदेतद्रुद्रचरितम् ॥४॥ एषोहदेवः प्रदिशोऽनुसर्वाः पूर्वोह-
जातः सउगर्भेअंतः । सएवजातः सजनिष्यमाणः प्रत्यङ्जनास्तिष्ठतिसर्वतोमुखः । एकोरुद्रोनद्वितीयायतस्थेयइमाँल्लोकानी-
शतईशनीभिः । प्रत्यङ्जनास्तिष्ठतिचांतकालेसंसृज्यविश्वाभुवनानिगोप्ता । योयोनिंयोनिमधितिष्ठत्येकोयेनेदंसर्वंविचर-
तिसर्वम् । तमीशानंवरदंदेवमीड्यंनिचाय्येमांशांतिमत्यंतमेति । क्षमांहित्वाहेतुजालस्यमूलंबुद्ध्यासंचितंस्थापयित्वातुरुद्रे ।
रुद्रमेकंत्वामाहुः शाश्वतंवैपुराणमिषमूर्जेणपशवोनुनामयंतंमृत्युपाशान् । तदेतेनात्मन्नेतेनार्धचतुर्थेनमात्रेणशांतिंसंसृजति-
पशुपाशविमोक्षणंयासाप्रथमामात्राब्रह्मदेवत्यारक्तावर्णेनयस्तांध्यायतेनित्यंसगच्छेद्ब्रह्मपदं । यासाद्वितीयामात्राविष्णुदेव-
त्याकृष्णवर्णेनयस्तांध्यायतेनित्यंसगच्छेद्वैष्णवंपदं । यासातृतीयामात्राईशानदेवत्याकपिलावर्णेनयस्तांध्यायतेनित्यंसगच्छे-
दैशानंपदं । यासार्धचतुर्थीमात्रासर्वदेवत्याऽव्यक्तीभूताखंविचरतिशुद्धास्फटिकसंनिभावर्णेनयस्तांध्यायतेनित्यंसगच्छेत्प-

दमनामयम् । तदेतदुपासीतमुनयोवाग्वदंतिनतस्यग्रहणमयंपंथाविहितउत्तरेणयेनदेवायांतियेनपितरोयेनऋषयःपरमपरं-
परायणंचेति । वालाग्रमात्रंहृदयस्यमध्येविश्वंदेवंजातरूपंवरेण्यं । तमात्मस्थंयेतुपश्यंतिधीरास्तेषांशांतिर्भवतिनेतरेषां ।
यस्मिन्क्रोधंयांचतृष्णांक्षमांचाक्षमांहित्वाहेतुजालस्यमूलं । बुद्ध्यासंचितंस्थापयित्वातुरुद्रेरुद्रमेकत्वमाहुः । रुद्रोहिशाश्व-
तेनवैपुराणेनेषमूर्जेणतपसानियंताग्निरितिभस्मवायुरितिभस्मजलमितिभस्मस्थलमितिभस्मव्योमेतिभस्मसर्वंहवाइदंभस्म-
मनएतानिचक्षूंषियस्माद्व्रतमिदंपाशुपतंयद्भस्मनांगानिसंस्पृशेत्तस्माद्ब्रह्मतदेतत्पाशुपतंपशुपाशविमोक्षणाय ॥ ५ ॥ यो-
ऽग्नौरुद्रोयोऽप्स्वंतर्यओषधीर्वीरुधआविवेश । यइमाविश्वाभुवनानिचक्लृपेतस्मैरुद्रायनमोऽस्त्वग्नये । योरुद्रोऽग्नौयोरुद्रोऽ-
प्स्वंतर्योरुद्रओषधीर्वीरुधआविवेश । योरुद्रइमाविश्वाभुवनानिचक्लृपेतस्मैरुद्रायवैनमोनमः । योरुद्रोऽप्सुयोरुद्रओषधीषु-
योरुद्रोवनस्पतिषु । येनरुद्रेणजगदूर्ध्वंधारितंपृथिवीद्विधात्रिधाधर्ताधारितानागायेंतरिक्षेतस्मैरुद्रायवैनमोनमः । मूर्धा-
नमस्यसंसेव्याप्यथर्वाहृदयंचयत् । मस्तिष्कादूर्ध्वंप्रेरयत्यवमानोऽधिशीर्षतः । तद्वाअथर्वणःशिरोदेवकोशःसमुज्झितः ।
तत्प्राणोऽभिरक्षतिशिरोंऽतमथोमनः । नचदिवोदेवजनेनगुप्तानचांतरिक्षाणिनचभूमयइमाः । यस्मिन्निदंसर्वमोतप्रोतं-
तस्मादन्यन्नपरंकिंचनास्ति । नतस्मात्पूर्वंनपरंतदस्तिनभूतंनोतभव्यंयदासीत् । सहस्रपादेकमूर्ध्नाव्याप्तंसएवेदमावरीवर्ति-
भूतं । अक्षरात्संजायतेकालःकालाद्व्यापकउच्यते । व्यापकोहिभगवान्रुद्रोभोगायमानोयदाशेतेरुद्रस्तदासंहार्यतेप्रजाः ।
उच्छ्वसितेतमोभवतितमसआपोऽप्स्वंगुल्यामथितंशिशिरेशिशिरंमथ्यमानंफेनंभवतिफेनादंडंभवत्यंडाद्ब्रह्माभवतिब्रह्मणोवा-

अथकस्मादुच्यतेएकःयःसर्वान्प्राणान्संभक्ष्यसंभक्षणेनाजःसंसृजतिविसृजतितितीर्थमेकेव्रजंतितितीर्थमेकेदक्षिणाःप्रत्यंचउदंचः-
प्रांचोऽभिव्रजंत्येकेतेपांसर्वेपामिहसंगतिःसाकंसएकोऽभूदंतश्चरतिप्रजानांतस्मादुच्यतेएकः । अथकस्मादुच्यतेरुद्रःयस्माद्द-
षिभिर्नान्यैर्भक्तैर्द्रुतमस्यरूपमुपलभ्यतेतस्मादुच्यतेरुद्रः । अथकस्मादुच्यतेईशानःयःसर्वान्देवानीशतेईशानीभिर्जननीभि-
श्चशक्तिभिः । अभित्वाशूरणोनुमोदुग्धाइवधेनवः । ईशानमस्यजगतःस्वर्दृशमीशानमिंद्रतस्थुपइतितस्मादुच्यतेईशानः ।
अथकस्मादुच्यतेभगवान्महेश्वरःयस्माद्भक्तान्ज्ञानेनभजत्यनुगृह्णातिचवाचंसंसृजतिविसृजतिचसर्वान्भावान्परित्यज्यात्म-
ज्ञानेनयोगैश्वर्येणमहतिमहीयतेतस्मादुच्यतेभगवान्महेश्वरः । तदेतद्रुद्रचरितम् ॥४॥ एपोहदेवःप्रदिशोऽनुसर्वाःपूर्वोह-
जातःसउगर्भेअंतः । सएवजातःसजनिष्यमाणःप्रत्यङ्जनास्तिष्ठतिसर्वतोमुखः । एकोरुद्रोनद्वितीयायतस्थैयइमाँल्लोकानी-
शतईशनीभिः । प्रत्यङ्जनास्तिष्ठतिचांतकालेसंसृज्यविश्वाभुवनानिगोप्ता । योयोनिंयोनिमधितिष्ठत्येकोयेनेदंसर्वंविचर-
तिसर्वम् । तमीशानंवरदंदेवमीड्यंनिचाय्येमांशांतिमत्यंतमेति । क्षमांहित्वाहेतुजालस्यमूलंबुद्ध्यासंचितंस्थापयित्वातुरुद्रे ।
रुद्रमेकंत्वामाहुःशाश्वतंवैपुराणमिषमूर्जेणपशवोनुनामयंतंमृत्युपाशान् । तदेतेनात्मन्नेतेनार्धचतुर्थेनमात्रेणशांतिंसंसृजति-
पशुपाशविमोक्षणंयासाप्रथमामात्राब्रह्मदेवत्यारक्तावर्णेनयस्तांध्यायतेनित्यंसगच्छेद्ब्रह्मपदं । यासाद्वितीयामात्राविष्णुदेव-
त्याकृष्णवर्णेनयस्तांध्यायतेनित्यंसगच्छेद्वैष्णवंपदं । यासातृतीयामात्राईशानदेवत्याकपिलावर्णेनयस्तांध्यायतेनित्यंसगच्छे-
दैशानंपदं । यासार्धचतुर्थीमात्रासर्वदेवत्याऽव्यक्तीभूताखंविचरतिशुद्धास्फटिकसंनिभावर्णेनयस्तांध्यायतेनित्यंसगच्छेत्प-

दमनामयम् । तदेतदुपासीतमुनयोवाग्वदंतिनतस्यग्रहणमयंपंथाविहितउत्तरेणयेनदेवायांतियेनपितरोयेनऋषयःपरमपरं-
परायणंचेति । वालाग्रमात्रंहृदयस्यमध्येविश्वंदेवंजातरूपंवरेण्यं । तमात्मस्थंयेतुपश्यंतिधीरास्तेषांशांतिर्भवतिनेतरेषां ।
यस्मिन्क्रोधंयांचतृष्णांक्षमांचाक्षमांहित्वाहेतुजालस्यमूलं । बुद्ध्यासंचितंस्थापयित्वातुरुद्रेरुद्रमेकत्वमाहुः । रुद्रोहिशाश्व-
तेनवैपुराणेनेषमूर्जेणतपसानियंताग्निरितिभस्मवायुरितिभस्मजलमितिभस्मस्थलमितिभस्मव्योमेतिभस्मसर्वंहवाइदंभस्म-
मनएतानिचक्षूंषियस्माद्व्रतमिदंपाशुपतंयद्भस्मनांगानिसंस्पृशेत्तस्माद्ब्रह्मतदेतत्पाशुपतंपशुपाशविमोक्षणाय ॥ ५ ॥ यो-
ऽग्नौरुद्रोयोऽप्स्वंतर्यओषधीर्वीरुधआविवेश । यइमाविश्वाभुवनानिचक्लृपेतस्मैरुद्रायनमोऽस्त्वग्नये । योरुद्रोऽग्नौयोरुद्रोऽ-
प्स्वंतर्योरुद्रओषधीर्वीरुधआविवेश । योरुद्रइमाविश्वाभुवनानिचक्लृपेतस्मैरुद्रायवैनमोनमः । योरुद्रोऽप्सुयोरुद्रओषधीपु-
योरुद्रोवनस्पतिपु । येनरुद्रेणजगदूर्ध्वंधारितंपृथिवीद्विधात्रिधाधर्ताधारितानागायंतरिक्षेतस्मैरुद्रायवैनमोनमः । मूर्धा-
नमस्यसंसेव्याप्यथर्वाहृदयंचयत् । मस्तिष्कादूर्ध्वंप्रेरयत्यवमानोऽधिशीर्षतः । तद्वाअथर्वणःशिरोदेवकोशःसमुज्झितः ।
तत्प्राणोऽभिरक्षतिशिरोंऽतमथोमनः । नचदिवोदेवजनेनगुप्तानचांतरिक्षाणिनचभूमयइमाः । यस्मिन्निदंसर्वमोतप्रोतं-
तस्मादन्यन्नपरंकिंचनास्ति । नतस्मात्पूर्वंनपरंतदस्तिनभूतंनोतभव्यंयदासीत् । सहस्रपादेकमूर्ध्नाव्याप्तंसएवेदमावरीवर्ति-
भूतं । अक्षरात्संजायतेकालःकालाद्व्यापकउच्यते । व्यापकोहिभगवान्रुद्रोभोगायमानोयदाशेतेरुद्रस्तदासंहार्यतेप्रजाः ।
उच्छ्वसितेतमोभवतितमसआपोऽप्स्वंगुल्यामथितंशिशिरेशिशिरंमथ्यमानंफेनंभवतिफेनादंडंभवत्यंडाद्ब्रह्माभवतिब्रह्मणोवा-

तुर्थ्यामनश्नन्जपति सविद्यावान्भवति । इत्यथर्वणवाक्यं । ब्रह्माद्याचरणंविद्यान्नबिभेतिकदाचनेति ॥ १२ ॥ योदूर्वां-
कुरैर्यजति सवैश्रवणोपमोभवति । योलाजैर्यजति सयशोवान्भवति समेधावान्भवति । योमोदकसहस्त्रेणयजति सवांछि-
तफलमवाप्नोति । यःसाज्यसमिद्भिर्यजति ससर्वंलभते ससर्वंलभते । अष्टौब्राह्मणान्सम्यग्ग्राहयित्वा सूर्यवर्चस्वीभवति ।
सूर्यग्रहेमहानद्यांप्रतिमासन्निधौवाजप्त्वा सिद्धमन्त्रोभवति । महाविघ्नात्प्रमुच्यते । महादोषात्प्रमुच्यते । महापापात्प्रमु-
च्यते । ससर्वविद्भवति ससर्वविद्भवतियएवंवेद । इत्युपनिषत् ॥ १३ ॥ इतिगणपत्यथर्वशीर्षंसमाप्तम् ॥

सूर्याथर्वशीर्षम् ॥ ॐअस्यश्रीसूर्याथर्वशीर्षस्य । ब्रह्माऋषिः । आदित्योदेवता । गायत्रीछंदः । हंसाद्यग्निनारायण-
युक्तंबीजं । हृल्लेखाशक्तिः । द्विपदादिसर्गसंयुक्तंकीलकं । धर्मार्थकाममोक्षार्थंजपेविनियोगः । षट्स्वरारूढबीजेनषडंग-
रक्तांबुजसंस्थितंसप्ताश्वरथिनंहिरण्यवर्णंचतुर्भुजंपद्मद्वयाभयवरदहस्तंकालचक्रप्रणेतारंचश्रीसूर्यनारायणंयएवंवेदसवैब्राह्म-
णः ॥ ॐभूः । ॐभुवः । ॐस्वः । ॐमहः । ॐजनः । ॐतपः । ॐसत्यं । ॐतत्सवितु॰ । परोरजसेसावदोम् ।
ॐआपोज्योतीरसोऽमृतंब्रह्मभूर्भुवःसुवरोम् । सूर्यआत्माजगतस्तस्थुषश्च । सूर्याद्वैखल्विमानिभूतानिजायंते । सूर्योय-
ज्ञःपर्जन्योऽन्नमात्मा । नमस्तेआदित्याय । त्वमेवकेवलंकर्तासि । त्वमेवप्रत्यक्षंविष्णुरसि । त्वमेवप्रत्यक्षंब्रह्मासि । त्वमे-
वप्रत्यक्षंरुद्रोऽसि । त्वमेवप्रत्यक्षमृगसि । त्वमेवप्रत्यक्षंयजुरसि । त्वमेवप्रत्यक्षंसामासि । त्वमेवप्रत्यक्षमथर्वासि । त्वमेव-
सर्वंछन्दोसि । आदित्याद्वायुर्जायते । आदित्याद्भूमिर्जायते । आदित्यादापोजायंते । आदित्याज्ज्योतिर्जायते । आदित्या-

द्वयोमदिशोजायंते । आदित्याद्वेदाजायंते । आदित्याद्देवाजायंते । आदित्योवाएषएतन्मंडलंतपति । असावादित्योब्रह्म । आदित्योंऽतःकरणमनोबुद्धिचित्ताहंकाराः । आदित्योवैव्यानसमानोदानापानप्राणाः । आदित्योवैश्रोत्रत्वक्चक्षूरसनानासाः । आदित्योवैवाक्पाणिपादोपस्थपायूनि । आदित्योवैशब्दस्पर्शरूपरसगंधाः । आदित्योवैवचनादानगमनानंदविसर्गाः । आनंदमयोज्ञानमयोविज्ञानमयआदित्यः । नमोमित्रायभानवेमृत्योर्मांपाहिभ्राजिष्णवेविश्वहेतवेनमः । सूर्योनोदिवस्पातुवातोअंतरिक्षात् । अग्निर्नःपार्थिवेभ्यः । सूर्याद्भवंतिभूतानि । सूर्येणपालितानितु । सूर्येलयंप्राप्नुवंति । यःसूर्यःसोहमेवच । चक्षुर्नोदेवःसविता । चक्षुर्नउतपर्वतः । चक्षुर्धातादधातुनः । आदित्यायविद्महेसहस्रकरायधीमहि । तन्नःसूर्यःप्रचोदयात् । सवितापश्चात्तात् । सवितापुरस्तात् । सवितोत्तरात्तात् । सविताधरात्तात् । सवितानःसुवतुसर्वतातिम् । सवितानोरासतांदीर्घमायुः ॥ ॥ ओमित्येकाक्षरंब्रह्म । घृणिरितिद्वेअक्षरे । सूर्यइत्यक्षरद्वयम् । आदित्यइतित्रीण्यक्षराणि । एतद्वैसूर्यस्याष्टाक्षरंमनुंयःसदाहरहर्जपतिसोब्रह्मण्योब्राह्मणोभवति । सूर्याभिमुखंजप्त्वामहाव्याधिभयात्प्रमुच्यते । अलक्ष्मीर्नश्यति । अभक्ष्यभक्षणात्पूतोभवति । अपेयपानात्पूतोभवति । अगम्यागमनात्पूतोभवति । व्रात्यसंभाषणात्पूतोभवति । मध्याह्नेसूर्याभिमुखःपठेत् । सद्यःपंचमहापापात्प्रमुच्यते । सैषासावित्रीविद्यानकस्यचित्प्रशंसेत् । यएतन्महाभागःप्रातःपठतिसभाग्यवान्जायते । पशून्विंदतिवेदार्थंलभते । त्रिकालंजप्त्वाक्रतुशतफलंप्राप्नोति । हस्तादित्येजपतिसमहामृत्युंतरति । यएवंवेद । इत्युपनिषत् ॥ इतिसूर्याथर्वशीर्षसमाप्तम् ॥

देव्यथर्वशीर्षम् ॥ ॐ सर्वेवैदेवादेवीमुपतस्थुः कासित्वंमहादेवीति । साब्रवीदहंब्रह्मस्वरूपिणी । मत्तःप्रकृतिपुरुषात्मकं
जगत् । शून्यंचाशून्यंच । अहमानंदानानंदौअहंविज्ञानाज्ञानेअहंब्रह्माब्रह्मणीवेदितव्ये । इतिचाथर्वणीश्रुतिः । अ-
हंपंचभूतानि । अहंपंचतन्मात्राणि । अहमखिलंजगत् । वेदोहमवेदोहं । विद्याहमविद्याहम् । अजाहमनजाहं । अधश्चो-
र्ध्वंचतिर्यक्चाहं । अहꣳरुद्रेभिर्वसुभिश्चरामि । अहमादित्यैरुतविश्वदेवैः । अहंमित्रावरुणावुभौबिभर्मि । अहमिंद्राग्नीअह-
मश्विनाउभौ । अहꣳसोमंत्वष्टारंपूषणंभगंदधामि । अहंविष्णुमुरुक्रमं । ब्रह्माणमुतप्रजापतिंदधामि । अहंदधामिद्रविणꣳ-
हविष्मतेसुप्राव्येयजमानायसुन्वते । अहꣳराष्ट्रीसंगमनीवसूनांचिकितुषीप्रथमायज्ञियानां । अहꣳसुवेपितरमस्यमूर्धन्म-
मयोनिरप्स्वंतःसमुद्रे । यएवंवेदसदैवीꣳसंपदमाप्नोति । तेदेवाअब्रुवन् । नमोदेव्यैमहादेव्यैशिवायैसततंनमः । नमःप्रकृ-
त्यैभद्रायैनियताःप्रणताःस्मताम् । तामग्निवर्णांतपसाज्वलंतींवैरोचनींकर्मफलेषुजुष्टाम् । दुर्गांदेवींशरणंप्रपद्यामहेऽसुरा-
न्नाशयित्र्यैतेनमः । देवींवाचमजनयंतदेवास्तांविश्वरूपाःपशवोवदंति । सानोमंद्रेषमूर्जंदुहानाधेनुर्वागस्मानुपसुष्टुतैतु ॥
कालरात्रींब्रह्मस्तुतांवैष्णवींस्कंदमातरम् । सरस्वतीमदितिंदक्षदुहितरंनमामःपावनांशिवाम् । महालक्ष्म्यैचविद्महेसर्वश-
क्त्यैचधीमहि । तन्नोदेवीप्रचोदयात् । अदितिर्ह्यजनिष्टदक्षयादुहितातव । तांदेवाअन्वजायंतभद्राअमृतबंधवः ॥ कामो-
योनिःकमलावज्रपाणिर्गुहाहंसामातरिश्वाभ्रमिंद्रः । पुनर्गुहासकलामाययाचापृथक्क्लेशाविश्वमातादिविद्याः ॥ एषात्म-
शक्तिः । एषाविश्वमोहिनीपाशांकुशधनुर्बाणधरा । एषाश्रीमहाविद्या । यएवंवेद सशोकंतरति । नमस्तेभगवतिमातर-

स्मान्पाहिसर्वतः । सैपावैष्णव्यष्टौवसवः सैवैकादशरुद्राः सैषाद्वादशादित्याः सैपाविश्वेदेवाःसोमपाअसोमपाश्च सैषाया-
तुधानाअसुरारक्षांसिपिशाचयक्षसिद्धाः सैपासत्वरजस्तमांसि सैपाब्रह्मविष्णुरुद्ररूपिणी सैपाप्रजापतींद्रमनवः सैपाग्रहन-
क्षत्रज्योतिष्कलाकाष्ठादिविश्वरूपिणीतामहंप्रणौमिनित्यम् । पापापहारिणीदेवीभुक्तिमुक्तिप्रदायिनी । अनंतांविजयांशु-
द्धांशरण्यांसर्वदांशिवाम् ॥ वियदाकारसंयुक्तंवीतिहोत्रसमन्वितम् ॥ अर्धेंदुलसितंदेव्याबीजंसर्वार्थसाधकम् ॥ एवमेका-
क्षरंमन्त्रंयतयःशुद्धचेतसः । ध्यायंतिपरमानंदमयाज्ञानांबुराशयः ॥ वाङ्मयाब्रह्मभूस्तस्मात्पष्ठवक्रसमन्वितम् । सूर्योवाम-
श्रोत्रबिंदुसंयुक्ताष्टतृतीयकम् ॥ नारायणेनसंमिश्रोवायुश्चाधारयुक्तयः । विच्चेनवार्णकोणस्यमहानानंददायकः । हृत्पुंड-
रीकमध्यस्थांप्रातःसूर्यसमप्रभाम् । पाशांकुशधरांसौम्यांवरदाभयहस्तकाम् ॥ त्रिनेत्रांरक्तवसनांभक्तकामदुहंभजे । भजा-
मित्वांमहादेविमहाभयविनाशिनि ॥ महादारिद्र्यशमनिमहाकारुण्यरूपिणि । यस्याःस्वरूपंब्रह्मादयोनजानंतितस्मादु-
च्यतेअज्ञेया । यस्याअंतोनलभ्यतेतस्मादुच्यतेअनंता । यस्यालक्ष्यंनोपलक्ष्यतेतस्मादुच्यतेअलक्ष्या । यस्याजननंनोपलक्ष्यते
तस्मादुच्यतेअजा । एकैवसर्वत्रवर्ततेतस्मादुच्यतएका । एकैवविश्वरूपिणीतस्मादुच्यतेऽनेका । अतएवोच्यतेऽज्ञेयानंत-
लक्ष्यजैकानेका । मन्त्राणांमातृकादेवीशब्दानांज्ञानरूपिणी । ज्ञानानांचिन्मयातीताशून्यानांशून्यसाक्षिणी ॥ यस्याःपर-
तरंनास्तिसैपादुर्गाप्रकीर्तिता । तांदुर्गांदुर्गमांदेवींदुराचारविघातिनीम् ॥ नमामिभवभीतोऽहंसंसारार्णवतारिणीम् ॥ ॥
इदमथर्वशीर्षंयोऽधीते । सपंचाथर्वशीर्षफलमाप्नोति । इदमथर्वशीर्षंज्ञात्वायोर्चां स्थापयति । शतलक्षंप्रजप्त्वापिनार्चांशु-

ऽद्धिंचविंदति । शतमष्टोत्तरंचास्यपुरश्चर्याविधिःस्मृतः । दशवारंपठेद्यस्तुसद्यःपापैःप्रमुच्यते । महादुर्गाणितरतिमहादेव्याः प्रसादतः ॥ सायमधीयानोदिवसकृतंपापंनाशयति । प्रातरधीयानोरात्रिकृतंपापंनाशयति । सायंप्रातःप्रयुंजानोअपापो- भवति । निशीथेतुरीयसंध्यायांजप्त्वावाक्सिद्धिर्भवति । नूतनायांप्रतिमायांजप्त्वादेवतासांनिध्यंभवति । भौमाश्विन्यांम हादेवीसंनिधौजप्त्वामहामृत्युंतरतिसमहामृत्युंतरति । यएवंवेदइत्युपनिषत् ॥ इतिदेव्यथर्वशीर्षम् ॥

अथपुष्पाञ्जलिमन्त्राः ॥ १ ॐगणानांत्वा० गर्भधम् ॥ २३–१९ ॥ २ श्रीश्चतेल० इषाण ॥ ३१–२२ ॥ ३ अम्बेऽ- अंबिके० वासिनीम् ॥ २३–१८ ॥ ४ पञ्चनद्यःस० त्सरित् ॥ ३४–११ ॥ ५ मूर्द्धानंदिवो० देवाः ॥ ७–२४ ॥ ६ प्रो- ह्यमानःसो० व्विश्वेदेवाः ॥ ८–५७॥ ७ व्विश्वेदेवाऽअ० व्विश्वेदेवाः ॥ ८–५८ ॥ ८ षोडशीस्तोम० गृणन्तुदेवाः ॥ १५–३॥ ९ समिद्धेऽअ० देवाः ॥ १७–५५ ॥ १० प्रजापतेस्तप० देवाः ॥ २९–११ ॥ ११ सद्योजातो० देवाः ॥ २९–३६ ॥ १२ यज्ञेनयज्ञं० देवाः ॥ ३१–१६ ॥ १३ असेरुद्रामे० देवाः ॥ ३३–५० ॥ १४ नहिस्पृशम० देवाः ॥ ३३–७॥ ॥१५॥ गृभ्णामितेसौभगत्वायहस्तंमयापत्याजरदष्टिर्यथासः ॥ भगोऽअर्यमासवितापुरंधिर्मह्यंत्वादुर्गार्हपत्याय- देवाः ॥ १५ ॥ पारस्करगृह्ये प्रथमकांडे षष्ठखंडे अयंमन्त्रः ॥१६॥ ॐराजाधिराजाय । प्रसह्यसाहिने । नमोवयंवैश्रव- णायकुर्महे । समेकामान्कामकामायमह्यं । कामेश्वरोवैश्रवणोददातु । कुबेरायवैश्रवणाय । महाराजायनमः ॥ ॐस्वस्ति ॥ साम्राज्यंभौज्यंस्वाराज्यंवैराज्यंपारमेष्ठ्यंराज्यंमहाराज्यमाधिपत्यमयंसमन्तपर्यायीस्यात्सार्वभौमःसार्वायुषआन्तादापरार्धा-

त्पृथिव्यैसमुद्रपर्यन्तायाएकराळिति ॥ तदप्येषश्लोकोभिगीतोमरुतःपरिवेष्टारोमरुत्तस्यावसन्गृहे । आविक्षितस्यकाम-
प्रेर्विश्वेदेवाःसभासदइति ॥ १७ ॐविश्वतश्चक्षु० देवऽएकः ॥ १७—१९ ॥ इतिपुष्पाञ्जलिमन्त्राः ॥

अथशांतिपाठः ॥ ॐ ॥ रुक्षोहणंवलगहनंवैष्णवीमिदमहंतंवलगमुत्किरामियंमेनिष्ट्योयममात्योनिचखानेदमहंतं-
वलगमुत्किरामियंमेसमानोयमसमानोनिचखानेदमहंतंवलगमुत्किरामियंमेसबंधुर्यमसबंधुर्निचखानेदमहंतंवलगमुत्किरा-
मियंमेसजातोयमसजातोनिचखानोत्कृत्यांकिरामि ॥ १ ॥ रुक्षोहणोवोवलगहनःप्रोक्षामिवैष्णवान्रक्षोहणोवोवलगहनो-
वनयामिवैष्णवान्रक्षोहणोवोवलगहनोवस्तृणामिवैष्णवान्रक्षोहणौवांवलगहनाउपदधामिवैष्णवीरक्षोहणौवांवलगहनौप-
र्यूहामिवैष्णवीवैष्णवमसिवैष्णवास्थ ॥ २ ॥ रक्षसांभागोसिनिरस्तꣳरक्षइदमहꣳरक्षोभितिष्ठामीदमहꣳरक्षोवबाधऽइदम-
हꣳरक्षोधमतमोनयामि ॥ घृतेनद्यावापृथिवीप्रोर्णुवाथांवायोवेस्तोकानामग्निराज्यस्यवेतुस्वाहास्वाहाकृतेऊर्ध्वनभसंमारु-
तंगच्छतं ॥ ३ ॥ रुक्षोहाविश्वचर्षणिरभियोनिमयोहते ॥ द्रोणेसधस्थमासदत् ॥ ४ ॥ अपसर्पंतुतेभूतायेभूताभूमिसं-
स्थिताः ॥ येभूताविघ्नकर्तारस्तेनश्यंतुशिवाज्ञया ॥ ५ ॥ अपक्रामंतुभूतानिपिशाचाःसर्वतोदिशं ॥ सर्वेषामविरोधेनब्र-
ह्मकर्मसमारभे ॥ ६ ॥ गणानांत्वागणपतिꣳहवामहेप्रियाणांत्वाप्रियपतिꣳहवामहेनिधीनांत्वानिधिपतिꣳहवामहेवसो-
मम ॥ आहमजानिगर्भधमात्वमजासिगर्भधं ॥ ७ ॥ श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तम् ॥

इष्णंनिपाणामुंमंइषाणसर्वंलोकंमंइषाण ॥ ८ ॥ आकृष्णेनरजसावर्तमानोनिवेशयन्नमृतंमर्त्यंच ॥ हिरण्ययेनसवितारथे-
नादेवोयातिभुवनानिपश्यन् ॥ ९ ॥ इमंदेवाऽअसपत्नꣳसुवध्वंमहतेक्षत्रायमहतेज्यैष्ठ्यायमहतेजानराज्यायेंद्रस्येंद्रियाय ॥
इममसुष्यपुत्रममुष्यैपुत्रमस्यैविशऽएषवोमीराजासोमोस्माकंब्राह्मणानाꣳराजा ॥ १० ॥ अग्निर्मूर्धादिवꣳककुत्पतिःपृथि-
व्याऽअयं ॥ अपाꣳरेताꣳसिजिन्वति ॥ ११ ॥ उद्बुध्यस्वाग्नेप्रतिजागृहित्वमिष्टापूर्तेसꣳसृजेथामयंच ॥ अस्मिन्त्सधस्थेऽअ-
ध्युत्तरस्मिन्विश्वेदेवायजमानश्चसीदत ॥ १२ ॥ बृहस्पतेअतियदर्योऽअर्हाद्द्युमद्विभातिक्रतुमज्जनेषु ॥ यद्दीदयच्छवस-
ऋतप्रजाततदस्मासुद्रविणंधेहिचित्रं ॥ १३ ॥ अन्नात्परिस्रुतोरसंब्रह्मणाव्यपिबत्क्षत्रंपयꣳसोमंप्रजापतिः ॥ ऋतेनस-
त्यमिंद्रियंविपानꣳशुक्रमंधसइंद्रस्येंद्रियमिदंपयोमृतंमधु ॥ १४ ॥ शन्नोदेवीरभिष्टयआपोभवंतुपीतये ॥ शंयोरभिस्रवं-
तुनः ॥ १५ ॥ कयानश्चित्रआभुवदूतीसदावृधꣳसखा ॥ कयाशचिष्ठयावृता ॥ १६ ॥ केतुंकृण्वन्नकेतवेपेशोमर्याऽअपे-
शसे ॥ समुषद्भिरजायथाः ॥ १७ ॥ त्र्यंबकंयजामहेसुगंधिंपुष्टिवर्धनं ॥ उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात् १८॥
सजोषाऽइंद्रसगणोमरुद्भिꣳसोमंपिबवृत्रहाशूरविद्वान् ॥ जहिशत्रूꣳरपमृधोनुदस्वाथाभयंकृणुहिविश्वतोनः ॥ १९ ॥ त्रा-
तारमिंद्रमवितारमिंद्रꣳहवेहवेसुहवꣳशूरमिंद्रम् ॥ ह्वयामिशक्रंपुरुहूतमिंद्रꣳस्वस्तिनोमघवाधात्विंद्रः ॥ २० ॥ त्वन्नो-
अग्नेतवदेवपायुभिर्मघोनोरक्षतन्वश्चवंद्य ॥ त्रातातोकस्यतनयेगवामस्यनिमेषꣳरक्षमाणस्तवव्रते ॥ २१ ॥ समायत्वांगिर-

स्वतेपितृमतेस्वाहा ॥ स्वाहाघर्मायस्वाहाघर्मःपित्रे ॥ २२ ॥ असुन्वंतमयजमानमिच्छस्तेनस्येत्यामन्विहितस्करस्य ॥
अन्यमस्मदिच्छसातइत्यानमोदेविनिर्ऋतेतुभ्यमस्तु ॥ २३ ॥ तत्त्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः ॥
अहेडमानोवरुणेहबोध्युरुशꣳसमानआयुःप्रमोषीः ॥ २४ ॥ आनोनियुद्भिःशतिनीभिरध्वरꣳसहस्रिणीभिरुपयाहियज्ञं ॥
वायोअस्मिन्त्सवनेमादयस्वयूयंपातस्वस्तिभिःसदानः ॥ २५ ॥ वयꣳसोमव्रतेतवमनस्तनूषुबिभ्रतः ॥ प्रजावंतःसचेमहि
॥ २६ ॥ तमीशानंजगतस्तस्थुषस्पतिंधियंजिन्वमवसेहूमहेवयं ॥ पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धःस्वस्तये
॥ २७ ॥ अस्मेरुद्रामेहनापर्वतासोवृत्रहत्येभरहूतौसजोषाः ॥ यःशंसतेस्तुवतेधायिपज्रइंद्रज्येष्ठाअस्माँअवंतुदेवाः
॥ २८ ॥ स्योनापृथिविनोभवानृक्षरानिवेशनी ॥ यच्छानःशर्मसप्रथाः ॥ २९ ॥ आनोभद्राःक्रतवोयंतुविश्वतोदब्धा-
सोऽअपरीतासउद्भिदः ॥ देवानोयथासदमिद्वृधेअसन्नप्रायुवोरक्षितारोदिवेदिवे ॥ ३० ॥ देवानांभद्रासुमतिर्ऋजूयतांदे
वानांꣳरातिरभिनोनिवर्ततां ॥ देवानाꣳसख्यमुपसेदिमावयंदेवानआयुःप्रतिरंतुजीवसे ॥ ३१ ॥ तान्पूर्वयानिविदाहूम-
हेवयंभगंमित्रमदितिंदक्षमस्रिधम् ॥ अर्यमणंवरुणꣳसोममश्विनासरस्वतीनःसुभगामयस्करत् ॥ ३२ ॥ तन्नोवातोमयोभु-
वातुभेषजंतन्मातापृथिवीतत्पिताद्यौः ॥ तद्ग्रावाणःसोमसुतोमयोभुवस्तदश्विनाशृणुतंधिष्ण्यायुवं ॥ ३३ ॥ तमीशानंजग-
तस्तस्थुषस्पतिंधियंजिन्वमवसेहूमहेवयं ॥ पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धःस्वस्तये ॥ ३४ ॥ स्वस्तिनइंद्रो-

वृद्धश्रवाꣳस्वस्तिनः पूषा विश्ववेदाः ॥ स्वस्तिनस्ताऱ्क्ष्योऽअरिष्टनेमिःस्वस्तिनोबृहस्पतिर्दधातु ॥ ३५ ॥ पृषदश्वामरुतꣳपृ-
श्निमातरꣳशुभंयावानाविदथेषुजग्मयꣳ ॥ अग्निजिह्वामनवꣳसूरचक्षसोविश्वेनोदेवाऽअवसागमन्निह ॥ ३६ ॥ भद्रंकर्णे-
भिःशृणुयामदेवाभद्रंपश्येमाक्षभिर्यजत्राः ॥ स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेमहिदेवहितंयदायुः ॥ ३७ ॥ शतमिन्नुश-
रदोअंतिदेवायत्रानश्चक्राजरसंतनूनां ॥ पुत्रासोयत्रपितरोभवंतिमानोमध्यारीरिषतायुर्गंतोः ॥ ३८ ॥ अदितिर्द्यौरदि-
तिरंतरिक्षमदितिर्मातासपितासपुत्रः ॥ विश्वेदेवाऽअदितिःपंचजनाअदितिर्जातमदितिर्जनित्वं ॥ ३९ ॥ ऋचंवाचंप्र-
पद्येमनोयजुःप्रपद्येसामप्राणंप्रपद्येचक्षुःश्रोत्रंप्रपद्ये ॥ वागोजःसहौजोमयिप्राणापानौ ॥ ४० ॥ यन्मेछिद्रंचक्षुषोहृदय-
स्यमनसोवातितृण्णंबृहस्पतिर्मेतद्दधातु ॥ शंनोभवतुभुवनस्ययस्पतिः ॥ ४१ ॥ भूर्भुवःस्वः तत्सवितुर्वरेण्यंभर्गोदेवस्य
धीमहि ॥ धियोयोनःप्रचोदयात् ॥ ४२ ॥ कयानश्चित्रआभुवदूतीसदावृधःसखा ॥ कयाशचिष्ठयावृता ॥ ४३ ॥ क-
स्त्वासत्योमदानांमꣳहिष्ठोमत्सदंधसः ॥ दृढाचिदारुजेवसु ॥ ४४ ॥ अभीषुणःसखीनामविताजरितॄणां ॥ शतंभवा-
स्यूतिभिः ॥ ४५ ॥ कयात्वंनऊत्याभिप्रमंदसेवृषन् ॥ कयास्तोतृभ्यआभर ॥ ४६ ॥ इंद्रोविश्वस्यराजति ॥ शंनोअस्तु-
द्विपदेशंचतुष्पदे ॥ ४७ ॥ शन्नोमित्रःशंवरुणःशन्नोभवत्वर्यमा ॥ शन्नइंद्रोबृहस्पतिःशन्नोविष्णुरुरुक्रमः ॥ ४८ ॥ शन्नो-
वातःपवताꣳशन्नस्तपतुसूर्यः ॥ शन्नःकनिक्रदद्देवःपर्जन्योऽअभिवर्षतु ॥ ४९ ॥ अहानिशंभवंतुनःशꣳरात्रीःप्रतिधी-

यताम् ॥ ५० ॥ शन्नऽइंद्राग्नीभवतामवोभिः शन्नऽइंद्रावरुणारातहव्या ॥ शन्नइंद्रापूषणावाजसातौशमिंद्रासोमासुविता
युशंयोः ॥ ५१ ॥ शन्नोदेवीरभिष्टयऽआपोभवंतुपीतये ॥ शंयोरभिस्रवंतुनः ॥ ५२ ॥ स्योनापृथिवीनोभवानृक्षरानि-
वेशनी ॥ यच्छानःशर्मसप्रथाः ॥ ५३ ॥ आपोहिष्ठामयोभुवस्तानऊर्जेदधातन ॥ महेरणायचक्षसे ॥ ५४ ॥ योवः
शिवतमोरसस्तस्यभाजयतेहनः ॥ उशतीरिवमातरः ॥ ५५ ॥ तस्माऽअरंगमामवोयस्यक्षयायजिन्वथ ॥ आपोजनयथा-
चनः ॥ ५६ ॥ द्यौःशांतिरंतरिक्षꣳशांतिः पृथिवीशांतिर्विश्वेदेवाःशांतिर्ब्रह्मशांतिःसर्वꣳशांतिःशांतिरेवशांतिःसामाशां-
तिरेधि ॥ ५७ ॥ दृतेदृꣳहमामित्रस्यमाचक्षुषासर्वाणिभूतानिसमीक्षताम् ॥ मित्रस्याहंचक्षुषासर्वाणिभूतानिसमीक्षे ॥
मित्रस्यचक्षुषासमीक्षामहे ॥५८॥ दृतेदृꣳहमा ॥ ज्योक्तेसंदृशिजीव्यासंज्योक्तेसंदृशिजीव्यासं ॥५९॥ नमस्तेहरसेशोचिषे-
नमस्तेऽअस्त्वर्चिषे ॥ अन्याँस्तेऽअस्मत्तपंतुहेतयः पावकोऽअस्मभ्यꣳशिवोभव ॥६०॥ नमस्तेअस्तुविद्युतेनमस्तेस्तनयित्नवे ॥
नमस्तेभगवन्नस्तुयतःस्वःसमीहसे ॥६१॥ यतोयतःसमीहसेततोनोअभयंकुरु ॥ शन्नः कुरुप्रजाभ्योभयंनःपशुभ्यः ॥ ६२॥
सुमित्रियानऽआपऽओषधयःसंतुदुर्मित्रियास्तस्मैसंतुयोस्मान्द्वेष्टियंचवयंद्विष्मः ॥६३॥ तच्चक्षुर्देवहितंपुरस्ताच्छुक्रमुच्चरत् ॥
पश्येमशरदः शतंजीवेमशरदः शतꣳशृणुयामशरदःशतंप्रब्रवामशरदःशतमदीनाःस्यामशरदः शतंभूयश्चशरदःशतात् ॥
॥६३॥ अभिधाअसिभुवनमसियंतासिधर्ता ॥ सत्वमग्निंवैश्वानरꣳसप्रथसंगच्छस्वाहाकृतः ॥६४॥ स्वगात्वादेवेभ्यःप्रजाप-

तयेब्रह्मन्नश्वंभंत्स्यामिदेवेभ्यः प्रजापतयेतेनराध्यासम् ॥ तम्बधानदेवेभ्यः प्रजापतयेतेनराध्नुहि ॥६५॥ प्रजापतयेत्वाजुष्टंप्रो-
क्षामीन्द्राग्निभ्यांत्वाजुष्टंप्रोक्षामिवायवेत्वाजुष्टंप्रोक्षामिविश्वेभ्यस्त्वादेवेभ्योजुष्टंप्रोक्षामिसर्वेभ्यस्त्वादेवेभ्योजुष्टंप्रोक्षामि ॥
योअर्वन्तंजिघांसतितमभ्यमीतिवरुणः परोमर्तः परःश्वा ॥६६॥ अग्नयेस्वाहा । सोमायस्वाहापांमोदायस्वाहासवित्रेस्वाहा-
वायवेस्वाहाविष्णवेस्वाहेन्द्रायस्वाहाबृहस्पतयेस्वाहामित्रायस्वाहावरुणायस्वाहा ॥६७॥ हिंकारायस्वाहाहिंकृतायस्वाहाक्रं-
दतेस्वाहावक्रंदायस्वाहाप्रोथतेस्वाहाप्रप्रोथायस्वाहागंधायस्वाहाघ्रातायस्वाहानिविष्टायस्वाहोपविष्टायस्वाहासंदितायस्वा-
हावल्गतेस्वाहासीनायस्वाहाशयानायस्वाहास्वपतेस्वाहाजाग्रतेस्वाहाकूजतेस्वाहाप्रबुद्धायस्वाहाविजृंभमाणायस्वाहाविचृ-
तायस्वाहासंहानायस्वाहोपस्थितायस्वाहायनायस्वाहाप्रायणायस्वाहा ॥ ६८ ॥ यतेस्वाहाधावतेस्वाहोद्द्रावायस्वाहो-
द्द्रुतायस्वाहाशूकारायस्वाहाशूकृतायस्वाहानिषण्णायस्वाहोत्थितायस्वाहाजवायस्वाहाबलायस्वाहाविवर्तमानायस्वाहावि-
वृत्तायस्वाहाविधून्वानायस्वाहाविधूतायस्वाहाशुश्रूषमाणायस्वाहाशृण्वतेस्वाहेक्षमाणायस्वाहेक्षितायस्वाहा वीक्षिताय-
स्वाहानिमेषायस्वाहायदत्तितस्मैस्वाहायत्पिबतितस्मैस्वाहायन्मूत्रंकरोतितस्मैस्वाहाकुर्वतेस्वाहाकृतायस्वाहा ॥ ६९ ॥
आशुःशिशानोवृषभोनभीमोघनाघनःक्षोभणश्चर्षणीनां ॥ संक्रंदनोनिमिषएकवीरःशतंसेनाअजयत्साकमिंद्रः ॥ ७० ॥
संक्रंदनेनानिमिषेणजिष्णुनायुत्कारेणदुश्च्यवेनधृष्णुना ॥ तदिंद्रेणजयततत्सहध्वंयुधोनरइषुहस्तेनवृष्णा ॥ ७१ ॥ स-

इषुहस्तैःसनिषंगिभिर्वशीसःस्रष्टासयुधइंद्रोगणेन ॥ सःसृष्टजित्सोमपाबाहुशर्ध्युग्रधन्वाप्रतिहिताभिरस्ता ॥ ७२ ॥
बृहस्पतेपरिदीयारथेनरक्षोहामित्राँ२ऽअपबाधमानः ॥ प्रभंजन्त्सेनाःप्रमृणोयुधाजयन्नस्माकमेध्यविताऽरथानां ॥ ७३ ॥
बलविज्ञायस्थविरःप्रवीरःसहस्वान्वाजीसहमानउग्रः ॥ अभिवीरोअभिसत्वासहोजाजैत्रमिंद्ररथमातिष्ठगोवित् ॥ ७४ ॥
गोत्रभिदंगोविदंवज्रबाहुंजयंतमज्मप्रमृणंतमोजसा ॥ इमःसजाताअनुवीरयध्वमिंद्रःसखायोऽअनुसःरभध्वम् ॥ ७५ ॥
अभिगोत्राणिसहसागाहमानोदयोवीरःशतमन्युरिंद्रः ॥ दुश्च्यवनःपृतनाषाडयुध्योस्माकःसेनाअवतुप्रयुत्सु ॥ ७६ ॥ इंद्र-
आसांनेताबृहस्पतिर्दक्षिणायज्ञःपुरएतुसोमः ॥ देवसेनानामभिभंजतीनांजयंतीनांमरुतोयंत्वग्रं ॥ ७७ ॥ इंद्रस्यवृष्णोव-
रुणस्यराज्ञआदित्यानांमरुताःशर्धउग्रम् ॥ महामनसांभुवनच्यवानांघोषोदेवानांजयतामुदस्थात् ॥ ७८ ॥ उद्धर्षयमघ-
वन्नायुधान्युत्सत्वनांमामकानांमनाःसि ॥ उद्वृत्रहन्वाजिनांवाजिनान्युद्रथानांजयतांयंतुघोषाः ॥ ७९ ॥ अस्माकमिंद्रः
समृतेषुध्वजेष्वस्माकंयाइषवस्ताजयंतु ॥ अस्माकंवीराउत्तरेभवंत्वस्माँ२ऽउदेवाअवताहवेषु ॥ ८० ॥ अमीषांचित्तंप्रति-
लोभयंतीगृहाणांगान्यप्वेपरेहि ॥ अभिप्रेहिनिर्दहहृत्सुशोकैरंधेनामित्रास्तमसासचन्तां ॥ ८१ ॥ अवसृष्टापरापतशरव्ये-
ब्रह्मसःशिते ॥ गच्छामित्रान्प्रपद्यस्वमामीषांकंचनोच्छिषः ॥ ८२ ॥ प्रेताजयतानरइंद्रोवःशर्मयच्छतु ॥ उग्रावःसंतुबा-
हवोनाधृष्यायथासथ ॥ ८३ ॥ असौयासेनामरुतःपरेषामभ्यैतिनओजसास्पर्धमाना ॥ तांगूहततमसापव्रतेनयथामी-

अन्योअन्यन्नजानन् ॥ ८४ ॥ यत्रबाणाःसंपतंतिकुमाराविशिखाइव ॥ तन्नइंद्रोबृहस्पतिरदितिःशर्मयच्छतुविश्वाहाश-
र्मयच्छतु ॥ ८५ ॥ मर्माणितेवर्मणाछादयामिसोमस्त्वाराजामृतेनानुवस्तां ॥ उरोर्वरीयोवरुणस्तेकृणोतुजयंतंत्वानुदेवा-
मदंतु ॥ ८६ ॥ नमोस्तुसर्पेभ्योयेकेचपृथिवीमनु ॥ येअंतरिक्षेयेदिवितेभ्यःसर्पेभ्योनमः ॥ ८७ ॥ याइषवोयातुधाना-
नांयेवावनस्पतीꣳरनु ॥ येवावटेषुशेरतेतेभ्यःसर्पेभ्योनमः ॥ ८८ ॥ येवामीरोचनेदिवोयेवासूर्यस्यरश्मिषु ॥ येषामप्सु-
सदस्कृतंतेभ्यःसर्पेभ्योनमः ॥ ८९ ॥ यद्देवादेवहेडनंदेवासश्चकृमावयं ॥ अग्निर्मातस्मादेनसोविश्वान्मुंचत्वꣳहसः ॥९०॥
यदिदिवायदिनक्तमेनाꣳसिचकृमावयं ॥ वायुर्मातस्मादेनसोविश्वान्मुंचत्वꣳहसः ॥ ९० ॥ यदिजाग्रद्यदिस्वप्नएनाꣳ-
सिचकृमावयं ॥ सूर्योमातस्मादेनसोविश्वान्मुंचत्वꣳहसः ॥ ९२ ॥ देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यां ।
सरस्वत्यैवाचोयंतुर्यंत्रियेदधामिबृहस्पतेष्ट्वासाम्राज्येनाभिषिंचाम्यसौ ॥ ९३ ॥ देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपू-
ष्णोहस्ताभ्यां । सरस्वत्यैवाचोयंतुर्यंत्रेणाग्नेःसाम्राज्येनाभिषिंचामि ॥ ९४ ॥ देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णो-
हस्ताभ्यां । अश्विनोर्भैषज्येनतेजसेब्रह्मवर्चसायाभिषिंचामि । सरस्वत्यैभैषज्येनवीर्यायान्नाद्यायाभिषिंचामींद्रस्येन्द्रियेण-
बलायश्रियैयशसेभिषिंचामि ॥ ९५ ॥ अग्निर्देवतावातोदेवतासूर्योदेवताचंद्रमादेवतावसवोदेवतारुद्रादेवतादित्यादेवता-
मरुतोदेवताविश्वेदेवादेवताबृहस्पतिर्देवतेन्द्रोदेवतावरुणोदेवता ॥ ९६ ॥ दीर्घायुस्तओषधेखनितायस्मैचत्वाखनाम्य-

हम् ॥ अथोत्वंदीर्घायुर्भूत्वाशतवल्शाविरोहतात् ॥ १७ ॥

अथैनाप्यायनारंभः ॥ कां० ७ प्र० २ ब्रा० ३ मं० ४५ अथैनाआप्यानवतीभ्यामभिमृशति ॥ इदमेवैतद्रेतᳪसिक्तमा-
प्याययतितस्माद्योनौरेतᳪसिक्तमाप्यायतेसौमीभ्यांप्राणोवैसोमःप्राणंतद्रेतसिदधातितस्माद्रेतᳪसिक्तंप्राणमभिसंभवतिपू-
येद्धयद्दतेप्राणात्संभवेदेपोहैवात्रसूददोहाःप्राणोवैसोमःप्राणःसूददोहाः ॥ १ ॥ आप्यायस्वसमेतुते ॥ विश्वतःसोमवृष्ण्य-
मितिरेतोवैवृष्ण्यमाप्यायस्वसमेतुतेसर्वतःसोमरेतइत्येतद्भवावाजस्यसंगथऽइत्यन्नंवैवाजोभवान्नस्यसंगथऽइत्येतत्संतेपयाᳬ-
सिसमुयंतुवाजाऽइतिरसोवैपयोन्नंवाजाःसंतेरसाःसमुजंत्वन्नानीत्येतत्संवृष्ण्यान्यभिमातिषाहऽइतिसᳬरेताᳬसिपाप्मासह-
ऽइत्येतदाप्यायमानोऽअमृतायसोमेतिप्रजात्यांतदमृतंदधातितस्मात्प्रजातिरमृतादिविश्रवाᳬस्युत्तमानिधिष्वेतिचंद्रमावा-
अस्यदिविश्रवउत्तमᳬसह्येनममुष्मिंल्लोकेश्रावयतिद्वाभ्यामाप्याययतिगायत्र्याचत्रिष्टुभाचतस्योक्तोबंधुः ॥ २ ॥ अथा-
तःसंपदेव ॥ चतस्रोलोगेष्टकाउपदधाति षड्वेननिवपतिद्वाभ्यामाप्याययतितद्द्वादशद्वादशमासाःसंवत्सरःसंवत्सरो-
ऽग्निर्यावानग्निर्यावत्यस्यमात्रातावत्तद्भवति ॥ ३ ॥ कां० १२ प्र० ४ ब्रा० २ मं० २३–३१ अथसामगायति ॥
क्षत्रंवैसामक्षत्रेणैवैनमेतदभिषिंचत्यथोसाम्राज्यंवैसामसाम्राज्येनैवैनᳬसाम्राज्यंगमयतिसर्वेषांवाएषवेदानाᳬरसोयत्सामस-
र्वेषामेवैनमेतद्वेदानाᳬरसेनाभिषिंचति ॥ ४ ॥ बृहत्यांगायति ॥ बृहत्यांवाअसावादित्यःश्रियांप्रतिष्ठायांप्रतितिष्ठतिस्तप-

तिबृहत्यामेवैनमेतच्छ्रियांप्रतिष्ठायांप्रतिष्ठापयति ॥ ५ ॥ ऐंद्र्यांबृहत्यांगायति ॥ ऐंद्रोवाएषयज्ञोयत्सौत्रामणींद्रायतन-
ऽएषएतर्हियोयजतेस्वऽएवैनमेतदायतनेभिषिंचति ॥ ६ ॥ अथयस्मात्सꣳशानानिनामैतैर्वैसामभिर्देवाऽइंद्रमिंद्रि-
यायवीर्यायसमश्यंस्तथोऽएवैतमृत्विजोयजमानमेतैरेवसामभिरिंद्रियायवीर्यायसꣳश्यंतिसꣳश्रवसेविश्रवसेसत्यश्रवसेश्रवस-
इतिसामानिभवंत्येष्वेवैनमेतल्लोकेषुश्रावयतिचतुर्निधनंभवतिचतस्रोवैदिशःसर्वास्वेवैनमेतद्दिक्षुप्रतिष्ठापयतिसर्वैर्निधनैरु-
पावयंतिसंविदानाऽएवास्मिंच्छ्रियंदधति ॥ ७ ॥ तदाहुर्यदेतत्सामगीयतेथक्वैतस्यसाम्नऽउक्थंक्वप्रतिष्ठान्मृद्धꣳहि-
तद्यतस्तुतमननुशस्तमिति ॥ ८ ॥ त्रयादेवाऽएकादशेत्येतद्वाऽएतस्यसाम्नउक्थमेषाप्रतिष्ठा ॥ ९ ॥ अथोत्रया-
देवाऽएकादशेति ॥ त्रयस्त्रिꣳशंग्रहंजुहोतित्रयाहिदेवाएकादशत्रयस्त्रिꣳशाःसुराधसऽइतित्रयस्त्रिꣳशद्धिदेवाबृहस्पतिपुरो-
हिताऽइतिब्रह्मवैबृहस्पतिर्ब्रह्मपुरोहिताऽइत्येवैतदाहदेवस्यसवितुःसवऽइतिदेवेनसवित्राप्रसूताऽइत्येवैतदाहदेवादेवैरवंतु-
मेतिदेवाह्येतदेवैरभिषिंचति ॥ १० ॥ प्रथमाद्वितीयैरिति ॥ प्रथमाह्येतंद्वितीयैरभिषिंचंतिद्वितीयास्तृतीयैरितिद्वितीया-
ह्येतंतृतीयैरभिषिंचंतितृतीयाःसत्येनेतितृतीयाह्येतꣳसत्येनाभिषिंचंतिसत्यंयज्ञेनेतिसत्यꣳह्येतंयज्ञेनाभिषिंचंतियज्ञोयजुर्भि-
रितियज्ञोह्येतंयजुर्भिरभिषिंचतियजूꣳषिसामभिरितियजूꣳषिह्येतꣳसामभिरभिषिंचंतिसामान्यृग्भिरितिसामानिह्येतमृग्भि-
रभिषिंचंत्यृचःपुरोनुवाक्याभिरित्यृचोह्येतंपुरोनुवाक्याभिरभिषिंचंतिपुरोनुवाक्यायाज्याभिरितिपुरोनुवाक्याह्येतंयाज्या-

भिरभिषिंचंतियाज्यावषट्कारैरितियाज्याह्येतुंवषट्कारैरभिषिंचंतिवषट्काराऽआहुतिभिरितिवषट्काराह्येतमाहुतिभिरभिषिंचं-
त्याहुतयोमेकामान्त्समर्द्धयंतुभूःस्वाहेतितदेनमेताभिर्देवताभिः परोवरमभिषिच्याथास्माऽआहुतिभिःसर्वान्कामान्त्समर्द्ध-
यंत्यथर्त्विक्षूपहवमिष्ट्वाभक्षयत्यृतवोवाऋत्विजऋतुष्वेवैतदुपहवमिच्छते ॥ ११ ॥ सभक्षयति ॥ लोमानिप्रयतिर्ममत्वङ्म-
ऽआनतिरागतिः ॥ मांसंमऽउपनतिर्वस्वस्थिमज्जामऽआनतिरितिप्रेववाऽएषलोकांश्चदेवताश्चविशतियःसौत्रामण्याभि-
षिच्यतेतदेतदवांतरामात्मानमुपह्वयतेतथाकृत्स्नऽएवसर्वतनूःसांगःसंभवति ॥ १२ ॥ कां० २ प्र० ३ ब्रा० २ मं० २२
चित्रावसोस्वस्तितेपारमशीयेति ॥ त्रिरेतज्जपतिरात्रिर्वैचित्रावसुःसाहीयंछसंगृह्येवचित्राणिवसतितस्मान्नारकाचित्रंददृश-
ऽएतेनहस्मवाऽऋषयः ॥ १३ ॥ कां० १ प्र० ६ ब्रा० १ मं० ८ तद्वाऽअग्नयऽइतिक्रियतेग्निर्वैसदेवस्तस्यैतानिनामा-
निशर्वऽइतियथाप्राच्याऽआचक्षतेभवऽइतियथावाहीकाःपशूनांपतीरुद्रोग्निरितितान्यस्याशांतान्येवेतराणिनामान्यग्निरि-
त्येवशांततमंतस्मादग्नयऽइतिक्रियतेस्विष्टकृतऽइति ॥ १४ ॥ कां० ११ प्र० ३ ब्रा० १ मं० २० ताछहैतांगो-
तमोराहूगणोविदांचकारसाहजनकंवैदेहंप्रत्युत्ससादताछहांगजिद्ब्राह्मणेष्वन्वियेषतामुहयाज्ञवल्क्योविवेदसहोवाचसहस्रं-
भोयाज्ञवल्क्यदद्मोयस्मिन्वयंत्वयिमित्रविंदामन्वविदामेतिविंदतेमित्रंछराग्ग्मस्यभवत्यपपुनर्मृत्युंजयतिसर्वमायुरेतियऽएवं-
विद्वानेतयेष्ट्यायजतेयोवैतदेवंवेद ॥ १५ ॥ कां० ४ प्र० १ ब्रा० ३ मं० १७ तस्मादेतदृषिणाभ्यनूक्तं ॥ चत्वारि-

वाक्परिमितापदानितानिविदुर्ब्राह्मणाय ॥ गुहात्रीणिनिहितानेंगयंतितुरीयंवाचोमनुष्यावदंतीति ॥ १६ ॥
कां० ११ प्र० ४ ब्रा० १ मं० १ अथातःस्वाध्यायप्रशꣳसा ॥ प्रियेस्वाध्यायप्रवचनेभवतोयुक्तमनाभवत्यपराधीनो-
हरहरर्थान्त्साधयतेसुखꣳस्वपितिपरमचिकित्सकऽआत्मनोभवतींद्रियसंयमश्चैकारामताचप्रज्ञावृद्धिर्यशोलोकपंक्तिः प्रज्ञावु-
र्द्धमानाचतुरोधर्मान्ब्राह्मणमभिनिष्पादयतिब्राह्मण्यंप्रतिरूपचर्यांयशोलोकपंक्तिंलोकः पुच्यमानश्चतुर्भिर्धर्मैर्ब्राह्मणंभुनक्त्य-
र्चयाचदानेनचाज्येयतयाचावध्यतयाच ॥ १७ ॥ कां० प्र० ७ ब्रा० ४ मं० १६ सउदीक्षते ॥ स्वयंभूरसिश्रेष्ठोरश्मि-
रित्येषवैश्रेष्ठोरश्मिर्यत्सूर्यस्तस्मादाहस्वयंभूरसिश्रेष्ठोरश्मिरितिवर्चोदाऽअसिवर्चोमेदेहीतित्वेवाहंब्रवीमीतिहस्माहयाज्ञव-
ल्क्यस्तद्ध्येवब्राह्मणेनैष्टव्यंयद्ब्रह्मवर्चसीस्यादित्युतोहस्माहौपोदितेयएषवावमह्यंगादास्यतिगोदागामेदेहीत्येवंयंकामंकामय-
तेसोस्मैकामःसमृध्यते ॥ १८ ॥ कां० १० प्र० ६ ब्रा० ३ मं० ३७ एषावाऽआसीज्जीवेयंप्रजामेस्याच्छ्रियंगच्छेयमि-
तितद्यत्पशूनाशास्तेतच्छ्रियमाशास्तेश्रीर्हिपशवस्तदेताभ्यामेवैतदाशीभ्यांꣳसर्वमासंतस्माद्वाऽएतेऽअत्रद्वेऽआशिषौक्रियेते
॥ १९ ॥ कां० १० प्र० ४ ब्रा० २ मं० १६ तदेषश्लोकोभवति ॥ विद्ययातदारोहंतियत्रकामाःपरागताः ॥ नतत्र-
दक्षिणायंतिनाविद्वाꣳसस्तपस्विनऽइतिनहैवतंलोकंदक्षिणाभिर्नतपसानेवंविदश्नुतऽएवंविदाꣳहैवसलोकः ॥ २० ॥ कां० १
प्र० २ ब्रा० २ मं० ६ तदेतदृचाभ्युक्तं ॥ विभक्तारꣳहवामहेवसोश्चित्रस्यराधसः ॥ सवितारंनृचक्षसमितितदेतत्सर्व-

मायुर्दीर्घमनंतꣳहितद्यदिदमाहुर्दीर्घंतऽआयुरस्तुसर्वमायुर्हीत्येपतेलोकऽएतत्तेस्त्वितिहैवैतत्पश्यंतीवाग्वदति ॥ २१ ॥
कां० १ प्र० ४ ब्रा० ८ मं० ९ अथवꣳशः ॥ समानमासांजीवीपुत्रात्सांजीवीपुत्रोमांडूकायनेर्मांडूकायनिर्मांडव्यान्मां-
डव्यःकौत्सात्कौत्सोमाहित्थेर्माहित्थिर्वामकक्षायणाद्वामकक्षायणोवात्स्याद्वात्स्यःशांडिल्याच्छांडिल्यःकुश्रेःकुश्रिर्यज्ञवच-
सोराजस्तंबायनाद्यज्ञवचाराजस्तंबायनस्तुरात्कावपेयात्तुरःकावपेयःप्रजापतेःप्रजापतिर्ब्रह्मणोब्रह्मस्वयंभुब्रह्मणेनमः ॥२२॥
सर्वेषां० ॥ २३ ॥ ब्राह्मणं ॥ १ ॥

आशीर्मन्त्राः ॥ वेदोसिजेनत्वंदेववेददेवेभ्योवेदोभवस्तेनमह्यंवेदोभूयाः ॥ अथास्यायुष्यंकरोतिदक्षिणंकर्णमभिनिधाय-
वाग्वागितित्रिरथास्यनामधेयंकरोतिवेदोसीतितदस्यैतद्गुह्यमेवनामस्यादथदधिमधुघृतꣳसꣳसृज्यानंतर्हितेनजातरूपेणप्रा-
शयतिभूस्त्वयिदधामिभुवस्त्वयिदधामिस्वस्त्वयिदधामिभूर्भुवःस्वःसर्वंत्वयिदधामी ॥ १ ॥ त्यथैनमभिमृशत्यश्माभवप-
रशुर्भवहिरण्यमश्रुतंभव ॥ आत्मावैपुत्रनामासिसजीवशरदःशतमि ॥ २ ॥ त्यथास्यमातरमभिमंत्रयत ॥ इडासिमैत्रा-
वरुणीवीरेवीरमजीजनथाः ॥ सात्वंवीरवतीभवयास्मान्वीरवतोकरदि ॥३॥ त्यथैनंमात्रेप्रदायस्तनंप्रयच्छतियस्तेस्तनःश-
शयोयोमयोभूर्योरत्नधावसुविद्यःसुदत्रः ॥ येनविश्वापुष्यसिवार्याणिसरस्वतितमिहधातवेकरिति ॥ ४ ॥ तंवाऽएत-
माहु ॥ रितिपितावताभूरितिपितामहोवताभूःपरमांवतकाष्ठांप्रापश्रियायशसाब्रह्मवर्चसेनयऽएवंविदोब्राह्मणस्यपुत्रोजा-

यते ॥ ५ ॥ ॥ अथवा ॥ पुत्रवतीदक्षिणतऽइंद्रस्याधिपत्येप्रजाम्मेदाः ॥ पुत्रवतीदक्षिणतऽइतिनात्रतिरोहितमिवास्तीन्द्रस्याधिपत्यऽइतीन्द्रमेवास्याऽअधिपतिङ्करोतिनाष्ट्राणाद्दुरक्षसामुपहत्यैप्रजाम्मेदाऽइतिप्रजामेवपशूनात्मन्धत्तेतथोहपुत्री-पशुमान्भवति ॥ शतंभव० मात्मन्धत्ते ॥ १ ॥ ॥ ध्रुवासिध्रुवोयंयजमानोस्मिन्नायतनेप्रजयापशुभिर्भूयात् ॥ १ ॥ अथैनमभिपद्यवाययसिध्रुवासिध्रुवोयंयजमानोस्मिन्नायतनेप्रजयाभूदितिपशुभिरितिवैवंयंकामंकामयेतस्मैकामःसमृध्यते-शतंभवतिशतायुर्वैपुरुषःशतेंद्रियआयुरेवेंद्रियंवीर्यमात्मन्धत्ते ॥ १ ॥ इत्याशीर्मन्त्राः ॥

**अथोत्सर्गोपाकर्मनिर्णयः** ॥ करादस्यभ्रष्टेतनुशिखरिणीदृश्यतिशिशोर्विलीनाःस्वःसत्यंनियतमवधेयंतदखिलैः ॥ इतिव्रस्यद्गोपानुचित-निभृतालापजनितंस्मितंबिभ्रद्देवोजगदवतुगोवर्धनधरः ॥ १ ॥ **अथोत्सर्गोपाकरणनिर्णयः** ॥ **तथाचकात्यायनः**—अथातोध्यायोपाकर्मव्याख्यास्यते । अत्राथेत्ययमधिकारवाची । ननुमङ्गलानन्तरारम्भप्रश्नकात्स्न्र्येष्वथोअथेतिकोशेन्यत्रापिचाधिकारवाचिताया अथशब्देऽदृष्टत्वेनकथमिहाथशब्दोऽधिकारपरइतिचेत्सत्यं । तथाप्यथैषज्योतिरितिप्रमुखवाक्यघटकाथशब्दस्याधिकारपरताया एवसिद्धान्तितयासिद्धान्त्यनुयायिनामस्माकमीदृशार्थोपवर्णने नकापिक्षतिरवतरति ॥ नचशक्तिग्राहकमानतामनुभवतोनिरुक्तकोशादेरुपलम्भादस्तुसंप्रत्यथशब्दआनन्तर्यवाचीतिवाच्यम् । प्रकृतेऽथशब्दस्यानन्तर्यवाचित्वेपाठमहिम्नैवाऽनन्तर्यलाभेनपौनरुक्त्यापत्तेः । अतःशब्दस्तुहेत्वर्थकः । **तथाच** यतोऽथातःपञ्चमहायज्ञाइत्यनेनपूर्वमुपक्रान्तेषुपञ्चसुमहायज्ञेषुपञ्चमोब्रह्मयज्ञोनिगमनिष्ठवर्णप्रत्ययानुकूलकण्ठताल्वाद्यभिघातलक्षणः । यश्चश्रु-

तिजपःप्रोक्तोब्रह्मयज्ञःसउच्यत इतिप्रभृतितत्स्वरूपाविर्भावकवचोनिकरात् । अतोऽध्ययनशब्देनाध्यायस्तस्योपाकर्मोपाकरणंकर्तव्यमित्यर्थः । छन्दसामध्ययनस्योपाकर्मोत्तरकालिकत्वंतुमन्वादीनामपिसंमतं । यतश्छन्दांस्युपाकृत्याधीयीतेत्यादितदुक्त्युपलम्भः ॥ नन्वेतावताहिविज्ञातमध्यायोपाकर्मणोऽवश्यविधेयत्वम् । तथाप्यमुष्यानुष्ठानावच्छेदककालस्याविज्ञानेदुर्घटानुष्ठानतैवस्यादितिसमालोच्यतन्निर्णयानुगुणंवक्ति ॥ ओपधीनांप्रादुर्भावश्रवणेनश्रावण्यांपौर्णमास्या १ श्रावणस्यपंचमी २ हस्तेनवा । ओपधीनांप्रादुर्भावइतिसप्तमीयं । गोषुदुह्यमानास्वागतइत्यादाविवसमानकालिकत्वं । तदर्थःपौर्णमास्यन्वयी । ईदृशावच्छेदकत्वंवाकेवलसप्तम्यर्थः । श्रवणेनेत्यत्रसाहित्यतृतीयार्थः । सहयुक्तेऽप्रधान इतिपाणिन्युक्तेः एतस्याप्यन्वयःपौर्णमास्यामेव । तथाचओपधिप्रादुर्भावस्यसमकालिकीअवच्छेदिकावाश्रावणपौर्णमासी । अध्यायोपाकर्मणोऽनुष्ठानावच्छेदकतयाकालएकःसिद्धः ॥ **द्वितीयंकालमाह**—श्रावणस्येतिपष्ठ्यर्थःसंबन्धित्वंपञ्चम्यामन्वेति । तदन्वयिसाहित्यंहस्तेनेत्यत्रतृतीयार्थः । तथाचहस्तनक्षत्रसाहित्यशालिनीश्रावणपञ्चमीद्वितीयःकालइत्यर्थः ॥ एवंचोपाकर्मणोऽनुष्ठानस्यसश्रवणश्रावणपौर्णमास्यधिकरणकत्वहस्तयुक्तश्रावणपञ्चम्यधिकरणत्वेवैकल्पिकइतिसिद्धम् ॥ **अत्रयाज्ञवल्क्योपि**—अध्यायानामुपाकर्मश्रावण्यांश्रवणेनवा ॥ हस्तेनोषधिभावेवापञ्चम्यांश्रावणस्यत्विति॥**वसिष्ठः**—अथातःस्वाध्यायोपाकर्मश्रावण्यांप्रौष्ठपद्यांवेति । **मनुरपि**—श्रावण्यांप्रौष्ठपद्यांवाप्युपाकृत्ययथाविधि॥ युक्तश्छन्दांस्यधीयीतमासान्विप्रोर्धपञ्चमानिति । अर्धःपञ्चमोयेषांते । सार्धाश्चतुरोमासानित्यर्थः । यदापुनःश्रावण्यांप्रौष्ठपद्यांवाशुक्रास्तमयादिप्रतिबंधस्तदाषाढ्यांकर्तव्यं ॥ **तदुक्तंकूर्मपुराणे**—श्रावणस्यतुमासस्यपौर्णमास्यांद्विजोत्तमाः । आषाढ्यांप्रौष्ठपद्यांवावेदोपाकरणंस्मृतमिति ॥ केचित्तुसूत्रवाक्यतात्पर्यविषयीभूतंकालचतुष्टयमित्यामनंति । **तद्यथा**—अहनीतिसप्तम्यंतमध्याहृत्यश्रवणेनयुक्तेऽहनीतियोजनीयं । एवमुत्तरतोपिहस्तेनयुक्तेऽहनीति ॥ अथवाश्रवणशब्दाच्चसप्तम्यर्थेएनप्प्रत्ययः । तथाचश्रवणयुक्तमहरेकःकालःसिद्धः । अतएवेतरपौर्णमासी-

व्यावर्तकतयाश्रावण्यामितिपौर्णमासीविशेषणमर्थवद्भवति । अन्यथाश्रवणसाहित्यरूपार्थप्रतिपादकेनतृतीयांतश्रवणपदेनतस्यपौनरुक्त्यापत्तेः-श्रावणीपौर्णमासीद्वितीयःकालः ॥ श्रावणपंचमीतृतीयश्चतुर्थोहस्तयुतंदिनंश्रावणस्यैत्येवमादिष्टाश्चत्वारःसूत्रकृता । एषुविकल्पेनोपाकरणमनुष्ठेयमिति ॥ ॥ **अत्रेयंमीमांसा**—सूत्रकृतस्त्वध्यायोपाकरणानुष्ठानावच्छेदककालतयासामान्यतःपौर्णमासींसंजगदुर्नपुनःपूर्वाह्णापराह्णाद्यात्मकसमयविशेषमावेदयांचक्रुः ॥ **अथ**किमिदमुपाकर्मपौर्णमास्यांपूर्वाह्णेऽनुष्ठेयमुतापराह्णेइतिचेदत्रकेचिद्विपश्चितःपूर्वाह्णएवतदनुष्ठेयमितिव्यवस्थापयंति । **तथाहि**सिद्धान्तिमीराद्धांतितोहिनिखिलदैवकर्मानुष्ठानावच्छेदकतयापूर्वाह्णएवकालः । अतएवकर्काचार्याश्चतुर्थ्यामपररात्रेभ्यन्तरतइत्येतत्सूत्रव्याख्यानावसरेविवाहशेषत्वात्प्राप्तेपिपूर्वाह्णकालेतन्निषेधायापररात्रग्रहणमादरायांचक्रुः । कर्मचेदंदैविकमेव । तदत्राविशेषादितरदैवकर्मस्विवपूर्वाह्णएवप्राप्तइति ॥ **किंच** पौर्णमास्यामपिसमयविशेषविधायकानेकविधवचनोपलम्भात्सामान्यतःपौर्णमासीमात्रबोधकशास्त्रंश्रावणपौर्णमासीपूर्वाह्णकालएवतत्कर्मानुष्ठानार्हइत्यर्थबोधकमितिसुवचम् । पुरोडाशंचतुर्धाकरोतीतिवत्सामान्यशास्त्रस्यविशेषविधायकवचनबलाद्विशेषार्थपरतायाःसर्वसंमतत्वात् । ब्राह्मणान्भोजयेत्तत्रपितॄनुद्दिश्यदेवताइतिबृहत्प्रचेतसउक्तेः । एवंदीपिकापि । अस्यतुविधेःपूर्वाह्णकालःस्मृतइति ॥ **भविष्योत्तरपुराणेच**—संप्राप्तेश्रावणस्यांतेपौर्णमास्यांदिनोदये ॥ स्नानंकुर्वीतमतिमान्श्रुतिस्मृतिविधानतः ॥ ततोदेवान्पितॄंश्चैवतर्पयेत्परमांभसा ॥ उपाकर्मादिचैवोक्तमृषीणांचैवतर्पणम् ॥ कुर्वीतब्राह्मणैःसार्धंवेदानुद्दिश्यशक्तितइति ॥ अत्रदिनोदयशब्दःपूर्वाह्णतात्पर्यकोज्ञेयः । दैवेकर्मणिपौर्वाह्णिकतिथीनांप्राशस्त्यात् । **तदुक्तम्**—पौर्वाह्णिकास्तुतिथयोदैवेकार्येफलप्रदाइति । तदिहैवंविधान्यनेकानिप्रमाणान्युपलभ्यन्ते । एतावतासिद्धमुपाकर्मणःपौर्वाह्णिकत्वम् ॥ **नन्विदं**वचनान्तरविरुद्धम् । उपाकर्मापराह्णेस्यादुत्सर्गःप्रातरेवत्वित्यादिवचोभिरुपाकर्मणोपराह्णकालावच्छिन्नानुष्ठानकत्वस्यैवप्रतिपादनादितिचेत् । **मैवम्** । एतच्छास्त्रस्यसामगविषयत्वात् ।

सामगविषयेहिदिनस्यद्वेधाविभागंचतुर्धाविभागंचावलम्ब्यविधयेनिषेधायवाशास्त्रंप्रवर्तते । अतएवचतुर्धाविभागपक्षस्तुप्रकरणवशात्गोभिलस्मृत्युक्तकर्मविशेषेद्रष्टव्यइतिमाधवाचार्यैरप्यवोचि ॥ तत्रद्वेधाविभागःप्राग्दर्शितोगोभिलेन । यथा । आवर्तनात्तुपूर्वाह्णोह्यपराह्णस्ततःपरइति । एवंचतुर्धाविभागपक्षोपि । **सयथा**—पूर्वाह्णःप्रहरःसार्धमध्याह्नःप्रहरंतथा ॥ आतृतीयात्पराह्णःस्यात्सायाह्नश्चततःपर इति ॥ एवंचैतस्यान्यविषयतयाविरोधविरहात् ॥ **कात्यायनसूत्रा**नुसारिणाविषयेतुदिनस्यत्रेधापंचधावाविभागमनुसरदेवशास्त्रंप्रवर्तते । तत्रापिश्रुतिस्मृतिपुदृष्टप्रचारतयापंचधाविभागोहिमुख्यः अन्येनुकल्पाइतिव्यवस्थापयतां माधवहेमाद्रिप्रमुखानामपिजरन्निबन्धकृतांचानुमततयापञ्चधाविभागपक्षएवगरीयस्त्वमनुभवति । एवंचपञ्चधाविभागपक्षेमुहूर्तत्रयात्माप्रातःकालएवमुख्यःपूर्वाह्णइतिसिद्धम् ॥ पूर्वाह्णेवैदेवानामितिश्रुत्यादैवेकर्मणिपूर्वाह्णस्यैवविहितत्वेनैतस्यैवमुख्यकर्मकालताऽवसीयते ॥ यस्मिन्कालेतुयत्कर्मतत्कालव्यापिनीतिथिरितिस्मरणादेतस्यदैवकर्मतयापूर्वाह्णव्याप्तिलिप्सानुरोधादवश्यमुत्तरदिनंस्वीक्रियतेचापि ॥ **नच** पर्वण्यौदयिकेकुर्युःश्रावणंतैत्तिरीयकाइतिबह्वृचपरिशिष्टघटकतैत्तिरीयकपदस्याजहत्स्वार्थलक्षणयायजुर्वेदिमात्रपरतयामदनरत्नकारादिसंमततयायाजुपमात्रस्यैवौदयिकपर्वणःप्राप्त्यापर्वणश्चौदयिकत्वंपारिभाषिकमावेदयतां श्रवणेश्रावणंपर्वेत्यादिवचसामवसरलाभेनाहर्द्वयेपूर्वाह्णव्याप्तौसंगवात्परतोव्याप्तिगुणेनपूर्वदिनमेवविधेयकर्मणोनुष्ठानावच्छेदवचनमितिवाच्यं । निरुक्तपरिशिष्टघटकतैत्तिरीयकपदस्ययजुर्वेदिमात्रपरतायाइतरनिबन्धकृदनुमततयातच्छास्त्रस्यतैत्तिरीयकविषयएवप्रशस्तसंचारत्वात् ॥ **यत्तु** दिनद्वयेपूर्वाह्णव्याप्तावेकदेशस्पर्शेवापूर्वैवेतिव्यवस्थामादर्शयतोहेमाद्रेरननुमतमिति तत्तदभिसंधिमजानतांवचोनश्रद्धेयम् । यतस्ते—श्रावणीदुर्गनवमीदूर्वाचैवहुताशनी ॥ पूर्वविद्धाप्रकर्तव्येतिवचनंतन्मूलभूतमामनन्ति ॥ वचनमेतत्तुब्रह्मपवित्रश्रवणकर्मादिदैवकर्मपरमितिहेमाद्र्याशयइतिसर्वेनिबन्धकृतोवदन्ति । तस्मात्तदाशयापरिज्ञानविजृम्भितत्वान्नतेविश्वसनीयवचनाइतिदिक् ॥ इत्युपाकर्मकरणकालनिर्णयः ॥

**अथोत्सर्गस्यनिर्णयः** ॥ **तथाचसूत्रम्**—पौषस्यरोहिण्यांमध्यमायांवाऽष्टकायामध्यायानुत्सृजेरन् ॥ पौषमासरोहिणीषु ॥ मध्यमाष्टकापिपौषएव तत्राप्यध्यायोत्सर्गः ॥ अर्धपञ्चमान्मासानधीत्योत्सृजेयुः । उपाकृतानिछन्दांसिअर्धसप्तमान्वाअधीत्योत्सृजेयुः उपाकर्मदिनेवोत्सर्गः । पुष्येतूत्सर्जनंकुर्यादुपाकर्मदिनेऽथवेतिहेमाद्रौखादिरगृह्यवचनात् ॥ उत्सर्गश्चछन्दसां । अङ्गानिपुनरधीयीतेव । **तथाचयाज्ञवल्क्यः**—पौषमासस्यरोहिण्यामष्टकायामथापिवा ॥ जलान्तेछन्दसांकुर्यादुत्सर्गंविधिवद्बहिरिति ॥ उत्सर्गोपिपूर्वाह्णएव । दैवकर्मत्वादेव ॥ **मनुः**—पुष्येतुछन्दसांकुर्याद्बहिरुत्सर्जनंद्विजः ॥ माघशुक्लस्यवाप्राप्तेपूर्वाह्णेप्रथमेहनीति ॥ यदाश्रावण्यामुपाकर्मतदापुष्यमासस्यशुक्लेप्रतिपदिपूर्वाह्णे । यदाप्रौष्ठपद्यामुपाकर्मतदामाघस्येतिव्यवस्थितोविकल्पः ॥ उत्सृष्टस्यापिपुनरध्ययनंप्रागुपाकरणात्कालविशेषंविदधाति ॥ **मनुः**—अतःपरंतुछन्दांसिशुक्लेतुनियतःपठेत् ॥ अङ्गानिचरहस्यंचकृष्णपक्षेषुवैपठेदिति ॥ **कूर्मपुराणेपि**—छन्दांस्यर्धमतोभ्यस्यशुक्लपक्षेषुवैद्विजः ॥ वेदाङ्गानिपुराणानिकृष्णपक्षेपुमानवइति ॥ उपाकरणोत्सर्जनेप्रशंसति ॥ **कात्यायनः**—प्रत्यब्दंयदुपाकर्मसोत्सर्गंविधिवद्द्विजैः ॥ क्रियतेछन्दसांतेनपुनराप्यायनंभवेत् ॥ अयातयामैश्छन्दोभिर्यत्कर्मक्रियतेद्विजैः ॥ क्रीडमानैरपिसदातत्तेषांसिद्धिकारकमिति ॥ एतेनयेकेवलोत्सर्गमेवाचरन्तितेपरास्ताः ॥ **ननूपाकरणंब्रह्मचारिधर्मः**—उपाकृत्याधीयीतेतितस्यग्रहणाध्ययनाङ्गत्वप्रतीतेः । ग्रहणाध्ययनंचब्रह्मचारिणएव । वेदमधीत्यस्नायादितिप्राचीनत्वावगमात् । अतःकथमिदंगार्हस्थ्यधर्मत्वेनोच्यते । नायंदोषः । गृहस्थस्यापिग्रहणाध्ययनाधिकारसंभवात् ॥ अतएवानुवृत्तौ**शौनकआह**—समावृत्तोब्रह्मचारिकल्पेनयथान्यायमितरेजायोपेतइति ॥ **अस्यार्थः**—येननियमविशेषेणयुक्तोब्रह्मचार्यधीतेतेनैवनियमेनसमावृत्तोप्यधीयीत । समावृत्तादितरेब्रह्मचारिणस्तुयथान्यायंस्वविध्युक्तप्रकारेणाधीयीरन् यथाजायोपेतोगृहस्थोपिब्रह्मचारिवन्नियमोपेतोधीयीतेति ॥ **नचसमावृत्तगृहस्थयोर्ग्रहणाध्ययनाधिकारे**वेदमधीत्यस्नायादितिविरुध्येतेति नशङ्कनीयं । तस्य-

वचनस्यविद्यास्नातकविषयत्वात् । अतएववेदव्रतानिवापारंनीत्वाह्युभयमेववेतिपक्षद्वयोपन्यासोदर्शितः । उपाकरणस्यगृहस्थधर्मत्वावगमेमनु-याज्ञवल्क्यस्मृत्योर्गृहस्थधर्मप्रकरणेपाठोप्यनुगृहीतोभवति । **उपाकरणस्येतिकर्तव्यताकार्ष्णाजिनिनादर्शिता**—उपाकर्मणिचोत्स-र्गेयथाकालंसमेत्यच । ऋषीन्दर्भमयान्कृत्वापूजयेत्तर्पयेत्ततइति । **बौधायनोपि**—गौतमादीनृषीन्सप्तकृत्वादर्भमयान्पुनः ॥ पूजयित्वाय-थाशक्तितर्पयेद्वंशमुद्धरन्निति ॥ ॥ नन्वत्रसाग्निकनिरग्निका उपाकर्मकुर्वीरन् उतकेवलंसाग्निकाएवेतिविचारे । तत्राशेषसूत्रार्थवेत्तृकर्काचा-र्यप्रभृतयः साग्निकाएवोपाकर्मण्यधिकारिणइत्याहुः । तथाचतआहुः—छन्दांस्युपाकृत्याधीयीत । एवंसत्यध्ययनप्रवृत्तस्यैतद्भवति । अत-एवाग्निमतोऽध्यापनंभवति । नह्यनग्निमान् शक्नोत्यग्निसाध्यंकर्मकर्तुमिति ॥ **तथाच छन्दोगपरिशिष्टे कात्यायनः**—नस्वेऽग्नावन्य-होमःस्यान्मुक्त्वैकांसमिदाहुतिं । स्वगर्भसत्क्रियार्थश्चयावन्नासौप्रजायतइति ॥ अनेनावसथ्येऽग्नावुपाकर्मभवतीतिगम्यते । अतोऽध्यापयतो-पिनिरग्नेः साग्नेरप्यनध्यापयतोनाधिकारः ॥ **ननु** होमश्चावसथ्याग्निसाध्यत्वान्माऽस्तु केवलोत्सर्गएवाध्यायानामस्तु तथाचारदर्शनादिति-चेन्न । सन्नियोगशिष्टानांसहवाप्रवृत्तिः सहवानिवृत्तिरितिन्यायात् । अधीत्योत्सृजेयुरितिपारस्करोक्तेः । अतएव **कात्यायनेनो**क्तोपा-करणोत्सर्जनप्रशंसापरंवाक्यंसंगच्छते । अन्यथाव्यर्थंस्यात् । किंच । केवलोत्सर्गाचरणेप्युपाकर्माकरणे**प्रायश्चित्तहेमाद्र्युक्तं**प्रायश्चित्तम-पिनसंगच्छते । **तदेवाह**—अकृत्वाब्रह्मचारीवाद्विजोवावेदसंमतं । एवंश्रावणकंहोमंत्यक्त्वायदिहवर्तते । तत्यत्रयींव्रतीकृत्वागृहस्थोपिद्वयं-चरेत् । कृत्वैतद्वापिकंप्रोक्तंशुद्धिमाप्नोतिपूर्वजः । प्रत्यब्दंयस्त्यजेत्कर्मश्रावण्याख्यंपवित्रजं । पतितःसतुविज्ञेयःसर्वधर्मबहिष्कृतइति । त-स्मान्नान्यतरकर्मण्यधिकारइतिराद्धांतः ॥ यद्यपि लौकिकाधिकरणकनिरग्निकर्तृकोपाकरणपक्षमूलभूतविरहोपि तथापि **गर्गपद्धतिका-रास्तु**—तदधिकरणकतत्कर्तृकोपाकरणमप्याहुः । तत्पक्षाश्रयणंगौणमपि अकरणान्मंदकरणंवरमितिन्यायमाश्रित्याथातोधर्मजिज्ञासेत्यादि-

**पृष्ठोदिविविधानोक्ता**स्थापनपूर्वंकंकुर्यादुपाकरणं ॥ **तथाच कात्यायनः**—अथातोधर्मजिज्ञासाकेशातादूर्ध्वमित्यादिनाऽनग्निकोवा-प्रवासीब्रह्मचारीवेत्यंतेनाधिकारिणोनिरूप्यतद्विधिमाह—पंचसंस्कारपूर्वकाग्निरितिग्रामाग्निमाहृत्येत्यादि । अग्निप्रतिष्ठापनंकरिष्येइतिपूर्वंसंकल्प्यपश्चादग्निहरणं । **तच्चेत्थं** । अन्वग्निरितिग्रामाग्निमाहृत्य ॥ ॐअन्वग्निरुषसा० ततंथ । १ । पृष्ठोदिवीत्यधिष्ठाप्य । ॐपृष्ठोदि०नक्तं । १ । त्रिभिश्चसावित्रैःप्रज्वाल्य । सवितृलिङ्गकऋग्भिस्तिसृभिःप्रज्वालयेत् ॥ ॐता१ंसवि०ताम् । १ । तत्स०यात् । २ । विश्वानिदे०सुव । ३ । ततस्तस्मिन्वक्ष्यमाणप्रकारेणोपाकर्मकुर्यादित्यलम् ॥ ॥ यद्यप्याचार्येणोपाकर्माङ्गतयास्नानंनोक्तं । तथापि—उपाकर्मणिचोत्सर्गेरजोदोपोनविद्यतइति**गार्ग्योक्तेः**स्नानमप्यावश्यकं ॥ उत्सर्गेपि उदकान्तेगमनेनचस्नानमुपलक्ष्यतइतिउदकान्तंगत्वेतिसूत्रस्थ**कर्कादिभाष्योक्तेः** स्नानमावश्यकं ॥ ॥ मध्याह्नसंध्यादिकंतुन । उत्सर्गोपाकर्मणोःपूर्वाह्णकालीनत्वात् मध्याह्नसंध्यादीनांमध्याह्नकालीनत्वेनकालाभावात् अकालेकृतमप्यकृतमितिन्यायाच्च ॥ ॥ तथैवोभयांगतयाऋषीणांपूजनमावश्यकं । उपाकर्मणिकर्तव्यमृषीणांचैवपूजनमिति**हेमाद्रौभविष्योक्तेः** । उपाकर्मणिचोत्सर्गेयथाकालंसमेत्यच । ऋषीन्दर्भमयान्कृत्वापूजयेत्तर्पयेत्ततइति**कार्ष्णाजिन्युक्तेः** । गौतमादीनृषीन्सप्तकृत्वादर्भमयान्पुनः । पूजयित्वायथाशक्तितर्पयेद्वंशमुद्धरन्निति**बौधायनोक्तेश्च** ॥ श्रवणानुपदेशात् तद्भूतोपादानात् आवसथ्येयवानांपूर्वंभर्जनेनधानासंपादनं ॥ एवंनिरग्नेरपि पूर्वं लौकिकाग्निभर्जितधानासंपादनं ॥ उपाकर्मणिदेवताऽभिध्यानंन । **सूत्रकारभाष्यकारै**रनुक्तत्वात् । **स्मार्तगङ्गाधरपद्धतिकारै**र्लिखितं । तच्चमूलभूतस्मृत्याद्यभावादुपेक्ष्यम् ॥ वैकल्पिकपदार्थावधारणंतुभवत्येव । अवधार्यहिवैकल्पिकेकर्मणिप्रवृत्तिर्न्याय्येति**कर्कभाष्यात्** ॥ इत्युत्सर्जनोपाकरणनिर्णयः ॥

अथसूत्रानुसारिणीउत्सर्गोपाकर्मपद्धतिः ॥ प्रथमप्रयोगे मातृश्राद्धं ॥ स्नानविधिःपूर्वोक्तएव ॥ अध्यायोत्सर्गोपाकर्मनिमित्तंगणस्नानमहंकरिष्ये ॥ इतिसंकल्पेविशेषः ॥ न मध्याह्नसंध्यादिकं ॥ तेषांस्वकालाभावात् ॥ ॥ अथोत्सर्गपद्धतिः ॥ सूत्रानुक्तत्वान्न ऋषिपूजनं ॥ उदकान्तंगत्वा ॥ देशकालौसंकीर्त्य ॥ सशिष्योऽहंछन्दसांयातयामत्वनिवृत्तिपूर्वकं पुनराप्यायनार्थं श्रीपरमेश्वरप्रीत्यर्थं उत्सर्गाख्यं कर्म करिष्ये ॥ ॥ अद्भिर्देवांश्छन्दाᳬंसिवेदानृषीन्पुराणाचार्यान्गन्धर्वानितराचार्यान्संवत्सरं च सावयवं पितॄनाचार्यान्त्स्वाँश्चतर्पयेयुः ॥ ॥ आचार्यसहिताःशिष्याः ॥ ॐदेवास्तृप्यताम् १ छंदाᳬंसितृ० २ वेदास्तृ० ३ ऋषयस्तृ० ४ पुराणाचार्यास्तृ० ५ गंधर्वास्तृ० ६ इतराचार्यास्तृ० ७ संवत्सरःसावयवस्तृ० ८ पितरस्तृप्य० ९ । उद० । आचार्यास्तृ० १० । ततःप्राचीनावीतिनोदक्षिणाभिमुखास्तिलमिश्रं । नामगोत्रोच्चारपूर्वकं । स्वपितृपितामहप्रपितामहतर्पणं ॥ जीवत्पितृकाश्चपितुःपितृतर्पणंकुर्युः ॥ सावित्रींचतुरनुद्रुत्य ॥ तत्सवितु० चोदयात् ॥ विरताःस्मेतिप्रब्रूयुः ॥ विरताःस्म ॥ क्षपणं प्रवचनंपूर्ववत् ॥ क्षपणमनध्यायोलोमनखानामनिकृन्तनंच ॥ प्रवचनं मन्त्रब्राह्मणयोरध्यायादीनांपठनमुपाकर्मवत् ॥ ॐइषेत्वा० १ ॐईशावास्यम्० ४०॥ व्रतमुपैष्यन्० १ श्वेतकेतुर्हवाऽआरुणेयः १००॥ अथेमामृचंजपन्ति ॥ ॐउभाकवीयुवायोनोधर्मःपरापतत् ॥ परिसंख्यस्यधर्मिणोविसंख्यानिविसृजामहे ॥ १ ॥ त्रिरात्रᳬंसहोष्यविप्रतिष्ठेरन् ॥ ततस्त्रिरात्रादूर्ध्वं शुक्लपक्षेछन्दसामध्ययनं कृष्णपक्षेष्वङ्गानां ॥ ततःपुनरर्द्धपष्ठमासान् । अर्धसप्तमान्वाधीत्य । एवमेवोत्सर्गंविधाय ॥ उभाकवीति ऋचं जप्त्वा ।

त्रिरात्रमेकत्रावस्थाय येथष्टं पृथग्गच्छेयुः ॥ ततःपुनरुपाकरणकाले उत्सृष्टान्वेदानुपाकृत्याध्ययनं यावदुत्सर्गमिति ॥ अनेनउत्सर्गाख्येनकर्मणा० ताम् ॥ ॥ इतिसूत्रानुसारिणीउत्सर्गपद्धतिः ॥ ॥ ॥ ॥ ॥

अथसूत्रानुसारिण्युपाकर्मद्धपतिः ॥ अथातोऽध्यायोपाकर्म ॥ ओषधीनांप्रादुर्भावेश्रवणेनश्रावण्यांपौर्णमास्यां श्रावणस्य पंचमीं हस्तेनवा ॥ शालाग्नौस्यादिदंकर्मगुरुश्राद्धेकृतेसति ॥ अग्निंपश्चादुपविशेच्छिष्यांश्चाग्निसमीपतः ॥ तिथ्यादिकल्पितंकालंस्मृत्वासंकल्पमुच्चरेत् ॥ आचम्य ॥ प्राणानायम्य ॥ देशकालौसंकीर्त्य ॥ श्रीपरमेश्वरप्रीत्यर्थंअध्यायोपाकर्माख्यंकर्मकरिष्ये ॥ तदङ्गत्वेनपञ्चभूसंस्कारपूर्वकमग्निप्रतिष्ठापनं ॥ [॥ अन्वाधानम् ॥ शुभपुण्यतिथौ अस्मिन्नध्यायोपाकर्माख्येकर्मणिवैकल्पिकपदार्थावधारणंदेवताभिध्यानंकरिष्ये ॥ समिद्वयमादाय पूर्वेणब्रह्मणोगमनं उत्तरेणपात्रासादनं ताम्रमयीआज्यस्थाली पालाश्यःसमिधः प्राञ्चावाघारौ समिद्धतमेआज्यभागौ । चतुर्णांवेदानांतन्त्रेणोपाकरणं तिलहोमःसावित्र्या पूर्णपात्रंदक्षिणा त्रिरात्रंनखलोमाऽनिकृंतनं एतान्वैकल्पिकपदार्थानहंकरिष्ये ॥ अथदेवताभिध्यानम् ॥ प्रजापतिं इन्द्रं अग्निं सोमं एताआघाराज्यभागदेवता आज्येनएकैकयाहुत्या ॥ अन्तरिक्षं १ वायुं २ ब्रह्माणं ३ छन्दांसि ४ ॥ पृथिवीं १ अग्निं २ ब्रह्माणं ३ छन्दांसि ४ ॥ दिवं १ सूर्यं २ ब्रह्माणं ३ छन्दांसि ४ ॥ दिशः १ चन्द्रमसं २ ब्रह्माणं ३ छन्दांसि ४ ॥ प्रजापतिं १ देवान् २ ऋषीन् ३ श्रद्धां ४ मेधां ५ सदसस्पतिं ६ अनुमतिं ७ एताःप्रधानदेवताआज्येनएकैकयाहुत्या ॥ पुनरत्रप्रधानं ॥

सदसस्पतिंधानाभिस्त्रिवारं सवितारंऔदुम्बरीभिर्नवभिःसमिद्भिः ॥ पुनःसवितारंतिलैः ॥ शेषेणाग्निंस्विष्टकृतं ॥ अग्निं वायुं सूर्यं अग्नीवरुणौ अग्नीवरुणौ अग्निं वरुणं सवितारं विष्णुं विश्वान्देवान् मरुतः स्वर्कान् वरुणं आदित्यं अदितिं प्रजापतिं एता अङ्गप्रधानदेवताआज्येन एकैकयाहुत्यासद्योहंयक्ष्ये इत्युक्त्वाऽग्नौसमिद्द्वयप्रक्षेपः ॥ ] ब्रह्मवरणाद्याज्यभागान्तेविशेषः ॥ अस्मिन्नुपाकर्माख्येकर्मणित्वंब्रह्माभव ॥ इतिब्रह्मवरणं ॥ आसादनेविशेषोयंनेहस्याच्चरुपात्रकम् ॥ आज्योत्तरंचसिद्धानांधानानांसादनोक्षणे ॥ धानाभ्रष्टायवाःप्रोक्तालाजास्तुव्रीहयःस्मृताः ॥ अथोपकल्पयेदार्द्राःसपात्राःसमिधोनव ॥ औदुम्बरीःप्रतिव्यक्ताघृतंतत्राञ्जनीयकम् ॥ धानादधिचभक्षायवार्याकर्षफलंतिलाः ॥ आज्यभागाविष्ट्वाज्याहुतीर्जुहोति ॥ अन्तरिक्षायवायवेइतियजुर्वेदे ॥ पृथिव्याअग्नयइतिऋग्वेदे ॥ दिवेसूर्यायेतिसामवेदे ॥ दिग्भ्यश्चन्द्रमसइतिसामवेदे ॥ ब्रह्मणेछन्दोभ्यश्चेतिसर्वत्र ॥ प्रजापतयेदेवेभ्यऋषिभ्यःश्रद्धायैमेधायैसदसस्पतयेऽनुमतयेइतिच ॥ एतदेवव्रतादेशनविसर्गेषु ॥ ॐअन्तरिक्षायस्वाहा इदमंतरिक्षायनमम ॥ ॐवायवेस्वाहा इदंवायवे० ॥ ॐब्रह्मणेस्वाहा इदंब्रह्मणे० ॥ ॐछन्दोभ्यःस्वाहा इदंछन्दोभ्यो० ॥ ४ ॥ ॐपृथिव्यैस्वाहा इदंपृथिव्यै० ॥ ॐअग्नयेस्वाहा इदमग्नये० ॥ ॐब्रह्मणे० इदंब्रह्मणे० ॥ ॐछन्दोभ्य० इदंछन्दोभ्योभ्यो० ॥४॥ ॐदिवेस्वाहा इदंदिवे० ॥ ॐसूर्यायस्वाहा इदंसूर्याय० ॥ ॐब्रह्मणे० इदंब्रह्मणे० ॥ ॐछन्दोभ्यः० इदंछन्दोभ्यो० ॥ ४ ॥ ॐदिग्भ्यःस्वाहा इदंदिग्भ्यो० ॥ ॐचन्द्रमसेस्वाहा इदंचन्द्रमसे० ॥ ॐब्रह्मणे० इदंब्रह्मणे० ॥ ॐछन्दोभ्यः० इदंछन्दोभ्य० ॥ ४ ॥ ॐप्र-

जापतयेस्वाहा इदंप्रजापतये० ॥ ॐदेवेभ्यःस्वाहा इदंदेवेभ्यो० ॥ ॐऋषिभ्यःस्वाहा इदंऋषिभ्यो० ॥ ॐश्रद्धायै-
स्वाहा इदंश्रद्धायै० ॥ ॐमेधायैस्वाहा इदंमेधायै० ॥ ॐसदसस्पतयेस्वाहा इदंसदसस्पतये० ॥ ॐअनुमतयेस्वाहा इ-
दमनुमतये० ॥ ७ ॥ सदसस्पतिमित्यक्षतधानाभिःसर्वेनुपठेयुर्हुत्वाहुत्वौदुम्बर्यस्तिस्रस्तिस्रःसमिधआदध्युरार्द्राःसपलाशा-
घृताक्ताःसावित्र्या ॥ ब्रह्मचारिणश्चपूर्वकल्पेन ॥ ततोधानाभिधारणं ॥ स्रुवेणावदाय ॥ ॐसदसस्पतिमद्भुतंप्रियमि-
न्द्रस्यकाम्यम् ॥ सनिंमेधामयासिषᳬस्वाहा ॥ इदंसदसस्पतये० ॥ इमंमन्त्रंगुरुणापठ्यमानंशिष्याअपिसहानुपठेयुः ॥
ततउपकल्पिताज्येनसमिधआधार्यहस्तेनगृहीत्वाप्राङ्मुखास्तिष्ठंतः ॥ ॐतत्सवितु० यात्स्वाहा इदंसवित्रे० ॥ एकांसमि-
धमादध्युः एवंद्वितीयांतृतीयांच ॥ ततःसर्वेउपविशेयुः ॥ एवंद्विरपरंधानाहोमःसमिदाधानंच ॥ शन्नोभवन्त्वित्यक्षत-
धानाअखादयन्तःप्राश्नीयुः ॥ तिस्रस्तिस्रः ॥ ॐशन्नोभवन्तुवाजिनोहवेषुदेवतातामितद्रवःस्वर्काः ॥ जम्भयन्तोहिंवृकᳬ
रक्षाᳬसिसनेम्यस्मद्युयवन्नमीवाः ॥ दधिक्राव्णइतिदधिभक्षयेयुः ॥ ॐदधिक्राव्णोअकारिषंजिष्णोरश्वस्यवाजिनः ॥ सु-
रभिनोमुखाकरत्प्रणआयूᳬषितारिषत् ॥ द्विराचमनं ॥ सयावन्तंगणमिच्छेत्तावतस्तिलानाकर्षफलकेनजुहुयात्सावित्र्या-
शुक्रज्योतिरित्यनुवाकेनवा ॥ ॐतत्सवितु० यात्स्वाहा इदंसवित्रे० ॥ शुक्रज्योतिःसप्तइत्यनुवाकसूत्रम् ॥ ॐशुक्रज्यो-
तिश्चचित्रज्योतिश्चसत्यज्योतिश्चज्योतिष्मांश्च ॥ शुक्रश्चऋतपाश्चात्यᳬहाः ॥ १ ॥ ईदङ्चान्यादङ्चसदृङ्चप्रतिसदृ-

श्च ॥ मितश्चसंमितश्चसभराः ॥ २ ॥ ऋतश्चसत्यश्चध्रुवश्चधरुणश्च ॥ धर्ताचविधर्ताचविधारयः ॥ ३ ॥ ऋतजिच्च-
सत्यजिच्चसेनजिच्चसुषेणश्च ॥ अन्तिमित्रश्चदूरेअमित्रश्चगणः ॥ ४ ॥ ईदृक्षासएतादृक्षासऊषुणःसदृक्षासः प्रतिसदृक्षास-
एतन ॥ मितासश्चसम्मितासोनोअद्यसभरसोमरुतोयज्ञेअस्मिन् ॥ ५ ॥ स्वतवांश्चप्रघासीचसान्तपनश्चगृहमेधीच ॥
क्रीडीचशाकीचोज्जेषी ॥ ६ ॥ इन्द्रंदैवीर्विशोमरुतोनुवर्त्मानोभवन्यथेन्द्रंदैवीर्विशोमरुतोनुवर्त्मानोभवन् ॥ एवमिमंय-
जमानंदैवीश्चविशोमानुषीश्चानुवर्त्मानोभवंतुस्वाहा ॥ ७ ॥ इदंमरुद्भ्योनमम ॥ नसंस्रवः ॥ ततोधानाभ्यःस्विष्टकृत् ॥
ॐभूःस्वाहेत्यादिप्रणीताविमोकान्तं ॥ प्राशनान्तेप्रत्यङ्मुखेभ्यउपविष्टेभ्यः ॥ ॐकारमुक्त्वात्रिश्चसावित्रीमध्यायादीन्त्र-
ब्रूयात् ॥ अभ्युत्तरेणकुशेषु ॥ मन्त्रब्राह्मणयोः ॥ ॐ३म् ॥ तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनः प्रचोदयात्
॥ १ ॥ तत्सवितुर्व० ॥ २ ॥ तत्सवितुर्व० ॥ ३ ॥ इषेत्वा १ कृष्णोसि २ समिधाग्निं ३ एदम् ४ अग्नेस्तनूः ५ दे-
वस्यत्वा ६ वाचस्पतये ७ उपयामगृहीतोसि ८ देवसवितः ९ अपोदेवाः १० युञ्जानःप्रथमं ११ इमामगृभ्णन् १२
मयिगृह्णामि १३ ध्रुवक्षितिर्ध्रुवयोनिः १४ अग्नेजातान् १५ नमस्ते १६ अश्मन्नूर्जं १७ वाजश्च १८ स्वाद्वीन्त्वा १९
क्षत्रस्ययोनिः २० इमंमे २१ तेजोसि २२ हिरण्यगर्भःसम् २३ अश्वस्तूपरः २४ शादंदद्भिः २५ अग्निश्च २६ समा-
स्त्वा २७ होतायक्षत् २८ समिद्धोअञ्जन् २९ देवसवितः ३० सहस्रशीर्षापुरुषः ३१ तदेव ३२ अस्याजरासः ३३ य-

जाग्रतः ३४ अपेतꣳ ३५ ऋचंवाचं ३६ देवस्यत्वा ३७ देवस्यत्वा ३८ स्वाहाप्राणेभ्यः ३९ ईशावास्यं ४० व्रतमुपैष्यन् १
सवैकपालान्येवान्यतरउपदधाति २ सवैस्रुचꣳसंमार्ष्टि ३ हिंकृत्यान्वाह ४ सवैप्रवरायाश्रावयति ५ ऋतेवोहवैदेवेषुय-
ज्ञेभागमीषिरे ६ सवैपर्णशाखयावत्सानपाकरोति ७ मनवेहवैप्रातꣳ ८ सयत्राह ९ ॥१॥ सयद्वाइतश्चेतश्चसंभरति १० उद्धृ-
त्याहवनीयंपूर्णाहुतिंजुहोति ११ सूर्योहवाअग्निहोत्रम् १२ अथहुतेग्निहोत्रउपतिष्ठते १३ प्रजापतिर्हवाइदमग्रएकएवास
१४ महाहविषाहवैदेवावृत्रंजघ्नुः १५ ॥२॥ देवयजनंजोषंते १६ दक्षिणेनाहवनीयंप्राचीनग्रीवंकृष्णाजिनेउपस्तृणाति १७
सप्तपदान्यनुनिक्रामति १८ शिरोवैयज्ञस्यातिथ्यंबाहूप्रायणीयोदयनीयौ १९ तद्यएषपूर्व्योध्योवर्षिष्ठस्थूणाराजोभवति
२० उदरमेवास्यसदꣳ २१ अभ्रिमादत्ते २२ तद्यत्रैतत्प्रवृतोहोताहोतृषदनउपविशति २३ प्रजापतिर्वैप्रजाꣳससृजानोरिरि-
चानइवामन्यत २४ ॥३॥ प्राणोहवाअस्योपांशुः २५ चक्षुषीहवाअस्यशुक्रामंथिनौ २६ भक्षयित्वासमुपहूताꣳस्मइत्युक्त्वो-
त्तिष्ठति २७ मनोहवाअस्यसविता २८ आदित्येनचरुणोदयनीयेनप्रचरति २९ प्रजापतिर्वाएषयदंशुः ३० ॥४॥ देवाश्चवा-
असुराश्च ३१ अथस्रुवंचाज्यविलापनींचादाय ३२ अरण्योरग्नीसमारोह्य ३३ केशवस्यपुरुषस्य ३४ आग्नेयोष्टाकपालःपुरो-
डाशोभवति ३५ ॥५॥ असद्वाइदमग्रआसीत् ३६ प्रजापतिरग्निरूपाण्यभ्यध्यायत् ३७ एतद्वैदेवाअब्रुवन् ३८ अथैनमतꣳखु-
नत्येव ३९ पर्णकषायनिष्पक्वाएताआपोभवन्ति ४० भूयाꣳसिहवीꣳषिभवंति ४१ रुक्मंप्रतिमुच्यबिभर्ति ४२ वनी-

वाह्येताग्निंबिभ्रदित्याहुः ४३॥६॥ गार्हपत्यंचेष्यन्पलाशशाखयाव्युदूहति ४४ अथातोनैर्ऋतीरेहरंति ४५ चितोगार्हपत्योभ-
वति ४६ आत्मन्नग्निंगृह्णीतेचेष्यन् ४७ कूर्ममुपदधाति ४८॥७॥ प्राणभृतउपदधाति ४९ द्वितीयांचितिमुपदधाति ५० तृती-
यांचितिमुपदधाति ५१ चतुर्थींचितिमुपदधाति ५२ पंचमींचितिमुपदधाति ५३ नाकसदउपदधाति ५४ ऋतव्याउप-
दधाति ५५ अथातःशतरुद्रियंजुहोति ५६ उपवसथीयेहन्प्रातरुदितआदित्ये ५७ अथातोवैश्वानरंजुहोति ५८ अथातोरा-
ष्ट्रभृतोजुहोति ५९ अथातःपयोव्रततायै ६० ॥९॥ अग्निरेषपुरस्ताच्चीयते ६१ प्रजापतिःस्वर्गंलोकमजिगांसत् ६२ प्राणो-
गायत्री ६३ प्रजापतिंविस्रस्तं ६४ तस्यवाएतस्याग्नेः ६५ अथहैतेरुणे ६६॥१०॥ संवत्सरोवैयज्ञःप्रजापतिः ६७ त्रिर्हवैपु-
रुषोजायते ६८ वाग्घवाएतस्याग्निहोत्रस्याग्निहोत्री ६९ उद्दालकोहारुणिः ७० उर्वशीहाप्सराः ७१ भृगुर्हवैवारुणिः ७२
पशुबंधेनयजते ७३ तद्यथाहवै ७४ ॥११॥ अयंवैयज्ञोयोयंपवते ७५ समुद्रंवाएतेप्रतरन्ति ७६ मुद्दालाके ७७ दीर्घसत्र-
ंहवाएतउपयन्ति ७८ तदाहुर्यदेपदीर्घसत्री ७९ सोमोवैराजायज्ञःप्रजापतिः ८० विश्वरूपंवैत्वाष्ट्रमिन्द्रोहन्
८१ इन्द्रस्यवैयत्र ८२ एतस्माद्वैयज्ञात्पुरुषोजायते ८३ ॥१२॥ ब्रह्मौदनंपचति ८४ प्रजापतिर्देवेभ्योयज्ञान्व्यादिशत ८५
प्रजापतेरुक्षश्चयत् ८६ प्रजापतिरकामयत ८७ अथप्रातर्गोतमस्य ८८ पुरुषोहनारायणोकामयत ८९ ब्रह्मवैस्वयंभूतपोतप्यत
९० अथास्मैस्मशानंकुर्वंति ९१ ॥१३॥ देवाहवैसत्रंनिषेदुः ९२ अथातोरौहिणौजुहोति ९३ सवैतृतीयेहन् ९४ ॥प्रवर्ग्यः॥

द्वयाहप्राजापत्याः ९५ दृप्तबालाकिर्हानूचानोगार्ग्यआस ९६ जनकोहवैदेहः ९७ जनकंहवैदेहंयाज्ञवल्क्योजगाम ९८ पूर्णमदः पूर्णमिदं ९९ श्वेतकेतुर्हवाआरुणेयः १०० ॥ ऋषिमुखानिबह्वृचानाम् ॥ अग्निमीळेपुरोहितम् ॥ त्वमग्नेद्युभिः ॥ सोमस्यमातवसं ॥ त्वंह्यग्नेसदम् ॥ अबोध्यग्निःसमिधा ॥ त्वंह्यग्नेप्रथमः ॥ अग्निंनरोदीधितिभिः ॥ माचिदन्यद्विशंसत ॥ स्वादिष्ठयामदिष्ठया ॥ अग्नेबृहन्नुषसाम् ॥ पर्वाणिछन्दोगानाम् ॥ अग्नआयाहिवीतये ॥ तद्वोगायतेसुतेसचा ॥ उच्चातेजातमन्धसः ॥ याद्यावइन्द्रतेशतं ॥ इन्द्रंनरोनेमधिताहवंते ॥ हुवेवाचा ॥ उन्नयामि ॥ सूक्तान्याथर्वणानाम् ॥ शंनोदेवीरभिष्टये ॥ आग्नेयं ॥ ऐन्द्रं ॥ पावमानं ॥ आर्कं ॥ द्वन्द्वं ॥ सूर्यं ॥ महानाम्नी ॥ सर्वेजपन्ति ॥ सहनोस्तु-सहनोवतुसहनइदंवीर्यवदस्तुब्रह्म ॥ इन्द्रस्तद्वेदयेनयथानविद्विषामहे ॥ त्रिरात्रंनाधीयीरन् ॥ लोमनखानामनिकृंतनम् ॥ एकेप्रागुत्सर्गात् ॥ अनेनउपाकर्माख्येनकर्मणाभगवान्श्रीपरमेश्वरःप्रीयताम् ॥ यस्यस्मृत्या० ॥ इतिगृह्यसूत्रकर्करेणुहरिहरगङ्गाधरीवासुदेव्यनुसारेणोपाकर्मप्रयोगः ॥

अथवृद्धाचारानुसारिणीअध्यायोत्सर्गोपाकर्मपद्धतिः ॥ तथाच ॥ गदाधरभाष्ये वृद्धाचारकारिकायांविशेषः ॥ पौषस्यरोहिण्यामृक्षेवाष्टकांप्राप्यमध्यमाम् ॥ उदकान्तंसमासाद्यवेदस्योत्सर्जनंबहिः ॥ स्नातव्यंविधिवत्तत्रस्थापयेदप्यरुन्धती ॥ प्रवरांश्चततोधीमान्कुर्यात्तेषांप्रतिष्ठितिम् ॥ इमावेवेतियजुपानामान्येषांविनिर्दिशेत् ॥ अद्भिस्तान्स्थापयेत्तत्रसप्तऋषयइत्यृचा ॥ अर्घस्तेभ्यःप्रदातव्यःपूजनंचन्दनादिभिः ॥ नैवेद्यैर्विविधैःपूज्यावेदस्याहितमिच्छता ॥ ऋषीणांप्रीतयेदद्यादुपवीतान्यनेकशः ॥ प्रणम्यचमुनी-

न्भक्त्यापश्चात्तर्पणमाचरेत् ॥ देवाश्छन्दांसिवेदाश्चऋषयश्चसनातनाः ॥ तथा ॥ पुराणाचार्यान्गन्धर्वानितराचार्यांस्तथैवच ॥ अहोरात्राण्यर्धमासामासाऋतवएवच ॥ संवत्सरोवयवैःसार्धमयंपुरश्चपञ्चभिः ॥ मन्त्रैर्द्वाभ्यांमूर्धेतिमाछन्दस्तिस्रएवच ॥ एवंषोडशभिर्मन्त्रैःसप्तऋषयइत्येकया ॥ चतुर्भिस्तर्पयेद्दंशैरिमामेवेत्यनेनच ॥ सावित्रींपाठयेच्छिष्यांश्चतुःकृत्वोगुरुःस्वयम् ॥ विरताःस्मेतिपठेयुस्तेप्रणवंयोजयेत्कविः ॥ सावित्रींत्रिःसमुच्चार्यअध्यायांश्चप्रपाठकान् ॥ शतस्थानान्यनुस्मृत्यकण्डिकाश्चतथांतिमाः ॥ अन्तिमाःफक्किकाब्रूयादग्निमीळेपुरोहितम् ॥ इषेत्वेत्यग्नआयाहिशंनोदेवीरभिष्टये ॥ सहनोस्त्वितिमन्त्रंचपश्चादुभाकवीतिच ॥ इति ॥ ॥

अथसभादीपविधिः ॥ देशकालौस्मृत्वाममेहजन्मनिजन्मांतरेचदीर्घायुःसुपुत्रश्रीसुखसौभाग्यैहिकामुष्मिकफलप्राप्तयेवैधव्यदोषनाशार्थंसर्वकर्मण्यपिउत्कृष्टपुण्यप्राप्त्यर्थंसाङ्गलक्ष्मीवाञ्छितफलसर्वमनोरथप्राप्तयेसभादीपोक्तानेकफलप्राप्तिकामाहंब्रह्मविष्णुरुद्रप्रीत्यर्थंब्राह्मणसभायां ब्राह्मणायसभादीपदानंकरिष्ये ॥ भोदीपब्रह्मरूपस्त्वंज्योतिषांप्रभुरव्ययः ॥ आरोग्यंदेहिपुत्रांश्चअवैधव्यंप्रयच्छमे ॥ श्रावणेमास्युपाकर्मण्यारब्धेविप्रसंसदि ॥ व्रीहितण्डुलपिष्टस्यकिंचित्पक्वकनिर्मितं ॥ घृतवर्त्यग्निसंयुक्तंविमलेकांस्यभाजने ॥ सपादतन्दुलप्रस्थंपूरितंसुप्रतिष्ठितं ॥ अवैधव्यंसुपुत्रत्वंदीर्घायुःश्रीसुखाप्तये ॥ सभादीपंप्रदास्येहंतुभ्यंविप्रसदक्षिणं ॥ ब्रह्मविष्णुमहेशाश्चप्रीयन्तांदीपदानतः ॥ ममाभीष्टप्रदाःसंतुभवेस्मिन्वाभवांतरे ॥ सर्वकामप्रवृत्तानांदीपदानप्रतोषितः ॥ श्रावण्यांश्रवणर्क्षेचसभायामग्निसंनिधौ ॥ सभादीपंप्रदास्येहमतःशांतिंप्रयच्छमे ॥ देवस्यत्वा० स्वस्त्यस्तु० ॥ इतिसभादीपदानं ॥

अथप्रयोगः ॥ प्रथमप्रयोगेमातृश्राद्धं ॥ स्नानविधिःपूर्वोक्तएव ॥ तत्रविशेषः ॥ अध्यायोत्सर्गोपाकर्मनिमित्तंगण-स्नानमहंकरिष्ये इतिसंकल्पः ॥ गोमयस्नानोत्तरंभस्मस्नानं ॥ सर्वेषामेवदेवानांपूज्योरुद्रोऽधिदेवता ॥ तस्मात्पवित्रंभ-स्मैवतेनस्नानमघापहं ॥ १ ॥ ॐअग्निरितिभस्म वायुरितिभस्म जलमितिभस्म स्थलमितिभस्म व्योमेतिभस्म सर्वᳬंह-वाऽइदंभस्ममनइत्येतानिऋषिभस्मानि ॥ १ ॥ ॐत्र्यायुषञ्ज० त्र्यायुषम् ॥ १ ॥ इतिभस्मस्नानं ॥ इयम्मइत्यष्टाभिःप्र-थमाभिषेकोत्तरं ॥ अपाघमित्यपामार्गैःपावनंत्रिः ॥ ॐअपाघमपकिल्बिषमपकृत्यामपोरपः ॥ अपामार्गत्वमस्मदपदुᳬ-ष्वप्र्यᳬंसुव ॥ १ ॥ आचम्य ॥ काण्डात्काण्डादितिदूर्वाभिस्त्रिः ॥ ॐकाण्डात्काण्डात्प्र० शतेनच ॥ १ ॥ पुनरि-यम्मइत्यष्टाभिरुत्तराभिषेकोत्तरं ॥ पञ्चगव्यस्नानं ॥ गोमूत्रंगोमयंक्षीरंदधिसर्पिःकुशोदकं ॥ पञ्चगव्यमितिप्रोक्तंसर्वपा-पप्रणाशनं ॥ १ ॥ यत्त्वगस्थिगतंपापंदेहेतिष्ठतिमामके ॥ स्नानाच्च(प्राशनात्)पञ्चगव्यस्यदहत्वग्निरिवेन्धनं ॥ १ ॥ आ-चम्य ॥ नन्दिनीनलिनीसीतामालतीचमलापहा ॥ विष्णुपादाब्जसंभूतागङ्गात्रिपथगामिनी ॥ भागीरथीभोगवतीजा-ह्नवीत्रिदशेश्वरी ॥ द्वादशैतानिनामानिस्नानकालेसदापठेत् ॥ गोदावरिनमस्तुभ्यंनमस्तेपापहारिणि ॥ अनुज्ञांदेहिमे-मातःशुद्धस्नानंकरोम्यहं ॥ पापोऽहंपा०भव ॥ इतिविशेषः ॥ ततोमध्याह्नसंध्या ॥ सूर्योपस्थानं ॥ ब्रह्मयज्ञः ॥ तर्प-णंच ॥ ॥ अथऋषिपूजनं ॥ आचमनं ॥ प्राणायामः ॥ पवित्रधारणं ॥ देशकालौसंकीर्त्य ॥ श्रीपरमेश्वरप्रीत्यर्थं अ-ध्यायोत्सर्गोपाकर्मनिमित्तं ऋषिपूजनंकरिष्ये ॥ गणपतिपूजनं ॥ वरुणपूजनं ॥ शङ्खघण्टिकापूजनं ॥ पुरुषसूक्तन्यासाः ॥

दर्भबटवःसर्वेऋषयः ॥ ऋषीणांपौराणनामक्रमः ॥ कश्यपोऽथभरद्वाजोअङ्गिरागौतमोमुनिः ॥ वत्सःपराशरश्चैवमाण्डव्याऋषयःस्मृताइति ॥ ॐकश्यपायनमः कश्यपं आवाहयामि १ भरद्वाजाय भरद्वाजं० २ अङ्गिरसे० अङ्गिरसं० ३ गौतमाय० गौतमं० ४ वत्साय० वत्सं० ५ पराशराय० पराशरं० ६ माण्डव्याय० माण्डव्यं० ७ ॥ स्वर्षिभ्यो० स्वर्षीन्० ॥ अथवा ब्राह्मणोक्तःक्रमः ॥ ॐगोतमाय० गोतमं० १ भरद्वाजाय० भरद्वाजं० २ विश्वामित्राय० विश्वामित्रं० ३ जमदग्नये० जमदग्निं० ४ वसिष्ठाय० वसिष्ठं० ५ कश्यपाय० कश्यपं० ६ अत्रये० अत्रिं० ७ अरुन्धत्यैनमः अरुन्धतीं० ८ स्वर्षिभ्यो० स्वर्षीन्० ॥ प्रतिष्ठा ॥ ॐमनोजूतिर्जु० प्रतिष्ठ ॥ १ ॥ एषवैप्र० प्रतिष्ठितंभवति ॥ १ ॥ ॐसप्तऋषयःप्रति०देवौ ॥ १ ॥ इदंविष्णु०सुरे ॥ ॐभूर्भुवःस्वःअरुन्धतीसहिताःसप्तर्षयःस्वर्षयश्चसुप्रतिष्ठितावरदाभवंतु ॥ एवमासनादिषोडशोपचारैःपूजनं ॥ अनयापूजयाअरुन्धतीसहिताःसप्तर्षयःस्वर्षयश्चप्रीयंतां ॥ ऋषीणांप्रीत्यर्थंसदक्षिणंयज्ञोपवीतदानं ॥ इतिऋषिपूजनं ॥ ॥ अथोत्सर्गः ॥ अधीतानां अध्येष्यमाणानांच अध्यायानां स्थानविच्छेदाक्रोशघोपणदन्तविघृतिदुर्वृत्तिद्रुतोच्चारितवर्णानां पूर्वसवर्णाद्यङ्गलोपलम्बितविवृतोच्चारितवर्णानां श्लिष्टास्पष्टवर्णविघट्टनादिभिःपाठने श्रुतीनां यद्यातयामत्वं तत्परिहारार्थं अष्टात्रिंशदनध्यायाध्ययने रथ्यासंचरतः शूद्रस्य शृण्वतोऽध्ययने म्लेच्छान्त्यजादेः शृण्वतोऽध्ययने अशुचिदेशेऽध्ययने आत्मनोऽशुचित्वेऽध्ययने अक्षरस्वरानुस्वारपदच्छेदकण्डिकाव्यञ्जनह्रस्वदीर्घप्लुतकण्ठतालुमूर्द्धन्यौष्ठ्यदन्त्यनासिकानुनासिकरेफजिह्वामूलीयोपध्मानीयोदात्तानुदात्तस्वरितादीनांव्यत्ययेनो-

च्चारे माधुर्याक्षरव्यक्तिहीनत्वाद्यनेकप्रत्यवायपरिहारपूर्वकं सर्वस्यवेदस्यसवीर्यत्वसंपादनद्वारायथावत्फलप्राप्त्यर्थं श्रीपर-
मेश्वरप्रीत्यर्थं सशिष्योऽध्यायोत्सर्गोपाकर्माख्येकर्मणी अहंकरिष्ये ॥ तत्रसशिष्योऽहं छन्दसांयातयामत्वनिवृत्तिपूर्वकंपु-
नराप्यायनार्थंश्रीपरमेश्वरप्रीत्यर्थं अध्यायोत्सर्गाख्यंकर्मकरिष्ये ॥ ॥ उदकान्तंगत्वाऽद्भिर्देवाँश्छन्दा७ंसिवेदानृषीन्पुरा-
णाचार्यान्गन्धर्वानितराचार्यान्संवत्सरंचसावयवंपितॄनाचार्यान्स्वांश्चतर्पयेयुः ॥ यवमिश्रं । अञ्जलिना । ईशानदिङ्मुखाः ॥
ॐदेवास्तृप्यन्ताम् १ ॐछन्दा७ंसितृ० २ वेदास्तृ० ३ ऋषयस्तृ० ४ पुराणाचार्यास्तृ० ५ गन्धर्वास्तृ० ६ इतराचा-
र्यास्तृ० ७ अहोरात्राणितृ० ८ अर्द्धमासास्तृ० ९ मासास्तृ० १० ऋतवस्तृ० ११ संवत्सरःसावयवस्तृ० १२ पित-
रस्तृ० १३ आचार्यास्तृ० १४ ॥ ततस्तिलमिश्रंप्राचीनावीतिनोदक्षिणामुखाः ॥ नामगोत्रोच्चारपूर्वकं स्वपितृतर्पणं ॥
जीवत्पितृकास्तुपितुःपित्रादीनांतर्पणंकुर्युः ॥ सव्यं ॥ आचम्य ॥ ॥ अथमन्त्रतर्पणं ॥ ॐअयम्पुरोभुवस्तस्यप्राणोभौ-
वायुनोव्वसन्त९प्राणायुनोगायत्रीव्वासन्तीगायत्र्यैगायत्रङ्गायत्रादुपा७ंशुरुपा७ंशोस्त्रिवृत्त्रिवृतोरथन्तरंव्वासिष्ठऋषि९प्रजाप-
तिगृहीतयात्वयाप्राणंगृह्णामिप्रजाभ्य९॥१॥ अयंदक्षिणा । विश्वकर्म्मातस्यमनोव्वैश्वकर्मणंग्रीष्मोमानसस्त्रिष्टुब्ग्रैष्मीत्रिष्टुभः
स्वार७ंस्वारादन्तर्यामोन्तर्यामात्पञ्चदशःपञ्चदशाद्बृहद्भरद्वाजऋषि९प्रजापतिगृहीतयात्वयामनोगृह्णामिप्रजभ्यः ॥ २ ॥
अयंपश्चाद्विश्वव्यचास्तस्यचक्षुर्वैश्वव्यचसंव्वर्षाश्चाक्षुष्योजगतीव्वार्षीजगत्याऋक्समम्रृक्समाच्छुक्र९शुक्रात्सप्तदश९सप्तदशा-

द्वैरूपंजमदग्निर्ऋषिःप्रजापतिगृहीतयात्वयाचक्षुर्गृह्णामिप्रजाभ्यः ॥ ३ ॥ इदमुत्तरात्स्वस्तस्यश्रोत्रᳬसौवᳬशरच्छ्रौत्र्यनु-
ष्टुप्शारद्यनुष्टुभऐडमैडान्मन्थीमन्थिनएकविᳬशएकविᳬशाद्वैराजंविश्वामित्रऋषिःप्रजापतिगृहीतयात्वयाश्रोत्रंगृह्णामिप्र-
जाभ्यः ॥ ४ ॥ इयमुपरिमतिस्तस्यैवाङ्मात्याहैमन्तीवाच्यःपङ्क्तिर्हैमन्तीपंक्त्यैनिधनवन्निधनवतआग्रयणऽआग्रयणात्त्रि-
णवत्रयस्त्रिᳬशौत्रिणवत्रयस्त्रिᳬशाभ्याᳬशाक्वररैवतेविश्वकर्मऋषिःप्रजापतिगृहीतयात्वयावाचंगृह्णामिप्रजाभ्योलोकंता-
इन्द्रम् ॥ ५ ॥ मूर्द्धावयःप्रजापतिश्छन्दःक्षत्रंवयोमयन्दंछन्दोविष्टम्भोवयोऽधिपतिश्छन्दोविश्वकर्मावयःपरमेष्ठीछन्दो-
बस्तोवयोविबलंछन्दोवृष्णिर्वयोविशालंछन्दःपुरुषोवयस्तन्द्रंछन्दोव्याघ्रोवयोनाधृष्टंछन्दःसिᳬहोवयश्छदिश्छन्दःपष्ठ-
वाड्वयोबृहतीछन्दउक्षावयःककुप्छन्दऽऋषभोवयःसतोबृहतीछन्दः ॥ ६ ॥ अनड्वान्वयःपङ्क्तिश्छन्दोधेनुर्वयोजगती-
छन्दस्त्र्यविर्वयस्त्रिष्टुप्छन्दोदित्यवाड्वयोविराट्छन्दःपञ्चाविर्वयोगायत्रीछन्दस्त्रिवत्सोवयउष्णिक्छन्दस्तुर्यवाड्वयोऽनुष्टुप्छ-
न्दोलोकंताइन्द्रम् ॥ ७ ॥ माछन्दःप्रमाछन्दःप्रतिमाछन्दोऽअस्त्रीवयश्छन्दःपङ्क्तिश्छन्दउष्णिक्छन्दोबृहतीछन्दोऽनु-
ष्टुप्छन्दोविराट्छन्दोगायत्रीछन्दस्त्रिष्टुप्छन्दोजगतीछन्दः ॥ ८ ॥ पृथिवीछन्दोऽन्तरिक्षंछन्दोद्यौश्छन्दःसमाश्छन्दोनक्ष-
त्राणिछन्दोवाक्छन्दोमनश्छन्दःकृषिश्छन्दोहिरण्यंछन्दोगौश्छन्दोजाछन्दोऽश्वश्छन्दः ॥९॥ अग्निर्देवता ॥ वातोदेवता-
सूर्योदेवताचन्द्रमादेवतावसवोदेवतारुद्रादेवतादित्यादेवतामरुतोदेवताविश्वेदेवादेवताबृहस्पतिर्देवतेन्द्रोदेवतावरुणोदेवता

॥ १० ॥ सुप्तऋषयः ॥ प्रतिहिताः शरीरे सप्त रक्षन्ति सदमप्रमादम् ॥ सप्तापः स्वपतो लोकमीयुस्तत्र जागृतो अस्वप्नजौ सत्रसदौ च देवौ ॥ ११ ॥ मन्त्रोक्ताऋषयस्तृप्यन्ताम् ॥

अथचत्वारोवंशाः ॥ कां० १० प्र० ४ ब्रा० ८ मं० ९ ॥ ॥ अथवंशः ॥ समानमासाजीवीपुत्रात्साजीवीपुत्रो-माण्डूकायनेर्माण्डूकायनिर्माण्डव्यान्माण्डव्यः कौत्सात्कौत्सो माहित्थेर्माहित्थिर्वामकक्षायणाद्वामकक्षायणो वात्स्याद्वा-त्स्यः शाण्डिल्याच्छाण्डिल्यः कुश्रेः कुश्रिर्यज्ञवचसो राजस्तम्बायनाद्यज्ञवचा राजस्तम्बायनस्तुरात्कावषेयात्तुरः कावषेयः प्रजापतेः-प्रजापतिर्ब्रह्मणो ब्रह्म स्वयम्भु ब्रह्मणे नमः ॥ १ ॥ वंशोक्ताऋषयस्तृप्यन्ताम् ॥

कां० १४ प्र० ४ ब्रा० ५ मं० २०।२१।२२। अथवंशः ॥ तदिदं वयं शौर्पणाय्याच्छौर्पणाय्यो गौतमाद्गौतमो वा-त्स्याद्वात्स्यो वात्स्याच्च पाराशर्याच्च पाराशर्यः सांकृत्याच्च भारद्वाजाच्च भारद्वाज औदवाहेश्च शाण्डिल्याच्च शाण्डिल्यो बैजवापा-च्च गौतमाच्च गौतमो बैजवापायनाच्च वैष्टपुरेयाच्च वैष्टपुरेयः शाण्डिल्याच्च रौहिणायनाच्च रौहिणायनः शौनकाच्चात्रेयाच्च रैभ्याच्च रै-भ्यः पौतिमाष्यायणाच्च कौण्डिन्यायनाच्च कौण्डिन्यायनः कौण्डिन्यात्कौण्डिन्यः कौण्डिन्यात्कौण्डिन्यः कौण्डिन्याच्चाग्निवे-श्याच्च ॥ १ ॥ आग्निवेश्यः सैतवात् ॥ सैतवः पाराशर्यात्पाराशर्यो जातूकर्ण्याज्जातूकर्ण्यो भारद्वाजाद्भारद्वाजो भारद्वाजा-च्चासुरायणाच्च गौतमाच्च गौतमो भारद्वाजाद्भारद्वाजो बैजवापायनाद्बैजवापायनः कौशिकायनेः कौशिकायनिर्घृतकौशिकाद्घृत-

कौशिकः पाराशर्य्यायणात्पाराशर्य्यायणः पाराशर्य्यात्पाराशर्य्यो जातूकर्ण्याज्जातूकर्ण्यो भारद्वाजाद्भारद्वाजो भारद्वाजाच्चासुरायणाच्च यास्काच्चासुरायणस्त्रैवणेस्त्रैवणिरौपजंघनेरौपजंघनिरासुरेरासुरिर्भारद्वाजाद्भारद्वाज आत्रेयात् ॥ २ ॥ आत्रेयो माण्टेः ॥ माण्टिर्गौतमाद्गौतमो गौतमाद्गौतमो वात्स्याद्वात्स्यः शाण्डिल्याच्छाण्डिल्यः कैशोर्य्यात्काप्यात्कैशोर्य्यः काप्यः कुमारहारितात्कुमारहारितो गालवाद्गालवो विदर्भीकौण्डिन्याद्विदर्भीकौण्डिन्यो वत्सनपातो बाभ्रवाद्वत्सनपाद्बाभ्रवः पथः सौभरात्पंथाः सौभरोऽयास्यादांगिरसादयास्य आंगिरस आभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीच आथर्वणाद्दध्यङ्ङाथर्वणोऽथर्वणो दैवादथर्वा दैवो मृत्योः प्राध्वंसनान्मृत्युः प्राध्वंसनः प्रध्वंसनात्प्रध्वंसन एकर्षेरेकर्षिर्विप्रजित्तेर्विप्रजित्तिर्व्यष्टेर्व्यष्टिः सनारोः सनारुः सनातनात्सनातनः सनगात्सनगः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयंभु ब्रह्मणे नमः ॥ ३ ॥ ॥ वंशोक्ता ऋषयस्तृप्यन्ताम् ॥

कां० १४ प्र० ६ ब्रा० ३ मं० २६।२७।२८ ॥ अथ वंशः ॥ तदिदं वयं शौर्पणाय्याच्छौर्पणाय्यो गौतमाद्गौतमो वात्स्याद्वात्स्यो वात्स्याच्च पाराशर्य्याच्च पाराशर्य्यः सांकृत्याच्च भारद्वाजाच्च भारद्वाज औदवाहेश्च शाण्डिल्याच्च शाण्डिल्यो बैजवापाच्च गौतमाच्च गौतमो बैजवापायनाच्च वैष्टपुरेयाच्च वैष्टपुरेयः शाण्डिल्याच्च रौहिणायनाच्च रौहिणायनः शौनकाच्च जैवंतायनाच्च रैभ्याच्च रैभ्यः पौतिमाष्यायणाच्च कौण्डिन्यायनाच्च कौण्डिन्यायनः कौण्डिन्याभ्यां कौण्डिन्या और्णवाभेभ्य और्णवाभाः कौण्डि-

न्यात्कौण्डिन्यः कौण्डिन्यात्कौण्डिन्यः कौण्डिन्याच्चाग्निवेश्याच्च ॥ १ ॥ आग्निवेश्यः सैतवात् ॥ सैतवः पाराशर्य्यात्पाराश-
र्य्यो जातूकर्ण्याज्जातूकर्ण्यो भारद्वाजाद्भारद्वाजो भारद्वाजाच्चासुरायणाच्च गौतमाच्च गौतमो भारद्वाजाद्भारद्वाजो बलाकाकौशि-
काद्बलाकाकौशिकः काषायणात्काषायणः सौकरायणात्सौकरायणस्त्रैवणेस्त्रैवणिरौपजंघनेरौपजंघनिः सायकायनात्सायका-
यनः कौशिकायनेः कौशिकायनिर्घृतकौशिकाद्घृतकौशिकः पाराशर्य्यायणात्पाराशर्य्यायणः पाराशर्य्यात्पाराशर्य्यो जातूकर्ण्या
ज्जातूकर्ण्यो भारद्वाजाद्भारद्वाजो भारद्वाजाच्चासुरायणाच्च यास्काच्चासुरायणस्त्रैवणेस्त्रैवणिरौपजंघनेरौपजंघनिरासुरेरासुरिर्भा-
रद्वाजाद्भारद्वाजऽआत्रेयात् ॥२॥ आत्रेयो माण्टेः ॥ माण्टिर्गौतमाद्गौतमो गौतमाद्गौतमो वात्स्याद्वात्स्यः शाण्डिल्याच्छाण्डि-
ल्यः कैशोर्यात्काप्यात्कैशोर्यः काप्यः कुमारहारितात्कुमारहारितो गालवाद्गालवो विदर्भीकौण्डिन्याद्विदर्भीकौण्डिन्यो वत्सु-
नपातो बाभ्रवाद्वत्सनपाद्बाभ्रवः पथः सौभरात्पन्था: सौभरोऽयास्यादांगिरसादयास्य आंगिरसऽआभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रो-
विश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीचऽआथर्वणाद्दध्यङ्ङाथर्वणोऽथर्वणो दैवादथर्वा दैवो मृत्योः प्राध्वꣳसना-
न्मृत्युः प्राध्वꣳसनः प्रध्वꣳसनात्प्रध्वꣳसनऽएकर्षेरेकर्षिर्विप्रजित्तेर्विप्रजित्तिर्व्यष्टेर्व्यष्टिः सनारोः सनारुः सनातनात्सनातनः
सनगात्सनगः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयंभु ब्रह्मणे नमः ॥ ३ ॥ वंशोक्ता ऋषयस्तृप्यन्ताम् ॥

कां० १४ प्र० ७ ब्रा० ५ मं० ३०।३१।३२।३३। अथ वꣳशः ॥ तदिदं वयं भारद्वाजीपुत्राद्भारद्वाजीपुत्रो वात्सीमा-

ण्डवीपुत्राद्वात्सीमाण्डवीपुत्रःपाराशरीपुत्रात्पाराशरीपुत्रोगार्गीपुत्राद्गार्गीपुत्रःपाराशरीकौण्डिनीपुत्रात्पाराशरीकौण्डिनी-
पुत्रोगार्गीपुत्राद्गार्गीपुत्रोगार्गीपुत्राद्गार्गीपुत्रोबाडेयीपुत्राद्बाडेयीपुत्रोमौषिकीपुत्रान्मौषिकीपुत्रोहारिकर्णीपुत्राद्धारिकर्णीपु-
त्रोभारद्वाजीपुत्राद्भारद्वाजीपुत्रःपैंगीपुत्रात्पैंगीपुत्रःशौनकीपुत्राच्छौनकीपुत्रः ॥ १ ॥ काश्यपीबालाक्यामाठरीपुत्रात् ॥
काश्यपीबालाक्यामाठरीपुत्रःकौत्सीपुत्रात्कौत्सीपुत्रोबौधीपुत्राद्बौधीपुत्रःशालंकायनीपुत्राच्छालंकायनीपुत्रोवार्षगणीपु-
त्राद्वार्षगणीपुत्रोगौतमीपुत्राद्गौतमीपुत्रआत्रेयीपुत्रादात्रेयीपुत्रोगौतमीपुत्राद्गौतमीपुत्रोवात्सीपुत्राद्वात्सीपुत्रोभारद्वाजीपु-
त्राद्भारद्वाजीपुत्रःपाराशरीपुत्रात्पाराशरीपुत्रोवार्कारुणीपुत्राद्वार्कारुणीपुत्रऽआर्तभागीपुत्रादार्तभागीपुत्रःशौंगीपुत्राच्छौंगी-
पुत्रःसांकृतीपुत्रात्सांकृतीपुत्रः ॥ २ ॥ आलंबीपुत्रात् ॥ आलंबीपुत्रआलंबायनीपुत्रादालंबायनीपुत्रोजायन्तीपुत्राज्जाय-
न्तीपुत्रोमाण्डूकायनीपुत्रान्माण्डूकायनीपुत्रोमाण्डूकीपुत्रान्माण्डूकीपुत्रःशांडिलीपुत्राच्छाण्डिलीपुत्रोराथीतरीपुत्राद्राथी-
तरीपुत्रःक्रौञ्चिकीपुत्राभ्यांक्रौञ्चिकीपुत्रौवैदभृतीपुत्राद्वैदभृतीपुत्रोभालुकीपुत्राद्भालुकीपुत्रःप्राचीनयोगीपुत्रात्प्राचीनयो-
गीपुत्रःसाञ्जीवीपुत्रात्साञ्जीवीपुत्रःकार्शकेयीपुत्रात्कार्शकेयीपुत्रः ॥ ३ ॥ प्राश्नीपुत्रादासुरिवासिनः ॥ प्राश्नीपुत्रआसुरा-
यणादासुरायणऽआसुरेरासुरिर्याज्ञवल्क्याद्याज्ञवल्क्यऽउद्दालकादुद्दालकोऽरुणादरुणउपवेशेरुपवेशिःकुश्रेःकुश्रिर्वाजश्रव-
सोवाजश्रवाजिह्वावतोबाध्योगाज्जिह्वावान्बाध्योगोऽसिताद्वार्षगणादसितोवार्षगणोहरितात्कश्यपाद्धरितःकश्यपःशि-

ल्यात्कुश्यपाच्छिल्पः कुश्यपः कुश्यपान्नैध्रुवेः कुश्यपोनैध्रुविर्वाचोवागंभिण्याअंभिण्यादित्यादादित्यानीमानिशुक्लानियुजूंषि-
पिवाजसनेयेनयाज्ञवल्क्येनाख्यायन्ते ॥ ४ ॥ वंशोक्ताऋषयस्तृप्यन्ताम् ॥ ॥ कां० १४ प्र० ३ ब्रा० २ मं० ६। इमा-
मेवगोतमभरद्वाजौ ॥ अयमेवगोतमोऽयंभरद्वाजइमावेवविश्वामित्रजमदग्नीअयमेवविश्वामित्रोयंजमदग्निरिमावेववसिष्ठक
श्यपावयमेववसिष्ठोयंकश्यपोवागेवात्रिर्वाचाह्यन्नमद्यतेत्तिर्हवैनामैतद्यदत्रिरितिसर्वस्यात्ताभवतिसर्वमस्यान्नंभवतियएवंवेद
॥ १ ॥ ॥ वंशोक्ताऋषयस्तृ० ॥ इतिमंत्रतर्पणं ॥ ॥ सावित्रींचतुरनुद्रुत्य ॥ तत्सवितु०दयात् ॥ ४ ॥ विरताः
स्मेतिप्रब्रूयुः ॥ विरताःस्म ॥ प्रवचनंपूर्ववत् ॥ मन्त्रब्राह्मणयोरध्यायादीनांपठनमुपाकर्मवत् ॥ ॥ प्रणवपूर्वकंसावि-
त्रींत्रिर्जपेत् ॥ ॐतत्सवितु०यात् ॥३॥ इषेत्वा १ कृष्णोसि २ समिधाग्निं ३ एदम् ४ अग्नेस्तनूः ५ देवस्यत्वा ६ वाचस्पतये ७
उपयामगृहीतोसि ८ देवसवितः ९ अपोदेवाः १० युञ्जानःप्रथमं ११ इशानोरुक्मः १२ मयिगृह्णामि १३ ध्रुवाक्षितिर्ध्रुवयोनिः
१४ अग्नेजातान् १५ नमस्ते १६ अश्मन्नूर्जम् १७ वाजश्च १८ स्वाद्वींत्वा १९ क्षत्रस्ययोनिः २० इमम्मे २१ तेजोसि २२
हिरण्यगर्भःसम् २३ अश्वस्तूपरः २४ शादन्दद्भिः २५ अग्निश्च २६ समास्त्वा २७ होतायक्षत् २८ समिद्धोअञ्जन् २९
देवसवितः ३० सहस्रशीर्षापुरुषः ३१ तदेव ३२ अस्याजरासः ३३ यज्जाग्रतः ३४ अपेतः ३५ ऋचम्वाचम् ३६
देवस्यत्वा ३७ देवस्यत्वा ३८ स्वाहाप्राणेभ्यः ३९ ईशावास्यम् ४० ॥ ॥ इतिचत्वारिंशन्मन्त्राध्यायादयः ॥

अथब्राह्मणाध्यायादयः ॥ व्रतमुपैष्यन् १ सवैकपालान्येवान्यतरउपदधाति २ सवैस्रुचःसम्मार्ष्टि ३ हिंकृत्यान्वाह ४
सवैप्रवरायाश्रावयति ५ ऋतवोहवैदेवेषुयज्ञभागमीषिरे ६ सवैपर्णशाखयावत्सानपाकरोति ७ मनवेहवैप्रातः ८ सयत्राह ९
॥ १ ॥ सयद्वाइतश्चेतश्चसंभरति १० उद्धृत्याहवनीयंपूर्णाहुतिंजुहोति ११ सूर्योहवाअग्निहोत्रम् १२ अथहुतेग्निहोत्र-
उपतिष्ठते १३ प्रजापतिर्हवाइदमग्रएकएवास १४ महाहविषाहवैदेवावृत्रंजघ्नः १५ ॥ २ ॥ देवयजनंजोषयंते १६
दक्षिणेनाहवनीयंप्राचीनग्रीवेकृष्णाजिनेउपस्तृणाति १७ समपदान्यनुनिक्रामति १८ शिरोवैयज्ञस्यातिथ्यंबाहूप्रायणी-
योदयनीयौ १९ तद्यएषपूर्वार्ध्योवर्षिष्ठस्थूणाराजोभवति २० उदरमेवास्यसदः २१ अभ्रिमादत्ते २२ तद्यत्रैतत्प्रवृतो-
होताहोतृषदनउपविशति २३ प्रजापतिर्वैप्रजाःससृजानोरिरिचानइवामन्यत २४ ॥ ३ ॥ प्राणोहवाअस्योपांशुः २५
चक्षुषीहवाअस्यशुक्रामंथिनौ २६ भक्षयित्वासमुपहूताःस्मइत्युक्त्वोत्तिष्ठति २७ मनोहवाअस्यसविता २८ आदित्ये-
नचरुणोदयनीयेनप्रचरति २९ प्रजापतिर्वाएषयदंशुः ३० ॥ ४ ॥ देवाश्चवाऽअसुराश्च ३१ अथस्रुवञ्चाज्यविला-
पनीञ्चादाय ३२ अरण्योरग्नीसमारोह्य ३३ केशवस्यपुरुषस्य ३४ आग्नेयोष्टाकपालःपुरोडाशोभवति ३५ ॥ ५ ॥
असद्वाइदमग्रऽआसीत् ३६ प्रजापतिरग्निरूपाण्यभ्यध्यायत् ३७ एतद्धैदेवाऽअब्रुवन् ३८ अथैनमतःखनत्येव ३९
पर्णकषायनिष्पक्वाऽएताऽआपोभवंति ४० भूयांसिहवींषिभवंति ४१ रुक्मंप्रतिमुच्यबिभर्ति ४२ वनीवाह्य-

ताग्निंबिभ्रदित्याहुः ४३ ॥ ६ ॥ गार्हपत्यंचेष्यन्पलाशशाखयाव्युदूहति ४४ अथातोनैर्ऋतीरेहरंति ४५ चितोगार्ह-
पत्योभवति ४६ आत्मन्नग्निंगृह्णीतेचेष्यन् ४७ कूर्ममुपदधाति ४८ ॥ ७ ॥ प्राणभृतउपदधाति ४९ द्वितीयांचिति-
मुपदधाति ५० तृतीयांश्चितिमुपदधाति ५१ चतुर्थींश्चितिमुपदधाति ५२ पञ्चमीश्चितिमुपदधाति ५३ नाक-
सदउपदधाति ५४ ऋतव्याउपदधाति ५५ ॥ ८ ॥ अथातः शतरुद्रियंजुहोति ५६ उपवसथीयेहन्प्रातरुदित-
ऽआदित्ये ५७ अथातोवैश्वानरञ्जुहोति ५८ अथातोराष्ट्रभृतोजुहोति ५९ अथातःपयोव्रततायै ६० ॥ ९ ॥
अग्निरेषपुरस्ताच्चीयते ६१ प्रजापतिःस्वर्गंल्लोकमजिगाꣳसत् ६२ प्राणोगायत्री ६३ प्रजापतिंविस्रस्तं ६४ तस्य-
वाएतस्याग्नेः ६५ अथहैतेरुणे ६६ ॥ १० ॥ संवत्सरोवैयज्ञःप्रजापतिः ६७ त्रिर्हवैपुरुषोजायते ६८ वाग्घवा-
एतस्याग्निहोत्रस्याग्निहोत्री ६९ उद्दालकोहारुणिः ७० उर्वशीहाप्सराः ७१ भृगुर्हवैवारुणिः ७२ पशुबंधेनयजते ७३
तद्यथाहवै ७४ ॥ ११ ॥ अयंवैयज्ञोयोयम्पवते ७५ समुद्रंवाएतेप्रतरन्ति ७६ युद्दालके ७७ दीर्घसत्रꣳहवाएतउ-
पयंति ७८ तदाहुर्यदेपदीर्घसत्री ७९ सोमोवैराजायज्ञःप्रजापतिः ८० विश्वरूपंवैत्वाष्ट्रमिंद्रोहन् ८१ इंद्रस्यवैयत्र ८२
एतस्माद्वैयज्ञात्पुरुषोजायते ८३ ॥ १२ ॥ ब्रह्मौदनम्पचति ८४ प्रजापतिर्देवेभ्योयज्ञान्व्यादिशत् ८५ प्रजापतेरक्षश्व-
यत् ८६ प्रजापतिरकामयत ८७ अथप्रातर्गौतमस्य ८८ पुरुषोहनारायणोकामयत ८९ ब्रह्मवैस्वयंभुतपोतप्यत ९० अ-

थास्मैस्मशानंकुर्वन्ति ९१ ॥ १३ ॥ देवाहवैसत्रन्निषेदुः ९२ अथातोरौहिणौजुहोति ९३ सवैतृतीयेहन् ९४ ॥ प्रवर्ग्यः॥
दृप्याहप्रजापत्याः ९५ दृप्तबालाकिर्हानूचानोगार्ग्यआस ९६ जनकोहवैदेहः ९७ जनकंᳪहवैदेहंयाज्ञवल्क्योजगाम ९८
पूर्णमदःपूर्णमिदं ९९ श्वेतकेतुर्हवाआरुणेयः १०० ॥ १४ ॥ इतिशतंब्राह्मणाध्यायादयः ॥

अथब्राह्मणप्रपाठकाः ॥ ॥ व्रतमुपैष्यन् १ चतुर्द्धाविहितोहवाऽअग्रेग्निरास २ तेवाआर्द्राᳪस्युः ३ सस्रुचोत्तरमा-
घारमाघारयिष्यन् ४ यज्ञेनवैदेवाः ५ यज्ञेनवैदेवादिवमुपोदक्रामन् ६ सवैस्रुचौव्यूहति ७ ॥ १ ॥ सयद्वाइतश्चेतश्चसं-
भरति १ वरुणोहैनद्राज्यकामआदधे २ यत्रवैप्रजापतिःप्रजाःससृजे ३ प्रजापतिर्हवाएतेनाग्रेयज्ञेनेजे ४ महाहविषाह-
वैदेवावृत्रञ्जघ्नुः ५ ॥ २ ॥ देवयजनंजोपयंते १ वाचंयच्छति २ नीडेकृष्णाजिनमास्तृणाति ३ तद्यएषपूर्वार्ध्योवर्षिष्ठा-
स्थूणाराजोभवति ४ विजामानोहैवास्यधिष्ण्याः ५ पाशंकृत्वाप्रतिमुञ्चति ६ सोत्युपयजति ७ ॥ ३ ॥ प्राणोहवाअ-
स्योपांᳪशुः १ आत्माहवाअस्याग्रयणः २ घ्नंतिवाएतद्यज्ञं ३ सवाऽअवभृथमभ्यवैति ४ तद्यत्रैतद्द्वादशाहेनव्यूढछन्दसा-
यजते ५ ॥ ४ ॥ देवाश्चवाऽअसुराश्च १ बार्हस्पत्येनचरुणाप्रचरति २ सवाऽअपःसम्भरति ३ मैत्रावरुण्यापयस्ययाप्रच-
रति ४ ॥ ५ ॥ असद्वाऽइदमग्रऽआसीत् १ प्राजापत्यञ्चरकाआलभन्ते २ प्रदीसाऽएतेम्रयोभवन्ति ३ तस्याऽएतस्याअ-
षाढांपूर्वांकरोति ४ रुक्मम्प्रतिमुच्यबिभर्ति ५ ॥ ६ ॥ गार्हपत्यंचेष्यन्पलाशशाखयाव्युदूहति १ अथदर्भस्तंबमुपदधाति २

आत्मन्नग्निं गृहीतेचेष्यन् ३ कूर्ममुपदधाति ४ ॥ ७ ॥ प्राणभृतऽउपदधाति १ अथविश्वज्योतिषमुपदधाति २ अथातो-
न्वावृतम् ३ गार्हपत्यमुपदधाति ४ ॥ ८ ॥ अथातःशतरुद्रियञ्जुहोति १ प्रत्येत्याग्निंप्रहरिष्यन् २ अथैतान्यज्ञक्रतूञ्जु-
होति ३ अथप्रातःप्रातरनुवाकमुपाकरिष्यन् ४ ॥ ९ ॥ अग्निरेवपुरस्ताच्चीयते १ अथातश्चयनस्यैव २ संवत्सरोवैप्रजाप
तिरग्निः ३ नेववाइदमग्रेसदासीन्नेवसदासीत् ४ ॥ १० ॥ संवत्सरोवैयज्ञःप्रजापतिः १ अपिहवाऽएतर्हि २ प्रजापति-
र्वैप्रजाःसृजमानोतप्यत ३ अथातःस्वाध्यायप्रशंसा ४ ॥ ११ ॥ अयंवैयज्ञोयोयम्पवते १ पुरुषंहनारायणम्प्रजापति-
रुवाच २ सोमोवैराजायज्ञःप्रजापतिः ३ प्रजापतिर्यज्ञमसृजत ४ ॥ १२ ॥ ब्रह्मौदनम्पचति १ नियुक्तेषुपशुषु २ प्रमु-
च्याश्वन्दक्षिणेनवेदिम् ३ पुरुषोहनारायणोकामयत ४ ॥ १३ ॥ देवाहवैसत्रंनिषेदुः १ सप्तत्रैताङ्होतान्वाह २ ॥ प्र. ॥
द्व्याहप्राजापत्याः १ दृप्तबालाकिर्हानूचानोगार्ग्यऽआस २ अथहैनम्भुज्युर्लाह्यायनिःपप्रच्छ ३ जनकंहवैदेहंयाज्ञवल्क्यो-
जगाम ४ भूमिरन्तरिक्षन्द्यौरिति ५ ॥ १४ ॥ इतिअष्टषष्टिप्रपाठकाः ॥ ६८ ॥

अथमन्त्रशतानि ॥ ॥ इषेत्वा १ परिते २ अग्नेनय ३ उपयामगृहीतोसिसुशर्म्मासि ४ प्रथमा । सोमस्यत्विषिः ५
परस्याऽअधि ६ अन्यावः ७ राज्ञ्यसि ८ नमोहिरण्यबाहवे ९ इन्द्रेमम् १० इयोते ११ अन्नात्परिस्रुतः १२ अश्विना-
तेजसा १३ पृथिव्यैस्वाहा १४ प्रजापतयेच १५ तेऽअस्य १६ तनूनपात्पथः १७ अग्नमिह १८ अनुनः १९ इयत्यग्रे ७५

एवमेकोनविंशतिशतानिपंचसप्तत्यधिकानि ॥ १९०७५ ॥ ॥ अथशतपथशतानि ॥ ॥ व्रतमुपैष्यन् १ तद्धदेवंपि
नुष्टि २ अथाज्यलिप्याभ्याम्पवित्राभ्यां ३ बृहच्छोचायविभ्येति ४ वसूनाङ्क्रातौस्याम ५ अग्निर्वैदेवानामद्धातमाम् ६
तद्यथायोनौरेतःसिञ्चेत् ७ तास्वैप्राश्नंतेव ८ अथवेदंपत्नीविस्रꣳसयति ९ अयम्वैयज्ञोयोयम्पवते १० अथयदस्तमेति ११
रेवतीरमध्वमिति १२ सवाऽआग्नेयोष्टाकपालःपुरोडाशोभवति १३ तद्वैसोमेनेजानाः १४ अथोत्तरेणशालाम्परिश्रय-
न्ति १५ ॥ अथोल्लिखति १६ सायावभ्रुःपिंगाक्षीसासोमक्रयणीस्यात् १७ तेदेवाः १८ प्रोक्षणीरध्वर्युरादत्ते १९ सा-
हकद्रूरुवाच २० देवाहवैयज्ञन्तन्वानाः २१ अथपार्श्वेनदासिनावाप्रयौति २२ सजुहोतिशृणोत्वग्निः समिधाहवम्महुति
२३ इयꣳहवाऽउपांꣳशुः २४ तरयासावेवध्रुवऽआयुः २५ यत्रद्यावापृथिव्यꣳशस्युते २६ सऽआज्यस्योपस्तीर्यद्विश्वरोरवद्य-
ति २७ इन्द्रोहवैषोडशी २८ तासान्द्वादशगर्भाः २९ तद्वैहस्मपुरावाजपेयेनयजते ३० अथदिशोनुवीक्षमाणोजपति ३१
सवैदीक्षते ३२ अथैतमभिपेकंकृष्णविषाणयानुविमृष्टे ३३ षडेवोत्तरेचरवः ३४ अथोऽआहुः ३५ अमावास्यायान्दीक्षते ३६
अश्वस्यपदेजुहोति ३७ अथैनान्धूपयति ३८ तमुपरिनाभिबिभर्ति ३९ अथोखान्निवपति ४० चतस्रःसीतायजुपाकृपति
४१ तम्प्रत्यञ्चंयन्तम् ४२ अपाङ्गम्भन्त्सीदेति ४३ तस्यमनोवैश्वकर्मणमिति ४४ तद्यैपामध्यमास्वयमातृण्णा ४५ एका-
दशभिरस्तुवतेति ४६ तावाऽएताः ४७ अथस्वयमातृण्णमुपदधाति ४८ अथोत्तरार्द्धेनप्राक् ४९ सयःसवैश्वानरः ५०

यास्तेऽअग्नेसूर्येरुचः ५१ नामकृत्वाथैनमुपतिष्ठते ५२ यावाऽइयम्वेदिःसमुविधस्य ५३ अयमेवाकाशोजूः ५४ सो-
यमात्मात्रेधाविहितऽएव ५५ अथवक्ष्शः ५६ अथयामेतामाहुतिञ्जुहोति ५७ अथयदनुवाक्यामनूच्य ५८ ब्रह्मचार्यसी-
त्याह ५९ सयत्पशुबंधेनयजते ६० द्वशोतिहोवाच ६१ अथयत्रस्कन्नꣳस्यात् ६२ अथयदिप्रस्तुतः ६३ सर्वेऽआश्विना-
भवन्ति ६४ प्रजापतिर्यज्ञमसृजत ६५ किम्वावपनम्महदिति ६६ अथयोस्यनिष्कःप्रतिमुक्तोभवति ६७ एतेनहींद्रोतो-
दैवापःशौनकः ६८ चतस्रःसीतायजुषाकृषति ६९ अथोत्तरतःसिकताउपकीर्णाभवन्ति ७० अथरौहिणौजुहोति ७१
तेदेवाऽअब्रुवन् ७२ तानियदाग्रह्णाति ७३ योग्नौतिष्ठन् ७४ कतमऽआत्मेति ७५ अथहैनम्मनुष्याऽऊचुः ७६ अथयामिछे-
द्भर्मेन्दुधीतेति २४ इतिसप्तसहस्राणि षड्शतचतुर्विंशत्यधिकानि ७६२४ शतपथशतानि ॥

अथांत्यकंडिकाः ॥ अथव्रतम्विसृजते १ सयस्मिन्हुतावमुँल्लोकमेति २ अथनिग्राभ्याभ्योग्रहान्विगृह्णते ३ अथगृ-
हपतिःसुब्रह्मण्यामाह्वयति ४ तावाऽएताः ५ तानिदशभवन्ति ६ ताऽएताऽअङ्गुलयः ७ मध्यमेवतृतीयाचितिः ८ सहो-
वाच ९ अथवक्ष्शः १० तस्माऽउहैतदुवाच ११ सवाऽएषऽआत्मैवयत्सौत्रामणी १२ मर्यादायाऽएवलोष्टमादत्य १३
प्राश्नीपुत्रादासुरिवासिनः १४ ॥ ॥ अथांत्यफक्किकाः ॥ एवव्रतम्विसृजेत १ परमाङ्गतिङ्गच्छतीति २ तस्माद्धोतृच-
मसात् ३ तस्मिन्त्समुपहवमिष्ट्वासमिधोभ्यादधाति ४ द्वादशवात्रयोदशवादक्षिणाभवन्ति ५ यावानग्निर्यावत्यस्यमात्राता-

वत्तद्भवति ६ तस्मात्समानुसम्बन्धनाः ७ तस्मादिमेप्राणाऽउपरिष्टादसछन्नाः ८ सम्वादेनैवर्त्विजोलोकाइति ९ ब्रह्मणो
ब्रह्मस्वयम्भुब्रह्मणेनमः १० कैशिनीरेवेमाऽअप्येतर्हिप्रजाजायन्ते ११ तस्मादिमावात्मानमभितोबाहू १२ तस्मादुहै
तज्जीवाश्चपितरश्चनसन्दृश्यन्ते १३ आदित्यानीमानिशुक्लानियजूꣳषिवाजसनेयेनयाज्ञवल्क्येनाख्यायन्ते १४ ॥ ॥
तदेतदृचाभ्युक्तन्नमृषाश्रान्तंयदवन्तिदेवाइतिनहैवैवंविदुषःकिञ्चननमृषाश्रान्तंभवति तथोहास्यैतत्सर्वन्देवाऽअवन्ति ॥
॥ १ ॥ ॐ अग्निमीळेपुरो० धातमम् ॥ १ ॥ ॐ इषेत्वोर्ज्जेत्वा० पशून्पाहि ॥ २ ॥ ॐ अग्नऽआयाहिवी० ब-
र्हिषि ॥ ३ ॥ ॐ शन्नोदेवी० स्रवन्तुनः ॥ ४ ॥ ॐ सहनोस्तुसहनोवतुसहनइदम्वीर्यवदस्तुब्रह्म ॥ इन्द्रस्तद्वेदयेनयथा-
नविद्विपामहे ॥ १ ॥ अथेमामृचंजपन्त्युभाकवीति ॥ ॐ उभाकवीयुवायोनोधर्मःपरापतत् ॥ परिसख्यस्यधर्म्मिणो
विसख्यानिविसृजामहे ॥ १ ॥ ॥ ततो गंधाद्युपचारैर्ऋषीणामुत्तरपूजनं ॥ विसर्जनं ॥ ॐ उत्तिष्ठब्रह्म० सचा ॥ १ ॥
यान्तुऋषिगणाःसर्वे० गमनायच ॥ १ ॥ ऋषीणांजलेप्लावनं ॥ ॐ समुद्रङ्गच्छस्वाहान्तरिक्षङ्गच्छस्वाहादेवꣳसवितारङ्गच्छस्वा-
हामित्रावरुणौगच्छस्वाहाहोरात्रेगच्छस्वाहाछंदाꣳसिगच्छस्वाहाद्यावापृथिवीगच्छस्वाहायज्ञङ्गच्छस्वाहासोमंगच्छस्वाहादिव्यन्नभो-
गच्छस्वाहाग्निम्वैश्वानरंगच्छस्वाहामनोमेहार्दियच्छदिवन्तेधूमोगच्छतुस्वर्ज्योतिःपृथिवीम्भस्मनापृणस्वाहा ॥ १ ॥ त्रिरात्रन्ना-
धीयीरन् ॥ क्लोमनखानामनिकृन्तनम् ॥ त्रिरात्रꣳसहोष्यविप्रतिष्ठेरन् ॥ ॥ अनेनअध्यायोत्सर्गाख्येनकर्मणाभगवा-

न्श्रीपरमेश्वरःप्रीयताम् ॥ ततअध्यायोपाकर्म ॥ ॥ इतिवृद्धाचारानुसारिणीअध्यायोत्सर्गोपाकर्मपद्धतिः ॥

अथहेमाद्रिप्रयोगः ॥ स्वस्तिश्रीमत्समस्तजगदुत्पत्तिस्थितिप्रलयकारणस्य रक्षाशिक्षाविचक्षणस्य प्रणतपारिजातस्य अशेषपराक्रमस्य श्रीविष्णोः आज्ञयाप्रवर्तमानस्य श्रीमदनंतवीर्यस्यादिनारायणस्य अचिन्त्यापरिमितशक्त्याध्रियमाणस्य महाजलौघमध्ये परिभ्रममाणानामनेककोटिब्रह्माण्डानामेकतमेऽव्यक्तमहदहङ्कारपृथिव्यप्तेजोवाय्वाकाशाद्यावरणैरावृतेऽस्मिन्महति ब्रह्माण्डखण्डयोर्मध्येआधारशक्तिश्रीमदादिवाराहदंष्ट्राग्रविराजिते कूर्मानन्तवासुकितक्षककुलिककर्कोटकपद्ममहापद्मशङ्खाद्यष्टमहानागैर्ध्रियमाणे ऐरावतपुण्डरीकवामनकुमुदाञ्जनपुष्पदन्तसार्वभौमसुप्रतीकाष्टदिग्गजप्रतिष्ठितानामतलवितलसुतलतलातलरसातलमहातलपाताललोकानामुपरिभागे भूर्लोकभुवर्लोकस्वर्लोकमहर्लोकजनोलोकतपोलोकसत्यलोकाख्यसप्तलोकानामधोभागे चक्रवालशैलमहावलयनागमध्यवर्तिनो महाकालमहाफणिराजशेषस्य सहस्रफणानां मणिमण्डलमण्डितेष्टदिग्दन्तिशुण्डोत्तम्भिते अमरावत्यशोकवतीभोगवतीसिद्धवतीगान्धर्ववतीकाञ्च्यवन्त्यलकावतीयशोवतीतिपुण्यपुरीप्रतिष्ठिते इन्द्राग्नियमनिर्ऋतिवरुणवायुकुबेरेशानाष्टदिक्पालप्रतिष्ठिते वरध्रुवाधरसोमपाप्रभञ्जनानलप्रत्यूषप्रभासाख्याष्टवसुभिर्विराजिते हरत्र्यम्बकरुद्रमृगव्याधापराजितकपालीभैरवशम्भुकपर्दिवृषाकपिबहुरूपाख्यैकादशरुद्रैःसंशोभिते रुद्रोपेन्द्रसवितृधातृत्वष्टर्यमेन्द्रेशानभगमित्रपूषाख्यद्वादशादित्यप्रकाशिते यमनियमासनप्राणायामप्र-

त्याहारधारणाध्यानसमाध्यष्टाङ्गनिरतवसिष्ठवालखिल्यविश्वामित्रदक्षकात्यायनकौण्डिण्यगौतमाङ्गिरसपाराशर्यव्यासवाल्मीकशुकशौनकभरद्वाजसनकसनन्दनसनातनसनत्कुमारनारदादिमुख्यमुनिभिःपवित्रिते लोकालोकाचलवलयिते लवणेक्षुरससुरासर्पिर्दधिक्षीरोदकयुक्तसप्तार्णवपरिवृते जम्बूप्लक्षशाल्मलिकुशक्रौञ्चशाकपुष्कराख्यसप्तद्वीपयुते इन्द्रकांस्यताम्रगभस्तिनागसौम्यगन्धर्वचारणभारतेतिनवखण्डमण्डिते सुवर्णगिरिकर्णिकोपेतमहासरोरुहाकारपञ्चाशत्कोटियोजनविस्तीर्णभूमण्डले अयोध्यामथुरामायाकाशीकाञ्च्यवन्तिकाद्वारावतीतिसप्तपुरीप्रतिष्ठिते महामुक्तिप्रदस्थले शालग्रामशम्भलनन्दिग्रामेतिग्रामत्रयविराजिते चम्पकारण्यबदरिकारण्यदण्डकारण्यार्बुदारण्यधर्मारण्यपद्मारण्यगुह्यारण्यजम्बुकारण्यविन्ध्यारण्यद्राक्षारण्यनहुषारण्यकाम्यकारण्यद्वैतारण्यनैमिषारण्यादीनांमध्ये सुमेरुनिषधकूटशुभ्रकूटश्रीकूटहेमकूटरजतकूटचित्रकूटत्रिकूटकिष्किन्धश्वेताद्रिकूटहिमविन्ध्याचलानां हरिवर्षकिम्पुरुषवर्षयोश्चदक्षिणे नवसहस्रयोजनविस्तीर्णभरतखण्डे मलयाचलसह्याचलविन्ध्याचलानामुत्तरेणस्वर्णप्रस्थचण्डप्रस्थसूक्तिकआवन्तकरमणकमहारमणकपाञ्चजन्यसिंहललङ्काऽशोकवत्यलकावतीसिद्धवतीगान्धर्ववत्यादिपुण्यपुरीविराजिते नवखण्डोपद्वीपमण्डिते दक्षिणावस्थितरेणुकाद्वयसूकरकाशीकाञ्चीकालिकालवटेश्वरकालञ्जरमहाकालेतिनवोखरयुते द्वादशज्योतिर्लिङ्गगङ्गागोदा(गौतमी)क्षिप्रायमुनासरस्वतीनर्मदातापीपयोष्णीचन्द्रभागाकावेरीमन्दाकिनीप्रवराकृष्णावेण्याभीमरथीतुङ्गभद्रामलापहाकृतमालाताम्रपर्णीविशालाक्षीवञ्जुलाचर्मण्वतीवेत्रवतीभोगावतीविशोकाकौशिकीगण्डकीवासिष्ठीप्रमदाविश्वामित्रीफल्गुनीचित्रकाश्यपीसर-

यूसर्वपापहारिणीकरतोयाप्रणीतावज्रावक्रगामिनीसुवर्णरेखाशोणाभवनाशिनीशीघ्रगाकुशवर्तिनीब्रह्मानन्दासहितनयेत्यने-
कपुण्यनदीभिर्विलसिते ब्रह्मपुत्रसिन्धुनदादिपरमपवित्रजलविराजिते हिमवन्मेरुगोवर्धनक्रौञ्चचित्रकूटहेमकूटमहेन्द्रमलय-
सह्येन्द्रकीलपारियात्राद्यनेकपर्वतसमन्विते मतङ्गमाल्यकिष्किन्धऋष्यशृङ्गेतिमहानगसमन्विते अङ्गवङ्गकलिङ्गकाश्मीर-
काम्बोजसौवीरसौराष्ट्रमहाराष्ट्रमगधनेपालकेरलचोलपाञ्चालगौडमालवमलयसिंहलद्रविडकर्नाटकलाटकरहाटवरहाट-
पानाटपाण्ड्यनिषधमागधान्ध्रदशार्णवभोजकुरुगान्धारविदर्भविदेहबाह्लीकबर्बरकैकेयकोसलविराटशूरसेनकोङ्कणकैकट-
मत्स्यमद्रपारसिकखर्जूरयावनम्लेच्छजालन्धरेति सिद्धवत्यन्यदेशविशेषभाषाभूमिपालविचित्रिते इलावृतकुरुभद्राश्वकेतु-
मालकिम्पुरुषरमणकहिरण्मयादिनववर्षाणांमध्येभरतखण्डे बकुलचम्पकपाटलाजपुन्नागजातिकरवीररसालकह्लारकेत-
क्यादिनानाविधकुसुमस्तबकविराजिते कोकन्तहिरण्यशृङ्गकुब्जार्बुदमणिकर्णीवटशालग्रामसूकरमथुरागयानिष्क्रमणलो-
हार्गलपोतस्वामिप्रभासबदरीतिचतुर्दशगुह्यविलसिते जम्बुद्वीपे कुरुक्षेत्रादिसमभूमध्यरेखायाःपश्चिमदिग्भागे कुलमे-
रोर्दक्षिणदिग्भागे विन्ध्यस्यदक्षिणदेशे श्रीशैलस्यवायव्यदेशे कृष्णावेण्योर्मध्यदेशे मत्स्यकूर्मवराहनृसिंहवामनपरशुराम-
रामकृष्णबुद्धकल्कीतिदशावताराणांमध्ये बौद्धावतारे गङ्गादिसरिद्भिःपाविते एवं नवसहस्रयोजनविस्तीर्णभारतवर्षे नि-
खिलजनपावनपरमभागवतोत्तमशौनकादिनिवासिते नैमिषारण्ये आर्यावर्तान्तर्गतब्रह्मावर्तैकदेशेसूर्यान्वयभूभृत्प्रतिष्ठिते
श्रीमन्नारायणनाभिकमलोद्भूतसकलजगत्स्रष्टुः परार्द्धद्वयजीविनो ब्रह्मणोद्वितीयेपरार्धे एकपञ्चाशत्तमेवर्षे प्रथममासेप्रथ-

सपक्षे प्रथमदिवसे अह्नोद्वितीयेयामे तृतीयेमुहूर्ते रथन्तरादिद्वात्रिंशत्कल्पानांमध्ये अष्टमेश्वेतवाराहकल्पे स्वायम्भुवादि-मन्वन्तराणांमध्ये सप्तमेवैवस्वतमन्वन्तरे कृतत्रेताद्वापरकलिसंज्ञकानांचतुर्णांयुगानांमध्येवर्तमाने अष्टाविंशतितमेकलियुगे तत्प्रथमेविभागे श्रीमन्नृपविक्रमार्कात् श्रीमन्नृपशालीवाहनाद्वायथासंख्यागमेनचान्द्रसावनसौरनाक्षत्रादिप्रकारेणागता-नांप्रभवादिषष्टिसंवत्सराणांमध्ये अमुकनाम्निसंवत्सरे उत्तरगोलावलम्बिनिश्रीमार्तण्डमण्डले अमुकर्तौ अमुकमासे अमुक-पक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकयोगे अमुककरणे अमुकराशिस्थेचन्द्रे अमुकस्थेसूर्ये अमुकस्थितेदेवगुरौ शेषेपुग्रहेपुयथायथास्थानस्थितेपुसत्सु एवंगुणविशेषणविशिष्टदेशेकालेच अमुकशर्मणो मम इहजन्मनिजन्मान्तरेवाबा-ल्ययौवनवार्धक्यावस्थासु वाक्पाणिपादपायूपस्थघ्राणरसनाचक्षुःस्पर्शनश्रोत्रमनोभिश्चरित—ज्ञाताज्ञातकामाकाममहा-पातकोपपातकादिसञ्चितानांपापानां ब्रह्महननसुरापानसुवर्णस्तेयुगरुतल्पगमनतत्संसर्गरूपमहापातकानांबुद्धिपूर्वकाणां मनोवाक्कायकृतानां बहुकालाभ्यस्तानांउपपातकानांच स्पृष्टास्पृष्टसङ्करीकरणमलिनीकरणापात्रीकरणजातिभ्रंशकरणविहि-ताकरणकर्मलोपजनितानां रसविक्रयकन्याविक्रयहयविक्रयगोविक्रयखरोष्ट्रविक्रयदासीविक्रयअजादिपशुविक्रयस्वगृहवि-क्रयनीलीविक्रयअक्रेयविक्रयपण्यविक्रयजलचरादिजन्तुविक्रयस्थलचरादिविक्रयखेचरादिविक्रयसम्भूतानां निरर्थकवृक्ष-च्छेदनऋणानपाकरणब्रह्मस्वापहरणदेवस्वापहरणराजस्वापहरणपरद्रव्यापहरणतैलादिद्रव्यापहरणफलादिहरणलोहादिहर-णनानावस्तुहरणरूपाणां ब्राह्मणनिन्दागुरुनिन्दावेदनिन्दाशास्त्रनिन्दापरनिन्दाभक्ष्यभक्षणाभोज्यभोजनाचोष्यचोषणालेह्य

लेहनापेयपानास्पृश्यस्पर्शनाश्राव्यश्रवणाहिंस्यहिंसनावन्द्यवन्दनाचिन्त्यचिन्तनायाज्ययाजनापूज्यपूजनरूपाणां मातृपितृतिरस्कारस्त्रीपुरुषप्रीतिभेदनपरस्त्रीगमनविधवागमनवेश्यागमनदासीगमनचाण्डालादिहीनजातिगमनगुदगमनरजस्वलागमनपश्वादिगमनरूपाणां कूटसाक्षित्वपैशून्यवादमिथ्यापवादम्लेच्छसम्भाषणब्रह्मद्वेषकरणब्रह्मवृत्तिहरणवृत्तिच्छेदनपरवृत्तिहरणरूपाणां मित्रवञ्चनगुरुवञ्चनस्वामिवञ्चनासत्यभाषणगर्भपातनपथितांबूलचर्वणहीनजातिसेवनपरान्नभोजनगणान्नभोजनलशुनपलाण्डुगृञ्जनभक्षणतालवृक्षफलभक्षणोच्छिष्टभक्षणमार्जारोच्छिष्टभक्षणपर्युषितान्नभक्षणरूपाणां पङ्क्तिभेदकरणभ्रूणहिंसापशुहिंसाबालहिंसाद्यनेकाहिंसोद्भूतानां शौचत्यागस्नानत्यागसन्ध्यात्यागौपासनाग्नित्यागवैश्वदेवत्यागरूपाणां निषिद्धाचरणकुग्रामवासब्रह्मद्रोहगुरुद्रोहपितृमातृद्रोहपरनिन्दात्मस्तुतिदुष्टप्रतिग्रहदुर्जनसंसर्गरूपाणां गोयानवृषभयानमहिषीयानगर्दभयानोष्ट्रयानाजयानभृत्याभरणस्वग्रामत्यागगोत्रत्यागकुलत्यागदूरस्थमन्त्रणविप्राशाभेदनावन्दिताशीर्वादग्रहणपतितसम्भाषणरूपाणां पतितजनपङ्क्तिभोजनाहःसङ्गमवृथामनोरथादिपापानां तथा—महापापोपपापाभ्यां नानायोनिषु यत्कृतम् । बालभावेन यत्पापं क्षुत्तृडर्थे च यत्कृतम् ॥ आत्मार्थे चैव यत्पापं परार्थे चैव यत्कृतम् । तीर्थेषु चैव यत्पापं गुर्ववज्ञाकृतं च यत् ॥ रागद्वेषादिजनितं कामक्रोधेन यत्कृतम् ॥ हिंसानिद्रादिजं पापं भेददृष्ट्या च यन्मया ॥ देहाभिमानजं पापं सर्वदा यन्मया कृतम् । भूतं भव्यं च यत्पापं भविष्यं चैव गौतमि ॥ शुष्कमार्द्रं च यत्पापं जानताजानता कृतम् । महल्लघु च यत्पापं तन्मे नाशय जाह्नवि ॥ ब्रह्महा मद्यपः स्तेयी तथैव गुरुतल्पगः । महापापानि चत्वारि तत्संसर्गी तु पञ्चमः ॥ अतिपातक-

मन्यच्चतन्न्यूनमुपपातकम् । गोवधोव्रात्यतास्तेयंऋणानांचानपक्रिया ॥ अनाहिताग्नितापण्यविक्रयःपरिवेदनम् । इन्धनार्थेद्रुमच्छेदःस्त्रीहिंसौषधिजीवनम् ॥ हिंसायात्राविधानंचमृतकाध्यापनंतथा । प्रथमाश्रममारभ्ययत्किंचित्किल्बिषं कृतम् ॥ कृमिकीटादिहननंयत्किंचित्प्राणिहिंसनम् । मातापित्रोरशुश्रूषातद्वाक्याकरणंतथा ॥ अपूज्यपूजनंचैवपूज्यानां चव्यतिक्रमः । अनाश्रमस्थताग्न्यादिदेवाशुश्रूषणंतथा ॥ परकार्यापहरणंपरद्रव्योपजीवनम् । ततोऽज्ञानकृतंवापिकायिकंवाचिकंतथा ॥ मानसंत्रिविधंपापंप्रायश्चित्तैरनाशितम् । तस्मादशेषपापेभ्यस्त्राहित्रैलोक्यपावनि ॥ निःपापोऽस्म्यधुनादेविप्रसादात्तवनान्यथा ॥ प्रकीर्णपातकानां एतत्कालपर्यन्तंसञ्चितानांलघुस्थूलसूक्ष्माणांचनिःशेषपरिहारार्थं दशावरान्दशापरान् आत्मनासहितान् एकविंशतिपुरुषानुद्धर्तुं ब्रह्मलोकावधि पञ्चाशत्कोटियोजनविस्तीर्णेऽस्मिन्भूमण्डले गंगावालुकाभिःसप्तर्षिमण्डलपर्यन्तंकृतराशेर्वर्षसहस्रावसाने एकैकवालुकापकर्षक्रमेण सर्वराश्यपकर्षसंमितकालपर्यन्तं ब्रह्मसायुज्यताप्राप्त्यर्थं देवऋषिपितृतृप्तिद्वाराश्रीपरमेश्वरप्रीत्यर्थं गोदास्नानमहंकरिष्ये ॥ इतिहेमाद्रिप्रयोगः ॥

अथश्राद्धपरिभाषा । तत्रमहालयश्राद्धकालः—अपरपक्षेश्राद्धंकुर्वीत । ऊर्ध्वंवाचतुर्थ्याः । शाकेनापिनापरपक्षमतिक्रामेत् । मासिमासिवोशनमितिश्रुतेः ॥ ॥ श्राद्धाधिकारिणः ॥ १ मातापित्रोरौरसःपुत्रः । उपनीतपौत्रसत्त्वेपिअनुपनीतपुत्रस्यैवाधिकारः । पुत्रश्चनजन्मतोऽधिकारीकिंतुवर्षोत्तरंपूर्णत्रिवर्षस्यकृतचूडस्यस्वधोच्चारणमात्रेऽधिकारोनवैदिकमन्त्रोच्चारणे । कृतचूडस्यतुवैदिकमन्त्रोच्चारणेपि ॥ औरसपुत्राणांबहुत्वेज्येष्ठएवाधिकारी । ज्येष्ठस्याभावेअसन्निधानेपातित्यादिनाधिकाराभावेवाज्येष्ठानुजः । यत्तुज्येष्ठासन्निधौकनिष्ठोऽधिकारी-

नतुमध्यमाइतितन्निर्मूलं ॥ २ पुत्राभावेपौत्रः । ३ पौत्राभावेप्रपौत्रः । ४ प्रपौत्राभावे दत्तकः पुत्रः । सच औध्र्वदेहिके उपनीतः । अन्यत्र दर्शमहालयादावनुपनीतः । ५ दत्तकाभावेसपत्नीपुत्रः । ६ तदभावे भर्तुःपत्नी । पत्न्याश्चभर्ता । ७ पत्न्यभावेअविभक्तस्यसोदरः । भ्रातृतत्पुत्रसत्वेकनिष्ठश्चभ्रातैव । भ्रातुरभावेतत्पुत्रः । सहोदरभ्रातृतत्पुत्राभावे असोदरोभ्राता । तदभावेअसोदरभ्रातृपुत्रः । विभक्तस्यतुदुहिता । तत्रोढानूढसमवायेऊढैव । ८ दुहितुरभावेदौहित्रः । तत्रदौहित्रभ्रातृपुत्रसत्वे विभक्तस्यदौहित्रः । अविभक्तस्यभ्रातृपुत्रः । ९ तदभावेपिता । १० पितुरभावेमाता । ११ मात्रभावेस्नुषा । १२ स्नुषाभावे स्वसा । १३ स्वसुरभावेभागिनेयः । १४ भागिनेयाभावेपितृव्यतत्पुत्रादयः-सपिण्डाः । १५ सपिण्डाभावेसोदकाः । १६ सोदकाभावेगोत्रजाः । १७ गोत्रजाभावेमातामहमातुलतत्पुत्रादयोमातृसपिण्डाः । १८ मातृसपिण्डाभावेस्वपितृष्वसृपुत्राः । १९ तदभावेस्वमातृष्वसृपुत्राः । २० तदभावेपितुःपितृष्वसृपुत्राः । २१ तदभावेपितुर्मातृष्वसृपुत्राः । २२ तदभावेपितुर्मातुलपुत्राः । २३ तदभावेमातुःपितृष्वसृपुत्राः । २४ तदभावेमातुर्मातृष्वसृपुत्राः । २५ तदभावेमातुर्मातुलपुत्राः । २६ तदभावेशिष्यः । २७ शिष्याभावेऋत्विक् । २८ ऋत्विगभावेआचार्यः । २९ तदभावेजामाताश्वशुरस्य । श्वशुरोजामातुः । ३० तदभावेसखा । ३१ सख्युरभावेयःकश्चिद्धनहारी । सचविप्रोविप्रस्य । ३२ तदभावेधर्मपुत्रइति ॥ ॥ अत्रसर्वत्राभावः असन्निधिर्नाशोवा । तत्रपत्न्यादेःसपिण्डनाधिकारेपुत्रनाशएवाभावः । सपिण्डनात्प्राक् असन्निधिरभावश्चेति । अत्रसर्वत्रमूलंनिर्णयसिंध्वादौ ॥ इतिश्राद्धाधिकारिणः ॥ ॥ **श्राद्धेपितरः । बोपदेवः**—ताताम्बात्रितयं सपत्नजननी मातामहादित्रयं सस्त्रि स्त्रीतनयादि तातजननीस्वभ्रातरः सस्त्रियः ॥ ताताम्बात्मभगिन्यपत्यधवयुक् जायापिता सद्गुरुः शिष्याप्ताः पितरो महालयविधौ तीर्थे तथा तर्पणे ॥ १ ॥ **अस्यार्थः**—तातत्रयी पितृत्रयी । अम्बात्रयी मातृत्रयी । सपत्नजननी सापत्नमाता । अत्रविशेषः । **स्मृतिदर्पणेगालवः**—अनेकामातरोयस्यश्राद्धेचापरपक्षिके ॥

अर्घ्यदानंपृथक्कुर्यात्पिण्डमेकंतुनिर्वपेदिति ॥ सापत्नमातुरेकोद्दिष्टंपार्वणंवा । उभयविधवचनात् । मातामहत्रयंसपत्नीकं । पृथग्वामातामहीत्रयं । उभयविधवचनात् । स्त्री पत्नी । तनयः पुत्रः । आदिशब्दाद्दुहिता । तातभ्राता पितृव्यः । जननीभ्राता मातुलः । स्वभ्राता स्वसोदरः । एते त्रयः सपत्नीकाः । सस्त्रियइत्यत्र तत्स्त्रियइत्यपिपाठांतरं । तदातेषां स्त्रियः । पितृव्यस्त्री । मातुलानी । स्वभ्रातृजायाचेति । तातभगिनीपितृष्वसा । मातृभगिनीमातृष्वसा ॥ आत्मभगिनीस्वस्वसा । सापत्यासधवाच । तेनसापत्यासधवाइतिप्रयोगः । एतासुसतीषुनतद्भर्त्रादेर्दानं । द्वारलोपात् । जायापिताश्वशुरः । श्वश्रूरप्यत्रोपलक्ष्यते । गुरुः । उपनीयतुयःशिष्यंवेदमध्यापयेद्गुरुरिति । शिष्यः । स्वशिल्पमिच्छन्नाहर्तुंबान्धवानामनुज्ञया । आचार्यस्यवसेदन्तेकृत्वाकालंसुनिश्चितं । आचार्यःशिक्षयेदेनंस्वगृहेदत्तभोजनमित्यन्तेवासिलक्षणं । शिष्यस्तत्तुल्योविद्यार्थीति । आप्तोहितकर्तामित्रादिः । एतेपितरःमहालयेतीर्थेतर्पणेचज्ञेयाः ॥ आब्दिकादिषुतुनमातामहाः । कर्षूसमन्वितंमुक्त्वातथाद्यंश्राद्धषोडशं । प्रत्याब्दिकंचशेषेपुपिण्डाःस्युःषडितिस्थितिरितिच्छन्दोगपरिशिष्टेकात्यायनोक्तेः । कर्षूसमन्वितंसपिण्डनं ॥ इति पितरः ॥ ॥

**श्राद्धभेदेनविश्वदेवव्यवस्थामाहशङ्खः**—इष्टिश्राद्धेक्रतुर्दक्षःसंकीर्त्यौवैश्वदेविके । नान्दीमुखेसत्यवसूकाम्येचधुरिलोचनौ । पुरूरवार्द्रवौचैवपार्वणेसमुदाहृतौ । नैमित्तिकेकामकालावेवंसर्वत्रकीर्तयेत् ॥ धूरिलोचनावितिपाठः । **आदित्यपुराणे**—अपिकन्यागतेसूर्येकाम्येचधुरिलोचनौ ॥ कन्यागतइतिकन्यासंक्रान्तिनिमित्तकेश्राद्धेइतिकेचित् । तदातुमहालयेपुरूरवार्द्रवावेव । श्रा. म. कन्यागतसूर्यंनिमित्तीकृत्यविहितेभाद्रपदापरपक्षइतिहेमाद्रिः ॥ ॥ **अथब्राह्मणनिमन्त्रणकालः**—यदहःसंपद्येततदहर्ब्राह्मणानामन्त्र्य । पूर्वेद्युर्वाइत्यवधारणा । पूर्वेद्युरेवेत्यर्थः । मैथुनप्रतिषेधान्यथानुपपत्तेः ॥ ॥ **अथविहिताब्राह्मणाः** । स्नातकान् । त्रयःस्नातकाभवन्तिविद्यास्नातकोव्रतस्नातकोविद्याव्रतस्नातकश्चेति । अयंचअपत्नीकविप्रनिमन्त्रणप्रतिषेधेप्रतिप्रसवः । एकेयतीन् । **मार्कण्डेयः**—भिक्षार्थमागतान्वापिकाले-

संयमिनोयतीन् । भोजयेत्प्रणताद्यैस्तुप्रसादोद्यतमानसइति । यतिस्तुत्रिदण्डी । एकदण्डिनांश्राद्धेनिरस्तत्वात् । इतिगदाधरभाष्यं । गृहस्थान्साधून्वा । साधूनितिविशेषणं । साधून्क्षीणदोषानित्यर्थः । **तथाचविष्णुपुराणं**—साधवःक्षीणदोषास्तुइति । **पुराणसमुच्चये**—गृहस्थाःकुलसंपन्नाःप्रख्याताःकुलगोत्रतः । स्वदारनिरताःशान्ताविज्ञेयाःपङ्क्तिपावनाइतिगदाधरभाष्यं । श्रोत्रियान् । **श्रोत्रियलक्षणमाहदेवलः**—एकशाखांसकल्पांचपड्भिरङ्गैरधीत्यच । षट्कर्मनिरतोविप्रःश्रोत्रियोनामधर्मवित् ॥ कल्पग्रहणमादरार्थम् । **तथाहि**—जन्मनाब्राह्मणोज्ञेयःसंस्कारैर्द्विजउच्यते । विद्ययायातिविप्रत्वंत्रिभिःश्रोत्रियउच्यतइतिगदाधरभाष्यं । वृद्धान् । ज्ञानतपोवयोवृद्धानित्यर्थः । अनवद्यान्स्वकर्मस्थान् । अनवद्यान् पितृमातृवंशद्वयविशुद्धान् । स्वयमपिलोकापवादरहितान् । स्वकर्मस्थान् स्वजातिविहितकर्मरतांश्चेत्यर्थः । एवंमुख्यंकल्पंदर्शयित्वा ॥ ॥ **अथानुकल्पंदर्शयति** । अभावेपिशिष्यान्स्वाचारान् । शिष्यान्ब्रह्मचारिणः । स्वाचारान्अग्निपरिचरणगुरुशुश्रूषाद्यभिरतान् । तेषांचएकान्ननिषेधेपिवाचनिकंश्राद्धभोजनम् । **तथाचव्यासः**—अनिन्द्यामन्त्रितश्राद्धेविप्रोद्याद्गुरुणोदितः । एकान्नमविरोधेनव्रतानांप्रथमाश्रमी । **अत्रिः**—ऋत्विक्पुत्रादयोह्येतेसकुल्याब्राह्मणाद्विजाः । वैश्वदेवेनियोक्तव्यायद्येतेगुणवत्तराइतिगदाधरभाष्यं । इत्यनुकल्पः ॥ **अथवर्ज्याः** । द्विर्नग्नशुक्लविक्लिधश्यावदन्तविद्धप्रजननव्याधितव्यंगिश्वित्रिकुष्ठिकुनखिवर्जइति । द्विर्नग्नःदुश्चर्मा । सचजन्मान्तरेगुरुतल्पगः अथवा—यस्यवेदश्चवेदीचविच्छिद्येतेत्रिपूरुषं । द्विर्नग्नःसतुविज्ञेयःश्राद्धकर्मणिनिंदितइति । शुक्लःअतिगौरोमण्डलकुष्ठीवा । विक्लिधोदन्तुरः । **तथाचमनुः**—यस्यनैवाधरोष्ठाभ्यांछाद्यतेदशनावलिः । विक्लिधःसतुविज्ञेयोब्राह्मणःपङ्क्तिदूषकइति । श्यावदन्तः स्वभावात्कृष्णदन्तः । विद्धप्रजननःछिन्नलिङ्गचर्मा दाक्षिणात्येप्रसिद्धः । व्याधितोव्याधियुक्तः । व्यङ्गःहीनाङ्गः अधिकाङ्गःविरुद्धाङ्गसंस्थितश्चेति । अतः कुब्जवक्रमुखहस्तपादादीनांचप्रतिषेधः । श्वित्रीश्वेतकुष्ठी कुष्ठगलिताङ्गः । कुनखीकुत्सितनखः । इति-

वर्ज्यावर्ज्यब्राह्मणाः ॥ ॥ **अथअक्षय्यतृप्तिकरागुणवत्तराब्राह्मणाः** । मन्त्राध्यायिनः । पूताः । शाखाध्यायी । षडङ्गवित् । ज्येष्ठसामगः । गायत्रीसारमात्रोपि । पञ्चाग्निः । स्नातकः । त्रिणाचिकेतः । त्रिमधुः । त्रिसुपर्णी । द्रोणपाठकः । ब्राह्मोढापुत्रः । वागीश्वरः । याज्ञिकश्च । एतेश्राद्धेकर्मणिअवश्यंनियोज्याः । एतेषांनियोजनेनपितॄणामक्षय्यतृप्तिरित्यर्थः । अभावेप्येकंवेदविदंपङ्क्तिमूर्धनिनियुंज्यात् । आसहस्रात्पङ्क्तिंपुनातीतिवचनात् । पञ्चाग्निःगार्हपत्याहवनीयदक्षिणाग्निसभ्यावसथ्याग्निमान् । त्रिणाचिकेतःयजुर्वेदभागःतद्व्रतंचतदुभयंयोऽधीतेयश्चकरोतिसोपितद्योगात्त्रिणाचिकेतः । त्रिमधुःऋग्वेदैकदेशःतदधीतेतद्व्रतंचरतियःसत्रिमधुः । त्रिसुपर्णीअध्वर्युवेदभागस्य अर्थतोग्रन्थस्याध्येता । द्रोणपाठकोधर्मशास्त्रपाठकः । वागीश्वरोविद्वान् । इति ॥ ॥ **प्रसंगाद्विशेषतस्तृप्तिकरंद्रव्यमाह** । संवत्सरंतुगव्येनपयसापायसेनवा ॥ ॥ **श्राद्धनिमन्त्रणस्यग्राह्याग्राह्यविचारः** । अनिन्द्येनामन्त्रितोनापक्रामेत् । अनिन्द्योलोकापवादरहितः । तेनश्राद्धार्थंनिमन्त्रितोविप्रोनव्यतिक्रमंकुर्यादित्यर्थः । **मनुरतिक्रमेदोषमाह**—केतितस्तुयथान्यायंहव्यकव्येद्विजोत्तमः । कथंचिदप्यतिक्रामन्पापःसूकरतांव्रजेदिति । नकेवलंब्राह्मणस्यव्यतिक्रमेदोषः । किंतुयजमानस्यापिब्राह्मणव्यतिक्रमेदोषः । **तथाहियमः**—आमन्त्र्यब्राह्मणंयस्तुयथान्यायंनपूजयेत् । अतिकृच्छ्रासुघोरासुतिर्यग्योनिषुजायतइति ॥ ॥ **श्राद्धेब्राह्मणानांसंख्याउपवेशनंच** । स्नातान्शुचीनाचांतान्प्राङ्मुखानुपवेश्यदैवेयुग्मान्यथाशक्ति ॥ स्नानमाचमनंचस्मृतिप्राप्तमेवानुवदतिनकर्मांगत्वेनेतिकर्कः । अयुग्मान्यथाशक्तिपित्र्यएकैकस्योदङ्मुखान् । अयंप्रथमःपक्षः । द्वौवादैवेत्रीन्पित्र्येइतिद्वितीयःपक्षः । एकैकमुभयत्रवेतिपक्षांतरं । मातामहानामप्येवम् । तथाचयावंतोदैवेपित्र्येचापितृभ्यःमातामहेभ्योपितावंतएव । एतदाद्येपक्षे । तंत्रंवावैश्वदेविकं । विश्वेदेवास्तंत्रेणत्रा । यएत्रपितृभ्योमातामहेभ्योपितएव । इतरपक्षद्वयेचसर्वंतंत्रेणेति । यथादैविकास्तथापितृसंबंधिनोपि । सचायमन्यःपक्षः ॥

**अथब्राह्मणनिमंत्रणं** ॥ तत्रश्राद्धदिनात्पूर्वेद्युःसायन्तनकृत्योत्तरंविहिताप्रतिषिद्धामन्त्रणीयब्राह्मण गृहमुपेत्यस्वयमुदङ्मुखउपविश्यकृतसायाशनंद्विजंप्राङ्मुखमुपवेश्य श्वःकर्तव्येआपरपक्षिकपितृपितामहप्रपितामहश्राद्धाङ्गवैश्वदेवेत्वामामन्त्रयेइत्येवंचतुःप्रभृतियथाशक्तियुग्मान्ब्राह्मणानामन्त्रयेत् । द्विजोप्यप्रतिबन्धेसति अनिन्द्येनामन्त्रितोनापक्रामेत् । सतितुप्रतिबन्धेऽपक्रमणेनदोषः । आमन्त्रितश्चामश्राद्धान्नंनप्रतिगृह्णीयात् । आमन्त्रितश्राद्धकर्त्रोर्मैथुनप्रतिषेधः । एवंमातामहप्रमातामहवृद्धप्रमातामहश्राद्धाङ्गवैश्वदेवेब्राह्मणानामन्त्रयेत् । अथप्राचीनावीतीदक्षिणाभिमुखउपविश्योदङ्मुखंद्विजमुपवेश्य श्वःकर्तव्येआपरपक्षिकपितृश्राद्धेत्वामामन्त्रये इत्येवंत्रिप्रभृतियथाशक्त्ययुग्मान् ब्राह्मणानामन्त्रयेत् । एवंपितामहश्राद्धेप्रपितामहश्राद्धेचमातामहश्राद्धे प्रमातामहश्राद्धेवृद्धप्रमातामहश्राद्धेएवमेवब्राह्मणानामन्त्रयेत् । अत्रदैवेपित्र्येचयावन्तोब्राह्मणामातामहेभ्योपितत्रतत्रतावन्तएव ॥ **एतत्संख्याकब्राह्मणासंभवे** । द्वौपितृपितामहप्रपितामहश्राद्धाङ्गदैवे । द्वौचमातामहादिश्राद्धाङ्गवैश्वदेवे । त्रयाणामपिपित्रादीनांसंबन्धिनःसाधारणांस्त्रीनामन्त्रयेत् । एकैकस्येतिविशेषणस्यास्मिन्पक्षेभगवतानुक्तत्वात् । पित्रादीनांत्रयाणांत्रयोपिविप्राःसाधारणाः मातामहानांचैवं ॥ **तत्रायंप्रयोगः** । पितृपितामहप्रपितामहश्राद्धेत्वामामन्त्रयइत्येवंत्रीन्ब्राह्मणानामन्त्रयेत् । एवमेवमातामहानां ॥ केचित्तुपितृश्राद्धेत्वामित्येकंपितामहश्राद्धेत्वामित्येकंप्रपितामहश्राद्धेत्वामित्येकंइत्येवंत्रीन्ब्राह्मणाना-

| १ प्राथमकल्पिकब्राह्मणसंख्या | |
|---|---|
| पित्रादित्रयदैवे | ८ |
| पितृस्थाने | ९ |
| पितामहस्थाने | ९ |
| प्रपितामहस्थाने | ९ |
| एवं | ३५ |
| एवंमातामहादौ | ३५ |
| सर्वैसंभूय | ७० |

| २ द्वितीयेकल्पेविप्रसंख्या | |
|---|---|
| पित्रादित्रयदैवे | ४ |
| पितृस्थाने | ३ |
| पितामहस्थाने | ३ |
| प्रपितामहस्थाने | ३ |
| एवं | १३ |
| एवं मातामहादौ | १३ |
| सर्वैसंभूय | २६ |

मन्त्रयन्ति । मातामहानांचैवं ॥ **एवमस्मिन्पक्षे[३]दशब्राह्मणाः** ॥ तत्रंवावैश्वदेविकं ॥ यावेवपितृभ्योवैश्वदेविकौब्राह्मणौमातामहेभ्योपितावेव ॥ **तत्रैवंप्रयोगः** ॥ पितृपितामहप्रपितामहमातामहप्रमातामहवृद्धप्रमातामहश्राद्धाङ्गवैश्वदेवेत्वामितिद्वावेव ॥ **अस्मिन्पक्षेऽष्टौविप्राः** ॥ एतदसंभवेयथादैविकंतत्रं । एवंपितृमातामहानांच । यएवपितृभ्योब्राह्मणामातामहेभ्योपितएवेत्यर्थः ॥ **तत्रेत्थंप्रयोगः** ॥ त्रिष्वपिब्राह्मणेषुपितृपितामहप्रपितामहमातामहप्रमातामहवृद्धप्रमातामहश्राद्धेत्वामिति ॥ **अस्मिन्पक्षेपंचब्राह्मणाः** ॥ एकैकंपित्रादिकंप्रतिएकैकविप्रपक्षेतुनायंतत्रपक्षः । असंभवात् ॥ एतदसंभवेपिपित्रादिसंबन्ध्येकोदैविकः । एकश्चदैवोमातामहादिसंबन्धी । एकःपित्रादिश्राद्धे । एकश्चमातामहादिश्राद्धे ॥ **एवंचत्वारः[६]** ॥ अत्रवैश्वदेविकतत्रपक्षेत्रयः ॥ एतस्याप्यसंभवेपितृमातामहदैवार्थएकः । एकश्चपितृमातामहार्थे ॥ **एवंद्वौ** ॥ **निमन्त्रितस्यविप्रस्यप्रतिग्रहादिनिषेधः** ॥ आमन्त्रितोवान्यदन्नंनप्रतिगृह्णीयात् । अन्यदन्नंआमान्नंसिद्धंवा । भोजनात्प्राक्भोजनोत्तरंवेत्यर्थः । **यथाहदेवलः**—पूर्वंनिमन्त्रितोन्यस्ययदिकुर्यात्प्रतिग्रहम् । भुक्ताहारोपिवाभुङ्क्तेसुकृतंतस्यनश्यति । **व्यासः**—भुंक्तेश्राद्धंतुयोन्यस्यनरोन्येननिमन्त्रितः । दैवेवाप्यथवापित्र्येसतुनिष्कृष्यतेखगैः । **यमोपि**—आमन्त्रितश्चयोविप्रोभोक्तुमन्यत्रगच्छति ।

| | |
|---|---|
| ३ तृनीयेकल्पेविप्रसंख्या<br>पित्रादित्रयदैवे २<br>पित्रादित्रयस्थाने ३<br>एवं ५<br>मातामहानामेवं ५<br>सर्वेसंभूय १० | ६ अस्मिन्पक्षे<br>पित्रादित्रयदैवे १<br>पित्रादित्रये १<br>इति द्वौ २<br>एवं मातामहादौ २<br>संभूय ४ |
| ४ दैवतंत्रेस्मिन्नेवकल्पे<br>पितृमातामहदैवे २<br>पित्रादित्रये ३<br>मातामहादित्रये ३<br>एवं समुदिता ८ | ७ अस्मिन्पक्षे<br>पित्राद्युभयदैवे १<br>पित्रादित्रये १<br>मातामहादित्रये १<br>संभूयैवं ३ |
| ५ अस्मिन्पक्षे<br>पितृमातामहदैवे २<br>पितृ३महामह३ ३<br>संभूयैवं ५ | ८ अस्मिन्पक्षे<br>पित्राद्युभयदैवे १<br>पितृमातामहत्रये १<br>संमील्य २ |

नरकाणांशतंगत्वाचांडालेष्वभिजायते इतिगदाधरदीक्षिताः । **श्राद्धेअल्पशक्तौहेमाद्रौदेवलः**—एकेनापिहिविप्रेणषट्पिण्डंश्राद्धमाचरेत् । पडर्घ्यान्दापयेत्तत्रपड्भ्योदद्यात्तथाहविः ॥ **गोभिलः**—यद्येकंभोजयेच्छ्राद्धेछन्दोगंतत्रभोजयेत् । ऋचोयजूंपिसामानित्रितयंतत्र विद्यते ॥ **चतुर्विंशतिमते**—एकस्मिन्ब्राह्मणेसर्वानाचार्यादींस्तुपूजयेत् इति ॥ **अत्रवैश्वदेवेविशेषमाहतत्रैववसिष्ठः**—यद्येकंभोजयेच्छ्राद्धेदैवंतत्रकथंभवेत् । अन्नंपात्रेसमुद्धृत्यसर्वस्यप्रकृतस्यच । देवतायतनेकृत्वाततःश्राद्धंसमाचरेत् । प्रास्येदग्नौतदन्नंतुदद्याद्वाब्रह्मचारिणेइति ॥ ॥ **अत्रैकविप्रेसाग्नेर्विशेषमाहपृथ्वीचन्द्रोदयेप्रचेताः**—एकस्मिन्ब्राह्मणेदैवेसाग्नेरग्निर्भवेत्सदा । अनग्नेःकुशमुष्टिःस्याच्छ्राद्धकर्मणिसर्वतः ॥ ॥ **सर्वथाविप्रालाभेतत्रैवहेमाद्रौसत्यव्रतः**—निधायदर्भनिचयमासनेषुसमाहितः । प्रैषानुप्रैषसंयुक्तंसर्वंश्राद्धंप्रकल्पयेत् ॥ चटश्राद्धपटकःशास्त्रार्थोयमेव । अस्यप्रयोगोग्रेव्यक्तीकृतएवेतिनात्रविस्तरःक्रियते ॥ ॥ **दर्भनियमान्प्रकृत्यकात्यायनः**—यज्ञवास्तुनिमुष्टौचस्तम्बेदर्भबटौतथा । दर्भसंख्यानविहिताविष्टरास्तरणेषुच ॥ इति ॥ ॥ **मातृश्राद्धेतुविप्रालाभेसुवासिन्योपिभोजनीयाइत्याहापरार्केवृद्धवसिष्ठः**—मातृश्राद्धेतुविप्राणामलाभेपूजयेदपि । पतिपुत्रान्विताभव्यायोषितोष्टौकुलोद्भवाइति । अष्टावितिवृद्धिश्राद्धविषयम् ॥ ॥ **श्राद्धेयजमानस्यब्राह्मणानांचनियमाः** ॥ तदहःशुचिरक्रोधनोऽत्वरितोऽप्रमत्तःसत्यवादीस्यादध्वमैथुनश्रमस्वाध्यायान्वर्जयेत् । आवाहनादिवाग्यतओपास्पर्शनात् । आमन्त्रिताश्चैवं ॥ इतिनियमाः ॥ ॥ **दैवपूर्वःपदार्थोपक्रमः** ॥ दैवपूर्वंश्राद्धं । मनुयाज्ञवल्क्याभ्यांनिमन्त्रणादिपदार्थजातंसर्वंदैवपूर्वमुक्तं । विसर्जनंतुपितृपूर्वमिति । सूत्रकारमतेदैवपूर्वंश्राद्धमितिसूत्रात्निमन्त्रणादिविसर्जनान्तंपदार्थजातमखिलंदैवपूर्वंभवति ॥ ॥ **पित्र्येअपसव्यादिधर्माः** ॥ पिण्डपितृयज्ञवदुपचारः । तेनप्राचीनावीतिता, दक्षिणाभिमुखता, वामजानुनिपातः, पितृतीर्थं, अप्रदक्षिणता, दक्षिणापवर्गता, दर्भाणांदक्षिणाग्रताचेत्यादयःपैतृकधर्माः ॥ ॥

**दैवेसव्यादिधर्माः** ॥ अर्थाद्वैश्वदेविकब्राह्मणोपचारे यज्ञोपवीतिता, उदङ्मुखता, दक्षिणजानुनिपातः, दैवतीर्थं, प्रदक्षिणता, उदगपवर्गता, दर्भाणांप्रागग्रताचेत्यादयोदैविकधर्माज्ञेयाः ॥ ॥ **दैवेपित्र्येचदर्भाःकीदृशादेयाः** ॥ पित्र्येद्विगुणादर्भाः । अर्थाद्वैश्वदेवेऋजवः ॥ ॥ **दानंकथंदेयं** ॥ पवित्रपाणिर्दद्यादासीनःसर्वत्र । सर्वत्रदैवेपित्र्येच ॥ ॥ **प्रश्नप्रतिप्रश्नविचारः** ॥ प्रश्नेषुपङ्क्तिमूर्धन्यंपृच्छतिसर्वान्वा । आद्येपक्षेसामर्थ्यात्तस्यैवप्रतिप्रश्नः । द्वितीयपक्षेसर्वेषांप्रतिप्रश्नः ॥ ॥ **अथसंबन्धाद्युच्चारणक्रमनिर्णयः** ॥ संबन्धाद्युच्चारणेक्रमविशेषनियमः **श्राद्धकाशिकायां**—संबन्धंप्रथमंब्रूयान्नामगोत्रमतःपरं ॥ रूपंततोविजानीयादेषधर्मःसनातनइति । **तत्रैव**—मृतनामसमुच्चार्यतस्यगोत्रमुदीरयेदिति । **तत्रैवबृहस्पतिः**—आसनेचार्घदानेचपिण्डदानेऽवनेजने ॥ संबन्धनामगोत्राणियथार्हमनुकीर्तयेदिति ॥ **हेमाद्रौभृगुस्तु**संबन्धाद्युच्चारणेक्रमनियममन्यथाह । गोत्रसंबन्धनामानिपितृकर्मणिकीर्तयेदिति । **तत्रैवव्यासोपि**—गोत्रसंबन्धनामानिपितॄणामनुकीर्तयन् । एकैकस्यतुविप्रस्यअर्घ्यपात्रंविनिक्षिपेदिति । अतःसंबन्धाद्युच्चारणेक्रमविशेषनियमेविकल्पः ॥ तत्रापि । गोत्राद्यस्यस्वधाकारैस्तर्पयेदनुपूर्वशइति**हेमाद्रौयोगियाज्ञवल्क्योक्तेः** । तस्यचवाजसनेयिगुरुत्वाद्वाजसनेयिभिर्योगियाज्ञवल्क्योक्तक्रमानुसारीभृग्वाद्युक्तक्रमएवगोत्राद्युच्चारणेसमाश्रयणीयइत्य**नन्तदेवाः** ॥ रामवाजपेयिढोंढुवैद्यनाथमिश्रगदाधरदीक्षितप्रभृतिभिरयमेवपक्षउररीकृतइति ॥ ॥ **गोत्रशब्दोच्चारणंतुसकारेणसमन्वितंकार्यं** । **श्राद्धकाशिकायां**—सकारेणहिवक्तव्यंगोत्रंसर्वत्रधीमता ॥ सकारःकुतपोज्ञेयस्तस्माद्यत्नेनसर्वदेति ॥ ॥ **गोत्रस्यापरिज्ञानेनिर्णयसिंधौ**—गोत्रस्यत्वपरिज्ञानेकाश्यपंगोत्रमुच्यते ॥ यस्मादाहश्रुतिःसर्वाःप्रजाः कश्यपसंभवाइति ॥ ॥ **नामोच्चारणेविशेषमाह** ॥ **हेमाद्रौबौधायनः**—शर्मान्तंब्राह्मणस्योक्तंवर्मान्तंक्षत्रियस्यतु ॥ गुप्तांतंचैव वैश्यस्यदासांतंशूद्रजन्मनइति ॥ स्त्रीणांदान्तंनामज्ञेयं । दान्तंनामस्त्रीणामितिगोभिलोक्तेः । केचिद्देवीशब्दान्तमाहुः । अन्येतुदेवीदाइति

द्वयोःसमुच्चयमाहुः ॥ ॥ **नाम्नामज्ञानेतु । आश्वलायनः** । यदिनामान्यविद्वांसस्तत्पितामहप्रपितामहेतिब्रूयादिति ॥ ॥ **वस्वादिरूपोच्चारक्रमः । श्राद्धकाशिकायां**—वसूरुद्रस्तथादित्यःपित्रादित्रितयेक्रमात् ॥ मातामहादिमात्रादित्रितयेस्मृतिमर्हतीति ॥ ॥ **नामोच्चारस्थलानि । कात्यायनः** । असावित्यपनोदइति । **काशिकायां**—आसनेऽवाहनेपाद्येअन्नदानेऽवनेजने ॥ अक्षय्येपिण्डदानेच नामगोत्रेप्रकीर्तयेदिति ॥ ॥ **अथविभक्तिविचारः** ॥ **हेमाद्रौनारायणः**—विभक्तिभिस्तुयत्किंचिद्दीयतेपितृदैवते ॥ तत्सर्वंसफलं ज्ञेयंविपरीतंनिरर्थकमिति ॥ तत्र**तर्पणेप्रथमा** । संवत्सरःसावयवस्तृप्यतामितिसूत्रात् ॥ **व्यासः**—प्रथमातर्पणेप्रोक्तासंबुद्धिमपरेजगुरिति ॥ संबुद्धिस्तुशाखान्तरपरा ॥ ॥ **काशिकायां**—आमन्त्रणे प्रतिज्ञायामक्षय्येदक्षिणाविधौ ॥ संपूर्णपृच्छासनयोःषष्ठींकुर्यात्सदैवहीति ॥ **चन्द्रिकास्मृत्यर्थसारयोश्चनारदीये**—अक्षय्यासनयोःषष्ठीद्वितीयावाहनेतथा ॥ अन्नदानेचतुर्थीस्याच्छेषाःसंबुद्धयःस्मृताइतिच ॥ ॥ **सूत्रानुगास्तु—आवाहनेद्वितीया** । विश्वान्देवानावाहयिष्यइतिपितॄनावाहयिष्यइत्यावाहनेद्वितीयानिर्देशात् ॥ **अर्घदानेसंबुद्धिः** ॥ असावेपतेर्घइत्यर्घदानेसंबुद्धिनिर्देशात् ॥ अवनेजनेपिण्डदानेपुनरवनेजनेचसंबुद्धिः । उदपात्रेणावनेजयत्यपसव्यं सव्येनवोद्धरणसामर्थ्यादसाववनेनिक्ष्वेतियजमानस्यपितृप्रभृतित्रीनिति यथावनिक्तंपिण्डान्ददात्यसावेतत्तइति अवनेज्यपूर्ववदितिचतत्तत्सूत्रेसंबुद्धिनिर्देशात् ॥ **अक्षय्योदकदानेषष्ठी** ॥ नान्दीमुखाःपितरःप्रीयतामित्याभ्युदयिकसूत्रेप्रकृतौषष्ठ्याअक्षय्योदकदानस्यविहितत्वाच्चोदकेनेहापितथैवप्राप्तेप्रथमायाविभक्तेर्निर्देशात् । तथाच**वृद्धिश्राद्धंप्रकृत्यछन्दोगपरिशिष्टेकात्यायनः**—अक्षय्योदकदानंतुअर्घदानवदिष्यते । षष्ठ्यैव नियतंकुर्यान्नचतुर्थ्याकदाचनेति । आभ्युदयिकेनान्दीमुखाःपितरःप्रीयंतामित्यक्षय्यस्थानइतिसूत्रेणप्रथमाविभक्तिविधानेनषष्ठ्यानिवेशायोगात्तस्याःप्रकृतावेवनिवेशौचित्यादिति ॥ **अन्नदानेचतुर्थी** ॥ अन्नंचासावेतत्तइत्युद्दिश्यभोजयेदितिशाङ्खायनसूत्रात् ॥ ॥ **आभ्युदयिके**

**सर्वत्रप्रथमा** ॥ नान्दीमुखाःपितरःपितामहाःप्रपितामहामातामहाःप्रमातामहावृद्धप्रमातामहाश्चप्रीयन्तामितिसूत्रेनान्दीमुखाःपितरःप्रीयन्तामित्यक्षय्यस्थानेइत्यत्रप्रथमान्तप्रयोगदर्शनादिहापितथैवप्राप्नोतितथापिपुनःप्रथमा विभक्तिप्रयोगदर्शनंसर्वत्रप्रथमान्तएवप्रयोगोयथास्यादित्येवमर्थं । **तदुक्तंसंग्रहे**—शुभायप्रथमातेनवृद्धौसंकल्पमाचरेदिति ॥ ॥ **अथसव्यापसव्यविचारः** ॥ तत्रचतुर्विधंकर्म । देवसंबन्धिदैवं । पितृसंबन्धिपित्र्यं । उभयसंबंधादुभयात्मकं । देवपितृसंबन्धरहितंलौकिकंचेति । तत्रदैवंसव्येन । उपवीतिनइतिसूत्रात् । पित्र्यमपसव्येन । पिण्डपितृयज्ञवदुपचारःपित्र्यइतिसूत्रात् । उभयात्मकमपसव्येन । विप्रतिपिद्धप्रधानाप्रधानधर्मसमवायात्प्रधानधर्मस्यबलीयस्त्वात् ॥ लौकिकंसव्येनेति । नीविबन्धश्चापसव्येन । पितृदेवत्यावैनीविरितिश्रुतेः । आयन्तुनइतिजपोप्यपसव्येन । आवाहनस्यजपान्तत्वात् । अतएवतीर्थश्राद्धादौआवाहननिवृत्तेरायंतुनइतिजपोपिनिवर्तते । गन्धपुष्पादिदानंपितृभ्यस्त्वपसव्येन । पितृसंबन्धात् । अग्नौकरणहोमस्त्वपसव्येन । पिण्डपितृयज्ञवद्धुत्वेतिसूत्रात् । अक्षय्योदकदानंचापसव्येन । तत्सूत्रस्थकर्कभाष्यात् । दक्षिणादानंपित्र्यंतदपसव्येन । **तथाच पारस्करः** । हिरण्यंविश्वेभ्योदेवेभ्योरजतंपितृभ्यइति । अपसव्यंतत्रापीतिचेति । तत्रापिपित्र्यदक्षिणादानेपीत्यर्थः । आमावाजस्येत्यनुव्रजनंप्रदक्षिणीकरणंचापसव्येन । उभयसंबन्धेनप्रधानधर्मस्यबलीयस्त्वात् । इति । **सिन्ध्वादौतु**—सूक्तस्तोत्रजपंमुक्त्वापिण्डाघ्राणंचदक्षिणां । विसर्जनंसौमनस्यमाशिषांप्रार्थनांतथा ॥ विप्रप्रदक्षिणांचैवस्वस्तिवाचनकंविना । आह्वानात्स्वागतान्तंचविनाचपरिवेषणं । पित्र्यमन्यत्प्रकर्तव्यंप्राचीनावीतिनासदेतिजमदग्निरिति ॥ ॥ **अथनीवीबन्धविचारः** । नीवीबन्धश्चपिण्डपितृयज्ञेविहितः । तथाच**तत्सूत्रं**—नीवींविस्र२स्यनमोवइत्यंजलिंकरोतीति विस्रंसनोपदेशात्पूर्वमेवनीवीमत्परिधानमितिकर्कः । पिण्डपितृयज्ञवदुपचारःपित्र्यइत्यतिदेशादापरपक्षिकादौसर्वत्रप्राप्तः ॥ सचनीवीबन्धःपित्र्येकर्मणिदक्षिणतःकार्यः । आभ्युदयिकेवामतश्चकार्यः । **तदुक्तं श्राद्धकाशिकायां**—

द्दशासंगोपनंनीवीसाचाग्रेमानुपीस्मृता । पितॄणांदक्षिणेपार्श्वेविपरीताचदैविके ॥ **वृद्धयाज्ञवल्क्यः**—दक्षिणेकटिदेशेतुतिलैःसहकुशत्रयं इति । **तथाचश्रुतिः**—दक्षिणतइवहीयंनीविरिति । एतच्छ्रुतिभाष्यकारोपि । नाभेर्दक्षिणतएवनीवीस्थानमिति । **यत्तुकातीयवचनं**—नीवीकार्यादशागुप्तिर्वामकुक्षौकुशैःसदा । पितृकर्मणिचैवोक्तावेदवेदाङ्गवेदिभिरितितदाभ्युदयिकविषयः । इतिनीवीबन्धविचारः ॥ ॥ ॥

**अथाग्नौकरणविचारः** ॥ **गदाधरभाष्ये**—सचायमग्नौकरणहोमःसाग्निनाऽवसथ्येऽग्नौकर्तव्यः । **तथाचयाज्ञवल्क्यः**—कर्मस्मार्तंविवाहाग्नौकुर्वीतप्रत्यहंगृही । दारकालाहृतेवापिश्रौतंवैतानिकाग्निषु ॥ इति ॥ स्मार्तमत्रश्राद्धं । तदङ्गभूतोग्नौकरणहोमआवसथ्येऽग्नौभवति । नचप्रकृतिविकृतिभावेनास्यश्रौतत्वं । कार्यातिदेशात् । स्वरूपातिदेशेतुअवहननफलीकरणपूर्वकचर्वादिप्रवृत्तिरपिस्यात् । कार्यातिदेशेतुपुनरितिकर्तव्यतामात्रमेवप्राप्नुयात् । अतःस्मार्तत्वादावसथ्येऽग्नावेवहोमः । आहिताग्निस्तुजुहुयाद्दक्षिणाग्नौसमाहितइतियन्मार्कण्डेयेनोक्तंतत्सर्वाधानपक्षेवेदितव्यं । आहृत्यदक्षिणाग्निंतुहोमार्थंवैप्रयत्नतः ॥ अग्न्यर्थंलौकिकंवापिजुहुयात्कर्मसिद्धयइतिवायुपुराणीयमपि औपवसथ्याहरणपक्षेवेदितव्यं । **अग्न्यभावेमनुराह**—अग्न्यभावेतुविप्रस्यपाणावेवोपपादयेत् । योह्यग्निःसद्विजोविप्रैर्मन्त्रदर्शिभिरुच्यत-इति । **छन्दोगपरिशिष्टेकात्यायनः**—पित्र्येयःपंक्तिमूर्द्धन्यस्तस्यपाणावनग्निमान् ॥ हुत्वामन्त्रवदन्येषांतूष्णींपात्रेषुनिक्षिपेदिति । तत्राग्न्यभावविचारः । **काशिकायां**—अग्न्यभावःपञ्चविधः । प्रागभावः १ प्रध्वंसाभावः २ सन्निधानाभावः ३ अधिकाराभावः ४ अत्यन्ताभाव ५ श्चेति । तत्रविवाहात्पूर्वंप्रागभावः १ तदूर्ध्वमाहितस्याग्नेःप्रमाददिनानाशेपुनराधानात्पूर्वंप्रध्वंसाभावः २ देशभ्रंशादिनाअरणिसमारोपणादौसन्निधानाभावः ३ अशुचिद्रव्यादिस्पृष्टेऽग्नौप्रायश्चित्तंविनाऽधिकाराभावः ४ नैष्ठिकब्रह्मचर्येऽग्न्यभावेनात्यंताभावः ५ तत्राग्नेःप्रागभावेऽत्यन्ताभावेचाग्न्यभावादेवाग्नौहोमाभावः । प्रध्वंसाभावाधिकाराभावयोरावश्यकविधौसांकल्पिकमेवश्राद्धं । तत्रनाग्नौकरणं । अर-

णिसमारोपणादिनासन्निधानाभावेत्वावश्यकश्राद्धेसाग्निभिरपिद्विजहस्तएवाग्नौकरणमिति। **तथाचव्यासः**—त्यक्ताग्नेःपार्वणंनास्तिनैकोद्दिष्टसपिण्डनं । अत्यक्ताग्नेस्तुपिंडोक्तिस्तस्मात्संकल्प्यभोजयेत् । आलस्येननास्तिक्यादिनावायोग्निंत्यजतितस्यैकोद्दिष्टपार्वणसपिण्डीकरणादिसर्वश्राद्धेष्वनधिकारः । अतःसंकल्प्यभोजयेत् । तद्व्यतिरिक्तस्याग्नेरसन्निधानेपिसांगपिण्डश्राद्धेऽधिकारइत्यर्थः । ततश्चहस्तेऽग्नौकरणमितिसंकल्पयेत् । सांकल्पंचयदाकुर्यान्नकुर्यात्पात्रपूरणं ॥ नावाहनंनाग्नौकरणंपिण्डांश्चैवनदापयेत् । सांकल्पंतुयदाश्राद्धंनकुर्यात्पात्रपूरणं । विकिरश्चनदातव्य इतिस्पष्टमिहोदितमिति । तस्मान्नलौकिकाग्नावितिसिद्धं । हस्तेऽग्नौकरणंकुर्यादग्नौवासाग्निकोद्विजः ॥ नपैतृयज्ञियोहोमोलौकिकेग्नौविधीयतइति ॥ ॥ **द्विजाभावे । मत्स्यपुराणे**—अग्न्यभावेतुविप्रस्यपाणौवाथजलेपिवा । अजकर्णेऽश्वकर्णेवागोष्ठेवाथशिवांतिकइति । जलेपिवेतितीर्थश्राद्धविषयं । तद्यदापांसमीपेस्याच्छ्राद्धंज्ञेयोविधिस्तदेतिकात्यायनोक्तेः । निर्जलेअजकर्णादौ ॥ ॥ **यानितु**—दैवविप्रकरेऽनग्निःकृत्वाग्नौकरणंद्विजः ॥ अपत्नीकोयदाविप्रःश्राद्धंकुर्वीतपार्वणं ॥ पित्र्यविप्रैरनुज्ञातोविश्वेदेवेषुहूयते । विधुरोदैविकेकुर्याच्छेषंपित्र्येनिवेदयेदित्यादीनिवचनानितानिशाखांतरविषयाणि । अग्नौकरणस्यापसव्यादिपित्र्यधर्मेणविधानाद्दैवेतद्धर्मानुपपत्तेः ॥ ॥ **अग्नौकरणहोमस्त्वपसव्येनैव**—पिण्डपितृयज्ञवद्धुत्वेतिसर्वातिदेशात् । तथाच**वृद्धयाज्ञवल्क्यः**—छन्दोगाजुहुयुःसव्येनापसव्येनयाजुषाइति । सव्यंतुछन्दोगपरमेवेति**सिन्धवादौ** ॥ ॥ पाणिहोमपक्षेअनुज्ञावचनेनस्तः । प्रतिकृतित्वात् । इति**गदाधरदीक्षिताः** ॥ अत्रैकेअपसव्येनाग्नौकरिष्यइतिपृच्छेदित्याहुस्तन्न । सव्येनैवतुपृष्ट्वान्नमपसव्येनहोमयेत् । पितृपंक्तिपुमूर्द्धन्यस्तस्यपाणावनग्निमानइतिपैठिनसिवचनादिति**काशिकाकाराः** ॥ पिण्डपितृयज्ञवदुपचारःपित्र्यइत्यनेनपिण्डपितृयज्ञातिदेशात्पिण्डपितृयज्ञवद्धुत्वेत्यत्रपुनःपिण्डपितृयज्ञग्रहणंपरिस्तरणादिपदार्थनिवृत्त्यर्थंद्रष्टव्यं । होममात्रस्यातिदेशः इति**कर्कगदाधरभाष्यादौ** ॥ **श्राद्धेपदार्थानुसमयकाण्डानुसमयविचारः । गदाधर-**

भाष्येश्राद्धप्रयोगेकाण्डानुसमयःपदार्थानुसमयोवेतिसंशयेतुल्यसमवायेसामान्यपूर्वमानुपूर्व्ययोगादितिपरिभाषितत्वात् श्राद्धेपित्रादिषट्त्यागा एकत्रप्रयोगेक्रियन्तेतत्रनिमन्त्रणादयःपदार्थाःकृताभवन्ति । अन्यथाएकैकस्यपित्रादेःसर्वस्यपरिसमाप्तौद्वितीयोपक्रमेक्रमभङ्गःस्यात् । प्रथमस्य विसर्जनंद्वितीयस्यामन्त्रणंआपद्येत । तथासतिआनुपूर्वीभङ्गःस्यात्तच्चनेष्टं । तस्मादेकैकपदार्थजातंसर्वेषांनिर्वाह्यद्वितीयादीन्निर्वाहयेत् । एवं-बहुभिःपदार्थैर्व्यवधानंभवतितच्चनदोषाय । नहिसजातीयैर्व्यवधानंभवति । तस्मात्सर्वेषांनिमन्त्रणादि एवमावाहनमपिआवाहनावकिरणजप-समुदायरूपं । तच्चैकोद्दिष्टेतीर्थेनित्येसांकल्पिकश्राद्धेषुआवाहननिवृत्तौत्रयमपिनिवर्तते । कात्यायनस्यपदार्थानुसमयएवाभिमतः ॥ देवावा-हनानन्तरंपित्रावाहनंकात्यायनेनैवोक्तं । किंचएकैकस्मिन्नपिआसिञ्चतीतिसर्वपात्रेषुजलप्रक्षेपावगमात् । अनन्तरंएकैकस्मिन्नेवतिलानावपती-तिविधानात् । अतःपदार्थानांक्रमानुरोधात्पदार्थानुसमयएव । तथैवनिमन्त्रणादाविति ॥ एवंअर्घेपि पदार्थानुसमयेनार्घपात्रपूरणंकुर्यात् । अर्घपात्रपूरणंतिलप्रक्षेपान्तमेकःपदार्थः । पित्रादीनांपात्राणांतुपदार्थावयवेनपूरणं ॥ तत्रअर्घपात्राणितुदेवतासंख्यान्येवनतुब्राह्मणसंख्यानि । तेनवैश्वदेविकेएकदेवतासंबंधेनएकमेवअर्घपात्रंदैवमिति । **याज्ञवल्क्योपि**—यवैरन्ववकीर्याथभाजनेसपवित्रके । शंनोदेव्यापयःक्षिप्त्वाय-वोसीतियवांस्तथेत्येकमेवपात्रंदैवमित्याह । भाजनइतिसप्तम्येकवचनम् । एवमेव**स्मृतिरत्नावल्यांमदनरत्ने**च—पित्रादिषुतुविप्रैकत्वेवि-प्रबहुत्वेप्येकैकस्यैकैकेनददातीतिवचनात्षडेवार्घपात्राणिइति ॥ इतिकर्कानुगपदार्थदीपिका ॥ ॥ **अथप्रकृतिविकृतिविचारः** । आपरप-क्षिकश्राद्धं प्रकृतिः । तत्रैवसकलधर्माम्नानात् । तदितराणिविकृतिः ॥ ॥ **प्रकृतिविकृत्योरेकतन्त्रानुष्ठानविचारः**—मातामहानामप्येवंइत्यतिदेशात्त्रींस्त्रीन्पिण्डानवनेज्यदद्यादित्यादिसूत्र**कार**प्रस्थानाच्च प्रकृतिविकृत्योरापरपक्षिकश्राद्धादावेकतन्त्रेणानुष्ठान एव-मक्षय्योदकदानेपि । पित्रादिमातामहादिसंबन्धिसर्वविप्रहस्तेष्वेकतन्त्रेणाक्षय्योदकंदद्यात् । अक्षय्योदकंदद्यादितिसूत्रेतन्त्रतायाअभावस्तत्र-

तावेतिविशेषस्यानभिहितत्वात्प्रकृतिप्राप्तायाः नान्दीमुखाः पितरः प्रीयन्तामित्यक्षय्यस्थानेइत्यनेनविकृतावाभ्युदयिकेअक्षय्योदकेतत्रतायाःप्रकृतिप्राप्तायाःसूत्रकृताभिहितत्वात्प्रकृतावपितंत्रतैवावसीयते । प्रकृतिवद्विकृतिरितिन्यायात् । **यत्तुछन्दोपरिशिष्टे**—अर्धेक्षय्योदकेचैवेतिअक्षय्योदकेतत्रताभावप्रतिपादकं**कात्यायन**वचनंतच्छन्दोगविषयं । एवंस्वधावाचनेपिसूत्रकृतातत्रतायाउक्तत्वात्स्वधावाचनमंत्रेपित्रादीनांषण्णांसंकीर्तनाद्वैकृताक्षय्योदकेचपितृशब्दस्यसपिण्डीकरणान्तसंस्कारैः पितृभावापन्नानांसर्वेषांप्रकाशनसामर्थ्याच्चनपितामहादिशब्दानांपृथगुच्चारणं । प्राकृताक्षय्योदकेतुतादृशमन्त्रपितृशब्दयोरभावात्पित्रादीन्मातामहादीनुच्चार्यदत्तंश्राद्धमक्षय्यमस्त्वितियुक्तःप्रयोगः ॥ इतिकर्मानुगपदार्थदीपिकायाम् ॥ ॥ **श्राद्धेपितृशब्दस्यऊहविचारः**—तत्रप्रकृतिभूतपितृश्राद्धेएकवचनान्तःपितृशब्दोजनकपरः । बहुवचनान्तःपितामहादिपदसमभिव्याहृतश्च । तत्रपितामहादिपदसमभिव्याहृतोबहुवचनान्तःपितृशब्दस्तुसपिण्डीकरणांतसंस्कारजन्यपितृभावापत्तिरूपः । तस्यपित्रादिषुमातामहादिषुमातृभ्रातृपितृव्यादिषुचतुल्यत्वान्नोह्यते । तेन ॐपितॄनावाहयिष्यइतिआवाहनप्रश्नःसकृदेव । उशन्तस्त्वेत्यादिमन्त्रपाठोपिसकृदेव । एवमन्यत्रापि । **अपिच**—विप्रानेकत्वेपिनप्रतिविप्रमावाहनावृत्तिः । सकृदावाहनेनैवानेकब्राह्मणाधिष्ठानेदेवताध्यासनसंभवात् । आवाहनादूर्ध्वंतुप्रतिब्राह्मणंदेवताध्यासनादुपाधिभेदेनदेवताभेदात्संनिपत्योपकारकमर्घ्यादिकंप्रतिविप्रमावर्तनीयं । विश्वेदेवाःशृणुतेममित्यादिमन्त्रजपस्तुआवाहनोत्तरकालेपिक्रियमाणोनावर्तते । सकृज्जपेनैवेत्येत**त्जपसाध्यादिष्टसिद्धेः** ॥ एवंपित्रर्घपात्रपूरणेतिलप्रक्षेपणेतिलोसीतिमन्त्रेस्वाहाकारान्तएवमन्त्रःनस्वधापदोहः । प्रकृतित्वात् । प्रकृतत्वसमवेतार्थत्वेनमन्त्रस्यविकृतावपिनोहः । अथवाम्नानसामर्थ्यादेवसर्वत्रस्वाहाकारान्तएवमन्त्रः यथाकर्मापवर्गेसमिदाधानादौइति एवंपित्र्यपात्रालंभेपृथिवीतिमन्त्रेनस्वधापदोहः । इति**कर्मानुगपदार्थदीपिकायाम् । श्राद्धदिनेनित्यकर्मनिर्वर्तनव्यवस्था ॥ श्राद्धकाशिकायांवृद्धयाज्ञवल्क्यः**—क्षयेहनिसमासाद्यसन्नात्वा-

विधिपूर्वकम् । स्नानंसंध्यांप्रकुर्वीतनित्यकर्मनकारयेत् ॥ जपंहोमंतथादानंतर्पणंदेवतार्चनम् । क्षयेहनिसमासाद्यनकुर्यात्पूर्वमेवहि ॥ सामगाया-
जुषाःपूर्वंबह्वृचाश्चतथान्तिमे । नित्यकर्माणिकुर्वीतश्राद्धेकर्मणिसर्वदा ॥ अतोवाक्यार्थव्यवस्थयासामयजुःशाखिनांपूर्वंनित्यकर्म । बह्वृचानांप-
श्चादितिव्यवस्था ॥ ॥ **श्राद्धेपिण्डप्राधान्यं** ॥ अपरपक्षेश्राद्धंकुर्वीत । श्राद्धमितिकर्मणोनामधेयंद्रव्यगुणादावप्रसिद्धेः । तच्चसमुदाय-
स्यसंनिधानाविशेषात्राजसूयवत् । स्मृतेश्चश्राद्धमनेनभुक्तमिति । पिण्डदानप्राधान्येहिभुज्यर्थानुपपत्तिः । कार्यत्वाविशेषाच्च । तस्मात्समु-
दायनामधेयमिति । एवंप्राप्तउच्यते । पिण्डदानस्यैवश्राद्धमितिनामधेयं प्रवृत्तेस्तादर्थ्यात् । तत्कुतः । **स्मृतेः** । अपिनःसकुलेभूयाद्योनोद-
द्यात्त्रयोदशीम् । पायसंमधुसर्पिर्भ्यांवर्षासुचमघासुचेतिप्रार्थनापिण्डदानविषयैपा । तत्रहितेषांदेवतात्वमसावेतत्तेन्नमितिमन्त्रवर्णाल्लिङ्गाच्च । पि-
ण्डपितृयज्ञवदुपचारइतिवचनात्तत्प्राप्तेः । नभोजनस्यतदर्थता । तस्यसाक्षाद्ब्राह्मणाभिसंबन्धात् । पित्रर्थत्वेचप्रमाणाभावात् । **स्मृत्यन्तराच्च** ।
सहपिण्डक्रियायांतुकृतायामस्यधर्मतः । अनयैवावृताकार्यंपिण्डनिर्वपणंसुतैरितिपिण्डनिर्वपणस्यैवेतिकर्तव्यतांदर्शयति नब्राह्मणभोजनादेः ।
तथाच**स्मृत्यन्तरेप्युक्तम्**—सएवदद्याद्द्वौपिण्डौपित्रेमातामहायचेति**सूत्रकार**प्रस्थानाच्च । मासिमासिवोशनमितिश्रुतेः । अन्वर्थसं-
ज्ञाकरणाच्चैकोद्दिष्टमिति । सर्वप्राधान्येहिनैकउद्दिश्यते । आभ्युदयेचतथादर्शनात् । पितॄणांरूपमास्थायदेवाअन्नमदन्तिततदिति । नचपितॄणा-
मदनंसंभवति । तस्मादनेनप्रकारेणपितृरूपेणदेवानांदेवतात्वमुच्यते । तच्चदेवतात्वंपिण्डदानकालेसंभवतिनभोजनइत्युक्तम् । **तथा**—अनि-
ष्ट्वातुपितॄन्श्राद्धेनकुर्यात्कर्मवैदिकमिति । दर्शयतिचयथाकथंचिद्ब्राह्मणभोजनम् यद्येकंभोजयेच्छ्राद्धेइति, एकएवयदाविप्रइतिच । ब्राह्मणभोज-
नासंभवेपिगयादौपिण्डदानमात्रदर्शनात् । तत्**द्वैपायनो**पिदर्शयतिपिण्डदानकालेपितॄणांहस्तोत्थानम् । भीष्मस्यददतःपिण्डान्हस्तोत्थानंतु
शन्तनोरिति । यत्पुनरुक्तंसंनिधानाविशेषादिति तन्नैवम् । विशेषावगमात् । अवगम्यतेहिविशेषःप्राक्प्रतिपादितवाक्येभ्यःसकाशात् । तस्मा-

त्पिण्डदानस्यप्राधान्यं तदङ्गमितरत् । यच्चोक्तंश्राद्धमनेनभुक्तमितितदुपचारवृत्त्याश्राद्धार्थेऽन्नेभुजिर्वर्ततइति । यद्यप्युक्तंकार्यत्वाविशेषात् तत्रापि करोतिरविरुद्धः । प्रधानंतुकार्यमङ्गानिचेति । यदप्युच्यतेपिण्डपितृयज्ञवदुपचारःपित्र्येइति तदपिपितृनिमित्तयागुणवृत्त्याब्राह्मणाव्यपदिश्यन्ते तस्मादसमुदायशब्दत्वम् । चिन्तायाःप्रयोजनंपिण्डदानाकरणेऽभ्यावृत्तिः ॥ ॥ **श्राद्धेप्रधानाङ्गयोर्विस्मरणेप्रायश्चित्तपूर्वंपुनःकर्तव्याकर्तव्यकरणाकरणविचारः** । श्राद्धेपिण्डदानंप्रधानं । अन्यत्सर्वंनिमन्त्रणादिविसर्जनान्तंतदङ्गं । तेनयदानिमन्त्रणादिविसर्जनान्तं सर्वंकृतंपिण्डदानंतुनकृतं तदाआदितःसकलंश्राद्धंपुनःकार्यं । यदातुपिण्डदानंकृतंअङ्गंतुनकृतंतदासमाप्तेःप्राक्अनादिष्टहोमपूर्वकंविष्णुस्मरणपूर्वकंवातदङ्गमेवकार्यं । यदातुप्राक्समाप्तेःपिण्डदानंइदंतदङ्गंवामयानकृतमितिज्ञातंतदाऽनादिष्टहोमंहरिस्मरणंवाकृत्वापिण्डदानंतदङ्गंवाकार्यं । समाप्तेरूर्ध्वमङ्गाकरणेज्ञातेतुविष्णुस्मरणमेवप्रायश्चित्तं इतिकर्कानुगपदार्थदीपिका ॥ ॥ **अथपिण्डदानमात्रविचारः** ॥ **श्राद्धशब्दाभिधेयमाह छन्दोगपरिशिष्टेकात्यायनः**—प्राधान्यंपिण्डदानस्यकेचिदाहुर्मनीषिणः ॥ गयादौपिण्डमात्रस्यदीयमानस्यदर्शनात् ॥ भोजनस्यप्रधानत्वंवदन्त्यन्येमहर्षयः ॥ ब्राह्मणानांपरीक्षायांमहायत्नप्रदर्शनात् ॥ प्राधान्यमुभयोर्यस्मात्तस्मादेषुसमुच्चयइति । अत्रकेचित्पदेन वाजसनेयिनोयाजुषाएवोच्यन्ते । नपुनस्तैत्तिरीयाः । अथैतन्मनुःश्राद्धशब्दंकर्मप्रोवाचपितरोदेवताःब्राह्मणस्त्वाहवनीयार्थइत्यादिके**नापस्तंबसूत्रेण**तेषांभोजनस्यैवप्राधान्याभिधानात् । अन्यपदेनबह्वृचाः । छन्दोगानांतुभोजनपिण्डदानयोरुभयोःसमुच्चयःप्रधानमिति । इयमेवव्यवस्थाऽभिहिता **काशिकायां धर्मप्रदीपे**—यजुषांपिण्डदानंचबह्वृचांद्विजतर्पणं । श्राद्धशब्दाभिधेयंस्यादुभयंसामवेदिनामिति । विस्तरतस्तुपिण्डदानप्राधान्यं**कर्कभाष्ये**निरूपितंतत्प्रागेवोक्तमस्ति । एवंचकातीयानांश्राद्धशब्दाभिधेयेपिण्डदानमेवप्रधानं । अन्यत्सर्वंनिमन्त्रणादिविसर्जनान्तंतदङ्गमेव । तच्चसाङ्गोपाङ्गमनुष्ठेयमयंमुख्यःकल्पः । साङ्गोपाङ्गकर्तुमशक्तौतु । यथाश्रौतेकर्मणिसकलेष्टिंकर्तुमशक्तौआज्यंसंस्कृत्यचतु-

गृहीतेनाज्येनयाज्यापुरोनुवाक्याभ्यांप्रधानदेवतामात्रंहूयतेतथाऽत्रप्रधानंपिण्डदानमात्रंकार्यं । **तथाचोक्तंदेवयाज्ञिकभाष्ये**—इष्ट्याहुत्योर्विकल्पोऽत्रशक्ताशक्तव्यवस्थयेति । तथात्रसर्वश्राद्धाशक्तौकेवलंपिण्डदानमाह**देवलः**—पिण्डमात्रंप्रदातव्यमभावेद्रव्यविप्रयोः । श्राद्धाऽहनितुसंप्राप्तेभवेन्निरशनोपिवेति । तत्रपिण्डदानस्यप्राधान्यात्पिण्डदानाकरणेपुनरावृत्तिः । अङ्गाकरणेतुन । प्रधानस्याक्रियायत्रसाङ्गंतत्क्रियतेपुनरितिछन्दोगपरिशिष्टेकात्यायनोक्तेः ॥ ॥ **अथपिण्डद्रव्याणि** । **देवीपुराणे**—सक्तुभिःपिण्डदानंचसंयावैःपायसेनवा ॥ कर्तव्यमृषिभिःप्रोक्तंपिण्याकेनैङ्गुदेनवा ॥ गुडेनवेतिपाठः । संयावोगोधूमविकारः । पिण्याकस्तिलकल्कः । ऐङ्गुदंतापसतरुफलमिति ॥ ॥ **अथश्राद्धदिनेसाग्निकनिरग्निकवैश्वदेवनिर्णयः** ॥ **निर्णयसिंधौ**—कातीयानांतुश्रौतस्मार्ताग्निमतामादावेकेनैवपाकेनेतिकर्कः । अन्येषामंतइति । तथाच**यज्ञपार्श्वपरिशिष्टे**—यदाश्राद्धंपितृभ्यश्चदातुमिच्छत्यनग्निमान् । वैश्वदेवंततःकुर्यान्निवृत्तेश्राद्धकर्मणि ॥१॥ अकृत्वापैतृकंश्राद्धंवैश्वदेवंकरोतियः ॥ अकृतंतद्भवेच्छ्राद्धंपितॄणांनोपतिष्ठते ॥२॥ वैश्वदेवंपुराकृत्वाश्राद्धंतच्छेषपाकतः ॥ कुर्यादेवाग्निमान्विप्रोह्येषधर्मःसनातनः ॥३॥ इति ॥ ॥ एवंवृद्धिश्राद्धेपिश्रौतस्मार्ताग्निमतामादौअन्येषामंते । **हेमाद्रिणापि**—शेषमन्नमनुज्ञाप्यवैश्वदेवक्रियांततः । श्राद्धानिश्राद्धशेषेणवैश्वदेवंसमाचरेदितिचतुर्विंशतिमतान्नांदीश्राद्धेप्यंतेवैश्वदेवउक्तः । एवंबह्वृचानामपिवृत्त्यालोचनात्नांदीश्राद्धेऽतेवैश्वदेवः । **यत्तु**—आदौवृद्धौक्षयेचांतेमध्येश्राद्धेतुपार्वणं ॥ एकोद्दिष्टेनिवृत्तेतुवैश्वदेवोविधीयत इति **आशार्कै**शांखायनपरिशिष्टंतद्वेषांपरिशिष्टंतद्विषयमन्यविषयंवाज्ञेयं । कामदेवदीक्षितैरथातोधर्मजिज्ञासेतिपरिशिष्टभाष्येआदौवृद्धावितिवाक्यस्यस्वशाखायामनाम्नातत्वाच्छाखांतरविषयमित्युक्तं । **वसिष्ठोपि**—वैश्वदेवमकृत्वैवश्राद्धंकुर्यादनग्निकः । लौकिकाग्नौहुतेशेषःपितॄणांनोपतिष्ठतइति ॥ एतेननिरग्निककाण्वानांश्राद्धात्प्राग्वैश्वदेवाचरणंनिर्मूलं ॥ ॥ इतिसाग्निकनिरग्निकवैश्वदेवकालनिर्णयः ॥ ॥ सचवैश्वदेवोनिर्णेजनांतः । ततोनित्यश्राद्धं । ततःसाग्निकश्चेद्ब्रह्मयज्ञः । तदनंतरंहंतकारः ।

**ततोदेवतानैवेद्यं** । नैवद्यंवैश्वदेवशेषेणपृथक्पाकेनवाहंतकारानन्तरंकुर्यात् । **तथाचपरिशिष्टं**—तेमनंवैश्वदेवहुतशेषेणपृथगन्नेनवा-कुर्यान्नास्यशेषेणवैश्वदेवंकुर्यादिति । एवंनैवेद्यं । **यत्तुव्यासवचनं**—नैवेद्यार्थंपृथग्भांडेस्नातापत्नीपचेदथ । वैश्वदेवार्थमन्यस्मिन्व्यंजनानिपृथक्पृथक् ॥ एकस्मिन्वाप्यशक्तश्चेत्पूर्वंविष्णुनिवदनं ॥ वैश्वदेवंततःशिष्टान्नासस्यवचनंयथेति । तच्छाखांतरविषयं । अतःकात्यायनमतानुसारिणांपुरातनाचार्यैःस्वशाखासंप्रदायिभिरुक्तेःप्राबल्याद्धंतकारानतरंनैवेद्यंकुर्यादितिरामाग्निहोत्रिविरचितश्राद्धकल्पे । ततोगोग्रासादि । ततः-अतिथिभोजनं । ततःस्वयंभुंजीत । इतिप्रसंगेनदेवतानैवेद्यंनिर्णयश्चसमाप्तः ॥ ॥ अन्येविपयास्त्वन्यतोज्ञेयाः । विस्तरभियानेहोच्यंतइति । इतिश्राद्धपरिभापासमाप्ता ॥ ॥

अथ श्राद्धप्रयोगः ॥ आचमनं । प्राणायामः । पवित्रधारणं । ॐपवित्रेस्थोवैष्णव्यौ० देशकालकीर्तनं ॥ अपसव्यं अमुकसगोत्राणांअस्मत्पितृपितामहप्रपितामहानांअमुकामुकशर्मणांवसुरुद्रादित्यस्वरूपाणां । गोत्राणांअस्मन्मातृपितामहीप्रपितामहीनांअमुक्यमुकीदानांवसुरुद्रा० । गोत्रायाःअस्मत्सापत्नमातुःअमुकीदायाःवसुरूपायाः । द्वितीयगोत्राणांअस्मन्मातामहप्रमातामहवृद्धप्रमातामहानांअ०शर्मणांवसुरु० । अस्मन्मातामहीप्रमातामहीवृद्धप्रमातामहीनांअ०-दानांवसुरु० । गोत्रायाःअस्मत्पत्न्याःअमुकीदेव्याःवसुरूपायाः । गोत्रस्यअस्मत्तनयस्यअ०शर्मणःवसुरूपस्य । गोत्रायाः अस्मद्दुहितुःअमुकीदायाःवसुरूपायाः । गोत्रस्यअस्मत्पितृव्यस्यअ०शर्मणःसपत्नीकस्यससुतस्यवसु० । गोत्रस्यअस्मन्मातुलस्य अ०शर्मणःसपत्नी०वसु० । गोत्रस्यअस्मद्भ्रातुःअ०सपत्नीकस्यससुतस्यवसु० । गोत्रायाःअस्मत्पितृभगिन्याःअमुकीदायाःस-

मर्तृकायाःवसु० । गोत्रायाःअस्मन्मातृभगिन्याःअमुकीदायाःसभर्तृकायाःससुता०वसु० । गोत्रायाअस्मद्भगिन्याःअमुकीदायाःसम०वसु०। गोत्रस्यअस्मच्छ्वशुरस्यअ०शर्मणःवसु० । गोत्रायाःअस्मच्छ्वश्र्वाःअमु०वसु० । गोत्रस्यअस्मद्गुरोःअ०शर्मणःवसु०। गोत्रस्यअस्मच्छिष्यस्यअमु०वसु०। गोत्रस्य अस्मदाप्तस्यअ०शर्मणःसप०वसुरूपस्यकन्यागतेसवितरिसकृन्महालयापरपक्षिकश्राद्धंपार्वणैकोद्दिष्टविधिनासद्यःकरिष्ये । कुरुष्व । सव्यं । तदङ्गब्राह्मणनिमन्त्रणंकरिष्ये । कुरुष्व ॥ धूरिलोचनसंज्ञकानांविश्वेषांदेवानांस्थानेत्वामहमामन्त्रये । आमन्त्रितोस्मि ॥ अपसव्यं । गोत्राणांअमु०शर्मणां ये । आमन्त्रितोस्मि ॥ सव्यं ॥ ब्राह्मणान्प्रदक्षिणीकृत्यप्रार्थयेत् ॥ समस्तसंपत्समवाप्तिहेतवःसमुत्थितापत्कुलधूमकेतवः ॥ अपारसंसारसमुद्रसेतवःपुनन्तुमांब्राह्मणपादपांसवः ॥ आपद्घनध्वांतसहस्रभानवःसमीहितार्थार्पणकामधेनवः ॥ समस्ततीर्थांबुपवित्रमूर्तयोरक्षंतुमांब्राह्मणपादपांसवः ॥ विप्रौघदर्शनात्क्षिप्रंक्षीयन्तेपापराशयः ॥ वन्दनान्मङ्गलावाप्तिरर्चनादच्युतंपदम् ॥ आधिव्याधिहरंनृणांदुःखदारिद्र्यनाशनम् । श्रीपुष्टिकीर्तिदंवन्देविप्रश्रीपादपङ्कजम् ॥ अक्रोधनैःशौचपरैःसततंब्रह्मचारिभिः ॥ भवितव्यंभवद्भिश्चमयाचश्राद्धकारिणा ॥ सर्वायासविनिर्मुक्तैःकामक्रोधविवर्जितैः ॥ भवद्भिःपितृकार्येचसंपाद्यंमेप्रसीदत ॥ आब्रह्मन्नितिमन्त्रजपोब्राह्मणानां आब्रह्मन्०[1] ॥ १ ॥ कल्पताम् ॥ श्राद्धांगभूतं मंडलाद्यर्चनंकरिष्ये[2] ॥ कुरुष्व ॥

१ रामवाजेपयिपद्धतौहेमाद्रौ—आमन्त्रितोजपेद्दोग्ध्रीमासीनस्तुनिपगिणः । कथानइतिभुक्त्वैवश्राद्धंभुक्त्वानलिप्यते । २ ढोंढुमिश्रपद्धतौरामवाजपेयिपद्धतौच—मंडलंबाहुमात्रंचकुर्याद्वैश्राद्धकर्मणि । यजुर्वेदाश्रिताशाखाकात्यायनवचोयथा ॥ तत्रैवमत्स्यपुराणे—गोमयेनोपलिप्तायांगोमूत्रेणतुमंडलं । अक्षताभिःसपुष्पाभिस्तदभ्यर्च्यापसव्यवत् ॥ तत्रैव—गृहस्यचोत्तरेभागेकुर्याद्गोमयमंडलम् । बहिरंगणेमंडलकरणमितिरामवाजपेयिपद्धतौ ॥

मंडलस्थदेवताभ्योनमः चंदनंअक्षताःपुष्पाणि। मंडलदेवताभ्योनमोनमः ॥ तिष्ठन्सन्पृच्छेत्तिष्ठंतं ॥ देवाःस्वागतं ॥ सुस्वागतं ॥ ब्राह्मणानुपवेश्यस्वयंचोपविश्य । देवाःइदंवःपाद्यं ॥ सुपाद्यं ॥ ॐशंनोदेवीरभिष्टयआपोभवंतुपीतये ॥ शंयोरभिस्रवंतुनः ॥ देवपादयोः ॥ गंधाः । सुगंधाः । अक्षताः । स्वक्षताः । पुष्पं । सुपुष्पं । ॐसहस्रशीर्षापुरुषः सहस्राक्षःसहस्रपात् ॥ सभूमिंसर्वतस्पृत्वात्यतिष्ठद्दशांगुलम् ॥ धूरिलोचनसंज्ञकाविश्वेदेवाः एषवःपादार्घःसंपद्यतां । अस्तुपादार्घः ॥ अपसव्यं । पितरःस्वागतं । सुस्वागतं । पितरःइदंवःपाद्यं । सुपाद्यं । शंनोदेवीरभि० । पितृपादयोःगंधाः । सुगंधाः ॥ अक्षताः । स्वक्षताः ॥ पुष्पं । सुपुष्पं ॥ पितृभ्यः स्वधायिभ्यः स्वधानमः पितामहेभ्यः स्वधायिभ्यः स्वधानमः प्रपितामहेभ्यः स्वधायिभ्यः स्वधानमः ॥ अत्रपितरोमादयध्वंयथाभागमावृषायध्वम् अमीमदंतपितरोयथाभागमावृषायिषत ॥ गोत्राःअस्मत्पितृपितामहप्रपितामहाःअमुकामुकशर्माणःवसुरुद्रादित्यस्वरूपाःएषवःपादार्घःसंपद्यतां ॥ अस्तुपादार्घः ॥ गोत्राःअस्मन्मातृपितामहीप्रपितामह्यःअमुक्यमुकीदाःवसुरुद्रादित्यस्वरूपाःएष० ॥ गोत्रेअस्मत्सापत्नमातःअमुकीदेवसुरूपेएष० ॥ द्वितीयगोत्राःअस्मन्मातामहप्रमातामहवृद्धप्रमातामहाःशर्मणःवसु०पाःएष० ॥ गोत्राःअस्मन्मातामहीप्रमातामहीवृद्धप्रमातामह्यःअ०दाःवसु०पाःएष० ॥

---

१ श्राद्धगणपतौ—श्राद्धेयज्ञेविवाहेचदीक्षायामागतेगुरौ । तिष्ठन्प्रक्षालनंकुर्यान्निराशा.पितरोगता. ॥ पादप्रक्षालनंकुर्यान्नतिष्ठंस्तुकदाचन । इति ॥ २ श्राद्धकाशिकाया—आसनावाहनेपाद्येअन्नदानेतिलोदके । अक्षय्येपिंडदानेचनामगोत्रप्रकीर्तयेत् ॥ मनु.—बर्हिर्मंडलभूमौतुगोत्रमुच्चरतेयदि । अकृतंतद्भवेदर्घंपितॄणांनोपतिष्ठति ॥ इति ॥ अत्र व्यवस्था—स्वागतार्थेगोत्रादिनिषेधः । पादार्घेतुविधिः इति ॥

गोत्रेअस्मत्पत्निअ०दे०वसु०एष० ॥ गोत्रअस्मत्तनयअमु०वसु०एष० ॥ गोत्रेअस्मद्दुहितःअमुकीदेवसु०एष० ॥ गोत्रअस्मत्पितृव्यअमुकवसु०एष०॥ गोत्रअस्मन्मातुलअमु०वसु०एष०॥ गोत्रअस्मद्भ्रातःअमु०वसु०एष० ॥ गोत्रेअस्मत्पितृभगिनिअमु०वसु०एष०॥गोत्रेअस्मन्मातृभगिनिअमु०वसु०एष०॥गोत्रेअस्मदात्मभगिनिअमु०वसु०एष०॥गोत्रअस्मच्छ्वशुरअमु०वसु०एष०॥गोत्रेअस्मच्छ्वश्रूःअमु०वसु०एष०॥ गोत्रअस्मद्गुरोअमु०वसु०एष० ॥ गोत्रअस्मच्छिष्यअमु०वसु०एष०॥गोत्रअस्मदासअमु०वसु०एष० ॥ सव्यं ॥ पूर्वाभिमुखोभूत्वावंदनम् ॥ आपःशिवाःशिवतमाःशांताःशांतमास्तास्तेकृण्वंतुभेषजं ॥ पवित्रत्यागः ॥ तानाचमय्यस्वयंचाचम्य ॥ आचमनंप्राणायामःपवित्रधारणं ॥ धूरिलोचनसंज्ञकाविश्वेदेवाःॐभूर्भुवःस्वःइदमासनमास्यतां । आसीनाःस्मः ॥ समाध्वं । सुसमास्महे ॥ अपसव्यं ॥ पितरः ॐभूर्भुवःस्वः । इदमासनमास्यतां ॥ आसीनाःस्मः ॥ समाध्वं । सुसमास्महे ॥ सव्यं ॥ तिलोदककरणंपुनंतुमेतिनवभिः ॥ ॐपुनंतुमापितरः सोम्यासः पुनं-

१ ढोंढुपद्धतौ—श्राद्धारंभेवसानेचपादशौचेतथार्चने ॥ विकिरेपिण्डदानेचषट्सुचाचमनंस्मृतम् ॥ तथा—मंडलात्पूर्वतोदेवा पितृविप्रास्तथोत्तरे ॥ दाताकरोतिचैशानेआचमनंयथाविधि ॥ इति ॥ विपरीतंतुतत्तोयंश्वानमूत्रसमंभवेत् ॥ इति ॥ तत्रैवापस्तबः—विप्रपादोदकस्थानेकुर्यादाचमनंद्विज' ॥ रुधिरंतद्भवेत्तोयनिराशा.पितरोगताः ॥ इति ॥ श्राद्धगणपतौ—कर्तुराचमनात्पूर्वविप्रस्याचमनंस्मृतं । श्राद्धगणपतौ—संकल्पादौचयेदर्भास्त्याज्याविप्राघ्रिक्षालने ॥ २ श्राद्धगणपतौ कात्यायन.—सव्येनैवासनंदत्वादक्षिणेदक्षिणकरम् ॥ ॐभूर्भुव'स्वरित्युक्त्वाआसनेषूपवेशयेत् इति । ३ अर्थप्रसंख्ययाद्रव्योपकल्पनंइतिकात्यायनवचनात् कर्मपात्रादिकल्पनेनदोषइतिढोंढुपद्धतौरामवाजपेयिपद्धतौच ॥ तत्रैव—आपोशानंकरस्थतुपात्रस्थंचतिलोदकम् ॥ श्वानमूत्रसमंज्ञेयंपुन.पूरयतेयदि ॥ पुनंतुमेत्यादयोवैदिकमंत्रास्तुशिष्टसप्रदायादेव ।

तुमापितामहाःपुनंतुप्रपितामहाः ॥ पवित्रेणशतायुषा ॥ पुनंतुमापितामहाःपुनंतुप्रपितामहाःपवित्रेणशतायुषाविश्वमायु-र्व्यश्नवै ॥ १ ॥ अग्नआयूंषिपवसआसुवोर्जमिषंचनः ॥ आरेबाधस्वदुच्छुनाम् ॥ २ ॥ पुनंतुमादेवजनाःपुनंतुमनसा-धियः ॥ पुनंतुविश्वाभूतानिजातवेदःपुनीहिमा ॥ ३ ॥ पवित्रेणपुनीहिमाशुक्रेणदेवदीद्यत् ॥ अग्नेक्रत्वाक्रतूँरनु ॥ ४ ॥ यत्तेपवित्रमर्चिष्यग्नेविततमंतरा ॥ ब्रह्मतेनपुनातुमा ॥५॥ पवमानःसोअद्यनःपवित्रेणविचर्षणिः ॥ यःपोतासपुनातुमा ॥ ६ ॥ उभाभ्यांदेवसवितःपवित्रेणसवेनच ॥ मांपुनीहिविश्वतः ॥ ७ ॥ वैश्वदेवीपुनतीदेव्यागाद्यस्यामिमाबह्व्यस्त-न्वोवीतपृष्ठाः ॥ तयामदंतःसधमादेषुवयंस्यामपतयोरयीणाम् ॥ ८ ॥ चित्पतिर्मापुनातुवाक्पतिर्मापुनातुदेवोमास-वितापुनात्वच्छिद्रेणपवित्रेणसूर्यस्यरश्मिभिः ॥ तस्यतेपवित्रपतेपवित्रपूतस्ययत्कामःपुनेतच्छकेयम् ॥ ९ ॥ कुशमूलेस्थि-तोब्रह्माकुशमध्येजनार्दनः ॥ कुशाग्रेशंकरंविद्यात्त्रयोदेवाःकुशेस्थिताः ॥ तुलसीशतपत्राणिभृंगराजस्तथैवच ॥ मालती-मोगरंचैवपितृणांदत्तमक्षयम् ॥ तिलोसिसोमदेवत्योगोसवेदेवनिर्मितः ॥ प्रत्नमद्भिःपृक्तःस्वधयापितृंल्लोकान्प्रीणाहि-नःस्वाहा ॥ यवोसिसुवयास्मद्द्वेषोयवयारातीः ॥ गंधपुष्पफलहिरण्यानितूष्णींक्षिपेत् ॥ पुष्कराद्यानितीर्थानिगंगाद्याः-सरितस्तथा ॥ आगच्छंतुपवित्राणिश्राद्धकालेसदामम ॥ अपवित्रःपवित्रोवासर्वावस्थांगतोपिवा ॥ यःस्मरेत्पुंडरीकाक्षं सबाह्याभ्यंतरःशुचिः ॥ तिलारक्षंत्वसुरान्दर्भारक्षंतुराक्षसान् ॥ पंक्तिंवैश्रोत्रियोरक्षेदतिथिःसर्वरक्षकः ॥ इतिद्वारि-

१ निर्णयसिंधौहेमाद्रौस्कांदे ।

तिलकुशप्रक्षेपः ॥ निहन्मिसर्वंयदमेध्यवद्भवेद्धताश्चसर्वेसुरदानवामया ॥ यक्षाश्चरक्षांसिपिशाचगुह्यकाहतामयायातुधा-
नाश्चसर्वे ॥ उदकोपस्पर्शः ॥ प्राचीनावीती ॥ नीवीबंधनं ॥ सव्यं ॥ विष्णु० ॥ ३ ॥ अप० ॥ श्राद्धंपार्वणैकोद्दिष्ट-
विधिनाविश्वेदेवपूर्वकंयुष्मदनुज्ञयाअन्नेनहविषासद्यःकरिष्ये ॥ कुरुष्व ॥ श्राद्धभूमौगयांध्यात्वाध्यात्वादेवंगदाधरम् ॥
वस्वादींश्चपितॄन्ध्यात्वाततःश्राद्धंप्रवर्तये ॥ प्रवर्तय ॥ देवताभ्यःपितृभ्यश्चमहायोगिभ्यएवच ॥ नमःस्वाहायैस्वधायैनि-
त्यमेवनमोनमः ॥ अग्निष्वात्ताःपितृगणाःप्राचींरक्षंतुमेदिशम् ॥ तथाबर्हिषदःपांतुयाम्यांयेपितरस्तथा ॥ प्रतीचीमाज-
पास्तद्वदुदीचीमपिसोमपाः ॥ ऊर्ध्वंतस्त्वर्यमारक्षेत्कव्यवाडनलोप्यधः ॥ रक्षोभूतपिशाचेभ्यस्तथैवासुरदोषतः ॥ सर्व-
तश्चाधिपस्तेषांयमोरक्षांकरोतुमे ॥ वायुभूतपितॄणांचतृप्तिर्भवतिशाश्वती ॥ यइदंश्राद्धकालेतुकुर्याद्वैपितृपंजरम् ॥ अक्ष-
यंतद्भवेच्छ्राद्धंपितृभिःपरिरक्ष्यते ॥ अस्तुकालपाकश्रद्धासंपत्तिसिद्धिः ॥ अस्तु ॥ सव्यं ॥ शंनोदेवीतिमंत्रेणजलंगृहीत्वा
शंनोदेवी०तुनः ॥ जलाभिमन्त्रणं ॥ ॐयद्देवादेवहेडनंदेवासश्चकृमावयम् ॥ अग्निर्मातस्मादेनसोविश्वान्मुंचत्वꣳहसः ॥१॥
यदिदिवायदिनक्तमेनांꣳसिचकृमावयम् ॥ वायुर्मातस्मादेनसोविश्वान्मुंचत्वꣳहसः॥२॥यदिजाग्रद्यदिस्वप्नएनांꣳसिचकृमा-

१ इतिश्राद्धगदाधरपद्धतौ । २ अयमपिमन्त्रपाठ श्राद्धगदाधरपद्धतौ । ३ दैवपूर्वंश्राद्धंइतिकातीयश्राद्धसूत्रात् । ४ श्राद्धभूमौगयाध्यान श्राद्धगणपता-
वुक्तं निर्णयसिंधौहेमाद्रौब्रह्माडेच । ५ अपसव्येनैवायंमन्त्रजपःत्रिवारइतिढोढुपद्धतौ । ६ अयंदिग्बंध श्राद्धगदाधरभाष्येश्राद्धगणपतौच । ७ जलग्रहणेऽयं-
मन्त्र-शिष्टसंप्रदायात् । ८ श्राद्धगणपतौकात्यायनः—कूष्माडमन्त्रसूक्तेनकुर्यात्तोयाभिमन्त्रणं । अन्नानिप्रोक्षयेदेवतेनवश्राद्धमाचरेत् इति ॥

व्वयम् ॥ सूर्यौमातस्मादेनसोविश्वान्मुंचत्वंहसः ॥ ३ ॥ अपसव्यं । क्षुद्रदृष्टिनिपतनादिदोषदूषितःपाकःपूतोभवतु ॥ पाकप्रोक्षणंविधिवदस्तु ॥ अस्तुविधिवत् ॥ सव्यं ॥ धूरिलोचन०वानां ॐभूर्भुवःस्वःइदमासनं ॥ स्वासनं ॥ अत्रास्यतां ॥ धर्मोस्मिविशिराजाप्रतिष्ठितः ॥ आपः । स्वापः ॥ दैवेक्षणःक्रियतां ॥ ॐतथा ॥ प्राप्नोतुभवान् । प्राप्नवानि ॥ हस्तप्रक्षालनंदत्वाविष्टरार्थेयवकुशानादाय ॥ अयंवोविष्टरः । सुविष्टरः ॥ अपसव्यं ॥ गोत्राणांपितृपितामहादीनां० । पित्र्येक्षणःक्रियतां ॥ ॐतथा । प्राप्नोतुभवान् । प्राप्नवानि । हस्तप्रक्षालनंदत्वा । विष्टरार्थेतिलकुशानादाय । अयंवोविष्टरः । सुविष्टरः । सव्यं ॥ धूरिलोचनसंज्ञकान्विश्वान्देवान्भवत्सुआवाहयिष्ये ॥ आवाहय ॥ विश्वेदेवासआगतशृणुतामइमंहवम् ॥ एदंबर्हिर्निषीदत ॥ प्रदक्षिणंयवानवकीर्य ॥ विश्वेदेवाःशृणुतेमंहवम्मेयेअंतरिक्षेयउपद्यविष्ठ ॥ येअग्निजिह्वाउतवायजत्राआसद्यास्मिन्बर्हिषिमादयध्वम् ॥ इतिजपेत् ॥ आगच्छंतुमहाभागाविश्वेदेवामहाबलाः ॥ येअत्रविहिताःश्राद्धेसावधानाभवंतुते ॥ भवामः ॥ अपसव्यं । गोत्रंअस्मत्पितरंअमुकशर्मा-

१ निर्णयसिंधौहेमाद्रौब्राह्मे—आसनेग्वारानंदद्याद्वामेवादक्षिणेपिवा । पित्र्यकर्मणिवामेचदैवेदद्यात्तुदक्षिणे ॥ प्रचेता·—आसनेष्वासनंदद्यान्नतुपाणौकदाचन । धर्मोस्सीत्यथमंत्रेणगृह्णीयुस्तेतुतान्कुशान् ॥ धर्मोस्मिविशिराजाप्रतिष्ठित· इतिमन्त्र· ॥ गालव —दर्भानादायहस्ताभ्यागृहीत्वादक्षिणेकरे । दैवेक्षण·क्रियतामितिनिरंगुष्ठकंततः ॥ ओंतथेतिद्विजाब्रूयुस्तेप्राप्नोतुभवानिति ॥ कर्ताब्रूयात्ततोविप्र प्राप्नवानीतिवैवदेत् ॥ रामवाजपेयिपद्धताकात्यायन·—विष्टरार्थंकुशान्दद्याद्विप्राणा पादमूलतः । इति । देवानांसयवादर्भाइतिकाठकेच ॥ हस्तप्रक्षालनंतुश्राद्धगदाधरपद्धतौ ॥ २ ढोंढुपद्धतौबृहस्पतिः—इष्टिश्राद्धेक्रतुर्दक्षःसत्योनांदीमुखेवसु. । नैमित्तिकेकालकामौकाम्येचधूरिलोचनौ ॥ पुरूरवार्द्रवश्चैवपार्वणेसमुदाहृतौ । उत्पत्तिंनामचैतेषानविदुर्येद्विजातयः । अयमुच्चरणीयस्तैःश्लोकःश्रद्धासमन्वितैः ॥ आगच्छंतुमहाभागा० इति ॥

णंवसुरूपंभवत्सुआवाहयिष्ये । आवाहय । एवंपितामहंप्रपितामहंचतथा ॥ गोत्रांअस्मन्मातरंअमुकीदांइत्यादिपितामहींप्र-
पितामहीं ॥ तथाद्वि०मातामहं ३ मातामहीं ३ उशंतस्त्वानिधीमह्युशंतःसमिधीमहि ॥ उशन्नुशतआवहपितॄन्हविषेअत्तवे॥
अप्रदक्षिणंतिलानवकीर्य ॥ एकोद्दिष्टेनावाहनं ॥ आयंतुनःपितरः सोम्यासोग्निष्वात्ताःपथिभिर्देवयानैः। अस्मिन्यज्ञेस्वधया-
मदंतोधिब्रुवंतुतेवंत्वस्मान् ॥ सस्वरंमन्त्रजपः ॥ यज्ञियवृक्षचमसेषुपवित्रांतर्हितेष्वेकैकस्मिन्नपआसिंचतिसौवर्णराजतौदुंबर-
खड्गमणिमयानांपात्राणामन्यतमेषुयानिवाविद्यंते ॥ पत्रपुटेषुवा ॥ शंनोदेवीति ॥ ॐशंनोदेवीरभिष्टयआपोभवंतुपीतये ॥
शंयोरभिस्रवंतुनः ॥ अपसव्यं ॥ शंनोदेवी० ॥ सव्यं ॥ यवोसियवयास्मद्द्वेषोयवयारातीः ॥ इतिदैवपात्रेयवान्निक्षिप्य ।
अपसव्यं ॥ एकैकस्मिन्नेवतिलानावपतितिलोसीति ॐतिलोसिसोमदेवत्योगोसवोदेवनिर्मितः ॥ प्रत्नमद्भिःपृक्तःस्वधया-
पितॄन्लोकान्प्रीणाहिनःस्वाहा ॥ प्रतिपात्रंसर्वत्रमन्त्रावृत्तिः ॥ गंधपुष्पैःप्रच्छाद्यदेवार्घ्यपात्रेसंपन्ने । सुसंपन्ने ॥ अप-
सव्यं ॥ पित्रर्घ्यपात्राणिसंपन्नानि । सुसंपन्नानि ॥ सव्यं ॥ एकैकस्यैकैकेनददातिसपवित्रेषुहस्तेषुयादिव्याइति । देवे-
भ्योनमः ॥ यादिव्याआपःपयसासंबभूवुर्याआंतरिक्षाउउतपार्थिवीर्याः । हिरण्यवर्णायज्ञियास्तानआपःशिवाःशंस्योनाः

१ पवित्रलक्षणंछंदोगपरिशिष्टे—अनंतर्गर्भिणंसाग्रंकौशंद्विदलमेवच । प्रादेशमात्रंविज्ञेयंपवित्रंयत्रकुत्रचिदिति । चतुर्विंशतिमते—द्वेद्वेशलाकेदेवानातिस्रस्तिस्रस्तुपार्वणे ॥ एकोद्दिष्टेशलाकैकाश्राद्धेष्वन्येषुनिक्षिपेत् ॥ इति गदाधरभाष्ये । २ अत्रयवप्रक्षेपणंयाज्ञवल्क्यस्मरणात् । सूत्रभाष्यमतेतुसर्वत्रदैवेपित्र्येपितिलाएवनयवाः ।

सुहवाभवंतु ॥ धूरीलोचनसंज्ञकाविश्वेदेवाःएषवोर्घः ॥ अस्त्वर्घः ॥ अपसव्यं । पितृभ्योनमः । ॐयादिव्या० ॥ अमुकगोत्रअस्मत्पितःअमुकशर्मन्वसुरूपएषतेर्घः । अस्त्वर्घः । गोत्रअस्मत्पितामहअमु०रुद्र०एष० ॥ अस्त्व० ॥ गोत्रअस्मत्प्रपितामहअमु०आदित्यरूपएष० ॥ गोत्रेअस्मन्मातःअमुकीदेवसुरूपेएष० ॥ गोत्रेअस्मत्पितामहिअमु०रुद्र०एष० ॥ गोत्रेअस्मत्प्रपितामहिअमु०आदित्य०एष० ॥ गोत्रेअस्मत्सापत्नमातःअमु०वसु०एष० ॥ द्वि०मातामह०प्रमातामह०वृद्धमातामह०एष० ॥ द्वि०गोत्रेमातामहि०प्रमातामहि०वृद्धप्रमातामहि०एष० ॥ एवंपत्नि । तनय । दुहितः । पितृव्य । मातुल । भ्रातः । पितृभगिनि । मातृभगिनि । आत्मभगिनि । श्वशुर । श्वश्रूः । गुरो । शिष्य । आप्त शर्मन् । वसुरूपएषतेर्घः । अस्त्वर्घः ॥ प्रथमेपात्रेसंस्रवान्समवनीयपितृभ्यःस्थानमसीतिन्युब्जंपात्रंनिदधाति ॥ ॐपितृभ्यःस्थानमसि ॥ तत्पात्रंगंधतिलयवपुष्पैःसंपूज्यतदुपरिकुशपत्रत्रयंनिधाय ॥ सव्यं ॥ पूर्वाभिमुखोभूत्वा ॥ ॐआपःशिवाःशिवतमाःशांताःशांततमास्तास्तेकृण्वंतुभेषजं ॥ इतिमुखंविमृष्टे ॥ अत्रगंधपुष्पधूपदीपवाससांचप्रदानं ॥ धूरिलोचनसंज्ञका-

---

१ श्राद्धगणपतौ कात्यायनः—कृत्वान्युब्जंतिलैर्युक्तंदक्षिणाग्रपवित्रकम् ॥ पितृपात्रनिदध्यात्तुदेवपित्रोश्चमध्यतः ॥ न्युब्जपात्रस्यमध्येचतिष्ठंतिपितरःसदा ॥ तस्माद्गंधादिभिस्तच्चपूजयेत्तुयथाविधि । २ पुराणेविशेषः—आसिच्यप्रथमेपात्रेसर्वपात्रस्थसंस्रवान् । ताभिरद्भिर्मुखंसिंचेद्यदिपुत्रमभीप्सति । चतुर्विंशतिमते—संस्रवान्प्रथमेपात्रेनिर्णीयाद्भिर्मुखंस्पृशेदितिश्राद्धगदाधरभाष्ये । एकोर्घइतिएकोद्दिष्टविधिसूत्रस्थकर्कभाष्यं । एकार्घश्रवणात्पात्रमेकमितिगम्यते । अत.प्रथमशब्दानुपपत्तेः पितृभ्यःस्थानमसीत्यस्यानुपपन्नत्वात्संस्रववहुत्वाभावाच्चनपात्रन्युब्जतेति । श्राद्धगदाधरभाष्यादावप्येवम् । अतोनैकोद्दिष्टार्घपात्रस्थसंस्रवप्रक्षेपः । ३ सव्येनदेवान्-

देवाः असीवोगंधाःसुगंधाः । इदंपुष्पंसुपुष्पं । इदंतुलसीदलंसुतु० । एषवोधूपः सुधूपः । एषवोदीपः सुदीपः । फलार्थे-पूगफलं सुफलं । अनुलेपनार्थेगोपीचंदनं सुचंदनं । धारणार्थेयज्ञोपवीतं सूपवीतं । आच्छादनार्थेकिंचिद्व्यावहारिकद्रव्यं स्वाच्छादनीयम् । शेषोपचारार्थेइमौकुशौ अस्तुपवित्रं । इदंदत्तंगंधाद्यर्चनंदेवेभ्यःस्वाहासंपद्यतांनमम ॥ अपसव्यं ॥ गो०पितरःगंधाः तिलाक्षताः पुष्पाणि तुलसीपत्रं धूपः दीपः पूगफलं गोपीचंदनं यज्ञोपवीतं आच्छादनार्थेकिंचि-द्व्यावहारिकद्रव्यं शेषोपचारार्थेइमेकुशाः सन्तुशेषोपचाराः ॥ इदंदत्तंगंधाद्यर्चनंपितृभ्यःस्वधासंपद्यतांनमम ॥ सव्यं ॥

---

प्रचरेद्गंधधूपादिभिस्तथा । अपसव्येनपित्रादीनर्चयेच्छ्राद्धकर्मणि । ढोंढुरामादिपद्धतिष्वप्येवम् । श्राद्धगणपतौ—तुलसीगंधमाघ्रायपितरस्तुष्टमानसाः । प्रयांतिगरुडा-रूढास्तत्पदंचक्रपाणिन ॥ वायुपुराणे—लोकेश्रेष्ठतमंसर्वमात्मनश्चापियत्प्रियं । सर्वंपितृभ्योदातव्यंतदेवाक्षय्यमिच्छता । श्राद्धकाशिकायाम्—चंदनागरुकर्पूरकुंकु-मंपद्मकंतथा । कस्तूरिकादयोगंधा पितॄणांतुष्टिकारकाः ॥ कर्पूरकुंकुमोपेतंसुगंधिहरिचंदनं । देविकेप्यथवापित्र्येगंधदानेप्रशस्यतइति । सायणीये—तुलसीशतपत्राणि-भृंगराजस्तथैवच । मालतीमोगरंचैवपितॄणादत्तमक्षयम् ॥ ढोढुपद्धतौविष्णु —श्राद्धेजात्यःप्रशस्ता स्युर्मल्लिकाश्वेतपुष्पिकाः । जलोद्भवानिसर्वाणिकुंकुमानिचचंपकम् ॥ मधुनाघृतसंयुक्तोगुग्गुलोधूपएवच । श्रीखंडागरुदारूश्चसरलाद्यादिदापयेत् । घृतेनदीपोदातव्यस्तिलतैलेनवापुन । यज्ञोपवीतंयोदद्याच्छ्राद्धकालेतुधर्मवित् । पावनं-सर्वविप्राणाब्रह्मदानस्यतत्फलम् ॥ आच्छादनंचशुभ्रंचइति । वस्त्राभावेमूल्यंवादद्यादितिस्मृत्यर्थसारे । अत्रगंधपुष्पेतिसूत्रेचकारोऽनुक्तसमुच्चयार्थः । तेनसत्यांसपत्तौ सूत्रोक्तेभ्य पदार्थेभ्योन्यदपिदातव्यम् । धर्माब्धौ—अगस्त्यंभृंगराजंचतुलसीकमलंतथा । चंपकंतिलपुष्पंचदूर्वाश्चपितृवल्लभा । विहिनाप्रतिपिद्धाचतुलसीपिंडपूजने । सुकुमारैःकिसलयैर्यवदूर्वांकुरैरपि । जलोद्भवैश्चकुसुमैर्मल्लिकाचूतपुष्पकैः । अतिमुक्तैश्चतगरैःसंपूज्याःपितरस्सदा । जातीपुष्पैर्विप्रपूजांकुर्यात्पिंडार्चनंतुनइति ॥

यस्यस्मृत्वा० ॥ विष्णवेनमः ॥ ३ ॥ आचमनं ॥ तिलकोद्धरणं। मंडलादिपात्रासादनंकरिष्ये ॥ कुरुष्व ॥ सव्यं ॥ देवानांकरशुद्धिः ॥ येतीर्थानिप्रचरंतिसृकाहस्तानिषंगिणः ॥ तेषांसहस्रयोजनेवधन्वानितन्मसि ॥ अपस० ॥ पितृणांकरशुद्धिः ॥ येतीर्था० ॥ प्रथमादक्षिणारेखाद्वितीयावामतोन्यसेत् ॥ तृतीयाचाग्रभागेतुमेलनंकुरुदक्षिणे ॥ ॐपुरीत्यभूतानिपुरीत्यलोकान्पुरीत्यसर्वाःप्रदिशोदिशश्च ॥ उपस्थायप्रथमजामृतस्यात्मनात्मानमभिसंविवेश ॥ १ ॥ परिद्यावापृथिवीसद्यइत्वापरिलोकान्परिदिशःपरिस्वः ॥ ऋतस्यतंतुविततंविचृत्यतदपश्यत्तदभवत्तदासीत् ॥ यथाचक्रधरोविष्णुस्त्रैलोक्यंपरिरक्षति ॥ एवंमंडलभस्मैतत्सर्वभूतानिरक्षतु ॥ अपस० । ॐपुरीत्य० संविवेश ॥ १ ॥ ॐपरिद्यावापृ०दासीत्

---

१ नीवारचूर्णगोरमृदाभस्मनोदकेनवामंडलंकुर्यात् । चतुष्कोणंब्राह्मणस्यत्रिकोणंक्षत्रियस्यमंडलाकृतिर्वैश्यस्याभ्युक्षणंशूद्रस्य—यथाचक्रधरोविष्णुस्त्रैलोक्यंपरिरक्षति । एवंमंडलभस्मैतत्सर्वभूतानिरक्षतु । इतिकातीयभोजनसूत्रम् । यथाचक्रेति । पंक्तिवारणमंत्र सूत्रोक्तएव । परीत्यादिमंत्रद्वयंशिष्टसंप्रदायात् । श्राद्धगणपतौश्राद्धसमुच्चये—नैर्ऋत्याद्भस्ममर्यादाप्रारभ्यैवाप्रदक्षिणं । समाप्तांनैर्ऋतेकुर्यात्पितृणांपंक्तिवारणम् ॥ प्रारभ्यैशानतोभस्ममर्यादातुप्रदक्षिणम् । ईशान्येतुसमाप्तास्याद्देवानांपंक्तिवारणम् ॥ तत्रैवमात्स्ये—अकृत्वाभस्ममर्यादाय कुर्यात्पाणिशोधनम् । आसुरंतद्भवेच्छ्राद्धंपितृणांनोपतिष्ठति । इतितुआश्वलायनविषयं तच्छ्राद्धविधावुक्तत्वात् इतिखंडदीक्षितकृतदर्शश्राद्धप्रयोगे । वाजसनेयिनांतुपूर्वंकरशुद्धि पश्चात्पंक्तिवारणं । तदुक्तंश्राद्धसमुच्चये—पूर्वंकृत्वातुमर्यादांहस्तशौचंददातियः । निराशास्तत्रगच्छंति देवताःपितृभिःसह । इतियजुःशाखिविषयम् । इतिखंडदीक्षितकृतदर्शश्राद्धप्रयोगेएव । ढोंढुमिश्रपद्धतौरामजपेयिपद्धतौचएवमेव ॥ २ येतीर्थानीतिमंत्रः शिष्टसांप्रदायात् ।

॥ २ ॥ यथाचक्र०रक्षतु ॥ उद्धृत्यघृताक्तमन्नंपृच्छत्यग्नौकरिष्यइति ॥ गायत्रीमंत्रेणप्रोक्ष्य ॥ ॐमधुवाता० ॥ ३ ॥ अ-
पस० । भवदनुज्ञयाविप्रपाणावग्नौकरणंकरिष्ये ॥ कुरुष्व ॥ कुरुष्वेत्यनुज्ञातः । पिंडपितृयज्ञवद्धुत्वा ॥ पातितवामजानुः ॥
ॐअग्नयेकव्यवाहनायस्वाहा । इदमग्नयेकव्यवाहनायनमम ॥ ॐसोमायपितृमतेस्वाहा । इदंसोमायपितृमतेनमम ॥
सव्यं ॥ पात्राभिघारणमाज्यशेषेण ॥ ॐमूर्धानंदिवोअरतिंपृथिव्यावैश्वानरमृतआजातमग्निम् ॥ कविꣳसम्राजमतिथिं-
जनानामासन्नापात्रंजनयंतदेवाः ॥ हुतशेषंदत्वापात्रमालभ्यजपति । पृथिवितेपात्रंद्यौष्पिधानंब्राह्मणस्यमुखेअमृतेअमृ-
तंजुहोमिस्वाहेति ॥ शेषंदेवायदातव्यंपितृभ्यस्तदनंतरम् ॥ गायत्र्यासंप्रोक्ष्य ॥ पृथिवितेपात्रंद्यौष्पिधानंब्राह्मणस्यमुखे-
अमृतेअमृतंजुहोमिस्वाहा ॥ वैष्णव्यर्चायजुषावांगुष्ठमन्नेऽवगाह्य ॥ ॐइदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपाꣳ-

---

१ स्त्रीणाꣳशूद्राणाचाग्नौकरणंनास्ति । ब्रह्मपुराणेविंशाधिकद्विशततमे २२० ध्यायेश्राद्धकल्पेचतुर्थःश्लोकः । स्त्रीभिर्वर्णावरैः शूद्रैर्विप्राणामनुशासनात् । अमंत्रकविधि-पूर्ववह्नियागविवर्जितं । वह्नियागोग्नौकरणं ॥ २ कात्यायन —अग्नौकरणस्यान्तेवैमधुसूक्तंजपेत्तत । शेषेणाज्येनाभिघार्यभाजनानिविशोधयेत् । इतिश्राद्धका-शिकायाम् । मधुसूक्तं मधुवाताइतिऋक्त्रयमेवेत्यपितत्रैव । ३ अयंमंत्रःशिष्टसप्रदायात् । ४ श्राद्धगणपतौब्रह्माण्डपुराणे—दक्षिणंतुकरकृत्वावामोपरिनिधापयेत् । दैवपात्रमथालभ्यपृथ्वितेपात्रमुच्चरेत् ॥ दक्षिणोपरिवामंचपितृपात्रस्यलंभनम् ॥ प्रचेताः—उत्तानंदक्षिणेसव्येनीचपात्राण्युपस्पृशेत् । स्वस्तिकेनपितृन्देवानधश्चोर्ध्वंप्र-दापयेत् इति । ५ नाग्नौकरणमितिएकोद्दिष्टसूत्रात्एकोद्दिष्टेअग्नौकरणनिषेधात् हुतशेषाभावेनपात्रालंभाभाव इतिहलायुधगदाधरभाष्यादौ । अतश्चएकोद्दिष्टे नहुतशेष-दानंपात्रालंभश्च ।

सुरे ॥ ॐविष्णोहव्यꣳरक्ष ॥ इतिवा ॥ अपस० ॥ पृथिविते० स्वाहा ॥ इदंविष्णु०सुरे० ॥ ॐविष्णोहव्यꣳरक्षइतिवा । अपहताइतितिलान्विकीर्य ॥ ॐअपहताऽअसुरारक्षाꣳसिवेदिषदः ॥ सव्यं ॥ उदकोपस्पर्शः ॥ उष्णꣳस्विष्टमन्नंदद्याच्छक्त्यावा ॥ अन्नसंकल्पः ॥ गायत्रीमन्त्रेणप्रोक्ष्य ॥ धूरिलोचनसंज्ञकाविश्वेदेवाः एतद्वोन्नंदत्तंदास्यमानंचब्राह्मणस्यमुखेआतृप्तेःअमृतरूपेणस्वाहासंपद्यतांनमम । इदंधूरिलोचनसंज्ञकेभ्योविश्वेभ्योदेवेभ्योदत्तंदास्यमानंचनमम ॥ अपसव्यं ॥ गोत्राःअस्मत्पितृपितामहप्रपितामहाःअमुकामुकशर्माणःवसुरुद्रादित्यस्वरूपाः ॥ गोत्राःअस्मन्मातृपितामहीप्रपितामह्यःअमुक्यमुकिदाःवसुरुद्रादित्यस्वरूपाः ॥ गोत्रेसापत्न०एतद्वोन्नं०द्यतांनमम ॥ इदंगोत्रेभ्यःअस्मत्पितृपितामहप्रपितामहेभ्यःअमुकामुकशर्मभ्यःवसुरुद्रादित्यस्वरूपेभ्यः ॥ गोत्राभ्यःअस्मन्मातृपितामहीप्रपितामहीभ्यःअमुक्यमुकिदाभ्यःवसुरुद्रादित्यस्वरूपाभ्यः ॥ गोत्रायैअस्मत्सापत्नमात्रेअमुकिदायैवसुरूपायैदत्तंदास्यमानंचनमम ॥ द्वितीयगोत्राःअस्मन्मातामहप्रमातामहवृद्धप्रमातामहाःअमु०शर्माणःवसुरुद्रादित्यस्वरूपाः ॥ गोत्राःअस्मन्मातामहीप्रमातामहीवृद्धप्रमातामह्यः अमुक्यमुकिदाःवसुरुद्रादित्यस्वरूपाःएतद्वोन्नं० ॥ इदंगोत्रेभ्यःअस्मन्मातामहप्रमातामहवृद्धमातामहेभ्यःअमुकामुकशर्मभ्यःवसुरुद्रादित्यस्वरूपेभ्यः ॥ गोत्राभ्यःअस्मन्मातामहीप्रमातामहीवृद्धप्रमातामहीभ्यःअमुक्यमुकिदाभ्यःवसुरुद्रादित्यस्वरूपाभ्यःदत्तं० ॥ गोत्रेअस्मत्पत्निअमुकिदेवसुरूपे ॥ गोत्रअस्मत्तनयअमुकशर्मन्वसुरूप ॥ गोत्रेअस्मद्दुहितःअमुकिदेवसुरूपे ॥ गोत्रअस्मत्पितृव्यअमुकशर्मन्सपत्नीकससुतवसुरूप ॥ गोत्रअस्मन्मातुलअमुकशर्मन्सपत्नीकससुतवसुरूप ॥

गोत्रअस्मद्भ्रातःअमुकशर्मन्सपत्नीकससुतवसुरूप ॥ गोत्रेअस्मत्पितृभगिनिअमुकिदेसभर्तृकेससुतेवसुरूपे ॥ गोत्रेअस्मन्मातृभगिनिअमुकिदेसभर्तृकेससुतेसुवरूपे ॥ गोत्रेअस्मद्भगिनिअमुकिदेसभर्तृकेससुतेवसुरूपे ॥ गोत्रअस्मच्छ्वशुरअमुकशर्मन्वसुरूप ॥ गोत्रेअस्मच्छ्वश्रूःअमुकिदेवसुरूपे ॥ गोत्रअस्मद्गुरोअमुकशर्मन्वसुरूप ॥ गोत्रअस्मच्छिष्यअमुकशर्मन्वसुरूप ॥ गोत्रअस्मदासअमुकशर्मन्वसुरूप ॥ एतद्वोन्नं० ॥ इदंगोत्रायैअस्मत्पत्न्यैअमुकिदायैवसु० ॥ गोत्रायअस्मत्तनयायअमुकशर्मणेवसुरूपाय ॥ गोत्रायैअस्मद्दुहित्रेअमुकिदायैवसुरूपायै ॥ गोत्रायअस्मत्पितृव्यायअमुकशर्मणेसप०ससु०वसुरूपाय ॥ गोत्रायअस्मन्मातुलायअमुकशर्मणेसप०ससु०वसुरूपाय ॥ गोत्रायअस्मद्भ्रात्रेअमुकशर्मणेसप०ससु०वसुरूपाय ॥ गोत्रायैअस्मत्पितृभगिन्यैअमुकिदायैसभ०ससु०वसुरूपायै ॥ गोत्रायैअस्मन्मातृभगिन्यैअमुकिदायैसभ०ससु०वसुरूपायै ॥ गोत्रायैअस्मद्भगिन्यैअमुकिदायैसभर्तृकायैससुतायैवसुरूपायै ॥ गोत्रायअस्मच्छ्वशुरायअमुकशर्मणेवसुरूपाय ॥ गोत्रायैअस्मच्छ्वश्र्वेअमुकिदायैवसुरूपायै ॥ गोत्रायअस्मद्गुरवेअमुकशर्मणेसप०ससु०वसुरूपाय ॥ गोत्रायअस्मच्छिष्यायअमुकशर्मणेवसुरूपाय ॥ गोत्रायअस्मदासायअमुकशर्मणेवसुरूपाययद्दत्तंदास्यमानंचनमम ॥ सव्यं ॥ [1]ब्रह्मार्पणंब्रह्महविर्ब्रह्माग्नौब्रह्मणाहुतम् ॥ ब्रह्मैवतेनगंतव्यंब्रह्मकर्मसमाधिना ॥ हरिर्दाताहरिर्भोक्ताहरिरन्नंप्रजापतिः ॥ हरिर्विप्रशरीरस्थोभुंक्तेभोजयतेहरिः ॥ चतुर्भिश्चचतुर्भिश्चद्वाभ्यांपंचभिरेवच ॥ हूयतेचपुनर्द्वाभ्यांसमेविष्णुःप्रसीदतु ॥ ॐतत्स० ॥ सव्यापसव्या-

१ श्राद्धगणपतौ शिष्टाचारात्ब्रह्मार्पणंएकोविष्णुरितिचपठंति ।

भ्यांसकृत्सकृदपोदत्वा ॥ अपस० ॥ एकोविष्णुर्महद्भूतंपृथग्भूतान्यनेकशः ॥ त्रींल्लोकान्व्याप्यभूतात्माभुंक्तेविश्वभुगव्ययः ॥ अनेनममपितुःकन्यागतेसवितरिसकृन्महालयापरपक्षश्राद्धीयब्राह्मणभोजनेनममपित्रादिसमस्तपितृस्वरूपीजनार्दनोवासुदेवःप्रीयतां ॥ सव्यं ॥ ॐतत्स० ॥ कंठेकृत्वा ॥ ईशानविष्णुकमलासनकार्तिकेयवह्नित्रयार्करजनीशगणेश्वराणाम् ॥ क्रौंचामरेंद्रकलशोद्भवकश्यपानांपादान्नमामिसततंपितृमुक्तिहेतोः ॥ सव्यं ॥ ॐयेदेवासो० व्वं० ॥ देवाःअमृतंभुज्यतां ॥ नमोदेवेभ्यः ॥ अपसव्यं ॥ येचेहपितरो०जुषस्व ॥ स्वधापितृभ्यः । पितरःअमृतंजुषध्वं ॥ सव्यं ॥ श्रद्धायांप्राणेनजुहोमि ॥ ॐप्राणायस्वाहा ॥ १ ॥ अपानायस्वाहा ॥ २ ॥ व्यानायस्वाहा ॥३॥ समानायस्वाहा ॥४॥ उदानायस्वाहा ॥ ५ ॥ सव्यापसव्याभ्यांसकृत्सकृदपोदत्वा ॥ अश्नत्सुजपेद्व्याहृतिपूर्वांगायत्रींसप्रणवांसकृत्त्रिर्वाराक्षोघ्नीःपित्र्यमंत्रान्पुरुषसूक्तमप्रतिरथमन्यानिचपवित्राणि ॥ ॐभूर्भुवःस्वःतत्सवितु० सकृत्त्रिर्वा । राक्षोघ्न्यःकृणुष्वपाजेतिपंचर्चःअग्निष्वात्तेतियजुर्वर्जं । अग्नयेकव्यवाहनायेत्यादयःषट्पित्र्यमन्त्राःइतिकर्कभाष्ये । उदीरतामवरइत्याद्यास्त्रयोदशर्चःपित्र्यमन्त्राइतिगदाधरभाष्येरामवाजपेयिपद्धतौढोंढुमिश्रपद्धतौवैद्यनाथमिश्रपद्धतौश्राद्धगणपतौच । पुरुषसूक्तं । सहस्रशीर्षेत्यादिषोडशर्चः । अप्रतिरथं आशुःशिशानइतिद्वादशसप्तदशवा । अन्यानिचपवित्राणि । पितृसंहितासुरावंतमित्या-

---

१ श्राद्धकाशिकायांकात्यायन —येदेवासश्चयेचेहमंत्रद्वयमुदीरयेत् । मन्त्रान्तेतुततोब्रूयादमृतंभुज्यतामिति । तत्रैवस्कंदेश्वरसंवादे—अपोशानमथोदत्वावारिधारां वदेद्बुधः । नमोदेवेभ्यइतिचसव्येनोदङ्मुखोद्विज. । अपसव्यंपितृभ्यस्तुघृतधारावदेत्स्वधा इति ॥

दिपंचदशर्चः ॥ पिंडब्राह्मणंप्रजापतिर्वैभूतानीत्यादीतिरामवाजपेयिपद्धतौ ॥ रुद्रप्रभृत्यादीनीतिकर्कभाष्ये । मत्स्यपुराणे–ब्रह्मविष्णवर्करुद्राणांस्तोत्राणिविविधानिच । इंद्रस्यसोमसूक्तानिपावनानिचशक्तित इति ॥ प्रार्थना ॥ अपेक्षितंयाचितव्यंत्याज्यंचैवानपेक्षितम् ॥ उपविश्यसुखेनैवभोक्तव्यंस्वस्थमानसैः ॥ विद्यतेशाकपाकानांरुच्यतेतेनभुज्यतां । अरुच्यंतत्परित्याज्यंसंकोचंनैवकारयेत् । यथासुखंजुषध्वं । जुषामहे ॥ तृप्तानुज्ञात्वान्नंप्रकीर्य ॥ अपसव्यं ॥ असंस्कारप्रपन्नानांत्यागिनांकुलदोषिणाम् ॥ उच्छिष्टभागधेयानांदर्भेषुविकिरासनम् ॥ अग्निदग्धाश्चयेजीवायेप्यदग्धाःकुलेमम ॥ भूमौदत्तेनपिंडेनतृप्तायांतुपरांगतिम् ॥ येअग्निदग्धायेऽनग्निदग्धाअस्मत्कुलप्रसूताःतेभ्यःअयंविकिरपिंडःस्वधानमः ॥ गोदावर्यांदत्तोस्तु ॥ सव्यं ॥ पवित्रत्यागः ॥ पाणिपादंप्रक्षाल्य ॥ आचम्य ॥ पवित्रधारणं ॥ सव्यापसव्याभ्यांसकृत्सकृदपोदत्वा ॥ पूर्ववद्गायत्रींजपित्वा ॥ मधुमतीर्मधुमध्वितिच ॐभूर्भुवःस्वःतत्सवितु० ॥ ॐमधुवाता० ३ मधुमधुमधु ॥ तृप्तास्थेतिपृच्छतितृप्ताःस्मइत्यनुज्ञातःशेषमन्नमनुज्ञाप्य ॥ धूरिलोचनसंज्ञकाविश्वेदेवाः तृप्ताःस्थ । तृप्ताःस्मः ॥ अपस० ॥ पितरःतृप्ताःस्थ । तृप्ताःस्मः ॥सव्यं॥ शेषमन्नंकिंक्रियतां ॥ इष्टैःसहभुज्यताम् ॥ सर्वमन्नमेकतोद्धृत्योच्छिष्टसमीपेदर्भेषुत्रींस्त्रीन्पिंडानवनेज्यदद्यात् ॥ अपसव्यं ॥ दक्षिणेनोल्लिखत्यपहताइति ॥ ॐअपहताअसुरारक्षांसिवेदिषदः ॥ सव्यं ॥ उदकोपस्पर्शः ॥ अपसव्यं ॥

१ अयंमंत्र ढोंढुपद्धतौश्राद्धगणपतौच । २ एकतोद्धृत्येतिछांदस सविरितिश्राद्धगणपतिः । ३ रेखाकरणंप्रतिपार्वणंप्रत्येकोद्दिष्टंचप्रतिरेखंमन्त्राश्रुतिः । ब्रह्मांडपुराणे—सव्योत्तराभ्यापाणिभ्याकुर्यादुल्लेखनंबुधः । वज्रेणापिकुशैर्वापिउल्लिखेत्तुमहींद्विजइति ।

उदपात्रेणावनेजयत्यपसव्यं सव्येनवोद्धरणसामर्थ्यादसाववनिक्ष्वेतियजमानस्यपितृप्रभृतित्रीन् अमुकसगोत्रअस्मत्पितः-
अमुकशर्मन्वसुरूपअवनेनिक्ष्व॥ गोत्रअस्मत्पितामहअमुकशर्मन्रुद्ररूपअव०॥ गोत्रअस्मत्प्रपितामहअमुकशर्मन्आदित्यरू-
पअव० ॥ गोत्रेअस्मन्मातःअमुकिदेवसुरूपेअव० ॥ गोत्रेअस्मत्पितामहिअमुकिदेरुद्ररूपेअव० ॥ गोत्रअस्मत्प्रपिताम-
हिअमुकिदेआदित्यरूपेअव० ॥ गोत्रेअस्मत्सापत्नमातःअमुकिदेवसुरूपेअव० ॥ द्वि०गोत्रअस्मन्मातामहअमुकशर्म-
न्वसुरूपअव० ॥ द्वि०गोत्रअस्मत्प्रमातामहअमुकशर्मन्रुद्ररूपअव० ॥ द्वि०गोत्रअस्मद्वृद्धमातामहअमुकशर्मन्आदि-
त्यरूपअव० ॥ गोत्रेअस्मन्मातामहिअमुकिदेवसुरूपेअव० ॥ द्वि०गोत्रेअस्मत्प्रमातामहिअमुकिदेरुद्ररूपेअव० ॥ द्वि०
गोत्रेअस्मद्वृद्धप्रमातामहिअमुकिदेआदित्यरूपेअव० ॥ गोत्रेअस्मत्पत्निअमुकिदेवसुरूपेअव० ॥ गोत्रअस्मत्तनयअमुकश-
र्मन्वसुरूपअव० ॥ गोत्रेअस्मद्दुहितःअमुकिदेवसुरूपेअव० ॥ गोत्रअस्मत्पितृव्यअमुकशर्मन्सप०ससुत०वसुअव० ॥
गोत्रअस्मन्मातुलअमुकशर्मन्सप०ससुतवसु०अव० ॥ गोत्रअस्मद्भ्रातःअमुकशर्मन्सप०ससुतवसु०अव० ॥ गोत्रेअस्मत्पितृ-
भगिनिअमुकिदेसभ०वसु०अव० ॥ गोत्रेअस्मन्मातृभगिनिअमुकिदेसभ०ससुतेवसु० अव० ॥ गोत्रेअस्मद्भगिनिअमुकि-
देसभर्तृकेससुतेवसुरूपेअव० ॥ गोत्रअस्मच्छ्वशुरअमुकशर्मन्ससुतवसुरूपअव० ॥ गोत्रेअस्मच्छ्वश्रूःअमुकिदेवसुरूपेअव० ॥
गोत्रअस्मच्छिष्यअमुकशर्मन्वसुरूपअव० ॥ गोत्रअस्मदासअमुकशर्मन्सप०ससु०वसुरूपअव० ॥ उपमूलं सकृदा-
च्छिन्नानिलेखायांकृत्वायथावनिक्तंपिंडान्ददात्यसावेतत्तइति ॥ गोत्रअस्मत्पितःअमुकशर्मन्वसुरूपएतत्तेन्नं स्वधा ॥

इदंगोत्रायअस्मत्पित्रेअमुकशर्मणेवसुरूपायअयंपिंडः स्वधानमः गोदावर्योदत्तोस्तु ॥ गोत्रअस्मत्पितामहअमुकशर्म-
न्रुद्ररूपएतत्तेन्नᳪस्वधा ॥ इदंगोत्रायअस्मत्पितामहायअमुकशर्मणेरुद्ररूपायअयंपिंडःस्वधा० ॥ गोत्रअस्मत्प्रपिता-
महअमुकशर्मन्आदित्यरूपएत्तेन्नᳪस्वधा ॥ इदंगोत्रायअस्मत्प्रपितामहायअमुकशर्मणेआदित्यरूपायअयंपिंडःस्वधा० ॥
गोत्रेअस्मन्मातःअमुकिदेवसुरूपेएत० ॥ इदंगोत्रायैअस्मन्मात्रेअमुकिदायैवसुरूपायैअयंपिंडःस्वधा० ॥ गोत्रेअस्मत्पि-
तामहिअमुकिदेरुद्ररूपेएत० ॥ इदंगोत्रायैअस्मत्पितामह्यैअमुकिदायैरुद्ररूपायैअयंपिंडःस्वधा० ॥ गोत्रेअस्मत्प्रपिता-
महिअमकिदेआदित्यरूपेएत० ॥ इदंगोत्रायैअस्मत्प्रपितामह्यैआदित्यरूपायैअयंपिंडःस्वधा० ॥ गोत्रेअस्मत्सापत्नमातःअ-
मुकिदेवसुरूपेएतत्ते०॥ इदंगोत्रायैअस्मत्सापत्नमात्रेअमुकिदायैअयंपिंडःस्वधा०॥ द्वि०गोत्रअस्मन्मातामहअमुकशर्मन्वसु-
रूपएतत्ते० ॥ इदंगोत्रायअस्मन्मातामहायअमुकशर्मणेवसुरूपायअयंपिंडःस्वधा० ॥ द्वि०गोत्रअस्मत्प्रमातामहअमुकशर्मन्
रुद्ररूपएत० ॥ इदंगोत्रायास्मत्प्रमातामहायअमुकशर्मणेरुद्ररूपायअयंपिंडः० ॥ द्वि०गोत्रअस्मद्वृद्धप्रमातामहअमुकश-
र्मन्आदित्यरूपएत० ॥ इदंगोत्रायअस्मद्वृद्धप्रमातामहायअमुकशर्मणेआदित्यरूपायअयंपिंडः० ॥ द्वि०गोत्रेअस्मन्माता-
महिअसुकिदेवसुरूपेएत० ॥ इदंगोत्रायैअस्मन्मातामह्यैअमुकिदायैवसुरूपायैअयंपिंडः० ॥ द्वि०गोत्रेअस्मत्प्रमातामहि-
असुकिदेरुद्ररूपेएत० ॥ इदंगोत्रायैअस्मत्प्रमातामह्यैअमुकिदायैरुद्ररूपायैअयंपिंडः० ॥ द्वि०गोत्रेअस्मद्वृद्धप्रमातामहि-
असुकिदेआदित्यरूपेएत० ॥ इदंगोत्रायैअस्मद्वृद्धप्रमातामह्यैअमुकिदायैआदित्यरूपायैअयंपिंडः० ॥ गोत्रेअस्मत्पत्निअमुकि-

देवसुरूपेएत० ॥ इदंगोत्रायैअस्मत्पत्न्यैअमुकिदायैवसुरूपायैअयंपिंडः० ॥ गोत्रअस्मत्तनयअमुकशर्मन्वसुरूपएत० ॥
इदंगोत्रायअस्मत्तनयायअमुकशर्मणेवसुरूपायअयंपिंडः० ॥ गोत्रेअस्मद्दुहितःअमुकिदेवसुरूपेएतत्ते० ॥ इदंगोत्रायैअ-
स्मद्दुहित्रेअमुकिदायैअयंपिंडः० ॥ गोत्रअस्मत्पितृव्यअमुकशर्मन्सपत्नीकससुतवसुरूपएतत्ते० ॥ गोत्रायअस्मत्पितृव्याय-
अमुकशर्मणेसपत्नीकायससुतायवसुरूपायअयंपिंडः० ॥ गोत्रअस्मन्मातुलअमुकशर्मन्सपत्नीकससुतवसुरूपएत० ॥ इदंगो-
त्रायअस्मन्मातुलायअमुकशर्मणेसपत्नीकायससुतायवसुरूपायअयंपिंडः० ॥ गोत्रअस्मद्भ्रातःअमुकशर्मन्सपत्नीकससुतव-
सुरूपएतत्ते० ॥ इदंगोत्रायअस्मद्भ्रात्रेअमुकशर्मणेसपत्नीकायससुतायवसुरूपायअयंपिंडः० ॥ गोत्रेअस्मत्पितृभगिनिअ-
मुकिदेसभर्तृकेससुतेवसुरूपेएतत्ते० ॥ इदंगोत्रायैअस्मत्पितृभगिन्यैअमुकिदायैसभर्तृकायैससुतायैवसुरूपायैअयंपिंडः० ॥
गोत्रेअस्मन्मातृभगिनिअमुकिदेसभर्तृकेससुतेवसुरूपेएतत्ते० ॥ इदंगोत्रायैअस्मन्मातृभगिन्यैअमुकिदायैसभर्तृकायैससुता-
यैवसुरूपायैअयंपिंडः० ॥ गोत्रेअस्मद्भगिनिअमुकिदेसभर्तृकेससुतेवसुरूपेएतत्ते० ॥ इदंगोत्रायैअस्मद्भगिन्यैअमुकिदायै-
सभर्तृकायैससुतायैवसुरूपायैअयंपिंडः० ॥ गोत्रअस्मच्छ्वशुरअमुकशर्मन्वसुरूपएतत्ते० ॥ इदंगोत्रायअस्मच्छ्वशुरायअमु-
कशर्मणेवसुरूपायअयंपिंडः० ॥ गोत्रेअस्मच्छ्वश्रूःअमुकिदेवसुरूपेएतत्ते० ॥ इदंगोत्रायैअस्मच्छ्वश्वेअमुकिदायैवसुरूपा-
यैअयंपिंडः० ॥ गोत्रअस्मद्गुरोअमुकशर्मन्सपत्नीकससुतवसुरूपएतत्ते० ॥ गोत्रायअस्मद्गुरवेसपत्नीकायससुतायवसुरू-

पायअयंपिंडः० ॥ गोत्रअस्मच्छिष्यअमुकशर्मन्वसुरूपएतत्ते० ॥ गोत्रायअस्मच्छिष्यायअमुकशर्मणेवसुरूपायअयंपिंडः० ॥ गोत्रअस्मदासअमुकशर्मन्वसुरूपएतत्ते० ॥ गोत्रायअस्मदासायअमुकशर्मणेवसुरूपायअयंपिंडःस्वधानमःगोदावयांदत्तोस्तु ॥ ॥ पितृवंशेमृतायेचमातृवंशेतथैवच ॥ गुरुश्वशुरबंधूनांयेचान्येबांधवामृताः ॥ येमेकुलेलुप्तपिंडाःपुत्रदारविवर्जिताः ॥ क्रियालोपगताश्चैवजात्यंधाःपंगवस्तथा ॥ विरूपाआमगर्भाश्चज्ञाताज्ञाताःकुलेमम ॥ तेषांपिंडोमयादत्तोह्यक्षय्यमुपतिष्ठतु ॥ १ ॥ आब्रह्मणोयेपितृवंशजातामातुस्तथावंशभवामदीयाः । कुलद्वयेस्मिन्ममदासभूताभृत्यास्तथैवाश्रितसेवकाश्च ॥ मित्राणिशिष्याःपशवश्चवृक्षाःस्पृष्टाश्चदृष्टाश्चकृतोपकाराः ॥ जन्मांतरेयेममसंगताश्चतेभ्यःस्वधापिंडमहंददामि ॥ २ ॥ असिपत्रवनेघोरेकुंभीपाकेचयेगताः ॥ तेषामुद्धरणार्थायइमंपिंडंददाम्यहम् ॥ ३ ॥ उच्छिन्नकुलवंशानांयेषांदाताकुलेनहि ॥ धर्मपिंडोमयादत्तोह्यक्षय्यमुपतिष्ठतु ॥ ४ ॥ हस्तलेपभाजःपितरःप्रीयंतां ॥ इतिप्रपितामहपिंडांतिकेदर्भाग्रेषुलेपभुग्भ्यःकिंचिद्दत्वापितृपिंडसमीपेदर्भमूलेपुकरावघर्षणं ॥ अत्रपितरइत्युक्त्वा ॥ ॐअत्रपि-

१ त्रिस्थलीसेत्वादौतीर्थश्राद्धेपितृवंशेतिश्लोकेमन्त्रेणप्रथम पिंडः । आब्रह्मणोयइतिश्लोकद्वयेनैवमंत्रेणद्वितीय.पिंडः इतिद्वावेवधर्मपिंडावुक्तौ । महालयेतुचत्वार' शिष्टादृतत्वात् । २ महालयश्राद्धेधर्मपिंडविधौक्वापिवचनानुपलंभेपितीर्थश्राद्धेत्रिस्थलीसेत्वादौधर्मपिंडदानविध्युपलंभेन ताताबात्रितयमित्यादिदेवताविषयेतीर्थश्राद्धसादृश्यादत्रापिधर्मपिंडदानविधि शिष्टैरादृतः । ३ आदौविप्राग्निशौचातेभ्यर्चनेविकिरेकृते । पिंडान्युप्यार्चयित्वाचविसृज्यब्राह्मणांस्तथा । आचामेच्छ्राद्धकर्तातुस्थानेष्वेतेषुसप्तसु । इतिसंग्रहकारः । तेनापिंडनिर्वापानंतरउदगावर्तनात्पूर्वचाचमनंनविद्यतेकिंतुगंधादिदानांतसकलमपिपिंडदानप्रयोगंसमाप्याचमनंक्रियतइतिश्राद्धहेमाद्रौश्राद्धाचमनविषये । ४ श्राद्धकाशिकायां । ददातिलेपभागिभ्य.पिंडानाग्रत.सदा ॥ प्रपितांतेचयोदद्यात्तृप्ति.पंचदशाब्दिकी ॥ दर्भमूलेकरावघर्षणमितिच ॥

तरोमादयध्वंयथाभागमावृषायध्वं । अप्रदक्षिणमावृत्य । उदङ्ङास्तआतमनात् । प्रदक्षिणमावृत्यामीमदंतेतिजपति ॥ ॐअमीमदंतपितरोयथाभागमावृषायीषत ॥ पूर्ववदवनेज्य ॥ नीवींविस्रस्य ॥ नमोवइतिषडंजलीन्करोति ॥ ॐनमोवःपितरोरसाय१नमोवःपितरःशोषाय२नमोवःपितरोजीवाय३नमोवःपितरःस्वधायै४नमोवःपितरोघोराय५नमोवःपितरोमन्यवेनमोवःपितरःपितरोनमोवः६ ॥ गृहान्नइतिजपः ॥ गृहान्नःपितरोदत्तसतोवःपितरोदेष्म ॥ एतद्वइत्यपास्यतिसूत्राणिप्रतिपिंडमूर्णादशावावयस्युत्तरेयजमानलोमानिवा । ॐएतद्वःपितरोवासः ॥ त्रीणित्रीणिसूत्राणिप्रतिपिंडंददाति ॥ पिंडमूलेपूर्ज्जमित्यपोनिषिंचति । ॐऊर्जंवहंतीरमृतंघृतंपयःकीलालंपरिस्रुतं । स्वधास्थतर्पयतमेपितॄन् ॥ सव्यं ॥ कुलाभिवृद्ध्यर्थंपिंडेषुपितृपूजनंकरिष्ये ॥ पिंडसंस्थाःपितरःचंदनंस्वधानमः ॥ पिंडसंस्थाःपितरःतिलान्यवाक्षतान्स्वधानमः ॥ पिंड०पुष्पाणि० ॥ पिंड०तुलसी० । पिंड०धूपं ॥ पिंड०दीपं० ॥ पिंड०नैवेद्यं० ॥ पिंड०पूगीफलंतांबूलं० ॥ पिंड०दक्षिणां० ॥ गंधपुष्पधूपदीपनैवेद्यफलतांबूलदक्षिणाद्यर्चनविधेःस्वर्चितमस्तु ॥ अस्तुस्वर्चितम् ॥ आचमनं ॥ आचान्तेपूदकंपुष्पाण्यक्षताक्षय्योदकंचदद्यात् । देवब्राह्मणहस्ते । शिवाआपःसंतु संतुशिवाआपः ॥ सौमनस्यमस्तु

---

१ काण्वानातुविशेष । नमोव.पितर.शुष्माय १ नमोव.पितरस्तपसे २ नमोव पितरोयज्जीवंस्तस्मै ३ नमोवःपितरोरसाय ४ नमोव.पितरोघोरायमन्यवे ५ स्वधायैव.पितरोनमः ६ एतद्वइत्यपास्यतिसूत्राणि ॥ ॐएतद्व पितरोवासोगृहान्नःपितरोदत्त ॥ उदायुषेत्युत्थानं ॥ ॐउदायुषास्वायुषोत्पर्जन्यस्यधामभिः ॥ उदास्थामऽमृतांऽअनु ॥ ऊर्ज्जमित्यपोनिषिञ्चति ॥ ॐऊर्जंव०पितॄन् ॥ इति ॥

अस्तुसौमनस्यं ॥ अक्षतंचारिष्टंचास्तु अस्त्वक्षतमरिष्टंच ॥ धूरिलोचनसंज्ञकानांविश्वेषांदेवानांयद्दत्तंकन्यागतेसवितरिसकृ-
न्महालयापरपक्षिकश्राद्धीयमन्नमुदकंतदक्षय्यमस्तु ॥ अस्त्वक्षय्यं ॥ अपसव्यं ॥ पितृब्राह्मणहस्तेशिवाआपःसंतु संतुशिवा-
आपः ॥ सौमनस्यमस्तुअस्तुसौमनस्यं ॥ अक्षतंचारिष्टंचास्तु अस्त्वक्षतमरिष्टंच ॥ गोत्राणांअस्मत्पितृपितामहप्रपिताम-
हानांअमुकामुकशर्मणांवसुरुद्रादित्यस्वरूणांइत्यादिसंकल्पोक्तवत्षष्ठ्यासर्वान्निर्दिश्ययद्दत्तं कन्यागतेसवितरिसकृन्महालया-
परपक्षिकश्राद्धीयमन्नमुदकंतदक्षय्यमस्तु । अस्त्वक्षय्यं ॥ सव्यं ॥ अघोराःपितरःसंतु । संत्वघोराःपितरः ॥ गोत्रंनोव-
र्धतां । वर्धतांवोगोत्रं ॥ दातारोनोभिवर्धंतां । अभिवर्धंतांवोदातारः ॥ वेदाःवर्धंतां । वर्धंतांवोवेदाः ॥ संततिर्वर्धतां ।
वर्धतांवःसंततिः ॥ श्रद्धाचनोमाव्यगमत् । माव्यगमद्वःश्रद्धा ॥ बहुदेयंचनोस्तु अस्तुवोबहुदेयं ॥ अन्नंचनोबहुभवेत् ।
भवतुवोबह्वन्नं ॥ अतिथींश्चलभेमहि । लभंतांवोतिथयः ॥ याचितारश्चनःसंतु । माचयाचिष्मकंचन ॥ एताआशिषः-
सत्याःसंतु । संत्वेताःसत्याआशिषः ॥ इत्याशिषःप्रतिगृह्य ॥ अपसव्यं ॥ पित्रादिपिंडपङ्क्तेःपश्चिमतःपित्रादिपिंडपङ्क्ति-
समीपभूमौ[2]स्वधावाचनीयान्स[3]पवित्रान्कुशानास्तीर्य ॥ स्वधांवाचयिष्यइतिपृच्छति ॥ ॐस्वधांवाचयिष्ये । विप्रैर्वाच्य-
तामित्यनुज्ञातः ॥ ॐवाच्यतां ॥ ॐपितृभ्यःपितामहेभ्यःप्रपितामहेभ्योमातामहेभ्यःप्रमातामहेभ्योवृद्धप्रमातामहे-
भ्यश्चस्वधोच्यताम् । इमंमंत्रंपठेत् ॥ विप्रैरस्तुस्वधेत्युच्यमाने ॥ ॐअस्तुस्वधा ॥ स्वधावाचनीयेष्वपोनिषिंचत्यूर्जमिति ॥

१ सूत्रानुक्तमपीदमाशीश्चतुष्टयंहेमाद्रौकाशिकायामधिकमुक्तमस्ति ॥ २ स्वधावाचनीयान्स्वधावाचनीयसंज्ञकान् । ३ सपवित्रान् साग्रानित्यर्थः ॥

ॐ ऊर्ज्जंवहंतीरमृतंघृतंपयःकीलालंपरिस्रुतम् । स्वधास्थतर्पयतमेपितॄन् ॥ न्युब्जंपात्रमुत्तानंकृत्वा ॥ यथाशक्तिदक्षिणांदद्याद्ब्राह्मणेभ्यः । अस्यश्राद्धस्यफलप्रतिष्ठासिद्ध्यर्थं । सव्यं । देवानांसुवर्णं । अपसव्यं । पितॄणांरजतं । तदभावेकिंचिद्व्यावहारिकंद्रव्यं ॥ श्राद्धभुक्तेभ्योब्राह्मणेभ्यःदक्षिणाःपांतु । पांतुदक्षिणाः ॥ [1]सप्तव्याधादशार्णेषुमृगाःकालंजरेगिरौ ॥ चक्रवाकाःशरद्वीपेहंसाःसरसिमानसे ॥ तेपिजाताःकुरुक्षेत्रेब्राह्मणावेदपारगाः ॥ प्रस्थितादीर्घमध्वानंयूयंकिमवसीदथ ॥ शमीपत्रप्रमाणेनपिंडंदद्याद्गयाशिरे ॥ उद्धरेत्सप्तगोत्राणांकुलमेकोत्तरंशतं ॥ सव्यं ॥ आत्मालंकारः ॥ ततोनमस्कारः ॥ अथयुदेवप्रजामिच्छेततेनपितृभ्यऋणंजायतेतुभ्येभ्यएतत्करोतियदेषां[2]संतताऽव्यवच्छिन्नाप्रजाभवति । सुप्रजाभव ॥ गोत्रान्नोवर्द्धतां ॥ गोत्राद्गोत्रस्याभिवृद्धिरस्तु ॥ अपसव्यं ॥ अयोध्यामथुरामायाकाशीकांचीअवंतिका । पुरीद्वारावतीज्ञेयाःसप्तैतामोक्षदायिकाः ॥ फल्गुतीर्थेनरःस्नात्वादृष्ट्वादेवंगदाधरम् ॥ आत्मानंतारयेद्यस्तुदशपूर्वान्दशापरान् ॥ पंचक्रोशंगयाक्षेत्रंक्रोशमेकंगयाशिरः ॥ यत्रयत्रस्मरेन्नित्यंपितॄणांदत्तमक्षयम् ॥ स्थाल्यामवधाय ॥ ॐ तद्विष्णोःपरमंपदं०तंतम् ॥ १ ॥ ॐ तद्विप्रासो०यत्परमंपदम् ॥ २ ॥ सव्यं ॥ अवजिघ्रति । अपसव्यं ॥ संचरमभ्युक्ष्य । सव्यं ॥ विश्वेदेवाःप्रीयंतामितिदैवे

---

१ दक्षिणादानोत्तरंसप्तव्याधाइतिपठेदितिश्राद्धगणपतौ । इमेश्लोकाहरिवंशस्थाः । २ वायवीयमिदं ॥ ३ सप्तगोत्राणितु । पिता २४ माताच २० भार्याच १६ भगिनी १२ दुहिता ११ तथा ॥ पितृ १० मातृष्वसा ८ चैव सप्तगोत्राणिवैविदुरिति ॥ एषांगोत्राणामेकोत्तरशतंकुलंपुरुषाइत्यर्थः । सत्वानिविंशतिनृपाद्वेदशैकादशादश ॥ अष्टावितिचगोत्राणाकुलमेकोत्तरंशतं ॥ तत्त्वानिचतुर्विंशतिः । तेचद्वादशपूर्वाद्वादशपराः । एवमग्रेपि ॥

वाचयित्वा ॥ ॐविश्वेदेवाःप्रीयंतामितिब्रूहिब्रूतं ब्रूत ॥ ॐविश्वेदेवाःप्रीयंतां । वाजेवाजेवतेतिविसृज्य ॥ ॐवाजेवा-
जेवतवाजिनोनोधनेषुविप्राअमृताऋतज्ञाः । अस्यमध्वःपिबतमादयध्वंतृप्तायातपथिभिर्देवयानैः ॥ उत्तिष्ठंतुपितरः । स-
व्येनविश्वेदेवैःसह ॥ अपसव्यं । आमावाजस्येत्यनुव्रज्य ॥ ॐआमावाजस्यप्रसवोजगम्यादेमेद्यावापृथिवीविश्वरूपे ॥
आमागंतांपितरामातराचामासोमोअमृतत्वेनगम्यात् ॥ प्रदक्षिणीकृत्यउपविशेत् तिलोदकंत्यक्त्वा दर्भपवित्रंविसृज्य ॥
सव्यं ॥ स्वादुषंसदःपितरोवयोधाःकृच्छ्रेश्रितःशक्तीऽवंतोगभीराः ॥ चित्रसेनाइषुबलाअमृध्राःसुतोवीराऽउरवो-
व्रातसाहाः ॥ ब्राह्मणासःपितरःसोम्यासः शिवेनोद्यावापृथिवीऽअनेहसा ॥ पूषानःपातुदुरितादृतावृधोरक्षामाकिर्नोअघशंस-
सईशत ॥ दीर्घायुत्वमाशास्तइतिसायासुत्रोत्तरादेवयज्यातदिहप्रत्यक्षंदीर्घायुत्वम् ॥ आयुःप्रजांधनंविद्यांस्वर्गमोक्षसु-
खानिच ॥ प्रयच्छंतुतथाराज्यंपितातुभ्यंपितामहः ॥ यंकामंकामयतेसोस्मैकामःसमृध्यते ॥ समस्तपितॄणांप्रसादोस्तु स-
मस्तपितृप्रसादाद्धनकनकसमृद्धिरस्तु । तथास्तु ॥ अद्यमेसफलंजन्मभवत्पादाब्जवंदनात् ॥ अद्यमेवंशजाःसर्वेयातावोऽनु-
ग्रहाद्दिवम् ॥ यच्चशाकादिदानेनक्लेशितायूयमीदृशाः ॥ तत्क्लेशजातंचित्तात्तुविस्मृत्यक्षंतुमर्हथ ॥ वसिष्ठवामदेवसदृशाब्रा-
ह्मणाः ॥ सूर्योपरागसदृशंपर्व ॥ मयायत्कृतंसमस्तपितॄनुद्दिश्यकन्यागतेसवितरिसकृन्महालयापरपक्षिकश्राद्धं तन्मध्येआ-

१ इयंपुनराशी.शिष्टसंप्रदायात् । २ इदंरामवाजपेयिपद्धतौ ।

सनभाजनद्रव्यदक्षिणान्यूनातिरिक्तविधेः परिपूर्णतास्त्वितिभवंतोब्रुवंतु । अस्तुपरिपूर्णता ॐ आमंद्रैरिंद्र हरिभिर्याहिमयूर-रोमभिः ॥ मात्वाकेचिन्नियमन्विन्नपाशिनोतिधन्वेवताइँ ॥ इंहि ॥ एवेदिंद्रंवृषणंवज्रबाहुंवसिष्ठासोऽअभ्यर्चंत्यर्कैः ॥ सनः-स्तुतोवीरवद्धातुगोमद्युयंपातस्वस्तिभिःसदानः ॥ ॐ इमावेवगोतमभरद्वाजावयमेवगोतमोयंभरद्वाजइमावेवविश्वामित्रज-मदग्नीअयमेवविश्वामित्रोयंजमदग्निरिमावेववसिष्ठकश्यपावयमेववसिष्ठोयंकश्यपोवागेवात्रिर्वाचाह्यन्नमद्यतेतिर्हवैनामैतद्य-दत्रिरितिसर्वस्यात्ताभवतिसर्वमस्यान्नंभवतियएवंवेद ॥ तेषांवाऽउभयतोनमस्काराअन्येन्यतरतोनमस्काराअन्येतेहतेघोरत-राऽअशांततरायऽउभयतोनमस्काराऽउभयतएवैनानेतद्यज्ञेननमस्कारेणशमयति ॥ अनेनकन्यागतेसवितरिसकृन्महालया-परपक्षिकश्राद्धयज्ञेनसमस्तपितृस्वरूपीजनार्दनोवासुदेवःप्रीयतांनमम ॥ यस्यस्मृत्या० ॥ इतिमहालयश्राद्धप्रयोगः ॥

अथकातीयसूत्रोक्तःपार्वणश्राद्धप्रयोगः ॥ आचमनं । प्राणायामः ॥ पवित्रधारणं । अपसव्यं । दक्षिणेनीवीबंधः । देशकालौसंकीर्त्य । गोत्राणांअस्मत्पितृपितामहप्रपितामहानांअमुकामुकशर्मणांसपत्नीकानांवसुरुद्रादित्यस्वरूपाणां । द्वि-तीयगोत्राणांअस्मन्मातामहप्रमातामहवृद्धप्रमातामहानांअमुकामुकशर्मणांसपत्नीकानांवसुरुद्रादित्यस्वरूपाणांदर्शश्राद्धंपा-र्वणेनविधिनासद्यःकरिष्येइतिसंकल्पः ॥ तत्रादौवैकल्पिकपदार्थावधारणंदेवताभिध्यानंच । युग्माअयुग्माद्विजाः ।

१ इदमपिशिष्टसंप्रदायात् ।

तत्रद्वौद्वौदैवे । त्रयस्त्रयःपित्र्येविप्राः । तंत्रेणद्वौदैवेएकैकःपित्र्येइतिवा । प्रश्नेषुपंक्तिमूर्धन्यःसर्वेवा । औदुंबराणि-
पत्रपुटान्यर्घ्यपात्राणिवा । वैष्णव्यर्चा । यजुषावाऽन्नेंगुष्ठावगाहनं । उष्णस्यस्विष्टस्यान्नस्यदानं शक्त्यावा । गाय-
त्र्यास्त्रिःसकृद्वाजपः । आचांतेपुपिंडदानमनाचांतेषुवा । सूत्राणांदानं । ऊर्णादशानांवा । एतान्वैकल्पिकपदार्था-
नूअस्मिन्कर्मणिकरिष्ये ॥ अथदेवताभिध्यानं । अग्निंकव्यवाहनंचरुणा । सोमंपितृमंतंचरुणा । अस्मत् पितरं-
सपत्नीकं अस्मत्पितामहंसपत्नीकं अस्मत्प्रपितामहंसपत्नीकं अस्मन्मातामहंसपत्नीकं अस्मत्प्रमातामहंसपत्नीकं
अस्मद्वृद्धप्रमातामहंसपत्नीकं अस्मिन्कर्मणिचरुपिंडैरहंयक्ष्ये । स्वार्थमासनत्रयं । तत्रैकंवैश्वदेवब्राह्मणसमीपे । अपरं-
पित्र्यब्राह्मणसमीपे । तृतीयमन्यत्रोपवेशनार्थं । उपग्रहकुशाः । आमंत्रितब्राह्मणसंख्यान्यासनानि देवानांपश्चिमतउद-
क्संस्थानि ॥ पितृणांदक्षिणतउदक्संस्थानि । अथपात्रासादनं । आसनास्तरणदर्भाः । अवकिरणतिलाः । देव-
तासंख्यान्यर्घ्यपात्राणि । अर्घ्यपवित्राणिच । तत्रद्वेद्वेपवित्रेदैवे त्रीणित्रीणिपित्र्ये । अर्घ्यार्थंआपः । अर्घ्यार्थास्तिलाः ।
चंदनं । पुष्पाणि । धूपः । दीपः । वासांसितन्निष्क्रयंवा ॥ अग्नौकरणान्नपात्रं । आज्यं । अवकिरणतिलाः ।
उत्तरापोशनापः । कुशाः । पिंडान्नपात्रं । अवनेजनोदपात्रं । उपमूलसकृदाच्छिन्नानि । पिंडसंख्यानित्रीणित्री-
णिसूत्राणि । ऊर्णादशावा । वयस्युत्तरेयजमानलोमानिवा । निषेकापः । उदकं । पुष्पाणि । अक्षताः । अक्षय्योदकं ।
स्वधावाचनीयाःसाग्राःकुशाः । आपः । दक्षिणाचेति ॥ इतिपात्रासादनम् ॥ आसनेषुदर्भानास्तीर्य । पुरूरवार्द्रवौवि-

श्वेदेवाः इदमासनमास्यतां । आसीनाःस्मः । अपसव्यं । पितरःइदमासनमास्यतां । आसीनाःस्मः । सव्यं विश्वान्देवान्-
आवाहयिष्येइतिपृच्छति । आवाहयइत्यनुज्ञातः । ॐविश्वेदेवासआगतशृणुतामइमंहवम् । एदंबर्हिर्निषीदत ॥ इत्यावाह्य ।
प्रदक्षिणंविप्रपुरतःतूष्णींतिलानवकीर्य । जपति । ॐविश्वेदेवाःशृणुतेमंहवंमेयेअंतरिक्षेयउपद्यविष्ठ ॥ येअग्निजिह्वा-
उतवायजत्रा आसद्यास्मिन्बर्हिषिमादयध्वम् ॥ अपसव्यं । पितॄन्आवाहयिष्यइतिपृच्छति । आवाहयइत्यनुज्ञातः ।
ॐउशंतस्त्वानिधीमह्युशंतःसमिधीमहि । उशन्नुशतआवहपितॄन्हविषेअत्तवे ॥ इत्यनयावाह्य । अप्रदक्षिणंविप्रपुरतस्तू-
ष्णींतिलानवकीर्य । आयंतुनइतिजपित्वा । ॐआयंतुनःपितरःसोम्यासोग्निष्वात्ताःपथिभिर्देवयानैः ॥ अस्मिन्यज्ञेस्व-
धयामदंतोधिब्रुवंतुतेवत्वस्मान् ॥ आवाहनादिवाग्यतओपस्पर्शनात् । आमंत्रिताश्चैवं । विहितेतरानुदीरणंवाग्यमनं ।
भोजनोत्तरकालंब्राह्मणेभ्यःसकृत्सकृदुदकदानमुपस्पर्शनंच । वाग्यमलोपेवैष्णवमन्त्रजपोविष्णुस्मरणंवाप्रायश्चित्तं । सव्यं ।
यज्ञियवृक्षचमसेषुपवित्रांतर्हितेष्वेकैकस्मिन्नपआसिंचतिशंनोदेवीरिति । सौवर्णराजतौदुंबरखड्गमणिमयानांपात्राणामन्य-
तमेषुयानिवाविद्यंतेपत्रपुटेषुवा । अर्घपात्रपूरणंतिलप्रक्षेपांतं एकःपदार्थः । तत्रपदार्थानुसमयेनप्रथमंवैश्वदेविकार्घपात्र-
पूरणं । पित्र्यर्घपात्रपूरणंतुपदार्थावयवेन । वैश्वदेविकविप्रपुरतःप्रागग्रंएकमेवार्घपात्रमासाद्य । तस्मिन्प्रागग्रंपवित्रंनिधाय ।
ॐशंनोदेवीरभिष्टयआपोभवंतुपीतये । शंयोरभिस्रवंतुनः ॥ इत्यपआसिच्य । एकैकस्मिन्नेवतिलानावपतितिलोसीति ।

ॐतिलोसिसोमदैवत्योगोसवोदेवनिर्मितः। प्रत्नमद्भिःपृक्तःस्वधयापितॄन्लोकान्प्रीणाहिनःस्वाहा ॥ अपसव्यं। पित्रादि-
विप्रपुरःप्रदेशेदक्षिणाग्राणिदक्षिणसंस्थान्यर्घपात्राण्यासाद्य तेभ्यःप्राच्यांमातामहाद्यर्घपात्राणितथैवासाद्य अर्घपात्रेषुत्री-
णित्रीणिदक्षिणाग्राणिपवित्राण्यासादयेत् ॥ ॐशंनोदेवी० इतिपितृतीर्थेनएकैकस्मिन्नपआसिंचति। प्रतिपात्रंमन्त्रावृत्तिः।
एकैकस्मिन्नेवतिलानावपति। ॐतिलोसिसोम०स्वाहा। अत्रस्वाहाकारांतएवमन्त्रोनस्वधापदोहःप्रकृतित्वात्। प्रकृताव-
समवेतत्वेनमन्त्रस्यविकृतावपिनोहः। अथवाआम्नानसामर्थ्यादेवसर्वत्रस्वाहाकारांतएवमन्त्रः। यथाकर्मापवर्गसमिदाधा-
नादौ ॥ प्रतिप्रक्षेपंमन्त्रावृत्तिः। सव्यं। एकैकस्यैकैकेनददातिसपवित्रेषुहस्तेषुयादिव्याइति। अर्घपात्रस्थेपवित्रेवैश्वदेविकाद्य-
विप्रकरेप्रागग्रेनिधायअर्घपात्रंचादाय। ॐयादिव्याआपःपयसासंबभूवुर्याअंतरिक्षाउतपार्थिवीर्याः। हिरण्यवर्णायज्ञि-
यास्तानआपःशिवाःशंस्योनाःसुहवाभवंतु ॥ पुरूरवार्द्रवौविश्वेदेवाःएषवोर्घः। इतिसपवित्रहस्तेतत्पात्रस्थितंउदकंकिंचि-
न्निनीयतद्धस्तात्तेपवित्रेआदायतदधिष्ठानभूतद्वितीयविप्रकरेनिवेश्ययादिव्याइतिमन्त्रेणअर्घपात्रस्थितोदकंकिंचिन्निनयेत्।
एवंएकदेवतासंबंधेनयावंतोब्राह्मणास्तावतांसपवित्रेषुहस्तेषुयादिव्याइतिमन्त्रावृत्त्यातत्पात्रगतोर्घःप्रतिपाद्यः। विप्रैकत्वे-
तुसकलंअर्घोदकंएकस्यैवकरेनिनयेदिति। अपसव्यं। पित्रर्घपात्रस्थितानिपवित्राणिपित्रधिष्ठानभूतविप्रकरेदक्षिणाग्राणिनि-
वेश्यअर्घपात्रंचादाय। ॐयादिव्याआप० भवंतु। अमुकसगोत्रअस्मत्पितःअमुकशर्मन्सपत्नीकवसुरूपएषतेर्घः इत्यर्घदानं।

एवमग्रे। अमुकस०अस्मत्पितामह०। अस्मत्प्रपितामह०। अस्मन्मातामह। अस्मत्प्रमातामह। अस्मद्वृद्धप्रमातामह॥ एषते-
र्घः। अस्त्वर्घः॥ विप्रैकत्वपक्षेतुएकस्मिन्नेवविप्रकरेप्रतिपात्रंएकैकंपुरुषंउद्दिश्यदद्यात्। प्रथमेपात्रेसंस्रवान्समवनीय। ॐपि-
तृभ्यःस्थानमसीतिन्युब्जंपात्रंनिदधाति। प्रथमंपात्रंपितृपात्रं। संस्रवाःपित्रादिपात्रसङ्घाअबादयः। पितृब्राह्मणवामपार्श्वे-
अदूरेअसंचरप्रदेशे। तत्पात्रंआदक्षिणादानान्नोद्धरेन्नचालयेच्च॥ सव्यं॥ अत्रगंधपुष्पधूपदीपवाससांचप्रदानं। अत्रेत्यस्मिन्नव-
सरे। गंधादीनिपदार्थजातानिदैवपूर्वंसर्वेषुब्राह्मणेषुसंनिधाय्य। पुरूरवार्द्रवौविश्वेदेवाःइमानिगंधपुष्पधूपदीपवासांसिवोनमः
इत्युक्त्वासंकल्पजलंदेवविप्रपुरतोभूमौप्रक्षिपेत्॥ अपसव्यं। अमुकसगोत्रअस्मत्पितःअमुकशर्मन्सपत्नीकवसुरूपइमानि-
गंधपुष्पधूपदीपवासांसितेस्वधानमःइत्युच्चार्यसंकल्पजलंविप्रपुरतःप्रक्षिपेत्। एवमग्रे। विप्रैकत्वपक्षेतुपित्रादित्रिकंमातामह-
हादित्रिकंचपूर्ववदुच्चार्य। इमानिगंधपुष्पधूपदीपवासांसिवःस्वधानमइतिविशेषः। ततोद्विजाललाटेचंदनेनऊर्ध्वपुंड्रंकुर्युः।
तिर्यक्पुंड्रधारणस्यप्रतिषिद्धत्वात्। पुष्पमालापिशिखायामेवधार्या। कंठेशिरसिचमालाधारणस्यप्रतिषिद्धत्वात्। सव्यं॥
कुशतिलाद्यपसारणं। ब्राह्मणानांअग्रेभोजनस्थानेनीवारचूर्णगौरमृदाभस्मनाजलेनवासर्वत्रदैवेपित्र्येचतुरस्रमंडलकरणं।
तदुपरिभोजनपात्रासादनं॥ अग्नौकरणान्नपात्रे वैश्वदेवादन्नादुद्धृत्यघृताक्तमन्नंपृच्छत्यग्नौकरिष्यइति॥ अपसव्यं॥ भव-
दनुज्ञयाविप्रपाणावग्नौकरणंकरिष्ये। कुरुष्वेत्यनुज्ञातःपिंडपितृयज्ञवद्धुत्वा। आहुतिपर्याप्तमन्नंपाणिनैवादाय। पितृप-
ङ्क्तिमूर्धन्यपाणौसकुशे। ॐअग्नयेकव्यवाहनायस्वाहा। इदमग्नयेकव्यवाहनायनमम॥ ॐसोमायपितृमतेस्वाहा। इदं-

सोमायपितृमतेनमम ॥ इत्याहुतिद्वयंदद्यात् ॥ तूष्णीमाज्येनपात्राण्यभिघार्यसव्यापसव्येनहुतशेषंदत्वा ॥ सव्यं ॥ पात्र-
मालभ्यजपति ॥ ॐपृथिवितेपात्रंद्यौष्पिधानंब्राह्मणस्यमुखे अमृतेअमृतंजुहोमिस्वाहा । वैष्णव्यर्चायजुषावाङ्गुष्ठमन्ने-
वगाह्य । ॐइदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् । समूढमस्यपाꣳसुरे ॥ ॐविष्णोहव्यꣳरक्षेतिवा ॥ अपसव्यं ॥ ॐपृ-
थिवितेपात्रं०स्वाहा । ॐइदंविष्णु०सुरे । विष्णोहव्यꣳरक्षेतिवा । अप्रदक्षिणमपहताइतितिलान्विकीर्यपितृब्राह्मणाग्रतः ।
ॐअपहताअसुरारक्षाꣳसिवेदिषदः ॥ सव्यं । उदकोपस्पर्शः । उष्णꣳस्विष्टमन्नंदद्यात् । शक्त्यावा । दक्षिणेनपाणिना-
कुशकुसुमतिलजलान्यादाय । वामपाणिनापात्रमालभ्य । पुरूरवार्द्रवौविश्वेदेवाःएतद्वोन्नंदत्तंदास्यमानंचब्राह्मणस्यमुखे-
आतृप्तेःअमृतरूपेणस्वाहासंपद्यतांनमम ॥ इतिपात्रपुरतःसंकल्पजलंभूमौप्रक्षिपेत् । अपसव्यं ॥ अमुकसगोत्रअस्मत्पितः-
अमुकशर्मन्वसुरूप एतत्तेन्नंदत्तंदास्यमानंचब्राह्मणस्यमुखेआतृप्तेःअमृतरूपेणस्वधासंपद्यतांनमम ॥ एवमग्रेपि ॥ सव्यं ॥
समाचाराद्ब्रह्मार्पणमित्यादिपठेत् ॥ ततोविप्रैःपर्युक्षणादिप्राणाहुत्यंताःसर्वेपिस्मृतिविहिताभोजननियमाविधेयाः । के-
वलंभूमौबलिहरणमेवनकार्यंतत्रमहादोषश्रवणात्इतिहेमाद्रिस्मृतिरत्नावल्यादयः । श्राद्धकाशिकाकारस्तुवैश्वदेविकैर्बलिह-
रणंकार्यमेवतेषांविहितत्वादित्याह । अपेक्षितंयाचितव्यमितिप्रार्थना ॥ अश्नत्सुजपेद्व्याहृतिपूर्वांगायत्रीꣳसप्रणवाꣳसकृ-
त्त्रिर्वाराक्षोघ्नीःपित्र्यमन्त्रान् पुरुषसूक्तमप्रतिरथमन्यानिचपवित्राणिजपित्वा । तृप्तान्ज्ञात्वा ॥ अपसव्यं पितृपंक्तिमूर्ध-

न्यपुरतः अन्नंप्रकीर्य । सव्यं ॥ आचम्य । सव्यापसव्येनसकृत्सकृदपोदत्वा ततःसर्वेषांवाग्विसर्गःयजमानस्यच ॥ पूर्ववद्गायत्रींजपित्वा। मधुवातेतितृचः मधुमधुमधुइतिच । ततःसव्यापसव्येनतृप्ताःस्थइतिपृच्छति । तृप्ताःस्मइत्यनुज्ञातः शेषमन्नमनुज्ञाप्य । शेषमन्नंकिंक्रियतां । इष्टैःसहभुज्यतां ॥ पिंडान्नपात्रेसर्वमन्नमेकतउद्धृत्योच्छिष्टसमीपेदर्भेषुत्रींस्त्रीन्पिंडानवनेज्यदद्यात् ॥ आचांतेष्वित्येके॥ अपसव्यं ॥ दक्षिणेनोल्लिखत्यपहताइति । कुशैः । ॐअपहता० । सव्यं। उदकोपस्पर्शः । अपसव्यं । उदपात्रेणावनेजयत्यपसव्यꣳसव्येनवोद्धरणसामर्थ्यादसाववनेनिक्ष्वेतियजमानस्यपितृप्रभृतींस्त्रीन् ॥ अमुकसगोत्रअस्मत्पितःअमुकशर्मन्सपत्नीकवसुरूपअवनेनिक्ष्व । एवमग्रेपि ॥ उपमूलꣳसकृदाच्छिन्नानिलेखायांकृत्वायथावनिक्तंपिंडान्ददात्यसावेतत्तइति ॥ अमुकसगोत्रअस्मत्पितःअमुकशर्मन्सपत्नीकवसुरूपएतत्तेन्नꣳस्वधा। इदंगोत्रायअस्मत्पित्रेअमुकशर्मणेसपत्नीकायवसुरूपायनमम । एवमग्रे० ॥ हस्तलेपभाजःपितरःप्रीयंतां । इतिपिंडाधारदर्भमूलेषुहस्तावघर्षणेनलेपोन्मार्जनं । ततःकरप्रक्षालनं । सव्यं । आचम्य। अपसव्यं । अत्रपितरइत्युक्त्वा । ॐअत्रपितरो० ॥ अप्रदक्षिणमावृत्यउदङ्ङास्तआतमनात् । प्रदक्षिणमावृत्यामीमदंतेतिजपति । ॐअमीमदंत० ॥ अवनेज्यपूर्ववत् । नीवींविस्रꣳस्यनमोवइत्यंजलिंकरोति । ॐनमोवःपितरोरसाय १ ॐनमोवःपितरःशोषाय २ ॐनमोवःपितरोजीवाय ३ ॐनमोवःपितरःस्वधायै ४ ॐनमोवःपितरोघोराय ५ ॐ नमोवःपितरोमन्यवे नमोवःपितरः-

पितरोनमोवः ६ । गृहान्नइतिजपः । ॐगृहान्नः पितरोदत्तसतोवः पितरोदेष्म । एतद्वइत्यपास्यतिसूत्राणिप्रतिपिंडंऊर्णा-दशावावयस्युत्तरेयजमानलोमानिवा ॥ ॐएतद्वः पितरोवासः । प्रतिपिण्डंमन्त्रावृत्तिः । पिण्डाधारदर्भमूलेषु । ऊर्जंमित्यपोनिषिंचति । ॐऊर्जंवहंती० ॥ नात्रमन्त्रावृत्तिः । सकृत्पठितेनैवसर्वप्रकाशनसंभवात् । सव्यं । समाचारात्पिंडपूजनं । अनयापूजयापिण्डार्चनविधेःस्व०अस्तुस्वर्चितं ॥ आचांतेषूदकंपुष्पाण्यक्षतानक्षय्योदकंचदद्यात् । देवब्राह्मणहस्तेशिवा-आपःसंतु । संतुशिवाआपः । सौमनस्यमस्तु । अस्तुसौमनस्यं । अक्षतंचारिष्टंचास्तु । अस्त्वक्षतमरिष्टंच । पुरूरवार्द्रवसंज्ञकानांविश्वेषांदेवानांदत्तंपार्वणश्राद्धमक्षय्यमस्तु । अस्त्वक्षय्यं । अपसव्यं । पितृब्राह्मणहस्ते ॥ शिवाआपःसंतु । संतुशिवा-आपः । सौमनस्यमस्तु । अस्तुसौमनस्यं । अक्षतंचारिष्टंचास्तु अस्त्वक्षतमरिष्टंच । अमुकसगोत्राणां । अस्मत्पितृपितामहप्र-पितामहानां । अमुकामुकशर्मणांसपत्नीकानांवसुरुद्रादित्यस्वरूपाणां ॥ अमुकसगोत्राणांअस्मन्मातामहप्रमातामहवृद्धप्रमा-तामहानांअमुकशर्मणांसपत्नीकानांवसुरुद्रादित्यस्वरूपाणांदत्तंपार्वणश्राद्धमक्षय्यमस्तु । अस्त्वक्षय्यं । इत्यक्षय्योदकदानं ॥

---

१ काण्वानां तु ॐनमोव पितर शुष्माय १ ॐनमोव पितरस्तपसे २ ॐनमोव.पितरोयज्जीवंतस्मै ३ नमोव.पितरोरसाय ४ ॐनमोव.पितरोघोरायमन्यवे ५ ॐस्वधायैव पितरोनम ६ इतिषडंजलिकरणं । एतद्वइत्यपास्यतिसूत्राणि ॐएतद्व पितरोवासोगृहान्न पितरोदत्त । तूष्णींपिंडोखावघ्राणं उदायुषेत्युत्थाय ॐ उदा-युषास्वायुषोत्पर्जन्यस्यधामभिः ॥ उदस्थाममृतांअनु । उपविश्य । समाचारात्पिंडपूजनम् ॥ तत्रश्रुतिः—गृहान्न.पितरोदत्तेत्याहैषोहैतस्याशी.कर्मणोगृहाणामुहवैपितरईशते-तस्मादाहोगृहान्न.पितरोदत्तेत्यथोखामवजिघ्रतिसयजमानभागइति ।

सव्यं । कृतांजलिराशिषःप्रार्थयेत् । अघोराःपितरःसंतु । संतु इतिप्रतिवचनं । गोत्रंनोवर्धतां । वर्धतां इतिप्रतिवचनं । दाता-रोनोभिवर्धंतांवेदाःसंततिरेवच । श्रद्धाचनोमाव्यगमद्बहुदेयंचनोस्तु । अस्त्विवतिप्रतिवचनं ॥ इत्याशिषःप्रतिगृह्य । पित्रादि-पिंडपंक्तेःपश्चिमतःपिण्डपंक्तिसमीपेभूमौस्वधावाचनीयान्सपवित्रान्कुशानास्तीर्य । स्वधांवाचयिष्यइतिपृच्छति । वाच्यता-मित्यनुज्ञातः । ॐपितृभ्यःपितामहेभ्यःप्रपितामहेभ्योमातामहेभ्यःप्रमातामहेभ्योवृद्धप्रमातामहेभ्यश्चस्वधोच्यतां । ॐअ-स्तुस्वधा । अस्तुस्वधेत्युच्यमानेस्वधावाचनीयेष्वपोनिषिंचत्यूर्जमिति ॥ ॐऊर्जंवहंती० ॥ उत्तानंपात्रंकृत्वायथाशक्तिद-क्षिणांदद्याद्ब्राह्मणेभ्यः । सव्यापसव्येनदक्षिणादानं । अस्यश्राद्धस्यफलप्रतिष्ठासिद्ध्यर्थंइमांदक्षिणांतुभ्यमहंसंप्रददे । स्थाल्यां-पिण्डानवधाय ॥ सव्येनावजिघ्रति । विश्वेदेवाःप्रीयंतामितिदैवेवाचयित्वा । ॐविश्वेदेवाःप्रीयंतामितिब्रूहि(ब्रूतंब्रूत) । ॐविश्वेदेवाःप्रीयंतां । ततःशिष्टाचारात्वसिष्ठवामदेवसदृशाब्राह्मणाःअद्यअमुकमासेअमुकपक्षेअमुकतिथौमयायत्कृतंपा-र्वणश्राद्धंतन्मध्येयन्न्यूनंअयथातिरिक्तंचतत्सर्वंपरिपूर्णमस्त्विवतिभवंतोब्रुवंतु । अस्तुपरिपूर्णं । ततोवाजेवाजेवतेतिमन्त्रावृ-त्त्याकुशाग्रेणवैश्वदेविकान् ब्राह्मणान्विसृज्य । अपसव्यंपितृब्राह्मणांश्चतथैवविसर्जयेत् । आमावाजस्येत्यनुव्रज्य । ॐआमा-वाजस्य० । गम्यात्० । ब्राह्मणान्प्रदक्षिणीकृत्य । सव्यं । उपविशेत् ॥ अनेनास्मत्पितुःपार्वणदर्शश्राद्धाख्येनकर्मणाभगवा-न्पितृस्वरूपीजनार्दनोवासुदेवःप्रीयतां ॥ इतिकातीयसूत्रकर्कभाष्यकर्कानुगपदार्थदीपिकानुसारीपार्वणश्राद्धप्रयोगः ॥

अथचटश्राद्धम् ॥ सर्वथाब्राह्मणालाभेतुदर्भबटून्ब्राह्मणस्थानेपरिकल्प्ययथास्थानंनिवेश्यनिमन्त्रणादिविसर्जनां तंप्रै-

षानुप्रैषसंयुक्तंसकलंश्राद्धंयथाविधिकार्यम् ॥ इयांस्तुविशेषः ॥ ननियमश्रावणंतस्यदृष्टार्थत्वात् ॥ अनुप्रैषाःस्वयंकार्याः ॥ हुतशेषेस्वांगुष्ठावगाहनंहुतशेषसंस्कारत्वात् ॥ परिविष्टान्नंतुब्राह्मणायगवेवादेयं अप्सुवातदभावेप्रक्षेपणीयं । नाचांतेषूद-कादिदानं । नाशिषांप्रतिग्रहणं । प्रैषानुप्रैषरूपत्वेपितत्प्रतिग्रहणस्यब्राह्मणसकाशादेवोचितत्वात् ॥ नदक्षिणादानं । ब्राह्मणोद्देशेनविहितत्वात् । देवतोद्देशपक्षेतुभवत्येवदक्षिणादानम् । अस्मिन्पक्षेअन्नस्यदक्षिणायाअपिश्राद्धान्नभोजनकर्त-रिब्राह्मणेप्रतिपत्तिः । दक्षिणादानेदेवतोद्देशपक्षःशाखांतरपरः । दर्भबटूनांप्राङ्मुखोदङ्मुखतादर्भाग्रस्यमुखकल्पनयाज्ञे-याइतिश्राद्धखंडेहेमाद्रौदोंढुमिश्रपद्धतौचस्पष्टं । दर्भबटुनिर्माणेचनदर्भसंख्यानियमः । तदुक्तंछंदोगपरिशिष्टेकात्यायनेन ॥ यज्ञवास्तुनिमुष्ट्यांचस्तंबेदर्भबटौतथा । दर्भसंख्यानविहिताविष्टरास्तरणेषुचेति ॥ दर्भचटौतथेतिक्वचित्पाठः ॥ पंचाशता-भवेद्ब्रह्मातदर्धेनतुविष्टरइतिपरिशिष्टेब्रह्म—विष्टरादौदर्भसंख्याउक्तास्तिअतश्चदर्भसंख्यायाःसंभवासंभवाभ्यांव्यवस्थितोविक-ल्पइतिनारायणपद्धतौ ॥ इतिअनंतदेवविरचितरुद्रकल्पद्रुमेचटश्राद्धप्रयोगः ॥

अथपिण्डदानमात्र[1]प्रयोगः ॥ आचमनं ॥ प्राणायामः ॥ पवित्रधारणं ॥ अपसव्यं । दक्षिणाभिमुखता॥दक्षिणेनीवी-बंधः ॥ देशकालौसंकीर्त्य । अमुकसगोत्राणामित्यादि । अमुकश्राद्धंअन्नपिंडैरहंकरिष्ये ॥ पात्रासादनं ॥ उल्लेखनकुशः ।

१ देवीपुराणे श्राद्धाशक्तौ । पिण्डदानंतुतच्छस्तंपितॄणांचातिवल्लभमितिपिण्डदानमात्रंपृथगुक्तं ॥ विष्णुपुराणे । अकुर्वन्वित्तशाठ्यंयःपिण्डान्नोनिर्वपिष्यतीतिपिण्डदान-मात्रमुक्तं ॥

अवनेजनोदकपात्रं । उपमूलसकृदाच्छिन्नानिबर्हींषि । पिंडान्नपात्रं । पिंडहविः । पिंडसंख्यानित्रीणित्रीणिसूत्राणि । चंदनं । पुष्पाणि । धूपः । दीपः । नैवेद्यं । तांबूलं । दक्षिणा । निषेकापश्च । इतिपात्रासादनं । अपहताइतिदक्षिणाग्र-लेखाकरणं । ॐअपह०षदः । सव्यं । उद० । उदपात्रेणावनेजयति । असाववनेनिक्ष्वेति । पितृप्रभृतीन् । अमुकसगो-त्रेत्यादिअवनेनिक्ष्व । उपमूलꣳसकृदाच्छिन्नानिलेखायांकृत्वायथावनिक्तंपिंडान्ददात्यसावेतत्तइति । अमुकसगोत्रेत्यादि-एतत्तेऽन्नꣳस्वधा ॥ इदंपित्रेनमम ॥ इदंपितामहायनमम ॥ इदंप्रपितामहाय० ॥ पितृपिंडाधारदर्भमूलेषुप्रपितामहा-दूर्ध्वंलेपभुग्भ्योहस्तावघर्षणेनलेपोन्मार्जनं । हस्तलेपभाजःपितरःप्रीयंतां ॥ अत्रपितरइत्युक्त्वा ॥ ॐअत्रपि०यध्वम् ॥ उदङ्ङास्तआतमनात् ॥ आवृत्य ॥ अमीमदंतेतिजपति । ॐअमीमद०षत ॥ अवनेज्यपूर्ववत् ॥ नीवींविस्रꣳस्य । नमो-वइत्यंजलिंकरोति ॥ ॐनमोवःपितरोरसाय १ शोषाय २ जीवाय ३ स्वधायै ४ घोराय ५ मन्यवे ६ गृहान्नइतिजपति ॥ ॐगृहान्नःपि०ष्म ॥ एतद्वइत्यपास्यति सूत्राणिप्रतिपिंडं । ऊर्णादशावा । वयस्युत्तरेयजमानलोमानिवा ॥ ॐएतद्वःपि-तरोवासः ॥ प्रतिपिंडमंत्रावृत्तिः ॥ आचारात्पिंडेषुपितृपूजनं ॥ सव्यं । ममकुला० नंकरिष्ये ॥ पिंडेषुपितृभ्योनमः । इदंचंदनं । इमानिपुष्पाणि । अगस्त्यंभृंगराजंचतुलसीशतपत्रिका । तिलाश्चतिलपुष्पंचषडेतेपितृवल्लभाः ॥ १ ॥ अयं-धूपः । अयंदीपः । इदंनैवेद्यं । इदंतांबूलं । इयंदक्षिणाचेति । अनयापूजयापितरःप्रीयंतां ॥ अपसव्यं । ऊर्ज्जमित्यपोनि-

षिंचति ॥ ॐऊर्ज्जंवहं०पितॄन् ॥ आत्मालंकारः । पिंडेषुपितॄन्नमस्कृत्य । अथयुदेव०भवति ॥ सुप्रजाभव ॥ गोत्रस्या-भिवृद्धिरस्तु ॥ अपसव्यं । अयोध्यामथुरेत्यादि ॥ स्थाल्यामवधाय ॥ सव्यं । अवजिघ्रति ॥ अनेनअन्नपिंडैःअमुकश्रा-द्धयज्ञाख्येनकर्मणाभगवान्पितृस्वरूपीजनार्दनोवा० ताम् ॥ इतिपिण्डदानमात्रप्रयोगः ॥ तदंतेपंचमहायज्ञाः ॥ श्रा-द्धकर्मणःसाद्गुण्यार्थंब्राह्मणभोजनमिति ॥

अथआमश्राद्धप्रयोगः ॥ तत्रमासिकसांवत्सरिकसपिंडीकरणगयाश्राद्धमहालयाष्टकान्वष्टकापूर्वेद्युःश्राद्धानि आम-श्राद्धविधिनानभवंति ॥ आमश्राद्धविधेर्निषेधात् ॥ हिरण्यश्राद्धविधिनापिनभवंति । आमाभावेहिरण्यविधानात् ॥ आपत्तौप्रवासेतीर्थेअनग्नौभार्यारजसिइत्येवमादिनिमित्तेपूर्वोक्तभिन्नानिदर्शवृद्धिश्राद्धग्रहणश्राद्धादीनिश्राद्धानिआमेनवि-धिनाकार्याणि ॥ आमाभावेहिरण्यविधिना ॥ आमश्राद्धंद्विजैःपूर्वाह्णेकार्यंशूद्रैरपराह्णे ॥ सिद्धान्नेनविधिर्यःस्यादामश्राद्धेप्य-सौविधिरिति ॥ ॥ आचमनं । प्राणायामः । पवित्रधारणं ॥ देशकालौसंकीर्त्य ॥ गोत्राणांपितृपिता०स्वरूपाणां अमु-कश्राद्धंआमश्राद्धविधिनाकरिष्ये ॥ कुरुष्व ॥ तदंगंब्राह्मणनिमन्त्रणंकरिष्येइत्यादि०विप्रश्रीपादपंकजमित्यंतं ॥ ( आमेहे-मेतथानित्येनांदीश्राद्धेतथैवच ॥ व्यतीपातादिकेश्राद्धेनियमान्परिवर्जयेदितिनिर्णयसिंधुः ) ॥ श्राद्धांगभूतंमंडला-द्यर्चनंकरिष्ये ॥ गोत्राणां० श्राद्धंविश्वेदेवपू०आमेनहविषासद्यःकरिष्ये ॥ पितृभिःपरिरक्ष्यतइत्यंतं ॥ अस्तुकालआम-श्राद्धसंपत्तिसिद्धिः ॥ अस्तु ॥ सव्यं ॥ शंनोदेवीतिमन्त्रेणजलंगृहीत्वेत्यादि० ॥ सव्यं ॥ गायत्रीमंत्रपठनं ॥ अपसव्यं ॥

आमप्रोक्षणंविधिवत् ॥ अस्तुविधिवत् ॥ इत्यादि ॥ अयंवोविष्टरःसुविष्टरइत्यंतं ॥ अपसव्यं ॥ गोत्रंपितरंभवत्सुआ-वा०य ॥ उशंतस्त्वा०पितृन्हविषेस्वीकर्तवे ॥ इत्यूहः ॥ भस्ममंडलांतं ॥ पितृपात्रेअग्नौकरणं ॥ ( आमश्राद्धप्रदःपिंडांस्त-थाग्नौकरणंचयत् ॥ तद्दद्यात्तत्रतेनैवयत्किंचिच्छ्राद्धिकंभवेत् ॥ यत्किंचित्अन्यदपिविकिरादितदपितेनैवकर्तव्यमित्यर्थः इतिरु० ) । तृप्तिप्रश्नोवगाहश्चजुषप्रश्नोयथासुखं ॥ आमश्राद्धेभवेन्नैतदपोशानंचपंचमं ॥ साग्निककर्तृकामश्राद्धेब्राह्मण-हस्तेग्नौकरणंनाग्नौ । आमश्राद्धंयदाकुर्याद्विधिज्ञःश्राद्धदःसदा ॥ हस्तेग्नौकरणंकुर्याद्ब्राह्मणस्यविधानतः ॥ एतत्साग्नेः । निरग्नेःसदातत्सत्वात् । इतिनिर्णयसिंधावुक्तत्वात् ॥ अन्नाच्चतुर्गुणंद्विगुणंसमंवातत्तदामंपात्रेपुसंस्थाप्य ॥ पुरू०देवाःए-तद्वआमंदत्तं ब्रा०दत्तंनमम ॥ अनेनअमुकश्राद्धीयब्राह्मणामदानेनपितृ०प्रीयतां ॥ ( अशनाभावादक्षत्सुजपोपिन ) ॥ असंस्कारेत्यादिविसर्जनांतं ॥ तत्रशेषमन्नंकि०भुज्यतामस्यलोपः ॥ पिंडदाने एतत्तेआमꣳस्वधाइतिप्रयोगः ॥ वाजे-वाजेव०मादयध्वंतृप्यतयातपथिभिर्देवयानैः ॥ इत्यूहः ॥ शेषंप्रकृतिवत् ॥ ( पिंडदानेपक्षांतरमपि ॥ गृहपाकात्समु-द्धृत्यसक्तुभिःपायसेनवा ॥ पिंडान्दद्याद्यथालाभंतिलैःसहविमत्सरः ॥ इतिनिर्ण० ) आमेनापिंडान्दद्याद्योविप्रान्पक्केन-भोजयेत् ॥ पक्केनकुरुतेपिंडान्विप्रेभ्यामंप्रयच्छति ॥ तावुभौमनुजौप्रोक्तौनरकार्हौनसंशयः ॥ इतिवचनंतुअमावास्या-श्राद्धविषयं । इतिरुद्र० ॥ इतिसपिंडकआमश्राद्धप्रयोगः ॥

अथहिरण्यश्राद्धम् ॥ हिरण्यश्राद्धनिर्णयःप्रायःआमश्राद्धनिर्णीतवदेव । पुत्रजन्मनिमित्तेपक्कामयोरन्नयोःसद्भावे-

पिहेमश्राद्धमेवेतिहेमाद्रिः । अतएवसंवर्तः—पुत्रजन्मनिकुर्वीतश्राद्धंहेम्नैवबुद्धिमान् ॥ नपक्वेननचामेनकल्याणान्यभिकाम-
यन्निति ॥ अत्रविशेषः॥शक्तितारतम्येनचतुर्गुणहेम्नोवितरणम् ॥ ॥ आचमनं । प्राणायामः । पवित्रधारणं । देशकालौ-
संकीर्त्य । गोत्राणांअस्मत्पितृपिता०स्वरूपाणांअमुकश्राद्धंहेमश्राद्धविधिनाकरिष्ये ॥ कुरुष्व ॥ तदंगंब्राह्मणनिमंत्रणंक-
रिष्यइत्यादि०विप्रश्रीपादपंकजमित्यंतं ॥ श्राद्धांगभूतंमंडलाद्यर्चनंकरिष्ये ॥ गोत्राणां०श्राद्धंविश्वेदेवपूर्वकंहिरण्येनहविषा-
सद्यःकरिष्ये ॥ पितृभिःपरिरक्ष्यतइत्यंतं ॥ अस्तुहेमश्राद्धसंपत्तिसिद्धिः ॥ अस्तु ॥ सव्यं ॥ शंनोदेवीतिमंत्रेणजलंगृहीत्वे-
त्यादि० ॥ सव्यं ॥ गायत्रीमन्त्रपठनं ॥ असपव्यं ॥ हिरण्यप्रोक्षणंविधिवदस्तु ॥ अस्तुविधिवत्इत्यादि ॥ अयंवोवि-
ष्टरःसुविष्टरःइत्यंतं ॥ अपसव्यं ॥ गोत्रंअस्मत्पितरंभवत्सुआवाहयिष्ये । आवाहय ॥ उशंतस्त्वा०पितृन्हविषेस्वीकर्तवे ॥
इत्यूहः ॥ भस्ममंडलांतं ॥ पितृपात्रेअग्नौकरणं ॥ ( तृप्तिप्रश्नोवगाहश्चजुषप्रश्नोयथासुखं ॥ आमश्राद्धेभवेन्नैतदपोशानंच-
पंचमं ॥ साग्निककर्तृकेस्मिन्ब्राह्मणहस्तेग्नौकरणंनाग्नौ । इतिनिर्णय० ) अन्नाच्चतुर्गुणंहेमपात्रेषुसंस्थाप्य ॥ पुरू०देवाः-
एतद्वोहिरण्यंदत्तंब्रा०दत्तंनमम ॥ अनेनअमुकश्राद्धीयब्राह्मणहेमदानेनपितृपिता०प्रीयंतां ॥ अशनाभावादश्नत्सुजपोन ॥
असंस्कारेत्यादिविसर्जनांतं ॥ तत्रशेषमन्नंकिंक्रियतांइष्टैःसहभुज्यतामित्यस्यलोपः ॥ पिंडदानेएतत्तेहेमस्वधाइतिप्रयोगः ॥
पिंडदानेपक्षांतरमपि ॥ गृहपाकात्समुद्धृत्यसक्तुभिःपायसेनवा । पिंडान्दद्याद्यथालाभंतिलैःसहविमत्सरः ॥ वाजेवाजे-
वत०इतिमन्त्रेमादयध्वंतृप्यतयांतपथिभिर्देवयानैरित्यूहः ॥ शेषंप्रकृतिवत् ॥ इतिसपिंडकहेमश्राद्धप्रयोगः ॥

अथसांकल्पिकश्राद्धविधिः ॥ [ अथाशक्तविषयेसांकल्पविधिनादर्शश्राद्धप्रयोगः ॥ उक्तापराह्णेयथाधिकारं कृतनित्यक्रियस्तिलतर्पणंविधाय देशकालौसंकीर्त्य प्राचीनावीती पितृवर्गंसपत्नीकंमातामहवर्गंसपत्नीकंचषष्ठ्यंतमुच्चार्य एतेषां० दर्शश्राद्धंसांकल्पेनविधिनाकरिष्यइतिसंकल्प्यपूर्ववद्विप्रनिमंत्रणंकृत्वापादौप्रक्षाल्याचम्यपूर्ववदुपवेश्यासनंदत्वाआवाहनार्घ्यदानवर्जमाच्छादनांतमभ्यर्च्यअग्नौकरणवर्जमन्नत्यागांतं ॥ ब्राह्मणाःबलिदानवर्जंभुंजीयुः ॥ भोजनांनेतृप्तिप्रश्नंकृत्वामधुमतीःश्रावयित्वाअक्षन्नमीमदंतेतिचसंपन्नमितिपृष्ट्वा शेषमन्नंकिंक्रियतामित्याद्युच्छिष्टभागभ्योन्नंदापयित्वा आचांतेषुविप्रेषुतांबूलदक्षिणांदत्वा स्वधोच्यतामितिविसृज्यवरयाचनंकृत्वायस्यस्मृत्येत्यादि ॥ नात्रोच्छिष्टपिंडविकिरपिंडदानादि ॥ ॥ इत्थमपिकरणाशक्तौसंकल्पमात्रंकृत्वाभ्यर्च्यान्नत्यागमात्रंकृत्वाभुक्तवत्सुतांबूलंदक्षिणांचदत्वानमस्कुर्यात् ॥ इतिसंक्षिप्तप्रयोगः ॥ दर्शश्राद्धप्रयोगोयंसंकल्पनविधानतः ॥ अकारितोरोरुद्रेणनृसिंहस्तेनतुष्यतु ॥ ]

अथब्रह्मार्पणश्राद्धविधिः ॥ अथश्राद्धमंजर्यांब्रह्मार्पणविधिः ॥ अत्यशक्तौब्रह्मार्पणविधिनाश्राद्धंकुर्यात् ॥ तदुक्तं पद्मपुराणे–ब्रह्मार्पणेनविधिनाकुर्याद्वाभक्तिमान्सुतः ॥ निमंत्र्यब्राह्मणान्छक्त्याद्वावेकंवायथाविधि । पादप्रक्षालनं कृत्वापीठादावुपवेश्यच ॥ परिविष्यत्यजेदन्नंब्रह्मार्पणविधानतः ॥ इति ॥ ॥ अथप्रयोगः ॥ यथाशक्तिब्राह्मणान्निमंत्र्य संकल्पेपितृनुद्दिश्य एतेषांतृप्त्यर्थममुकश्राद्धंसदैवंब्रह्मार्पणेनविधिनासद्यःकरिष्ये । इत्युक्त्वा ॥ विप्राणांपादप्रक्षालनंकृत्वापीठेषूपवेश्य अर्घ्यावाहनवर्जंदेवपितृपूजांविधायान्नंपरिविष्यसावित्र्याप्रोक्ष्य विश्वेभ्योदेवेभ्यइदमन्नममृतरूपंपरिवे-

क्ष्यमाणंचातृप्तेःस्वाहाहव्यंनमम इत्येवंतत्तन्नामाद्युच्चारणपूर्वकंपितृभ्योनिवेदयेत् ॥ कव्यंनममेतिमंत्रशेषः ॥ ततोब्रह्मार्पणंब्रह्महवि० समाधिनाइत्यादिपितृस्वरूपीजना०प्रीयतामित्यंतंसंकल्पवाक्यमुच्चार्य भुक्तवद्भ्योयथाशक्तितांबूलं दक्षिणांचदत्वा संकल्पात्सिद्धिरस्त्वितिभवंतोब्रुवंत्वितिवाचयित्वाकर्मईश्वरार्पणंकृत्वावैश्वदेवादिभोजनांतंपूर्ववदिति ॥ इतिश्राद्धमंजर्यांब्रह्मार्पणविधिनाश्राद्धम् ॥

अथघृतंश्राद्धविधिः ॥ उक्तापराह्णेतिलतर्पणंविधाय ॥ देश० ऋणत्रयविमुक्त्यर्थं ममपित्राद्यासांतानुद्दिश्यकाश्यादितीर्थयात्राकर्तुकामस्तदंगत्वेनविहितंसमस्तपितॄनुद्दिश्यघृतश्राद्धंकरिष्ये इतिसंकल्प्य ॥ क्षणादिअर्घ्यावाहनवर्जंआच्छादनांतंविधाय अग्नौकरणवर्जंपात्रेघनीभूतंघृतंप्राधान्येन भक्ष्यभोज्यादिकंव्यंजनत्वेनपरिवेषणंकृत्वेत्यादिसर्वंतीर्थश्राद्धवद्विधाय वैश्वदेवादिकंकृत्वा बंधून्संभोज्य घृतशेषमादाय कार्पटिकवेषंधृत्वाग्रामंप्रदक्षिणीकृत्य क्रोशमात्रंगत्वा तत्रपाकंविधाय सर्वस्मादन्नात्किंचिद्ग्रासमवदायघृताक्तमग्नौप्रक्षेपरूपवैश्वदेवंकृत्वा पूर्वानीतश्राद्धशेषस्यघृतेनसहभोजनंकुर्यात् ॥ इतिपाकयज्ञप्रकाशे यात्रारंभेघृतश्राद्धप्रयोगः ॥

अथतीर्थश्राद्धविधिः ॥ काश्यादितीर्थंप्राप्यस्नानादिविधायआदौतिलतर्पणंकृत्वादेशकालौसंकीर्त्य पित्राद्यासां-



---

१ तीर्थश्राद्धेविशेष । २ अर्घ्यमावाहनंचैवद्विजाङ्गुष्ठनिवेशनम् । विकिरतृप्तिप्रश्नंचतीर्थश्राद्धेविवर्जयेत् । भविष्ये—आवाहनंविसृष्टिश्चतत्रतेषानविद्यते । इति । अत्रदिग्बंधनंदृष्टिदोषादिविचार ब्राह्मणपरीक्षाचनास्तीतिगदाधरभाष्येत्रिस्थलीसेतौच ।

तान्महालयवदुच्चार्य अमुकतीर्थश्राद्धंकरिष्यइतिसंकल्प्य ॥ क्षेत्रनिवासिनो ब्राह्मणान् वैश्वदेवार्थं पित्राद्यर्थं च महालयवन्निमंत्र्य ॥ अर्घ्यावाहनांगुष्ठनिवेशनतृप्तिप्रश्नविकिरविसर्जनवर्जंमहालयश्राद्धवत्सर्वंकुर्यात् ॥ अत्राग्नौकरणंसाग्नेरग्निसंनिधानेअग्नावेव । अग्न्यसंनिधानेतुहस्तएवाग्नौकरणं । इतिश्राद्धकाशिकायांसाग्नेस्तीर्थश्राद्धेऽग्नौकरणव्यवस्थाविस्तरतःप्रपंचिता ॥ पिंडांस्तुतीर्थजलेएवक्षिपेत् ॥ इतितीर्थश्राद्धप्रयोगः ॥ निर्णयसिंधौयत्तु तत्रैवमात्स्ये—अग्न्यभावेतुविप्रस्यपाणौवाथजलेपिवा । अजकर्णेऽश्वकर्णेवागोष्ठेवाथशिलांतकइतितत्तीर्थश्राद्धविषयं—तद्यदापांसमीपेस्याच्छ्राद्धेज्ञेयोविधिस्तदा इति तत्रैवकात्यायनोक्तेः ॥ निर्जले अजकर्णादौ ॥

अथदधिश्राद्धविधिः ॥ यात्रांकृत्वागृहप्रवेशश्राद्धंकृत्वापूर्ववत्सर्वंकुर्यात् ॥ तत्रविशेषः ॥ देश०तान् ममैतेषांपित्राद्यासांतानुद्दिश्यकाश्यादितीर्थयात्राप्रत्यागमननिमित्तंघृतश्राद्धवद्दधिश्राद्धंकरिष्ये ॥ इतिविशेषः ॥ केचिद्दधिश्राद्धमित्यपेक्षयातत्रैवोहःकर्तव्यः ॥ इतिदधिश्राद्धविधिः ॥

अथोपयुक्तः श्राद्धनिर्णयः । निर्णयतत्त्वे—श्राद्धकर्तृभोक्त्रोराशौचप्राप्तौ—निमंत्रणस्वीकरणोत्तरंचेदाशौचिनः स्युः किलभूमिदेवाः ॥ कर्ताचतत्पाकविधौनिवृत्तेत्वाशौचवांश्चेन्नहिदूषणाय ॥ १ ॥ आशौचेश्राद्धप्राप्तौ—आशौचांतःश्राद्धदिनेतदंतदिनएववा । श्राद्धंतदग्रिमामायामेवमूचुर्महर्षयः ॥ १ ॥ इदं मासिकसांवत्सरिकविषयं । निर्णयसिंधौ मरीचिः—श्राद्धविघ्नेसमुत्पन्ने

प्यविज्ञातेमृतेहनि ॥ एकादश्यांतुकर्तव्यंकृष्णपक्षेविशेषतः ॥ विशेषतः शुक्लैकादश्यामपि ॥ आशौचेतरविघ्नेएतदितिमाधवपृथ्वीचंद्रोदयौ ॥ **यत्त्वत्रिः**—तदहश्चेत्प्रदुष्येतकेनचित्सूतकादिना ॥ सूतकानंतरंकुर्यात्पुनस्तदहरेवचेति तत्पूर्वकालाभावेज्ञेयं । एतदाब्दिकेतरश्राद्धपरं । **यच्चदेवलः**—एकोद्दिष्टेतुसंप्रासेयदिविघ्नःप्रजायते ॥ मासेन्यस्मिंस्तिथौतस्मिन्श्राद्धंकुर्यात्प्रयत्नतइति तदपिमासिकपरमितिमदनरत्ने **हेमाद्रौ च** । इदमपिपूर्वकालासंभवे ॥ व्याध्यादौविस्मरणेचैवंज्ञेयं । **धर्माब्धौ**—मासिकं चोदकुम्भं च यद्यदंतरितं भवेत् ॥ तत्तदुत्तरसातंन्यादनुष्ठेयंप्रचक्षतइति ॥ **श्राद्धचिंतामणौ ज्योतिषे**—प्रतिसांवत्सरश्राद्धमाशौचात्पतितंचयत् ॥ मलमासेपितत्कार्यमितिभागुरिभाषितं । आशौचान्यदिनत्वेननिमित्तत्वादित्यर्थः ॥ **धर्माब्धौ**—दर्शादीनांतुपञ्चमहायज्ञादिवल्लोपएव ॥ नाशौचान्तेकर्तव्यत्वं । नापिप्रायश्चित्तं । आशौचंविनादर्शादीनांलोपेप्युपवासादिरूपं प्रायश्चित्तमेव न तु कालान्तरेनुष्ठानमिति । अब्दपूर्तिश्राद्धस्यदर्शादिवल्लोप एव तस्य मासिकाब्दिकश्राद्धेभ्योभिन्नत्वात् । आशौचातिक्रान्तानां मासिकाब्दिकेतरश्राद्धानां आशौचान्तेकर्तव्यतानिषेधात् । वर्षान्त्यदिने संवत्सरविमोक्षश्राद्धंपार्वणविधिनाकार्यं । इदमेवाब्दपूर्तिश्राद्धमित्यप्युच्यते । इदमूनाब्दिकान्तषोडशश्राद्धेभ्योभिन्नमेव । अतएवास्यप्रेतश्राद्धत्वाभावात्वृद्धिप्राप्तावपिनापकर्षइति **धर्मसिन्धूक्तेरिति** ॥ **भार्यारजोदोषे**—कर्तुः पत्नीचेद्रजःसंयुतान्यपाकैरेवश्राद्धमुक्तंमृताहे । पाकाभावेत्वन्यतश्चाथसैवकर्त्रीस्याच्चेत्पञ्चमेह्न्येवकुर्यात् । **तथा मयूखादौ**—विदेशगोवाविगताग्निकोवारजस्वलायामपिधर्मपत्न्यां । श्राद्धं मृताहेविदधीतपाकैर्नामेनहेम्नानतुपञ्चमेह्नि ॥ १ ॥ श्राद्धेहनितुसंप्रासेयस्यभार्यारजस्वला । तेनश्राद्धंनकर्तव्यंकर्तव्यंपञ्चमेऽहनि ॥ इतितुसकृन्महालयविषयं ॥ ॥ **अथमलमासमृतनिर्णयः** । क्षयश्राद्धतिथ्यांमलेमासिचाद्यंमलान्तर्द्वितीयादिकंशुद्धमासे । मलान्तर्मृतानांसऽएवाधिकश्चेत्तदातत्रचान्यत्रतच्छुद्धमासि ॥ १ ॥ **मृततिथ्यज्ञाने**—मृतिप्रयाणश्रुतिमासतिथ्योःप्रत्याब्दिकंपूर्वगमेपरंस्यात् । दिनेत्वबुद्धेकिल-

तत्रमासेदर्शस्तथैकादशिकातथैव ॥ १ ॥ मासेनबुद्धेशुचिभाद्रमार्गमाघेषुबुद्धेदिवसेविधेयं ॥ द्वयोरपिज्ञानविहीनताचेत्तन्मार्गमाघासितपञ्चदश्यां ॥ २ ॥ ॥ **दिनद्वयेतिथिसत्वेनिर्णयः**—एकोद्दिष्टेतिथिःस्यात्कुतुपवदनतोयामुहूर्तद्वयस्था तादृक्तुल्याद्युयुग्मेप्रथमदिनगताथोजयोगेधिकत्वात् ॥ पूर्वाप्रत्याब्दिकादौमुनिभिरभिहितायाधिकस्थापराह्णे तुल्याचेत्द्युद्वयेप्राङ्नयदिदिनयुगेसर्वसायाह्नगाद्या ॥ १ ॥ सर्वसायाह्नगानाम्नातत्रप्रोक्तापरैवहि ॥ ॥ **अथैकादश्यां श्राद्धनिर्णयः । नौकायां**—भवेत्पितुःश्राद्धदिनंतदातुश्राद्धंयथोक्तंसकलंविदध्यात् ॥ स्वयंद्विजास्वादितमन्नमेवावघ्रायकुर्यादुपवासमेव ॥ १ ॥ वदंतिकेचिद्धरिवासरेतुश्राद्धंनकुर्यादपरेह्निकुर्यात् ॥ न तन्मतंचारुयतस्तथात्वेभाद्रापरेषोडशकत्वघातः ॥२॥ तथाचपौषेहरिवासरेतुमन्वादिपैत्र्यंविफलं तथाच ॥ अज्ञातमेवास्तिदिनंचमृत्योःश्राद्धंतदैकादशिवासरेस्यात् ॥३॥ इदं च शास्त्रं विफलं च तस्माच्छ्राद्धं विदध्याद्धरिवासरेपि ॥ ब्रवीतिवाक्यं स्मृतिचन्द्रिकास्थं श्राद्धं न कुर्यादिति न ब्रवीति ॥ ४ ॥ किं तर्हिवैधंविदधीतसर्वंस्वयं न भुञ्जीत न भोजयेच्च ॥ ब्रूतेव्रताढ्यंस्मृतिचन्द्रिकास्थंवचोन्यथादोषगणोबहुःस्यात् ॥ ५ ॥ **वाक्यं च**—अन्नाश्रितानिपापानितद्भोक्तुर्दातुरेव च ॥ मज्जन्तिपितरस्तस्यनरकेशाश्वतीःसमाः ॥ ६ ॥ निषेधकोयोलघुनारदीयेश्राद्धस्यपित्र्येतरतास्तितस्य ॥इति॥ ॥ **अथ ग्रहणश्राद्धनिर्णयः । नौकायां**—प्रत्याब्दिकंचेद्ग्रहणेतदानींपित्रोःसपिण्डस्य तदैव कुर्यात् ॥ अन्नेनवामेनहिरण्यकेनवित्तानुसारेणसुतादिरत्र॥ १ ॥ ॥ **विधवाकर्तृकमहालयश्राद्धे देवताविशेषः पुरुषार्थचिंतामणौ । संग्रहे**—चत्वारिपार्वणानीहविधवायाः सदैवहि ॥ स्वभर्तृश्वशुरादीनां मातापित्रोस्तथैवहि ॥ ततोमातामहानांचश्राद्धदानमुपक्रमेत् ॥ इति ॥ स्वभर्तृप्रभृतित्रिभ्यः स्वपितृभ्यस्तथैवच ॥ विधवाकारयेच्छ्राद्धं सर्वकालमतन्द्रिता इति ॥ **स्मृतिरत्नावल्यांतु** पार्वणद्वयमेवोक्तं ॥ इतिविधवाकर्तृकमाहालयदेवताः ॥ ॥ **अथ भरणीश्राद्धं** ॥ **पुरुषार्थचिन्तामणौ**—महालयपक्षांतर्गतभरण्यांश्राद्धे फलमुक्तं **मात्स्ये**—

भरणीपितृपक्षेयामहतीपरिकीर्तिता ॥ तस्यांश्राद्धंकृतंयेनसगयाश्राद्धकृद्भवेदिति ॥ इदंपिण्डरहितं कार्यं ॥ अयनद्वितयेश्राद्धंविषुवद्वितये-तथा ॥ भरणीषु च कुर्वीत पिण्डनिर्वपणं नहीति पुलस्त्यवचनात् ॥ इति ॥ ॥ **अथ दौहित्रश्राद्धं** ॥ **पुरुषार्थचिन्तामणौ**—अथाश्विनशुक्लप्रतिपदिशिष्टाचाराद्दौहित्रोमातामहश्राद्धंकुर्यात् ॥ जातमात्रोपिदौहित्रोविद्यमानेऽपिमातुले ॥ कुर्यान्मातामहश्राद्धंप्रतिपद्याश्वि-नेसितेइति ॥ प्रतिपद्याश्विनेशुक्लेदौहित्रस्त्वेकपार्वणं ॥ श्राद्धंमातामहं कुर्यात्सपितासंगवेसिते । जातमात्रोपिदौहित्रोजीवत्यपि च मातुले ॥ प्रातःसंगवयोर्मध्येयाश्वयुक्प्रतिपद्भवेत् ॥ इतिशिष्टाचारानुगुणाभियुक्तवाक्येभ्यः । अत्रसपितेतिविशेषणाजीवत्पितृकएवाधिकारी ॥ अतश्च पिण्डरहितंसंगवेकुर्यात् ॥ इदंपार्वणत्वादपराह्णेसपिण्डकंकुर्यादितिकेषांचिदुक्तिरुदाहृतवाक्यविरुद्धेतिदिक् ॥ इति दौहित्रश्राद्धं ॥ ॥

**अथ षण्णवतिश्राद्धानि** ॥ अमा १२ युग ४ मनु १४ क्रान्ति १२ धृति १३ पात १३ महालयाः १६ ॥ अष्टका ४ ऽन्वष्टका ४ पूर्वेद्युः ४ श्राद्धैर्नवतिश्च षट् ९६ ॥१॥ **अस्यार्थः**—॥ १ **अमाः प्रतिमासं सर्वाः** कृष्णपक्षान्तिमास्तिथयोद्वादश ॥१२॥ इदममा-श्राद्धं सपिण्डकं । पार्वणविधिः । पुरूरवार्द्रवौविश्वेदेवाः । पितृत्रयी मातामहत्रयी चेतिपार्वणद्वयं सपत्नीकं ॥ अपराह्णः कालः । इदं सलमासेपिकार्यं ॥ ॥ २ **युगादयश्चतस्रः** ॥ ४ ॥ माघे पञ्चदशी कृष्णा नभस्ये च त्रयोदशी ॥ तृतीया माधवे शुक्ला नवम्यूर्जेयु-गादय इति ॥ **अस्यार्थः**—माघकृष्णामावास्या ३० भाद्रपदकृष्णत्रयोदशी १३ वैशाखशुक्लतृतीया ३ कार्तिकशुक्लनवमी ९ । इदं यु-गादिश्राद्धं अपिण्डकं । सांकल्पविधिः । पुरूरवार्द्रवौविश्वेदेवाः ॥ पितृपार्वणं मातामहपार्वणं चेति पार्वणद्वयंसपत्नीकं । शुक्लपक्षगानां पूर्वाह्णः कालः । तत्रासंभवेऽपराह्णः । पूर्वाह्णोऽत्र द्वेधाविभक्तदिनपूर्वोभागः । तत्रैव श्राद्धादिविधानात् । कृष्णपक्षगानामपराह्णः कालः । अपराह्णोत्र पंचधाविभक्तदिनचतुर्थभागः । इदं मलमासेपिकार्यं ॥ ॥ ३ **मन्वादयश्चतुर्दश** ॥ १४ ॥ तिथ्यग्नी न तिथिस्तिथ्याशे कृष्णे-

भोनलोग्रहः ॥ तिथ्यर्कोनाशिवोश्वोमातिथीमन्वादयोमधोरिति ॥ **अस्यार्थः**—तिथिःपूर्णिमा । अग्निस्तृतीया । नेति वैशाखे नास्तीत्यर्थः । आशा दशमी । कृष्णेभः कृष्णाष्टमी । अनलस्तृतीया । ग्रहो नवमी । अर्को द्वादशी । नेतिमार्गशीर्षे नास्तीत्यर्थः । शिव एकादशी । अश्वःसप्तमी । मधोश्चैत्रादारभ्य एतेमन्वादय इत्यर्थः ॥ १ चैत्रशुक्लतृतीया ३ । २ चैत्रशुक्लपौर्णिमा १५ । ३ ज्येष्ठशुक्लपौर्णिमा १५ । ४ आषाढशुक्लदशमी १० । ५ आषाढशुक्लपौर्णिमा १५ । ६ श्रावणकृष्णाष्टमी ८ । ७ भाद्रपदशुक्लतृतीया ३ । ८ आश्विनशुक्लनवमी ९ । ९ कार्तिकशुक्लद्वादशी १२ । १० कार्तिकशुक्लपौर्णिमा १५ । ११ पौषशुक्लैकादशी ११ । १२ माघशुक्लसप्तमी ७ । १३ फाल्गुनशुक्लपौर्णिमा १५ । १४ फाल्गुनकृष्णामावास्या ३० । मन्वादिश्राद्धमपिण्डकं । सांकल्पविधिः । पुरूरवार्द्रवौविश्वेदेवाः । पितृपार्वणंमातामहपार्वणं चेतिपार्वणद्वयंसपत्नीकं ॥ शुक्लपक्षगानां पूर्वाह्णः । कृष्णपक्षगानामपराह्ण इत्यादिः सर्वोनिर्णयोयुगादिनिर्णयवद्बोध्यः ॥ इदं मलमासेपिकार्यं ॥ ॥

४ **संक्रांतयोद्वादश** ॥ १२ ॥ ताश्चमेषादयः प्रसिद्धाः ॥ संक्रान्तिश्राद्धमपिण्डकं । सांकल्पविधिः । पुरूरवार्द्रवौविश्वेदेवाः । पितृपार्वणंमातामहपार्वणं चेतिपार्वणद्वयं सपत्नीकं । ततत्संक्रान्तिनिर्णयोक्तपर्वकालः । असंक्रान्तत्वेनमलमासेश्राद्धासंभवः ॥ ॥ ५ **वैधृतयस्त्रयोदश** ॥१३॥ ६ **व्यतीपातास्त्रयोदश** ॥१३॥ वैधृतिश्राद्धं व्यतीपातश्राद्धं चापिण्डकं । सांकल्पविधिः । पुरूरवार्द्रवौविश्वेदेवाः । पितृपार्वणं मातामहपार्वणं चेतिपार्वणद्वयं सपत्नीकं । कुतुपः कालः । दिनद्वयेसत्वेअसत्वेचपरदिनगतौ । मलमासेपिकार्यं ॥ ॥ ७ **महालयाःषोडश** ॥ १६ ॥ तेच भाद्रपदापरपक्षः प्रौष्ठपद्यासह आश्विनशुक्लप्रतिपदासह तिथिवृद्ध्याश्रयणेनवेति ॥ इदं महालयश्राद्धं सपिण्डकं । पार्वणैकोद्दिष्टविधिः । धूरिलोचनौविश्वेदेवाः ॥ पित्रादिसर्वपितृगणः । अपराह्णः कालः ॥ इदं मलमासे न कार्यं ॥ ८ **अथाष्टकाः** ॥४॥ अष्टका-अष्टमी । ताश्चतस्रः । ४ । तथाच**पारस्करः**—ऊर्ध्वमाग्रहायण्यास्तिस्रोष्टकाः । ऐन्द्रीवैश्वदेवीप्राजापत्यापित्र्याचेति । अपूपमांससशाकै-

यैथासंख्यं । प्रथमाष्टकापक्षाष्टम्यां । माघ्यावर्षे च तुरीयाशाकाष्टकेति । आग्रहायणी मार्गशीर्षपौर्णमासी । एवं पौषी माघी च । पक्षाष्टम्यां कृष्णाष्टम्यां । माघ्यावर्षे भाद्रपदापरपक्षाष्टम्यां । एतेनमाघ्यावर्षं प्रौष्ठपद्याअपरपक्षइत्याश्वलायनोक्तेः । इतितदर्थः । १ मार्गशीर्षकृष्णाष्टमी ८ । २ पौषकृष्णाष्टमी ८ । ३ माघकृष्णाष्टमी ८ । ४ भाद्रपदकृष्णाष्टमी ८ । अष्टकाश्राद्धं सपिण्डकं । पार्वणविधिः । कामकालौविश्वेदेवाः । अष्टम्यां कामकालकाविति**सायणीयेशंखोक्तेः** । पितृपार्वणं मातामहपार्वणं चेति पार्वणद्वयं सपत्नीकं । अष्टकाश्राद्धं करिष्ये इतिसंकल्पः सर्वत्र । अपराह्णः कालः । दिनद्वयेव्याप्त्यव्याप्त्यादौ दर्शवन्निर्णयः । मलमासेन कार्यं ॥ ॥ ९ **अथान्वष्टकाः** ॥४॥ अन्वष्टका अष्टम्युत्तरादिनं नवमी । ताश्चतस्रः । मार्गशीर्षकृष्णनवमी १ पौषकृष्णनवमी २ माघकृष्णनवमी ३ भाद्रपदकृष्णनवमी ४ ॥ अन्वष्टक्यश्राद्धं सपिण्डकं । पार्वणविधिः । पुरूरवार्द्रवौविश्वेदेवाः । पितृपार्वणं । मातृपार्वणं । सपत्नीकमातामहपार्वणं चेति पार्वणत्रयं । अन्वष्टकासु नवभिः पिण्डैः श्राद्धमुदाहृतं ॥ पित्रादिमातृमध्यं च ततो मातामहान्तकमिति**कात्यायनोक्तेः** । पिण्डपितृयज्ञवत् स्त्रीभ्यश्चेति**पारस्करोक्तेश्च** । स्त्रीभ्यश्चेतिमातृपार्वणं । चकारःपिण्डपितृयज्ञवदित्यनेनप्राप्तैः पितृपितामहप्रपितामहैः सहसमुच्चयार्थः । अत्रसामान्योपि स्त्रीशब्दःपित्रादिसन्निधानान्मात्रादिष्ववसीयते इति **वैद्यनाथमिश्राः** ॥ पितरो यत्र पूज्यन्ते तत्र मातामहा अपीति स्मृतेश्च । (मातृयजनंत्वन्वष्टकास्वादित) इति तु शाखांतरपरं । यच्च **छन्दोगपरिशिष्टे कात्यायनः**—कर्षूसमन्वितं मुक्त्वा तथाद्यं श्राद्धषोडशं । प्रत्याब्दिकं च शेषेषु पिण्डाः स्युः षडितिस्थितिरिति । कर्षूसमन्वितमन्वष्टकाश्राद्धं । तदपिच्छंदोगपरं । श्वोऽन्वष्टकासुसर्वासामिति**पारस्करोक्तेः** । पूर्वेद्युरन्वष्टक्यश्राद्धकालस्तु अष्टम्यनुरोधेन । नत्वपराह्णव्याप्त्यपेक्षेति । इदं मलमासे न कार्यं । इदं च जीवत्पितृकेणापि सपिण्डंकार्यं । यद्यपि जीवत्पितृकस्य चतस्रोन्वष्टकाअवश्यकर्तव्याः । तथाप्यशक्तस्य भाद्रपदापरपक्षगतात्वावश्यकी । अत्रस्वमातरिजीवन्त्यामपिसपत्नमा-

तृभ्योदद्यात् । सर्वासामेवमातृणां श्राद्धं कन्यागतेरवौ ॥ नवम्यां हि प्रदातव्यं ब्रह्मलब्धवरायतइत्यत्रसर्वासामित्युक्तेः । तन्मरणेसतितस्यैता-भ्यश्चदद्यादित्युक्तंजीवत्पितृकनिर्णये । जीवन्मातृकोप्यत्रसापत्नमातुः पार्वणं कुर्यात् । अन्वष्टक्यं च यन्मातुर्गयाश्राद्धं महालये । पितृपत्नीपु यच्छ्राद्धं सर्वं पार्वणवद्भवेदिति **श्राद्धदीपकलिकायां मनूक्तेः** । अत्रभर्तृमरणोत्तरं पूर्वमृतमातृश्राद्धं न कार्यमिति केचिदाहुः । पठन्ति च-श्राद्धं नवम्यां कुर्यात्तन्मृतेभर्तरिलुप्यतइति तदेतन्निर्मूलत्वान्मूर्खप्रतारणामात्रं । **श्राद्धदीपकलिकायां ब्राह्मे**—पितृमातृकुलोत्पन्ना याः काश्चित्तु मृताः स्त्रियः ॥ श्राद्धार्हा मातरो ज्ञेयाः श्राद्धं तत्र प्रदीयत इति ॥ अत्र देशाचाराद्व्यवस्था ॥ इदं चानुपनीतेनापि कार्य । अत्र मातुःश्राद्धे तु संप्राप्ते ब्राह्मणैः सहभोजनं ॥ सुवासिन्यैप्रदातव्यमितिशातातपोब्रवीदिति । भर्तुरग्रेमृतानारीसहदाहेनवामृता ॥ तस्याः स्थानेनियुंजीतविप्रैःसहसुवासिनीमित्युक्तेर्विप्रैःसह सुवासिन्योपिभोजनीयाः । ताभ्यश्चालंकारादेयाः । इदं च मातरिविद्यमानायां न भव-तीति**गंगाधरः कारिकाकारश्च** । मातर्यविद्यमानायामन्वष्टक्यमिदंभवेदिति । **अत्राशक्तावनुकल्पमाहाश्वलायनः**—अनडुहो-यवसमाहरेदग्निनावाकक्षमुपोषेदेपामेष्टकेतिनत्वेवानष्टकःस्यादिति । **हेमाद्रौ पितामहः**—अमावास्याव्यतीपातपौर्णिमास्यष्टकासु च ॥ विद्वान्श्राद्धमकुर्वाणोनरकंप्रतिपद्यत इति ॥ ॥ **अथ पूर्वेद्युःश्राद्धानि** ॥४॥ अष्टमीपूर्वदिनकर्तव्यानि । तान्यपि चत्वारि । अष्टकानुरोधात् । १ मार्गशीर्षकृष्णसप्तमी ७ । २ पौषकृष्णसप्तमी ७ । ३ माघकृष्णसप्तमी ७ । ४ भाद्रपदकृष्णसप्तमी ७ । इदं पूर्वेद्युःश्राद्धं सपिण्डकं । पार्वणविधिः । पुरूरवार्द्रवौविश्वेदेवाः । पितृपार्वणं मातामहपार्वणं चेति पार्वणद्वयं सपत्नीकं । श्राद्धकालस्तु अष्टम्यनुरोधेन । नत्वपरा-ह्णापेक्षेति । इदं मलमासे नकार्यं । इतिषण्णवतिश्राद्धानि ॥

**अथ श्राद्धसंपातेनिर्णयः** । **कात्यायनः**—कर्मणांयुगपद्भावस्तत्रं फल-कर्म-देश-काल-द्रव्य-देवता-सामान्ये । तद्भेदेभेदः ।

इति । तत्र युगादीना मन्वादीनां । मन्वादीनां महालयस्य च । वैधृतिव्यतीपातयोश्च । परस्परं संपातोन । असंभवात् । माघकृष्णामावास्यायां युगाद्यमाश्राद्धयोर्नतन्त्रं । कर्मसामान्याभावात् । भाद्रपदकृष्णत्रयोदश्यांयुगादिमहालयश्राद्धयोर्नतन्त्रं कर्मसामान्याभावाद्देवतासामान्याभावाच्च । फाल्गुनकृष्णामावास्यायांमन्वाद्यमाश्राद्धयोर्नतन्त्रं । कर्मसामान्याभावात् । संक्रान्तीनां वैधृतीनां । संक्रान्तीनां व्यतीपातानां च न तन्त्रं । कालसामान्याभावात् । कुतुपकाले संक्रान्तिकालसत्त्वेतु तन्त्रमेव । भाद्रपदामावास्यायां दर्शमहालययोर्नतन्त्रं । देवतासामान्याभावात् । भाद्रपदकृष्णाष्टम्यामष्टकामहालययोर्नतन्त्रं । देवतासामान्याभावात् । भाद्रपदकृष्णनवम्यां अन्वष्टकामहालययोः भाद्रपदकृष्णसप्तम्यांपूर्वेद्युश्राद्धमहालययोश्च न तन्त्रं । देवतासामान्याभावात् कालसामान्याभावाच्च । संक्रान्ति–वैधृति–व्यतीपातानां अमामहालयाष्टकान्वष्टकापूर्वेद्युःश्राद्धानां च न तन्त्रं । क्वचित्कर्मसामान्याभावात् क्वचित्कालसामान्याभावात् क्वचिद्देवतासामान्याभावाच्चेतिपण्णवतिसंपातनिर्णयः ॥ एवमन्यत्र । **तथाच निर्णयसिंधौ**—दर्शे च मासिकवार्षिकादिश्राद्धप्राप्तौ **कालादर्शे**विशेषउक्तः—नित्यस्य चोदकुम्भस्य नित्यमासिकयोरपि । दर्शस्य चोदकुम्भस्यदर्शमासिकयोरपि । नित्यस्य चाब्दिकस्यापि दार्शिकाब्दिकयोरपि । युगाद्याब्दिकयोश्चैवमन्वाद्याब्दिकयोस्तथा । प्रत्याब्दिकस्य चालभ्ययोगेषु विहितस्य च । संपाते देवताभेदाच्छ्राद्धयुग्मं समाचरेदिति । निमित्तानियतश्चात्रपूर्वानुष्ठानकारणमिति । **निर्णयदीपे**—नष्टचन्द्रेयदाकालेक्षयाहंदिवसोभवेत् । वैश्वदेवं क्षयश्राद्धं कुर्यात्प्राग्दर्शकर्मणः । दर्शमहालययोःसंपातपूर्वंमहालयस्ततोदर्शइति । दर्शवार्षिकमहालययोःप्राप्तौ पूर्ववार्षिकं ततोमहालयस्ततोदर्शइतित्रयंपाकभेदेन ॥ पित्रोर्मृततिथ्यैकत्वेमरणक्रमेण दर्शे वर्गद्वयात्तत्रेणश्राद्धं कुर्यात् । पौर्वापर्याज्ञानेतुपितृपूर्वंकंकुर्यादिति **हेमाद्रिः । माधवादयस्तु** सर्वत्रपितृपूर्वंभिन्नप्रयोगमाहुः ॥ पार्वणैकोद्दिष्टयोःसंपाते । पार्वणंत्वभिनिर्वर्त्य एकोद्दिष्टं समाचरेदिति **जाबालिः** । गृहदाहादिना युगपन्मरणेतु**भृगुः**—एककालेगतासूनां

बहूनामथवाद्वयोः । तन्त्रेण श्रपणं कृत्वाकुर्याच्छ्राद्धं पृथक्पृथक् । पूर्वकस्य मृतस्यादौ द्वितीयस्यततः पुनः । तृतीयस्य ततः कुर्यात्सन्निपातेष्वयंक्रमः । **ऋष्यश्रृंगः**—भवेद्यदिसपिंडानां युगपन्मरणं क्वचित् । संबन्धासत्तिमालोच्यक्रमाच्छ्राद्धंसमाचरेत् । **गारुडे**—एकेनैव हिपाकेनश्राद्धानिकुरुतत्रहि । विकिरंत्वेकतः कुर्यात्पिण्डान्दद्यात् पृथक्पृथक् । **अत्रिः**—बहूनामथवाद्वाभ्यां श्राद्धं चेत्स्यात्समेहनि । तन्त्रेणश्रपणं कृत्वा पृथक् श्राद्धानि कारयेत् । **पुलस्त्यः**—महालयेगयाश्राद्धेगतासूनांक्षयेहनि । तन्त्रेणश्रपणंकृत्वा श्राद्धं कुर्यात्पृथक्पृथक् । इदं च पृथक्पाकेन भिन्नश्राद्धाशक्तौ ॥ पृथक्पाकेनसंबन्धासत्त्याश्राद्धभेदस्तुमुख्यः पक्षः । एकत्रैवदिने श्राद्धद्वयं प्राप्तं यदा तदा । चरेदेवपुरावर्पात्पितुर्मातुश्चयस्सुतः । एकस्मिन्यः करोत्यह्निद्वयोः श्राद्धं यदाद्विजः । तदापूर्वमृतस्यादौ कृत्वास्नात्वायथाविधि । पश्चात्पश्चान्मृतस्यैव पृथक्पाकैः समाचरेत् । नैकस्मिन्दिवसे श्राद्धं त्रयाणां कुत्रचिद्द्विजः । एकः कुर्यात्तथाप्राप्ते अन्योभ्रातासमाचरेत् । भ्रातर्यविद्यमानेतुतत्परेह्निसमाचरेत् । अन्यथाश्राद्धहंतास्याच्छ्राद्धसंकरकृद्भवेत् । इत्याश्वलायनोक्तेरितिपृथ्वीचन्द्रः । **कात्यायनस्तु**—द्वे बहूनिनिमित्तानिजायेरन्नेकवासरे । नैमित्तिकानिकार्याणि निमित्तोत्पत्त्यनुक्रमात् । **जाबालिः**—श्राद्धं कृत्वा तु तस्यैव पुनः श्राद्धं न तद्दिने । नैमित्तिकं तु कर्तव्यं निमित्तानुक्रमोदयमिति । इतिश्राद्धसंपातेनिर्णयः ॥ इतिश्राद्धप्रकरणम् ॥



# अथव्रतोद्यापनप्रतिष्ठादिमिश्रप्रकरणम् ॥ ४ ॥

श्रीगणेशायनमः ॥ एवंसपरिकरमाह्निकाचारंश्राद्धकाण्डंचोक्त्वाक्रमायातंविविधव्रतोद्यापनसुरप्रतिष्ठाशान्तिकादियुतमिष्टापूर्तप्रकरणमारभ्यते । तत्रादावखिलव्रतोद्यापनप्रतिष्ठादिष्वावश्यकाःसर्वतोभद्रलिङ्गतोभद्रादिकारिकास्तत्रस्थाप्यब्रह्मादिमण्डलदेवताश्चक्रमेणोपकल्प्यन्ते—

**अथ सर्वतोभद्रकारिकाः** ॥ प्रागुदीच्यायतारेखाः कुर्यादेकोनविंशतिं ॥ खण्डेन्दुस्त्रिपदःकोणे शृङ्खलापञ्चभिःपदैः ॥ १ ॥ एकादशपदावल्लीभद्रंतुनवभिःपदैः ॥ चतुर्विंशत्पदावापीपरिधिर्विंशतिःपदैः ॥२॥ मध्येषोडशभिःकोष्ठैःपद्ममष्टदलं स्मृतं ॥ श्वेतेन्दुःशृङ्खलाकृष्णावल्लींनीलेनपूरयेत् ॥ ३ ॥ भद्रारुणासितावापीपरिधिःपीतवर्णकैः॥ बाह्योत्तरदलैःश्वेताकर्णिकापीतवर्णका ॥४॥ परिध्यावेष्टितंपद्मंबाह्येसत्वंरजस्तमः ॥ तन्मध्येस्थापयेद्देवान्ब्रह्माद्यांश्चसुरेश्वरान् ॥५॥ इतिसर्वतोभद्रप्रमाणं ॥ ॥ **अथ द्वादशलिङ्गतोभद्रप्रमाणं** ॥ प्रागुदीच्यांगतारेखाःकुर्याद्द्वाविंशतिस्तथा ॥ खण्डेन्दुस्त्रिपदाकोणेपट्पदाचैवशृङ्खला ॥१॥ त्रयोदशपदावल्लीचतुर्भिर्भद्रमेवच ॥ कृष्णधान्येनरुद्रःस्याल्लिङ्गंस्यादष्टभिःपदैः ॥२॥ उभयोर्लिङ्गयोर्मध्येवाप्येकादशभिःपदैः ॥ तृतीयं तादृशं लिङ्गंवाप्यूर्ध्वेचाष्टभिःपदैः ॥ ३ ॥ पदानिपरिशेषाणितण्डुलेनैवपूरयेत् ॥ परिधिश्चतुर्विंशत्यापदैरक्तंचमध्यतः ॥ ४ ॥ तन्मध्येपरिधिःपीतापदानितस्यषोडश ॥ कमलंह्यष्टपत्रंस्यात्तन्मध्येनवभिःपदैः ॥ ५ ॥ मण्डलंद्वादशलिङ्गंस्याल्लतालिङ्गोद्भवं तथा ॥ शिवव्रते समुद्दिष्टं सर्वसिद्धिकरंपरं ॥ ६ ॥ इतिलिङ्गतोभद्रप्रमाणं ॥ अन्यानिच एकलिङ्गतोभद्रंचतुर्लिङ्गतोभद्रमष्टलिङ्गतोभद्रंहरिहरमण्डलात्मकमपूर्वंद्वादशलिङ्गतोभद्रादीनिक्वचित्क्वचिदुपयुक्तान्युपन्यसनीयान्यपिग्रन्थविस्तरभयान्नोपन्यस्तानिकिंत्वारंभेमण्डलसंग्रहःक्रियते तेषांमूलवचनकारिकादिजातमाकरान्तरतोवगन्तव्यम् ॥

अथसर्वतोभद्रमण्डलदेवतास्थापनम् ॥ आचमनादिदेशकालौस्मृत्वा अमुककर्माङ्गत्वेनसर्वतोभद्रमण्डलदेवतास्थापनं
पूजनंचाहंकरिष्ये ॥ मध्येकर्णिकायाम् ॥ ब्रह्मजज्ञानमितिमन्त्रस्यप्रजापतिर्ऋषिः त्रिष्टुप्छन्दः आदित्योदेवताब्रह्मस्थापने वि-
नियोगः ॥ ॐब्रह्मंजज्ञानंप्रथमंपुरस्ताद्विसीमतःसुरुचोवेनआवः ॥ सबुध्न्याउपमाअस्यविष्ठाःसतश्चयोनिमसतश्चविवः
॥ १ ॥ मन्त्रान्तेब्रह्माणंआवाहयामिस्थापयामि इति ब्रह्माणंमध्येस्थापयेत् ॥ एवंसर्वत्र ॥ ततउदीचीमारभ्यवायु-
कोणपर्यन्तंकुबेरादीन्वायुपर्यन्तानष्टौलोकपालान्स्थापयेत् ॥ उत्तरेवाप्यां ॥ वयꣳसोमेत्यस्यबन्धुर्ऋषिःगायत्रीच्छन्दः
सोमोदेवता सोमस्थापनेविनियोगः ॥ ॐवयꣳसोमव्रतेतवमनस्तनूषुबिभ्रतः ॥ प्रजावन्तꣳसचेमहि ॥ २ ॥ सोमाय-
नमःसोमंआ० ॥ ईशान्यांखण्डेन्दौ ॥ तमीशानमित्यस्यगोतमऋषिःजगतीछन्दःविश्वेदेवादेवताईशानस्थापनेवि० ॥ ॐत-
मीशानंजगतस्तस्थुषस्पतिंधियञ्जिन्वमवसेहूमहेवयं ॥ पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धःस्वस्तये ॥ ३ ॥ ईशा-
नायनमः ईशानमा० ॥ पूर्ववाप्यां ॥ त्रातारमितिमन्त्रस्यगर्गऋषिःत्रिष्टुप्छन्दःइन्द्रोदेवताइन्द्रस्थापनेवि० ॥ ॐत्राता-
रमिन्द्रमवितारमिन्द्रꣳहवेहवेसुहवꣳशूरमिन्द्रं ॥ ह्वयामिशक्रंपुरुहूतमिन्द्रꣳस्वस्तिनोमघवाधात्विन्द्रः ॥४॥ इन्द्राय० ॥
आग्नेय्यां खण्डेन्दौ ॥ त्वंनोअग्नइतिमन्त्रस्यआंगिरसहिरण्यस्तूपऋषिःजगतीछन्दःअग्निर्देवताअग्निस्थापनेवि० ॥ त्वंनोअग्ने-
तववेदवपायुभिर्मघोनोरक्षतन्वश्चवन्द्य ॥ त्रातातोकस्यतनयेगवामस्यनिमेषꣳरक्षमाणस्तवव्रते ॥ ५ ॥ अग्नयेनमः० ॥

दक्षिणेवाप्यां ॥ यमायत्वेतिमन्त्रस्यदध्यङ्ङाथर्वणऋषिः त्रीणियजूंषिआद्यस्ययमनामावातोअंत्ययोर्घर्मोदेवतायमस्थापने-
वि०॥ ॐयमायत्वाङ्गिरस्वतेपितृमतेस्वाहा ॥ स्वाहाघर्मायस्वाहाघर्मः पित्रे ॥६॥ यमायनमः यमं० ॥ नैर्ऋत्यांखण्डेन्दौ ॥
असुन्वन्तमित्यस्यप्रजापतिर्ऋषिःत्रिष्टुपछन्दःनिर्ऋतिर्देवतानिर्ऋतिस्थापनेवि० ॥ ॐअसुन्वन्तमयजमानमिच्छस्तेनस्ये-
त्यामन्विहितस्करस्य ॥ अन्यमस्मदिच्छसातइत्यानमोदेविनिर्ऋतेतुभ्यमस्तु ॥७॥ निर्ऋतयेनमः० ॥ पश्चिमेवाप्यां ॥ तत्त्वा-
यामीतिमन्त्रस्यशुनःशेपऋषिःत्रिष्टुपछन्दःवरुणोदेवतावरुणस्थापनेवि० ॥ ॐतत्त्वायामिब्रह्मणावन्दमानस्तदाशास्तेयजमा-
नोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशꣳसमानआयुःप्रमोषीः ॥८॥ वरुणायनमः० ॥ वायव्यांखण्डेन्दौ ॥ आनोनियु-
द्भिरितिमन्त्रस्यवसिष्ठऋषिःत्रिष्टुपछन्दःवायुर्देवतावायुस्थापनेवि० ॥ ॐआनोनियुद्भिःशतिनीभिरध्वरꣳसहस्रिणीभिरुप-
याहियज्ञं ॥ वायोअस्मिन्सवनेमादयस्वयूयंपातस्वस्तिभिःसदानः ॥९॥ वायवेनमः० ॥ वायुसोममध्येभद्रे ॥ सुगावोदे-
वाइतिमन्त्रस्यप्रजापतिर्ऋषिःत्रिष्टुपछन्दःदेवादेवताःवसुस्थापनेवि० ॥ ॐसुगावोदेवाःसदनाऽअकर्मजआजग्मेदꣳसव-
नंजुषाणाः ॥ भरमाणावहमानाहवीꣳष्यस्मेधत्तवसवोवसूनि ॥ १० ॥ अष्टवसुभ्योनमःअष्टवसूनावा० ॥ सोमे-
शानमध्येभद्रे ॥ रुद्राःसꣳसृज्येत्यस्यप्रजापतिर्ऋषिःअनुष्टुपछन्दःरुद्रोदेवतारुद्रस्थापनेवि० ॥ ॐरुद्राःसꣳसृज्यपृथिवींबृ-
हज्ज्योतिःसमीधिरे ॥ तेषांभानुरजस्रइच्छुक्रोदेवेषुरोचते ॥११॥ एकादशभ्योरुद्रेभ्योनमःएकादशरुद्राना० ॥ उदकोप०॥

ईशानेन्द्रमध्येभद्रे ॥ यज्ञोदेवानामित्यस्यकुत्सऋषिःयजुरंतंत्रिष्टुपछन्दःआदित्योदेवताआदित्यस्थापनेवि० ॥ ॐयज्ञोदे-
वानांप्रत्येतिसुम्नमादित्यासोभवतामृडयन्तः॥आवोर्वाचीसुमतिर्ववृत्यादꣳहोश्चिद्यावरिवोवित्तरासदादित्येभ्यस्त्वा ॥१२॥
द्वादशादित्येभ्योनमःद्वादशादित्याना० ॥ इन्द्राग्निमध्येभद्रे ॥ यावांकशेत्यस्यमेधातिथिर्ऋषिःयजुरंतंगायत्रीछन्दःअ-
श्विनौदेवतेअश्विनोःस्थापनेवि० ॥ ॐयावांकशामधुमत्याश्विनासूनृतावती ॥ तयायज्ञंमिमिक्षतं ॥ १३ ॥ अश्विभ्यां-
नमःअश्विनावावा० ॥ अग्नियममध्येभद्रे ॥ ओमासश्चर्षणीधृतइत्यस्यमधुच्छन्दाऋषिःगायत्रीछन्दःविश्वेदेवादेवताः वि-
श्वेदेवस्थापनेवि० ॥ ॐओमासश्चर्षणीधृतोविश्वेदेवासआगत ॥ दाश्वाꣳसोदाशुषःसुतं ॥ १४ ॥ विश्वेभ्योदेवेभ्यो-
नमःविश्वान्देवानावा० ॥ यमनिर्ऋतिमध्येभद्रे ॥ अभित्यंदेवमित्यस्यप्रजापतिर्ऋषिःअष्टिच्छन्दःसवितादेवता य-
क्षस्थापनेवि० ॥ ॐअभित्यंदेवꣳसवितारमोण्योःकविक्रतुमर्चामिसत्यसवꣳरत्नधामभिप्रियंमतिंकविं ॥ ऊर्ध्वायस्या-
मतिर्भाअदिद्युतत्सवीमनिहिरण्यपाणिरमिमीतसुक्रतुःकृपास्वः ॥ १५ ॥ यक्षेभ्योनमः यक्षानावा० ॥ निर्ऋतिवरु-
णमध्येभद्रे ॥ नमोस्तुसर्पेभ्य इत्यस्यप्रजापतिर्ऋषिः अनुष्टुप्छन्दःसर्पादेवताःसर्पस्थापनेवि० ॥ ॐनमोस्तुसर्पेभ्योयेकेच-
पृथिवीमनु ॥ येअन्तरिक्षेयेदिवितेभ्यःसर्पेभ्योनमः ॥ १६ ॥ सर्पेभ्योनमः सर्पानावाह० ॥ तत्रैव ॥ ॐभूतेभ्योनमः-
भूतानावाहयामि ॥ १७ ॥ वरुणवायुमध्येभद्रे ॥ ऋताषाडित्यस्यदेवाऋषयःयजूंषि गन्धर्वाप्सरोदेवतागन्धर्वाप्सरःस्थाप-

नेवि० ॥ ॐऋताषाडृतधामाग्निर्गन्धर्वस्तस्यौषधयोप्सरसोमुदोनाम ॥ सनइदंब्रह्मक्षत्रंपातुतस्मैस्वाहावाट्ताभ्यः ॥ १८ ॥ गन्धर्वाप्सरोभ्योनमःगन्धर्वाप्सरसआ० ॥ ब्रह्मसोममध्येवाप्यां ॥ यदक्रन्देत्यस्यजमदग्निर्दीर्घतमावृषीत्रिष्टुप्छन्दः अश्वोदेवतास्कन्दस्थापनेवि० ॥ ॐयदक्रन्दःप्रथमंजायमानउद्यन्त्समुद्रादुतवापुरीषात् ॥ श्येनस्यपक्षाहरिणस्यबाहू-उउपस्तुत्यंमहिजातंतेअर्वन् ॥ १९ ॥ स्कन्दायनमः स्कन्दमावा० ॥ तत्रैवनाममन्त्रेण ॥ ॐनन्दिनेनमः । नन्दिनंआ० ॥ २० ॥ ॐईश्वरायन० ईश्वरमा० ॥ २१ ॥ ॐशूलायनमःशूलमावा० ॥ २२ ॥ ॐमहा-कालायनमः महाकालमावा० ॥ २३ ॥ ब्रह्मेशानमध्येवल्लीपु ॥ अदितिर्द्यौरित्यस्यगोतमऋषिः त्रिष्टुप्छन्दः विश्वेदेवा-देवताः दक्षादिसप्तकस्थापनेवि० ॥ ॐअदितिर्द्यौरदितिरन्तरिक्षमदितिर्मातासपितासपुत्रः ॥ विश्वेदेवाअदितिःपञ्चज-नाअदितिर्जातमदितिर्जनित्वं ॥२४॥ दक्षादिसप्तकायनमः दक्षादिसप्तकमावा० ॥ ब्रह्मेन्द्रमध्येवाप्यां ॥ अम्बेअम्बिक-इत्यस्यप्रजापतिर्ऋषिःअनुष्टुप्छन्दःअश्वोदेवतादुर्गास्थापनेवि० ॥ ॐअम्बेअम्बिकेम्बालिकेनमानयतिकश्चन ॥ ससस्त्य-श्वकःसुभद्रिकांकाम्पीलवासिनीं ॥ २५ ॥ दुर्गायैनमःदुर्गामावा० ॥ तत्रैव ॥ इदंविष्णुरित्यस्यमेधातिथिर्ऋषिःगायत्री-छन्दःविष्णुर्देवताविष्णुस्थापनेवि० ॥ ॐइदंविष्णुर्विचक्रमेत्रेधानिदधेपदं ॥ समूढमस्यपांसुरे ॥ २६ ॥ विष्ण-वेनमःविष्णुमा० ॥ ब्रह्माग्निमध्येवल्लीपु ॥ पितृभ्यइत्यस्यप्रजापत्याश्विसरस्वत्यऋषयः सप्तयजूंषि पितरोदेवताः स्व-धास्थापनेवि० ॥ ॐपितृभ्यःस्वधायिभ्यःस्वधानमःपितामहेभ्यःस्वधायिभ्यःस्वधानमःप्रपितामहेभ्यःस्वधायिभ्यःस्व-

धानमः ॥ अक्षन्पितरोमीमदन्तपितरोतीतृपन्तपितरः पितरःशुन्धध्वं ॥ २७ ॥ स्वधायैनमः स्वधामावा० ॥ ब्रह्मयम-
मध्येवाप्यां ॥ परंमृत्योइत्यस्यसंकसुकऋषिःत्रिष्टुप्छन्दःमृत्युर्देवतामृत्युस्थापनेवि० ॥ ॐपरंमृत्योअनुपरेहिपन्थांयस्ते-
अन्यइतरोदेवयानात् ॥ चक्षुष्मतेशृण्वतेतेब्रवीमिमानःप्रजाꣳरीरिषोमोतवीरान् ॥ २८ ॥ मृत्यवेनमःमृत्युमावा० ॥
ब्रह्मनिर्ऋतिमध्येवल्लीषु ॥ गणानांत्वेत्यस्यप्रजापतिर्ऋषिः चत्वारियजूंषि गणपतिर्देवतागणपतिस्थापनेवि० ॥ ॐगणानां-
त्वागणपतिꣳहवामहे० ॥ २९ ॥ गणपतयेनमःगणपतिमा० ॥ ब्रह्मवरुणमध्येवाप्यां ॥ शंनोदेवीरित्यस्यदध्यङ्ङाथर्वण-
ऋषिःगायत्रीछन्दःआपोदेवताअप्स्थापनेवि० ॥ ॐशंनोदेवीरभिष्टयआपोभवन्तुपीतये ॥ शंयोरभिस्रवन्तुनः ॥ ३० ॥
अद्भ्योनमःअपआ० ॥ ब्रह्मवायुमध्येवल्लीषु ॥ मरुतोयस्येत्यस्यगोतमऋषिःगायत्रीछन्दःमरुतोदेवताःमरुत्स्थापनेवि० ॥
ॐमरुतोयस्यहिक्षयेपाथादिवोविमहसः ॥ ससुगोपातमोजनः ॥ ३१ ॥ मरुद्भ्योनमःमरुतआवा० ब्रह्मणःपादमूलेक-
र्णिकाधः ॥ स्योनापृथिवीत्यस्यमेधातिथिर्ऋषिःगायत्रीछन्दःपृथ्वीदेवतापृथ्वीस्थापनेवि० ॥ ॐस्योनापृथिविनोभवानृ-
क्षरानिवेशनी ॥ यच्छानःशर्मसप्रथाः ॥३२॥ पृथिव्यैनमःपृथ्वीमावा० ॥ तत्रैव ॥ पञ्चनद्यइत्यस्यआदित्ययाज्ञवल्क्यावृषी
अनुष्टुप्छन्दःसरस्वतीनदीदेवतागङ्गादिनदीस्थापनेवि० ॥ पञ्चनद्यःसरस्वतीमपियन्तिसस्रोतसः ॥ सरस्वतीतुपंचधासोदे-
शेभवत्सरित् ॥ ३३ ॥ गङ्गादिनदीभ्योनमःगङ्गादिनदीरावा० ॥ तत्रैव ॥ इमंमइत्यस्यशुनःशेपऋषिःगायत्रीछन्दःवरु-
णोदेवतासप्तसागरस्थापनेवि० ॥ ॐइमंमेवरुणश्रुधीहवमद्याचमृडय ॥ त्वामवस्युराचके ॥ ३४ ॥ सप्तसागरेभ्योनमः-

सप्तसागरानावाह० ॥ ततोनाम्नाकर्णिकोपरि ॥ ॐमेरवेनमःमेरुमाया० ॥ ३५ ॥ बाह्यपरिधौसोमादिसमीपे ॥ ॐग-
दायैनमःगदामावा० ॥ ३६ ॥ ईशानान्तिके ॥ ॐत्रिशूलायनमःत्रिशूलमावा० ॥ ३७ ॥ इन्द्रान्तिके ॥ ॐवज्राय-
नमःवज्रमावा० ॥ ३८ ॥ अग्निसमीपे ॥ ॐशक्तयेनमः शक्तिमावा० ॥ ३९ ॥ यमान्तिके ॥ ॐदण्डायनमःदण्ड-
मावा० ॥४०॥ निर्ऋतिसमीपे ॥ ॐखड्गायनमःखड्गमावा० ॥४१॥ वरुणान्तिके ॥ ॐपाशायनमःपाशमावा० ॥४२॥
वायुसमीपे ॥ ॐअङ्कुशायनमःअङ्कुशमावा० ॥ ४३ ॥ तद्बाह्योत्तरे ॥ ॐगौतमायनमःगौतममा० ॥ ४४ ॥ ईशान्ये ॥
भरद्वाजायनमःभरद्वाजमावा० ॥ ४५ ॥ पूर्वे ॥ ॐविश्वामित्रायनमःविश्वामित्रमावा० ॥ ४६ ॥ आग्नेय्यां ॥ ॐकश्य-
पायनमःकश्यपमावा० ॥ ४७ ॥ दक्षिणे ॥ ॐजमदग्नयेनमःजमदग्निमावा० ॥ ४८ ॥ नैर्ऋत्यां ॥ ॐवसिष्ठायनमः-
वसिष्ठमावा० ॥ ४९ ॥ पश्चिमे ॥ ॐअत्रयेनमःअत्रिमावा० ॥ ५० ॥ वायव्यां ॥ ॐअरुन्धत्यैनमःअरुधन्तीमावा०
॥ ५१ ॥ तद्बाह्येपूर्वे ॥ ॐऐन्द्र्यैनमःऐन्द्रीमावा० ॥ ५२ ॥ आग्नेय्यां ॥ ॐकौमार्यैनमःकौमारीमावा० ॥ ५३ ॥ द-
क्षिणे ॥ ॐब्राह्म्यैनमः ब्राह्मीमा० ॥ ५४ ॥ नैर्ऋत्यां ॥ ॐवाराह्यैनमः वाराहीमावा० ॥ ५५ ॥ पश्चिमे ॥ ॐचामु-
ण्डायैनमःचामुण्डामावा० ॥ ५६ ॥ वायव्यां ॥ ॐवैष्णव्यैनमःवैष्णवीमावा० ॥ ५७ ॥ उत्तरे ॥ ॐकौबेर्यैनमःकौ-
बेरीमावा० ॥ ५८ ॥ ईशान्यां ॥ ॐवैनायक्यैनमः वैनायकीमावा० ॥ ५९ ॥ एवंसर्वतोभद्रदेवताआवाह्यपूजनं बलि-
दानंचविधायप्रधानहोमान्तेतत्तन्मन्त्रैर्नाममन्त्रैर्वाप्रत्येकंदशदशतिलाहुतिभिरेकैकाज्याहुत्यावाजुहुयात् ॥

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ब्रह्मयज्ञानं. | १ ब्रह्मणेनमः | आनोनियु. | ९ वायवेनमः | ऋताषाडृत. | १८ गंधर्वाप्सरो० | पितृभ्यःस्वधा. | २७ स्वधायैनमः |
| वयᳬसोम. | २ सोमायनमः | सुगावो. | १० अष्टवसुभ्योन | यदक्रन्दःप्र. | १९ स्कन्दायनमः | परंमृत्यो. | २८ मृत्युरोगेभ्योन. |
| तमीशानं. | ३ ईशानायनमः | रुद्राःसुᳬ | ११ एकादशरुद्रेभ्यो | | २० नंदिनेनमः | गणानांत्वा. | २९ गणपतयेनमः |
| त्रातारमिन्द्रं. | ४ इन्द्रायनमः | यज्ञोदेवा | १२ द्वादशादित्ये० | | २१ ईश्वरायनमः | शंनोदेवी. | ३० अद्भ्योनमः |
| | | यावांकशा. | १३ अश्विभ्यांनमः | | २२ शूलायनमः | मरुतोयस्य. | ३१ मरुद्भ्योनमः |
| त्वंनोअग्ने. | ५ अग्नयेनमः | ओमास. | १४ विश्वेभ्योदेवे० | | २३ महाकालायन. | स्योनापृथिवि. | ३२ पृथिव्यैनमः |
| यमायत्वा. | ६ यमायनमः | अभित्यंदेवं. | १५ सप्तयक्षेभ्योन. | अदितिर्द्यौ. | २४ दक्षादिसप्तका० | पञ्चनद्यः | ३३ गङ्गादिनदीभ्यो |
| असुन्वन्तं. | ७ निर्ऋतयेनमः | नमोस्तुस. | १६ सर्पेभ्योनमः | अंबेअंबिके० | २५ दुर्गायैनमः | इमंमेवरुण. | ३४ सप्तसागरेभ्यो० |
| तत्त्वायामि. | ८ वरुणायनमः | | १७ भूतेभ्योनमः | इदंविष्णु. | २६ विष्णवेनमः | | ३५ मेरवेनमः |
| ३६ गदायैनमः | ३९ शक्तयेनमः | ४२ पाशायनमः | ४५ भरद्वाजायनमः | ४८ जमदग्नयेनमः | ५१ अरुन्धत्यैनमः | ५४ ब्राह्म्यैनमः | ५७ वैष्णव्यैनमः |
| ३७ त्रिशूलायनमः | ४० दण्डायनमः | ४३ अङ्कुशायनमः | ४६ विश्वामित्राय० | ४९ वसिष्ठायनमः | ५२ ऐन्द्र्यैनमः | ५५ वाराह्यैनमः | ५८ कौबेर्यैनमः |
| ३८ वज्रायनमः | ४१ खड्गायनमः | ४४ गौतमायनः | ४७ कश्यपायनमः | ५० अत्रयेनमः | ५३ कौमार्यैनमः | ५६ चामुण्डायैनमः | ५९ वैनायक्यैनमः |

अथलिङ्गतोभद्रदेवताः ॥ पूर्वलिङ्गेपु ॥ ॐवीरभद्रायनमःवीरभद्रमावा० ॥ १ ॥ ॐशंभवेनमः शंभुमावा० ॥ २ ॥ ॐअजैकपदेनमःअजैकपदमा० ॥ ३ ॥ दक्षिणलिङ्गेपु ॥ ॐअहिर्बुध्न्यायनमः अहिर्बुध्न्यमा० ॥ ४ ॥ ॐपिनाकिनेनमः पिनाकिनमा० ॥ ५ ॥ ॐशूलपाणयेनमः शूलपाणिमा० ॥ ६ ॥ पश्चिमलिङ्गेपु ॥ ॐभुवनाधीश्वरायनमः भुवनाधीश्वरमा० ॥ ७ ॥ ॐकपालिनेनमः कपालिनमा० ॥ ८ ॥ ॐदिक्पतयेनमः दिक्पतिमावा० ॥९॥ उत्तरलिङ्गेषु ॥ ॐरुद्रायनमः रुद्रमा० ॥ १० ॥ ॐशिवायनमः शिवमावा० ॥ ११ ॥ ॐमहेश्वरायनमः महेश्वरमावा० ॥ १२ ॥ अष्टभैरवदेवताः पूर्वादिक्रमेण ॥ ॐअसिताङ्गभैरवायनमः असिताङ्गभैरवमा० ॥१॥ ॐरुरुभैरवायनमः रुरुभैरवमावा० ॥२॥ ॐचण्डभैरवायनमः ॥ ३ ॥ ॐक्रोधभैरवायनमः ॥ ४ ॥ ॐउन्मत्तभैरवायनमः ॥ ५ ॥ ॐकपालभैरवायनमः ॥६॥ ॐभीषणभैरवायनमः ॥ ७ ॥ ॐसंहारभैरवायनमः ॥ ८ ॥ पूर्वादिक्रमेणचतुर्विंशतिदेवताःस्थापनीयाः ॥ ॐभवायनमः भवं० ॥१॥ ॐशर्वायनमः शर्वं० ॥२॥ ॐरुद्रायनमः रुद्रं० ॥ ३ ॥ ॐपशुपतयेनमः पशुपतिं० ॥ ४ ॥ ॐमहतेनमः महान्तं० ॥ ५ ॥ ॐभीमायनमः भीमं० ॥६॥ ॐईशानायनमः ईशानं० ॥ ७ ॥ ॐअनन्तायनमः अनन्तं० ॥ ८ ॥ ॐवासुकयेनमः वासुकिं० ॥१०॥ ॐकुलिशायनमः कुलिशं० ॥११॥ ॐकर्कोटकायनः कर्कोटकं० ॥ १२ ॥ शङ्खपालायनमः शङ्खपालं० ॥ १३ ॥ ॐकम्बलायनमः कम्बलं० ॥१४॥ ॐअश्वतरायनमः अश्वतरं० ॥ १५ ॥ ॐशूलिनेनमः शूलिनं० ॥ १६ ॥ ॐचन्द्रमौलयेनमः चन्द्रमौलिं० ॥ १७॥ ॐचन्द्रमसेनमः चन्द्रमसं० ॥ १८ ॥ ॐवृषभ-

ध्वजायनमः वृषभध्वजं० ॥१९॥ ॐत्रिलोचनायनमःत्रिलोचनं० ॥२०॥ ॐशक्तिधरायनमःशक्तिधरं० ॥२१॥ ॐमहेश्व-रायनमःमहेश्वरं० ॥२२॥ ॐशूलधारिणेनमःशूलधारिणं ॥२३॥ ॐस्थाणवेनमःस्थाणुं० ॥२४॥ इतिलिङ्गतोभद्रदेवताः ॥

अथलिङ्गतोभद्रदेवतास्थापनं ॥ आचमनं । प्राणायामः । उक्तविशेषणवतिदेशेकालेचअमुकव्रताङ्गभूतंचतुर्लिङ्गोद्भव-लिङ्गतोभद्रदेवतास्थापनंपूजनंचाहंकरिष्ये ॥ मध्येकर्णिकायां ॥ ब्रह्मजज्ञानमितिमन्त्रस्यप्रजापतिर्ऋषिःत्रिष्टुप्छन्दः आ-दित्योदेवता ब्रह्मस्थापनेविनियोगः ॥ ॐब्रह्मजज्ञानं० ॥ ब्रह्मणेनमः ब्रह्माणमावाहयामि ॥ एवंसर्वत्र ॥ उदीचीमा-रभ्य वायुकोणपर्यंतं कुबेरादीन्वायुपर्यंतानष्टौलोकपालान्स्थापयेत् ॥ तत्रादौ उत्तरलिङ्गस्याधः ॥ वयꣳसोमेत्यस्यबन्धु-ऋषिःगायत्रीछन्दःसोमोदेवता सोमस्थापनेवि० ॥ ॐवयꣳसोम० । सोमायनमःसोमं० ॥ ईशान्यांखण्डेन्दौ ॥ तमी-शानमितिमन्त्रस्यगोतमऋषिः जगतीछन्दः विश्वेदेवादेवता ईशानस्था० ॥ ॐतमीशानं० । ईशानाय० ईशानं० ॥ पूर्व-लिङ्गस्याधः ॥ त्रातारमितिमन्त्रस्यगर्गऋषिःत्रिष्टुप्छन्दः इन्द्रोदेवताइन्द्रस्थापनेवि० ॥ ॐत्रातारमिन्द्रं० । इन्द्रायनमः इंद्रं० ॥ आग्नेय्यांखण्डेन्दौ ॥ त्वन्नोअग्नइत्यस्यआङ्गिरसहिरण्यस्तूपऋषिःजगतीछन्दः अग्निर्देवता अग्निस्था० । ॐत्व-न्नोअग्ने० । अग्नयेनमःअग्निं० ॥ दक्षिणलिङ्गस्याधः ॥ यमायत्वेत्यस्यदध्यङ्ङाथर्वणऋषिःत्रीणियजूंषि आद्यस्ययमनामा वातोदेवता अन्त्ययोर्धर्मोदेवता । यमस्थापनेवि० ॥ ॐयमायत्वा० । यमायनमःयमं० ॥ नैर्ऋत्यांखण्डेन्दौ ॥ असुन्व-न्तमित्यस्यप्रजापतिर्ऋषिःत्रिष्टुप्छन्दःनिर्ऋतिर्देवतानिर्ऋतिस्थापने० । ॐअसुन्वन्त० । निर्ऋतयेनमःनिर्ऋतिं० ॥ पश्चि-

मलिङ्गस्याधः ॥ तत्त्वायामीत्यस्यशुनःशेपऋषिःत्रिष्टुप्छन्दःवरुणोदेवतावरुणस्थापनेवि० । ॐतत्त्वायामि० । वरुणायनमः वरुणं ॥ वायव्यांखण्डेन्दौ ॥ आनोनियुद्भिरित्यस्यप्रजापतिर्ऋषिःत्रिष्टुप्छन्दः वायुर्देवता वायुस्थापनेवि० ॥ ॐआनोनियुद्भिः० । वायवेनमः वायुं० ॥ वायुसोममध्येभद्रे ॥ सुगावोदेवाइत्यस्यप्रजापतिर्ऋषिः त्रिष्टुप्छन्दः देवादेवता वसुस्थापनेवि० ॥ ॐसुगावोदेवाः० । वसुभ्योनमः वसूनावा० ॥ ॐध्रुवायनमः ध्रुवं० १ । ॐअध्वरायनमः अध्वरं० २ । ॐसोमायनमःसोमं०३। ॐअद्भ्योनमःअप०४। ॐअनिलायनमःअनिलं०५। ॐअनलायनमःअनलं०६। ॐप्रत्यूषायनमःप्रत्यूषं० ७। ॐप्रभासायनमःप्रभासं० ८॥ सोमेशानमध्येभद्रे ॥ ॐरुद्राःसꣳसृज्येत्यस्यप्रजापतिर्ऋषिःअनुष्टुप्छन्दःरुद्रोदेवतारुद्रस्थापनेवि ॥ ॐरुद्राःसुꣳसृज्य० । रुद्रेभ्योनमःरुद्रान्० ॥ ॐवीरभद्रायनमःवीरभद्रं० १। ॐशंभवेनमःशंभुं० २ । ॐगिरिशायनमःगिरिशं०३। ॐअजैकपादायनमः अजैकपादं०४। ॐअहिर्बुध्न्यायनमःअहिर्बुध्न्यं०५। ॐपिनाकिनेनमःपिनाकिनं०६। ॐभुवनाधीश्वरायनमःभुवनाधीश्वरं०७। ॐकपालिनेनमःकपालिनं०८।ॐदिक्पतयेनमःदिक्पतिं०९। ॐस्थाणवेनमःस्थाणुं०१०।ॐरुद्रायनमःरुद्रं०११। यज्ञोदेवानामित्यस्यकुत्सऋषिः यजुरन्तं त्रिष्टुप्छन्दः। आदित्योदेवताआदित्यस्थापनेवि०। ॐयज्ञोदेवानां०। द्वादशादित्येभ्योनमः द्वादशादित्यान्०॥ ॐभगायनमःभगं०१। ॐवरुणायनमःवरुणं० २। ॐसूर्यायनमःसूर्यं० ३ । ॐवेदाङ्गायनमःवेदाङ्गं०४ । ॐभानवेनमःभानुं०५ । ॐरवयेनमःरविं० ६ । ॐगभस्तयेनमःगभस्तिं० ७।ॐहिरण्यरेतसेनमःहिरण्यरेतसं० ८। ॐदिवाकरायनमःदिवाकरं०९। ॐमित्रायनमःमित्रं०१०। ॐआदित्या-

यनमःआदित्यं० ११ ।ॐविष्णवेनमःविष्णुं०१२॥ इन्द्राग्निमध्येभद्रे ॥ यावांकशेत्यस्यमेधातिथिर्ऋषिः यजुर्गायत्रीछन्दः-
अश्विनौदेवता अश्विस्थापनेवि० ।ॐयावांकशा० । अश्विभ्यांनमः अश्विनौआवा० ॥ अग्नियममध्येभद्रे ॥ ओमासश्चर्षणी-
धृतइत्यस्यमधुच्छन्दाऋषिःगायत्रीछन्दः विश्वेदेवादेवता विश्वेदेवस्थापने० ॥ ॐओमासश्चर्षणी० । विश्वेभ्योदेवेभ्यो-
नमःविश्वान्देवान्० ॥ यमनिर्ऋतिमध्येभद्रे ॥ अभित्यंदेवमित्यस्यप्रजापतिर्ऋषिः अष्टिछन्दःसवितादेवता सप्तयक्षस्थाप-
नेवि० । ॐअभित्यंदेवꣳ० । सप्तयक्षेभ्योनमःसप्तयक्षान्० ॥ निर्ऋतिवरुणमध्येभद्रे ॥ नमोस्तुसर्पेभ्यइत्यस्यप्रजापति-
र्ऋषिःअनुष्टुप्छन्दः सर्पादेवतासर्पस्थापने० । ॐनमोस्तुसर्पेभ्यो० । सर्पेभ्योनमःसर्पान्० ॥ तत्रैव ॐभूतेभ्योनमःभू-
तानि० ॥ वरुणवायुमध्येभद्रे ॥ ऋताषाडित्यस्यदेवाऋषयःगन्धर्वाप्सरसोदेवताःगन्धर्वाप्सरःस्थापनेवि० । ॐऋताषा-
ड्ऋत० । गन्धर्वाप्सरोभ्योनमःगन्धर्वाप्सरसः ॥ उत्तरलिङ्गस्याधः ॥ यदक्रन्देत्यस्यजमदग्निदीर्घतमावृषीत्रिष्टुप्छन्दःअ-
श्वोदेवतास्कन्दस्थापनेवि० । ॐयदक्रन्दःप्रथमं० । स्कन्दायनमःस्कन्दं० ॥ तत्रैवनाममन्त्रेण ॥ ॐनन्दिनेनमःनन्दिनं ।
ॐईश्वरायनमःईश्वरं० । ॐशूलायनमःशूलं० । ॐमहाकालायनमः महाकालं० ॥ ब्रह्मेशानमध्येशृङ्खलासु ॥ अदितिर्द्यौ-
रित्यस्यगोतमऋषिःत्रिष्टुप्छन्दः विश्वेदेवादेवतादक्षादिसप्तकस्थापनेवि० । ॐअदितिर्द्यौ० । दक्षादिसप्तकायनमःदक्षादिस-
प्तकं०॥ पूर्वलिङ्गस्याधः ॥अम्बेअम्बिकइत्यस्यप्रजापतिर्ऋषिःअनुष्टुप्छन्दः अश्वोदेवतादुर्गास्थापनेवि० । ॐअम्बेअम्बि-
के० ॥ दुर्गायैनमःदुर्गां० ॥ तत्रैव ॥ इदंविष्णुरित्यस्यमेधातिथिर्ऋषिःगायत्रीछन्दःविष्णुर्देवताविष्णुस्थापनेवि० । ॐइदं-

विष्णु० । विष्णवेनमः विष्णुं० ॥ ब्रह्माग्निमध्येशृङ्खलावल्लिषु ॥ पितृभ्यइत्यस्यप्रजापत्यश्विसरस्वत्यऋषयः सप्तयजूंषिपितरोदेवतास्वधास्थापनेवि० । ॐपितृभ्यः स्वधायिभ्यः० । स्वधायैनमः स्वधां० ॥ दक्षिणलिङ्गस्याधः ॥ परंमृत्योइत्यस्य संकसुकऋषिः त्रिष्टुप्छन्दः मृत्युर्देवतामृत्युरोगस्थापनेवि० । ॐपरंमृत्योअनु० । मृत्युरोगेभ्योनमः मृत्युरोगान्० ॥ ब्रह्मनिर्ऋतिमध्येशृङ्खलावल्लिषु ॥ गणानांत्वेत्यस्यप्रजापतिर्ऋषिः चत्वारियजूंषिगणपतिर्देवतागणपतिस्थापनेवि० । ॐगणानांत्वा० । गणपतयेनमः गणपतिं० ॥ पश्चिमलिङ्गस्याधः ॥ शन्नोदेवीरित्यस्यदध्यङ्ङाथर्वणऋषिः गायत्रीछन्दः आपोदेवता-अप्स्थापनेवि० । ॐशंनोदेवीर्० । अद्भ्योनमः अपः ॥ ब्रह्मवायुमध्येशृङ्खलावल्लिषु ॥ मरुतोयस्येत्यस्यगोतमऋषिः गायत्रीछन्दः मरुतोदेवतामरुत्स्थापनेवि० । ॐमरुतोयस्यहि० । मरुद्भ्योनमः मरुतः ॥ पद्मस्यकर्णिकाधः ॥ स्योनापृथिवीत्यस्यमेधातिथिर्ऋषिः गायत्रीछन्दः पृथ्वी देवतापृथ्वीस्थापनेवि० । ॐस्योनापृथिवि० । पृथिव्यैनमः पृथिवीं० । तत्रैव ॥ पञ्चनद्यइत्यस्यआदित्ययाज्ञवल्क्यावृषीअनुष्टुप्छन्दः सरस्वतीनदीदेवतागङ्गादिनदीस्थापनेवि० । ॐपञ्चनद्यः स० । गङ्गादिनदीभ्योनमः गङ्गादिनदीः० ॥ तत्रैव ॥ इमंमइत्यस्यशुनःशेपऋषिः गायत्रीछन्दः वरुणोदेवतावरुणस्था० । ॐइमंमेवरुण० । सप्तसागरेभ्योनमः सप्तसागरान्० ॥ ततोनाम्नाकर्णिकोपरि ॥ ॐमेरवेनमः मेरुं० ॥ ततउदीच्यांलिङ्गे ॥ सद्योजातमित्यस्यसद्योजातऋषिः त्रिष्टुप्छन्दः सद्योजातोदेवतासद्योजातस्थापनेवि० । ॐसद्योजातो० । सद्योजातायनमः सद्योजातमा० ॥ प्राच्यांलिङ्गे ॥ वामदेवायेत्यस्यवामदेवऋषिः जगतीछन्दः विष्णुर्देवतावामदेवस्थापनेवि० । ॐवामदे-

वायु० । वामदेवायनमःवामदेवं ॥ दक्षिणस्यांलिङ्गे ॥ अघोरेभ्यइत्यस्यअघोरऋषिः अनुष्टुप्छन्दःरुद्रोदेवताअघोरस्थापनेवि० । ॐअघोरेभ्योथ० । अघोरायनमः अघोरं० ॥ प्राच्यांलिङ्गे ॥ तत्पुरुषायेत्यस्यतत्पुरुषऋषिः गायत्रीछन्दः रुद्रोदेवता तत्पुरुषस्थापनेवि० । ॐतत्पुरुषाय० । तत्पुरुषायनमः तत्पुरुषं० ॥ ततःकर्णिकायांमेरूपरि ॥ ईशानइत्यस्यईशानऋषिः अनुष्टुप्छन्दः रुद्रोदेवता ईशानस्थापनेवि० ॥ ॐईशानःसर्व० । ईशानायनमःईशानं० ॥ ततःपरिधौ ॥ त्वयाहिनइत्यस्य शङ्खऋषिः त्रिष्टुप्छन्दः पितरोदेवता परिधिस्थापनेवि० । ॐत्वयाहिनःपितरः० ॥ परिधयेनमः परिधिं० ॥ ततोमेरोःपरिधिसमंतात् लिङ्गानांस्कन्धेविंशतिकोष्ठेषुचतुःपुर्यः ॥ ॐचतुःपुरीभ्योनमः चतुःपुरीः ॥ तत आग्नेयकोणे शृङ्खलाशिरसिपदत्रये ॥ अग्निमीळइत्यस्यमधुच्छन्दाऋषिःगायत्रीछन्दःअग्निर्देवताऋग्वेदस्थापनेवि० । ॐअग्निमीळे० । ऋग्वेदायनमः ऋग्वेदं० ॥ इषेत्वेत्यस्यपरमेष्ठीप्रजापतिर्ऋषिः दैव्यनुष्टुप्छन्दः शाखादेवता यजुर्वेदस्थापनेवि० ॐइषेत्वोर्जेत्वा० । यजुर्वेदायनमः यजुर्वेदं० ॥ नैर्ऋत्यकोणेशृङ्खलाशिरसिपदत्रये ॥ अग्नआयाहीत्यस्य भरद्वाजऋषिःगायत्रीछंदः अग्निर्देवता सामवेदस्थापनेवि० । ॐअग्नआयाहि० । सामवेदायनमः सामवेदं० ॥ वायुकोणेशृङ्खलाशिरसिपदत्रये ॥ शंनोदेवीरित्यस्यदध्यङ्ङाथर्वणऋषिःगायत्रीछन्दः आपोदेवता अथर्ववेदस्थापनेवि० । ॐशंनोदेवी० । अथर्ववेदायनमःअथर्ववेदं० ॥ ततउत्तरलिङ्गस्यदक्षिणवापीमारभ्यवामवापीपर्यन्तास्वष्टसुवापीषु भवादिमहदन्तानावाहयेत् ॥ ॐभवायनमःभवं० । ॐशर्वायनमःशर्वं० । ॐपशुपतयेनमःपशुपतिं० । ईशानायनमःईशानं० । ॐउग्रायनमःउग्रं० ।

ॐरुद्रायनमः रुद्रं० । ॐभीमायनमः भीमं० । ॐमहतेनमः महान्तंआ० ॥ तथैवतत्तद्बापीसमीपस्थैकैकपदेषु ॥ ॐभवान्यैनमः भवानीं० । ॐशर्वाण्यैनमः शर्वाणीं० । ॐपशुपत्यैनमः पशुपतीं० । ॐईशान्यैईशानीं० । ॐउग्रायैनमः-उग्रां० । ॐरुद्राण्यैनमः रुद्राणीं० । ॐभीमायैनमः भीमां० । ॐमहत्यैनमः महतीं० । ततोबाह्यपरिधौ । सोमसमीपे । ॐगदायैनमः गदां० । ईशानसमीपे ॐत्रिशूलायनमः त्रिशूलं० । इन्द्रसमीपे ॐवज्रायनमः वज्रं० । अग्निसमीपे ॐशक्त्यैनमः शक्तिं० । यमसमीपे ॐदण्डायनमः दण्डं० । निर्ऋतिसमीपे ॐखड्गायनमः खड्गं० । वरुणसमीपे ॐपाशायनमः पाशं० । वायुसमीपे ॐअङ्कुशायनमः अङ्कुशं० ॥ तद्बाह्ये ॥ उत्तरे ॐगोतमायनमः गोतमं० । ईशान्ये ॐभरद्वाजायनमः भरद्वाजं० । पूर्वे । ॐविश्वामित्रायनमः विश्वामित्रं० । आग्नेये ॐकश्यपायनमः कश्यपं० । दक्षिणे ॐजमदग्नयेनमः जमदग्निं० । नैर्ऋत्ये ॐवसिष्ठायनमः वसिष्ठं० । पश्चिमे ॐअत्रयेनम अत्रिं० । वायव्ये ॐअरुन्धत्यैनमः अरुन्धतीं० ॥ तद्बाह्येपूर्वाद्यष्टदिक्षु ॥ ॐऐन्द्र्यैनमः ऐन्द्रीं० । ॐकौमार्यैनमः कौमारीं० ॥ ॐब्राह्म्यैनमः ब्राह्मीं० । ॐवाराह्यैनमः वाराहीं० । ॐचामुण्डायैनमः चामुण्डां० । ॐवैष्णव्यैनमः वैष्णवीं० । ॐकौबेर्यैनमः कौबेरीं० । ॐवैनायक्यैनमः वैनायकीं० ॥ नमोन्तचतुर्थ्यन्तनामभिस्तल्लिङ्गोक्तवैदिकैर्वामन्त्रैरावाह्यसंपूज्य पायसबलिंदत्वाहोमसमये तत्तन्मन्त्रैर्नाममन्त्रैर्वादशदशतिलाहुतिभिरेकैकयाज्याहुत्यावाजुहुयात् ॥ ॐब्रह्मणेनमः पायसबलिंसमर्पयामि एवं सर्वाभ्योबलिदानकार्यं ॥ इतिलिङ्गतोभद्रदेवतास्थापनपूजनादि ॥

अथपौराणमंडलदेवताः ॥ मध्येकर्णिकायां ॥ त्वंवैचतुर्मुखोब्रह्मास्वर्गेलोकपितामहः ॥ आगच्छमंडलेचास्मिन्ममसर्वार्थसिद्धये ॥ १ ॥ भोब्रह्मन्नस्मिन्मंडलेइहागच्छइहतिष्ठपूजांगृहाणसुप्रसन्नोवरदोभव ब्रह्मणेनमः ब्रह्माणंआवा० ॥ उत्तरेवाप्यां ॥ क्षीरोदार्णवसंभूतंलक्ष्मीबंधुंनिशाकरं ॥ मंडलेस्थापयाम्यत्रसोमंसर्वार्थसिद्धये ॥ २ ॥ भोसोमास्मिन्मंडले० ॥ ईशान्यांखंडेंदौ ॥ ईशानीपालकंश्रेष्ठंसर्वलोकभयंकरं ॥ मंडलेस्थापयामीहईशान्यांसर्वसिद्धये ॥ ३ ॥ भोईशानास्मि० ॥ पूर्ववाप्यां ॥ सर्वलोकाधिपंश्रेष्ठंदेवर्षीणांचपालकं ॥ पूर्वदिक्पालकंदेवराजंवैस्थापयाम्यहं ॥ ४ ॥ भोइंद्रा० ॥ आग्नेय्यांखंडेंदौ ॥ त्रिपादंमेषवाहंचत्रिशिखंचत्रिलोचनं ॥ आग्नेय्यांस्थापयाम्यत्रअग्निंपुरुषमुत्तमं ॥ ५ ॥ भोअग्नेअस्मि० ॥ दक्षिणेवाप्यां ॥ अंतकःसर्वलोकानांधर्मराजइतिश्रुतः ॥ अतस्त्वांस्थापयाम्यत्रदक्षिणस्यांस्थिरोभव ॥६॥ भोयमास्मि ॥ नैर्ऋत्यांखंडेंदौ ॥ नैर्ऋत्यांवसतिर्यस्यघोररूपीसदाहियः ॥ निर्ऋतिंस्थापयाम्यत्रनैर्ऋत्यांमंडलेशुभे ॥७॥ भोनिर्ऋतेअ० ॥ पश्चिमेवाप्यां ॥ अपांपतिंपाशधरंयादसांचपतिंशुभं ॥ वरुणंस्थापयाम्यत्रवारुण्यांमंडलेशुभे ॥ ८ ॥ भोवरुणास्मि० ॥ वायव्यांखंडेंदौ ॥ आशुगंसर्वबोधंचगंधवाहंसुशीतलं ॥ मंडलेस्थापयामीहवायव्यांवायुमुत्तमं ॥ ९ ॥ भोवायोअ० ॥ वायुसोममध्येभद्रे ॥ ध्रुवोध्वरश्चसोमश्चआशुगश्चानिलोनलः ॥ प्रत्यूषश्चप्रभासश्चवस्वष्टकमिहस्थिरं ॥ १० ॥ भोवसवअस्मिन्मंडले इहागच्छतइहतिष्ठतपूजांगृह्णीतसुप्रसन्नावरदाभवता ॥ अष्टवसुभ्योनमः । अष्टवसूना० ॥ सोमेशानमध्येभद्रे ॥ त्रिनेत्ररुद्ररूपायत्रिजटायमहात्मने ॥ नमस्कृत्वास्थापयामिमंडलोपरिमध्यतः ॥ ११ ॥ भोएकादशरुद्राअस्मि० ॥

ईशानेंद्रमध्येभद्रे ॥ आदित्यंभास्करंचैवप्रभाकरदिवाकरौ ॥ सूर्यंग्रहपतिंत्र्यंशंतेजोरूपधरंहरिं ॥ ससाश्वंदेवमूर्तिंचत्रिदैव-
क्रमेणच ॥ इत्यादिद्वादशादित्यान्मंडलेस्थापयाम्यहं ॥ १२ ॥ भोद्वादशादित्याअस्मि० ॥ इंद्राग्निमध्येभद्रे ॥ १२ ॥
अश्विनौदेववैद्यौचसर्गस्थित्यंतकारिणौ ॥ मंडलेस्थापयित्वातौपूजयामिसुसिद्धये ॥ १३ ॥ भोअश्विनौअस्मिन्मंडलेइहाग-
च्छतंइहतिष्ठतंपूजांगृह्णीतं सुप्रसन्नौवरदौभवतं ॥ अश्विभ्यांनमःअश्विनौआवा० ॥ अग्नियममध्येभद्रे ॥ दैवेकर्मणिपित्र्ये
चयौमुख्यौसर्वदाशुभौ ॥ मंडलेस्थापयामीहसुखानुष्ठानसिद्धये ॥ १४ ॥ भोःसपितृकाविश्वेदेवाअस्मि० सपितृन्विश्वा-
न्देवाना० ॥ यमनैर्ऋत्यमध्येभद्रे यदृच्छयापर्यटंतोयक्षराजामहीतले ॥ कौतुकंप्रेक्षितुंघोरामंडलेसंतुसुस्थिराः ॥ १५ ॥
भोसप्तयक्षाअ० सप्तयक्षाना० ॥ नैर्ऋत्यवरुणमध्येभद्रे ॥ अवंतीवासुकिश्चैवकालियोमणिभद्रकः ॥ शंखश्चशंखपालश्च-
कालकोटिधनंजयौ ॥ धृतराष्ट्रश्चनागेशाःस्वीकुर्वंतुममार्चनं ॥ मंडलेपूजयाम्यत्रसर्वारिष्टप्रशांतये ॥ १६ ॥ भोसर्पाअ०-
सर्पानावा० ॥ वरुणवायुमध्येभद्रे ॥ उर्वशीप्रमुखाःसर्वाःसर्वेशाःशक्रपूजिताः ॥ गंधर्वैश्चसदायांतुमंडलेस्मिन्सुशोभनाः
॥ १७ ॥ भोगंधर्वाप्सरसअ० गंधर्वान्सरसआ० ॥ ब्रह्मसोममध्येवाप्यां ॥ षडाननंचतुर्हस्तंस्कंदंशैलसुतात्मजं ॥ इहै-
वपूजयिष्यामिसर्वकामार्थसिद्धये ॥ १८ ॥ भोस्कंदास्मि०स्कंदंया० ॥ तत्रैव ॥ शिवद्वारगतस्त्वंचशिववाहनमुत्तमं ॥
पार्वत्याःप्रीतिकृन्नित्यमिहागच्छस्थिरोभव ॥ १९ ॥ नंदिनेनमःनंदिनंआवा० ॥ तत्रैव त्र्यंबकंचत्रिपुरुषं नीलकंठंसदा-
शिवं ॥ मंडलेस्थापयामीहसुखानुष्ठानसिद्धये ॥ २० ॥ ईश्वरायनमः ईश्वरंआ० ॥ तत्रैवनाममन्त्रेण ॥ ॐशूलायनमः-

शूलंआ० ॥ ॐमहाकालायनमःमहाकालंआ० ॥ ब्रह्मेशानमध्येवल्लीपु ॥ दक्षोसिसर्वकार्येपुमहान्यज्ञकरप्रियः ॥ ऋषी-
णांसर्वदादक्षमंडलेस्मिन्स्थिरोभव ॥ २१ ॥ भोदक्षास्मि०दक्षंआ० ॥ ब्रह्मेंद्रमध्येवाप्यां ॥ तामग्निवर्णांज्वलंतींतपसास-
र्वदाशुभां ॥ भक्तानांवरदांनित्यंदुर्गामावाहयाम्यहं ॥ २२ ॥ भोदुर्गेअ०दुर्गांआ० ॥ तत्रैव ॥ कृष्णायगोपिनाथायच-
क्रिणेमुरवैरिणे ॥ नमस्तुभ्यंजगद्धात्रेमंडलेस्मिन्स्थिरोभव ॥ २३ ॥ भोविष्णोअ०विष्णुआ० ॥ ब्रह्माग्निमध्येवल्लीपु ॥
त्वंस्वाहात्वंस्वधात्वंहिवपट्कारस्वरात्मिका ॥ अतस्त्वांपूजयिष्यामिमंडलेस्मिन्स्थिराभव ॥२४॥ भोस्वधेअ०स्वधांआ० ॥
ब्रह्मयममध्येवाप्यां ॥ मृत्युरोगानंतकस्यप्रेष्यान्प्राणहरान्क्षणात् ॥ मंडलेस्थापयामीहपूजार्थेलोकनाशकान् ॥ २५ ॥
भोमृत्युरोगाअ० मृत्युरोगाना० ॥ ब्रह्मनैर्ऋत्यमध्येवल्लीपु ॥ कुंकुमाभंसदानंदंभक्तसंकटनाशनं ॥ चतुर्भुजंत्रिनेत्रंचमंड-
लेस्थापयाम्यहं ॥ २६ ॥ भोगणपतेअ०गणपतिआ० ॥ ब्रह्मवरुणमध्येवाप्यां ॥ पावनाःसर्वलोकानांनिमग्नाःशुद्धि-
कारकाः ॥ सर्वपापहराःश्रेष्ठामंडलेस्थापयाम्यहं ॥ २७ ॥ भोअपः०अपआ० ॥ ब्रह्मवायुमध्येवल्लीपु ॥ सुगंधिनश्चशै-
त्याढ्यामंदमंदवहाःसदा ॥ तानहंस्थापयामीहमरुतोमंडलेशुभे ॥ २८ ॥ भोमरुतअ०मरुतआ० ॥ ब्रह्मणःपादमूलेक-
र्णिकाधः ॥ पृथिव्याधार्यतेविश्वंदुर्वाहंसागरैर्नगैः ॥ अतस्त्वांस्थापयामीहमंडलेब्रह्मणःपदे ॥२९॥ भोपृथिव्यअ०पृथ्वीं० ॥
तत्रैव ॥ गंगासिंधुसरस्वतीचयमुनागोदावरीनर्मदाकावेरीशरयूमहेन्द्रतनयाचर्मण्वतीवेदिका ॥ क्षिप्रावेत्रवतीमहासुरनदी-
ख्याताचयागंडकीपूर्णाःपूर्णजलैःसमुद्रसहिताआयांतुमेमंडले ॥ ३० ॥ गंगादिनदीभ्योनमः ॥ तत्रैव ॥ समुद्रःसर्वतोये-

षुश्रेष्ठोवैहरिवल्लभः ॥ मंडलेस्थापयामीहतंनदीशंसुखासये ॥ ३१ ॥ सप्तसमुद्रेभ्यो० ॥ ततोद्वारपालान्चतुर्दिक्षुस्थापयेत् ॥ तदुपरिमेरुंनाममन्त्रेणावाहयेत् ॥ ( मेरवेनमः बाह्यपरिधौ ॥ सोमसमीपेगदायैनमःगदांआवाहया० ईशानसमीपेत्रिशूलायन० त्रिशूलं० इंद्रसमीपेवज्राय० वज्रं० अग्निसमीपेशक्तये० शक्तिं० यमसमीपेदंडाय० दंडं० निर्ऋतिसमीपेखड्गाय० खड्गं० वरुणसमीपेपाशाय० पाशं० वायुसमीपेअंकुशाय० अंकुशं० ॥ तद्बाह्ये ॥ उत्तरेगौतमाय० ईशान्येभरद्वाजाय० पूर्वेविश्वामित्राय० आग्नेय्यांकश्यपाय० दक्षिणेजमदग्नये० नैर्ऋत्यांवसिष्ठाय० पश्चिमायांअत्रये० वायव्यांअरुंधत्यै० ॥ तद्बाह्येपूर्वादिदिक्षु ॥ पूर्वेऐंद्र्यै० आग्नेय्यांकौमार्यै० दक्षिणेब्राह्म्यै० नैर्ऋत्यांवाराह्यै० पश्चिमायां चामुंडायै० वायव्यांवैष्णव्यै० उत्तरेमाहेश्वर्यै० ईशान्यांवैनायक्यै० ॥ असितांगभैरवायनमः रुरुभैरवाय० चंडभैरवाय० क्रोधभैरवाय० उन्मत्तभैरवाय० कपालभैरवाय० भीषणभैरवाय० संहारभैरवाय० संहारभैरवमावाहयामि ॥ इत्यावाह्य ॥ त्वंवैचतुर्मुखोब्रह्मास्वर्गलोकपितामहः ॥ आगच्छमंडलेचास्मिन्ममसर्वार्थसिद्धये ॥ इति सर्वान्षोडशोपचारैःपूजयेत् ॥ इति पौराणमंडलदेवताः ॥

अथशुक्लैकादशीव्रतोद्यापनम् ॥ ( तत्रैकादशीनिर्णयः । निर्णयतत्त्वे—इनोद्गमाद्बीनसमुद्गमांत्यांवीनोद्गमांचाप्युपवासहेतोः । एकादशींद्वादशिकांतुयत्नात्स्मार्ताःश्रयंतेकिलपारणायै ॥ १ ॥ रात्र्यंताब्धिघटीगतोदशमिकावेधस्तदोपोषणं द्वादश्यांयदिसोदयद्वयगतातत्रांतिमायांहितत् । शुद्धामप्यपहायशंकरतिथिंत्वेकादशीवासरेभद्रायातियदालयंतदिहतद्वो-

ज्यंपरैर्वैष्णवैः ॥ २ ॥ स्वैकादशीमेवमुपोष्यनित्यांस्मार्तांश्चवैखानसदीक्षिताश्च । तत्पारणंद्वादशिकाद्यपादेऽतीतेवि-
दध्युर्हरिवासराख्ये ॥ ३ ॥ इति ॥ उद्यापनंतु प्रबोधिन्यांमार्गशीर्षेभीमतिथौमाघेवैशाखेवित्तसमृद्धौ शुभतिथौ-
वाकुर्यादिति ॥ ) देशकालौसंकीर्त्यममअखिलपापक्षयपूर्वकंधर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्धिद्वाराश्रीपरमे० अ-
ककामनयावामयाचरितशुक्लैकादशीव्रतोद्यापनंकरिष्ये ॥ तदंगविहितंगणेशपूजनाद्याचार्यवरणांतंकृत्वा ॥ आचार्यः-
पूर्वोक्तप्रकारेणसर्वतोभद्रे ब्रह्मादिदेवताआवाह्यसंपूज्य ॥ तदुपरिअक्षतपुंजेकेशवादिद्वादशनामांकितमक्षतपूर्णं ताम्र-
मयंतंडुलपूर्णराजतपूर्णपात्रसहितंकलशंप्रतिष्ठाप्य ॥ तत्रअष्टदलपद्मेदेवताआवाहयेत् ॥ तत्रकर्णिकायाम् ॥ भूःपुरुषं
आवाहयामि ॥ भुवःपुरुषंआ० ॥ स्वःपुरुषंआ० भूर्भुवःस्वःपुरुषंआवाहयामि ॥ ततःसुवर्णप्रतिमायां ॥ सहस्रशीर्षा ऋक्
१ ॥ लक्ष्मीयुतंपुरुषंमध्येआवाहयामिस्थापयामिपूजयामिनमः ॥ परितः अग्निं इंद्रं प्रजापतिं विश्वान्देवान् ब्रह्माणं
वसुदेवं रामं श्रियं नाममंत्रेण आवाह्य ॥ ततः पूर्वदक्षिणपश्चिमोत्तरदलाभ्यंतरेषु स्त्रीचतुःसहस्रसहितांरुक्मिणीं १ स्त्रीचतुः-
सहस्रसहितांसत्यभामां २ स्त्रीचतुःसहस्रसहितांजांबवतीं ३ स्त्रीचतुःसहस्रसहितांकालिंदीं ४ चावाह्य ॥ ततआग्नेय्यादि-
कोणेषु ॥ शंखं चक्रं गदां पद्मं चावाह्य ॥ पुरतः ॥ सामध्वनिशरीरस्त्वंवाहनंपरमेष्ठिनः ॥ विषपापहरोनित्यमतःशां-
तिंप्रयच्छमे ॥ इतिगरुडमावाह्य ॥ परितःपूर्वादिक्रमेणइंद्राद्यष्टौलोकपालान्तत्तन्मन्त्रैर्नाममंत्रैर्वावाह्य मनोजूति० प्र-
तिष्ठा ॥ १ ॥ एषवैप्रभवति ॥ इतिप्रतिष्ठाप्य ॥ पूर्वोक्तप्रकारेणपूजयेत् ॥ पुष्पानंतरंअंगपूजांकुर्यात् ॥ दामोदरायनमः

पादौपूजयामि ॥ माधवाय० जानुनीपू० ॥ कामपतये० गुह्यंपू० ॥ वामनाय० कटिंपू० ॥ पद्मनाभाय० नाभिंपू० ॥ विश्वमूर्तये० उदरंपू० ॥ ज्ञानगम्याय० हृदयंपू० ॥ श्रीकंठाय० कंठंपू० ॥ सहस्रबाहवे० बाहूपू० ॥ योगिने० चक्षुषीपू० ॥ उरगाय० ललाटं० ॥ नाकसुरेश्वराय० नासांपू० ॥ श्रवणेशाय० श्रवणेपू० ॥ सर्वकामदाय० शिखांपू० ॥ सहस्रशीर्ष्णे० शिरःपू० ॥ सर्वरूपिणे० सर्वांगंपूजयामि ॥ धूपं० दीपं० ॥ नैवेद्यांश्चचतुर्विंशत्संख्यान्दद्यादनुक्रमात् ॥ भक्त्याचतुर्विंशतिपुतिथिष्वपिपरंतप ॥ इच्छयाचतदादद्याद्यैदवोद्यापनंभवेत् ॥ मोदकाँल्लड्डुकांश्चापिघृतपूरकमण्डकान् ॥ सोहोलिकादिकंसारसेवा सक्तुफलानिच ॥ वटकान्पायसंदुग्धं शालिदध्योदनंतथा ॥ इंडीरकाःपूरिकाश्च अपूपान्गुडमोदकान् ॥ तिलपिष्टंखण्डपिष्टं लाजदुग्धंसशर्करं ॥ रंभाफलंचसघृतं मुद्गचूर्णंगुडोदनं ॥ एवंक्रमेणनैवेद्यं दद्याद्देवस्य तुष्टयेइति ॥ नमस्कारोत्तरंविशेषार्घ्यंदद्यात् ॥ तैजसपात्रेजलं नारिकेरंबीजपूरंअक्षताचंदनं पुष्पंफलं हिरण्यंनिक्षिप्य ॥ जानुभ्यां धरणींगत्वा ॥ नारायणजगन्नाथलक्ष्मीकांतदयानिधे ॥ गृहाणार्घ्यंमयादत्तंव्रतसंपूर्तिहेतवइति ॥ वेदशास्त्रपुराणगीतश्रवणादिनाजागरपूर्वकंवारात्रिंनिनयेत् ॥ ततःपरेहनिप्रातराचार्यआवाहितदेवताःसंपूज्य ॥ अग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ चक्षुषीआज्येनेत्यंते ॥ अत्रप्रधानंपुरुषंपुरुषसूक्तेनप्रत्यृचंआज्येनअमुकावृत्तिसंख्यया अग्निंइंद्रंप्रजापतिंविश्वान्देवान्ब्रह्माणंचाज्येनएकवारं ॥ वसुदेवंरामंश्रियंविष्णुंनाममन्त्रेणघृताक्तपायसद्रव्येणएकवारं ॥ पुनःविष्णुंविष्णोर्नुकमितिषण्मंत्रैःप्रत्यृचंघृताक्तपायसद्रव्येण ॥ अग्निंवायुंसूर्यंप्रजापतिंचएकवारंघृताक्तपायसद्रव्येण ॥ केशवादिदामोदरांत-

द्वादशदेवताःनाममन्त्रैःएकवारंपायसद्रव्येण ॥ स्त्रीचतुःसहस्रसहितांरुक्मिणीं स्त्रीचतुःसहस्रसहितांसत्यभामां स्त्रीचतुः-
सहस्रसहितांजांबवतीं स्त्रीचतुःसहस्रसहितांकालिंदीं शंखंचक्रंगदांपद्मंगरुडंइंद्राद्यष्टौलोकपालान्ब्रह्मादिमंडलदेवताश्च
एकैकयाज्याहुत्यायक्ष्ये ॥ शेषेणस्विष्टकृतमित्यादिआज्यभागांतंकृत्वा ॥ तत्रसक्षीरप्रणीताप्रणयनं ॥ पयसिचरुंश्रप-
यित्वा । तस्मात्पायसात्सकाशात् । ॐपवित्रंतेविततं० इतिमन्त्रेण किंचित्पृथगुद्धृत्यपात्रांतरेस्थापयेत् ॥ अस्यैवोद्धृतस्य-
पायसस्य श्रापणमितिनाम । तदुक्तंव्रतराजे । पायसादुद्धृतंकिंचित्श्रापणंतत्प्रकीर्तितमिति ॥ एतदेवश्रापणमग्रेदेवायनि-
वेदयेत् ॥ प्रधानदेवताहोमयेत् ॥ ॐसहस्रशीर्षा० ऋक् १६ ॥ अग्नये० इंद्राय० प्रजापतये० विश्वेभ्योदेवेभ्यः० ब्रह्म-
णेइत्याज्येन ॥ अथघृताक्तपायसेन वसुदेवाय० रामाय० श्रियै० विष्णवे० विष्णोर्नुकं तदस्यप्रियं प्रतद्विष्णुरितितिसृ-
णांदीर्घतमात्रिष्टुप्विष्णुः हवनेवि० ॥ ॐविष्णोर्नुकं० तदस्यप्रियं० प्रतद्विष्णु० ॥ परोमात्रयाविचक्रमेत्रिर्देवइतिति-
सृणांवसिष्ठस्त्रिष्टुब्विष्णुः हवनेवि० ॥ ॐपरोमात्रया० विचक्रमे० त्रिर्देवः० ॥ ॐभूःस्वाहा ॥ भुवःस्वहा ॥ स्वःस्वाहा ॥
भूर्भुवःस्वःस्वाहा ॥ अथकेवलपायसेन ॥ ॐकेशवायनमःस्वाहा ॥ प्रणवःस्वाहाकारश्चसर्वत्र ॥ नारायणाय० ॥ माध-
वाय० गोविंदाय० विष्णवे० मधुसूदनाय० त्रिविक्रमाय० वामनाय० श्रीधराय० हृषीकेशाय० पद्मनाभाय० दामो-
दराय० ॥ अथकेवलाज्येनस्त्रीचतुःसहस्रसहितायैरुक्मिण्यै० स्त्रीचतुःस० सत्यभामायै० स्त्रीचतुःस० जांबवत्यै० स्त्री-
चतुःसहस्रसहितायैकालिंद्यै० शंखाय० चक्राय० गदायै० पद्माय० गरुडाय० ॥ इंद्राय० अग्नये० यमाय० निर्ऋतये०

वरुणाय० वायवे० सोमाय० ईशानाय० तत्तन्मन्त्रैर्वाहुत्वा ततोब्रह्मादिमंडलदेवतास्तत्तन्मंत्रैर्नाममंत्रैर्वाकेवलाज्येनहोमयेत् ॥ ततःस्विष्टकृतं ॥ ततोयजमानोदेवायप्रापणंनिवेदयेत् ॥ त्वामेकमाद्यंपुरुषंपुराणंनारायणंविश्वसृजंयजामः ॥ त्वयैषभागोविहितोविधेयोगृहाणहव्यंजगतामधीश ॥ इतिनिवेद्यातिष्ठेत् ॥ ततःअग्निंत्रिवारंचतुर्वारंवाप्रदक्षिणीकृत्यभिंधिविश्वाअपद्विषइतिधरण्यांजानुनीनिपात्यध्रुवसूक्तंपुरुषंसूक्तंचजप्त्वाअष्टौपदानिप्रतिदिशंगच्छेत् एभिर्मंत्रैः ॥ कृष्णायवासुदेवायहरयेपरमात्मने ॥ शरण्यायाप्रमेयायगोविंदायनमोनमः ॥ नमःस्थूलायसूक्ष्मायव्यापकाव्यापकायच ॥ अनंतायजगद्धात्रेब्रह्मणेनंतमूर्तये ॥ अव्यक्तायाऽखिलेशायचिद्रूपायगुणात्मने ॥ नमोमूर्तायसिद्धायपरायपरमात्मने ॥ देवदेवायवंद्यायपरायपरमेष्ठिने ॥ कर्त्रेविश्वस्यगोप्त्रेचतत्संहर्त्रेचतेनमः ॥ अथदेवायनिवेदितप्रापणमानीयमूर्ध्निकृत्वा ॥ केवैष्णवाः केवैष्णवाःकेवैष्णवाइतिउच्चैर्वदेत् ॥ ततःसमानाःप्रतिवदेयुः ॥ वयंवैष्णवाः वयंवैष्णवाः इति त्रिः ॥ ततस्तेभ्यःसमानेभ्योहविर्दत्वास्वयं॥ॐनमोभगवतेवासुदेवायेतिमन्त्रेणइदममृतमहंप्राश्नामिइतिप्राश्य ॥ आचम्यप्राणानायम्ययजमानःआचार्योवा ॥ सिद्धयेस्वाहेतिअग्नौआज्यंजुहुयात् ॥ ततःयतइंद्रभयामहेइत्यनेनआत्मानमभिमन्त्रयेत् ॥ ततआचार्योनवाहुत्यादिहोमशेषंसमापयेत् ॥ ततोयजमानःसांगतासिद्ध्यर्थंआचार्यादीन्विध्युक्तप्रकारेणसंपूज्यदक्षिणादिभिःप्रतोष्यआचार्यायश्वेतांसवत्सांसालंकारांगांदद्यात् ॥ ततोयजमानःद्वादशसंख्याकान्ब्राह्मणान्केशवादिद्वादशदेवतास्वरूपान्विभाव्य केशवादिद्वादशनामभिःयथाविभवंसंपूज्यतेभ्यःपक्वान्नपूरितान्वस्त्रतांम्बूलदक्षिणादिसहितान्द्वादशकलशान् केश-

वादिद्वादशनामांकितानूदद्यात् ॥ तत्रमंत्रः ॥ पक्कान्नपूरितंकुंभंदक्षिणावस्त्रसंयुतं ॥ ददामिद्विजवर्यायदेवोनःप्रीयता-
मिति ॥ देवपदस्थानेकेशवादिनाम्नांऊहःकार्यः ॥ ततःपीठदानम् ॥ ततआचार्यःपात्रांतरेउद्धृतकलशोदकेनसपत्नीकंय-
जमानंसमुद्रज्येष्ठाइत्यादिवैदिकैर्मंत्रैःसुरास्त्वामित्यादिपौराणिकैर्मंत्रैर्वैष्णवसूक्तैश्चाभिषिंचेत् ॥ ततःस्नातोयजमानःआग्निं-
संपूज्य यस्यस्मृत्या० मन्त्रहीनमितिक्षमाप्य उत्तिष्ठब्रह्मणस्पते० यांतुदेवगणाःसर्वेइतिविसर्जयेत् ॥ कृतस्यकर्मणःसांग-
तासिद्ध्यर्थंसदन्नेनदक्षिणादिनाब्राह्मणान्प्रतोष्यआशिषोगृहीत्वाव्रतसंपूर्णतांवाचयेत् ॥ जपच्छिद्रंतपश्छिद्रंयच्छिद्रंव्रतक-
र्मणि ॥ सर्वंभवतुमेऽच्छिद्रंब्राह्मणानांप्रसादतः ॥ इतिसंप्रार्थ्य ॥ तेऽच्छिद्रंभवत्वितिवदेयुः ॥ ततस्तान्नमस्कृत्यइष्टजनैःसो-
त्सवोभुंजीत ॥ इतिशुक्लैकादशीव्रतोद्यापनम् ॥

अथकृष्णैकादश्युद्यापनम् ॥ यजमानःदेशकालौसंकीर्त्यआत्मनःपापक्षयपूर्वकंएकविंशतिपुरुषानुद्धर्तुंकामनयालक्ष्मी-
नारायणप्रीतयेचआचरितस्य कृष्णैकादशीव्रतस्यसांगतासिद्ध्यर्थंकृष्णैकादशीव्रतोद्यापनंकरिष्येइतिसंकल्प्य ॥ पूर्वोक्तप्र-
कारेणगणेशपूजामारभ्यआचार्यवरणांतंकर्मकुर्यात् ॥ ततआचार्यःपूर्वोक्तप्रकारेणसर्वतोभद्रेब्रह्मादिदेवताआवाह्यसंपूज्य
तदुपरिसंकर्षणादिद्वादशनामांकितंतिलपूर्णराजतपूर्णपात्रयुतंकलशंप्रतिष्ठाप्यतत्रअष्टदलंविलिख्यकर्णिकायां ॥ भूःपुरुष-
मित्याद्यावाह्यमध्येसहस्रशीर्षेतिसौवर्णींलक्ष्मीनारायणप्रतिमामावाह्य ॥ ततःपूर्वादिदिक्षुप्रत्येकंस्त्रीचतुःसहस्रसहितांरु-
क्मिणींसत्यभामांजांबवतींकालिंदींचावाह्य ॥ ततःआग्नेयादिविदिक्षुगणपतिंदुर्गांक्षेत्राधिपतिंवास्तोष्पतिंचावाह्य ॥ पुनः

पूर्वादिदिक्षुब्रह्मजज्ञानमितिब्रह्माणंविष्णोर्नुकमितिविष्णुंबलभद्रम् प्रद्युम्नं त्र्यंबकमितित्र्यंबकम् वसुदेवं रामं अनिरुद्धं वाम-
भागे श्रियं पुरतः राजतंगरुडं ॥ पुनःआग्नेयादिकोणेषु शंखं चक्रं गदां पद्मं ॥ पुनःपूर्वादिक्रमेण विमलां उत्कर्षिणीं
ज्ञानां क्रियां योगां प्रह्वां सत्यां ईशानां पृष्ठभागे अनुग्रहाम् ॥ पुनः पूर्वादिक्रमेण इंद्राद्यष्टौलोकपालान् तत्तन्मन्त्रैर्नाममन्त्रैर्वा
आवाह्यपूर्वोक्तप्रकारेणषोडशोपचारैःसंपूज्य पुराणश्रवणादिनारात्रिंनिनयेत् ॥ प्रातःपुनःपीठदेवताःसंपूज्य पूर्वोक्तप्रका-
रेणअग्निंप्रतिष्ठाप्यअन्वादध्यात् ॥ अत्रप्रधानम् ॥ संकर्षणादिश्रीकृष्णांतद्वादशदेवताःघृताक्तपायसेनएकैकयाहुत्यापुरुषं
विष्णुंअष्टोत्तरसहस्रसंख्याकघृताक्ततिलाहुतिभिःअष्टोत्तरशतसंख्याभिर्वा अग्निं वायुं सूर्यं प्रजापतिं प्रत्येकंस्त्रीचतुःसह-
स्रसहितांरुक्मिणींसत्यभामांजांबवतींकालिंदींएकवारंपायसेन वसुदेवंरामंश्रियंविष्णुंविष्णोर्नुकमितिषण्मंत्रैःप्रत्यृचंपाय-
सेन गणपतिंदुर्गांक्षेत्राधिपतिंवास्तोष्पतिंब्रह्माणंबलभद्रंप्रद्युम्नंत्र्यंबकंअनिरुद्धंगरुडंशंखंचक्रंगदांपद्मंविमलाद्याअनुग्रहांतादे-
वताःइंद्राद्यष्टौलोकपालान् ब्रह्मादिमंडलदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ शेषेणस्विष्टकृतमित्यादि आज्यभागांतंकृत्वाप्र-
धानदेवताहोमयेत् ॥ ॐसंकर्षणायनमःस्वाहा वासुदेवाय० प्रद्युम्नाय० अनिरुद्धाय० पुरुषोत्तमाय० अधोक्षजाय० ना-
रसिंहाय० अच्युताय० जनार्दनाय० उपेंद्राय० हरये० श्रीकृष्णाय० घृताक्तपायसेनएकवारं ॥ सहस्रशीर्षा० घृताक्त-
तिलैः ॐभूःस्वाहा भुवःस्वाहा स्वःस्वहा भूर्भुवःस्वःस्वाहा ॥ प्रत्येकंस्त्रीचतुःसहस्रसहितायैरुक्मिण्यै० सत्यभामायै०
जांबवत्यै० कालिंद्यै० वसुदेवाय० रामाय० श्रियै० विष्णोर्नुकं० तदस्यप्रि० प्रतद्विष्णु० परोमात्रया० विचक्रमे० त्रि-

दैवः० केवलपायसेन० ॥ अथाज्येन गणपतये० दुर्गायै० क्षेत्राधिपतये० वास्तोष्पतये० तत्तन्मंत्रैर्वा० ब्रह्मणे० बलभद्राय० प्रद्युम्नाय० त्र्यंबकाय० अनिरुद्धाय० गरुडाय० शंखाय० चक्राय० गदायै० पद्माय० विमलायै० उत्कर्षिण्यै० ज्ञानायै० क्रियायै० योगायै० प्रह्वायै० सत्यायै० ईशानायै० अनुग्रहायै० इंद्रायेत्यादिलोकपालेभ्यः ब्रह्मादिमंडलदेवताभ्यश्चहुत्वा ततःस्विष्टकृतंहुत्वाप्रायश्चित्तहोमांतंकर्मनिर्वर्त्य ॥ आचार्यायकृष्णांगांदत्वाद्वादशब्राह्मणान्संकर्षणादिकृष्णांतद्वादशनामभिःसंपूज्यतेभ्यः दक्षिणादियुतान्तिलपूर्णान्संकर्षणादिद्वादशनामांकितान्कलशान्दद्यात् पीठंदत्वासदन्नेनब्राह्मणान्यथाविभवंसंभोज्यदक्षिणादिभिःप्रतोष्यव्रतसंपूर्णतांवाचयित्वाआशिषोगृहीत्वाइष्टजनैःसहभुंजीत ॥ इतिकृष्णैकादशी ॥ इतिबौधायनसूत्रानुसारिशुक्लकृष्णैकादशीव्रतोद्यापनं ॥ पौराणंतु । सर्वतोभद्रे ब्रह्मादिदेवतास्थापनपूर्वकं कलशं प्रतिष्ठाप्य तत्राष्टदलपद्मे सौवर्णीलक्ष्मीनारायणप्रतिमां इदंविष्णुरितिप्रतिष्ठाप्यपुरतः राजतंगरुडं परितः अष्टौलोकपालान् संस्थाप्य पुरुषसूक्तेन षोडशोपचारैः पूजयेत् ॥ पुराणपठनादिनारात्रिंनिनयेत् । प्रातरग्निंप्रतिष्ठाप्य ॥ इदंविष्णुरितिमंत्रेणघृताक्तपायसेनघृताक्ततिलैश्चप्रत्येकमष्टोत्तरसहस्रंशतं वा हुत्वा ॥ कपिलांगांदत्वा । चतुर्विंशतिब्राह्मणान् केशवादिनामभिः संपूज्य केशवादिनामांकितान् चतुर्विंशतिकलशान् पक्वान्नपूरितान् वस्त्रदक्षिणायुतान्दद्यात् इतिप्रकारांतरेणपुराणोक्तं शुक्लकृष्णैकादशीव्रतोद्यापनं ॥

अथहरितालिकाव्रतम् ॥ ( मुहूर्तमात्रायामपिपरविद्धायां ) भाद्रतृतीयायांतिथ्याद्युल्लिख्यममपत्न्यासमस्तपापक्षयपू-

र्वकसप्तजन्मसौभाग्यादिविविधभोगप्राप्तिद्वारा उमामहेश्वरप्रीत्यर्थंआचरितहरितालिकाव्रतसंपूर्णफलावाप्तयेतदुद्यापनंकरिष्ये ॥ तदंगगणपतिपूजनादिकृत्वाचार्यंवृणुयात् ॥ ततोवृताचार्यःउक्तविधिनालिंगतोभद्रेद्रोणपरिमितव्रीहिस्थकलशेरौप्यप्रतिमायांत्र्यंबकंयजामहइतिशिवं सुवर्णप्रतिमायांअंबेऽअंबिकइतिगौरींपुरतश्चरौप्यमय्यांआशुःशिशानइतिवृषभंसंस्थाप्यषोडशोपचारैःपूजयेत् ॥ तत्रमंत्रः ॥ मंदारमालाकुलितालकायैकपालमालांकितशेखराय ॥ दिव्यांबरायैचदिगंबरायनमःशिवायैचनमःशिवाय ॥ तत्तन्मन्त्रैर्वा ॥ ततःप्रार्थयेत् ॥ नमःशिवायसांबायपंचवक्त्रायशूलिने ॥ नंदिभृंगिमहाकालगणयुक्तायशंभवे ॥ शिवायैहरकांतायैप्रकृत्यैसृष्टिहेतवे ॥ नमस्तेब्रह्मरूपिण्यै जगद्धात्र्यैनमोनमः ॥ येनकामेनदेवित्वंपूजितासिमहेश्वरि ॥ तंपूर्णंकुरुमेकामंसौभाग्यंचप्रयच्छमे ॥ इतिप्रार्थ्य ॥ ततःसुवासिनीःसंपूज्य ॥ रात्रिंनिनयेत् ॥ प्रातरावाहितदेवताःसंपूज्याग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ अत्रप्रधानं उमांमहेश्वरंचावाहनमंत्रैः प्रत्येकंप्रतिद्रव्यमष्टोत्तरशत १०८ संख्याकाभिः तिल १ यवा २ ज्या ३ हुतिभिः ब्रह्मादिमंडलदेवताःपरिवारदेवताश्चैकैकयाज्याहुत्यायक्ष्येशेषेणेतिआवाहनोक्तमंत्रैर्होमांतेस्विष्टकृदादिहोमशेषंसमाप्यसंपूजिताचार्यायगांदत्वा षोडशाष्टौवायुग्मानियथाविभवंसंपूज्यसौभाग्यद्रव्यवस्त्रदक्षिणायुतानिषोडशशूर्पवायनानि ॥ सौभाग्यारोग्यकामाहंसर्वसंपत्समृद्धये ॥ गौरीगिरीशतुष्ट्यर्थंवायनं तेददाम्यहं ॥ इतिदत्वाद्विजान्संपूज्यतेषामाशिषोगृहीत्वाकर्मेश्वरार्पणंकुर्यात् ॥ इतिहरितालिकाव्रतम् ॥

अथपरशुरामजयंतीव्रतम् ॥ वैशाखशुक्लतृतीयायांनिशाद्ययामव्यापिन्यांतिथ्यादिसंकीर्त्यअखिलपापक्षयपूर्वकंचतुर्वि-

द्वायांकार्यम् ॥) नद्यादौप्रातःदंतधावनपूर्वकंस्नात्वा ॥ ममज्ञानतोज्ञानतोवारजस्वलावस्थायांकृतसंपर्कजनितदुर्योनित्व-
दोषपरिहारद्वाराशुभफलप्राप्त्यर्थंआचरितऋषिपंचमीव्रतोद्यापनंकरिष्ये ॥ वृताचार्यःसर्वतोभद्रेसप्तकलशेषुएकस्मिन्वाहै-
मीःअरुंधतीसहिताःसप्तर्षिप्रतिमाःपूजयेत् ॥ ॐऋषेमंत्रकृतांस्तोमैःकश्यपोद्धर्धयन्गिरः ॥ सोमंनमस्युराजानंयोजज्ञेवी-
रुधांपतिरिंद्रायेंदोपरिस्रव ॥ कश्यपायनमः कश्यपंआवाहयामि ॥ ॐअत्रिर्यद्वामवरोहन्नृबीसमजोहवीन्नाधमानेवयोषा ॥
श्येनस्यचिज्जवसानूतनेनागच्छतमश्विनाशंतमेन ॥ अत्रयेनमः अत्रिंआवाहयामि ॥ ॐएवानःस्पृधःसमजासमत्स्विंद्रराराः-
धिमिथतीरदेवीः ॥ विद्यामवस्तोरवसागृणंतोभरद्वाजाउततइंद्रनूनं ॥ भरद्वाजायनमः भरद्वाजंआवाहयामि ॥ ॐप्रसू-
तोभक्षमकरंचरावपिस्तोमंचेमंप्रथमःसूरिरुन्मृजे । सुतेसातेनयद्यागमंवांप्रतिविश्वामित्रजमदग्नीदमे ॥ विश्वामित्रायनमः
विश्वामित्रंआवाहयामि ॥ ॐअभित्वागोतमागिराजातवेदोविचर्षणे । द्युम्नैरभिप्रणोनुमः ॥ गोतमायनमः गोतमंआ-
वाहयामि ॥ ॐगृणानाजमदग्निनायोनावृतस्यसीदतं । पातंसोममृतावृधा ॥ जमदग्नयेनमः जमदग्निंआवाहयामि ॥
ॐउतासिमैत्रावरुणोवसिष्ठोर्वश्याब्रह्मन्मनसोधिजातः । द्रप्संस्कन्नंब्रह्मणादैव्येनविश्वेदेवाःपुष्करेत्वाददतं ॥ वसिष्ठायनमः
वसिष्ठंआवाहयामि ॥ ॐअत्रेर्यथानसूयास्याद्वसिष्ठस्याप्यरुंधती । कौशिकस्ययथासतीतथात्वमपिभर्तरि ॥ अरुंधत्यैनमः
अरुंधतीं आवाहयामि ॥ मनोजूतिरितिप्रतिष्ठा ॥ आवाहनादिप्रत्युपचारं सप्तऋषयःप्रतिहि०देवौ ॥ सुहस्तोमाःसुह-

च्छंदसे० इतिवा नाममन्त्रैर्वापूजयेत् ॥ ततःवायनंदत्वाक्षमापयेत् ॥ न्यूनातिरिक्तकर्माणिमयायानिकृतानिच ॥ क्षमध्वंतानिसर्वाणियूयंसर्वेतपोधनाः ॥ ततःकथाश्रवणादिनारात्रिंनिनयेत् ॥ प्रातःअग्निंप्रतिष्ठाप्यअन्वादध्यात् ॥ प्रधानं अरुंधतीसहितकश्यपादिसप्तर्षीन्पूजामन्त्रेण तिल १ व्रीहि २ यव ३ सर्पिर्द्रव्यैः ४ तिलपायसाभ्यांवाप्रतिद्रव्यमष्टोत्तरशत १०८ मष्टाविंशतिर्वा २८ तत्संख्याकाहुतिभिः ब्रह्मादिदेवताश्चएकैकयाज्याहुत्यायक्ष्ये शेषेणस्विष्टकृतं ॥ ततःपुनःप्रतिमापूजांकृत्वासपत्नीकान्सप्तब्राह्मणान्वस्त्रादिनासंपूज्यतेभ्यः क्रमेणदक्षिणाप्रतिमायुतकलशानूदद्यात् ॥ मन्त्रः ॥ प्रतिगृह्णद्विजश्रेष्ठप्रतिमादिसमन्वितम् ॥ कलशंऋषिसंप्रीत्यैव्रतसंपूर्तिहेतवे ॥ यदैककुंभेसर्वप्रतिमापूजनंतदासर्वप्रतिमायुतंकलशमाचार्यायदद्यात् ॥ अन्येभ्यःदक्षिणावस्त्रयुतान्पक्वान्नपूरितान्कलशान्दद्यात् ॥ ततःसप्तभ्यःसप्तगाआचार्याय एकांगांदत्वाप्रार्थयेत् ॥ सप्तर्षयःशुभाःश्रेष्ठाःसर्वेषांचशुभप्रदाः ॥ सर्वपापंचमेघ्नंतुज्ञानतोज्ञानतःकृतम् ॥ एतेसप्तर्षयः सर्वेभक्त्यासंपूजितामया ॥ यथोक्तफलदाःसंतुव्रतस्यफलदायकाः ॥ इति ॥ आशिषोगृहीत्वाब्राह्मणान्संतर्प्यस्वयंभुंजीत ॥ इतिऋषिपंचमीव्रतम् ॥ ॥

अथोपांगललिताव्रतम् ॥ (उपांगललिताव्रतेभवतिपंचमीपूर्विकेति ॥) प्रातःदंतधावनपूर्वकंनद्यादौस्नात्वाशुक्लंवासः परिधायमंडपिकादिकंकृत्वातिथ्यादिसंकीर्त्य ॥ मयापुत्रपौत्रविद्यारोग्यसुखविजयपुष्ठ्यादिकामेन स्त्रीतु अवैधव्यकामनयाउपांगललिताप्रीत्यर्थंअष्टवर्षात्मकाचरितोपांगललिताव्रतोद्यापनंकरिष्यइतिसंकल्प्य ॥ वृताचार्यःएकलिंगोद्भवेक-

लशोपरिसौवर्णींललिताप्रतिमांपौराणमन्त्रैःश्रीसूक्तेनचपूजयेत् ॥ ध्यानम् ॥ नीलकौशेयवसनांहेमाभांकमलासनाम् ॥ भक्तानांवरदांनित्यंललितांचिंतयाम्यहं ॥ पुष्पांजल्यंतेसाग्राअष्टचत्वारिंशत्परिमितादूर्वाहस्तेनादाय ॥ बहुप्ररोहासतत-ममृताहरितालता ॥ यथेयंललितेमातस्तथामेस्युर्मनोरथाः ॥ इतिमंत्रेणाष्टाचत्वारिंशद्वारंसमर्पयेत् ॥ ततःप्रदक्षिणान-मस्कारः ॥ प्रातःपुनःसंपूज्यदेव्यैअष्टौवटकान्समर्प्यअग्निंप्रतिष्ठाप्यअन्वादध्यात् ॥ प्रधानंउपांगललितांअंबेअंबिकइति-मंत्रेण अष्टोत्तरशत १०८ दूर्वाहुतिभिः नमोदेव्यैमहादेव्यैइतिमंत्रेण अष्टोत्तरशततिल १ सर्पिः २ पंचखाद्ययुतपायसा ३ हुतिभिर्यक्ष्ये ब्रह्मादिमंडलदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ एवंहोमंसंपाद्य अष्टौब्राह्मणान्वस्त्रादिभिःसंपूज्यतेभ्यःपक्वान्न-पूरितान्दक्षिणासहितानष्टौकलशान्दद्यात् ॥ ततआचार्यंवस्त्रालंकारादिभिःसंपूज्यसदक्षिणंविंशतिवटकसहितंवायनंदद्यात् ॥ तत्रमन्त्रः ॥ पक्वान्नफलसंयुक्तंसघृतंदक्षिणान्वितम् ॥ उपांगललिताप्रीत्यैब्राह्मणायददाम्यहम् ॥ ततः देवीं ॥ सवा-हनाशक्तियुतावरदापूजितामया ॥ मातर्मामनुगृह्याथगम्यतांनिजमंदिरम् ॥ इतिविसृज्यसोपस्करंपीठंगांचआचार्यायद-त्वाब्राह्मणान्सदन्नेनभोजयित्वाआशिषोगृहीत्वास्वयंविंशतिवटकान्भुंजीत ॥ इतिउपांगललिताव्रतम् ॥

अथ मुक्ताभरणसप्तमीव्रतम् ॥ देशकालौसंकीर्त्यममसकलपापक्षयपूर्वकपुत्रपौत्रधनधान्यसौख्यातिशयप्राप्तिद्वाराश्रीस-दाशिवप्रीत्यर्थंमुक्ताभरणसप्तमीव्रतंकरिष्येइतिसंकल्प्यपूजांसमाप्यप्रार्थयेत् ॥ महादेवमहाराजप्रीत्यापापप्रणाशन ॥ अ-स्माकंकुर्वतांपूजांसाधुवासाधुयोजितां ॥ ज्ञानतोज्ञानतोवापिभवतीविहिताचया ॥ संपूर्णयतुविश्वेशोविमलाकोमला-

स्तुमां ॥ ततःदेवस्यपुरतः ॥ यावज्जीवंमयात्मातुशिवस्यचनिवेदितः ॥ इत्येवंसमयंकृत्वासौवर्णंराजतंसौत्रंवादोरकंदेवा-
ग्रतःसंपूज्यमंत्रेणदोरकंगृह्णीयात् ॥ देवदेवजगन्नाथसर्वसौभाग्यदायक ॥ गृह्णीयांदोररूपंत्वांपुत्रपौत्रप्रवर्धनम् ॥ ततःह-
स्तेबंधनमंत्रः ॥ सप्तसामोपगीतंत्वांधारयामिजगद्गुरो ॥ सूत्रग्रंथिस्थितंनित्यंधारयामिस्थिरोभव ॥ इत्यनेनमंत्रेणहस्तेबद्ध्वा ॥
ततः ॥ दहसर्वाणिपापानितुष्टिंकुरुदयानिधे ॥ प्रसन्नःसन्नुमाकांतदीर्घायुःपुत्रदोभव ॥ इतिजीर्णदोरकोत्तारणंकृत्वाब्रा-
ह्मणायएकादशशतसंख्याकान्मंडकान्व्रतदक्षिणायुतान्कृत्वावायनंदत्वा तदेवद्रव्यंस्वयंभुंजीत ॥ एवंप्रतिमासंशुक्लसप्तम्यां
कार्यम् ॥ वर्षांतेहैमींराजतींवामुद्रिकांताम्रपात्रोपरिसंस्थाप्यब्राह्मणेभ्योदद्यात् ॥ आचार्यायविशेषेणसौवर्णमंगुलीयकं
पुष्पकुंकुमतांबूलांजनसूत्रयुतंसदक्षिणांगांचदद्यात् ॥ ब्राह्मणान्भोजयित्वास्वयंभुंजीत ॥ संतानवृद्धिंलब्ध्वातुशिवलोके
महीयते ॥ इतिमुक्ताभरणसप्तमीव्रतम् ॥

अथजन्माष्टमीव्रतम् ( नौकायां—निशीथकालेयदिवानिशायांदिवापिवारोहिणिकाकलापि ॥ यदिस्पृशेदष्टमिकांतदा-
नींजन्माष्टमीसैवनभोऽसितेस्यात् ॥१॥ यदाक्कचिद्रोहिणिकाकलापिनहिस्पृशेदष्टमिकांतदातु ॥ निशीथकालेकिलवर्तमा-
नांजन्माष्टमींतांमुनयोवदंति ॥ २ ॥ यत्रोभयेद्युर्यदिनोभयेद्युर्निशीथयोगस्तुतदापरैव ॥ समांशयोगेपिपराष्टमीस्याद्वैप-
म्ययोगेधिकताचयत्र ॥ ३ ॥ तत्पारणंस्यात्तिथिभावसानेदिवाथनिश्यन्यतरांतलाभे ॥ महानिशांतःप्रथमंततश्चेदंतस्त-
दातच्चपरेह्निकार्यं ॥ ४ ॥ पूर्वार्धरात्रात्परपूर्वयामौयामार्धकेवाघटिकाद्वयंवा ॥ महानिशास्यादथशक्त्यभावेत्वेकावसा-

नेपिदिवापिकुर्यात् ॥ ५ ॥ इति ॥ ) प्रातःदंतधावनपूर्वकंस्नात्वादेशकालौसंकीर्त्यममअखिलपापक्षयपूर्वकधर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्धिद्वाराअमुककामनयावाआचरितजन्माष्टमीव्रतोद्यापनंकरिष्ये ॥ वृताचार्यःवेद्यांसर्वतोभद्रेप्रस्थतिलोपरिस्थकलशोपरिपूर्णपात्रेरौप्यमयेपर्यंके सौवर्णींदेवकीं तदुत्संगेवामस्तनपायिनंसौवर्णश्रीकृष्णं इदंविष्णुरितिविष्णोर्नुकमितिवामन्त्रेण परितः वसुदेवं बलदेवं नंदं यशोदां सुभद्रां रोहिणीं विधुं मत्स्यादिदशरूपाणि आदित्यादिनवग्रहान् अश्विन्यादिसप्तविंशतिनक्षत्राणि देवान् नागान् यक्षान् विद्याधरान् यमुनां कालियं कंसं गाः योगनिद्रां सात्यकिं उद्धवं अक्रूरं उग्रसेनादियादवान् शंखं चक्रं गदां पद्मं त्रुटिं कालात्मानं अहोरात्रं मासं संवत्सरं सर्वात्मानं द्वारपालान् पुण्यशीलं सुशीलं जयं विजयं पुरतः गरुडं एवंनाममन्त्रैरावाह्यपुरुषसूक्तेनपूजयेत् ॥ ध्यानं ॥ कृष्णंचतुर्भुजंदेवंशंखचक्रगदाधरम् ॥ पीतांबरयुगोपेतंलक्ष्मीयुक्तंविभूषितम् ॥ लसत्कौस्तुभशोभाढ्यंमेघश्यामंसुलोचनम् ॥ ध्यायामिपुंडरीकाक्षंजगदानंदकारकम् ॥ अंगपूजा ॥ कृष्णायनमः पादौपू० संकर्षणाय गुल्फौ० विश्वकर्मणे जंघे कालात्मने जानुनी विश्वनेत्राय कटिं पद्मनाभाय नाभिं परमात्मने हृदयं श्रीकंठाय कंठं सर्वास्त्रधारिणे बाहू वाचस्पतये मुखं केशवाय ललाटं सर्वात्मने शिरः ॥ पूजांसमाप्यस्तोत्रंपठेत् ॥ अनघं वामनं शौरिं वैकुंठं पुरुषोत्तमं ॥ वासुदेवं हृषीकेशंमाधवंमधुसूदनं ॥ वराहंपुंडरीकाक्षंनृसिंहंदैत्यसूदनं ॥ दामोदरंपद्मनाभंकेशवंगरुडध्वजं ॥ गोविंदमच्युतंविष्णुमनंतमपराजितं ॥ अधोक्षजंजगद्बीजंसृष्टिस्थित्यंतकारकं ॥ अनादिनिधनंकृष्णंत्रैलोक्येशंजगद्गुरुं ॥ नारायणंचतु-

बाहुंशंखचक्रगदाधरं ॥ पीतांबरधरंनित्यंवनमालाविराजितं ॥ श्रीवत्सांकंजगद्धेतुंश्रीधरंश्रीपतिंहरिं ॥ इतिस्तोत्रं ॥ देवस्यजातकर्मषष्ठीपूजादिकृत्वा ॥ पुरतःअभयावचाशुंठीगुडूचीपिप्पलीशस्त्राणिनिक्षिप्याघ्यंदद्यात् ॥ चंद्रोदये ॥ जातः कंसवधार्थायभूभारोत्तारणायच ॥ कौरवाणांविनाशायदैत्यानांनिधनायच ॥ पांडवानांहितार्थायधर्मसंस्थापनायच ॥ गृहाणार्घ्यंमयादत्तंदेवक्यासहितोहरे ॥ इतिकृष्णायार्घ्यं ॥ अंगणेभूमौराजतंचंद्रबिंबंसंपूज्यतस्यार्घ्यंजानुभ्यामवनींगत्वा ॥ क्षीरोदार्णवसंभूतलक्ष्मीबंधोनिशाकर ॥ गृहाणार्घ्यंमयादत्तंरोहिण्यासहितःशशिन् ॥ रोहिण्यर्घ्यं ॥ दक्षस्यदुहिता साध्वीरोहिणीनामनामतः ॥ सोमेनसहितेदेविगृहाणार्घ्यंनमोस्तुते ॥ ततःप्रार्थना ॥ त्राहिमांसर्वगश्रीशहरेसंसारसा-गरात् ॥ त्राहिमांसर्वपापघ्नदुःखशोकार्णवात्प्रभो ॥ यद्बाल्येयच्चकौमारेयौवनेयच्चवार्धके ॥ तत्पुण्यंवृद्धिमाप्नोतुपापंहर हलायुधेति ॥ ततोरात्रौजागरणंकुर्यात् ॥ प्रातःस्नात्वादेवंसंपूज्यअग्निंप्रतिष्ठाप्यअन्वादध्यात् ॥ प्रधानंविष्णुंइदंविष्णु-रितिमन्त्रेण पायस १ तिल २ व्रीहि ३ यव ४ द्रव्यैःप्रतिद्रव्यंअष्टोत्तरशत १०८ संख्याकाहुतिभिः पुनःपंचखाद्येन विष्णोर्नुकमितिमन्त्रेणअष्टोत्तरशत १०८ संख्यया पुनःपुरुषसूक्तेनप्रत्यृचंएकैकयाज्याहुत्या महाव्याहृतिभिश्चअष्टाविंश-तिसंख्याज्याहुतिभिः परिवारदेवताब्रह्मादिदेवताश्चएकैकयाज्याहुत्या शेषेणस्विष्टकृतं ॥ ततआचार्यंसंपूज्यविभवेसति भूशय्यारौप्यवस्त्रकांचनादिदत्वापीठंचदद्यात् ॥ श्रीकृष्णःप्रतिगृह्णातिश्रीकृष्णोवैददातिच ॥ श्रीकृष्णस्तारकोभाभ्यां श्रीकृष्णायनमोनमः ॥ कृष्णायानंतरूपायदास्यामिप्रतिमामिमां ॥ द्रव्यंविष्णुसमुद्भूतमतःशांतिंप्रयच्छमे ॥ इति ॥

अथरामनवमीव्रतम् ॥ (तत्ररामनवमीनिर्णयः । निर्णयतत्त्वे—रघुनाथजनुर्नवमीगदितादिनमध्यगतायदिसोभयतः । नहिवोभयतोपियदाभयुतामपि च प्रथमापरा ॥ १ ॥ साचेन्मुहूर्त्तत्रयगाधिकावातदैवतत्रैवलयेदशम्याः ॥ वैखानसैःसासमुपोषणीयास्मार्तैस्तुपूर्वैववदंतिसंतः ॥ २ ॥ त्रिमुहूर्ताष्टमीघस्रेनवमीयदिलीयते ॥ स्मार्तैश्चवैष्णवैश्चैवतदाविप्रैरुपोष्यतइति ॥) तिथ्यादिसंकीर्त्यआत्मनःअखिलपापक्षयपूर्वकचतुर्विधपुरुषार्थसिद्धिद्वाराममआचरितस्यरामनवमीव्रतस्यसांगतासिद्ध्यर्थंतदुद्यापनंकरिष्ये ॥ ततःपूर्ववत् वृताचार्यः सर्वतोभद्रस्थकलशेसाक्षतपूर्णपात्रेषट्कोणंपद्मंविलिख्य तत्रमध्येहैमंरामंषडक्षरेणत्रयोदशाक्षरेणवामूलमन्त्रेण ॥ मूलमन्त्रस्तु श्रीरामायनमइतिषडक्षरमन्त्रः ॥ १ ॥ श्रीरामजयरामजयजयरामेतित्रयोदशाक्षरः ॥ २ ॥ अपरोवैदिकस्तु ॥ ॐभद्रोभद्रयासचमानआगात्स्वसारंजारोऽअभ्येतिपश्चात् ॥ सुप्रकेतैर्द्युभिरग्निर्वितिष्ठन्रुशद्भिर्वर्णैरभिराममस्थात् ॥ इतिमन्त्रेणरामंतद्वामतःहैमींसीतां ॥ ॐजनकात्मजायैनमःइतिनाममन्त्रेणचप्रतिष्ठाप्य ॥ परितःपट्कोणेषुक्रमेणदशरथं कौसल्यां लक्ष्मणं भरतं शत्रुघ्नं मारुतिं च नाममन्त्रैः प्रतिष्ठाप्य पुरुषसूक्तेनपूजयेत् ॥ पुष्पोत्तरंअंगपूजा ॥ श्रीरामचंद्रायनमः पादौपूजयामि राजीवलोचनाय० गुल्फौ० रावणांतकाय० जानुनी० विश्वामित्रप्रियाय० नाभिं० परमात्मने० हृदयं० श्रीकंठाय० कंठं० सर्वास्त्रधारिणे० बाहू० विश्वमूर्तये० मुखं० पद्मनाभाय० जिह्वां० दामोदराय० दंतान्० सीतापतये० ललाटं० ज्ञानगम्याय० शिरः० सर्वात्मने० सर्वांगं० ॥

नमस्कारमन्त्रः ॥ नमोदेवाधिदेवायरघुनाथायशार्ङ्गिणे ॥ चिन्मयानंदरूपायसीतायाःपतयेनमइति ॥ अर्घ्यमन्त्रः ॥ दशाननवधार्थायधर्मसंस्थापनायच ॥ राक्षसानांविनाशायदैत्यानांनिधनायच ॥ परित्राणायसाधूनांजातोरामःस्वयंहरिः ॥ गृहाणार्घ्यंमयादत्तंभ्रात्रादिसहितोनघ ॥ इति ॥ ततःपुराणपठनादिनारात्रिंनयेत् ॥ प्रातःअग्निंप्रतिष्ठाप्यअन्वादध्यात् ॥ अत्रप्रधानं रामंआज्य १ पायस २ द्रव्याभ्यां प्रत्येकं अष्टोत्तरशत १०८ संख्याहुतिभिःमूलमन्त्रेण जानक्यादिसप्तदेवताः उक्तद्रव्येणअष्टाविंशति २८ संख्याहुतिभिः ॥ ब्रह्मादिदेवताश्चएकैकयाज्याहुत्यायक्ष्ये ॥ एवंहोमंसंपाद्य आचार्यंसंपूज्य प्रतिमांदद्यात् ॥ तत्रमन्त्रः ॥ इमांस्वर्णमयींरामप्रतिमांसमलंकृताम् ॥ श्रीरामप्रीतयेदास्येप्रीतोभवतुराघवइति ॥ ततः व्रतपूर्तयेगांचदत्वासदन्नेनब्राह्मणान्संतर्प्यदक्षिणादिभिःप्रतोष्यआशिषोग्राह्याः ॥ इतिरामनवमीव्रतम् ॥

अथरामनामलेखनव्रतम् ॥ तिथ्यादिसंकीर्त्यआत्मनःअनेकपातकक्षयपूर्वकसकलमनोरथावाप्तिद्वाराश्रीरामचंद्रप्रीत्यर्थंमयालिखितंयत्कोटिलक्षामुकावधिकंरामनामतत्संपूर्णतासिद्ध्येतदुद्यापनाख्यंकर्मकरिष्येइतिसंकल्प्य ॥ पूर्ववत्वृताचार्यःसर्वतोभद्रस्थकलशेसाक्षतपूर्णपात्रेषोडशमाषात्मकराजतसिंहासनेसुवर्णस्यपलेनतदर्धेनवानिर्मितंरामं वामतःसीतां दक्षिणतः लक्ष्मणं पुरतः हनूमंतंचसौवर्णप्रतिमासुमूलमन्त्रेणनाममन्त्रेणचआवाह्य पुरुषसूक्तेनचपूजयेत् ॥ परितःसप्तधान्योपरिवारिपूर्णानष्टौकलशान्पूर्वादिक्रमेणसंस्थाप्यतेषुलोकेशांस्तत्तन्मन्त्रैरावाह्यपूजयेत् ॥ प्रातःअग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ अत्रलेखनदशांशेनशतांशेनवाहोमः ॥ अत्रप्रधानं रामंआज्यद्रव्येणलेखनदशांशेनशतांशेनवामूलमन्त्रेण परिवार-

देवताःब्रह्मादिदेवताश्चएकैकयाज्याहुत्यायक्ष्ये ॥ एवंहोमंसंपाद्यआचार्यंसंपूज्यपीठंदद्यात् ॥ तत्रमन्त्रः ॥ सीतासौमित्रि-हनुद्युतंरामंसदक्षिणं ॥ ददामिद्विजवर्यायरामोमेप्रीयतामिति ॥ ततःव्रतसंपूर्तयेगांचदत्त्वाघृतपूरितकांस्यपात्रंतिल-पात्रंचयथाशक्तिदशदानानिदत्त्वायोगिराजंबटुकत्रयंचअन्यानपिसद्विजान्सदन्नेनसंतर्प्यदक्षिणादिनाप्रतोष्यआशिषोगृही-त्वाइष्टजनैःसहभुंजीत ॥ इतिरामनासलेखनव्रतम् ॥

अथादुःखनवमीव्रतम् ॥ तिथ्यादिसंकीर्त्यआत्मनःसकलदुःखनाशपूर्वकमभीष्टकामनासिद्धिद्वाराश्रीगौरीप्रीत्यर्थंअदुः-खनवमीव्रतंकरिष्ये ॥ इतिसंकल्प्य ॥ गोमयेनोपलिप्यभूमौवेदींगुडेनलिप्तांइक्षुच्छादितांअपूपपायसादियुतांउपरिमंड-पिकायुतांकृत्वातत्रपीठेगौरींअंबेअंबिकइतिनमोदेव्याइतिवामन्त्रेणसंपूज्यरात्रिंजागरणादिनानयेत् ॥ तद्दिनेहिंसादिरहि-तसुपोषणंकार्यम् ॥ अशक्तश्चेद्दुग्धफलादिभक्ष्यं ॥ अत्यंताशक्तश्चेद्धविष्यान्नं ॥ प्रातःदेवींसंपूज्यसपत्नीकंब्राह्मणंसंपूज्यपंचफ-लान्वितंवायनंसोपस्करंदद्यात् ॥ तत्रमन्त्रः ॥ गौर्यादुःखविनाशिन्याव्रतसंपूर्तिहेतवे ॥ वायनंद्विजवर्यायसहिरण्यंददा-म्यहं ॥ इतिअदुःखनवमीव्रतम् ॥

अथगोपद्मव्रतम् ॥ इदं कार्तिकशुक्लैकादश्यांद्वादश्यांवाकार्यम् ॥ तिथ्यादिसंकीर्त्यआत्मनोयमदंडनिरासपूर्वकपुत्रपौत्र-सौभाग्याद्यभिवृद्धिद्वाराश्रीगोपालप्रीत्यर्थंपंचवर्षाचरितगोपद्मव्रतोद्यापनंकरिष्ये ॥ वृताचार्यःसर्वतोभद्रस्थकलशेहैमंचतु-र्भुजंगोपालंइदंविष्णुरितिमन्त्रेणसंपूज्यप्रार्थयेत् ॥ नमस्तेदेवदेवेशनमस्तेगरुडध्वज ॥ नमस्तेविष्णवेतुभ्यंव्रतस्यफलदा-

यक ॥ प्रातरग्निंप्रतिष्ठाप्यअन्वादध्यात् ॥ प्रधानं गोपालं समित् १ तिल २ पायस ३ आज्य ४ यव ५ द्रव्यैः प्रतिद्रव्यमष्टोत्तरशत १०८ संख्याकाहुतिभिः ॥ ब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ ततःक्रमेणद्रव्याणांहोमेमन्त्राः ॥ ॐत्रीणिपदा० अतोदेवा० इदंविष्णु० विष्णोर्नुकं० तत्सवितुर्व० ॥ ततोवायनंप्रतिवर्षंक्रमेणसहैववात्रयस्त्रिंशत्संख्याकद्रव्ययुतंदद्यात् ॥ प्रथमेपायसं द्वितीयेमंडकान् तृतीयेमाषवटकान् चतुर्थेअपूपान् पंचमेलड्डुकान् ॥ वायनमन्त्रः ॥ वायनंतेद्विजश्रेष्ठददामिव्रतपूर्तये ॥ दक्षिणादिसमायुक्तंगोपालःप्रीयतामिति ॥ ततःपंचमिथुनानिवस्त्रादिनासंपूज्यआचार्यायगांचदत्वा ॥ एवमेवलक्षगोपद्मव्रतं ॥ हवनेविशेषः तद्दशांशेनशतांशेनवापूर्वोक्तपंचद्रव्यैर्मिलित्वाकार्यम् ॥ वायनंचपूर्वोक्तमन्त्रेणैवदद्यात् ॥ अन्यत्समानं ॥ इतिगोपद्मव्रतम् ॥

अथश्रवणद्वादशीव्रतम् ॥ ( निर्णयतत्त्वे—श्रवःसंयुतैकादशीभाद्रशुक्लेविशुद्धाथविद्धापिचद्वादशीवा ॥ जयंतीयमुक्ताहरेर्वामनस्यविधेयासपर्यास्यमध्याह्नकाले ॥ १ ॥ ) प्रातर्नद्यादौ—वरोवरेण्योवरदोवराहोधरणीधरः ॥ अपवित्रंपवित्रंमांकरोतुभगवान्हरिः ॥ इत्यनेनतिलान्विलिप्यस्नात्वानित्यकर्मनिर्वर्त्यसंकल्पयेत् ॥ तिथ्यादिसंकीर्त्यआत्मनःअखिलपापक्षयपूर्वकपिशाचादिदुर्योनिनिरसनद्वाराश्रीविष्णुलोकप्राप्त्यर्थंआचरितश्रवणद्वादशीव्रतोद्यापनंकरिष्येइतिसंकल्प्य ॥ वृताचार्यःचतुर्द्वारोपशोभितमंडपांतर्वेदिकायांपीठदेवताःपूजयेत् ॥ आधारशक्त्यैनमः विमलायै० उत्कर्षिण्यै० ज्ञानशक्त्यै० क्रियाशक्त्यै० प्रह्वायै० सत्यायै० मायायै० मध्येपरमदेवतायै० परितइंद्रादिलोकपालांस्तदुपरितत्पूर्णपात्रयुतेक-

लशे गणपतिं० दुर्गां० क्षेत्रपालं० वास्तोष्पतिं० परितआदित्यादिनवग्रहदेवताश्चसंपूज्य ॥ तदुपरिसर्वतोभद्रंप्रसार्यतत्र ब्रह्मादिदेवताःसंपूज्य तदुपरिकुशकृष्णाजिनंप्रसार्य तत्रद्रोणपरिमिततिलपर्वतंकृत्वातदलाभेगोधूमाः तत्रतिलपूरितपूर्ण-पात्रयुतकलशेद्वादशारयुतपद्मेहैमंवामनंत्रीणिपदेतिमन्त्रेणसंपूज्यांगपूजांकुर्यात् ॥ मत्स्यायनमः पादौपू० कूर्माय० जानुनी० वराहाय० गुह्यं० नृसिंहाय० नाभिं० वामनाय० उदरं० परशुरामाय० दक्षिणभुजं० दाशरथिरामाय० वामभुजं० कृष्णाय० मुखं० बौद्धाय० कर्णौ० कल्किने० शिरः० ॥ ॐनमोभगवतेवासुदेवायसर्वांगंपूज० दधिभक्तनैवेद्यं-दत्वाप्रार्थयेत् ॥ नमस्तेदितिपुत्रायनमस्तेकश्यपात्मज ॥ त्रिविक्रमायदेवायवामनायनमोनमः ॥ ततोन्यग्रोधंकद्रुद्रायेतिमं-त्रेणसंपूज्य ॥ शिक्यदध्यन्नेनयुतंजलपूरितंकरकंचसंपूजयेत् ॥ तत्रक्रमेणमन्त्रौ ॥ शिक्योसिदधिभक्तोसिलंबितोसिमयोपरि ॥ सूत्रेणैवाश्रितोसित्वंवामनःप्रीयतामिति ॥ करकंपूजयिष्यामिसरितांसंगमेजलैः ॥ पंचरत्नसमायुक्तंतेनतुष्यतु वामनः ॥ ततःसर्वान्प्रार्थयेत् ॥ पर्जन्योवरुणःसूर्यःकेशवःसलिलंशिवः ॥ त्वष्टायमोवैश्रवणःसदापापंहरंतुमे ॥ कथा-श्रवणादिनारात्रिंनयेत् ॥ प्रातरग्निंप्रतिष्ठाप्यअन्वादध्यात् ॥ अत्रप्रधानं वामनं पायस १ घृत २ समित् ३ तिलैः ४ प्रतिद्रव्यमष्टोत्तरशत १०८ संख्याकाहुतिभिःपीठदेवताःब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ होममन्त्राश्च इरावती-तिमन्त्रेणपायसं त्रीणिपदेत्याज्यं इदंविष्णुरितिसमित् विष्णोःकर्माणीतितिलाः ॥ ततोद्वादशसंख्याकान्विप्रान्वस्त्रादि-नासंपूज्यदध्यन्नोपवीतगोपीचंदनयुतान्सुगंधजलपूरितान्द्वादशकरकांस्तेभ्योदद्यात्तत्रमन्त्रः ॥ सुगंधिजलसंपूर्णंदधिभक्त-

युतंद्विज ॥ करकंतेप्रदास्यामिवामनःप्रीयतामिति॥ ततः—वामनःप्रतिगृह्णातिवामनोवैददातिच ॥ वामनस्तारकोभाभ्यां-वामनायनमोनमः ॥ इत्यनेनसोपस्करपीठमाचार्यायदद्यात् ॥ व्रतपूर्तयेगांचदत्वाविप्रान्भोजयेत् ॥ इतिश्रवणद्वादशी ॥

अथप्रदोषव्रतम् ॥ ( पुरुषार्थचिंतामणौ—उभयत्रप्रदोषव्याप्तौ अव्याप्तौ साम्येनैकदेशव्याप्तौ पूर्वप्रदोषे अधिकव्याप्तौ । उत्तरप्रदोषे न्यूनव्याप्तावपि उत्तरदिनएवप्रदोषव्रतानुष्ठानं । सर्वथापरदिनेप्रदोषव्याप्त्यभावेपूर्वत्रैवेति ॥ ) तिथ्यादिसंकीर्त्यआत्मनःअखिलपापक्षयशत्रुपराजयपूर्वकायुरारोग्यैश्वर्यपुत्रपौत्राद्यभिवृद्धिद्वाराश्रीउमामहेश्वरप्रीत्यर्थंआचरितप्रदोषव्रतोद्यापनंकरिष्ये ॥ वृताचार्यःउक्तप्रकारेणलिंगतोभद्रस्थताम्रकलशेरौप्यपूर्णपात्रयुतेसौवर्णसांबसदाशिवंपुरतोराजतंवृषभंतत्तन्मन्त्रैःप्रतिष्ठाप्य ॥ परितःअसितांगभैरवाय १ रुरुभैरवाय २ चंडभैरवाय ३ क्रोधभैरवाय ४ उन्मत्तभैरवाय ५ भीषणभैरवाय ६ संहारभैरवाय ७ कपालभैरवाय ८ ॥ इतिप्रतिष्ठाप्यपूजयेत् ॥ मूलमन्त्रेणन्यासंकृत्वापंचब्रह्ममन्त्रैःसद्योजातादिभिःपूजयेत् ॥ प्रकारांतरेणपूजनं विष्णुं० १ ब्रह्माणं० २ भास्करं० ३ सोमं० ४ पूर्वादिक्रमतःप्रथमावरणे ॥ जयं १ विजयं २ गणपतिं ३ दुर्गां ४ द्वितीये ॥ नंदीश्वरं १ क्षेत्रपालं २ वास्तोष्पतिं ३ वायुं ४ तृतीये ॥ सप्तर्षीन् चतुर्थे ॥ भूतनाथं पंचमे ॥ इंद्रादीन्षष्ठे ॥ कपालिनंसप्तमे ॥ गंधर्वान्अष्टमे ॥ सद्योजातेत्यासनं वामदेवायेतिपाद्यं अघोरायेत्यर्घ्यं तत्पुरुषायेत्याचमनीयं ईशानायेतिस्नानं त्र्यंबकमितिवस्त्रं यज्ञोपवीतं उत्तरीयंच नमोहिरण्यबाहवइतिगंधं नमःशंभवायेत्यक्षतान् इमारुद्रायेतिपुष्पाणि नमोबिल्मिनेइतिबिल्वदलानि मानस्तोकेइतिधूपं नमऽ-

उष्णीषिणइतिदीपं नमोविसृजन्द्यइतिनैवेद्यं नमःपर्णायेतितांबूलं इमारुद्रायेतिदक्षिणाम् नमोह्रस्वायेतिमन्त्रपुष्पम् नमोस्तु-रुद्रेभ्यइतित्रिभिर्नमस्कारः पुनर्नाममन्त्रेणअष्टौप्रदक्षिणानमस्कारांश्चकुर्यात् ॥ भवाय १ महादेवाय २ रुद्राय ३ नीलकंठाय ४ शशिमौलिने ५ उग्राय ६ भीमाय ७ ईशानाय ८ ॥ ततोर्घ्यंरजतादिपात्रेक्षीरकुशघृतदधितंडुलसिद्धार्थगंधपुष्पादिक्षिप्त्वासजलंदद्यात् ॥ भयरोगादिदारिद्र्यपापक्षुदपमृत्यवः ॥ ऋणशोकमनस्तापानश्यंतुममसर्वदा ॥ ततःप्रार्थयेत् ॥ प्रसीददेवदेवेशप्रसीदपरमेश्वर ॥ प्रसीदसोमसर्वज्ञप्रसीदकरुणाकर ॥ प्रातरग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ प्रधानं उमामहेश्वरंपलाशसमित् १ बिल्वपत्र २ पायस ३ आज्य ४ द्रव्यैः प्रत्येकमष्टोत्तरशत १०८ संख्याकाहुतिभिः ( पक्षे शिवंगौरींच त्र्यंबकंअंबेअंबिकाइतिमन्त्राभ्यांप्रत्येकं पायसाज्याभ्यांवा ) पीठदेवताःब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ ततःपीठंगांचदत्वाब्राह्मणान्भोजयेत् ॥ भूयसींदक्षिणांदत्वाशिषोग्राह्याः ॥ इतिप्रदोषव्रतम् ॥

अथानंतचतुर्दशीव्रतम् ॥ ( निर्णयतत्त्वे—मध्याह्नगानंतचतुर्दशीस्यादन्यैर्निरुक्तात्रिमुहूर्तगापि ॥ मुहूर्तमात्राप्युदयेतदन्यैराद्यैवचेद्व्युद्वयगामिनीयं ॥ १ ॥ अपिशब्दाद्घटिकामात्रापि ॥ ) तिथ्यादिसंकीर्त्यआत्मनोनिखिलपापनिर्मुक्तिपूर्वकोत्तमसिद्धिपुत्रपौत्रसहितविविधभोगधनधान्यपरमगतिप्राप्तिकामनयाचतुर्दशवर्षाचरितानंतव्रतोद्यापनंकरिष्ये इतिसंकल्प्य नित्यवत्स्वयंदेवंसंपूजयेत् ॥ ततोवृताचार्यःसर्वतोभद्रेब्रह्मादिदेवताआवाह्यतदुपरिकलशंप्रतिष्ठाप्यतत्रयमुनामावाह्यश्रीसूक्तेननाममन्त्रेणवासंपूज्य ॥ तदुपरिअक्षतपूरितपूर्णपात्रंनिधाय तत्राष्टदलंविरच्य तत्रसुवर्णनिर्मितं चतु-

दशग्रंथियुतंअनंतंसहस्रशीर्षेतिमन्त्रेणस्थापयेत् ॥ तदुत्तरतःसप्तधान्योपरिविस्तृतशय्यायांस्वर्णनिर्मितंलक्ष्मीसहितंहैमंहल-मुसलयुतं अनंतंदेवं इदंविष्णुरितिमन्त्रेणस्थापयेत् ॥ स्वर्णदोरकप्रतिमयोःपुरुषसूक्तेनश्रीमदनंतायनमइतिनाममन्त्रेणवापूजावार्षिकवत्कार्या ॥ अथग्रंथिदेवताःपूजयेत् क्रमेण ॥ विष्णुः १ अग्निः २ आदित्यः ३ सहस्राक्षः ४ पितामहः ५ इंद्रः ६ पिनाकी ७ विघ्नेशः ८ स्कंदः ९ सोमः १० वरुणः ११ पवनः १२ पृथ्वी १३ वसवः १४ ॥ ततःशय्यायांप्रतिमायाःपरितः शंखं १ चक्रं २ गदां ३ पद्मं ४ ॥ तद्बहिःनाममन्त्रेण अनंतं १ कपिलं २ दक्षं ३ मनुं ४ प्रजापतिं ५ संकर्षणं ६ कालं ७ वनमालिनं ८ त्रिविक्रमं ९ अहोरात्रं १० अर्धमासं ११ मासं १२ ऋतून् १३ अयने १४ संवत्सरं १५ इद्वत्सरं १६ अनुवत्सरं १७ वत्सरं १८ प्रजाध्यक्षं १९ अजितं २० सर्वभूतं २१ प्रद्युम्नं २२ अनिरुद्धं २३ श्रीधरं २४ पुरुषोत्तमं २५ वामनं २६ पद्मनाभं २७ विश्वरूपम् २८ त्रिविक्रमम् २९ विष्णुम् ३० अच्युतम् ३१ ॥ तद्बहिःअष्टवसून् ८ ॥ तद्बहिःएकादशरुद्रान् ११ तद्बहिःद्वादशादित्यान् १२ तद्बहिःनवग्रहान् ९ तद्बहिःअष्टभैरवान् ८ तद्बहिःमेषादिद्वादशराशीन् १२ तद्बहिःअश्विन्यादिनक्षत्राणि २८ तद्बहिःब्राह्म्यादिसप्तमातृः ७ तद्बहिःचैत्रादिद्वादशमासान् १२ तद्बहिर्दीप्त्यादिशक्तीः तद्बहिर्विष्कंभादियोगान् २७ आवाह्य ॥ पीठपरितःफलपक्वान्नपूरितान्चतुर्दशकुंभांश्चतुर्दशनामाभिःस्थापयेत्पूजयेच्च ॥ तेचमन्त्राः अनंतायनमः १ संकर्षणाय २ कमलाय ३ शेषाय ४ वासुदेवाय ५ विश्वनाथाय ६ विश्वरूपाय ७ पद्मनाभाय ८ दामोदराय ९ जगन्नाथाय १० चतुर्भुजाय ११ श्रीकंठाय १२ केशवाय १३

सर्वात्मने १४ ॥ ततपुष्पपूजोत्तरंकलशस्थापनोक्तचतुर्दशनामभिःअंगपूजा ॥ अनंताय० पादौ० संकर्षणाय० गुल्फौ० क-
मलाय० जंघेपू० शेषाय० जानुनी० वासुदेवाय० ऊरू० विश्वनाथाय० गुह्यं० विश्वरूपाय० कटिं० पद्मनाभाय०
नाभिं० दामोदराय० उदरं० जगन्नाथाय० हस्तौ० चतुर्भुजाय० बाहू० श्रीकंठाय० कंठं० केशवाय० ललाटं० सर्वा-
त्मनेशिरः० अनंताय० सर्वांगंपूज० ॥ ततः ॥ नमस्तेदेवदेवेशनमस्तेधरणीधर ॥ नमस्तेसर्वनागेंद्रअनंतायनमोनमः ॥ इति
इतिनमस्कारः । ततःप्रार्थना । अनंतकामान्मेदेहिसर्वकामफलप्रद ॥ अनंतायनमस्तुभ्यंपुत्रपौत्रान्प्रवर्द्धय ॥ व्रतेनानेन
संतुष्टोभवदेवसदामम ॥ ततःपुराणश्रवणादिनारात्रिंनिनयेत् ॥ प्रातरग्निंप्रतिष्ठाप्यअन्वादध्यात् ॥ अत्रप्रधानं श्रीम-
दनंतमश्वत्थसमित् १ तिल २ व्रीहि ३ यव ४ घृत ५ पायस ६ द्रव्यैः प्रत्येकमष्टोत्तरशत १०८ संख्याकाहुतिभिः
पीठदेवताःआवरणदेवताश्चैकैकयाज्याहुत्यापायसाज्याहुत्यावा ब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ स्थापनमन्त्रैर्होमः ॥
केचित्तद्दिनएवहोममिच्छंति ॥ प्रातर्ब्राह्मणभोजनमात्रं ॥ दिवैवसर्वम् ॥ ततःपीठंसंपूज्यवस्त्रादिनाआचार्यंसंपूज्यपीठं
दद्यात् ॥ तत्रमन्त्रः ॥ प्रतिगृह्णद्विजश्रेष्ठसमस्तफलदायक ॥ त्वत्प्रसाददहंविप्रमुच्येयंभवबंधनात् ॥ अनंतःप्रतिगृह्णाति
अनंतोवैददातिच ॥ अनंतस्तारकोभाभ्यामनंतायनमोनमः ॥ ततःचतुर्दशब्राह्मणान्वस्त्रादिनासंपूज्यस्थापितचतुर्दशकल-
शान्पक्वान्नादिपूरितान्दक्षिणासहितान्तेभ्यःप्रतिगृह्णद्विजश्रेष्ठेतिमन्त्राभ्यांदद्यात् ॥ व्रतपूर्तयेगांचदद्यात् ॥ क्षमापयेत् ।
भक्तिहीनंक्रियाहीनंद्रव्यहीनंतथैवच ॥ मन्त्रहीनंकृतंयच्चपरिपूर्णंतदस्तुमे ॥ १ ॥ पक्वान्नादिनाभोजयेत् ॥ इत्यनंतव्रतं ॥

अथवैकुंठचतुर्दशीव्रतम् ॥ (निशीथस्थिताचापिवैकुंठसंज्ञाचतुर्दश्यसौद्युद्वयेतूत्तरास्यात् ॥ इति ॥) तिथ्यादिसंकीर्त्यआत्मनःसर्वपापक्षयपूर्वकशिवपदप्राप्तिकामनयाऽचरितवैकुंठचतुर्दशीव्रतोद्यापनंकरिष्ये ॥ वृताचार्यःलिङ्गतोभद्रस्थकलशेहैमंविश्वेश्वरंपूजयेत् ॥ प्रातरग्निंप्रतिष्ठाप्यघृताक्ततिलैःअष्टोत्तरशतं ॐनमःशिवायेतिमन्त्रेणहुत्वाव्रतपूर्तयेगांपीठदानंआचार्यपूजनंब्राह्मणेभ्योदक्षिणावायनादिदत्वासंभोज्याशिषोगृह्णीयात् ॥ इतिवैकुंठचतुर्दशीव्रतम् ॥

अथशिवरात्रिव्रतम् ॥ (नौकायां—विज्ञेयाशिवरात्रिरित्यसितगामाघेचतुर्दश्यसौयुक्तायाजययाऽस्तमानसमयात्पूर्वंयदाद्युद्वये ॥ भूतःस्यात्सकलेनिशीथसमयेहेमाद्रिराद्यांजगावत्यांमाधवरामकृष्णतनयौपूर्वंनिशीथेऽखिले ॥ १ ॥ स्वल्पःस्यात्परतस्तदाद्यदिवसेकार्यायदाद्येनिशीथेभूतःपरतःप्रदोषसमयेपूर्वातदापिध्रुवं ॥ भूतःस्यात्परतोनिशीथसमयात्पूर्वंहिभूतोनहिस्यादन्त्येदिवसेनिशीथसमयेयोग्यापरास्यात्तदा ॥ २ ॥ प्रदोषगास्यान्नहिचेद्दिनद्वयेचतुर्दशीसर्वमतेपुराशुभा ॥ प्रदोषगास्याद्यदिचेद्दिनद्वयेनिशीथयोगेनयुतत्वतःपुरा ॥ ३ ॥ इति ॥ प्रतिमासभवांशिवरात्रिमथोबहुरात्रिगतांकुरुसाम्यगतां ॥ प्रथमामथवोदितवत्सकलंकमलाकरसूरिमतंविमलं ॥ ४ ॥ उदितवत् महाशिवरात्रिनिर्णयोक्तवत् ॥) तिथ्यादिसंकीर्त्यआत्मनःसर्वपापक्षयपूर्वकमक्षयमोक्षप्राप्त्यर्थंआचरितशिवरात्रिव्रतोद्यापनंकरिष्ये ॥ वृताचार्यः अन्यैर्द्वादशब्राह्मणैःसहपूजामारभेत् ॥ द्वादशलिंगोद्भवेपीठेउक्तविधिनाब्रह्मादिदेवताःसंपूज्य ॥ तत्रमध्यमकुंभेउमामहेश्वरंत्र्यम्बकमितिमन्त्रेणप्रतिष्ठाप्यपुरतोराजतंवृषभंचप्रतिष्ठापयेत् ॥ द्वादशब्राह्मणाःद्वादशलिंगस्थकलशेषुद्वादशप्रतिमाःपूजयेयुः ॥ तत्र-

प्राच्यां महेशं अघोरं पशुपतिं ॥ दक्षिणस्यां पंचवक्त्रं उग्रं रुद्रं ॥ पश्चिमायां भवं शर्वं शंभुं ॥ उत्तरस्यां शिवं भीमं भीमपराक्रमं ॥ प्रतिकलशंपरितोलोकपालान् ॥ अत्रप्रधानं ॥ उमामहेश्वरं पायस १ बिल्वपत्र २ तिल ३ दूर्वा ४ घृत ५ द्रव्यैः प्रत्येकं अष्टोत्तरशत १०८ संख्याकाहुतिभिः ॥ द्वादशकलशस्थदेवताःअष्टाष्टसंख्याकाहुतिभिःतैरेवद्रव्यैः ॥ परिवारदेवताःब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ एवंहोमंसंपाद्यदेवतांपूजयेत् ॥ शंभोप्रसीददेवेशसर्वलोकेश्वरप्रभो ॥ तवरूपप्रदानेनममसंतुमनोरथाः ॥ चतुर्दशनामानि ॥ अजैकपादहिर्बुध्न्योभवःशर्वउमापतिः ॥ रुद्रःपशुपतिःशंभुर्वरदः शिवईश्वरः ॥ महादेवोहरोभीमोनामान्येवंचतुर्दश ॥ एतैर्होमःप्रकर्तव्यःकुंभदानेपितान्स्मरेत् ॥ ( पक्षे उमायुक्तशिवो-देवतात्र्यम्बकंअम्बेऽअम्बिकइतिमन्त्रौतिलव्रीहिपायसयवद्रव्याणि ॥ अजैकपादादिनामभिश्चतुर्दशाहुतिसंख्याकोबिल्वपत्रैर्होमः ) ॥ अन्यत्समानं ॥ इतिशिवरात्रिव्रतम् ॥

अथवटसावित्रीव्रतम् ॥ ( निर्णयतत्त्वे—भूतयुक्तैवसावित्रीव्रतेपंचदशीभवेत् ॥ पारणंपौर्णिमांतेस्यादिति ॥ ) तिथ्यादिसंकीर्त्यममभर्तुःपुत्रादीनांचआयुरारोग्यैश्वर्यादिप्राप्तिपूर्वकमिहजन्मनिजन्मांतरेचआत्मनःअवैधव्यप्राप्तयेआचरितवटसावित्रीव्रतोद्यापनंकरिष्येइतिसंकल्प्य ॥ वृताचार्योवटमूलेगृहेवामृदावेदींविधायतत्रसर्वतोभद्रंविरच्यतत्रब्रह्मादिदेवताःसंपूज्यतत्रकलशद्वयंप्रतिष्ठाप्य तत्रैकस्मिन्कलशेहैमंब्रह्मजज्ञानमितिमन्त्रेणब्रह्माणं गायत्रीमन्त्रेणहैमींसावित्रींचप्रतिष्ठाप्यतदुत्तरतोद्वितीयकुंभे पलादधिकरजतस्यराजतपर्यंकेहैमीः सत्यवत्सावित्रीयमनारदप्रतिमाः नाममन्त्रैरावाह्य पुरतः-

काष्ठभारंकुठारंचहैमंराजतंवानिधायपूजयेत् ॥ अशक्तावेकस्मिन्कलशेसर्वेषांपूजनं ॥ अर्घ्यंदद्यात् ॥ ॐकारपूर्विकेदेविवीणापुस्तकधारिणि ॥ वेदमातर्नमस्तुभ्यमवैधव्यंप्रयच्छमे ॥ पतिव्रतेमहाभागेभर्तुश्चप्रियवादिनि ॥ अवैधव्यंचसौभाग्यं देहित्वंममसुव्रते ॥ पुत्रान्पौत्रांश्चसौख्यंचगृहाणार्घ्यंनमोस्तुते ॥ प्रातरग्निंप्रतिष्ठाप्यअन्वादध्यात् ॥ सावित्रींगायत्रीमन्त्रेणपायस १ घृत २ दूर्वा ३ तिल ४ व्रीहि ५ द्रव्यैःप्रत्येकमष्टोत्तरशतसंख्याकाहुतिभिः ॥ ब्रह्माणं धर्मराजं नारदंच व्याहृतिमन्त्रेण तिल १ व्रीहि २ यव ३ द्रव्यैः प्रत्येकमष्टोत्तरशत १०८ संख्याकाहुतिभिः ॥ ब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ शूर्पवायनमन्त्रः ॥ सोपस्करंद्विजश्रेष्ठव्रतसंपूर्तिकारकम् ॥ वायनंतेप्रयच्छामिसावित्रीप्रीयतामिति ॥ रात्रावरुंधतींदृष्ट्वासंपूज्यार्घ्यंदद्यात् ॥ अरुंधतिनमस्तेस्तुवसिष्ठस्यप्रियेशुभे ॥ पुत्रान्देहिसुखंदेहिगृहाणार्घ्यंनमोस्तुते ॥ इतिदत्वाभुंजीत ॥ इतिवटसावित्रीव्रतम् ॥

अथकोजागरव्रतम् ॥ तिथ्यादिसंकीर्त्यआत्मनःस्वकुलस्यचाखंडलक्ष्मीप्राप्तिपूर्वकसुखादिप्राप्तयेलक्ष्मीप्रीत्यर्थंकोजागरव्रतंकरिष्ये ॥ रात्रौमंडलेश्रीश्चेतिमन्त्रेणलक्ष्मीं० त्रातारमितिमन्त्रेण मत्तैरावतस्थमिंद्रमावाह्यपूजयेत् ॥ परितोदीपान्घृतेनतैलेनवालक्षंतदर्धंतदर्धंवायथाशक्तिवादत्वावीथीचतुष्पथेवादत्वानारिकेलोदकमात्रंप्राश्याक्षैर्दीव्यन्नुत्सवेनरात्रिंनिनयेत् ॥ प्रातर्घृतशर्करापायसादिनाब्राह्मणान्संतर्प्यदक्षिणांदत्वाऽशिषोगृहीत्वाइष्टजनैःसहभुंजीत ॥ इतिकोजागरव्रतम् ॥

अथसोमवत्यमावास्याव्रतम् ॥ तिथ्यादिसंकीर्त्यआत्मनःअवैधव्यपुत्रपौत्रप्राप्तिपूर्वकमतुलसौभाग्यसिद्धिद्वाराश्वत्थरू-

पीनारायणप्रीत्यर्थं आचरितस्यसोमवत्यमावास्याव्रतस्यसांगतासिद्ध्यर्थंतदुद्यापनाख्यंकर्मकरिष्ये इतिसंकल्प्य वृताचार्यः सर्वतोभद्रस्थकलशेरौप्यमयपीठेसौवर्णाश्वत्थाधोहैमंलक्ष्मीनारायणंइदंविष्णुरितिमन्त्रेणप्रतिष्ठाप्यपूजयेत् ॥ मूलतोब्रह्मरूपायेतिपुरुषसूक्तेनवापूजयेत् ॥ प्रातरग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ अत्रप्रधानं ॥ लक्ष्मीनारायणमश्वत्थसमित् १ पायस २ तिल ३ द्रव्यैः प्रत्येकमष्टोत्तरशत १०८ संख्याकाहुतिभिःब्रह्मादिमंडलदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ आचार्यपूजनं पीठदानंवायनदानंब्राह्मणभोजनंकुर्यात् ॥ इतिसोमवत्यमावास्याव्रतम् ॥

अथपिठोरीव्रतम् ॥ तिथ्यादिसंकीर्त्यआत्मनःस्वकुलस्यचसंतत्यविच्छेदपूर्वकपुत्रपौत्रलक्ष्मीसुखाद्यभिवृद्ध्यर्थंसप्तवर्षावध्याचरितपिठोरीव्रतस्यसंपूर्णतासिद्ध्यर्थंचतुःषष्टियोगिनीस्वरूपासप्तमातृकाप्रीत्यर्थंतदुद्यापनाख्यंकर्मकरिष्ये ॥ वृताचार्यःसर्वतोभद्रेसप्तकलशेषु ब्राह्म्यादिसप्तमातरः ॥ ॐजज्ञानंसप्तमातरोवेधामशासतश्रिये ॥ अयंध्रुवोरयीणांचिकेतुयत् ॥ इत्यनेनआवाह्यपूजयेत् ॥ तदुत्तरेकलशेचतुःषष्टियोगिनीरावाहयेत् ॥ प्रधानं ॥ सप्तमातृःअष्टोत्तरशतमाज्याहुतिभिः

१ चतु षष्टियोगिन्यस्तु—दिव्ययोगिनी १ महायोगिनी २ सिद्धयोगिनी ३ गणेश्वरी ४ प्रेताक्षी ५ डाकिनी ६ काली ७ कालरात्री ८ निशाचरी ९ ॐकारी १० रुद्रवेताली ११ ह्रींकारी १२ भूतडांवरी १३ ऊर्ध्वकेशी १४ विरूपाक्षी १५ शुष्कांगी १६ नरभोजना १७ मराडीं १८ वीरभद्रा १९ धूम्राक्षी २० कलहप्रिया २१ राक्षसी २२ घोररक्ताक्षी २३ विरूपा २४ भयंकरी २५ मासुरी २६ रौद्रवेताली २७ श्रीपर्णा २८ त्रिपुरांतका २९ भैरवी ३० ध्वंसनी ३१ क्रोधिनी ३२ दुर्मुखी ३३ प्रेतवाहिनी ३४ कंटकी ३५ त्राटकी ३६ यमदूती ३७ कराली ३८ खट्वांगी ३९ दीर्घलंबोष्ठी ४० मालिनी ४१ मन्त्रयोगिनी ४२ कालाग्निग्रहिणी ४३ चक्री ४४ कंकाली ४५ भुवनेश्वरी ४६ स्फाराक्षी ४७ कार्मुकी ४८ लौकिकी ४९ काकदृष्टि ५० भक्षणी ५१ अधोमुखी ५२ प्रेरणी ५३ व्याघ्री ५४ कंकणी ५५ प्रेतभक्षणी ५६ वीरकौमारिका ५७ चंडा ५८ वाराही ५९ मुंडधारिणी ६० कामाक्षी ६१ उड्डाणी ६२ जालंधरा ६३ महालक्ष्मी ६४ ॥ इति ॥

योगिनीर्ब्रह्मादयश्चैकैकयाज्याहुत्या ॥ पीठदानमन्त्रः ॥ सोपस्करंचकलशंगृहाणद्विजसत्तम ॥ प्रीयंतांमातरोमह्यंलोकानांस्थितिहेतवः ॥ इतिपिठोरीव्रतम् ॥

अथसूर्यव्रतम् ॥ तिथ्यादिसंकीर्त्यआत्मनोरोगक्षयपुत्रलाभादिप्राप्तिपूर्वकाभीष्टकामनासिद्ध्यर्थंवर्षात्मकसूर्यव्रतोद्यापनंकरिष्ये ॥ उक्तप्रकारेणवृताचार्योमध्याह्नेसर्वतोभद्रेकलशंप्रतिष्ठाप्यतदुपरिपूर्णपात्रंनिधायतत्रद्वादशारंकमलंरौप्यमयंरथंतदुपरिहैमंसंज्ञासहितंसहस्रकिरणंआकृष्णेनेतिमन्त्रेणप्रतिष्ठाप्य परितोद्वादशदलेषुद्वादशमासाधिपान्क्रमेणपूजयेत् ॥ मित्रं १ विष्णुं २ वरुणं ३ सूर्यं ४ भानुं ५ तपनं ६ इंद्रं ७ रविं ८ गभस्तिं ९ यमं १० हिरण्यरेतसं ११ दिवाकरं १२ ॥ अर्घ्यमन्त्रः ॥ नमःसहस्रकिरणसर्वव्याधिविनाशन ॥ गृहाणार्घ्यंमयादत्तंसंज्ञयासहितोरवे ॥ अन्वादध्यात् ॥ संज्ञासहितंसहस्रकिरणंपायसद्रव्येणाष्टोत्तरशतसंख्याकाहुतिभिःद्वादशपरिवारदेवताःब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ ततोद्वादशब्राह्मणान्संतर्पयेत् ॥ इतिसूर्यव्रतम् ॥

अथाशादित्यव्रतम् ॥ तिथ्यादिसंकीर्त्यआत्मनःसकलरोगनिरसनपूर्वकपुत्रपौत्रसकलाभीष्टसिद्धिद्वारासवितृप्रीत्यर्थंआशादित्यव्रतंकरिष्ये ॥ तत्रमन्त्रः ॥ यथाशाविमलाःसर्वास्तवभास्करभानुभिः ॥ तथाशाविमलामह्यंकुरुनित्यंममार्घ्यतः ॥ नमोस्तुतेपापविनाशनायविश्वात्मनेसप्ततुरंगमाय ॥ सामर्ग्यजुर्धामनिधेविधात्रेभवाब्धिपोतायनमःसवित्रे ॥ अनेनमन्त्रेणमासाधिपनाममन्त्रेणचपूजाकार्या ॥ मासाधिपनामानि सूर्यः १ धाता २ वरुणः ३ माधवः ४ हरिः ५ रविः ६

रुद्रः ७ भर्गः ८ स्वर्णरेताः ९ अर्यमा १० भानुः ११ भास्करः १२ ॥ वृताचार्यःसर्वतोभद्रेरक्तवस्त्रवेष्टितंताम्रकलशं-तत्रपूर्णपात्रेद्वादशारंकमलंविरच्य तन्मध्येरौप्यरथेहैमंसवितारं आकृष्णेनेतिमन्त्रेणसंस्थाप्यपरितोद्वादशदलेषुपूर्वोक्तान्द्वा-दशमासाधिपान्प्रतिष्ठाप्यउक्तप्रकारेणपूजयेत् ॥ ततोग्निंप्रतिष्ठाप्यहोमयेत् ॥ प्रधानंसवितारंपायस १ द्रव्येणाष्टोत्तर-शत १०८ संख्याकाहुतिभिः ॥ मासाधिपद्वादशदेवताः ब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ अत्रपायसपूरितताम्र-पात्रदानमुक्तं ॥ होमःकृताकृतः ॥ इत्याशादित्यव्रतम् ॥

अथसोमवारव्रतम् ॥ तिथ्यादिसंकीर्त्यआत्मनःअशेषपापक्षयपूर्वकसत्पुत्रप्राप्तिधनधान्यैश्वर्यादिवृद्धिद्वाराऽमुककामन-यावाचरितस्यसोमवारव्रतस्यसांगतासिद्ध्येतदुद्यापनंकरिष्ये ॥ वृताचार्यःलिंगतोभद्रंविरच्यतत्रब्रह्मादिदेवताआवाह्य त-दुपरिकलशंपूर्णपात्रेहैमंशिवंत्र्यम्बकमितिमन्त्रेण हैमींगौरींचअंबेअंबिकइतिमन्त्रेणपुरतोराजतंवृषभंआशुःशिशानइतिमन्त्रे-णप्रतिष्ठाप्य पुरतः पूर्वादिक्रमेण अनंतं १ सूक्ष्मं २ शिवं ३ उत्तमं ४ त्रिमूर्तिं ५ रुद्रं ६ श्रीकंठं ७ शिखंडिनं ८ ॥ पुनराग्नेयादिविदिक्षु गणेशं १ मातृः २ दुर्गां० ३ क्षेत्रपालं ४ ॥ पुनःपूर्वादिदिक्षुलोकेशांस्तत्तन्मन्त्रैःप्रतिष्ठाप्यपूजयेत् ॥ प्रातरग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ सोमंशिवंत्र्यम्बकमितिमन्त्रेणपलाशसमिद्भिः आप्यायस्वेतिमन्त्रेणपृषदाज्येन त्वꣳसो-मासीतिमन्त्रेण यव १ व्रीहि २ पायस ३ तिल ४ आज्य ५ द्रव्यैः प्रत्येकमष्टोत्तरशत १०८ संख्याकाहुतिभिः ॥ गौरींच-त्रिमध्वाक्तदूर्वाभिस्तावतीभिःपरिवारदेवताब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ ततःपीठंव्रतपूर्तयेधवलांगांचदद्यात् ॥

॥३१५॥

अथनक्तव्रतोद्यापनंस्कान्दोक्तम् ॥ लिंगतोभद्रमंडलेकलशोपरिसौवर्णींउमामहेश्वरप्रतिमांपुरतोराजतंवृषभंचप्रतिष्ठाप्यषोडशोपचारैःपूजयेत् । सहस्रनामभिःसहस्रबिल्वपत्रसमर्पणं सौवर्णबिल्वपत्रार्पणंच । रात्रौजागरणं । प्रातरग्निंप्रतिष्ठाप्य ॐत्र्यम्बकंय० मृतात्इतिमन्त्रेण तिल १ बिल्वपत्र २ आज्य ३ अपूप ४ द्रव्यैःप्रतिद्रव्यंअष्टोत्तरशताहुतयः । सवत्सगोदानं । एकादशब्राह्मणभोजनंच ॥ इतिनक्तव्रतोद्यापनम् ॥

अथनक्तव्रतोद्यापनंविष्णुधर्मोत्तरोक्तम् ॥ सर्वतोभद्रमंडलेकलशोपरिसौवर्णंकेशवंप्रतिष्ठाप्यपुरुषसूक्तेनषोडशोपचारैः-पूजयेत् ॥ अग्निंप्रतिष्ठाप्य ॐइदंविष्णुरितिमन्त्रेणआज्य १ पायस २ द्रव्याभ्यांप्रतिद्रव्यमष्टोत्तरशताहुतयः । कपिलागोदानं ॥ इदंव्रतंमयादेवाचरितंप्रीतयेतव ॥ न्यूनंसंपूर्णतांयातुत्वत्प्रसादाज्जनार्दन ॥ इतिक्षमाप्यब्राह्मणान्भोजयेदिति ॥ निर्णयसिन्धौधर्माब्धौव्रतोद्यापनकौमुद्यांच नक्तेवस्त्रयुगंदेयमित्येवोक्तं । व्रतराजेतुगोदानमेवोक्तं । इतिनक्तव्रतोद्यापनम् ॥

अथशिवामुष्टिव्रतम् ॥ तिथ्यादिसंकीर्त्यममेहजन्मनिअखिलपापक्षयपूर्वकःदुःखदारिद्र्यनाशविपुलसुखसौभाग्यैश्वर्यपुत्रपौत्रादिप्राप्त्यर्थंश्रीशिवप्रीत्यर्थंपञ्चवर्षात्मकंपंचधान्येनशिवमुष्टिव्रतंकरिष्ये ॥ मन्त्रपुष्पांतेधान्यंसमर्प्य ॥ वृताचार्यः एकलिंगोद्भवपीठेकलशंसंस्थाप्यराजतंपूर्णपात्रंनिधायतत्रहैमींउमेशप्रतिमांराजतंवृषभंसंस्थाप्यलोकेशानावाह्यपूर्ववत्पूजयेत् ॥ सुवर्णनिर्मितंधान्यंकृत्वापंचसंख्ययात्रीणिएकैकंसमर्पयेत् ॥ सुवर्णबिल्वदलानिअथवारौप्यमयानिकृत्वाधान्यसंख्ययास-

१ प्रथमेशालितंदुलान १ द्वितीयेयवान् २ तृतीयेगोधूमान ३ चतुर्थेचणकान् ४ पंचमेमुद्गान ५ एकैकंपंचप्रस्थंप्रस्थंवाप्राप्यंअशक्तौनान्नेनन्यूनं ॥

मर्पयेत् ॥ अग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ अत्रप्रधानं ॥ उमेशंसमित् १ तिल २ आज्य ३ द्रव्यैःगायत्रीमन्त्रेणअष्टोत्तरशत-संख्याहुतिभिःलोकपालान्ब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ ततःशिवायपंचरत्नादिसमर्पयेत् ॥ इतिशिवामुष्टिव्रतम् ॥

अथमङ्गलागौरीव्रतम् ॥ तिथ्यादिसंकीर्त्यआत्मनोऽवैधव्यपुत्रपौत्राद्यैहिकनानाविधभोगप्राप्तिपूर्वकगौरीलोकप्राप्त्यर्थं-आचरितंयत्पंचवर्षात्मकंमंगलागौरीव्रतंतत्संपूर्णफलावाप्तयेतदुद्यापनंकरिष्ये ॥ वृताचार्यःएकलिंगोद्भवेब्रह्मादिदेवतास्था-पनपूर्वकंद्रपदुपरिकलशंप्रतिष्ठाप्यतत्रहैमींगौरींअम्बेअम्बिकेतिमन्त्रेणप्रतिष्ठाप्यपूजयेत् ॥ परितःपिष्टजान्डमरुकाकारान् षोडशतंतुवर्तियुतान्दीपान्प्रज्वालयेत् ॥ प्रातरग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ गौरीं घृत १ तिल २ अक्षता ३ बिल्वदल ४ द्रव्यैःप्रतिद्रव्यमष्टोत्तरशत १०८ संख्याकाहुतिभिःब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ दंपतीसंपूज्यसौभाग्यद्रव्यवस्त्रद-क्षिणाफलतांबूलादिसहितंपक्वान्नपूरितवंशपात्रं उपायनमिदंद्रव्यमितिमन्त्रंपठंस्तद्दत्वाततआचार्यंसंपूज्यरौप्यपात्रेसुवर्णव-र्तिसंयुतंदीपंकृत्वाचार्यायदत्वासोपस्करंपीठं व्रतपूर्तयेगांचदत्वा ताम्रपात्रंपक्वान्नपूरितंवस्त्रादियुतंमात्रेदत्वापरमान्नेनभूदे-वान्संतर्पयेत् ॥ इतिमङ्गलागौरीव्रतम् ॥

अथभौमवारव्रतम् ॥ तिथ्यादिसंकीर्त्य अभीष्टकामनासिद्ध्यर्थंआचरितंयद्भौमवासरव्रतंतत्संपूर्णफलावाप्तयेतदुद्यापनं-करिष्येइतिसंकल्प्यवृताचार्यउक्तविधिनासर्वतोभद्रेकलशप्रतिष्ठांतंकृत्वा तत्रहैमंमङ्गलमुक्तपूजाविधिनासंपूज्य ( ह्रींश्रींमं-गलायनमःअयंमूलमन्त्रः ॥ अंगारकायविद्महेभूमिपुत्रायधीमहि ॥ तन्नोभौमःप्रचोदयात् ॥ इयंगायत्री ॥ अग्निर्मूर्धेतिवैदि-

कोमन्त्रः ) सुवर्णपुष्पैर्विशेषपूजांकृत्वा ॥ मंगलोभूमिपुत्रश्चऋणहर्ताधनप्रदः ॥ स्थिरासनोमहाकायःसर्वकर्मावरोधकः ॥ लोहितोलोहिताक्षश्चसामगानांकृपाकरः ॥ धरात्मजःकुजोभौमोभूतिदोभूमिनंदनः ॥ अंगारकोयमश्चैवसर्वरोगापहारकः ॥ वृष्टिकर्तापहर्ताचसर्वकामफलप्रदः ॥ अत्रप्रधानं ॥ मंगलंगुडाज्यमिश्रिततिलद्रव्येणाष्टोत्तरसहस्रसंख्याकाहुतिभिःमूलमन्त्रेणगायत्र्यावावैदिकेनवाएकविंशतिपरिवारदेवताःतेनैवद्रव्येणाष्टाष्टसंख्याकाहुतिभिःब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ मंगलोभूमिपुत्रश्चेत्याद्याएकविंशतिदेवतास्तासांनाममंत्रेणहोमः ॥ मंगलःप्रतिगृह्णातिमंगलोवैददातिच ॥ मंगलस्तारकोभाभ्यांमंगलायनमोनमः ॥ इतिभौमवारव्रतम् ॥

अथशनैश्चरव्रतम् ॥ तिथ्यादिसंकीर्त्य आत्मनःअखिलदुःखदौर्भाग्यनिरसनपूर्वकंइहजन्मनिजन्मांतरेचअतुलसुखपुत्रपौत्रधनधान्याद्यभिवृद्ध्यर्थंशनैश्चरव्रतंकरिष्ये ॥ शनैश्चरंदीर्घदेहंदंडपाशधरंतथा ॥ पिंगाक्षंस्थूलदेहंचध्यायामिरविनंदनम् ॥ इतिध्यात्वा ॥ शन्नोदेवीरितिवैदिकेन शनैश्चरायनमइतिनाममंत्रेणवापूजयेत् ॥ अत्रप्रधानंशनैश्चरंशमीसमित् १ तिल २ आज्य ३ द्रव्यैःप्रत्येकमष्टोत्तरशतसंख्याहुतिभिः ब्रह्मादिदेवताश्चैकैकयाज्याहुत्या ॥ ततोविप्रंसंपूज्यप्रस्थतिलानांवायनंसदक्षिणंदत्वादेवंविसृजेत् ॥ इतिशनैश्चरव्रतम् ॥

अथशिवलक्षपूजाव्रतम् ॥ तिथ्यादिसंकीर्त्य ममअनेकजन्मार्जितदुरितादिनिवृत्तिपूर्वकंऐहिकपुत्रपौत्रादिविविधसुखप्राप्त्यनंतरशिवलोकनिवासकामनयाकृतंयल्लक्षपूजाविधानंतत्संपूर्णफलावाप्तयेतदुद्यापनाख्यंकर्मकरिष्ये ॥ ततोवृताचार्यः

वेदिकालिंगतोभद्रस्थकलशेधान्यपूरितपूर्णपात्रेमध्येसौवर्णंमहेशंनमःशंभवायचमयोभवेचेतिमन्त्रेणसंस्थाप्य तद्वामभागे-सौवर्णींगौरींचअंबेअम्बिकेतिमंत्रेणसंस्थाप्य पुरतोराजतंवृषभंआशुःशिशानइतिमंत्रेणसंस्थाप्यपरिवारदेवताःस्थापयेत् ॥ पूर्वादिदिक्षु अधर्मं० अवैराग्यं० अनैश्वर्यं० महेश्वरं०॥ तद्बहिः ऐशान्यांईशानवक्राय० पूर्वेतत्पुरुषाय० दक्षिणेअघोरवक्राय० पश्चिमेसद्योजातवक्राय० उत्तरेवामदेववक्राय ॥ पूर्वादिषु वामायै० श्रेष्ठायै० काल्यै० उन्मन्यै० ॥ पुनःपूर्वामारभ्यैशानीपर्यंतं अजैकपदे० अहिर्बुध्न्याय० भवाय० शर्वाय० उमापतये० रुद्राय० पशुपतये० शंभवे० वरदाय० शिवाय० ईश्वराय० ॥ पुनःपूर्वे नंदिकालौ० दक्षिणेभृङ्गिचंडौ० पश्चिमेवृषस्कन्दौ० उत्तरे देशकालौ० ततइंद्रादिलोकेशान् एवंसंस्थाप्यपूजयेत् ॥ प्रधानम् ॥ सोमंमहेशंतिलद्रव्येणायुतसंख्याकाहुतिभिः सहस्रपरिमिताभिर्वा परिवारदेवतामंडलदेवताश्चएकैकयातिलाहुत्याज्याहुत्यावायक्ष्ये ॥ शेषेणेत्यादिसमानं ॥ इतिशिवलक्षव्रतम् ॥

अथविष्णुलक्षपूजाव्रतम् ॥ तिथ्यादिसंकीर्त्यअखिलनानाविधपातकशमनपूर्वकमैहिकामुष्मिकनिरतिशयानंदप्राप्तिद्वारालक्ष्मीनारायणप्रीत्यर्थंतुलस्यादिलक्षव्रतोद्यापनंकरिष्ये ॥ वृताचार्योवेदिकायांसर्वतोभद्रेब्रह्मादिदेवतास्थापनपूर्वकं कलशंप्रतिष्ठाप्य तत्रसौवर्णचतुर्भुजंलक्ष्म्यालिंगितवामांगंनारायणंसहस्रशीर्षेतिमन्त्रेणसंस्थाप्यपुरतःसौवर्णंराजतंवागरुडं ॥ सामध्वनिशरीरस्त्वंवाहनंपरमेष्ठिनः ॥ विषपापहरोनित्यमतःशांतिंप्रयच्छमेइति ॥ ततईशान्यादिविदिक्षुशंखंचक्रंगदां पद्मंच ॥ ततःपरितोलोकेशान्संस्थाप्यपूजयेत् ॥ प्रातरग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ अत्रप्रधानं लक्ष्मीनारायणं ॐन-

मोनारायणायेतिमंत्रेणमधुलाजमिश्रिततिल १ पायस २ घृत ३ चरु ४ द्रव्यचतुष्टयेनप्रतिद्रव्यमष्टोत्तरसहस्राहुतिभि-
रष्टोत्तरशताहुतिभिर्वातथाचतुष्टयेनअयुताहुतिभिःसहस्राहुतिभिर्वासहस्रनाममंत्रैर्यक्ष्येपरिवारदेवतामंडलदेवताश्चैकैकया-
ज्याहुत्यायक्ष्ये ॥ वायनमन्त्रः ॥ जलशायीब्रह्मपितायद्गर्भेसचराचरं ॥ अनंतभोगशयनःप्रीयतांमेजनार्दनः ॥ इतिदत्वा
गांपयस्विनींचदत्वाधिकफलप्राप्तयेसोपस्करांशय्यांचदत्वापंचाधिकान्द्विजान्सदन्नेनभोजयेदिति ॥ एवमेवविधानेनगणे-
शांबिकयोर्नृप ॥ तत्तन्मंत्रेणपूजातुतत्तन्नामसहस्रकैः ॥ गणेशेलड्डुकैर्होमंपंचखाद्यैरथापिवा ॥ पायसेनतुदेव्याश्चतिलैर्वा-
केवलरपि ॥ एवंकृत्वाविधानेनस्वर्गलोकेमहीयते ॥ इतिविष्णुलक्षपूजा ॥

अथलक्षप्रदक्षिणाव्रतम् ॥ तिथ्यादिसंकीर्त्य आत्मनोऽखिलपापरोगपीडानिरसनपूर्वकाभीष्टसिद्धिद्वाराश्रीपरमेश्वरप्री-
त्यर्थंविष्णोरमुकदेवस्येतिवाअमुककामनयाकृताःप्रदक्षिणास्तत्साद्गुण्यार्थंतदुद्यापनंकरिष्यइतिसंकल्प्य ॥ वृताचार्यःसर्वतो-
भद्रेकलशोपरिहैमंकृतप्रदक्षिणंदेवंतत्तन्मंत्रेणसंपूज्यसाष्टांगंप्रणमेत् ॥ प्रधानंदेवंविष्णुंविष्णुगायत्र्याष्टोत्तरशतसंख्ययाचर्वा
१ ज्या २ हुतिभिःब्रह्मादिदेवताःएकैकयाज्याहुत्यायक्ष्ये ॥ इतिलक्षप्रदक्षिणाविधानं ॥ पिप्पलोवृक्षराजेन्द्रोह्यग्निगर्भस्त्वमे
वच ॥ प्रभुर्वनस्पतीनांचपूर्वजन्मनियत्कृतं ॥ अघौघंनाशयक्षिप्रंतवरूपप्रदानतः ॥ ततोद्विजंप्रार्थयेत् ॥ अमुंतरुंगृहाणत्वं-
विष्णुरूपंद्विजोत्तम ॥ स्वीकृत्यदुष्कृतंघोरंक्षिप्रंशांतिंप्रयच्छमे ॥ व्रतपूर्त्यैशुक्लांगांचदद्यादिति ॥ इत्यश्वत्थप्रदक्षिणा ॥

अथलक्षवर्तिव्रतम् ॥ तिथ्यादिसंकीर्त्यात्मनोरजःसंपर्कादिविविधपातकक्षयागम्यागमनकोटिनाशविविधैहिकपुत्रपौत्रा-

अथकर्कटीव्रतम् ॥ देशकालौनिर्दिश्यममसकलसौभाग्यपुत्रपौत्रप्राप्त्यर्थंश्रीउमामहेश्वरप्रीत्यर्थंकर्कटीव्रतंकरिष्ये ॥ वृताचार्यःलिङ्गतोभद्रेत्र्यम्बकेमितिरुद्रं अम्बेअम्बिकइतिउमांचप्रतिष्ठाप्य ॥ ध्यानं ॥ सूर्यकोटिप्रतीकाशंत्रिनेत्रंचंद्रभूषणम् ॥ शूलवज्रगदाकुंभपाशांकुशधरंविभुं ॥ वरदाभयपाणिंचसर्वाभरणभूषितं ॥ उमालिंगितसर्वांगंशांतंध्यायेत्सदाशिवं ॥ षोडशोपचारैःसंपूज्य ॥ कर्कटीवल्लींचसंपूज्य ॥ प्रार्थना ॥ कल्पवल्लिमहाभागेसौभाग्यारोग्यदायिनि ॥ प्रार्थयामिव्रतादौत्वांभर्तुःश्रेयोऽभिवृद्धये ॥ अत्रप्रधानं उमां महेश्वरं च पायस १ आज्य २ तिल ३ द्रव्यैः आवाहनोक्तमन्त्रेणप्रत्येकंप्रतिद्रव्यमष्टोत्तरशतमष्टाविंशतिवासंख्याकाहुतिभिःब्रह्मादिदेवताएकैकयाहुत्याएवंहुत्वा ॥ दानमन्त्रः ॥ कर्कटीनामयावल्लीविधात्रानिर्मितापुरा ॥ तस्याःफलप्रदानेनपूर्णाःसंतुमनोरथाः ॥ गृहाणेमांमहावल्लींसफलांवस्त्रसंयुतां ॥ कल्पितंमेफलंचास्तुव्रतेनममशंकर ॥ पीठंगांचाचार्यायदद्यात् ॥ इतिकर्कटीव्रतम् ॥

अथकूष्मांडीव्रतम् ॥ तिथ्यादिसंकीर्त्यआत्मनःसत्पुत्रप्राप्तिपूर्वकंअतुललक्ष्मीसुखाभिवृद्धिद्वाराब्रह्मसावित्रीप्रीत्यर्थंकूष्मांडीव्रतोद्यापनंकरिष्ये ॥ ततोवृताचार्यःसर्वतोभद्रेहेमप्रतिमयोःब्रह्मसावित्र्यौब्रह्मजज्ञानंगायत्रीमन्त्राभ्यांप्रतिष्ठाप्यपूजयेत् ॥ कूष्मांडीपूजनमन्त्रः । कूष्मांड्यैकामदायिन्यैब्रह्माण्यैतेनमोनमः ॥ नमोस्तुसुखदात्र्यैचसावित्र्यैतेनमोनमः ॥ ब्रह्माणंसावित्रींच घृत १ तिल २ द्रव्याभ्यांप्रत्येकमष्टोत्तरशत १०८ संख्याकाहुतिभिः ब्रह्मादिदेवताश्चैकैकयाज्याहुत्या यक्ष्ये ॥ कूष्मांडीदानमन्त्रः ॥ कूष्मांडींबहुबीजाढ्यांवस्त्रालंकारभूषितां ॥ दक्षिणाकलशोपेतांहैमकूष्मांडसंयुताम् ॥ सा-

वित्रीब्रह्मसंप्रीत्यैगृहाणद्विजसत्तम ॥ सौभाग्यद्रव्ययुतवायनानिउपायनमितिमन्त्रेणयथाशक्तिदद्यात् ॥ ततःपीठंव्रतपूर्तये गांचदत्वाब्राह्मणान्संतर्पयेदिति ॥ इतिकूष्माडीव्रतम् ॥

अथकूष्मांडाष्टकफलदानम् ॥ भविष्ये ॥ ब्रह्महत्यादिपापघ्नंकूष्मांडंशुभसौख्यदं ॥ कार्तिकेरथसप्तम्यांदद्यात्पुण्यदिनेष्वपि ॥ अद्येत्यादि० ममब्रह्महननादिसमस्तपापक्षयपूर्वकबहुपुत्रपौत्रसौभाग्यादिसकलमनोरथावाप्तिकूष्मांडबीजसमसहस्रसंख्याकाब्दब्रह्मलोकनिवासकामोहंकूष्मांडाष्टकफलदानंकेवलैककूष्मांडदानंवाकरिष्ये ॥ गणपतिपूजनंकूष्मांडपूजनंब्राह्मणपूजनंचकरिष्ये ॥ प्रस्थमितव्रीहिगोधूमराश्युपरिकूष्मांडान्संस्थाप्य ॥ ब्रह्मसावित्रीदैवत्यायरुद्रदैवत्यायवाकूष्मांडायनमइतिषोडशोपचारैःसंपूज्य ॥ दानमन्त्रः ॥ ब्रह्महत्यादिपापघ्नंब्रह्मणानिर्मितंपुरा ॥ कूष्मांडंबहुबीजाढ्यंपुत्रपौत्रादिवृद्धिदं ॥ व्रीहीक्षुदंडचुक्रादिधात्रीफलसमन्वितं ॥ फलतांबूलसंयुक्तंघृताक्तंदीपसंयुतं ॥ मुक्ताप्रवालहेमादियुक्तंदत्तंतवद्विज ॥ अनंतपुण्यफलदमतःशांतिंप्रयच्छमे ॥ गोत्रायशर्मणेसुपूजिताय इदंकूष्मांडदानंघृताक्तंतिललिप्तंमुक्ताप्रवालहेमरत्नफलतांबूलवस्त्रदीपाद्यन्यतमयथाशक्तिसोपस्करादियुतंस्वर्णदक्षिणादियुतंतुभ्यमहंसंप्रददेनममइतिद्विजहस्तेदद्यात् ॥ इतिकूष्मांडदानविधिः ॥

अथदशहराव्रतविधिः ॥ देशकालौसंकीर्त्य ममैतज्जन्मजन्मांतरसमुद्भूतत्रिविधकायिकचतुर्विधवाचिकत्रिविधमानसेतिस्कांदोक्तदशविधपापनिरासत्रयस्त्रिंशच्छतपितृुद्धारब्रह्मलोकावाप्त्यादिफलप्राप्त्यर्थं ज्येष्ठमासादिदशयोगपर्वणिअस्यांम-

हानद्यांस्नानंतीर्थपूजनंप्रतिमायांजाह्नवीपूजांतिलादिदानंमूलमन्त्रजपमाज्यहोमंचयथाशक्तिकरिष्ये ॥ यथाविधिस्नानंदशवारंकृत्वा ॥ जलेस्थितोदशवारंसकृद्वावक्ष्यमाणंस्तोत्रंपठित्वावासःपरिधानादिपितृतर्पणांतंनित्यंविधाय तीर्थेपूजांविधाय सर्पिर्मिश्रान्दशप्रसृतिकृष्णतिलान्तीर्थेजलिनाप्रक्षिप्यगुडमिश्रान्सक्तुपिंडान्दशप्रक्षिपेत् ॥ ततोगंगातटे ताम्रेमृन्मयेवास्थापितकलशेसौवर्णादिप्रतिमायांचतुर्भुजांगंगामावाहयेत् ॥ तत्रमन्त्रः ॥ नमोभगवत्यैदशपापहरायैगंगायैनारायण्यैरेवत्यैशिवायैदक्षायैअमृतायैविश्वरूपिण्यैनंदिन्यैतेनमोनमः ॥ द्विजमात्रविषयोविंशत्यक्षरोयथा ॥ ॐनमःशिवायैनारायण्यैदशहरायैगंगायैस्वाहेति ॥ एवंगंगामावाह्य ॥ नारायणंरुद्रंब्रह्माणंसूर्यंभगीरथंहिमाचलंचनाममन्त्रेणतत्रैवावाह्य ॥ उक्तमूलमन्त्रमुच्चार्यश्रीगंगायैनारायणरुद्रब्रह्मसूर्यभगीरथहिमवत्सहितायैआसनंसमर्पयामीत्येवमासनाद्युपचारैःपूजयेत् ॥ दशविधपुष्पैःसंपूज्यदशांगंधूपयित्वादशविधनैवेद्यांतेतांबूलदक्षिणांदत्वादशफलान्यर्पयेत् ॥ दशदीपान्दत्वापूजांसमापयेत् ॥ दशविप्रेभ्यःप्रत्येकंषोडशषोडशमुष्टितिलान्सदक्षिणान्दद्यात् ॥ एवंयवानामपि ॥ ततोयथाशक्त्यलंकृतांगांदद्यात् ॥ मत्स्यकच्छपमंडूकान्सौवर्णान्राजतान्पिष्टमयान्वासंपूज्यतीर्थेक्षिपेत् ॥ एवंदीपान्प्रवाहयेत् ॥ जपहोमचिकीर्षायांपूर्वोक्तमूलमन्त्रस्यपंचसहस्रसंख्याजपदशांशहोमः ॥ यथाशक्तिवाजपहोमौ ॥ तत्रदशहराव्रतांगत्वेनहोमंकरिष्येइतिसंकल्प्य स्थंडिलेग्निंप्रतिष्ठाप्यअन्वाधानेचक्षुषीआज्येनेत्यंतेश्रीगंगांअमुकसंख्ययाआज्येन नारायणादिषट्देवताएकैकयाज्याहुत्याशेषेणस्विष्टकृतमित्यादिप्रोक्षण्यादिषट्पात्राण्यासाद्यआज्यंसंस्कृत्ययथान्वाधानंजुहुयात् ॥ दशब्राह्मणान्सुवासिनी-

श्चभोजयेत् ॥ प्रतिपद्दिनमारभ्यस्नानादिपूजांतोविधिःकार्यइतिकेचित् ॥ इतिदशहराव्रतोद्यापनविधिः ॥ ॥

दशहरास्तोत्रंस्कांदे ॥ ब्रह्मोवाच ॥ नमःशिवायैगंगायैशिवदायैनमोनमः॥नमस्तेरुद्ररूपिण्यैशांकर्यैतेनमोनमः॥१॥ नमस्तेविश्वरूपिण्यैब्रह्ममूर्त्यैनमोनमः ॥ सर्वदेवस्वरूपिण्यैनमोभेषजमूर्तये ॥ २ ॥ सर्वस्यसर्वव्याधीनांभिषक्श्रेष्ठ्यैनमोस्तुते ॥ स्थाणुजंगमसंभूतविषहंत्र्यैनमोनमः ॥ ३ ॥ भोगोपभोगदायिन्यैभोगवत्यैनमोनमः ॥ मंदाकिन्यैनमस्तेस्तुस्वर्गदायैनमोनमः ॥ ४ ॥ नमस्त्रैलोक्यभूषायैजगद्धात्र्यैनमोनमः ॥ नमस्त्रिशुक्लसंस्थायैतेजोवत्यैनमोनमः ॥ ५ ॥ नंदायैलिंगधारिण्यैनारायण्यैनमोनमः ॥ नमस्तेविश्वमुख्यायैरेवत्यैतेनमोनमः ॥ ६ ॥ बृहत्यैतेनमस्तेस्तुलोकधात्र्यैनमोनमः ॥ नमस्तेविश्वामित्रायैनंदिन्यैतेनमोनमः ॥ ७ ॥ पृथ्व्यैशिवामृतायैचसुवृषायैनमोनमः ॥ शांतायैचवसिष्ठायैवरदायैनमोनमः ॥८॥ उस्रायैशिवदोग्ध्र्यैचसंजीविन्यैनमोनमः ॥ ब्रह्मिष्ठायैब्रह्मदायैदुरितघ्न्यैनमोनमः ॥ ९ ॥ प्रणतार्तिप्रभंजिन्यैजगन्मात्रेनमोस्तुते ॥ सर्वापत्प्रतिभक्षायैमंगलायैनमोनमः ॥ १० ॥ शरणागतदीनार्तपरित्राणपरायणे ॥ सर्वस्यार्तिहरेदेविनारायणिनमोस्तुते ॥ ११ ॥ निर्लेपायैदुर्गहंत्र्यैदक्षायैतेनमोनमः ॥ परात्परतरेतुभ्यंनमस्तेमोक्षदेसदा ॥ १२ ॥ गंगेममाग्रतोभूयागंगेमेदेविपृष्ठतः ॥ गंगेमेपार्श्वयोरेहित्वयिगंगेस्तुमेस्थितिः ॥ १३ ॥ आदौमध्येतथाचांतेसर्वतोगांगतेशिवे ॥ त्वमेवमूलप्रकृतिस्त्वंहिनारायणःपरः ॥ १४ ॥ गंगेत्वंपरमात्माचशिवस्तुभ्यंनमःशिवे ॥ यइदंपठतेस्तोत्रंभक्त्यानित्यंनरोपियः ॥ १५ ॥ श्रृणुयाच्छ्रद्धयायुक्तःकायवाक्चित्तसंभवैः ॥ दशधासंस्थितैर्दोषैःसर्वैरेवप्रमुच्यते ॥ १६ ॥ सर्वान्का-

मानवाप्नोतिप्रेत्यब्रह्मणिलीयते ॥ ज्येष्ठेमासिसितेपक्षेदशमीहस्तसंयुता ॥ १७ ॥ तस्यांदशम्यामेतच्चस्तोत्रंगंगाजले-
स्थितः ॥ यःपठेद्दशकृत्वस्तुदरिद्रोवापिचाक्षमः ॥ १८ ॥ सोपितत्फलमाप्नोतिगंगांसंपूज्ययत्नतः ॥ अदत्तानामुपादा-
नंहिंसाचैवविधानतः ॥ १९ ॥ परदारोपसेवाचकायिकंत्रिविधंस्मृतं ॥ पारुष्यमनृतंचैवपैशून्यंचापिसर्वशः ॥ २० ॥
असंबद्धप्रलापश्चवाङ्मयंस्याच्चतुर्विधं ॥ परद्रव्येष्वभिध्यानंमनसानिष्टचिंतनं ॥ २१ ॥ वितथाभिनिवेशश्चमानसंत्रिवि-
धंस्मृतं ॥ एतानिदशपापानिहरत्वंममजाह्नवि ॥ दशपापहरायस्मात्तस्माद्दशहरास्मृता ॥ २२ ॥ त्रयस्त्रिंशच्छतान्पूर्वा-
न्पितॄनथपितामहान् । उद्धरत्येवसंसारान्मन्त्रेणानेनपूजिता ॥ २३ ॥ नमोभगवत्यैदशपापहरायैगंगायैनारायण्यैरेवत्यै-
शिवायैदक्षायैअमृतायैविश्वरूपिण्यैनंदिन्यैतेनमोनमः ॥ सितमकरनिषण्णांशुभ्रवर्णांत्रिनेत्रांकरधृतकलशोद्यत्सोत्पलाम-
त्यभीष्टां ॥ विधिहरिहरमौलीसेंदुकोटीरजुष्टांकलितसितदुकूलांजाह्नवींतांनमामि ॥ २४ ॥ आदावादिपितामहस्यनिग-
मव्यापारपात्रेजलंपश्चात्पन्नगशायिनोभगवतःपादोदकंपावनं ॥ भूयःशंभुजटाविभूषणमणिर्जह्नोर्महर्षेरियंकन्याकल्मषना-
शिनीभगवतीभागीरथीदृश्यते ॥ २५ ॥ गंगागंगेतियोब्रूयाद्योजनानांशतैरपि ॥ मुच्यतेसर्वपापेभ्योविष्णुलोकंसगच्छति ॥
इतिस्तोत्रेणस्तुत्वाहोमांतेप्रतिमोत्तरपूजांकृत्वाविसृज्यआचार्यायमूलमन्त्रेणदद्यात् ॥ इतिदशहराविधिः ॥

अथमलमासव्रतम् ॥ देशकालौनिर्दिश्यममसकलदुःखदारिद्र्यनाशपुत्रपौत्रैश्वर्यधर्मार्थकाममोक्षप्राप्तिद्वाराश्रीजनार्दन-
प्रीत्यर्थंकृतस्याचरणीयस्यचमलमासव्रतस्यसांगतार्थंव्रतोद्यापनंकरिष्ये ॥ गण० स्वस्ति० ॥ वृताचार्यःसर्वतोभद्रोपरिपरि-

तोद्वादशमध्येएकंएवंत्रयोदशकलशान्महीद्यौरित्याद्यावाहितेमध्यकलशेसुवर्णमयंलक्ष्मीयुतजनार्दनंइदंविष्णुरित्यावाह्यपू-
जयेत् ॥ प्रातरग्निंप्रतिष्ठाप्यअत्रप्रधानंलक्ष्मीजनार्दनंअतोदेवाइतिऋक्षट्केनसमित्तिलाज्यचरुपायसैः प्रतिद्रव्यमष्टोत्तरसह-
स्राहुतिभिःब्रह्मादीनेकैकयाज्याहुत्या ॥ ततोवायनंकांस्यपात्रेनिधायदद्यात् ॥ विप्रंसंपूज्य ॥ अधिमासेतुसंप्राप्तेश्रीजनार्द-
नतुष्टये ॥ नरकोत्तारणार्थायमयादानंप्रदीयते ॥ त्रयस्त्रिंशदपूपांश्चशर्कराघृतसंयुतान् ॥ सदक्षिणानहंतुभ्यंकांस्यपात्रे
निधायच ॥ दास्येजनार्दनप्रीत्यैगृहाणत्वंद्विजोत्तम ॥ मलमासस्तुमासानांमलिनःपापसंभवः ॥ तत्पापस्यविशुद्ध्यर्थंवाय-
नंप्रददाम्यहं ॥ इदंत्रयस्त्रिंशत्संख्याकापूपवायनदानंसकांस्यपात्रंतुभ्यंसंप्रददे ॥ ततोयथाविभवमाचार्यायान्येभ्यश्चतिल-
पात्रंघृतपात्रंउपानहौशय्यांचदत्वापीठंगांचदत्वाब्राह्मणभोजनंसंकल्प्यकर्मेश्वरार्पणंकुर्यात् ॥ इतिमलमासव्रतोद्यापनम् ॥

अथकोकिलाव्रतम् ॥ ममेहजन्मनिजन्मांतरेचसर्वपापक्षयपूर्वकंपुत्रपौत्रावैधव्यनिःसापत्न्यलक्ष्मीसौभाग्यरूपलावण्या-
द्यभिवृद्धिद्वारागौरीरूपाकोकिलाप्रीत्यर्थंकोकिलाव्रतंकरिष्यइतिसंकल्प्यकोकिलांपूजयेत् ॥ चूतचंपकवृक्षस्थांस्वर्णपक्षा-
दिसंयुताम् ॥ चिंतयेत्पार्वतींदेवींकोकिलारूपधारिणीम् ॥ अर्घ्यंगृहाणदेवेशिवांछितार्थप्रदायिनि ॥ आषाढस्याऽसिते-
पक्षेमेघवर्णेहरप्रिये ॥ कोकिलेत्वंजगन्मातर्गृहाणार्घ्यंनमोस्तुते ॥ वृताचार्यःएकलिंगोद्भवेभद्रेब्रह्मादिदेवताःसंस्थाप्य
तत्रकलशंप्रतिष्ठाप्यतदुपरिहैमींकोकिलांश्रीश्चेतिमन्त्रेणप्रतिष्ठाप्य॥ अत्रप्रधानं कोकिलारूपिणींगौरींश्रीश्चतेतिमन्त्रेणतिल १
चंपकपुष्प २ तंडुल ३ पायस ४ आज्य ५ द्रव्यैःप्रत्येकमष्टोत्तरशत १०८ संख्याकाहुतिभिः ॥ तथाव्याहृतिमन्त्रेणबि-

ल्वपत्रैःशतत्रय ३०० परिमिताहुतिभिः ॥ ब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ वायनंदद्यात् ॥ तत्रमन्त्रः ॥ सोपस्करंद्विजश्रेष्ठवायनंव्रतपूर्तये ॥ ददामितेगृहाणेदंकोकिलाप्रीयतामिति ॥ आचार्यायपीठंव्रतपूर्तयेगांचदत्वादक्षिणाभोजनादिभिस्तोषयेत् ॥ इतिकोकिलाव्रतम् ॥

अथार्धोदयव्रतम् ॥ अमार्कश्रवणेपातेयुक्ताचेत्पौषमाघयोः ॥ अर्धोदयःसविज्ञेयःकोटिसूर्यग्रहैःसमः ( किंचिन्न्यूनं महोदयः ) ॥ दिवैवयोगःशस्तोयंनतुरात्रौकदाचन ॥ इति ॥ तिथ्यादिसंकीर्त्य आत्मनःअखिलपापक्षयपूर्वकधर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थं ( ब्रह्मविष्णुशिवप्रीत्यर्थं ) अर्धोदयव्रतंकरिष्ये ॥ दर्भास्तृतशुद्धभूमौ शतत्रयद्रोणपरिमिततिलानांपर्वतंकृत्वायथाशक्तिवातत्रपलाधिकंसुवर्णस्य ब्रह्मविष्णुशिवानांप्रतिमात्रयंकृत्वा ब्रह्मजज्ञानं इदंविष्णुः त्र्यम्बकं इतिमन्त्रैःप्रतिष्ठाप्यपूजयेत् ॥ परितोलोकेशांस्तत्तन्मन्त्रैरावाहयेत् ॥ प्रार्थना ॥ नमोविश्वसृजेतुभ्यंसत्यायपरमात्मने ॥ देवायदेवपतयेयज्ञानांपतयेनमः ॥ नारायणजगन्नाथनमस्तेगरुडध्वज ॥ पीतांबरनमस्तुभ्यंजनार्दन नमोस्तुते ॥ महेश्वरमहेशाननमस्तेत्रिपुरांतक ॥ जीमूतकेशायनमोनमस्तेवृषभध्वज ॥ ब्रह्मविष्णुमहेशानाःकर्मणांफलहेतवः ॥ भक्त्यामयाकृतांपूजांगृह्णीध्वंजगदीश्वराः ॥ इतिसंप्रार्थ्य वृताचार्योग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ ब्रह्मविष्णुमहेशान्घृताक्ततिलद्रव्येणप्रतिदैवतं सहस्रमष्टोत्तरंवासंख्याकाहुतिभिः लोकपालानेकैकयाज्याहुत्यायक्ष्ये ॥ एवंहुत्वातिलपर्वतंब्राह्मणायदद्यात् ॥ तिलपर्वतमध्यस्थाब्रह्मविष्णुमहेश्वराः ॥ दहंतुपातकंसर्वंयच्छंतुममसद्गतिम् ॥ ततोगोप्रदानं ॥

भविष्येतुब्रह्मणःपलाशसमिच्चरुतिलाज्यानिविष्णोःअश्वत्थसमित्तिलपायसान् शंभोःचर्वाज्यव्रीहयः ॥ कांस्यपात्रदानंकेवलंद्रव्यद्वारावागोप्रदानं ॥ इत्यर्धोदयव्रतम् ॥

अथसमुद्रस्नानविधिः ॥ आचम्यप्राणानायम्यदेशकालौसंकीर्त्यममकायिकवाचिकमानसिकज्ञाताज्ञातादिसकलपातकनिरासार्थंअद्यामुकपर्वनिमित्तंसमुद्रस्नानंकरिष्ये इतिसंकल्प्य पाषाणंसिकतापिंडंवाहस्तेगृहीत्वा ॥ पिप्पलादसमुत्पन्नेकृत्येलोकभयंकरे ॥ पाषाणस्तेमयादत्तआहारार्थंप्रकल्प्यतां ॥ इतिसमुद्रेप्रक्षिप्यप्रार्थयेत् ॥ विश्वाचीचघृताचीचविश्वयोनेविशांपते ॥ सांनिध्यंकुरुमेदेवसागरेलवणांभसि ॥ नमस्तेविश्वगुप्तायनमोविष्णोअपांपते ॥ नमोजलधिरूपायनदीनांपतयेनमः ॥ समस्तजगदाधारशंखचक्रगदाधर ॥ देवदेहिममानुज्ञांतवतीर्थनिषेवणे ॥ त्रितत्वात्मकमीशानंनमोविष्णुमुमापतिं ॥ सांनिध्यंकुरुदेवेशसमुद्रेलवणांभसि ॥ अग्निश्चयोनिरनिलश्चदेहोरेतोधाविष्णुरमृतस्यनाभिः ॥ एतद्ब्रुवन्पांडवसत्यवाक्यंततोऽवगाहेतपतिंनदीनां ॥ इतिपठित्वानित्यस्नानविधिवत्स्नात्वाअघमर्षणस्नानांगतर्पणंकृत्वासमुद्रायार्घ्यं ॥ सर्वदोभगवान्श्रीमान्सर्वरत्नाकरोयतः ॥ सर्वरत्नप्रधानस्त्वंगृहाणार्घ्यंमहोदधेइत्यर्घ्यंदद्यात् ॥ ततस्तर्पणं ॥ यथा ॥ पिप्पलादंतर्पयामि विकर्णं कृतांतं जीवकेश्वरं वसिष्ठं वामदेवं पराशरं उमापतिं वाल्मीकिं नारदं वालखिल्यान् नलं नीलं गवाक्षं गवयं गंधमादनं जांबवंतं हनूमंतं सुग्रीवं अंगदं मैंदं द्विविदं वृषभं रामं लक्ष्मणं यशस्विनीं सीतां तर्पयामि ॥ एवंजलमध्येतर्पणंकृत्वा ॥ आब्रह्मस्तंबपर्यंतंयत्किंचित्सचराचरं ॥ मयादत्तेनतोयेनतृप्तिमेवाभिगच्छतु ॥ इत्यंजलिंदद्यात् ॥

अथपार्थिवलिंगोद्यापनम् ॥ तिथ्यादिसंकीर्त्याऽमुककामनामुद्दिश्यकृतानांपार्थिवलिंगानांसंपूर्णफलावाप्तयेतदुद्यापनं करिष्येइतिसंकल्प्य ॥ वृताचार्यःसर्षपादिनाभूतान्युत्सार्यद्वारपूजांकुर्यात् ॥ सदाशिवमंडपायनमःप्राग्द्वारपार्श्वयोः नंदिनेनमः महाकालायनमः चिच्छक्त्यै० मायाशक्त्यै० द्वारश्रियै० वास्तुपुरुषाय० ॥ दक्षिणपार्श्वयोः गणेशाय० वृषभाय० चिच्छक्त्यादिपूर्ववत् ॥ पश्चिमद्वारपार्श्वयोः भृंगिणे० स्कंदायन० शक्त्यादिपूर्ववत् ॥ उत्तरद्वारपार्श्वयोः रिटिने० चंडीश्वराय० शक्त्यादिपूर्ववत् ॥ ततः लिंगतोभद्रेब्रह्मादिदेवतास्थापनपूर्वंककलशंप्रतिष्ठाप्यतदुपरिशिवंतत्पार्श्वतःगौरींषण्मुखंगणेशंचावाह्यपूजयेत् ॥ अत्रप्रधानंसोमंशिवंकृतलिंगद्वादशांशेनशतांशेनवा पायस १ मधु २ शर्करा ३ आज्य ४ तिल ५ अक्षत ६ बिल्वपत्र ७ शतपत्रपत्र ८ द्रव्याष्टकेन केवलपायसेनवा नमःशंभवायचेतिमन्त्रेण पंचाक्षरेणवा तथागौरींषण्मुखंगणेशंचउक्तद्रव्यैःप्रतिद्रव्यंदशदशाहुतिभिःवृषभंलोकेशान् ब्रह्मादिदेवताश्चदशदशतिलाहुतिभिः द्वारदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ इतिशैवागमोक्तंपार्थिवलिङ्गव्रतोद्यापनम् ॥

व्रतोद्यापनानुक्तौविधिः ॥ नन्दीपुराणे—यत्रचोद्यापनंनोक्तंव्रतानुगुणतश्चरेत् ॥ वित्तानुसारतोदद्यादनुक्तोद्यापनेव्रते ॥ गां चैव काञ्चनं दद्याद्व्रतस्य परिपूर्तये ॥ गौः प्रत्यक्षा । तन्मूल्यं वा सुवर्णं रौप्यं वेति ॥ उक्तोद्यापने तु— आदौ मध्ये तथा चान्ते व्रतस्योद्यापनं भवेदिति ॥ इतिव्रतोद्यापनानुक्तौविधिः ॥

व्रतभङ्गे संपूर्णताविधिः ॥ किंचिद्व्यङ्गं प्रमादेन यद्व्रतं व्रतिनां स्थितम् । तत्संपूर्णं भवेत्सर्वं विधिनानेन पाण्डव ॥ यस्य व्रतस्य यो देवस्तद्रूपं हेमनिर्मितम् ॥ द्विभुजं पङ्कजारूढं कार्यं प्रहसिताननम् ॥ देशकालौ स्मृत्वा ॥ प्रमादाप्रमादसंजातअमुकव्रतभङ्गदोषपरिहारपूर्वकतद्व्रतसंपूर्णतासिद्ध्यर्थंअमुकदेवप्रीत्यर्थं भविष्योत्तरविधिनातद्व्रतसंपूर्णताविधानं-करिष्ये ॥ गणेशपूजनं । स्वस्तिपुण्याहवाचनं ॥ देवप्रतिष्ठा । अष्टदलोपरिकलशस्थापनं । तदुपरिपूर्णपात्रेउक्तलक्षणतत्तद्व्रतस्थापनं । षोडशोपचारैः पूजनं । विशेषार्घ्यदानं ॥ तन्मन्त्रः । उपवासस्य दानस्य प्रायश्चित्तं कृतं मया । शरणं च प्रपन्नास्मान्कुरुष्वाद्य दयां पुनः ॥ प्रसन्नोभवभीतस्यभिन्नचर्यव्रतस्यच । कुरुप्रसादंसंपूर्णंव्रतंसंजायतां मम ॥ इति ॥ ततोदेवस्यसमंतात् पूर्वादिदशदिक्षुदशदिक्पालेभ्यःपूजनपूर्वकंसदीपबलिदानं॥ ततोदेवस्याङ्गपूजा ॥ पादौ । जानुनी । कटिं । शिरः । वक्षः । कुक्षिं । हृदयं । पृष्ठं । वाचं । चक्षुषी । शिखां । गंधाक्षतपुष्पैःसंपूजयामि ॥ क्षमापनं ॥ पूजितस्त्वंयथाशक्त्यानमस्तेस्तुसुरोत्तम । ऐहिकामुष्मिकीदेवकार्यसिद्धिर्ममप्रभो ॥ इति । विप्रंसंपूज्य तस्मैप्रतिमादानं ॥ तत्रदाताउदङ्मुखः । प्रतिग्रहीतापूर्वाभिमुखः ॥ दानमन्त्रः—इदंव्रतंमयाखंडंकृतमासीत्पुराद्विज । तत्सर्वंपूर्णमेवास्तुतवमूर्तिप्रदानतः ॥ प्रतिग्रहमन्त्रः—संपूर्णंस्यात्प्रसादेन देवदेवस्यशार्ङ्गिणः । ब्राह्मणायत्प्रभाषन्तेतन्मन्यन्तेदिवौकसः ॥ सर्वदेवमयाविप्रानतद्वचनमन्यथा । व्यासवाल्मीकवचनात्पराशरवसिष्ठयोः ॥ गर्गगौतमधौम्यात्रिवसिष्ठांगिरसांतथा । वचनान्नारदादीनांपूर्णंभवतुतेव्रतमिति ॥ इतिव्रतभङ्गेसंपूर्णताविधानम् ॥

अथप्रबोधोत्सवतुलसीविवाहौ ॥ देशकालौसंकीर्त्यश्रीदामोदरप्रीत्यर्थंप्रबोधोत्सवंसंक्षेपतस्तुलसीविवाहविधिंचतंत्रे-
णकरिष्ये ॥ तदंगतयापुरुषसूक्तेनविधिनाषोडशोपचारैस्तंत्रेण श्रीमहाविष्णुपूजांतुलसीपूजांचकरिष्ये ॥ न्यासादिवि-
धाय श्रीविष्णुंतुलसींचध्यात्वासहस्रशीर्षेतिश्रीमहाविष्णुंतुलसींचावाह्य पुरुषएवेत्यादिभिःश्रीमहाविष्णवेदामोदराय-
श्रीदेव्यैतुलस्यैचनमआसनमित्यादिस्नानांतेमंगलवाद्यैःसुगंधितैलहरिद्राभ्यांनागवल्लीदलगृहीताभ्यांकनिकृददित्युष्णोद-
केनच मंगलस्नानंविष्णवेतुलस्यैचसुवासिनीभिःकारयित्वास्वयंवादत्त्वापंचामृतस्नानंसमर्प्यशुद्धोदकेनाभिषिच्य वस्त्रयज्ञो-
पवीतचंदनंदत्वातुलस्यैहरिद्राकुंकुमकंठसूत्रमंगलालंकारान्दत्वामंत्रपुष्पांतपूजांसमाप्यघंटादिवाद्यघोषेणदेवंप्रबोधयेत् ॥
तत्रमंत्राः ॥ इदंविष्णुर्वि० ॥ योजागारेतितुआचारप्राप्तः ॥ ब्रह्मेंद्ररुद्राग्निकुबेरसूर्यसोमादिभिर्वंदितवंदनीय ॥ बुध्य-
स्वदेवेशजगन्निवासमंत्रप्रभावेणसुखेनदेव ॥ इयंचद्वादशीदेवप्रबोधार्थंविनिर्मिता ॥ त्वयैवसर्वलोकानांहितार्थंशेषशा-
यिना ॥ उत्तिष्ठोत्तिष्ठगोविंदत्यजनिद्रांजगत्पते ॥ त्वयिसुप्तेजगत्सुप्तमुत्थितेचोत्थितंजगत् ॥ एवमुत्थाप्य ॥ चरणं-
पवित्रं विततं पुराणं येनपूतस्तरति दुष्कृतानि । तेन पवित्रेण शुद्धेन पूता अतिपाप्मानमरातिंतरेम । लोकस्यद्वारमर्चि-
मत्पवित्रं । ज्योतिष्मद्भ्राजमानंमहस्वत् । अमृतस्यधाराबहुधादोहमानं । शरणंनोलोकेसुधितांदधातु ॥ गतामेघावि-
यच्चैवनिर्मलंनिर्मलादिशः ॥ शारदानिचपुष्पाणिगृहाणममकेशवेत्यादिमंत्राभ्यांपुष्पांजलिंदद्यात् ॥ अथाचारात्तुलसीसं-
मुखांश्रीकृष्णप्रतिमांकृत्वामध्येंतःपटंधृत्वामंगलाष्टकपद्यानिपठित्वाअंतःपटंविसृज्याक्षताप्रक्षेपंकृत्वादामोदरहस्तेतुलसी-

दानंकुर्यात् ॥ देवींकनकसंपन्नांकनकाभरणैर्युताम् ॥ दास्यामिविष्णवेतुभ्यंब्रह्मलोकजिगीषया ॥ मयासंवर्धितांयथाश-
क्त्यलंकृतामिमांतुलसींदेवींदामोदरायश्रीधरायवरायतुभ्यमहंसंप्रददे ॥ देवपुरतःसाक्षतजलंक्षिपेत् ॥ श्रीमहाविष्णुः
प्रीयतामित्युक्त्वाइमांदेवींप्रतिगृह्णातुभवान्इतिवदेत् ॥ ततोदेवहस्तस्पर्शंतुलस्याःकृत्वा ॥ ॐकोदादितिद्यौस्त्वाददातु-
पृथिवीत्वाप्रतिगृह्णातु ॥ इतिचमंत्रमन्येनवाचयेत् ॥ यजमानः ॥ त्वंदेविमेअग्रतोभूयास्तुलसीदेविपार्श्वतः ॥ देवित्वंपृष्ठतोभू-
यास्त्वद्दानान्मोक्षमाप्नुयाम् ॥ दानस्यप्रतिष्ठासिद्ध्यर्थमिमांदक्षिणांसंप्रददे ॥ देवपुरतोदक्षिणामर्पयेत् ॥ ततःस्वस्तिनइंद्रो०
शंनइंद्राग्नीइत्यादिस्वस्वशाखोक्तानिशांतिसूक्तानिविष्णुसूक्तानिचपठेयुः ॥ तुलसीयुतायविष्णवेमहानीराजनंकृत्वामंत्रपुष्पं
दत्वासपत्नीकःसगोत्रजःसामात्योयजमानश्चतस्रःप्रदक्षिणाःकुर्वीत ॥ ब्राह्मणेभ्योदक्षिणांदत्वायथाशक्तिब्राह्मणभोजनंसं-
कल्प्यकर्मेश्वरार्पणंकुर्यात् ॥ इतिसंक्षेपतःप्रबोधोत्सवतुलसीविवाहौ ॥

अथतुलसीविवाहः ॥ सचनवम्यादिदिनत्रयेएकादश्यादिपूर्णिमांतेयत्रक्वापिदिनेकार्तिकशुक्लांतर्गतविवाहनक्षत्रेपुत्रा-
विधेयः। अथवापारणाहे प्रबोधोत्सवकर्मणासह तंत्रतयैवसर्वत्रैवानुष्ठीयमानत्वात्कार्तिकशुक्लद्वादश्यांकार्यः। तत्रादौतुल-
स्याआलवालपरितो विवाहमंडपवन्मंडपंकृत्वा विवाहवेदिवत्तुलसीपुरतोवेदिंचकुर्यात् ॥ अथप्रयोगः। तत्रादौविनायक-
शांतिर्ग्रहयज्ञश्चकार्यः । विवाहपूर्वदिनेश्रीराधादामोदरयोःसुगंधतैलहरिद्रालेपनादिमंगलस्नानादिकं ॥ आचमनादि-
देशकालसंकीर्तनांते । ममाखिलविविधपातकशमनपूर्वकाभीष्टसिद्धिद्वाराश्रीराधादामोदरदेवताप्रीत्यर्थंतुलसीविवाहंक-

रिष्ये । इतिसंकल्प्य । गणेशपूजनंस्वस्तिपुण्याहवाचनंअविघ्नपूजनंमंडपस्थापनंमातृकापूजनंवसोर्धारापूजनंआयुष्यमंत्रजपं-नांदीश्राद्धंचकृत्वा । आचार्यादीनृत्विजोवृत्वातान्यथाविभवंसंपूजयेत् । ततोवेद्यांसर्वतोभद्रेब्रह्मादीनावाह्य संपूज्य-तत्रयथाविधिस्थापितकलशेपूर्णपात्रोपरिहैमींदामोदरप्रतिमांरौप्यमयींतुलसींचअग्न्युत्तारणप्राणप्रतिष्ठापूर्वकंयथाविधिसं-पूज्याधिवासयेत् ॥ ॥ ततोवाग्दानं ॥ आचमनं । प्राणायामः ॥ देशकालौसंकीर्त्य । तुलसीविवाहांगभूतंवाग्दानं-करिष्ये । इतिसंकल्प्यगणपतिवरुणपूजनं । ततस्तुलसींकन्यांसंप्रदायागतमंत्रैःकुंकुमाक्षतवस्त्रयुग्मभूषणफलतांबूलादिभिः-पूजयेत् । ततआचार्यपूजनं । ततोदाताहरिद्राखंडयुतपंचदृढपूगफलानिगंधाक्षतसहितानिगृहीत्वा । व्याघ्रपदगोत्रो-त्पन्नायवैय्याघ्रपद १ गार्ग्य २ वासिष्ठ ३ तित्रिप्रवरायदेवमीढवर्मणःप्रपौत्रायशूरसेनवर्मणःपौत्रायवसुदेववर्मणःपुत्राय अनेककोटिब्रह्मांडनायकायदामोदरायश्रीधरायवराय । आलंबायनगोत्रांआलंबायनदेवलगौतमेतित्रिप्रवरांविश्वकर्मणः-प्रपौत्रींप्रजापतेःपौत्रींईश्वरस्यपुत्रींतुलसींकन्यांज्योतिर्विदादिष्टमुहूर्तेदास्येइति वाचासंप्रददेइत्युक्त्वाॐयदाबध्नन्नितिमंत्रे-णदेववस्त्रप्रांतेबध्वाग्रंथिंचंदनेनार्चयेत् । ततो ॥ वाचावृंदामयादत्ताआत्मार्थंस्वीकृतात्वया ॥ वृंदावलोकनविधौनिश्चित-स्त्वंसुखीभव । इतिप्रार्थयेत् ॥ ततोब्राह्मणाः । शिवाआपःसंत्वित्यादि० । शचीपूजनं । बायनदानं । नीराजनं । ब्राह्मणानांगंधतांबूलादिभिःपूजनं । भूयसीदानं । आशीर्ग्रहणं । गणपतिवरुणविसर्जनं ॥ इतिवाग्दानं ॥ ॥

अथद्वादश्यांदेवस्यप्रबोधोत्सवः ॥ सायंकालेऋत्विक्पुरंध्रीसहितोयजमानः मंगलगीतवाद्यघोषपुरःसरंदेवसमीपमागत्यदे-

वंषोडशोपचारैःसंपूज्य । शंखघंटाभेरीवीणामृदंगादिवाद्यघोषेणनृत्यगीतादिपुरःसरं वैदिकपौराणमंत्रैर्देवंप्रबोधयेत् ।
तत्रमंत्राः ॥ ॐ इदंविष्णुः० ॐ उत्तिष्ठब्रह्मणस्पते० ॥ उत्तिष्ठोत्तिष्ठशंखघ्नउत्तिष्ठांभोधितारक ॥ कूर्मरूपधरोत्तिष्ठत्रै-
लोक्येमंगलंकुरु ॥ १ ॥ उत्तिष्ठोत्तिष्ठवाराहदंष्ट्रोद्धृतवसुंधर ॥ हिरण्याक्षप्राणघातिन्त्रैलो० ॥ २ ॥ हिरण्यकशिपुघ्नत्वं
प्रह्लादानंदकारक ॥ लक्ष्मीपतेसमुत्तिष्ठत्रैलो० ॥ ३ ॥ उत्तिष्ठबलिदर्पघ्नदेवेंद्रपददायक ॥ उत्तिष्ठादितिपुत्रत्वंत्रैलो० ॥४॥
उत्तिष्ठहैहयाधीशसमस्तकुलनाशन ॥ रेणुकाघ्नत्वमुत्तिष्ठत्रैलो० ॥ ५ ॥ उत्तिष्ठरक्षोदलनअयोध्यास्वर्गदायक ॥ ससुद्रसे-
तुकर्तात्वंत्रैलो० ॥ ६ ॥ उत्तिष्ठकंसहरणमदघूर्णितलोचन ॥ उत्तिष्ठहलपाणेत्वंत्रैलो० ॥ ७ ॥ उत्तिष्ठत्वंगयावा-
सिन्शक्रकीर्तिप्रवर्धक ॥ उत्तिष्ठपद्मासनगत्रैलो० ॥ ८ ॥ उत्तिष्ठम्लेच्छनिवहसंहारकारकप्रभो ॥ अश्ववाहयुगांतेत्वंत्रैलो०
॥ ९ ॥ उत्तिष्ठोत्तिष्ठगोविंदउत्तिष्ठगरुडध्वज ॥ उत्तिष्ठकमलाकांतत्रैलो० ॥ १० ॥ ब्रह्मेंद्ररुद्राग्निकुबेरसूर्यसोमादिभिर्वं-
दितवंदनीय ॥ बुध्यस्वदेवेशजगन्निवासमंत्रप्रभावेणसुखेनदेव ॥ ११ ॥ इयंतुद्वादशीदेवप्रबोधार्थंविनिर्मिता ॥ त्वयै
वसर्वलोकानांहितार्थंशेषशायिना ॥ उत्तिष्ठोत्तिष्ठगोविंदत्यजनिद्रांजगत्पते ॥ त्वयिसुप्तेजगत्सुप्तमुत्थितेचोत्थितंजगत्
॥ १३ ॥ एभिर्मंत्रैर्देवमुत्थाप्य ॥ गतामेघावियच्चैवनिर्मलंनिर्मलादिशः ॥ शारदानिचपुष्पाणिगृहाणममकेशव ॥ १४ ॥
इतिपुष्पांजलिंदद्यात् ॥ इतिदेवस्यप्रबोधोत्सवः ॥ ततोदेवस्यसीमांतपूजांकृत्वा देवंवाहनारूढंकृत्वामंगलवाद्यघोषपुरः-
सरंविवाहमंडपमानयेत् ॥ ॥ ततोमधुपर्कः ॥ आगतंदामोदरंश्रीधरंवरंमधुपर्केणार्चयिष्यइत्यादि ॐअलंकरणम०

दिभूयादित्यंतंकृत्वा । विवाहवेद्यांतुलसीविवाहांगभूतंपंचभूसंस्कारपूर्वकमग्निप्रतिष्ठापनंकरिष्येइतिसंकल्प्य । अग्निं-प्रतिष्ठाप्य । गोधूलसमयेअंतःपटंधृत्वा । मंगलाष्टकानिपठेयुः । मनोजूतिरितिप्रतिष्ठा । श्रीराधादामोदरश्रीधरयोर-विच्छिन्नाप्रीतिरस्तु ॥ अथकुमार्यावासःपरिधानादिकन्यादानसंकल्पः । ममजन्मप्रभृत्युपार्जितकायिकवाचिकमान-सिकत्रिविधपापक्षयपूर्वकसमस्तपितॄणांनिरतिशयानंदब्रह्मलोकावाप्त्यादिकन्यादानफलपुत्रपौत्राद्यनवच्छिन्नसंततिलक्ष्मी-प्राप्त्यादितुलाकल्पोक्तफलसिद्धिएकविंशतिपुरुषोद्धरणवैकुंठभुवनगमनतत्रत्यविपुलभोगोपभुक्त्यनंतरंविष्णुसायुज्यताप्रा-प्त्यर्थंश्रीपरमेश्वरप्रीतये अनेककोटिब्रह्मांडनायकायदामोदरायश्रीधरायवरायतुलसीकन्यादानमहंकरिष्ये ॥ वरहस्तेशि-वाआपःसंत्वित्यादि० । वरस्यगोत्रोच्चारः । व्याघ्रपदगोत्रस्यवैय्याघ्रपद १ गार्ग्य २ वासिष्ठ ३ तित्रिप्रवरस्यदेव-मीढवर्मणःप्रपौत्राय । व्याघ्रपदगो० शूरसेनवर्मणःपौत्राय । व्याघ्रप० वसुदेववर्मणःपुत्राय ॥ ॥ आलंबायनगो-त्रस्य । आलंबायन १ दैवल २ गौतमे ३ तित्रिप्रवरस्यविश्वकर्मणःप्रपौत्रीं । आलंबा० प्रजापतेःपौत्रीं । आलंबा० ईश्वरस्यपुत्रीं ॥ एवंत्रिरुच्चार्य । व्याघ्रपदगोत्रायवैयाघ्रपदगार्ग्यवासिष्ठेतित्रिप्रवरायअनेककोटिब्रह्मांडनायकायदामो-दरायश्रीधरायवराय । आलंबायनगोत्रांआलंबायनदैवलगौतमेतित्रिप्रवरांमयासंवर्द्धितांतुलसीनाम्नींइमांकन्यांयथाशक्ति-सालंकृतामित्यादि० फलप्राप्तिकामःअनेककोटिब्रह्मांडनायकायदामोदराश्रीधरावरायभार्यात्वेनतुभ्यमहंसंप्रददे ॥ इत्यु-क्त्वा । सकुशजलंकन्यादक्षिणहस्तंवरदक्षिणहस्तेदद्यात् ॥ ॐद्यौस्त्वाद० । कृतैतत्क० इमांदक्षिणांतुभ्य० ॥ ॐकोदात्क-

स्वा० सयःकामयेत० जुहोति ॥ ॥ वृंदेममाग्रतोभूयावृंदेमेदेविपार्श्वयोः ॥ वृंदेमेपृष्ठतोभूयास्त्वद्दानान्मोक्षमाप्नुयां ॥ वृंदां-
कनकसंपन्नांकनकाभरणैर्युतां ॥ दास्यामिविष्णवेतुभ्यंब्रह्मलोकजिगीषया ॥ पृथिव्या० इमांवृंदांप्रदास्यामिपितृणांतारणा-
यच ॥ ममशुद्धगृहेजातापालितावत्सरत्रयं । तुभ्यंकृष्णमयादत्ताधर्मज्ञानविवर्धिनी ॥ कंकणगणपतिपूजनं ॥ कंकणबंधनं ।
शिष्टाचारप्राप्तंगौरीहरपूजनपूर्वकमाम्रसेचनं । ततोविवाहवेद्यांगत्वा । ब्रह्मोपवेशनाद्याज्यभागांते । ॐनमोभगवतेवासुदे-
वायस्वाहा । इतिमंत्रेण । ॐनमोनारायणायस्वाहा । इतिमंत्रेणवा । आज्येननवाहुतीर्जुहुयात् । ततोमहाव्याहृतयः ।
सर्वप्रायश्चित्तं । राष्ट्रभृद्धोमः । जयाहोमः । अभ्यातानहोमः । ॐकेशवायनमःस्वाहा । इत्यादिचतुर्विंशतिनामभि-
र्लाजहोमः । सर्वत्रयथालिंगंत्यागः । नाश्मारोहणादि । सप्तपदीस्थानेयजमानेनशांतिकाध्यायंपठता .चतस्रःप्रद-
क्षिणाःकार्याः । प्राजापत्यहोमः । स्विष्टकृद्धोमः । पूर्णाहुतिः । संस्रवप्राशनादिप्रणीताविमोकांतं । ततो गोदानादी-
न्यनेकविधकौतुकदानानि । भूयसीदानं । ब्राह्मणभजोनम् । इतिविवाहहोमः ॥ ॥ शिष्टाचारपरिप्राप्तंऐरिणीप्रदानं-
कृताकृतं । नचतुर्थीकर्म । देवकोत्थापनं । आचार्यायपीठदानं श्रीदामोदरसहिततुलसीदानंच । आचार्यः दामोदरतुलस्यौ
शिबिकादिवाहनारूढेकृत्वा ब्राह्मणपुरंध्रीसहितं मंगलवाद्यघोषपुरःसरंस्वगृहेनयेत् । ततःस्वगृहे नृत्यगीतवाद्यपुरःसरं
यथाविभवंयथाविधिषोडशोपचारैःदामोदरसहितांतुलसींसंपूज्यब्राह्मणान्गंधादिभिःसंपूज्य यथाशक्त्याब्राह्मणान् संभोज्य
आशीर्ग्रहणंकुर्यात् ॥ इतितुलसीविवाहःसमाप्तः ॥ ॥

मंगलव्रतपूजाविधिः ॥ अरुणोदयवेलायांसमुत्थायअपामार्गेणमौनमुद्रयादंतधावनंविधायाचम्य ॥ ॐगजवक्त्रायस-
र्वजनप्रियायस्वाहा ॥ इतिमंत्रेणपादौप्रक्षालयेत् ॥ ततः ॥ आयुर्बलंयशोवर्चःप्रजाःपशून्वसूनिच ॥ ब्रह्मप्रज्ञांचमेधांचत्वं
नोदेहिवनस्पते ॥ इत्यपामार्गंसंप्रार्थ्यप्रादेशमात्रकाष्ठंगृहीत्वा ॥ मुखदुर्गंधिनाशायदंतानांचविशुद्धये ॥ ष्ठीवनायचगात्रा
णांकुर्वेहंदंतधावनं ॥ इतिदंतान्धावयेत् ॥ तत्र ॥ यक्षसेनाधिपतयेचंद्राधिपतयेचंद्राधिष्ठानकिलिकिलिममसर्वकार्याणि
साधयस्वाहा ॥ इतिमंत्रेणदंतान्धावयेत् ॥ आचमनं ॥ ततस्तिलामलककल्केननद्यांवागृहेवास्नात्वा धौतंरक्तवस्त्रंपरि-
धायरक्तोत्तरीयंचधारयेत् ॥ प्रातःसंध्यांविधाय ॥ ततस्ताम्रपात्रेरक्तचंदनरक्ताक्षतपुष्पाणिसोदकानिनिधाय ॥ ॐअं-
गारकायविद्महेभूमिपुत्रायधीमहि ॥ तन्नोभौमःप्रचोदयात् ॥ ॐश्रीअंगारकायशक्तिसहितायार्घ्यंसमर्पयामि ॥ इत्येक-
विंशतिःत्रयोवा ॥ ततःएकविंशतिगायत्रीजपः ॥ अनेनांगारकगायत्रीजपेनांगारकःप्रीयतां ॥ ततोगृहमागत्यअभूमि-
पतितेनरक्तानडुहगोमयेनइतरेणवागोमूत्रसहितेनोदकयुतेनवाशुद्धप्रदेशंसंलिप्यतन्मध्येवितस्तिद्वयमात्रंत्रिकोणंमंडलमेक-
विंशतिकोष्ठात्मकंकुर्यात् ॥ ताम्रपात्रेवालिखेत् ॥ अथवाताम्रमयंयंत्रंकुर्यात् ॥ ततोयंत्रस्यप्राणप्रतिष्ठांकुर्यात् ॥ ततो-
व्रतसंकल्पः ॥ दक्षिणहस्तेरक्ताक्षतोदकंगृहीत्वा ॥ अथदेवस्यतेभक्त्याकरिष्येव्रतमुत्तमं ॥ दुःखव्याधिविनाशार्थमृणं-
नाशयभूमिज ॥ पुत्रसंतानकादींस्त्वंकुरुपूर्णान्मनोरथान् ॥ इतिव्रतसंकल्पः ॥ आचम्यप्राणानायम्य देशकालौसंकीर्त्य
ममभौमदोषसूचितसंततिप्रतिबंधकनानादोषपरिहारपूर्वकचतुर्विधवंध्यात्वदोषनिवृत्तयेआयुष्मत्पुत्रफलप्राप्तिकामनया

भौमव्रतांगत्वेनविहितंभौमपूजनंकरिष्ये ॥ व्रतनिर्विघ्नतासिद्ध्यर्थंगणेशपूजनंकुर्यात् ॥ पूजाद्रव्याणिदक्षिणभागेसंस्थाप्य स्ववामभागेत्रिकोणेमंडलेअग्रोदककलशंसंस्थाप्यगंधपुष्पाणिप्रक्षिप्यआवाहनादिमुद्राःप्रदर्शयेत् ॥ तच्च ॥ आवाहितोभव स्थापितोभव सन्निहितोभव संनिरुंधितोभव अवगुंठितोभव अस्त्रेणसंरक्षितोभव धेनुमुद्रयाअमृतीकृतोभवइति ॥ ततस्तेनोदकेनपुष्पाण्यात्मानंपूजोपकरणानिचप्रोक्षेत् ॥ ततोन्यासान्कुर्यात् ॥ ॐह्रांअंगुष्ठाभ्यांनमः ॐह्रींतर्जनीभ्यां० ॐह्रूंमध्यमाभ्यां० ॐह्रैंअनामिकाभ्यां० ॐह्रौंकनिष्ठिकाभ्यां० ॐह्रःकरतलकरपृष्ठाभ्यां० ॥ एवंहृदयादिन्यासः ॥ अथनामन्यासः ॥ ॐमंगलायनमःशिखायां ॐभूमिपुत्राय० मूर्धनि ॐऋणहर्त्रे० ललाटे ॐधनप्रदाय० चक्षुषोः ॐस्थिरासनाय० कर्णयोः ॐमहाकाराय० नासिकायां ॐसर्वकर्मावरोधकाय० मुखे ॐ लोहिताय० हनौ ॐ लोहि-ताक्षाय० कंठे ॐसामगानांकृपाकराय० स्कंधयोः ॐधरात्मजाय० भुजयोः ॐकुजाय० करयोः ॐभौमाय० हृदये ॐभूतिदाय० जठरे ॐभूम्यानंदनाय० नाभौ ॐअंगारकाय० कट्यां ॐयमाय० ऊर्वोः सर्वरोगापहारकाय० जान्वोः ॐवृष्टिकर्त्रे० जंघयोः वृष्टिहर्त्रे० गुल्फयोः ॐसर्वकामफलप्रदाय० पादयोः ॐशक्तिशूलगदाखड्गधनुर्बाणवराभयेभ्यो० दिग्विदिक्षु ॥ गणेशःपातुपातालेदुर्गामांपातुसर्वतः ॥ एवंन्यासविधिंकृत्वामंत्रीपूजांसमारभेत् ॥ मंगलाद्याइमेप्रोक्ताः प्रधानसदृशाःशुभाः ॥ इतिन्यासान्कृत्वा ॥ ततोगोमयलिप्तमंडलेकलशस्थापनं ॥ तच्चमहीद्यौरित्यादिपूर्णपात्रनिधानां-तंकृत्वायंत्रपूजांसमारभेत् ॥ तत्रादावग्न्युत्तारणपूर्वकंप्राणप्रतिष्ठांकुर्यात् ॥ अथध्यानम् ॥ जसृजमरुणवर्णंरक्तमाल्यां-

गरागंकनककमलमालामौलिनंविश्ववंद्यं ॥ अतिललितकराभ्यांबिभ्रतंशक्तिशूलौभजतधरणिसूनुंमंगलंमंगलानां ॥ १ ॥
भारद्वाजोभूमिपुत्रोमहातेजावियोनिजः ॥ मेषारूढश्चतुर्बाहुःशूलशक्तिगदाधरः ॥२॥ वरदश्चापरोहस्तःकृशानुरिवचापरः ॥
इतिध्यानं ॥ त्रिकोणेएकविंशतिकोष्ठगतएकविंशतिनामांकितेयंत्रेभौमावाहनंकुर्यात् ॥ एह्येहिभगवन्भौमअंगारकम-
हाप्रभो ॥ त्वयियातेसमायातंत्रैलोक्यंसचराचरं ॥ १ ॥ भौममावाहयिष्यामितेजोमूर्तिंदुरासदं ॥ रुद्ररूपमनिर्देश्यं-
वक्रंचरुधिरप्रभं ॥ २ ॥ एवंस्मृत्वामंगलंतुस्कंदंप्रियतडित्प्रभं ॥ एहित्वंभगवन्भौमयंत्रेस्मिन्संनिधोभव ॥ ३ ॥ भौम-
मंगलउज्जयिन्यांसमुद्भूतपूर्वाषाढानक्षत्रोत्पन्नदशम्यामुत्पन्नभारद्वाजगोत्रइहागच्छेहतिष्ठ ॥ अग्निर्मूर्धेतिमंत्रेणभौमगाय-
त्र्याप्रतिष्ठांकुर्यात् ॥ ॐअंगारकायविद्महेशक्तिहस्तायधीमहि ॥ तन्नोभौमःप्रचोदयात् ॥ ॐनमोभगवतेसुखसंतान-
दात्रेमंगलायनमःआवाहयामि ॥ मध्येत्रिकोणे ॐमंगलायनमःमंगलमावाहयामि १ ॥ भूमिपुत्राय० भूमिपुत्रं० २ ॥
ऋणहर्त्रे० ऋणहर्तारं० ३ ॥ धनप्रदाय० धनप्रदं० ४ ॥ स्थिरासनाय० स्थिरासनं० ५ ॥ महाकायाय० महा-
कायं० ६ ॥ सर्वकर्मावरोधकाय० सर्वकर्मावरोधकं० ७ ॥ लोहिताय० लोहितं० ८ ॥ लोहिताक्षाय० लोहिताक्षं०
९ ॥ सामगानांकृपाकराय० सामगानांकृपाकरं० १० ॥ धरात्मजाय० धरात्मजं० ११ ॥ कुजाय० कुजं० १२ ॥
भौमाय० भौमं० १३ ॥ भूतिदाय० भूतिदं० १४ ॥ भूमिनंदनाय० भूमिनंदनं० १५ ॥ अंगारकाय० अंगारकं० १६ ॥
यमाय० यमं १७ ॥ सर्वरोगापहारकाय० सर्वरोगापहारकं० १८ ॥ वृष्टिकर्त्रे० वृष्टिकर्तारं० १९ ॥ वृष्टिहर्त्रे० वृष्टिहर्तारं०

२० ॥ सर्वकामप्रदाय० सर्वकामप्रदं० २१ ॥ ॐह्रांह्रींह्रूंह्रैंह्रौंह्रः आसनमुद्रयाभूमिपुत्रायनमः आसनं० ॥ अंगारकग्रहाधी-
शसुरदानववंदित ॥ पाद्यंगृहाणमद्दत्तंममवांछितसिद्धये ॥ ऋणहर्त्रे० पाद्यं ॥ भूमिपुत्रमहाभागभक्तानांभूतिवर्धन ॥
गृहाणार्घ्यंमयादत्तंममशांतिप्रदोभव ॥ धनप्रदाय० अर्घ्यं० ॥ गंगाजलेनवैस्नानंकल्पितंतेमहाग्रह ॥ तेनमेसर्वकामांश्च-
हृदिस्थान्परिपूरय ॥ स्थिरासनाय० स्नानं ॥ ग्रहवर्यमहावीर्यभक्तप्रियमहीसुत ॥ आहृतंतेमयासौम्यगृहाणमधुपर्ककं ॥
महाकायाय० मधुपर्कं० ॥ पंचामृतस्नानं ॥ शुद्धोदकस्नानं ॥ गांगेयपयसादत्तंतुभ्यंवैभक्तितःप्रभो ॥ सिद्धिंकुरुममा-
शुत्वंगृहाणाचमनीयकं ॥ सर्वकर्मावरोधकाय० आचमनीयं० ॥ तप्तकांचनवर्णाभंपवित्रंमृदुलंशुचि ॥ वस्त्रंगृहाणभू-
पुत्रमयादत्तंमनोहरं ॥ लोहिताय० वस्त्रं ॥ केयूरकटकाद्यानिहस्तसूत्रांगुलीयकं ॥ माणिक्योल्लासमुकुटंकुंडलेहारकौ-
स्तुभौ ॥ नाभिनामकरंभंचनूपुरेपादपद्मयोः ॥ अंगुलीमुद्रिकाश्चैवगृहाणाभरणानिच ॥ लोहिताक्षाय० आभरणानि० ॥
महीपुत्रनमस्तेस्तुत्राहिमामृणसागरात् ॥ मयादत्तंब्रह्मसूत्रंसोत्तरीयंगृहाणभो ॥ सामगानांकृपाकराय० यज्ञोपवीतं० ॥
श्रीखंडंचंदनं० ॥ धरात्मजाय० गंधं० ॥ अक्षताश्चसुर० कुजाय० अक्षतान्० ॥ रक्तोत्पलजपारक्तकरवीराणितेप्रभो ॥
मयाहृतानिपूजार्थंपुष्पाणिप्रतिगृह्यतां ॥ भौमाय० पुष्पाणि० ॥ वनस्पतिरसो० ॥ भूतिदाय० धूपं० ॥ भक्त्यादीपंप्र० ॥
भूमिनंदनाय० दीपं० ॥ घृतपक्वंहविष्यान्नंपायसंचसशर्करं ॥ गुडौदनंचनैवेद्यंभौममेप्रतिगृह्यतां ॥ अंगारकायनैवेद्यं० ॥
मध्येपानीयं आचमनीयं उत्तरापोशनं—करोद्वर्तनं० ॥ प्रसीदहरवीजोत्थसद्यःफलविधायक ॥ ग्रहराजमयादत्तंफलं

चप्रतिगृह्यतां ॥ यमाय० फलं० ॥ श्रीमत्पवित्रंत्रिगुणंशृंगारसुखवर्धनं ॥ सर्वप्रियकरंलोकेतांबूलंप्रतिगृह्यतां ॥ सर्व-
रोगापहारकाय० तांबूलं० ॥ यथाविभवसारेणदक्षिणांभोज्यपूर्विकां ॥ विप्रेभ्योविधिवद्द्याद्भौमप्रीतिकरीतथा ॥ वृष्टि-
कर्त्रेनमः दक्षिणां० ॥ एकविंशतिदीपैस्तुकुर्यादारार्तिकंशुभं ॥ ततः एकविंशतिताम्रमयघृतदीपैः पृथक्पृथक्नाममंत्रै-
र्नीराजनंकुर्यात् ॥ यथा ॥ आरार्तिकंप्रयच्छामिगृहाणक्षितिनंदन ॥ पुत्रान्देहिधनंदेहिसौभाग्यंचप्रयच्छमे ॥ मंगलायनमः
आरार्तिकंसमर्पयामि १ भूमिपुत्राय० २ ऋणहर्त्रे० ३ धनप्रदाय० ४ स्थिरासनाय० ५ महाकायाय० ६ सर्वकर्मावरोध-
काय० ७ लोहिताय० ८ लोहिताक्षाय० ९ सामगानांकृपाकराय० १० धरात्मजाय० ११ कुजाय० १२ भौमाय० १३
भूतिदाय० १४ भूमिनंदनाय० १५ अंगारकाय० १६ यमाय० १७ सर्वरोगापहारकाय० १८ वृष्टिकर्त्रे० १९
वृष्टिहर्त्रे० २० सर्वकामफलप्रदाय० २१ आरार्तिकं समर्पयामि ॥ ततःकर्पूरेणनीराजनंकार्यं ॥ अंगारकायपरमंकर्पू-
रारार्तिकंशुभं ॥ नीराजनेनसंतुष्टोभवत्वेवमहीसुतः ॥ वृष्टिकर्त्रे० कर्पूरनीराजनं० ॥ ततस्ताम्रमयार्घ्यपात्रे रक्ताक्षत-
रक्तचंदनरक्तपुष्पदूर्वामिश्रोदकेनएकविंशतिनामभिर्यथाक्रममर्घ्यान्दद्यात् ॥ तच्चजानुमंडलमवनींकृत्वा अर्घ्यपात्रंगृ-
हीत्वा ॥ भूमिपुत्रमहातेजःस्वेदोद्भवपिनाकिनः ॥ पुत्रार्थीत्वांप्रपन्नोस्मिगृहाणार्घ्यंनमोस्तुते ॥ मंगलाय० अर्घ्यं० १ ॥
भूमिपुत्रमहाभागभक्तानांभूतिवर्धन ॥ गृहाणार्घ्यंमयादत्तंममसिद्धिप्रदोभव ॥ भूमिपुत्राय० अर्घ्यं० २ ॥ धरणीगर्भ-
संभूतविद्युत्तेजःसमप्रभ ॥ कुमारशक्तिहस्तत्वंगृहाणार्घ्यंनमोस्तुते ॥ ऋणहर्त्रे० अर्घ्यं० ३ ॥ लोहिताक्षनमस्तुभ्यंनम-

स्तेलोहितांबर ॥ ग्रहराजमहीपुत्रगृहाणार्घ्यंनमोस्तुते ॥ धनप्रदाय० अर्घ्यं० ४ ॥ जपापुष्पसमाभासमहीसुतमहा-
त्मने ॥ रक्तांगायोग्रवीर्यायगृहाणा० ॥ स्थिरासनाय० अर्घ्यं० ५ ॥ ऋणहर्तःप्रहर्तस्त्वंदुःखदारिद्र्यनाशक ॥ सौभाग्यसु-
खदोनित्यंगृहाणा० ॥ महाकायाय० अर्घ्यं० ६ ॥ तप्तकांचनसंकाशतरुणार्कसमप्रभ ॥ सुखसौभाग्यधनदगृहाणार्घ्यं० ॥
सर्वकर्मावरोधकाय० अर्घ्यं० ७ ॥ ग्रहराजनमस्तेस्तुसर्वकल्याणकारक ॥ प्रसादंकुरुमेभौमगृहाणार्घ्यं० ॥ लोहि-
ताय० अर्घ्यं० ८ ॥ मेदिनीगर्भसंभूतकृपालोपरमेश्वर ॥ गृहाणार्घ्यंमयादत्तंसर्वकामार्थसिद्धये ॥ लोहिताक्षाय०
अर्घ्यं० ९ ॥ वृष्टिकर्त्रेनमस्तुभ्यंनमस्तेवृष्टिहारक ॥ सुखसंतानधनदगृहाणा० ॥ सामगानांकृपाकराय० अर्घ्यं० १० ॥
ग्रहाधीशनमस्तेस्तुनमस्तेविश्वपालक ॥ मेषारूढनमस्तस्मैगृहाणा० ॥ धरात्मजाय० अर्घ्यं० ११ ॥ मेषारूढचतुर्बाहो-
शूलशक्तिगदाधर ॥ गृहाणार्घ्यंमयादत्तंगंधपुष्पाक्षतैःसह ॥ कुजाय० अर्घ्यं० १२ ॥ अंगारकग्रहाधीशसुरदानववं-
दित ॥ गृहाणार्घ्यंमयादत्तंपुत्रसंतानहेतवे ॥ भौमाय० अर्घ्यं० १३ ॥ ग्रहवर्यमहावीर्यभक्तिप्रियमहीसुत ॥ संपादितं
मयासौम्यगृहाणार्घ्यं० ॥ भूतिदाय० अर्घ्यं० १४ ॥ अंगारकवराधीशभगवन्भक्तवत्सल ॥ नमोस्तुतेमहेशानगृ-
हाणा० ॥ भूमिनंदनाय० अर्घ्यं० १५ ॥ एहिभौममहाभागभक्तानांभूतिवर्धन ॥ अनुकंपयमांभक्त्यागृहाणार्घ्यं० ॥
अंगारकाय० १६ ॥ हरेर्ललाटसंभूतमेदिनीगर्भसंभव ॥ अंगारकमहाबाहोगृहाणा० ॥ यमाय० अर्घ्यं० १७ ॥ भक्तसं-
तानदातात्वंभक्तवश्यप्रियंकर ॥ दुःखदौर्भाग्यहर्तात्वंगृहाणार्घ्यं० ॥ सर्वरोगापहारकाय० अर्घ्यं० १८ ॥ परान्नरसुरप्री-

तत्सृष्टिसंहारकारक ॥ नमस्तुभ्यंकृपासिंधोगृहाणार्घ्यं० ॥ वृष्टिकर्त्रे० अर्घ्यं० १९ ॥ उज्जयिन्यांसमुद्भूतग्रहराज-
चतुर्भुज ॥ वरदोभेपरूढत्वंगृहाणा० ॥ वृष्टिहर्त्रे० अर्घ्यं० २० ॥ पूर्वाषाढादशम्यांचउत्पन्नोसिमहाग्रह ॥ वंध्यत्व-
दोषहर्तात्वंगृहाणार्घ्यंनमोस्तुते ॥ सर्वकामफलप्रदाय० अर्घ्यं० २१ ॥ पुष्पाक्षतफलैस्तस्मैप्रतिनामप्रदक्षिणाः ॥ एक-
विंशतिकाःकार्याःप्रणामैस्तुपृथक्पृथक् ॥ अंगारकायविद्महेभूमिपुत्रायधीमहि ॥ तन्नोभौमःप्रचोदयात् ॥ इतिमंत्रे-
णेतिनामभिर्वाप्रदक्षिणाःकुर्यात् ॥ ततो अग्निर्मूर्धेतिभौमगायत्र्याचपुष्पांजलिः ॥ सर्वकामप्रदाय० मंत्रपुष्पांज-
लिंस० ॥ अथजपः ॥ अस्यश्रीमंगलमंत्रस्य विरूपाक्षऋषिः अनुष्टुप्गायत्रीत्रिष्टुप्छंदांसि ऋणहर्ताधनप्रदोमंगलोदेवता
दुर्गादिपतयःप्रत्यधिदेवताः मंबीजं नमःशक्तिः ऋणापनुत्त्यर्थंसर्वोपद्रवशांत्यर्थंसकलकामनापूरणार्थं श्रीमंगलप्रीतयेमं-
गलमंत्रजपेवि० ॥ ॐऐंह्रींश्रींक्लींग्रांमंमंगलायनसोममऋणापनोदंकुरुकुरुधनंदेहिदेहिसर्वान्मनोरथान्साधयसाधयॐऐं-
ह्रींक्लींश्रींमंगलायस्वाहा ॥ सहस्रमष्टोत्तरशतंवाजपंकुर्यात् ॥ अथवाभौमगायत्र्या अग्निर्मूर्धेत्यनयर्चावाजपःकार्यः ॥
जपांते ॥ गुह्यातिगुह्यगोप्तात्वंगृहाणास्मत्कृतंजपं ॥ सिद्धिर्भवतुमेदेवत्वत्प्रसादाद्धरासुत ॥ ततोजपदशांशेनवितस्ति-
मात्रेत्रिकोणेकुंडेस्थंडिलेवाखादिरसमिद्भिस्तिलैराज्येनवाहोमःकार्यः ॥ ततोमंडलदक्षिणतःखदिरांगारेणतिस्रोऋणरेखाः
कुर्यात् ॥ तासांनाममंत्रेणपंचोपचारपूजांकृत्वावामपादांगुष्ठेनरेखामार्जनं ॥ तत्र मंत्रः ॥ रेखापरिमार्जनमंत्रस्यविश्व-
रूपाक्षऋषिःत्रिष्टुप्छंदःमंगलोदेवता रेखापमार्जनेवि० ॥ ॐ भूमिपुत्रममऋणंहरहरधनंदेहिदेहिपुत्रान्देहिदेहिस्वाहा ॥

ततःपादप्रक्षालनं ॥ आचमनं ॥ ततोहोमदशांशेनदुग्धेनतर्पणं ॥ तद्दशांशेनदूर्वाभिमार्जनं ॥ ततोभौमस्तोत्रंजपेत् ॥
अस्यश्रीभौमस्तोत्रमन्त्रस्यगर्गऋषिः अनुष्टुप्छंदः ऋणहर्ताधनप्रदोमंगलोदेवता सकलमनोरथसिद्ध्यर्थंमंगलस्तोत्रजपेवि० ॥
मंगलोभूमिपुत्रश्चऋणहर्ताधनप्रदः ॥ स्थिरासनोमहाकायःसर्वकर्माविरोधकः ॥ १ ॥ लोहितोलोहिताक्षश्चसामगानां
कृपाकरः ॥ धरात्मजःकुजोभौमोभूतिदोभूमिनंदनः ॥ २ ॥ अंगारकोयमश्चैवसर्वरोगापहारकः ॥ वृष्टिकर्ताऽपहर्ताचस-
र्वकामफलप्रदः ॥ ३ ॥ एतानिकुजनामानिनित्यंयःश्रद्धयापठेत् ॥ ऋणंनजायतेतस्यधनंशीघ्रमवाप्नुयात् ॥ ४ ॥ धरणी-
गर्भसंभूतंविद्युत्तेजःसमप्रभं ॥ कुमारंशक्तिहस्तंचमंगलंप्रणमाम्यहं ॥ ५ ॥ स्तोत्रमंगारकस्यैतत्पठनीयंसदानृभिः ॥
नतस्यभौमजापीडास्वल्पापिभवतिक्कचित् ॥ ५ ॥ अंगारकमहाभागभगवन्भक्तवत्सल ॥ त्वांनमामिममाशेषमृणमाशु-
विमोचय ॥ ७ ॥ ऋणरोगादिदारिद्र्यंयेचान्येपापमृत्यवः ॥ भयक्लेशमनस्तापानश्यंतुममसर्वदा ॥ ८ ॥ अतिवक्रदुरारा-
ध्यभोगमुक्तजितात्मनः ॥ तुष्टोददासिसाम्राज्यंरुष्टोहरसितत्क्षणात् ॥ ९ ॥ सूर्यशक्रादिदेवानांमनुष्याणांतुकाकथा ॥
तेनत्वंसर्वसत्वेनग्रहराजोमहाबलः ॥ १० ॥ पुत्रान्देहिधनंदेहित्वामहंशरणंगतः ॥ ऋणदारिद्र्यदुःखाच्चशत्रूणांचभया-
द्धिवै ॥ ११ ॥ एभिर्द्वादशभिःश्लोकैर्यःस्तौतिधरणीसुतं ॥ महतींश्रियमाप्नोतिह्यपरोधनदोयथा ॥ १२ ॥ इहभुक्त्वा-
खिलान्भोगानंतेभौमपदंव्रजेत् ॥ १३ ॥ इतिश्रीस्कंदपुराणेभार्गवप्रोक्तंमंगलस्तोत्रंसंपूर्णं ॥ ॥ ततोवायनदानं ॥
गुडमिश्रितगोधूमैर्वायनंचप्रदापयेत् ॥ खर्जूरादिफलैर्युक्तंभौमप्रीत्यैद्विजायच ॥ तत्रमन्त्रः ॥ मंगलःप्रतिगृह्णातिमंग-

लोवैददातिच ॥ मंगलस्तारकोभाभ्यांमंगलायनमोनमः ॥ अनेनगुडमिश्रितगोधूमवायनदानेनदक्षिणाफलसहितेनमंगलःप्रीयतां ॥ ततःस्थापितदेवतानांअग्नेश्चोत्तरपूजनं ॥ नैवेद्यसमयेगोधूमान्नंगुडघृतसहितंनिवेद्य ॥ यांतुदेवगणाःसर्वे० इतिविसर्जनं ॥ ॥ इतिमंगलव्रतपूजाविधिः ॥

अथाश्वत्थोपनयनम् ॥ तत्रवर्णैःक्रमेणवृक्षस्थापनात् अष्टमेएकादशेद्वादशेवावर्षेगुरुशुक्रयोरस्ताभावेउपनयनोक्तेमुहूर्तेपूर्वाह्णेकार्यम् ॥ शूद्रस्थापितेश्वत्थेपूर्वोक्तपौराणिकारामप्रतिष्ठामात्रंनतूपनयनं ॥ तस्योपनयनानर्हत्वादित्युक्तंमदनरत्ने—नकुर्याच्छेदिताश्वत्थेविद्युद्दावाग्निनाहते ॥ उपनीतंप्रकुर्वीतस्कन्धपर्णाङ्कुरान्वितम् ॥ ॥ अथप्रयोगः ॥ कर्ता—आयुर्बलमितिदन्तधावनंकृत्वासचैलंस्नात्वादेशकालौसंकीर्त्य सर्वपापक्षयकुलकोटिसमुद्धरणपूर्वकविष्णुसायुज्यप्राप्तिकामोश्वत्थोपनयनमहंकरिष्ये इतिसंकल्पः ॥ गणेशपूजनंपुण्याहवाचनंमातृकापूजनंनान्दीश्राद्धंआचार्यादिवरणंचकरिष्ये ॥ ऋत्विजोवृत्वापूजयेत् ॥ अथाचार्यःपंचामृतैःशुद्धोदकेनसर्वौषधिजलैश्चाश्वत्थमभिषिच्यपिष्टातकेनविभूष्य तत्पूर्वेस्थण्डिलंकृत्वाचरुश्रपणाद्याज्यभागान्तंकृत्वा युवासुवासाइत्यश्वत्थंवस्त्रयुग्मेनावेष्टययज्ञोपवीतमित्युपवीतंदत्वा प्रादेशमेखलांत्रिरावेष्ट्याजिनंदण्डंचतूष्णींदत्वाअश्वत्थेवोनिषदनमितिऋचागन्धपुष्पैःसंपूज्य देवस्यत्वेतिमन्त्रान्तेसहहस्तं गृह्णाम्यश्वत्थंस्पृष्ट्वासव्याहृतिकांगायत्रींत्रिर्जपित्वा अश्वत्थेवोनिषदनमिति सूक्तेनव्याहृतिभिश्चाश्वत्थंस्थापयामीतिस्वर्णशलाकयास्पृष्ट्वाआज्येनपालाशसमिद्भिश्चरुणाचप्रत्येकंवक्ष्यमाणैर्द्वादशमन्त्रैर्द्वादशाहुतीर्जुहुयात् ॥ मन्त्रस्तु ॥ ॐ भूःस्वाहा इदमग्नयेनमम

१ । ॐ भुवःस्वाहा इदंवायवे० २ । ॐ स्वःस्वाहा इदंसूर्यायनमम ३ । ॐ भूर्भुवःस्वःस्वाहा इदंप्रजापतयेनमम ४ ॥ ॐ अग्नआयूँषिपवसआसुवोर्जमिषंचनः । आरेबाधस्वदुच्छुनांस्वाहा । इदमग्नयेपवमानाय० ५ । ॐ अग्निर्ऋषिःपवमानःपाञ्चजन्यःपुरोहितः । तमीमहेमहागयंस्वाहा । इदमग्नये० ६ । ॐ अग्नेपवस्वस्वपाअस्मेवर्चःसुवीर्यं । दधद्रयिंमयिपोषंस्वाहा । इदमग्नयेप० । ७ । ॐ ओषधयःसंवदन्तेसोमेनसहराज्ञा । यस्मैकृणोतिब्राह्मणस्तंराजन्पारयामसिस्वाहा । इदमश्वत्थाय० ॥ ८ ॥ ॐ ओषधीरितिमातरस्तद्वोदेवीरुपब्रुवे । सनेयमश्वंगांवासआत्मानंतवपूरुषस्वाहा । इदमश्वत्थाय० ॥ ९ ॥ ॐ अश्वत्थेवोनिषदनंपर्णेवोवसतिष्कृता । गोभाजइत्किलासथयत्सनवथपूरुषंस्वाहा । इदमश्वत्थाय० ॥ १० ॥ ॐ वनस्पतेशतवल्शोविरोहसहस्रवल्शाविवयंरुहेम । तंत्वामयंस्वधितिस्तेजनायप्रणिनायमहतेसौभगायस्वाहा । इदमश्वत्थाय० ॥ ११ ॥ द्वासुपर्णासयुजासखायासमानंवृक्षंपरिषस्वजाते । तयोरन्यःपिप्पलंस्वाद्वत्त्यनश्नन्नन्योअभिचाकशीतिस्वाहा । इदमश्वत्थाय० ॥ १२ ॥ ॐ भूर्भुवःस्वःस्वाहा । प्रजापतयइदं० ॥ १३ ॥ ततःस्विष्टकृदादिहोमशेषंसमाप्य अश्वत्थेवोनिषदनं० इतिमन्त्रेणगन्धपुष्पधूपदीपनैवेद्यफलतांबूलाद्यैःसंपूज्य अश्वत्थंस्पृष्ट्वाआचार्यंसंपूज्यतस्मैगांसवत्सांदत्वा अन्येभ्योपिदक्षिणांदत्वा अश्वत्थवस्त्राद्याचार्यायदत्वा अष्टौब्राह्मणान्भोजयित्वासुहृद्युतोभुंजीतेति ॥

इतिकमलाकरभट्टविरचितमश्वत्थोपनयनम् ॥

अथचलाचलदेवप्रतिष्ठाप्रयोगः ॥ ॥ जयरामेणविदुषाप्रणम्यरेणुकाम्बिकां ॥ तन्यतेसर्वदेवानांप्रतिष्ठापनपद्धतिः ॥ १ ॥ सांबपुराणकल्पतरुहेमाद्रिबौधायनमयूखादिग्रन्थानुसारीमण्डपाद्यकरणेव्रतोद्यापनवत्त्र्यहःसाध्यश्चलाचलदेवप्रतिष्ठाप्रयोगोवक्ष्यते ॥ आचमनं ॥ प्राणायामः ॥ पवित्रधारणं ॥ शांतिसूक्तपाठः ॥ देशकालौसंकीर्त्य ॥ अमुकगोत्रोऽमुकशर्माहंदीर्घायुर्विपुलपुत्रपौत्राद्यनवच्छिन्नसंततिवृद्धिस्थिरलक्ष्मीकीर्तिलाभशत्रुपराजयसर्वपापनिरसनतत्तल्लोकावाप्तिसकलसुखावाप्तिधर्मार्थकाममोक्षप्राप्तिद्वाराश्रीपरमेश्वरप्रीत्यर्थंसग्रहमखां—(प्रासादश्चेत्प्रासादप्रतिष्ठासहितां)अमुकदेवप्रतिष्ठांकरिष्ये ॥ इतिसंकल्प्य ॥ गणेशपूजनादिनांदीश्राद्धांतं ॥ आचार्यादिऋत्विग्वरणं ॥ मधुपर्केणपूजनं ॥ ऋत्विक्प्रार्थना ॥ ॐ भद्रंकर्णेभिरिति ॥ वेद्यादिकंमंगलवाद्यघोषसहितंप्रदक्षिणीकृत्य ॥ दिग्रक्षणं ॥ पंचगव्यकरणं ॥ कर्मभूमिप्रोक्षणं ॥ ॐ देवाआयांतु ॥ यातुधानाअपयांतु ॥ विष्णोदेवयजनंरक्षस्व ॥ इतिकर्मभूमौप्रादेशंकृत्वा ॥ स्वस्तिनइतिमन्त्रजपः ॥ भूमिपूजनं ॥ ततोदेवस्यजलाधिवासः ॥ अस्याःप्रतिमायाःअंगप्रत्यंगसंधिसमुत्पन्नवास्याकुद्दालकटंकाद्यातपाग्निनिरासार्थंअग्न्युत्तारणंकरिष्ये ॥ मूर्तिंघृतेनाभ्यज्य ॥ दुग्धधारांजलधारांवातदुपरिपातयन्अग्निपदरहितंअअग्निपदसहितंअस्मन्नूर्जमित्यनुवाकंपठेत् ॥ ततोदेवंपंचगव्यहिरण्ययवदूर्वाअश्वत्थपलाशपर्णैरापोहिष्ठेतितिसृभिःहिरण्यवर्णामितिचतसृभिःपुनंतुमेतिनवभिश्चाभिषिच्य ॥ व्याहृतिभिरिदंविष्णुरितिचफलयवदूर्वाःसमर्प्य ॥ ॐरक्षोहणं० नमस्तेरुद्रइत्यर्द्धेनचहस्तेकंकणंबध्वावाससाआच्छाद्य ॥ ॐ वरुणस्योत्तंभनं० ॐ उदुत्तमं० इतिचजलेऽधिवासयेत् ॥ गंधाद्युप-

चारैःसंपूज्य ॥ प्रार्थयेत् ॥ सर्वसिद्धिप्रदंशुद्धंदिव्यंभवतुसर्वदा ॥ त्वदधिष्ठानसंयोग्यंत्वत्प्रसादात्सुरेश्वर ॥ इतिजलाधिवासः ॥ कृताकृतोयं ॥ प्रासादश्चेच्चतुःषष्टिपदेवास्तुमंडलेयथोक्तंवास्तुपूजनं ॥ कुंडपक्षेमेखलायोनिदेवतापूजनं ॥ कुंडेस्थंडिलेवापंचभूसंस्कारपूर्वकमग्निप्रतिष्ठापनं ॥ ततःसर्वतोभद्रमंडलदेवतास्थापनंपूजनं ॥ बलिदानांतं ॥ ईशान्यांग्रहस्थापनंरुद्रकलशपूजनांतं ॥ ततोदक्षिणतोब्रह्मासनमास्तीर्येत्यादिचरुंश्रपयित्वाआज्यभागांतं ॥ द्रव्यत्यागः ॥ वास्तुहोमोबलिदानांतः ॥ ततोवास्तुनिक्षेपः ॥ सचेत्थं ॥ राक्षोघ्नपावमानसूक्ताभ्यांत्रिसूत्र्याप्रासादमावेष्ट्य ॥ परितोजलदुग्धयोःपृथगेवाच्छिन्नेधारेदत्वा ॥ पीठेपूर्वपूजितांवास्तुप्रतिमांदधिपूर्वासप्तधान्यशैवालगंधाक्षतपुष्पयुतेअपक्वमृद्भांडेसंस्थाप्य ॥ तत्पिधायनवकुंभंजलपूर्णंगंधपुष्पाद्यर्चितंहस्तद्वयेनादायजानुभ्यामवनिंगत्वा । ॐ नमोवरुणायेति । चतुःषष्टिधाविभजितप्रासादाग्नेयकोणेआकाशपदेजानुमात्रंगर्तंजलेनापूर्य ॥ गंधपुष्पाणिनिक्षिप्य ॥ यद्भांडंतत्रनिधाय । गर्तंतथैवमृदापूरयेत् ॥ मृदाधिक्येशुभं ॥ गर्तोपरिभूमिंगंधपुष्पादिभिरभ्यर्च्य ॥ प्रार्थयेत् ॥ मन्त्रः ॥ सशैलसागरांपृथ्वींयथावहसिमूर्द्धनि ॥ तथामांवहकल्याणसंपत्संततिभिःसह ॥ १ ॥ इतिवास्तुनिक्षेपः ॥ तत्रवास्तुहोमोनिक्षेपश्चकृताकृतः ॥ ग्रहहोमः ॥ ततोयजमानेनसहाचार्यः मंगलवाद्यघोषसहितंस्नानशालायांदेवमानीय ॥ वेद्यांनिधाय ॥ प्रक्षाल्यप्रार्थयेत् ॥ स्वागतंदेवदेवेशविश्वरूपनमोस्तुते ॥ शुद्धेपित्वदधिष्ठानेशुद्धिंकुर्मःसहस्वतांइति ॥ देवंपंचगव्यैःपंचामृतैश्चतत्तन्मन्त्रैःसंस्नाप्य ॥ ॐ शन्नोदेवीरितिसंस्नवकलशेनचसंस्नाप्य ॥ चंदनेनानुलिप्य ॥ उष्णोदकेनप्रक्षाल्य ॥

पुनश्चतुर्भिःकलशैः ॐ समुद्रायत्वा० इत्यादिमन्त्रैरभिषिच्य ॥ देवप्रोक्ष्य ॥ तदुत्तरवेद्यां ॐ भद्रंकर्णेभिरितिसितवस्त्राच्छादितश्रीपर्णीपीठेसंस्थाप्य ॥ वेदिपरितःअष्टौकलशान्पूर्वादिक्रमेणस्थापयेत् ॥ तेषुक्रमेण ॥ सप्तमृदः १ पञ्चपल्लवान् २ कुशान् ३ शांत्युदकं ४ प्रस्रवणोदकं ५ यवान् ६ पुष्पाणि ७ फलानि ८ च प्रक्षिपेत् ॥ अचलप्रतिष्ठायांतुभद्रपीठात्पश्चिमेदशकलशाअन्येउदक्संस्थाःस्थाप्याः ॥ ततोदेवमूर्ध्निसर्वौषधिंआमलकचूर्णंशुद्धमृदंचदद्यात् ॥ तत्रमन्मन्त्रः ॥ त्वंमृदेवंदितादेवैःसकलैर्देवदानवैः ॥ तेनत्वंस्थापितामूर्ध्निमयादेवस्यशुद्धयेइति ॥ ततःपूर्वादिक्रमेणाष्टकलशैःस्नापयेत् ॥ तत्रमन्त्राःसांबपुराणे ॥ देवास्त्वामभिषिञ्चंतुब्रह्मविष्णुशिवादयः ॥ व्योमगंगांबुपूर्णेनआद्येनकलशेनतु ॥ १ ॥ मरुतश्चाभिषिंचंतुभक्तिमंतोदिवस्पते ॥ मेघतोयसुपूर्णेनद्वितीयकलशेनतु ॥ २ ॥ सारस्वतेनतोयेनपूर्णेनसुरसत्तम ॥ देवाःसर्वेभिषिंचंतुतृतीयकलशेनतु ॥३॥ विद्याधराअभिषिंचंतुलोकपालाःसवाहनाः ॥ स्थावरोदकपूर्णेनचतुर्थकलशेनतु ॥ ४ ॥ वारिभिःपरिपूर्णेनपद्मरेणुसुगंधिभिः ॥ पञ्चमेनाभिषिंचंतुनागाश्चकलशेनतु ॥ ५ ॥ हिमवद्धेमकूटाद्याह्यभिषिंचंतुपर्वताः ॥ निर्झरोदकपूर्णेनषष्ठेनकलशेनतु ॥ ६ ॥ सर्वतीर्थांबुपूर्णेनकलशेनादिवस्पते ॥ सप्तमेनाभिषिंचंतुऋषयःसप्तखेचराः ॥ ७ ॥ अष्टमंगलयुक्तेनदेवदेवनमोस्तुते ॥ वसवश्चाभिषिंचंतुकलशेनाष्टमेनवै ॥ ८ ॥ इति ॥ अचलप्रतिष्ठायां । पूर्वस्थापितभद्रपीठपश्चिमभागस्थैर्दशकलशैः सहस्रछिद्रांतरितेनकलशेनतत्तद्देवमन्त्रैःपुरुषसूक्तेनचदेवमभिषिंचेत् ॥ ततःक्षौद्राज्यदुग्धैर्नारिकेलांभसाइक्षुरसेनऔषधीक्वाथेनचपृथक्पृथक्तत्तन्मन्त्रैःसंस्थाप्य ॥ शुद्धोदकेनापोहिष्ठेतिस्नापयेत् ॥ देवंस-

प्रोक्ष्य ॥ वाससीपरिधाप्य ॥ उपवीतादिपदार्थैर्मूलमन्त्रेणसंपूज्य ॥ अष्टभिर्दीपैर्नीराजनंकुर्यात् ॥ तत्रमन्त्राः ॥ ॐ हिरण्यगर्भः० १ उपयाम० सूर्यस्तेम० २ यःप्राणतो० ३ उपया० चंद्रमास्त० ४ युंजंतिब्रध्न० ५ युंजत्य० ६ यद्वातो० ७ वसव० ८ ॥ अथदेवस्यनेत्रोन्मीलनं ॥ सुवर्णशलाकांगृहीत्वादेवस्याग्रेभक्ष्यभोज्यादर्शव्यंजनछत्रचामरातपत्रादिसामग्रींसुवर्णगांचनिधाय ॥ यजमानादिभिःसर्वैर्देवपार्श्वेप्रादक्षिण्येनगत्वातिष्ठद्भिर्देवोध्यातव्यः ॥ तदादेवपुरतोनकश्चित्तिष्ठेत् ॥ गुरुरपिदक्षिणपार्श्वेउदङ्मुखस्तिष्ठन्सतूर्यघोषंचित्रंदेवानामित्यर्द्धर्चेनप्रतिनेत्रमावर्तितेननेत्रोन्मीलनंकृत्वा कांस्यपात्रेताम्रपात्रेवामधुघृते मधुवाता० घृतंमिमिक्षे० इतिमन्त्राभ्यामेवाङ्क्त्वासाग्रयासुवर्णशलाकया ॐ अंजंतित्वा० अनज्मीत्यंतेनमन्त्रेणांजयित्वा ॐ देवस्यत्वेतिमन्त्रेणपुनस्तथैवखंडशर्करयाअंजयेत् ॥ लिंगस्थापनायांनेत्रोन्मीलनेविशेषः ॥ द्वादशाधिकशतांगुलपरिमितेनरक्तसूत्रेणलिंगमावेष्ट्य । लिंगंत्रेधाविभज्य । मध्यभागेमुखंकल्पयित्वा । नेत्रोन्मीलनंकुर्यादितिविशेषः ॥ ततोगोदोहनकालातिक्रमंकृत्वाप्रादक्षिण्येनागतैःसर्वैर्दंडवद्भूमौपतितैःप्रार्थनाकार्या ॥ भगवन्देवदेवेशत्वंमातासर्वदेहिनां ॥ त्वयाव्याप्तमिदंसर्वंजगत्स्थावरजंगमं ॥ त्वमिंद्रःपावकश्चैवयमोनिर्ऋतिरेवच ॥ वरुणोमारुतःसोमईशानःप्रभुरव्ययः ॥ येनरूपेणभगवन्त्वयाव्याप्तंचराचरं ॥ तेनरूपेणदेवेशअर्चायांसन्निधोभव ॥ इतिसंप्रार्थ्यउत्थाय ॥ दर्भेष्वासीनोदर्भान्धारयमाणः सामिधेनीकल्पवत्पुरुषसूक्तेनदेवमनुशंसेत् ॥ हिं३भूर्भुवःस्वरो३म् ॥ सहस्र० गुलो ३ म् । त्रिः । पुरुष० हतो ३ मेतावा०दिवों ३ त्रिपाद्० अभों ३ ततोवि० पुरों ३ तस्माद्य० श्वपों

३ तस्माद्य० यतों ३ तस्माद० वयों ३ तंयज्ञं० श्वयों ३ यत्पुरु० च्येतों ३ ब्राह्मणो० यतों ३ चंद्रमा० यतों ३ नाभ्या० लपयों ३ यत्पुरु० द्ववों ३ ७ सप्ता० पशों ३ यज्ञेन० देवों ३ । त्रिः ॥ इतिदेवंशंसयित्वा ॥ ॐ विश्वतश्चक्षुरितिमन्त्रेणदेवंसंकलीकृत्य स्थाप्यदेवमन्त्रेणार्घ्यंदद्यात् ॥ गायत्र्यभिमन्त्रितेनवारिणापरितोमार्जनंविधाय । मूलमन्त्रेणसंपूज्य । दशवारंमूलमंत्रंजपेत् ॥ अत्राचलप्रतिष्ठायांविशेषः । पुरुषसूक्तेनशंसनोत्तरं ॥ ॐ विश्वतश्चक्षुरितिसंकलीकृत्य ॥ देवसमीपे । हिरण्यकलशंसंस्थाप्य । तस्मिन्कलशे । काशीकुशस्थलीमायावंत्ययोध्यामधोःपुरी ॥ शालग्रामंसगोकर्णंनर्मदाचसरस्वती ॥ तीर्थान्येतानिकुंभेस्मिन्विशंतुब्रह्मशासनात् ॥ इतितीर्थान्यावाह्य ॥ कुशान्दूर्वांकुरांश्चगृहीत्वा ॥ नमस्तेर्च्यैसुरेशानिप्रकृतेविश्वकर्मणः ॥ प्रभाविताशेषजगद्धात्रितुभ्यंनमोस्तुते ॥ त्वयिसंपूजयामीशंनारायणमनामयं ॥ हारिताशेषदोषैश्चऋद्धियुक्तासदाभव ॥ इतिमन्त्राभ्यांप्रार्थ्य ॥ देवंसंप्रोक्ष्य ॥ देवंतदुपरिनिधाय देवदक्षिणहस्तेयदाबध्नन्नितिमन्त्रेणऊर्णासूत्रंबध्नीयात्इतिविशेषः ॥ ततस्तृतीयवेद्यांदेवमुपवेश्य ततोगायत्र्याद्वादशपलेनगोमूत्रेण १ प्रसद्यभस्मनेतिमुष्टिसंमितभस्मोदकेन २ पयःपृथिव्यामितित्रिपलेनपञ्चगव्येन ३ आप्यायस्वेतिषोडशपलेनक्षीरेण ४ दधिक्राव्णइतिपलमितेनदध्ना ५ घृतंमिमिक्षइतिसप्तपलेनघृतेन ६ मधुवाताइतित्रिपलेनमधुना ७ आयंगौरितित्रिपलयाशर्करया ८ शुद्धवस्येत्वेतिशुद्धोदकेन ९ च संस्नाप्य ॥ सुगंधतैलेनाभ्यज्य द्रुपदादिवेतियवशालिगोधूममसूरबिल्वचूर्णैरुद्वर्त्यशुद्धोदकेनप्रक्षाल्य । यातेरुद्रशिवातनूरितियक्षकर्दमेनानुलिंपेत् ॥ यक्षकर्दमस्तु । कस्तूरिकाया-

द्वौभागौद्वौभागौकुंकुमस्यच ॥ चंदनस्यत्रयोभागाशशिनस्त्वेकएवहि ॥ आगरुकस्यापिचैकोयक्षकर्दमउच्यतइति ॥ पूर्वस्थापितहिरण्यकलशोदकेनमंगलतूर्यघोषसहितंतत्तन्मन्त्रैःशांतिसूक्तेनचदेवंस्थापयेत् ॥ ॐ यज्ञायज्ञावइतिदेवंसंप्रोक्ष्य ॥ गंधाद्युपचारैःसंपूज्य ॥ मूलमन्त्रेणार्घ्यंदद्यात् ॥ ततोवंशपात्रेपंचवर्णान्वितमन्नंसंस्थाप्य ॥ देवंनीराज्यतत्तन्मूलमंत्रेण ॥ ॐ शिवमगर्हितंकर्मास्तुस्वाहेतिचबलिंनिवेद्यतं ॥ गृहाद्बहिश्चतुष्पथेनिक्षिपेत् ॥ पाणिपादंप्रक्षल्य ॥ आचम्य ॥ अथदेवस्यशय्याधिवासः ॥ सर्वतोभद्रमंडलदेवताःगंधादिपञ्चोपचारैःसंपूज्य ॥ ॐ स्तीर्णंबर्हिरितितत्रकुशानास्तीर्य ॥ स्थाप्यदेवंमूलमन्त्रेणावाह्य । कर्णिकायांब्रह्मासनेदेवंप्रतिष्ठाप्य । षोडशोपचारैःसंपूज्य ॥ ॐ उत्तिष्ठब्रह्मणस्पते० इतिदेवमुत्थाप्य ॥ ॐ रथेतिष्ठन्नितिमन्त्रेणरथेआरोप्य ॥ तदुत्तरतश्चतुरस्रायांभूमौ षोडशकोष्ठानिकृत्वा ईशानकोष्ठसंलग्नंपूर्वस्यां ॥ आग्नेयकोष्ठसंलग्नंदक्षिणस्यां । नैर्ऋत्यकोष्ठसंलग्नंपश्चिमायां । वायव्यकोष्ठसंलग्नमुत्तरस्यां । तत्तत्कोष्ठेनमार्जयित्वा । मार्जनक्रमेणसितपीतरक्तासितरंगैःपूरितेस्वस्तिकेस्थापितायांशय्यायांकनिक्रददितिसूक्तंपठन्देवमारोप्य । पुरुषसूक्तोत्तरनारायणाभ्यांब्राह्मणैःसहोपतिष्ठते ॥ ततःस्थाप्यदेवेन्यासंकुर्यात् ॥ ॐ पुरुषात्मनेनमः ॐ प्राणात्मनेनमः । इति सर्वशरीरेव्यापकंन्यसेत् ॥ ॐ प्रकृतितत्वाय० हृदये ॥ ॐ रसतत्वात्मने० वस्तौ ॥ ॐ गंधतत्वाय० पादयोः ॥ ॐ श्रोत्रतत्वाय० कर्णयोः ॥ ॐ त्वक्तत्वाय० सर्वशरीरे ॥ ॐ चक्षुस्तत्वाय० चक्षुषोः ॥ ॐ जिह्वातत्वाय० जिह्वायां ॥ ॐ घ्राणतत्वाय० घ्राणे ॥ ॐ वाक्तत्वाय० वाचि ॥ ॐ पाणितत्वाय० पाण्योः ॥ ॐ पादतत्वाय० पादयोः ॥

ॐ पायुतत्वाय० पायौ ॥ ॐ उपस्थतत्वाय०उपस्थे ॥ ॐ पृथ्वीतत्त्वाय० पादयोः ॥ ॐ अप्तत्वाय० बस्तौ ॥ ॐ तेजस्तत्वाय० हृदि ॥ ॐ वायुतत्वाय० घ्राणे ॥ ॐ आकाशतत्वाय० शिरसि ॥ ॐ रजस्तत्वाय० ॥ ॐ तमस्तत्वाय० ॥ ॐ सत्वतत्वाय० ॥ ॐ देहतत्वाय० नमः ॥ इतिदेहेव्यापकंन्यसेत् ॥ ततःपुरुषसूक्तेनन्यासाः ॥ एवंदेवेन्यासान्विधाय । पुनर्मूलमंत्रेणसंपूज्य । हेदेव त्वंसुखशायीभव । इत्यधिवास्य । मंडलशय्ययोरंतरालेनगंतव्यमितिप्रैषंदद्यात् ॥ ततःशय्याप्रदेशेचरुशेषेणदिग्बलिंदद्यात् । तत्रमंत्रः ॥ पूर्वदिग्वासिभ्योदिक्पतिदिग्भूताधिपतिदिग्रुद्रदिङ्मातृदिक्क्षेत्रपालेभ्योनमः अमुमुपहारबलिंसमर्पयामीति । इत्येवंप्रतिदिशंबलिंदत्वा । आचम्य । देवंनीराज्यसाष्टांगंप्रणमेत् । इतिशय्याधिवासः ॥ ततःप्रधानहोमः । स्थाप्यदेवतालिंगकेनमंत्रेणघृतेनतिलैर्वाअष्टसहस्रमष्टशतंवाहुत्वादेवस्यपादौस्पृशेत् । एषप्रथमःपर्यायः । द्वितीयेनाभिं । तृतीयेमध्यं । चतुर्थेवक्षः । पंचमेशिरः । प्रतिपर्यायंसंपातोदकेनदेवंस्नपयेयुः । आज्यहोमेचोत्तरतःस्थापितेकलशेसंपातान्क्षिपेत् ॥ ततस्तत्तद्देवतानांपरिवारदेवताहोमः ॥ इतिप्रधानहोमः ॥ ॥ आचार्यादीन्संपूज्य । हविष्यादिनासंभोज्य । स्वयमपितदैवभुक्त्वा । वेदपुराणादिश्रवणेनजागरणंकुर्यात् ॥ इत्यधिवासनं ॥ ॥ एवंकूर्मशिलाब्रह्मशिलापिंडिकावाहनपरिवारदेवादीनपिवैदिकमंत्रैर्नाममंत्रैर्वासंपूज्यमुख्यप्रतिमायावामपार्श्वेऽधिवासयेत् ॥ प्रासादश्चेन्नूतनस्तस्याप्यधिवासनंकार्यं ॥ तच्चेत्थं ॥ ॥ प्रासादाग्रेअक्षतैरेकाशीतिपदंमंडलंकृत्वा । तेषुसप्तधान्यपुंजान्कृत्वा । जलपूर्णानेकाशीतिकुंभानाहृत्य । तत्रनवनवकानांमध्यमंमध्यमं

कोष्ठंकृत्वा । तेषुकुंभान् । मध्यमपूर्वादिक्रमेणन्यसेत् ॥ मध्यमकुंभेशम्युदुंबराश्वत्थाम्रपालाशप्लक्षन्यग्रोधकदंबबिल्वा-
र्जुनवृक्षपल्लवदशकं ॐ सोमायवनस्पत्यंतर्गतायनमः । इतिनिक्षिपेत् ॥ पूर्वकुंभेपद्मगोरोचनदूर्वांकुरदर्भपिंजुलश्वेतसर्ष-
पसितरक्तचंदनजातीबकुलकुसुमनंद्यावर्तकमितिदशकं ॥ आग्नेयकुंभे । यवव्रीहितिलसुवर्णरजतमहानदीतीरमृत्तिका-
भूम्यसंस्पृष्टगोमयमितिसप्तकं ॥ दक्षिणकुंभे । सहदेवीविष्णुक्रांताभृंगराजमहौषधीशमीशतावरीगुडूचीश्यामाकाद्यष्टकं ॥
नैर्ऋत्यकुंभे । कदलीफलनारिकेलबिल्वनारिंगमातुलिंगबदरामलकाम्रफलाष्टकं ॥ पश्चिमकुंभे । मन्त्रवत्पंचगव्यं ॥
वायव्यकुंभे । शम्युदुंबराश्वत्थन्यग्रोधपलाशतत्पर्णकषायपञ्चकं ॥ उत्तरकुंभे । शंखपुष्पीसहदेवीबलाशतावरीकुमारीगु-
डूचीवचाव्याघ्रीतिमूलाष्टकं ॥ ईशान्यकुंभे । सप्तमृत्तिकाः ॥ ॐ हिरण्यवर्णां० इतिमध्यमकुंभान्अभिमंत्र्य ॥ शेषा-
नूगंधोदकेनापूर्य । मूलमंत्रेणाभिमंत्र्यप्रासादंत्रिसूत्र्याआवेष्ट्य । अंतर्बहिरधस्तादूर्ध्वंचप्रासादंपंचगव्येनसंप्रोक्ष्य ॥
ॐ मूर्द्धानंदिव० इतिवल्मीकमृदाअनुलिंपेत् ॥ ततः ॐ समुद्रायत्वा० इतिईशानदिक्स्थेनमृत्तिकाकुंभेनस्नापयेत् ॥
ॐ यज्ञायज्ञावो० इतिवायव्येनकषायकुंभेन ॥ ॐ पयःपृथिव्यां० इतिवारुणेनपञ्चगव्यकुंभेन ॥ ॐ याःफलिनी० इति
नैर्ऋत्येनफलकुंभेन ॥ ॐ हꣳसःशुचिषत् इतिसौम्येनमूलकुंभेन ॥ ॐ विष्णोरराट० इतिपौर्व्येणपद्मादिकुंभेन ॥ ॐ
सोमꣳ राजा० इतिआग्नेयेनकुंभेन ॥ ॐ विश्वतश्चक्षु० इतियाम्येनौषधीकुंभेन ॥ ॐ नमोस्तुस० इतिमध्यमेनपल्लव-
कुंभेन ॥ ॐ इदमापःप्र० इतिअष्टभिःपूर्वादिक्रमेणप्रासादंसशिखरंस्नापयेत् ॥ एकाशीतिकुंभासंभवेतुगंधोदकपूरितेन

एकेनमहाकलशेन ॥ ॐ दैव्यायकर्म्मणेशुं० इतिमन्त्रेणस्नापयित्वा देवरूपंप्रासादंचिंतयित्वा पताकादिभिःशोभयित्वा गंधपुष्पादिभिःपूजयित्वातस्याधस्ताद्देवंसंचिंत्यमन्त्रेणप्रासादमधिवासयेत् ॥ मन्त्रस्तु ॥ ॐ ह्रींसर्वदेवमयाचिंत्यसर्वरत्नोज्ज्वलाकृते ॥ यावच्चंद्रश्चसूर्यश्चतावदत्रस्थिरोभव ॥ इत्यधिवास्य । बहिर्निर्गत्य । प्रासादाभिमुखोभूत्वादेवरूपंध्यायेत् ॥ पादौपादशिलास्तस्यजंघापादोर्ध्वमुच्यते ॥ गर्भश्चैवोदरंज्ञेयंकटिश्चकटिमेखला ॥ स्तंभाश्चबाहवोज्ञेयाघंटाजिह्वाप्रकीर्तिता ॥ दीपःप्राणोस्यविज्ञेयोह्यपानोजलनिर्गमः ॥ ब्रह्मस्थानंयदेतच्चतन्नाभिःपरिकीर्तिता ॥ हृत्पद्मंपिंडिकाज्ञेयाप्रतिमापुरुषःस्मृतः ॥ पादचारस्त्वहंकारोज्योतिस्तच्चक्षुरुच्यते ॥ तदूर्ध्वंप्रकृतिस्तस्यप्रतिमात्मास्मृतोबुधैः ॥ नलकुंभादधोद्वारंतस्यप्रज्वलनंस्मृतं ॥ शुकनासाभवेन्नासागवाक्षःकर्णउच्यते ॥ कापोतपालीस्कंधोस्यग्रीवाचामलसारिका ॥ कलशस्तुशिरोज्ञेयंमज्जातत्परसंहितं ॥ मेदश्चवसुधांविद्यात्प्रलेपोमांसमुच्यते ॥ अस्थीनिचशिलास्तस्यस्नायुःकीलादयःस्मृताः ॥ चक्षुषीशिखरास्तस्यध्वजाःकेशाःप्रकीर्तिताः ॥ एवंपुरुषरूपंतंध्यात्वाचमनसासुधीः ॥ प्रासादंपूजयेत्पश्चात्गंधपुष्पध्वजादिभिः ॥ सूत्रेणवेष्टयेदेनंवासस्तत्परिकल्पयेत् ॥ प्रासादमेवमभ्यर्च्यवाहनंचाग्रमंडपे ॥ इतिध्यात्वाप्रासादोत्सर्गं कुर्यात् ॥ गंधपुष्पाक्षतोदककुशानादाय ॥ देशकालौस्मृत्वा ॥ इमंशिलेष्टकादार्वादिनिर्मितंवलभीजगतीप्राकारपरिवारगोपुरपरिवारदेवतालयसंयुतंप्रासादंतत्तद्देवतालोकप्राप्तिकामः कुलद्वयानुग्रहायअमुकदेवताप्रीतये अहमुत्सृजामीतिभूमावुदकंनिक्षिप्यप्रणमेदितिप्रासादोत्सर्गः ॥ इतिप्रासादाधिवासनं ॥ ॥ प्रातराचार्यो ॐ उत्तिष्ठब्रह्म० इतिदेव-

मुत्थाप्य । पञ्चोपचारैः संपूज्य । चरुणाआज्येनचमूलमंत्रेणाष्टोत्तरशतंहुत्वा । कूर्मशिलांब्रह्मशिलांपिंडिकांच ॐ त्रातारमि-
न्द्रं० इतिमन्त्रेणगृहीत्वापुष्पोदकेनास्त्रमंत्रेणप्रासादमभ्युक्ष्य । प्रासादस्यद्वारस्यचमध्याद्यवेनयवार्द्धेनवाईशानीमुत्तरांवा-
श्रित्यप्रणवेनपञ्चरत्नोपरिनिधायतच्छ्वभ्रेसौवर्णकूर्मंद्वारसंमुखंनिधायतदुपरिरत्नानिनिधायतदुपरिब्रह्मशिलांस्थापयेत् ॥ तत्र-
मन्त्रः । ॐ नमोव्यापिनिस्थिरेअचलेध्रुवे । ॐ श्रींलंस्वाहा ॥ गंधादिभिःसंपूज्य ॥ त्वमेवपरमाशक्तिस्त्वमेवासनधा-
रिका ॥ शिवाज्ञयात्वयादेविस्थातव्यमिहसर्वदा ॥ इतिप्रार्थयेत् ॥ तदुपरिसश्वभ्रांपिंडिकांपूर्वपश्चिमाननेप्रासादेसौम्य-
प्रणालींदक्षिणोत्तराननेपूर्वप्रणालींस्थापयेत् ॥ तत्रमन्त्रः । ॐ ध्रुवासिध्रु० ॥ देवपत्नीलिंगकेनमंत्रेणपिंडिकाभिमन्त्रणं ॥
यथाविष्णुश्चेत् । ॐ श्रीश्चते०। शिवश्चेत् ॐ अंबेअम्बिके० । इत्यादि ॥ गंधादिभिःसंपूज्यप्रार्थयेत् ॥ त्वांप्रतिष्ठापया-
म्यद्यमंदिरेदेवनिर्मिते ॥ यावच्चंद्रश्चसूर्यश्चयावदेषावसुंधरा ॥ तावत्त्वंदेवदेवेशिमंदिरेस्मिन्स्थिराभवेति ॥ तदुपरिश्वभ्रे ।
ॐ कारायनमः । तत्परितःषोडशस्वरेभ्योनमः । तत्परितोव्यंजनेभ्योनमः । इतिविन्यस्य । पञ्चरत्नादीनिविन्यसेत् ॥
एपवैप्रतिष्ठेतिपिंडिकांप्रतिष्ठापयेत् ॥ इतिपिंडिकाप्रतिष्ठापनं ॥ एवंपिंडिकांप्रतिष्ठाप्यदेवंप्रार्थयेत् ॥ प्रबुध्यस्वमहाभाग-
देवदेवजगत्पते ॥ मेघश्यामगदापाणेप्रफुल्लकमलेक्षण ॥ प्रबुद्धभूधरानंतवासुदेवनमोस्तुते ॥ गंधपुष्पैःसंपूज्य । ॐउत्तिष्ठ-
ब्रह्म० इतिदेवमुत्थाप्य । रथेउपवेश्यवाद्यघोषेणमंत्रघोषेणचप्रादक्षिण्येनप्रासादाग्रेआनीयरथादवतार्य प्रासादद्वारसंमुखं
कृत्वा अर्घ्यंदत्वाप्रासादंप्रवेशयेत् ॥ ततोयजमानःसदेशिकोदेवंपिंडिकायांस्थापयेत् ॥ तद्यथा । सुलग्नेईश्वरंभावयन् ।

सौवर्णपद्मंश्वभ्रेनिधाय । प्रधानपुरुषोयावद्यावचंद्रदिवाकरौ ॥ तावत्त्वमनयाशक्त्यायुक्तोऽत्रैवस्थिरोभव ॥ इतिपठित्वा ।
ॐ ध्रुवासिध्रुवोयंइतिमन्त्रंचपठित्वा । यवंयवार्द्धंवाउत्तराश्रितमीशानाश्रितंवादेवांपिंडिकाश्वभ्रेनिधाय । ॐ स्थिरोभव
शाश्वतोभव । इतिचपठित्वा । पिंडिकामूर्त्यंतरालंवालुकासीसकादिभिर्दृढंपूरयित्वापुनर्नचालयेत् । ततोदेवंमूर्ध्निहृद-
येवास्पृष्ट्वाप्राणप्रतिष्ठांकुर्यात् ॥ प्राणप्रतिष्ठांते । ॐ ध्रुवासीतिसूक्तंजपित्वा । देवंसजीवंध्यात्वा । विश्वतश्चक्षुरिति-
चपठित्वा । देवस्यमूर्ध्निहस्तंनिधाय । प्राणप्रतिष्ठिकान्मन्त्रान्जपेत् । तत्तल्लिंगकान्मन्त्रांश्चजपेत् । ततोदेवस्यहृदयंस्पृ-
ष्ट्वा । तत्तत्सूक्तानिजप्त्वा । सप्रणवांसव्याहृतिकांसशिरस्कांगायत्रींचजपेत् ॥ अथदेवस्यसान्निध्यंकुर्यात् ॥ नमस्तेव्य-
क्तसंगायशांतायपरमात्मने ॥ ज्ञानविज्ञानरूपायब्रह्मतेजोनुशालिने ॥ गुणातिक्रांतवेगायपुरुषायमहात्मने ॥ अव्यक्ताय
पुराणायविष्णोसन्निहितोभव ॥ भगवन्देवदेवेशत्वंपितासर्वदेहिनां ॥ त्वयाव्याप्तमिदंसर्वंजगत्स्थावरजंगमं ॥ त्वमिंद्रः
पावकश्चैवयमोनिर्ऋतिरेवच ॥ वरुणोमारुतःसोमईशानःप्रभुरव्ययः ॥ येनरूपेणभगवन्त्वयाव्याप्तंचराचरं ॥ तेनरूपेण
देवेशअर्चायांसन्निधोभव ॥ सर्वमन्त्रादिसंयुक्तोलोकानुग्रहकाम्यया ॥ अत्रार्चायांमहादेवसंतुष्टोभवसर्वदा ॥ सूर्याचंद्रम-
सौयावद्यावत्तिष्ठतिमेदिनी ॥ तावत्त्वयात्रदेवेशस्थातव्यंस्वेच्छयाप्रभो ॥ इतिसान्निध्यं ॥ ततोदेवंषोडशोपचारपञ्चा-
मृताद्युपचारअभिषेकसुगंधतैलोद्वर्तनोष्णोदकस्नाननानाविधवस्त्रालंकारगंधपुष्पधूपदीपनैवेद्यफलादिभिरुपचारैःसंपूज्य ॥
प्रार्थयेत् ॥ लोकानुग्रहहेत्वर्थंस्थिरोभवसुखासने ॥ सान्निध्यंहिसदादेवप्रत्यहंपरिवर्तय ॥ माभूत्पूजाविरामोस्मिन्यज-

मानःसमृध्यतां ॥ संपालयसतांराष्ट्रंसर्वोपद्रववर्जितं ॥ क्षेमेणवृद्धिमतुलांसुखमक्षय्यमश्नुतां ॥ ज्ञानतोज्ञानतोवापियावान्विधिरनुष्ठितः ॥ ससर्वस्त्वत्प्रसादेनसंपूर्णोभवतांमम ॥ इति । अथकर्तृनामयुतंदेवस्यनामकुर्यात् ॥ ततःसर्वतोभद्रमंडलाद्यंगदेवताहोमः ॥ राष्ट्रभृतइच्छन्जयाभ्यातानांश्चजुहुयात् ॥ शांत्यर्थंआज्येनतिलैर्वाअघोरमन्त्रेणाष्टोत्तरशतंजुहुयात् ॥ ततः । पूजास्विष्टंनवाहुत्योबलिःपूर्णाहुतिस्तथा ॥ श्रेयःसंपाद्यदानंचअभिषेकोविसर्जनं ॥ आशीर्ग्रहणं । ब्राह्मणभोजनंच ॥ ॥ इतिव्रतोद्यापनवद्ग्रहःसाध्यःसर्वदेवप्रतिष्ठाप्रयोगःसमासः ॥ ॥

अथकलशारोपणविधिः ॥ ॥ कर्ताकृतस्नानसंध्यादिनित्यक्रियःसपत्नीकःवस्त्राच्छादितपीठेप्राङ्मुखउपविश्यआचमनं ॥ प्राणायामः ॥ पवित्रधारणं ॥ देशकालौसंकीर्त्य ॥ अमुकदेवताप्रासादोपरिनूतनकलशारोपणाख्यंकर्मकरिष्ये ॥ गणेशपूजनादिनांदीश्राद्धांतंकृत्वा ॥ आचार्यःभूशुद्ध्यंतेस्थंडिलात्पुरतःहस्तमात्रांवेदिंप्रकल्प्यवेदिकोणेषुचतुरःकलशान्पंचरत्नफलयवाद्युपेतान्संस्थाप्य आचार्यःसऋत्विक्चतुःकलशोदकैःसंस्नाप्यकलशंश्रीसूक्तेनसंस्नाप्यदिग्बलीन्दत्वातैलेनाभ्यज्यगंधाद्यैःसंपूज्यत्रिसूत्र्यावेष्ट्यरथमारोप्यसतूर्यघोषंस्नानमंडपमानीयभद्रपीठेउपवेश्य घृतवतीतिघृतेनाभ्यज्यद्रुपदादिवेतियवमसूराहरिद्रापिष्टेनोद्वर्त्योष्णोदकेनप्रक्षाल्यमूर्धानंदिवइतिगंधोदकेन हिरण्यगर्भइतिपल्लवोदकेन याओषधीरितिसर्वौषधिभिः हꣳसःशुचिषदितिअक्षतोदकेनस्नापयेत् ॥ अथवेदिकोणस्थैः मानस्तोके विष्णोररराटं सोमंराजानं विश्वतश्चक्षुरितिक्रमेणसंस्नाप्य समुद्रज्येष्ठाइतिप्रक्षाल्य देवमंत्रेणावाह्यसंपूज्यवस्त्रैराच्छाद्य अभित्वाशूरनोनुमइतिस्तुत्वामंडपमानीय

वेद्युपरिशय्यायांगंधाद्यैःसंपूज्य विश्वतश्चक्षुरित्यभिमंत्र्य ॥ ततःस्थंडिलेग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ क्रियमाणेकलशारोपणहोमेदेवतापरिग्रहार्थंअन्वाधानंक० ॥ समिद्द्वयमादाय अस्मिन्नन्वाहितेग्नावित्यादिचक्षुष्यंतेतत्रप्रधानं रुद्रंघृतदधिक्षीरमधुभिः प्रतिद्रव्यं २८ सं० घृतादिमिलितद्रव्येणच २८ सं० त्र्यंबकमितिमन्त्रेणपुनःपलाशोदुंबराश्वत्थशम्यपामार्गसमिच्चरुतिलैः प्रतिद्रव्यं १०८ सं० त्र्यंबकमितिमन्त्रेणयक्ष्ये । शेषेणस्विष्टकृतमित्याद्युक्तहवनेसंपातकुंभेसंस्रवानानयेत् ॥ तेनकलशंस्नापयेत् ॥ पादनाभिहृद्वक्षःशिरांसिस्पृशेत् ॥ ततः यजमानःस्थापितकलशसंनिधिमागत्यपुरुषसूक्तेनकलशमभिमंत्र्यसंपूज्य प्रासादंगंधोदकेनप्रक्षाल्य कलशस्थापनदेशेपूर्वादिक्रमतः वज्रंमौक्तिकंवैडूर्यं शंखंस्फटिकंपुष्परागंइंद्रनीलंमहानीलंइतिरत्नन्यासंकृत्वा तूर्यघोषेणप्रासादेकलशमारोप्य देवमंत्रेणआकलशेष्वितिसंस्थाप्य वस्त्रेणाच्छाद्य ॐ फडितिमंत्रेणाभिमंत्र्य तत्रशूलंचक्रंदेवायुधंन्यसेत् ॥ ततःशिल्पिनास्थिरीकृत्य फलोदकेनाभिषिच्य गंधाद्यैःसंपूज्यशुक्लवस्त्राण्यन्योन्यबद्धानिकलशाग्रेबद्ध्वाईशान्यांभूमौलंबयेत् ॥ ततःकर्मशेषंसमाप्य पूर्वादिदिग्बलीन्दत्वायजमानोभिषिक्तः आचार्यादिभ्योदक्षिणांदत्वाविप्रान्भोजयेत् आशिषोगृहीत्वासुत्दृद्युतोभुंजीत ॥ इतिप्रतिष्ठासारदीपिकोक्तःकलशारो० ॥

अथसमाध्युत्सर्गः ॥ ॥ अथयतिदेहोपरिगुरुपादुकादिचिह्नस्थापनोत्सर्गविधिंव्याख्यास्यामः ॥ संन्यासिनःपरमहंसान्भूम्यादौगर्तेपूरयित्वातदुपरितदुद्देशेनपादुकालिंगवृंदावनएडकाद्यायतनंसमाधिस्थानमित्युच्यते ॥ तत्स्थानकर्तुःप्राशस्त्यबोधकंवाक्यंप्रतिष्ठाहेमाद्रौ—येषांतडागादिशुभाःप्रपाश्चआरामकूपाःप्रतिमाश्रयाश्च ॥ अन्नप्रदानंमधुराचवाणी-

तेषामयंचैवपरश्चलोकः ॥ अस्मिन्वाक्येप्रतिश्रयोनामसमाधिः ॥ प्रतिश्रयःसमाधीयेइतिकोशात् ॥ उदगयनेमाघादि-
मासेषुशुक्लपक्षेचतुर्थीषष्ठ्यष्टमीचतुर्दशीव्यतिरिक्तायांतिथौ कृष्णपक्षेतुदशम्याःप्रागन्यतमतिथौ गुरुशुक्रास्तादिबाल्यवार्ध-
क्यविरुद्धेदक्षिणायनेपिपौषाषाढभाद्रपदादिकवर्ज्यं एकादश्यांरुद्रस्य दशम्यांद्वादश्यांवाविष्णोः ॥ ॥ अथप्रयोगः ॥
देशकालौसंकीर्त्य ममदशपूर्वान्दशापरान्मांचेत्येकविंशतिपुरुषान्पवित्रीकर्तुंश्रीपरमेश्वरप्रसादद्वारापष्टिसहस्रवर्षपर्यंतं ब्रह्म
लोकेमहितत्वकामःश्रीपरमेश्वरप्रीत्यर्थंपाषाणादिबद्धगुरुपादुकादिचिह्नितस्थानस्य सग्रहमखमुत्सर्गाख्यंकर्मकरिष्ये ॥ गण
पतिपूजनादिनांदीश्राद्धान्तं ॥ आचार्यादृत्विग्वरणं । दिग्रक्षणं । पंचगव्यकरणं । यज्ञसंभाराणांप्रोक्षणं । भूमिपूजनं ॥
ततोवास्तुपूजनं ॥ शुभपुण्यतिथौ प्रारिप्सितस्यकर्मणःसांगतासिद्ध्यर्थं वास्तुमंडलदेवतास्थापनंपूजनंचक० ॥ मण्डल-
स्याग्नेयादिकोणेषुशङ्कुचतुष्टयंदद्यात् ॥ तत्रमंत्रः ॥ ॐ विशंतुभूतलेनागालोकपालाश्चसर्वतः ॥ अस्मिंस्थलेऽवतिष्ठन्तुआ-
युर्बलकराःसदा ॥ प्रतिरोपणमन्त्रावृत्तिः ॥ शंकून्सूत्रेणवेष्टयेत् ॥ तत्रमन्त्रः ॥ अग्निभ्योप्यथसर्पेभ्योयेचान्येतान्समा-
श्रिताः ॥ बलिंतेभ्यःप्रयच्छामिपुण्यमोदनमुत्तमं ॥ १ ॥ नैर्ऋत्यधिपतिश्चैवनैर्ऋत्यांयेचराक्षसाः । बलिंतेभ्यःप्रयच्छा-
मिपुण्यमो० ॥ २ ॥ नमोस्तुवायुरक्षोभ्योयेचान्येतान्समाश्रिताः ॥ बलिंतेभ्यःप्रयच्छामिपुण्यमो० ॥ ३ ॥ रुद्रेभ्यश्चैव
सर्पेभ्योयेचान्येतान्समाश्रिताः ॥ बलिंतेभ्यःप्रयच्छामिगृह्णंतुसततोत्सुकाः ॥ ४ ॥ ॐ कारादिनमोन्तैर्नामभिःपश्चा-
दारभ्यप्रागन्ताउदक्संस्थाद्वादशरेखाःकुर्यात् ॥ ॐ शान्त्यैनमः १ एवंप्रणवःसर्वत्र ॥ यशोवत्यै० २ काल्यै० ३ विशा-

लायै० ४ प्राणवाहिन्यै० ५ सत्यायै० ६ सुमनायै० ७ नंदायै० ८ सुभद्रायै० ९ सुरथायै० १० स्थिरायै० ११ विरजायै० १२ ॥ दक्षिणारंभाउदगन्ताःप्राक्संस्थाद्वादशरेखाःकुर्यात् ॥ ॐ हिरण्यायै० १ सुप्रभायै० २ लक्ष्म्यै० ३ विभूत्यै० ४ विमलायै० ५ प्रियायै० ६ जयायै० ७ कालायै० ८ विशोकायै० ९ इन्द्राण्यै० १० विभवायै० ११ शिवायै० १२ ॥ ततोरेखादेवताःसंपूज्य मध्येमण्डूकादिपीठदेवताआवाहयेत् ॥ ॥ ॐ कारःसर्वत्र ॥ ॐ मण्डूकायनमः मूलप्रकृत्यैनमः आधारशक्त्यैनमः कूर्मायनमः अनंताय० श्वेतद्वीपाय० कल्पवृक्षाय० रत्नमण्डपाय० सिंहासनाय० ॥ ततःप्रागादिदिक्षु ॥ धर्माय० ज्ञानाय० वैराग्याय० ऐश्वर्याय० ॥ आग्नेयादिचतुर्षुकोणेषु ॥ अधर्माय० अज्ञानाय० अवैराग्याय० अनैश्वर्याय० ॥ मध्ये ॥ ॐ आत्मने० अन्तरात्मने० ज्ञानात्मने० परमात्मने० अग्निमण्डलाय० सोममण्डलाय० सूर्यमण्डलाय० संसत्वात्मने० रंरजसे० तंतमसे० सर्वशक्तिकमलासनाय० ॥ मध्ये पञ्चविंशतिपदेहृदये ॐ ब्रह्मणेनमः ब्रह्माणंसांगंसपरिवारं सायुधंसशक्तिकं सवाहनमावाहयामि ॥ तत्पुरतः द्वादशपदोऽर्यमा ॥ अर्यम्णेन० अर्यमणमा० ॥ सवितादक्षिणेतद्वत् ॥ सवित्रेनमः सवितारमा० ॥ विवस्वान्पश्चिमेतद्वत् ॥ विवस्वतेनमः विवस्वंतमा० ॥ उत्तरेद्वादशपदे ॥ विबुधाधिपतयेनमः विबुधाधिपतिं० आग्नेयेएकपदे ॥ मित्राय० मित्रमा० ॥ नैर्ऋत्यएकपदे ॥ राजयक्ष्मणे० राजयक्ष्माणमा० ॥ वायव्यएकपदे ॥ पृथ्वीधराय० पृथ्वीधरं ॥ ईशान्यएकपदे ॥ आपवत्साय० आपवत्सं० ॥ आपवत्सादीशानएकपदे ॥ आपाय० आपं० ॥ मित्रादाग्नेयएकपदे ॥ सावित्राय० सावित्रं० ॥ राजयक्ष्मणोनैर्ऋत्य-

एकपदे ॥ जयाय० जयं० ॥ पृथ्वीधराद्वायव्यएकपदे ॥ रुद्राय० रुद्रं० ॥ ॐ कारादिनमोंतैःसर्वत्र ॥ ततईशानकोणादारभ्यप्रदक्षिणक्रमेणशिख्यादिद्वात्रिंशद्देवताःस्थापयेत् ॥ ईशान्येत्रिपदे ॥ शिखिनेनमः शिखिनंआ० ॥ तदग्रतःपर्जन्यादयःसप्तएकपदे आकाशपर्यंताःपूर्वपंक्तौस्थाप्याः ॥ पर्जन्याय० पर्जन्यं० जयंताय० जयंतं० कुलिशाययुधाय० कुलिशायुधं० सूर्याय० सूर्यं० भृशाय० भृशं० आकाशाय० आकाशं० ॥ आग्नेयेत्रिपदे ॥ वायवे० वायुंआ० ॥ पूषादयः सप्तएकपदाःदक्षिणपंक्तौस्थापनीयाः ॥ पूष्णे० पूषणं० वितथाय० वितथं० ग्रहक्षताय० ग्रहक्षतं० यमाय० यमं० गंधर्वाय० गंधर्वं० भृंगराजाय० भृंगराजं० मृगाय० मृगं० ॥ नैर्ऋत्येत्रिपदे ॥ पितृभ्यो० पितॄन्० ॥ दौवारिकादयः पापपर्यंताःपश्चिमपंक्तौसप्तस्थापनीयाः ॥ दौवारिकाय० दौवारिकं० सुग्रीवाय० सुग्रीवं० पुष्पदंताय० पुष्पदंतं० वरुणाय० वरुणं० असुराय० असुरं० शोषाय० शोषं० आपाय० आपं० ॥ वायव्येत्रिपदे ॥ रोगाय० रोगं० ॥ अह्याद्यःसप्तएकपदादितिपर्यंताःउत्तरपंक्तौस्थापनीयाः ॥ अहये० अहिं० मुख्याय० मुख्यं० भल्लाटाय० भल्लाटं० सोमाय० सोमं० सर्पाय० सर्पं० अदित्यै० अदितिं० दित्यै० दितिं० ॥ ततोमंडलाद्बहिरीशानकोणे ॥ चरक्यै० चरकीं० ॥ आग्नेये ॥ विदार्यै० विदारीं० ॥ नैर्ऋत्ये ॥ पूतनायै० पूतनां० ॥ वायव्ये ॥ पापराक्षस्यै० पापराक्षसीं ॥ पूर्वादिदिक्षु ॥ स्कंदाय० स्कंदं० अर्यम्णे० अर्यमणं० जृंभकाय० जृंभकं० पिलिपित्साय० पिलिपित्सं० ॥ ततःपूर्वादिदशदिक्षु ॥ इंद्राय० इंद्रं० अग्नये० अग्निं० यमाय० यमं० निर्ऋतये० निर्ऋतिं० वरुणाय० वरुणं० वायवे० वायुं०

सोमाय० सोमं० ईशानाय० ईशानं० ब्रह्मणे० ब्रह्माणं० अनंताय० अनंतंआ० ॥ पूर्वे ॥ उग्रसेनाय० उग्रसेनं० ॥
दक्षिणे० ॥ डामराय० डामरं० ॥ पश्चिमे ॥ महाकालाय० महाकालं० ॥ उत्तरे ॥ पिलिपित्साय० पिलिपित्सं० ॥
ततोवास्तुमण्डलस्थदेवतानांषोडशोपचारैःपूजनंकृत्वा पदेपुपायसबलिंदद्यात् ॥ ॐ ब्रह्मणेनमः पायसबलिंसमर्पयामि० ॥
अर्यम्णे० सवित्रे० विवस्वते० विबुधाधिपतये० मित्राय० राजयक्ष्मणे० पृथ्वीधराय० आपवत्साय० आपाय० सावि-
त्राय० जयाय० रुद्राय० शिखिने० पर्जन्याय० जयंताय० कुलिशायुधाय० सूर्याय० सत्याय० भृशाय० आकाशाय०
वायवे० पूष्णे० वितथाय० गृहक्षताय० यमाय० गंधर्वाय० भृंगराजाय० मृगाय० पितृभ्यो० दौवारिकाय० सुग्री-
वाय० पुष्पदंताय० वरुणाय० असुराय० शोषाय० पापाय० रोगाय० अहये० भल्लाटाय० मुख्याय० सोमाय० सर्पा-
य० अदित्यै० दित्यै० चरक्यै० विदार्यै० पूतनायै० पापराक्षस्यै० स्कंदाय० अर्यम्णे० जृंभकाय० पिलिपित्साय०
इन्द्राय० अग्नये० यमाय० निर्ऋतये० वरुणाय० वायवे० सोमाय० ईशानाय० ब्रह्मणे० अनंताय० उग्रसेनाय० डाम-
राय० महाकालाय० पिलिपित्सायनमः पायसबलिं० ॥ वास्तुमण्डलमध्येमहीद्यौरित्यादिविधिना प्रसन्नोभवसर्वदेत्यंतं-
कलशस्थापनं ॥ वास्तुध्रुवमूर्त्योःअग्न्युत्तारणप्राणप्रतिष्ठापूर्वकंषोडशोपचारैःपूजनं ॥ इतिवास्तुपूजनं ॥ ॥ ततःकुंडेस्थंडि-
लेवापञ्चभूसंस्कारान्कृत्वा स्वगृह्योक्तविधानेनाग्निंप्रतिष्ठाप्य यूपप्रतिष्ठांकुर्यात् ॥ ॥ अत्रयूपप्रतिष्ठा ॥ ततःप्रधानवेदेःपूर्वतः
मंडपपक्षेमंडपाद्बहिःपूर्वेयूपार्थमवटंजानुमात्रंकृत्वा तत्रप्रागग्रान्दर्भानास्तीर्यअद्भिरभ्युक्ष्यसलक्षणंयूपंहरिद्रातैलाभ्यामभ्य-

ज्यतीर्थोदकेनस्नापयित्वा गौरसर्षपगोरोचनगुग्गुलुदूर्वानिंबपत्रगर्भांपोटलिकां यदाबध्नन्निति मन्त्रेणबध्वा युवासुवासा इतिवस्त्रेणवेष्टयेत् ॥ ततोगर्तेहरिद्राकुंकुमदध्योदनाक्षताचंदनदूर्वालाजांश्चप्रक्षिप्य ॐ ध्रुवोसिध्रु० इतिमन्त्रेणतस्मिन्गर्ते-प्रतिष्ठाप्य कुंकुमेनसमालिप्य गंधपुष्पधूपदीपनैवेद्यादिनापूजयित्वा ॥ ॐ ऊर्ध्वऽऊषुण० इत्यभिमंत्र्य नमस्कुर्यात् ॥ इतियूपप्रतिष्ठा ॥ ॥ ततोवास्तुवेदेरुत्तरतःप्रधानवेदिंकृत्वावेद्यांवारुणमण्डलं सर्वतोभद्रमंडलंवाविरच्यमंडलदेवताः स्थापयेत् ॥ ॥ प्रारिप्सितकर्मणोंगत्वेनवारुणमंडलदेवतास्थापनंपूजनंचकरिष्ये ॥ दिक्षुविदिक्षुप्रागादिक्रमेण स्वस्व-नाममंत्रैरष्टौग्रहान्स्थापयेत् ॥ पूर्वपत्रे ॐ सूर्याय० सूर्यं ॥ आग्नेयपत्रे सोमाय० सोमं० ॥ दक्षिणपत्रे भौमाय० भौमं० ॥ नैर्ऋत्यपत्रे बुधाय० बुधं० ॥ पश्चिमपत्रे बृहस्पतये० बृहस्पतिं० ॥ वायव्यपत्रे शुक्राय० शुक्रं० ॥ उत्तरपत्रे शनैश्चराय० शनैश्चरं ॥ ईशानपत्रे राहवे० राहुं० केतुभ्यः० केतून्० ॥ पुनःपूर्वादिक्रमेणअष्टौलोकपालानावाहयेत् ॥ तत्रमन्त्राः ॥ ॐ त्रातारमिं० इंद्राय० इंद्रं० ॥ आग्नेये ॐ त्वंनोअग्ने० अग्नये० अग्निं० ॥ दक्षिणे० ॐ यमायत्वा० यमाय० यमं० ॥ नैर्ऋत्यां ॐ असुन्वन्त० निर्ऋतये० निर्ऋतिं ॥ पश्चिमे ॐ तत्त्वायामि० वरुणाय० वरुणं० ॥ वायव्ये ॐ आनोनियुद्भिः० वायवे० वायुं० ॥ उत्तरे ॐ वयᳲसोम० सोमाय० सोमं० ॥ ईशान्यां ॐ तमीशानंज० ईशानाय० ईशानं० ॥ वायुसोममध्येआरासु ॥ ॐ वसोःपवित्र० वसुभ्यो० वसून्० ॥ सोमेशांतराले ॥ ॐ नमस्तेरुद्र० रुद्रेभ्यो० रुद्रान्० ॥ ईशानेंद्रांतराले ॐ आकृष्णेन० आदित्येभ्यो० आदित्यान्० ॥ इंद्राग्न्यंतराले ॐ अश्विनातेजसाच० अश्वि-

भ्यांन० अश्विनौ० ॥ अग्नियमांतराले ॐ विश्वेदेवासआगत० विश्वेभ्योदेवेभ्यो० विश्वान्देवान्० ॥ यमनैर्ऋत्यंतराले
ॐ अभित्यंदेवं० सप्तयक्षेभ्यो० सप्तयक्षान्० ॥ निर्ऋतिवरुणांतराले ॐ आयंगौः० भूतनागेभ्यो० भूतनागान्० ॥ वरु-
णवाय्वंतराले ॐ नदीभ्यःपौंजि० गंधर्वाप्सरोभ्यो० गंधर्वाप्सरसःआ० ॥ सौम्याद्यष्टपत्रेषु ॐ यदक्रंदः प्र० स्कंदाय०
स्कंदं० ॥ ॐ धातारातिःस० दक्षादिभ्यो० दक्षादीन्० ॥ ॐ श्रीश्चतेल० दुर्गायै० दुर्गां० ॥ तत्रैव० ॐ विष्णोरराट०
विष्णवे० विष्णुं० ॥ ॐ उदीरताम० स्वधाकाराय० स्वधाकारं० ॥ ॐ परंमृत्योअ० मृत्युरोगेभ्यो० मृत्युरोगान् ॥
ॐ गणानांत्वा० गणपतये० गणपतिं० ॥ ॐ वरुणस्योत्त० अद्भ्यो० अपआ० ॥ मरुतोयस्य० मरुद्भ्यो० मरुतआ० ॥
अथकर्णिकायां मध्ये ॥ ॐ वरुणाय० वरुणं० ॥ द्वितीयकेसरमूलेषु उत्तरादितः ॥ ॐ ब्रह्मणे० ब्रह्माणं० ॥ विष्णवे०
विष्णुं० ॥ रुद्राय० रुद्रं० ॥ लक्ष्म्यै० लक्ष्मीं० ॥ अंबिकायै० अंबिकां ॥ सावित्र्यै० सावित्रीं० ॥ सरिद्भ्यो० सरितः ॥
समुद्रेभ्यो० समुद्रान् ॥ ब्रह्मणःपादमूले ॥ ॐ भूतग्रामाय० भूतग्रामामं० ॥ ततोनाम्नाकर्णिकोपरि ॥ ॐ मेरवे० मेरुं० ॥
बाह्यपरिधौसोमादिसमीपे ॥ ॐ गदायै० गदां० ॥ ईशानांतिके त्रिशूलाय० त्रिशूलं० ॥ इंद्रांतिके वज्राय० वज्रं० ॥
अग्निसमीपे शक्तये० शक्तिं० ॥ यमांतिके दंडाय० दंडं० ॥ निर्ऋतिसमीपे खड्गाय० खड्गं० ॥ वरुणांतिके पाशाय०
पाशं० ॥ वायुसमीपे अंकुशाय० अंकुशं० ॥ तद्बाह्योत्तरे गौतमाय० गौतमं० ॥ ईशान्ये० भरद्वाजाय० भरद्वाजं० ॥
पूर्वेविश्वामित्राय० विश्वामित्रं० ॥ आग्नेय्यां कश्यपाय० कश्यपं० ॥ दक्षिणे जमदग्नये० जमदग्निं० ॥ नैर्ऋत्यां वसि-

ष्ठाय० वसिष्ठं० ॥ पश्चिमे अत्रये० अत्रिं० ॥ वायव्ये अरुंधत्यै० अरुंधतीं० ॥ तद्बाह्येपूर्वे० ऐंद्र्यै० ऐंद्रीं० ॥ आग्नेय्यां कौमार्यै० कौमारीं० ॥ दक्षिणे ब्राह्म्यै० ब्राह्मीं० ॥ नैर्ऋत्यां वाराह्यै० वाराहीं० ॥ पश्चिमे चामुंडायै० चामुंडां० ॥ वायव्यां वैष्णव्यै० वैष्णवीं० ॥ उत्तरे कौबेर्यै० कौबेरीं० ॥ ईशान्ये वैनायक्यै० वैनायकीं० ॥ एवमावाह्य वारुणमंडलदेवताःसंपूज्य पायसबलिंदत्वा होमसमयेतत्तन्मन्त्रैर्नाममंत्रैर्वादशदशतिलाहुतीरेकैकामाज्याहुतिंवाजुहुयात् ॥ ॐ सूर्यायनमः पायसबलिंस० सोमाय० भौमाय० बुधाय० बृहस्पतये० शुक्राय० शनैश्चराय० राहवे० केतुभ्यो० इंद्राय० अग्नये० यमाय० निर्ऋतये० वरुणाय० वायवे० सोमाय० ईशानाय० वसुभ्यो० रुद्रेभ्यो० आदित्येभ्यो० अश्विभ्यां० विश्वेभ्योदेवेभ्यो० सप्तयक्षेभ्यो० भूतनागेभ्यो० गंधर्वाप्सरोभ्यो० स्कंदाय० दक्षादिभ्यो० दुर्गायै० विष्णवे० स्वधाकाराय० मृत्युरोगेभ्यो० गणपतये० अद्भ्यो० मरुद्भ्यो० वरुणाय० ब्रह्मणे० विष्णवे० रुद्राय० लक्ष्म्यै० अंबिकायै० सावित्र्यै० सरिद्भ्यो० समुद्रेभ्यो० भूतग्रामाय० भैरवे० गदायै० त्रिशूलाय० वज्राय० शक्तये० दंडाय० खड्गाय० पाशाय० अंकुशाय० गौतमाय० भरद्वाजाय० विश्वामित्राय० कश्यपाय० जमदग्नये० वसिष्ठाय० अत्रये० अरुंधत्यै० ऐंद्र्यै० कौमार्यै० ब्राह्म्यै० वाराह्यै० चामुण्डायै० वैष्णव्यै० कौबेर्यै० वैनायक्यै० पायसबलिंस० ६९ ॥ इतिबलिः ॥ ततोमंडलमध्येमहीद्यौरित्यादिप्रसन्नोभवसर्वदेत्यंतंकलशंप्रतिष्ठाप्य तदुपरिसौवर्णप्रतिमाचतुष्टयस्याग्न्युत्तारणं प्राणप्रतिष्ठां चकृत्वा ॥ ॐ ब्रह्मजज्ञानंप्र० ब्रह्मणे० ब्रह्माणं १ ॐ इदंविष्णुर्वि० विष्णवे० विष्णुं० २ ॐ श्रीश्चतेल० श्रियै० श्रियं०

३ ॐ आकृष्णेनर० सूर्याय० सूर्यं० ४ इत्यावाह्य ॥ ततइंद्राद्यष्टौलोकपालान्वैदिकमन्त्रैर्नाममंत्रैर्वाआवाह्य द्वादशदेवताः संपूज्य ॥ प्रधानवेदेरुत्तरतोग्रहवेद्यांग्रहानावाह्यसंपूज्य ग्रहपीठादीशान्यां महीद्यौरित्यादिकलशंसंस्थाप्य तत्रवरुणमावाह्यपूजयेत् ॥ ततोऽन्वादध्यात् ॥ चक्षुष्यंतमुक्त्वात्रप्रधानं आदित्यादिनवग्रहान्अष्टाष्टसंख्ययाअर्कादिसमिच्चरुघृताक्ततिलाज्याहुतिभिः । अधिदेवताप्रत्यधिदेवताश्चतुश्चतुःसंख्याकाभिस्तैरेवद्रव्यैः । विनायकादिदेवताः द्विद्विसंख्याकाभिस्तैरेवद्रव्यैः । इंद्रादीनेकैकयातैरेवद्रव्यैः । वास्तोष्पतिंवास्तोष्पतइतिमन्त्रेणअष्टाविंशतिसंख्याकाभिः औदुंबरसमिच्चरुतिलाज्याहुतिभिः । ध्रुवंध्रुवासिइतिमन्त्रेणाष्टसंख्याकाभिःपूर्वोक्तद्रव्यैः ॥ पुनरत्रप्रधानं ॥ ब्रह्माणं विष्णुं श्रियं सूर्यं अष्टोत्तरशतमष्टाविंशतिरष्टौवा पालाशसमित्पायसतिलाज्याहुतिभिः । इंद्राद्यष्टौलोकपालदेवताः एकैकयाज्याहुत्या । पुरुषसूक्तेनप्रत्यृचमेकैकयाज्याहुत्या । कूष्मांडमन्त्रैः प्रत्यृचमेकैकयाज्याहुत्या । ब्रह्मादिवास्तुमंडलदेवतावारुणमण्डलदेवताश्चदशदशतिलाहुतिभिरेकैकयाज्याहुत्यावा । अग्निंस्विष्टकृतंप्रधानद्रव्यशेषेण । अग्निं वायुं सूर्यं अग्नीवरुणौ अग्नीवरुणौ अग्निं वरुणं सवितारं विष्णुं विश्वान्देवान् मरुतः स्वर्कान् वरुणं प्रजापतिं एता अंगप्रधानार्थादेवताआज्येन अस्मिन्कर्मण्यहंयक्ष्ये ॥ अग्नेर्दक्षिणतोब्रह्मासनास्तरणादिआज्यभागांतंकृत्वा संपातोदककलशंसंस्थाप्य प्रतिश्रयसमीपंगत्वा क्रमध्वमग्निना इत्यनुवाकेन जलधारांपातयेत् ॥ ॐ क्रमध्वमग्निना० १ प्राचीमनुप्रदिशं० २ पृथिव्याअहमुदं० ३ स्वर्यंतोनापेक्ष० ४ अग्नेप्रेहिप्रथ० ५ नक्तोषासासमनसा० ६ अग्नेसहस्राक्षशतमूर्ध० ७ सुपर्णोसिगरुत्मा-

न्पृष्ठेपृथिव्याःसीद ॥ भासांतरिक्षमापृणज्योतिपादिवमुत्तभानतेजसादिशउद्दृंह० ८ आजुह्वानःसुप्रतीकः० ९ तांसवितुर्वरेण्यस्य० १० विधेमते० ११ प्रेद्धोअग्नेदीदिहि० १२ अग्नेतमद्या० १३ चित्तंजुहोमिम० १४ सप्ततेअग्ने० १५ इतिजलैरभिषिच्य ॥ ततः अग्निर्मूर्धेतिमन्त्रेणद्वादशवारंमृज्जलेनसंशोध्य ॥ यज्ञायज्ञावइतिकषायैः ॥ प्रसद्यभस्मनेति भस्मना ॥ इदंविष्णुरितिहरिद्रयाउद्वर्त्य ॥ घृतंघृतपावानइतिघृतेनाभ्यज्य ॥ याओषधीरितिसर्वौषधीभिः ॥ यदूवध्येतिगंधोदकेन ॥ तत्सवितुरितिगोमूत्रेण ॥ गंधद्वारामितिगोमयेन ॥ आप्यायस्वेतिक्षीरेण ॥ दधिक्राव्णइतिदध्ना ॥ तेजोसीत्याज्येन ॥ देवस्यत्वेतिकुशोदकेन ॥ उद्वर्तनेनोद्वर्त्य ॥ उष्णोदकेनप्रक्षाल्य ॥ गंधादिपूजांकृत्वा ॥ प्रतिश्रयसमंततः अष्टदिक्षुअष्टकलशान्स्थापयेत् ॥ तत्रवरुणमावाह्यपूजयेत् ॥ ततःस्थापितकलशैरापोहिष्ठादिमन्त्रैरभिषिच्यमूलमन्त्रेणगंधादिभिःपूजयेत् ॥ तथैवाष्टौदीपान्प्रज्वाल्यमूलमन्त्रेणस्तुवीत ॥ कुंडेस्थंडिलेवासमीपमागत्यहोमंकुर्यात् ॥ आदौग्रहहोमः ॥ ततोवास्तुहोमः ॥ प्रधानहोमः ॥ पुरुषसूक्तहोमः ॥ कूष्मांडहोमः ॥ यद्देवादेवहेडनमितित्रिभिःकूष्मांडमन्त्रैरेकाज्याहुतिंजुहुयात् ॥ वास्तुमंडलहोमः ॥ वारुणमंडलहोमः ॥ प्रायश्चित्तार्थंव्याहृतिहोमः ॥ ॥ एवंहोमंसंपाद्य ॥ पूजास्विष्टंनवाहुत्योबलिःपूर्णाहुतिस्तथा ॥ श्रेयःसंपाद्यदानंचअभिषेकोविसर्जनम् ॥ एवंबलिदानंकृत्वाप्रधानदेवताबलिंदद्यात् ॥ चरुतिलचूर्णसर्पिस्सक्तुकरंभानेकत्रमिश्रीकृत्यप्रधानदेवतापरितः प्रदक्षिणक्रमेणपूर्वोक्तब्रह्मादिद्वादशनामभिर्बलिंदद्यात् ॥ ततःपूर्णाहुतिंहुत्वाप्रतिश्रयसमीपेगत्वा पुरुषसूक्तेनस्तुवीत ॥ संपातकलशोदकं अष्टकलशोदकंच एकस्मि-

न्पात्रेकृत्वातेनोदकेनआपोहिष्ठेतितिसृभिः हिरण्यगर्भइतिचतसृभिः पुनंतुमेतिनवभिः समुद्रायत्वाइत्येकया इदमापः प्रवहतइतिमन्त्रैःसंस्नाप्य प्राणप्रतिष्ठापूर्वकंषोडशोपचारैःपूजांकृत्वा ॥ ॐ नमोभगवतेवासुदेवाय इतिमूलमन्त्रेणासनावाहनपाद्यार्घाचमनीयपंचामृतैःसंस्नाप्य शुद्धोदकेनशंखोदकेनवामूलमन्त्रेणाष्टाविंशतिवारंसंस्नाप्य वस्त्रादिदक्षिणांतांपूजां प्रकल्प्य ॥ ततःपुरुषाहारपर्याप्तंबह्वाज्यंशर्करोपेतंपायसंवानिवेद्य हिरण्यगर्भइत्यष्टौमन्त्रान्जपेत् ॥ ॐ हिरण्यग० १ यआत्मदा० २ यःप्राणतो० ३ यस्येमे० ४ येनद्यौ० ५ ॥ यंक्रंदसी० ६ आपोहयद्० ७ यश्चिदापो० ८ मूलेनषडंगन्यासं कृत्वा ॥ उत्सर्गः ॥ कुशयवजलान्यादाय ॥ इदंगुरुपादुकाचिह्नितस्थानंप्रदक्षिणार्थंपूजार्थं सर्वेभ्योभूतेभ्योऽहमुत्सृज्ये ॥ प्रासादश्चेत् ॥ इदंशिलेष्टकादार्वादिनिर्मितंवलभीजगतीप्राकारगोपुरपरिवारदेवतालयसंयुतगुरुपादुकादिचिह्नितस्थानं तत्तद्देवतालोककामः कुलद्वयानुग्रहायप्रदक्षिणार्थंपूजार्थंचसर्वेभ्योभूतेभ्यःअमुकदेवताप्रीतयेअहमुत्सृज्ये इतिकुशजलयवान्निक्षिप्यदेवंनत्वाप्रार्थयेत् ॥ स्वागतंदेवदेवेशमद्भाग्यात्त्वमिहागतः ॥ स्वारुदंस्त्वामदृष्ट्वातुबालवद्भक्तिवत्सल ॥ धर्मार्थकामसिद्ध्यर्थंस्थिरोभवशुभायनः ॥ सान्निध्यंहिसदादेवस्वार्चायांपरिकल्पय ॥ यावच्चंद्रावनीसूर्यास्तिष्ठंत्यप्रतिपातिनः ॥ तावत्त्वयात्रदेवेशत्वंपितासर्वदेहिनां ॥ येनरूपेणभगवंस्त्वयाव्याप्तंचराचरं ॥ तेनरूपेणदेवेशस्वार्चायांसंनिधोभव ॥ इतिसकलत्रःशरणंप्रपद्य ॥ त्वामेकमाद्यंपुरुषंपुरातनंनारायणंविश्वसृजांयजामहे ॥ त्वमेकयज्ञोविहितोविधेयस्त्वमात्मनात्मन्प्रतिगृह्णहव्यं ॥ इतिस्तुत्वाश्रेयःसंपाद्यदानं । आचार्यपूजनं । सर्वकलशोदकेनाभिषेकः ॥ तत्रमन्त्राः ॥

आपोहि० ३ स्तोकानामिं० आयात्विं० आनइंद्रोदूरा० । त्रातारमिं० इमंमे० तत्त्वायामि० त्वन्नो० सत्वन्नो० उदुत्तमं० भगप्रणे० इदमापः० समुद्रायत्वा० पुनंतुमा० आप्यायस्व० पंचनद्यःस० शिरोमे० जिह्वामे० बाहूमे० पृष्ठीर्मे० नाभिर्मे० जंघाभ्यां० देवस्यत्वा० ३ विश्वानिदे० धामध० त्वंअवि० अन्नप० पालाशंभ० ५ सुरास्त्वा० ॥ एवमभिषेकानंतरंसर्वौषधीभिरनुलिप्यशुद्धोदकेनस्नात्वाशुक्लमाल्यांबरधरोयजमानःआचार्यायगांदद्यात् ॥ कृतस्यसग्रहमखगुरुपादुकाचिह्नितस्थानोत्सर्गाख्यस्यकर्मणःसां० ऋत्विग्भ्योहोमकर्तृभ्यश्चदक्षिणादानं ॥ भूयसींदत्वा ब्राह्मणभोजनसंकल्पः ॥ इदंमातृकापीठं वास्तुपीठं वारुणमंडलपीठं आचार्यायतु० ॥ इदंग्रहपीठंग्रामाचार्यायतु० ॥ विसर्जनं ॥ यांतुदेवग० ॥ यस्यस्मृत्येत्यादि कर्मेश्वरार्पणंकुर्यात् ॥ ॥ इतिश्रीदीक्षितोपाभिधगोपालात्मजपद्मनाभविरचितेप्रयोगदर्पणे समाध्युत्सर्गप्रयोगः ॥ ॥

अथवास्तुशांतिः ॥ ॥ आचमनं । प्राणायामः । शांतिसूक्तपठनं । देशकालौसंकीर्त्यममपुत्रपौत्रादिसहितस्यआयुरारोग्यधनधान्याद्यैश्वर्यपुत्रपौत्राद्यनवच्छिन्नसंतत्यभिवृद्धिपूर्वकं(सुवर्णरजतताम्रत्रपुसीसककांस्यलोहपाषाणाद्यष्टशल्यमेदिनीदोष—आयव्ययाद्यन्यथाभवनदोषपरिहारार्थंनानाविधहिंसादोषपरिहारार्थं)अस्मिन्नूतनगृहेचिरकालनिवासार्थंश्रीपरमेश्वरप्रीत्यर्थंसग्रहमखांवास्तुशांतिंगृहप्रवेशाख्यंकर्मचाहंकरिष्ये । तदंगंस्वस्तिपुण्याहवाचनंमातृकापूजनंवसोर्धारापूजनं आयुष्यमंत्रजपंनांदीश्राद्धंचाहंकरिष्ये । तत्रादौनिर्वि०गणपतिपूजनंक०॥नांदीश्राद्धांतंकृत्वाऋत्विजोष्टौचतुरोवावृत्वाययथा

विभवंपूजयेत् ॥ ॥ अथातःशालाकर्म ॥ ततःशुचौदेशेप्रादेशमात्रंस्थंडिलंकृत्वातत्रपंचभूसंस्कारान्कृत्वाग्निंप्रतिष्ठाप्य पूर्णाहुतिवदाज्यंसंस्कृत्यनिरुप्याज्यमधिश्रित्यस्रुवंचदर्भैःसंमृज्यउद्वास्यउत्पूयअवेक्ष्य स्तंभावटेपुचतुर्पुकोणेपुआग्नेयकोणा- दारभ्यस्रुवेणजुहुयात् ॥ तत्रमन्त्रः ॥ ॐ अच्युतायभौमायस्वाहा । इदमच्युतायभौमायनमम ॥ एवंनैर्ऋत्येवायव्येई- शान्येचशैलगृहेचतुर्पुकोणशिलास्थानेपुहोमः शिलानांस्तंभस्थानीयत्वात् ॥ आग्नेयादिक्रमेणअवटेतूष्णींशिलास्थापनं । तदुपरि ॥ स्तंभमुच्छ्रयति ॥ तत्रमन्त्रः ॥ इमामुच्छ्रयामिभुवनस्यनाभिंवसोर्धारांप्रतरणींवसूनां ॥ इहैवध्रुवांनिमिनोमिशालां क्षेमेतिष्ठतुघृतमुक्षमाणा ॥ अश्वावतीगोमतीसूनृतावत्युच्छ्रयस्वमहतेसौभगाय ॥ आत्वाशिशुराक्रंदत्वागावोधेनवोवा- श्यमानाः ॥ आत्वाकुमारस्तरुणआवत्सोजगदैःसह ॥ आत्वापरिस्रुतःकुंभआदध्नःकलशैरुप ॥ क्षेमस्यपत्नीबृहतीसुवा- सारयिंनोधेहिसुभगेसुवीर्यं ॥ अश्वावद्गोमदूर्जस्वत्पर्णंवनस्पतेरिव ॥ अभिनःपूर्यताᳬरयिरिदमनुश्रेयोवसानः ॥ स्तंभच- तुष्टयोच्छ्रयणेएतान्मन्त्रान्शैलगृहेएभिर्मंत्रैःपठेत् ॥ ततगृहमध्येएकहस्तंकुंडंस्थंडिलंवा । तदीशान्यांचतुरंगुलोन्नतांहस्तमा- त्रांवास्तुवेदिंचविधाय ततोवामहस्तेगौरसर्षपान्गृहीत्वादिग्रक्षणंकुर्यात् ॥ तत्रमन्त्रः ॥ ॐ रक्षोहणंवलग० ॥ अपस- र्पंतु० तेसर्वेवास्तुयागंकरोम्यहं ॥ इतिसर्षपान्विकिरेत् ॥ उदकोपस्पर्शः ॥ पंचगव्यकरणं ॥ सर्वगृहप्रोक्षणं ॥ भूमि० पूजनं ॥ कुंडेस्थंडिलेवापञ्चभूसंस्कारान्कृत्वाग्निंप्रतिष्ठाप्य अस्मिन्कर्मणिवास्तुमंडलदेवतास्थापनंपूजनमहंकरिष्ये ॥ कारिकायां ॥ ब्रह्माणमादितःकृत्वाशिखिनंवाक्रमेणतु ॥ प्रणवाद्यैर्नाममन्त्रैर्नमोंतैःपूजयेदिमाः ॥ आवाहनादिभिःसर्वै०

रुपचारैःसमाहितः ॥ वास्तुमंडलस्याग्नेयादिकोणेपुशङ्कुचतुष्टयंदद्यात् ॥ तत्रमन्त्रः ॥ ॐ विशंतुभूतलेनागालोकपालाश्चसर्वतः ॥ अस्मिन्गृहेवतिष्ठंतुआयुर्बलकराःसदा ॥ इतिमन्त्रेणरोपयेत् । प्रतिरोपणंमन्त्रावृत्तिः ॥ ततोद्विगुणसूत्रेण सर्वान्वेष्टयेत् ॥ ततआग्नेयादिशङ्कुपार्श्वेमाषभक्तबलीन्दद्यात् ३ तत्रमन्त्राः ॥ ॐ अग्निभ्योप्यथसर्पेभ्योयेचान्येतान्समाश्रिताः । बलिंतेभ्यःप्रयच्छामिपुण्यमोदनमुत्तमम् ॥ १ ॥ नैर्ऋत्यधिपतिश्चैवनैर्ऋत्यांयेचराक्षसाः ॥ बलिंतेभ्यःप्रयच्छामिपुण्यमोदनमुत्तमम् ॥ २ ॥ ओंनमोवायुरक्षोभ्योयेचान्येतान्समाश्रिताः ॥ बलिंतेभ्यःप्रयच्छामिपुण्यमोदनमुत्तमम् ॥ ॥ ३ ॥ रुद्रेभ्यश्चैवसर्पेभ्योयेचान्येतान्समाश्रिताः ॥ बलिंतेभ्यःप्रयच्छामिगृह्णंतुसततोत्सुकाः ॥ ४ ॥ इति ॥ ततोवेद्युपरिवस्त्रेकुंकुमादिनासुवर्णरजतादिशलाकयावा ॐ कारादिनमोन्तैर्नामभिःपश्चादारभ्यप्रागंताउदक्संस्थाःसमाअंगुलद्वयांतरादशरेखाःकुर्यात् ॥ तद्यथा ॥ ॐ कारःसर्वत्रादौ । ॐ शांत्यैनमः । यशोवत्यैनमः । कांत्यैनमः । विशालायैनमः । प्राणवाहिन्यैनमः । सत्यायैनमः । सुमत्यैनमः । नंदायैनमः । भद्रायैनमः । सुरथायैनमः ॥ नामभिस्तथैवदक्षिणारंभाउदग्गताःप्राक्संस्थादशरेखाःकुर्यात् ॥ यथा । ॐ हिरण्यायैनमः । सुप्रभायैनमः । लक्ष्म्यैनमः । विभूत्यैनमः । विमलायैनमः । प्रियायै० । जयायै० । कालायै० । विशोकायै० । इंद्राण्यै० । ततोरेखादेवताःसंपूज्य मध्येमंडूकादिपीठदेवताआवाहयेत् ॥ यथा ॥ ॐ मंडूकायनमः । मूलप्रकृत्यै० । आधारशक्त्यै० । कूर्माय० । अनंताय० । पृथिव्यै० । श्वेतद्वीपाय० । कल्पवृक्षाय० । रत्नमंडपाय० । सिंहासनाय० । इतिमध्ये ॥ ततःप्रागादिदिक्षु ॥ धर्माय० ।

ज्ञानाय० । वैराग्याय० । ऐश्वर्याय० ॥ ततआग्नेयादिकोणेषु ॥ अधर्माय० । अज्ञानाय० । अवैराग्याय० । अनैश्वर्याय० ॥ मध्ये ॥ आत्मने० । अंतरात्मने० । ज्ञानात्मने० । परमात्मने० । अग्निमंडलाय० । सोममंडलाय० । सूर्यमंडलाय० । संसत्त्वाय० । रंरजसे० । तंतमसे० । सर्वशक्तिकमलासनाय० । मध्येनवपदेहृदयेब्रह्माणंसांगंसपरिवारं सशक्तिकंसवाहनं ॐ ब्रह्मणेनमः ब्रह्माणमावाहयामि ॥ तत्पुरतस्त्रिपदेऽर्यमा ॐ अर्यम्णेनमः अर्यमणं० । सवितादक्षिणतस्त्रिपदेतद्वत् सवित्रेनमःसवितारं० । विवस्वान्पश्चिमेत्रिपदेतथा विवस्वतेनमःविवस्वंतंआ० । उत्तरेत्रिपदे विबुधाधिपतये० विबुधाधिपतिं० । आग्नेयेएकपदे मित्राय० मित्रं । नैर्ऋतेएकपदे राजयक्ष्मणे० राजयक्ष्माणं । वायव्ये एकपदे पृथ्वीधराय० पृथ्वीधरं० । ईशान्येएकपदे आपवत्साय० आपवत्सं० । ततआपवत्सादीशानकोणेएकपदे आपाय० आपं० । ततःमित्रादाग्नेयएकपदे सावित्राय० सावित्रं० । राजयक्ष्मणोनैर्ऋतेएकपदे जयाय० जयं० । पृथ्वीधराद्वायव्यएकपदे रुद्राय० रुद्रं० । नमोंतैःसर्वत्र ॥ ततोबाह्यपरिधौईशानकोणादारभ्यप्रदक्षिणक्रमेणशिख्यादिद्वात्रिंशद्देवताःस्थापयेत् ॥ तद्यथा ॥ ईशान्येएकपदे शिखिने० शिखिनंआ० । तदग्रतएकपदे पर्जन्याय० पर्जन्यं० । तदग्रतोजयंतादयःपंचद्विपदाः जयंताय० जयंतं० । कुलिशायुधाय० कुलिशायुधं० । सूर्याय० सूर्यं । सत्याय० सत्यं० । भृशाय० भृशं० । एतेपंचद्विपदाः । तदग्रतआकाशादयस्त्रयएकपदाः । आकाशाय० आकाशं० । पर्जन्यादयः सप्तआकाशपर्यंताःपूर्वपंक्तौस्थापनीयाः । ततआग्नेयकोणएकपदे वायवे० वायुं० । पूषादयसप्तदक्षिणपंक्तौ ॥ दक्षिणे

एकपदे पूष्णेनमः पूषणं० । वितथादयःपंचद्विपदाः । वितथाय० वितथं० । गृहक्षताय० गृहक्षतं० । यमाय० यमं गंधर्वाय० गंधर्वं० । भृंगराजाय० भृंगराजं० । तदग्रतोमृगादयस्त्रयएकपदाः । मृगाय० मृगं० । नैर्ऋत्येएकपदे । पितृभ्योनमः पितॄन्० । ततोदौवारिकादयःसप्तपश्चिमपंक्तौ । पश्चिमेएकपदे दौवारिकाय० दौवारिकं० । सुग्रीवादयः पंचद्विपदाः । सुग्रीवायनमःसुग्रीवं० । पुष्पदंताय० पुष्पदंतं० । वरुणाय० वरुणं० । असुराय० असुरं० । शोपाय० शोषं० । पापादयस्त्रयएकपदाः । पापायनमः पापं० । वायव्यएकपदे रोगाय० रोगं० । अह्यादयःसप्तउत्तरपंक्तौ । उत्तरेएक पदे अहयेनमः अहिं० । मुख्यादयःपंचद्विपदाः । मुख्यायनमःमुख्यं० । भल्लाटायनमः भल्लाटं० । सोमायनमःसोमं० । सर्पायनमःसर्पं० । अदित्यैनमःअदितिं० । ततएकपदे । दित्यैनमःदितिं० । ततोमंडलाद्बहिरीशानकोणे चरक्यैनमः चरकीं० । आग्नेये विदार्यैनमःविदारीं० । नैर्ऋत्ये पूतनायैनमः पूतनां० । वायव्ये पापराक्षस्यैनमः पापराक्षसीं० । ततःपूर्वादिदिक्षु स्कंदायनमःस्कंदं० । दक्षिणे अर्यम्णेनमःअर्यमणं० । पश्चिमे जृंभकायनमः जृंभकं० । उत्तरेपिलिपि-त्सायनमः पिलिपित्सं० । ततःपूर्वादिदिक्षु इंद्रायनमः इंद्रं० । अग्नयेनमः अग्निं० । यमायनमः यमं० । निर्ऋतयेनमः निर्ऋतिं० । वरुणायनमः वरुणं० । वायवेनमः वायुं० । सोमायनमः सोमं० । ईशानायनमः ईशानं० । पूर्वेशानयो-र्मध्ये ब्रह्मणेनमः ब्रह्माणं० । निर्ऋतिपश्चिमयोर्मध्ये अनंतायनमः अनंतं० । ततःपूर्वे उग्रसेनायनमः उग्रसेनं० । दक्षिणे डामरायनमः डामरं० । पश्चिमे महाकालायनमः महाकालं० । उत्तरेपिलिपित्सायनमः पिलिपित्सं० ॥ ततोवास्तु-

मंडलदेवतानांषोडशोपचारैःपूजनं ॥ ततोवास्तुमंडलस्यमध्येकलशस्थापनं ॥ महीद्यौरित्यादिपूर्णपात्रनिधानांतंकृत्वा यथोक्तप्रकारेणकलशंसंपूज्यतत्रतीर्थान्यावाहयेत् ॥ सर्वेसमुद्राःस० प्रसन्नोभवसर्वदा ॥ ततः वास्तोष्पतिध्रुवमूर्त्योःअ-ग्न्युत्तारणंप्राणप्रतिष्ठाच । ॐ वास्तोष्पतेप्र० । वास्तोष्पतयेनमः वास्तोष्पतिं० ॥ ध्रुवासिध्रुवोयं० ॐ ध्रुवायनमः ध्रुवं० ॥ मनोजूतिरितिप्रतिष्ठा ॥ ॐ ह्रींनमोभगवतेवास्तुपुरुषायमहाबलपराक्रमायसर्वदेवाधिवासाश्रितशरीरायब्रह्म-पुत्रायसकलब्रह्मांडधारिणेभूभारार्पितमस्तकायपुरपट्टनप्रासादगृहवापीसरःकूपादिसंनिवेशसांनिध्यकरायसर्वसिद्धिप्रदाय प्रसन्नवदनायविश्वंभरायपरमपुरुषायशक्रवरदायवास्तोनमस्तेनमस्ते ॥ एह्येहिभगवन्वास्तोयज्ञेस्मिन्सर्वसिद्धये ॥ जानुनी-कूर्परासक्तदिशिवातहुताशयोः ॥ इत्यावाह्य ॥ ततोवास्तोष्पतिध्रुवमूर्त्योःपूजनंदक्षिणांतंकृत्वाबलिदानं ॥ एह्येहिभगव-न्वास्तोसपरिवारइमंमयोपनीतंबलिंगृहाणममगृहमच्छिद्रंकुरुकुरुसकलदुष्टेभ्योमांरक्षरक्षस्वाहाइतिबलिः ॥ पुष्पांजलिः ॥ ततःप्रार्थना ॥ यथामेरुगिरेःशृंगंदेवानामालयःसदा ॥ तथाब्रह्मादिदेवानांममगृहेस्थिरोभव ॥ इतिप्रार्थना ॥ ततःपदे-षुवास्तुमंडलदेवतानांस्थापनक्रमेणबलीन्दद्यात् ॥ यथा ॥ ॐकारःसर्वत्र ॥ ॐ ब्रह्मणेनमः बलिंसमर्पयामि ॥ अर्य-म्णेनमः बलिं० । सवित्रे० बलिं० । विवस्वते० बलिं० । विबुधाधिपतये० बलिं० । मित्राय० बलिं० । राजयक्ष्मणे० बलिं० । पृथ्वीधराय० बलिं० । आपवत्साय० बलिं० । आपाय० बलिं० । सावित्राय० बलिं० । जयाय० बलिं० । रुद्राय० बलिं० । शिखिने बलिं० । पर्जन्याय० बलिं । जयंताय० बलिं० । कुलिशायुधाय० बलिं० । सूर्याय० बलिं० ।

सत्याय० बलिं० । भृशाय० बलिं० । आकाशाय० बलिं० । वायवे० बलिं० । पूष्णे० बलिं । वितथाय० बलिं० । गृहक्षताय० बलिं० । यमाय० बलिं० । गंधर्वाय० बलिं० । भृंगराजाय० बलिं० । मृगाय० बलिं० । पितृभ्यो० बलिं० । दौवारिकाय० बलिं० । सुग्रीवाय० बलिं० । पुष्पदंताय० बलिं० । वरुणाय० बलिं० । असुराय० बलिं० । शोषाय० बलिं० । पापाय० बलिं० । रोगाय० बलिं० । अहये० बलिं० । मुख्याय० बलिं० । भल्लाटाय० बलिं० । सोमाय० बलिं० । सूर्याय० बलिं० । अदित्यै० बलिं० । दित्यै० बलिं० । चरक्यै० बलिं० । विदार्यै० बलिं० । पूतनायै० बलिं० । पापराक्षस्यै० बलिं० । पूर्वादिदिक्षु स्कंदाय० बलिं० । अर्यम्णे० बलिं० । जृंभकाय० बलिं० । पिलिपित्साय० बलिं० । इंद्राय० बलिं० । अग्नये० बलिं० । यमाय० बलिं० । निर्ऋतये० बलिं० । वरुणाय० बलिं० । वायवे० बलिं० । सोमाय० बलिं० । ईशानाय० बलिं० । ब्रह्मणे० बलिं० । अनंताय० बलिं० । उग्रसेनाय० बलिं० । डामराय० बलिं० । महाकालाय० बलिं० । पिलिपित्साय० बलिं० ॥ ततोग्रहवेद्यांग्रहस्थापनं ॥ आवाहनाद्युपचारैः पूजनंतदीशान्यांग्रहकलशस्थापनंपूजनंच । ततोदक्षिणतोब्रह्मोपवेशनानंतरंउत्तरतउदपात्रस्थापनं ॥ तेनोदकेनमंदिरंप्रोक्षेत् ॥ ततःप्रणीताप्रणयनादि । स्थालीपाकंश्रपयित्वा । प्रोक्षण्युत्पवनांते । निष्क्रम्य । द्वारसमीपेस्थित्वा । ब्रह्माणमामंत्रयते । ब्रह्मन्प्रविशामीति । ॐ प्रविश ॥ इत्यनुज्ञातःप्रविशति ॐ ऋचंप्रपद्येशिवंप्रपद्यइतिमन्त्रेण ॥ ततःउपयमनकुशानादाय । तिष्ठन्समिधोभ्याधाय । प्रोक्षण्युदकशेषेणसपवित्रहस्तेनाग्नेःपर्युक्षणं । पवित्रयोःप्रणीतासुनिधानं ॥

दक्षिणंजान्वाच्य इहरतिरितिषडाज्याहुतीर्जुहोति ॥ ॐइहरतिरिहरमध्वमिहधृतिरिहस्वधृतिः स्वाहा ॥ इदमग्नयेनमम ॥
ॐ उपसृजंधरुणंमात्रेधरुणंमातरंधयन् ॥ रायस्पोषमस्मासुदीधरत्स्वाहा ॥ इदमग्नयेनमम ॥ अपराश्चतस्रः ॥ ॐ वास्तो
ष्पतेप्रतिजानीह्यस्मान्स्वावेशोअनमीवोभवानः ॥ यत्त्वेमहेप्रतितन्नोजुषस्वशंनोद्विपदेशंचतुष्पदेस्वाहा ॥ इदंवास्तोष्पतये
नमम ॥ ॐ वास्तोष्पतेप्रतरणोनएधिगयस्फानोगोभिरश्वेभिरिंदो ॥ अजरासस्तेसख्येस्यामपितेवपुत्रान्प्रतिनोजुषस्वशं-
नोभवद्विपदेशंचतुष्पदेस्वाहा ॥ इदंवास्तोष्पतये० ॥ ॐ वास्तोष्पतेशग्मयासꣳसदातेसक्षीमहिरण्वयागातुमत्या ॥
पाहिक्षेमउतयोगेवरन्नोयूयंपातस्वस्तिभिःसदानःस्वाहा ॥ इदंवास्तोष्पतये० ॥ ॐ अमीवहावास्तोष्पतेविश्वारूपाण्या-
विशन् ॥ सखासुशेवएधिनःस्वाहा ॥ इदंवास्तोष्पतयेनमम ॥ ततःआघारावाज्यभागौहुत्वा ॥ ॐ प्रजापतयेस्वाहा ॥
इदंप्रजापतये० ॥ ॐ इंद्रायस्वाहा इदमिंद्राय० ॥ ॐ अग्नयेस्वाहा इदमग्नये० ॥ ॐ सोमायस्वाहा इदंसोमाय० ॥
ततश्चरुमभिघार्यस्थालीपाकेनषडाहुतयः ॥ ॐ अग्निमिंद्रंबृहस्पतिंविश्वांश्चदेवानुपह्वये ॥ सरस्वतींचवाजींचवास्तुमेदत्त-
वाजिनःस्वाहा ॥ इदमग्नयइंद्रायबृहस्पतयेविश्वेभ्योदेवेभ्यःसरस्वत्यैवाज्यैचनमम ॥ ॐ सर्पदेवजनान्सर्वान्हिमवन्तꣳ
सुदर्शनं ॥ वसूंश्चरुद्रानादित्यानीशानंजगदैःसह ॥ एतान्सर्वान्प्रपद्येहंवास्तुमेदत्तवाजिनःस्वाहा ॥ इदंसर्पदेवजनेभ्योहि-
मवतेसुदर्शनायवसुभ्योरुद्रेभ्यआदित्येभ्यईशानायजगदेभ्यश्चनमम ॥ ॐ पूर्वाह्णमपराह्णंचोभौमध्यंदिनासह ॥ प्रदोष
मर्धरात्रंचव्युष्टांदेवींमहापथां ॥ एतान्सर्वान्प्रपद्येहंवास्तुमेदत्तवाजिनःस्वाहा ॥ इदंपूर्वाह्णायापराह्णायमध्यंदिनायप्रदो-

पायाधरात्रायव्युष्टायैदेव्यैमहापथायैचनमम ॥ ॐ कर्तारंचविकर्तारंविश्वकर्माणमोषधींश्चवनस्पतीन् ॥ एतान्सर्वान्प्र-
पद्येहंवास्तुमेदत्तवाजिनः स्वाहा ॥ इदंकर्त्रेविकर्त्रेविश्वकर्मणओषधीभ्योवनस्पतिभ्यश्चनमम ॥ ॐ धातारंचविधा-
तारंनिधीनांचपतिंसह ॥ एतान्सर्वान्प्रपद्येहंवास्तुमेदत्तवाजिनः स्वाहा ॥ इदंधात्रेविधात्रेनिधीनांपतयेचनमम ॥
ॐ स्योनंशिवमिदंवास्तुदत्तंब्रह्मप्रजापतीसर्वाश्चदेवताः स्वाहा ॥ इदंब्रह्मणेप्रजापतयेसर्वाभ्योदेवताभ्यश्चनमम ॥ ततो-
द्रव्यत्यागः ॥ ग्रहहोमंसंपाद्यवास्तोष्पतिं ॥ ॐ वास्तोष्पतेप्रतिजा० देस्वाहा इत्यनेनसिद्धौदनेनमधुनाआज्येनय-
वैःकृष्णतिलैः औदुंबरादिक्षीरवृक्षसमिद्भिःप्रतिद्रव्यमष्टोत्तरशतसंख्ययाजुहोति ॥ अत्रसमिधउदुंबरस्यमुख्यास्तदलाभे-
खदिरादीनामपि ॥ तिलाःकृष्णाएव ॥ ततश्चरुणातिलैराज्येनचध्रुवासीत्यनेनमन्त्रेणध्रुवंअष्टोत्तरशतंजुहुयात् ॥ तत
अघोरेणाथमन्त्रेणघृतेनाष्टोत्तरंशतं ॥ जुहुयाद्वास्तुपुंसोपिसंधानार्थंतुमर्मणां ॥ इतिगृह्यकारिकाकारोक्तेःअघोरेभ्यइति
मन्त्रेणआज्येनाष्टोत्तरशतसंख्ययाजुहुयात् ॥ ततोब्रह्मादिवास्तुमंडलदेवताःघृतेनओदने तिलैःक्षीरसमिद्भिःप्रतिद्रव्यं
प्रत्येकंचअष्टसंख्ययाजुहुयात् ॥ ब्रह्मादिदेवतानांअष्टसंख्यापक्षेचरकयादिदेवतानांचतुःसंख्येतिशिष्टाः ॥ अथवासर्वान्
एकैकयाहुत्याजुहुयात्प्रणवादिस्वाहांतैर्नाममन्त्रैः ॥ तद्यथा ॥ ॐ ब्रह्मणेस्वाहा । ॐ अर्यम्णेस्वाहा । ॐ सवित्रेस्वाहा ।
ॐ विवस्वतेस्वाहा । ॐ विबुधाधिपतयेस्वाहा । ॐ मित्रायस्वाहा । ॐ राजयक्ष्मणेस्वाहा । ॐ पृथ्वीधरायस्वाहा ।
ॐ आपवत्सायस्वाहा । ॐ आपायस्वाहा । ॐ सवित्रेस्वाहा । ॐ जयायस्वाहा । ॐ रुद्रायस्वाहा । ॐ शिखिने-

स्वाहा । ॐ पर्जन्यायस्वाहा । ॐ जयंतायस्वाहा । ॐ कुलिशायुधायस्वाहा । ॐ सूर्यायस्वाहा । ॐ सत्यायस्वाहा ।
ॐ भृशायस्वाहा । ॐ आकाशायस्वाहा । ॐ वायवेस्वाहा । ॐ पूष्णेस्वाहा । ॐ वितथायस्वाहा । ॐ गृहक्षताय-
स्वाहा । ॐ यमायस्वाहा । ॐ गंधर्वायस्वाहा । ॐ भृंगराजायस्वाहा । ॐ मृगायस्वाहा । ॐ पितृभ्यःस्वाहा ।
ॐ दौवारिकायस्वाहा । ॐ सुग्रीवायस्वाहा । ॐ पुष्पदन्तायस्वाहा । ॐ वरुणायस्वाहा । ॐ असुरायस्वाहा ।
ॐ शोषायस्वाहा । ॐ पापायस्वाहा । ॐ रोगायस्वाहा । ॐ अहयेस्वाहा । ॐ मुख्यायस्वाहा । ॐ भल्लाटाय-
स्वाहा । ॐ सोमायस्वाहा । ॐ सर्पायस्वाहा । ॐ अदित्यैस्वाहा । ॐ दित्यैस्वाहा । ॐ चरक्यैस्वाहा । ॐ विदार्यै-
स्वाहा । ॐ पूतनायैस्वाहा । ॐ पापराक्षस्यैस्वाहा । ॐ स्कन्दायस्वाहा । ॐ अर्यम्णेस्वाहा । ॐ जृंभकायस्वाहा । ॐ
पिलिपित्सायस्वाहा । ॐ इंद्रायस्वाहा । ॐ अग्नयेस्वाहा । ॐ यमायस्वाहा । ॐ निर्ऋतयेस्वाहा । ॐ वरुणाय-
स्वाहा । ॐ वायवेस्वाहा । ॐ सोमायस्वाहा । ॐईशानायस्वाहा । ॐब्रह्मणेस्वाहा । ॐ अनंतायस्वाहा । ॐउग्राय-
स्वाहा । ॐ डामरायस्वाहा । ॐ महाकालायस्वाहा । ॐ पिलिपित्सायस्वाहा । ततस्तिलैर्न्यूनातिरिक्तपरिपूरणार्थं
सहस्रसंख्ययाएकैकांव्याहृतिंजुहुयात् । यथाशक्त्यावा । पूजास्विष्टंनवाहुत्योबलिःपूर्णाहुतिस्तथा । प्रणीताविमोकांते-

१ सिद्धेनचरुणावास्तोष्पनइत्यनयाऋचा । अष्टोत्तरशतंहुत्वातथैवमधुसर्पिषा । यवैःकृष्णतिलैस्तद्वत्समिद्भिः क्षीरिणातथा । मधुक्षीरघृताक्ताभिःखादिरीभिर-
भावतः ॥ अपामार्गमयीभिर्वाकौशीभिस्तदभावतः । दूर्वामयीभिरथवाबिल्वैःपंचभिरेववा ॥ अथवाबिल्वबीजैस्तुजुहोत्यष्टोत्तरंशतं ॥ इतिरेणुदीक्षिताः ।

वास्तुमण्डलात्पूर्वतःशुचौदेशेगोमयेनोपलिप्य । गंधादिपूर्वकंसार्वभूतिकंबलिंहरेत् ॥ सयथा ॥ त्रैलोक्येयानिभूतानि स्थावराणिचराणिच ॥ ब्रह्मविष्णुशिवैःसार्धंरक्षांकुर्वंतुतानिमे ॥ देवदानवगंधर्वायक्षराक्षसपन्नगाः ॥ ऋषयोमनवोगा-वोदेवमातरएवच ॥ सर्वेममगृहेरक्षांप्रकुर्वंतुमुदान्विताः ॥ ब्रह्माविष्णुश्चरुद्रश्चक्षेत्रपालगणैःसह ॥ रक्षंतुसदनंसर्वेघ्नंतु रक्षांसिसर्वतः ॥ ॐ त्रैलोक्यस्थेभ्यःस्थावरेभ्योभूतेभ्योनमःबलिं० ॥ त्रैलोक्यस्थेभ्यश्चरेभ्योभूतेभ्योनमःबलिं० ॥ ॐ ब्रह्मणेनमःबलिं० ॥ ॐ विष्णवेनमःबलिं० ॥ ॥ ॐ शिवायनमः बलिं० ॥ ॐ देवेभ्योनमःबलिं० ॥ ॐ दानवेभ्योनमःबलिं० ॥ ॐ गंधर्वेभ्योनमःबलिं० । ॐ यक्षेभ्योनमःबलिं० । ॐ राक्षसेभ्योनमःबलिं० । ॐ पन्नगेभ्योनमःबलिं० । ॐ ऋषिभ्योनमःबलिं० । ॐ मनुष्येभ्योनमःबलिं० । ॐ गोभ्योनमःबलिं० । ॐ देवमातृ-भ्योनमःबलिं० । ॐ भूतेभ्योनमःबलिं० । ॐ प्रेतेभ्योनमःबलिं० । ॐ पिशाचेभ्योनमःबलिं० । ॐ मातृभ्योनमः बलिं० । ॐ गणेभ्योनमःबलिं० । ततःप्रार्थना ॥ बलिंगृह्णंत्विमंदेवाआदित्यावसवस्तथा ॥ मरुतोथाश्विनौरुद्राःसुपर्णाः पन्नगाग्रहाः ॥ असुरायातुधानाश्चपिशाचोरगराक्षसाः ॥ डाकिन्योयक्षावेतालायोगिन्यःपूतनाःशिवाः ॥ जृंभकाःसि-द्धगंधर्वामालाविद्याधरानगाः । दिक्पालालोकपालाश्चयेचविघ्नविनायकाः ॥ जगतांशांतिकर्तारोब्रह्माद्याश्चमहर्षयः ॥ माविघ्नंमाचमेपापंमासंतुपरिपंथिनः ॥ सौम्याभवंतुतृप्ताश्चभूतप्रेताःसुखावहाः ॥ इतिबलिः ॥ ततोवास्तुमूर्तिंयथा-शास्त्रोक्तप्रकारेणउक्तस्थाने जानुपरिमितमवटंखात्वा । तंगोमयेनोपलिप्य । शुक्लचंदनपुष्पाक्षतादिभिरलंकृत्य ।

शाल्यादिसप्तबीजानिदध्योदनंचप्रक्षिप्य ॥ ततोजलपूर्णंकलशंगंधादिभिरभ्यर्च्यतंहस्तद्वयेनादायजानुभ्यामवनिंगत्वा ॥ ॐ नमोवरुणाय ॥ इतिगर्तंपूरयेत् ॥ ततोमृन्निर्मितपेटिकायांसप्तबीजानिदधिफलशैवालपुष्पाणिप्रक्षिप्य । वास्तुंगंधादिभिःसंपूज्य । तत्रयथोक्तलक्षणेअवटेमंगलद्रव्याणिप्रक्षिपेयुः ॥ ततईशानकोणेअधोमुखंगर्तेप्रच्छादयेत् ॥ ततःप्रार्थयेत् ॥ पूजितोसिमयावास्तोहोमाद्यैरर्चनैःशुभैः ॥ प्रसीदपाहिदेवेशदेहिमेगृहजंसुखं ॥ सशैलसागरांपृथ्वींयथावहसिमूर्धनि ॥ तथामांवहकल्याणिसंपत्संततिभिःसह ॥ नमस्तेवास्तुपुरुषभूशय्यानिरतप्रभो ॥ मद्गृहेधनधान्यादिसमृद्धिं कुरुसर्वदा ॥ यथामेरुगिरेःशृंगंदेवानामालयःसदा ॥ तथाब्रह्मादिदेवानांममगृहेस्थिरोभव ॥ ग्रंथांतरे—विंशद्भागंगृहं कृत्वाद्वादशाष्टौचमध्यतः ॥ वास्तुकुक्षिंविजानीयात्कथितंगणकोत्तमैः ॥ पुनर्वास्तुंपंचोपचारैःसंपूज्यप्रणम्यप्रार्थयेत् ॥ तत्रमन्त्रः ॥ नमस्तेवास्तुपुरुषभूशय्यानिरतप्रभो ॥ मद्गृहेधनधान्यादिसमृद्धिंकुरुसर्वदा ॥ एवंवास्तुपुरुषनिक्षेपः ॥ भाद्रत्रयेशिरःप्राच्यांयाम्यांशिरःसहस्त्रये ॥ सहाःमार्गशीलः ॥ फाल्गुनात्रितयेपश्चाज्ज्येष्ठादित्रयउत्तरे ॥ शिरःखनेन्मातृपित्रोश्चहानिः खनेच्चपृष्ठेभयरोगपीडा ॥ पुच्छेखनेद्भ्रातृसगोत्रहानिःस्त्रीपुत्रधान्यादिलभेतकुक्षौ ॥ प्राशनांतेकार्येस्वसंभारानोप्यौदुंबरपलाशानि[1]ससुराणि[2]शाड्वलं[3]गोमयंदधिमधुघृतंकुशान्यवांश्च । हरिद्रासर्षपान्गोरोचनंअन्यानिमंगलद्रव्याणिच । आसनो[4]पस्थाने[5]षुप्रोक्षेत् ॥ ततःप्रागादिभित्यभिमर्शनं ॥ पूर्वेसंधावभिमृशतां ॥ ॐ श्रीश्चत्वायशश्चपूर्वेसंधौगोपायेतां ॥

१ पलाशानि पत्राणि । २ ससुराणि सक्षीराणि । सहसुरयेत्यपरे । इतिकर्क. । ३ शाड्वलं शैवालं । शाड्वलं दूर्वा । ४ आसनानि जयंतीनागदन्तमयस्थानानि । ५ उपस्थानानि देवतास्थानानि । तानिवास्तुशास्त्रेप्रसिद्धानि ॥

दक्षिणेसंधावभिमृशति ॥ ॐ यज्ञश्चत्वादक्षिणाचदक्षिणेसंधौगोपायेता ॥ पश्चिमेसंधावभिमृशति ॥ ॐ अन्नंचत्वाब्रा ह्मणाश्चपश्चिमेसंधौगोपायेतां ॥ उत्तरेसंधावभिमृशति ॥ ॐ ऊर्क्चत्वासूनृताचोत्तरेसंधौगोपायेतां ॥ अथगृहाद्बहि- र्निष्क्रम्यदिशउपतिष्ठतेप्रागादिक्रमेण ॥ तत्रमन्त्राः ॥ ॐ केताचमासुकेताचपुरस्ताद्गोपायेतामित्यग्निर्वैकेतादित्यःसुके- तांतौप्रपद्येताभ्यांनमोस्तुतौमापुरस्ताद्गोपायेतां ॥ अथदक्षिणतः ॥ ॐ गोपायमानंचमारसमाणाचदक्षिणतोगोपाये- तामित्यहर्वैगोपायमानꣳरात्रीरक्षमाणातेप्रपद्येताभ्यांनमोस्तुतेमादक्षिणतोगोपायेतां ॥ अथपश्चात् ॥ ॐ दीदिविश्च माजागृविश्चपश्चाद्गोपायेतामित्यन्नंवैदीदिविःप्राणोजागृविस्तौप्रपद्येताभ्यांनमोस्तुतौमापश्चाद्गोपायेतां ॥ अथोत्तरतः ॥ ॐ अस्वप्नश्चमानवद्राणश्चोत्तरतोगोपायेतामितिचंद्रमावाअस्वप्नोवायुरनवद्राणस्तौप्रपद्येताभ्यांनमोस्तुतौमोत्तरतोगोपाये- तां ॥ इतिदिगुपस्थानमन्त्राः ॥ ॥ अथगृहप्रवेशः ॥ कृत्वादौवास्तुपूजांजलभृतकलशंब्राह्मणांश्चाग्रतोकृत्वावामंकृत्वाथ- कार्योनवतरभवनेतोरणाढ्येप्रवेशः ॥ ब्राह्मणैःकृतस्वस्त्ययनोमंगलतूर्यगीतशांतिपाठेनसजलकलशःब्राह्मणपुरःसरःशुक्ल- माल्यानुलेपनःतादृशकलत्रपुत्रपौत्रादिसमेतः सशकुनःसूचिताभ्युदयःतोरणाढ्यांशालांद्वारेणप्रविशति ॥ तत्रमन्त्राः ॥ ॐ धर्मस्थूणाराजꣳश्रीस्तूपमहोरात्रेद्वारफलके ॥ इंद्रस्यगृहावसुमंतोवरूथिनस्तानहंप्रपद्येमहप्रजयापशुभिःसह ॥ यन्मे- किंचिदस्त्युपहूतःसर्वगणसखायसाधुसंवृतः ॥ तांत्वाशालेऽरिष्टवीरागृहानःसंतुसर्वतइत्यनेनप्रविशेत् ॥ ततस्तंकलशं, गृहस्याग्नेय्यांदिशिस्थापयेत् ॥ ततोमंदिरंपीतवस्त्रेणसूत्रेणवावेष्टयेत् ॥ रक्षोहणमित्याद्यैःपावमानैश्चप्रदक्षिणंगृहंत्रिसूत्रे-

णावेष्टयेत् ॥ ततउच्चैःशांतिपाठमन्त्रेणपरितोजलधारांक्षीरधारांचदत्वा गृहंतोरणादिभिरलंकृत्य पुनरुच्चैःस्वरेणराक्षोघ्नं पावमानंशांतिसूक्तंपठेत् ॥ ततोब्राह्मणैःपुण्याहंवाचयित्वा अस्मिन्नूतनगृहेपुण्याहं० कल्याणं० इतिपठेत् ॥ ततःश्रेयः संपाद्यदानं ॥ आचार्यंसंपूज्यगोवस्त्रादिभिर्यथाशक्तिपरितोषयेत् ॥ ततःयजमानंसपत्नीकंपुत्रबंधुवर्गसहितंआच्छादिते ऊर्णपटेउपवेश्यअभिषिंचेत् ॥ ॐ पयःपृथिव्यां० ॥ अमृताभिषेकोस्तु ॥ कृतस्यशालाकर्मवास्तु० ॥ तथागृहप्रवेश० यथाशक्तिब्राह्मणान्भोजयिष्ये० कृतस्यक० ऋत्विग्भ्यःदक्षिणांदा० अन्येभ्योब्राह्मणेभ्यःयथाशक्तिभूय० ॥ ततोविसर्जनं ॥ यांतुदेवगणाःस० यांतुमातरःसर्वाःस्व० । गच्छगच्छसुरश्रेष्ठस्वस्थानेपरमेश्वर ॥ यत्रब्र० ॥ ॐ यज्ञंयज्ञंगच्छ० ॥ अद्य-तिथौमयायत्कृतंशालाकर्मवास्तुशांतिकर्मतथागृहप्रवेशाख्यंकर्मतत्कालहीनं० ब्राह्मणानांवचनात्श्रीवास्तुपुरुषप्रसादा-त्सर्वंपरिपूर्णमस्त्वितिभवंतोब्रुवंतु ॥ ॐ अस्तुपरिपूर्णं ॥ ॥ इतिशालाकर्मसग्रहमखवास्तुशांतिगृहप्रवेशप्रयोगः ॥ ॥

अथगृहशुद्धिः ॥ पुराणांतरेमत्स्योक्तिःसत्यव्रतंप्रति ॥ यदिकिंचित्प्रमादेनदूषितंचगृहंभवेत् ॥ वापीकूपतडा-गानिदूषितानिभवंतिवै ॥ १ ॥ मलमूत्रविसर्गश्चस्रावस्तुरुधिरस्यच ॥ त्रिविधंतुभवेन्मेध्यंसुरादशविधाभवेत् ॥ २ ॥ सुरामेध्यविसर्गश्चजातस्तुयत्रवैगृहे ॥ ब्राह्मणस्यहतिर्यत्रनानापशुवधस्तथा ॥ ३ ॥ महापशुवधोयत्रजायतेयदिसुव्रत ॥ तदाशेषाविशुद्धिश्चकार्याचैवप्रयत्नतः ॥ ४ ॥ नायनंचात्रवालोक्यंनमासश्चाग्निकारणम् ॥ यदाजायेतवैविघ्नंतदहःशांतिमाचरेत् ॥ ५ ॥ कालांतरेकृतायश्चविशंतिगृहमेखला ॥ भूतप्रेतपिशाचाश्चकूष्मांडायेचवैग्रहाः ॥ ६ ॥ विशंतित-

त्क्षणंवेश्मनश्यतिसर्वतःशुभम् ॥ कूपात्समुद्धृत्यजलंखनित्वाचमृदस्तथा ॥ ७ ॥ वापिकायास्तथैवास्तुतडागाज्जलमुत्सृजेत् ॥ खनित्वागृहभूमिंचप्रोत्सार्यगृहमंडनं ॥ ८ ॥ काष्ठानांतक्षणंकार्यंसर्वतःशुद्धिमाचरेत् ॥ पुनश्चभूमिकरणंगृहमंडनकारणं ॥ ९ ॥ गवांसंघस्तत्रविशेत्किंचित्कालंप्रयत्नतः ॥ गवांखुरविमर्दश्चजायतेयत्रवैगृहे ॥ १० ॥ पुरीषमूत्रसंसर्गाच्छुद्धंभवतितद्गृहं ॥ नमस्तेरुद्रइत्याद्यानमोस्तुरुद्रचांततः ॥ ११ ॥ रुद्रसूक्तंचतत्प्रोक्तंसर्वदोषनिवारणम् ॥ आशुःशिशानइत्याद्यामर्माणितेतिचांततः ॥ १२ ॥ राक्षोघ्नंसूक्तमेतत्तुरक्षसाचविघातकं ॥ पुनंतुमेतिनवकंयद्देवेतित्रिकंतथा ॥ १३ ॥ आपोहिष्ठात्रिकंचैवइदमेतित्रिकंतथा ॥ इदमापश्चमापोमौद्रुपदाचसुमित्रिया ॥ १४ ॥ इत्येतत्पल्लवःप्रोक्तोव्याहृतीसमुदीरिता ॥ व्याहृतिहोमधूम्रस्तुयत्रयत्रविशेद्गृहे ॥ तत्रस्थलविशुद्धिःस्यात्कर्माहँचैवतद्गृहं ॥ ॥

अथबौधायनोक्तागृहशांतिः ॥ ॥ बौधायनसूत्रे ॥ अथातोगृहवृद्धिमिच्छन्मासिमास्यृतावृतौसंवत्सरेवापूर्यमाणपक्षेपुण्येनक्षत्रेगृहशांतिमारभेतापामार्गपलाशशमीशिरीषोदुंबरसदाभद्रमुस्तातृणवल्याचगृहंसंमार्ष्टिमानोमहांतंमानस्तोकइतिपंचगव्येनदर्भमुष्टिनावासंप्रोक्ष्य ॥ यतइंद्रभयामहे स्वस्तिदाविशस्पतिरितिद्वाभ्यांकृणुष्वपाजइत्येतेनानुवाकेनसिद्धार्थान्संप्रकीर्यवास्तुमध्येग्निमुखान्कृत्वापक्वान्जुहोतिवास्तोष्पतेवास्तोष्पत इतिद्वाभ्यामथाज्याहुतीरुपजुहोतिवास्तोष्पतेध्रुवास्थूणामितिपङ्क्तिरनुच्छंदसंसावित्र्यासहस्रंजुहुयात्स्विष्टकृत्प्रभृतिसिद्धमाधेनुवरप्रदानाद्ब्राह्मणानन्नेनपरिविष्यपुण्याहंस्वस्तिमृद्धिमितिवाचयित्वाएवंप्रयुंजानोमहांतंपोषंपुष्यतिबहवःपुत्राभवंतिनैवबालाःप्रमीयंतेनैवग्रहाव्याधयोगृह्णंतिन-

दंष्ट्रिणोपघातयेयुर्नतस्करसर्पराक्षसपिशाचाबाधंते यदिगावःप्रतप्येरन्गवांमध्येआहुतिसहस्रंजुहुयाद्गवांशांतिरित्याचक्षते द्विपच्चतुष्पदांचैतदेवव्याख्यातंवासोदक्षिणेत्याहभगवान्बोधायनः॥ ॥ इतिशांतिकमलाकरेबौधायनोक्तागृहशांतिः ॥

अथवैदिकमन्त्रैर्वास्तुमण्डलदेवतास्थापनं ॥ ॥ देशकालौसंकीर्त्य ॥ अस्मिन्कर्मणिवास्तुमंडलदेवतास्थापनंकरिष्ये ॥ मध्येनवपदेत्दद्येब्रह्माणं ॥ ब्रह्मजज्ञानमित्यस्यप्रजापतिर्ऋषिः त्रिष्टुप्छंदः आदित्योदेवताब्रह्मस्थापनेवि० ॥ ॐ ब्रह्मज-ज्ञानंप्र० विवः ॥ १ ॥ ब्रह्मणेनमः ब्रह्माणंआ० स्था० ॥ १ ॥ एवंसर्वत्र ॥ तत्पूर्वेपदत्रयेअर्यमणं ॥ अर्यमणमित्य-स्यतापसऋषिःअनुष्टुप्छंदः अर्यमबृहस्पतींद्रवाग्विष्णुसरस्वतीसवितारोदेवताअर्यमणआ० स्था० वि० ॥ ॐ अर्यमणं बृहस्पतिमिंद्रंदानायचोदय ॥ वाचम्विष्णुꣳसरस्वतीꣳसवितारंचवाजिनꣳस्वाहा ॥ २ ॥ अर्यम्णे० अर्यमाणं ॥ २ ॥ तद्दक्षिणेपदत्रयेसवितारं ॥ सवितात्वेत्यस्यवरुणऋषिः अतिजगतीछंदःयजमानोदेवतासवितुरावा० ॥ ॐ सवितात्वा-सवानांꣳसुवतामग्निर्गृहपतीनांꣳसोमोवनस्पतीनाम् ॥ बृहस्पतिर्वाचइंद्रोज्यैष्ठ्यायरुद्रः पशुभ्योमित्रःसत्योवरुणोधर्म-पतीनाम् ॥ ३ ॥ सवित्रे० सवितारं० ॥ ३ ॥ तत्पश्चिमेपदत्रयेविवस्वंतं ॥ विवस्वन्नित्यस्यप्रजापतिर्ऋषिः विवस्वन्नि-तियजुःश्रद्धस्माइतिजगतीछंदः आशीर्देवताविवस्वतआ० ॥ ॐ विवस्वन्नादित्यैषतेसोमपीथस्तस्मिन्मत्स्व ॥ श्रदस्मैन-रोवचसेदधातनयदाशीर्दांपतीवाममश्नुतः ॥ पुमान्पुत्रोजायतेविंदतेवस्वथाविश्वाहारपएधतेगृहे ॥ ४ ॥ विव-

स्वते० विवस्वंतं० ॥ ४ ॥ तदुत्तरेपदत्रयेविबुधाधिपतिं ॥ उदुत्यमित्यस्यप्रस्कण्वऋषिः सौरीगायत्रीछंदः सविताहे-
वताविबुधाधिपत्यावा० ॥ ॐ उदुत्यंजातवेदसम् ॥ ५ ॥ विबुधाधिपतये० विबुधाधिपतिं ॥ ६ ॥ आग्नेयेएकपदेमित्रं ॥
नमोमित्रस्येत्यस्यअभितपनः सूर्यऋषिः सौरीजगतीछंदः मित्रोदेवतामित्रावा० ॥ ॐ नमोमित्रस्यवरुणस्यचक्षसेमहोदे-
वायतदृतꣳसपर्यत ॥ दूरेदृशेदेवजातायकेतवेदिवस्पुत्रायसूर्यायशꣳसत ॥ ६ ॥ मित्राय० मित्रं० ॥ ६ ॥ नैर्ऋत्येएक-
पदेराजयक्ष्माणं ॥ साकंयक्ष्मेत्यस्यआथर्वणोभिषक्ऋषिः अनुष्टुप्छंदः ओषधिर्देवताराजयक्ष्मणआ० ॥ ॐ साकंयक्ष्म-
प्रपतचाषेणकिकिदीविना ॥ साकंवातस्यध्राज्यासाकन्नश्यनिहाकया ॥ ७ ॥ राजयक्ष्मणे० राजयक्ष्माणं० ॥ ७ ॥
वायव्येएकपदेपृथ्वीधरं ॥ पृथिविदेवयजनीत्यस्यपरमेष्ठीप्राजापत्योऋषिः चत्वारियजूंषिवेदिःपुरीषंवेदिःसविताक्रमे-
णदेवतापृथ्वीधरावा० ॥ ॐ पृथिविदेवयजन्योषध्यास्तेमूलंमाहिꣳसिषंव्रजंगच्छगोष्ठानंवर्षतुतेद्यौर्बधानदेवसवितःपरम-
स्यांपृथिव्याꣳशतेनपाशैर्योस्मान्द्वेष्टियंचवयंद्विष्मस्तमतोमामौक् ॥ ८ ॥ पृथ्वीधराय० पृथ्वीधरं० ॥ ईशान्येएकपदे-
आपवत्सं ॥ आपतयेत्वेत्यस्यप्रजापतिर्ऋषिःद्वेयजुषीवायुराज्यंक्रमेणदेवताआपवत्सावा० ॥ ॐ आपतयेत्वापरिपतये-
गृह्णामितनूनप्त्रेशाक्वरायशक्वनऽओजिष्ठाय ॥ अनाधृष्टमस्यनाधृष्यंदेवानामोजोनभिशस्त्यभिशस्तिपाऽअनभिशस्तेन्यमं-
जसासत्यमुपगेषꣳस्वितेमाधाः ॥ ९ ॥ आपवत्साय० आपवत्सं० ॥ ९ ॥ ततआपवत्सादीशानकोणेएकपदेअपः ॥

आपोअस्मानित्यस्यप्रजापतिर्ऋषिःअत्यष्टीछंदः आपोदेवताअपामावा० ॥ ॐ आपोऽअस्मान्मातरःशुंधयंतुघृतेननोघृत-प्वःपुनंतु ॥ विश्वᳪंहिरिप्रंप्रवहंतिदेवीरुदिदाभ्यःशुचिरापूतऽएमि ॥ १० ॥ अद्भ्यो० अपआ० ॥ १० ॥ मित्रादा-ग्नेयेएकपदेसावित्रं ॥ वण्महानित्यस्यजमदग्निर्ऋषिः बृहतीछंदः सवितादेवतासावित्रावा० ॥ ॐ वण्महाँ२ऽअसि० ॥ ॥ ११ ॥ सावित्राय० सावित्रं० ॥ ११ ॥ राजयक्ष्मणोनैर्ऋतेएकपदेजयंतं ॥ गोत्रभिदमित्यस्यअप्रतिरथऋषिः त्रिष्टु-पछंदः इंद्रोदेवताजयंतावा० ॥ ॐ गोत्रभिदंगो० ॥ १२ ॥ जयंताय० जयंतं० ॥ १२ ॥ पृथ्वीधराद्वायव्येएकपदे-रुद्रं ॥ यातेरुद्रेत्यस्यपरमेष्ठीऋषिः अनुष्टुप्छंदः एकरुद्रोदेवतारुद्रावा० ॥ ॐ यातेरुद्रशि० ॥ १३ ॥ रुद्राय० रुद्रं० ॥ ॥ १३ ॥ ततोबाह्यपरिधौईशानकोणादारभ्यप्रदक्षिणंद्वात्रिंशद्देवताःस्थापयेत् ॥ ईशान्येएकपदेशिखिनं ॥ सनःपावक-इत्यस्यमेधातिथिर्ऋषिः गायत्रीछंदः अग्निर्देवताशिखिनआवा० ॥ ॐ सनः पावक० श्वंनः ॥ १४ ॥ शिखिने० शिखिनं० ॥ १४ ॥ तदग्रतएकपदेपर्जन्यं ॥ निकामेनिकामेत्यस्यप्रजापतिऋषिःउत्कृतिश्छंदः लिंगोक्तादेवतापर्जन्या-वाहने० ॥ ॐ निकामेनिकामे० ॥ १५ ॥ पर्जन्याय० पर्जन्यं० ॥ १५ ॥ तदग्रतोजयंतादयःपञ्चद्विपदाः ॥ पर्जन्या-ग्रतःपदद्वयेजयंतं । गोत्रभिदमित्यस्याप्रतिरथऋषिः त्रिष्टुप्छंदः इंद्रोदेवताजयंतावा० ॥ ॐ गोत्रभिदंगो०म् ॥ १६ ॥ जयंताय० जयंतं० ॥ तदग्रतःपदद्वयेकुलिशायुधं ॥ मरुत्वाँ२ऽइंद्रइत्यस्यविश्वामित्रऋषिः त्रिष्टुप्छंदः इंद्रोदेवताकुलिशा-

युधावा० ॥ ॐ मरुत्वाँ२ इंद्रवृषभोरणायुपिबासोमंमनुष्वधम्मदाय ॥ आसिंचस्वजठरेमध्वऊर्म्मिंत्वꣳराजासिप्रतिप-
त्सुतानाम् ॥ १७ ॥ कुलिशायुधाय० कुलिशायुधं० ॥ १७ ॥ तदग्रतःपदद्वयेसूर्यं ॥ आकृष्णेनेत्यस्यहिरण्यस्तूपऋषिः
त्रिष्टुप्छंदः सवितादेवतासूर्यावा० ॥ ॐ आकृष्णेनर०न् ॥ १८ ॥ सूर्याय० सूर्यं० ॥ १८ ॥ तदग्रतःपदद्वयेसत्यं ॥
व्रतेनदीक्षेत्यस्यप्रजापतिर्ऋषिः अनुष्टुप्छंदः सुरासोमोदेवतासत्यावा० ॥ ॐ व्रतेनदीक्षामाप्नोतिदीक्षयाप्नोतिदक्षिणां ॥
दक्षिणाश्रद्धामाप्नोतिश्रद्धयासत्यमाप्यते ॥ १९ ॥ सत्याय० सत्यं० ॥ १९ ॥ तदग्रतःपदद्वयेभृशं ॥ भायैदार्वाहारमि-
त्यस्यनारायणऋषिःत्रिष्टुप्छंदः नारायणोदेवताभृशावा० ॥ ॐ भायैदार्वाहारंप्रभायाऽअग्न्येधंब्रध्नस्यविष्टपायाभिषेक्तारंव-
र्षिष्ठायनाकायपरिवेष्टारंदेवलोकायपेशितारंमनुष्यलोकायप्रकरितारꣳसर्वेभ्योलोकेभ्यऽउपसेक्तारमवऋत्यैवधायोपमंथि-
तारंमेधायवासःपल्पूलीप्रंकामायरजयित्रीम् ॥ २० ॥ भृशाय० भृशं० ॥ २० ॥ एतेपंचद्विपदाः ॥ तदग्रतआकाशा-
दयस्त्रयएकपदाः ॥ भृशाग्रतएकपदेआकाशं ॥ घृतंघृतपावानइत्यस्यप्रजापतिर्ऋषिः यजुःविश्वेदेवादेवताआकाशावा० ॥
ॐ घृतंघृतपा० हा ॥ २१ ॥ आकाशाय० आकाशं ॥ २१ ॥ पर्जन्यादयआकाशपर्यंताःसप्तपूर्वपंक्तौस्थापनीयाः ॥
आकाशाग्रतआग्नेयेएकपदेवायुं ॥ वायोःपूतइत्यस्यआभूर्तिऋषिः गायत्रीछंदः सोमोदेवतावाय्वावा० ॥ ॐ वायोः
पूतःपवित्रेणप्रत्यङ्क्सोमोअतिद्रुतः ॥ इंद्रस्ययुज्यꣳसखा ॥ २२ ॥ वायवे० वायुं० ॥ २२ ॥ तदग्रतएकपदेपूषाणं ॥

पूषणंवनिष्ठुनाइत्यस्यप्रजापतिर्ऋषिः यजूंषिपूषन्नादयोलिंगोक्तादेवतापूषणआवा० ॥ ॐ पूषणंवनिष्ठुनांधाहीन्स्थूलगु-
दयांसर्पान्गुदाभिर्विह्रुतआंत्रैरपोवस्तिनावृषणमांडाभ्यांवाजिनं शेपेनप्रजा रेतसाचाषान्पित्तेनप्रदरान्पायुनाकूष्मांछ-
कपिंडैः ॥ २३ ॥ पूष्णे० पूषाणं० ॥ २३ ॥ वितथादयःपंचद्विपदाः ॥ पूष्णोग्रतःपदद्वयेवितथं ॥ विदद्यदीत्यस्यकु-
शिकऋषिःत्रिष्टुप्छंदः इंद्रोदेवतावितथावा० ॥ ॐ विदद्यदीसरमारुग्णमद्रेर्महिपाथः पूर्व्यंसध्र्यक्कः ॥ अग्रंनयत्सुपद्य-
क्षराणामधारवंप्रथमाजानतीगात् ॥ २४ ॥ वितथाय० वितथं० ॥ २४ ॥ वितथाग्रतःपदद्वयेग्रहक्षतं ॥ गृहामाइत्य-
स्यशंयुर्ऋषिः त्रिष्टुप्विराड्छंदः वास्तुर्देवताग्रहक्षतावा० ॥ ॐ गृहामाबिभीतमावेपध्वमूर्ज्जंबिभ्रतऽएमसि ॥ ऊर्ज्जंबि-
भ्रद्वःसुमनाः सुमेधागृहानैमिमनसामोदमानः ॥ २५ ॥ गृहक्षताय० गृहक्षतं० ॥ २५॥ तदग्रतःपदद्वयेयमं ॥ यमा-
यत्वेत्यस्यदध्यङ्ङाथर्वणऋषिः त्रीणियजूंषिआद्यस्ययमनामावातोदेवताअंत्ययोर्धर्मोदेवतायमावा० ॥ ॐ यमायत्वांगि०
पित्रे ॥ २६ ॥ यमाय० यमं० ॥ २६ ॥ तदग्रतःपदद्वयेगंधर्वं ॥ गंधर्वस्त्वेत्यस्यपरमेष्ठीऋषिः यजुःपरिधयोदेवतागं-
धर्वावा० ॥ ॐ गंधर्वस्त्वाविश्वावसुः परिदधातुविश्वस्यारिष्ट्यैयजमानस्यपरिधिरस्यग्निरिडऽईडितः ॥ इंद्रस्यबाहुरसि-
दक्षिणोविश्वस्या० ॥ मित्रावरुणौत्वोत्तरतः परिधत्तांध्रुवेणधर्मणाविश्वस्यारिष्ट्यै० डितः ॥ २७ ॥ गंधर्वाय० गंधर्वं०
॥ २७ ॥ तदग्रतःपदद्वयेभृंगराजं ॥ सोमंराजानमित्यस्यतापसऋषिः अनुष्टुप्छंदः सोमाग्न्यादित्यविष्णुसूर्यबृहस्पतयो

देवता भृंगराजावा०॥ ॐ सोमꣳराजानमवसेग्निमन्वारभामहे ॥ आदित्यान्विष्णुꣳसूर्यंब्रह्माणंचबृहस्पतिꣳस्वाहा ॥२८॥
भृंगराजाय० भृंगराजं० ॥ २८ ॥ तदग्रतोमृगादयस्त्रयएकपदाः ॥ भृंगराजाग्रतएकपदेमृगं ॥ मृगोनभीमइत्यस्यजय-
र्षिः त्रिष्टुप्छंदः इंद्रोदेवतामृगावा० ॥ ॐ मृगोनभीमःकुचरोगिरिष्ठाःपरावतआजगंथापरस्याः ॥ सृकꣳसꣳशायपु-
विमिंद्रतिग्मंविशत्रून्ताढिविमृधोनुदस्व ॥ २९ ॥ मृगाय० मृगं० ॥ २९ ॥ पूषादयोमृगांताःसप्तदक्षिणपंक्तौस्थाप्याः ॥
तदग्रतोनैर्ऋतेएकपदेपितॄन् ॥ पितृभ्यइत्यस्यप्रजापतिर्ऋषिःसप्तयजूंषिपितरोदेवताःपित्रावा० ॥ ॐ पितृभ्यः
स्वधा० शुंधध्वम् ॥ ३० ॥ पितृभ्यो० पितॄन् ॥ ३० ॥ पित्रग्रतएकपदेदौवारिकं ॥ द्वेविरूपेतिमन्त्रस्यकुत्सऋषिःत्रि-
ष्टुप्छंदः अग्निर्देवतादौवारिकावा० ॥ ॐ द्वेविरूपेचरतꣳस्वर्थेअन्यान्यावत्समुपधापयेते ॥ हरिरन्यस्यांभवतिस्वधावांछु-
क्रोऽअन्यस्यांददृशेसुवर्चाः ॥ ३१ ॥ दौरिकाय० दौवारिकं० ॥ ३१ ॥ सुग्रीवादयःपंचद्विपदाः ॥ दौवारिकाग्रतः
पदद्वयेसुग्रीवं ॥ तन्नोवातमित्यस्यगौतमऋषिःजगतीछंदः विश्वेदेवादेवतासुग्रीवावा० ॥ तन्नोवातोमयो० वयम् ॥
॥ ३२ ॥ सुग्रीवाय० सुग्रीवं० ॥ ३२ ॥ तदग्रतःपदद्वयेपुष्पदंतं ॥ नमःपार्यायेत्यस्यपरमेष्ठीऋषिःयजूंषिबहवोरुद्रादे-
वताःपुष्पदंतावा० ॥ ॐ नमःपार्याय० ॥ ३३ ॥ पुष्पदंताय० पुष्पदंतं० ॥ ३३ ॥ तदग्रतःपदद्वयेवरुणं ॥ इमम्म-
इत्यस्यशुनःशेपऋषिःगायत्रीछंदःवरुणोदेवतावरुणावा० ॥ ॐ इमम्मेवरुण० कं० ॥ ३४ ॥ वरुणाय० वरुणं० ॥३४॥

तदग्रतःपदद्वयेअसुरं ॥ येरूपाणीत्यस्यप्रजापतिर्ऋषिःत्रिष्टुप्छंदःअग्निर्देवताअसुरावा० ॥ ॐ येरूपाणिप्र० ॥ ३५ ॥
असुराय० असुरं० ॥ ३५ ॥ तदग्रतःपदद्वयेशोषं ॥ नमोस्तुसर्पेभ्यइत्यस्यप्रजापतिर्ऋषिःअनुष्टुप्छंदः सर्पादेवताःस-
र्पावा० ॥ ॐ नमोस्तुसर्पे० ॥ ३६ ॥ शोषाय० शोषं ॥ ३६ ॥ तदग्रतःपापादयस्त्रयएकपदाः ॥ शोषाग्रतएकपदे-
पापं ॥ माभेर्माइत्यस्यप्रजापतिर्ऋषिःयजुःअर्द्धसौम्यंअर्द्धद्यावापृथिव्यंपापावा० ॥ ॐ माभेर्म्मासंविक्थाऽऊर्ज्जंधत्स्व-
धिषणेवीड्वीसतीवीडयेथामूर्ज्जंदधाथाम् ॥ पाप्माहतोनसोमः ॥ ३७ ॥ पापाय० पापं० ॥ ३७ ॥ दौवारिकादयः
पापांताःसप्तपश्चिमपंक्तौस्थाप्याः ॥ तदग्रतोवायव्येएकपदेरोगं ॥ परंमृत्योइत्यस्यसंकसुकऋषिःत्रिष्टुप्छंदःमृत्युर्देवता
रोगावा० ॥ ॐ परंमृत्योअनु० वीरान् ॥ ३८ ॥ रोगाय० रोगं० ॥ ३९ ॥ रोगाग्रतएकपदेअहिं ॥ अहिरिवभोगै-
रित्यस्यप्रजापतिर्ऋषिःत्रिष्टुप्छंदः हस्तघ्नोदेवताअह्यावा० ॥ अहिरिवभोगैःप० विश्वतः ॥ ३९ ॥ अहये० अहिं० ॥
॥ ३९ ॥ तदग्रतोमुख्यादयःपंचद्विपदाः ॥ अह्यग्रतःपदद्वयेमुख्यं ॥ मुखꣳसदस्यइत्यस्यप्रजापत्यश्विसरस्वत्यऋषयःज-
गतीछंदःअश्विसरस्वतींद्रादेवताःमुख्यावा० ॥ ॐ मुखꣳसदस्यशिरऽइत्सतेनजिह्वापवित्रमश्विनासन्सरस्वती ॥ चप्पं-
नपायुर्भिषगस्यवालोवस्तिर्नशेपोहरसातरस्वी ॥ ४० ॥ मुख्याय० मुख्यं० ॥ ४० ॥ मुख्याग्रतःपदद्वयेभल्लाटं ॥ भद्रं
कर्णेभिरित्यस्यगोतमऋषिःत्रिष्टुप्छंदः विश्वेदेवादेवताभल्लाटावा० ॥ ॐ भद्रंकर्णेभिः श्रृ० युदायुः ॥ ४१ ॥ भल्लाटाय०

मल्लाटं० ॥ ४१ ॥ मल्लाटाग्रतःपदद्वयेसोमं० ॥ व्वयꣳसोमेत्यस्यबंधुर्ऋषिःगायत्रीछंदःसोमोदेवतासोमावा० ॥ ॐ
व्वयꣳसोम० महि ॥ ४२ ॥ सोमाय० सोमं० ॥ ४२ ॥ सोमाग्रतःपदद्वयेसर्पं ॥ येवामीत्यस्यप्रजापतिर्ऋषिःअनुष्टुप्-
छंदःसर्पादेवतासर्पावा० ॥ ॐ येवामीरोचने० नमः ॥ ४३ ॥ सर्पाय० सर्पं० ॥ ४३ ॥ तदग्रतःपदद्वयेअदितिं ॥
अदितिर्द्यौरित्यस्यगोतमऋषिःत्रिष्टुप्छंदःविश्वेदेवाधिदेवताअदितेरावा० ॥ ॐ अदितिर्द्यौर० दित्वम् ॥ ४४ ॥ अदित्यै०
अदितिं० ॥ ४४ ॥ अदित्यग्रतएकपदेदितिं ॥ कायस्वाहेत्यस्यप्रजापतिर्ऋषि ब्राह्मणसंज्ञानियजूंषिलिंगोक्तादेवता दि-
त्यावा० ॥ ॐ कायस्वाहाकस्मैस्वाहाकतमस्मैस्वाहास्वाहाधिमाधीतायस्वाहामनः प्रजापतयेस्वाहाचित्तंविज्ञातायादित्यै-
स्वाहादित्यैमह्यैस्वाहादित्यैसुमृडीकायैस्वाहासरस्वत्यैस्वाहासरस्वत्यैपावकायैस्वाहासरस्वत्यैबृहत्यैस्वाहा पूष्णेस्वाहापूष्णेप्रप-
थ्यायस्वाहा पूष्णेनरंधिषायस्वाहात्वष्ट्रेस्वाहात्वष्ट्रेतुरीपायस्वाहात्वष्ट्रेपुरुरूपायस्वाहाविष्णवेस्वाहाविष्णवेनिभूयपायस्वाहा-
विष्णवेशिपिविष्टायस्वाहा ॥ ४५ ॥ दित्यै० दितिं० ॥ ४५ ॥ इतिब्रह्मादयोदित्यंताःपंचचत्वारिंशद्देवतामंडलेस्थाप्याः ॥
ततोमंडलाद्बहिः ॥ ईशानकोणेचरकीं ॥ चत्वारिशृंगेत्यस्यप्रजापतिर्ऋषिः त्रिष्टुप्छंदःयज्ञपुरुषोदेवताचरक्यावा० ॥ ॐ
चत्वारिशृंगात्र० ॥ आविवेश ॥ १ ॥ चरक्यै० चरकीं० ॥ १ ॥ आग्नेयकोणेविदारीं ॥ ततोविराडित्यस्यनारायण-
ऋषिः अनुष्टुप्छंदः जगद्बीजंपुरुषोदेवताविदार्यावा० ॥ ॐ ततोविराड० पुरः ॥ २ ॥ विदार्यै० विदारीं० ॥ २ ॥

नैर्ऋत्येपूतनां ॥ द्रुपदादिवेत्यस्यप्रजापत्यश्विसरस्वतींद्राऋषयः अनुष्टुप्छंदःआपोदेवतापूतनावा० ॥ ॐ द्रुपदादिव० ॥ पूतनायै० पूतनां० ॥ ३ ॥ वायव्यकोणेपापराक्षसीं ॥ रक्षसांभागोसीत्यस्यप्रजापतिर्ऋषिः सप्तयजूंषिलिंगोक्तारक्षोद्यावापृथिवीवायुरग्निर्वपाश्रपण्यौदेवतापापराक्षस्यावा० ॥ ॐ रक्षसांभागो० गच्छंतम् ॥ ४ ॥ पापराक्षस्यै० पापराक्षसीं० ॥४॥ ततःपूर्वादिचतुर्दिक्षु ॥ पूर्वेस्कंदं ॥ यदक्रंदेत्यस्यजमदग्निदीर्घतमावृषीत्रिष्टुप्छंदः अश्वोदेवतास्कंदावा० ॥ ॐ यदक्रंदः०प्र० अर्वन् ॥ १ ॥ स्कंदाय० स्कंदं० ॥ १ ॥ दक्षिणेअर्यमाणं ॥ अर्यमणमित्यस्यतापसऋषिः अनुष्टुप् छंदः अर्यमबृहस्पतींद्रवाग्विष्णुसरस्वतीसवितारोदेवताअर्यमणआवाहने० ॥ ॐ अर्यमणंबृ० हां ॥ २ ॥ अर्यम्णेन० अर्यमाणं० ॥ २ ॥ पश्चिमेजृंभकं ॥ येरूपाणीत्यस्यप्रजापतिर्ऋषिः त्रिष्टुप्छंदःअग्निर्देवताजृंभकावा० ॥ ॐ येरूपाणिप्र०त् ॥ ३ ॥ जृंभकाय० जृंभकं० ॥ ३ ॥ उत्तरेपिलिपिंत्सं ॥ नतंविदाथइत्यस्यविश्वकर्माभौवनऋषिःत्रिष्टुप्छंदःविश्वकर्मादेवतापिलिपिंत्सावा० ॥ ॐ नतंविदाथ० रंति ॥ ४ ॥ पिलिपिंत्साय० पिलिपिंत्सं० ॥ ४ ॥ ततःपूर्वादिदशदिक्षु ॥ पूर्वे ॥ त्रातारमित्यस्यगर्गऋषिःत्रिष्टुप्छंदः इंद्रोदेवताइंद्रावा० ॥ ॐ त्रातारमिं० ॥१॥ इंद्राय० इंद्रं० ॥१॥ आग्नेये ॥ त्वन्नोअग्नइत्यस्यआंगिरसहिरण्यस्तूपऋषिःजगतीछंदः अग्निर्देवताअग्न्यावा० ॥ ॐ त्वन्नोऽअग्नेतव० ॥ २ ॥ अग्नये० अग्निं० ॥ २ ॥ दक्षिणेयमायत्वेत्यस्यदध्यङ्ङाथर्वणऋषिःत्रीणियजूंषि आद्यस्ययमनामावातोदेवताअंत्ययोर्घर्मोदेवता

यमावा० ॥ ॐ युमायुत्वां० ॥ ३ ॥ यमाय० यमं० ॥ ३ ॥ नैर्ऋत्ये ॥ असुन्वंतमित्यस्यप्रजापतिर्ऋषिःत्रिष्टुपूछंदःनि-
र्ऋतिर्देवतानिर्ऋत्यावा० ॥ ॐ असुन्वंतम० ॥ ४ ॥ निर्ऋतये० निर्ऋतिं० ॥ ४ ॥ पश्चिमे ॥ तत्वायामीत्यस्यशुनःशे-
पऋषिःत्रिष्टुपूछंदःवरुणोदेवतावरुणावा० ॥ ॐ तत्वायामि० ॥ ५ ॥ वरुणाय० वरुणं० ॥ ५ ॥ वायव्ये ॥ आनो-
नियुद्भिरित्यस्यवसिष्ठऋपिःत्रिष्टुपूछंदः वायुर्देवतावाय्वावा० ॥ ॐ आनोनियुद्भिःशु० ॥ ६ ॥ वायवे० वायुं० ॥ ६ ॥
वय॑ꣳसोमेत्यस्यबंधुर्ऋपिःगायत्रीछंदःसोमोदेवतासोमावा० ॥ ॐ व्रुयꣳसोम० ॥ ७ ॥ सोमाय० सोमं० ॥ ७ ॥
तमीशानमित्यस्यगोतमऋपिः जगतीछंदःईशानोदेवताईशानावा० ॥ ॐ तमीशानं० ॥ ८ ॥ ईशानाय० ईशानं० ॥८॥
अस्मेरुद्राइत्यस्यप्रगाथऋपिःत्रिष्टुपूछंदःब्रह्मादेवताब्रह्मावाह० ॥ ॐ अुस्मेरुद्रामे० ॥ ९ ॥ ब्रह्मणे० ब्रह्माणं० ॥ ९ ॥
स्योनापृथिवीत्यस्यमेधातिथिर्ऋपिः गायत्रीछंदः पृथिवीदेवताअनंतावा० ॥ ॐ स्योनापृ० ॥१०॥ अनंताय० अनंतं ॥
॥ १० ॥ ततःपूर्वादिचतुर्दिक्षु ॥ पूर्वेउग्रसेनं ॥ उग्रंलोहितमित्यस्यप्रजापतिर्ऋपिःयजूंपिउग्रादयोदेवताउग्रसेनावा० ॥
ॐ उुग्रंलोहितेन० ॥ १ ॥ उग्रसेनाय० उग्रसेनं० ॥ १ ॥ दक्षिणेडामरं ॥ अवेष्टादंदशूकाइत्यस्यवरुणऋपिः पंचयजूंपि-
यजमानोदेवताडामरावा० ॥ ॐ अवेष्टादंदुशूकाः प्राचीमारोहगायत्रीत्वावतुरथंतरꣳसामत्रिवृत्स्तोमोवसंतऋतुर्ब्रह्मद्रविणं
॥ २ ॥ डामराय० डामरं० ॥ २ ॥ पश्चिमेमहाकालं ॥ सोमस्यत्विपिरित्यस्यवरुणऋपिः द्वादशयजूंपिलिंगोक्तादेव-

तामहाकालावा० ॥ ॐ शोर्मस्युत्विपरिसितवैवमेत्विपिर्भूयात् ॥ अग्नयेस्वाहासोमायस्वाहासवित्रेस्वाहासरस्वत्यैस्वाहा-पूष्णेस्वाहाबृहस्पतयेस्वाहेंद्रायस्वाहाघोषायस्वाहाश्लोकायस्वाहाऽंशायस्वाहाभगायस्वाहार्यम्णेस्वाहा ॥ ३ ॥ महा-कालाय० महाकालं० ॥ उत्तरेपिलिपित्सं ॥ नतंविदाथेत्यस्यविश्वकर्माभौवनऋपिःत्रिष्टुप्छंदः विश्वकर्मादेवतापिलिपि-त्सावाह० ॥ ॐ नतंविदाथ० ॥ ४ ॥ पिलिपित्साय० पिलिपित्सं० ॥ ततःपोडशोपचारैःपूजनं ॥ ॥ इतिवैदिक-मंत्रैर्वास्तुमंडलदेवतास्थापनं ॥ ॥

पौराणवास्तुमण्डलदेवतास्थापनं ॥ ॥ मध्येनवपदेहृदयेब्रह्माणं ॥ सर्वदेवप्रधानंचसर्वकामफलप्रदं ॥ अग्रतःसर्व-संपूज्यंप्रारंभेयज्ञकर्मणि ॥ ब्रह्म० ब्र० आ० स्था० ॥ एवंसर्वत्र ॥ तत्पूर्वेपदत्रयेअर्यमाणं ॥ अहमावाहयिष्यामिअर्यमाणं-त्रिलोचनं ॥ वनस्पतिसमाकारंनीलवर्णंमहाप्रभुं ॥ अर्यमाणंस्था० ॥ तद्दक्षिणेपदत्रयेसवितारं ॥ आवाहयाम्यहंदेवंस-वितारंदिवाकरं ॥ ससाश्वरथसंयुक्तंतमोवृन्दनिवारणं ॥ सवित्रे० सवितारं० ॥ तत्पश्चिमेपदत्रयेविवस्वन्तं ॥ अहमा-वाहयिष्यामिविवस्वन्तंमहाबलं ॥ रक्तनेत्रंविशालाक्षंयज्ञमूर्तिंसुरेश्वरं ॥ विवस्वते० विवस्वन्तं० ॥ तदुत्तरपदत्रयेविबुधा-धिपतिं ॥ अहमावाहयिष्यामिविबुधाधिपतिंप्रभुं ॥ नाकाधिपंसहस्राक्षंवज्रखेटकधारिणं ॥ विबुधाधिपतये० विबुधा-धिपतिं० ॥ आग्नेयएकपदेमित्रं० ॥ अहमावाहयिष्यामिमित्रंचारुणसंनिभं ॥ वज्रहस्तंसुरश्रेष्ठंयज्ञकर्तृवरप्रदं ॥ मित्राय० मित्रं० ॥ नैऋत्यएकपदेराजयक्ष्माणं ॥ आवाहयामितंदेवंद्विभुजंराजयक्ष्माणं ॥ धनुर्बाणसमायुक्तंयज्ञकर्मवरप्रदं ॥

राजयक्ष्मणे० ॥ राजयक्ष्माणं० ॥ वायव्यएकपदेपृथ्वीधरं ॥ पृथ्वीधरंमहत्तेजःस्फटिकच्छविमीश्वरं ॥ भूतनाथंमहाकायं देवमावाहयाम्यहं ॥ पृथ्वीधराय० पृथ्वीधरं० ॥ ईशान्येएकपदेआपवत्सं ॥ अहमावाहयिष्यामिआपवत्संमहाप्रभुं ॥ कर्पूरसदृशंसौम्यंक्षीरोदपरिपूरितं ॥ आपवत्साय० आपवत्सं० ॥ ततआपवत्सादीशानकोणएकपदेअपः ॥ अहमावाहयिष्यामिआपोयाःस्फटिकप्रभाः ॥ कर्पूरसदृशाःसौम्याःक्षीरोदकपरिप्लुताः ॥ अद्भ्योनमःअपः० ॥ मित्रादाग्नेयएकपदेसावित्रं ॥ सावित्रंस्वर्धुनीलोकेविमलंचगजाननं ॥ एकाक्षरंशिवंसौरिंसवितारंमहेश्वरं ॥ सावित्राय० सावित्रं० ॥ राजयक्ष्मणोनैर्ऋतेएकपदेजयंतं ॥ आवाहयाम्यहंदेवंजयंदेवेंद्रपूजितं ॥ विद्युद्ध्वानाभयंभीमजयंहिविजयप्रभुं ॥ जयंताय० जयंतं० ॥ पृथ्वीधराद्वायव्यएकपदेरुद्रं ॥ आवाहयाम्यहंदेवंरुद्रंचजगतःप्रभुं ॥ चतुर्भुजंवृषारूढंसर्वलोकनमस्कृतं ॥ रुद्राय० रुद्रं० ॥ ततोब्राह्मपरिधौईशान्येएकपदेशिखिनं ॥ आवाहयाम्यहंदेवंहेमवर्णंसुशोभनं ॥ शिखिनंज्वलनप्रख्यंनागहारविभूषितं ॥ शिखिने० शिखिनं० ॥ तदग्रतएकपदेपर्जन्यं ॥ आवाहयाम्यहंदेवंपर्जन्यंहेमवर्णकं ॥ चतुर्वक्त्रंमहौजस्कंचतुर्बाहुविभूषितं ॥ पर्जन्याय० पर्जन्यं० ॥ तदग्रतोजयन्तादयःपंचद्विपदाः ॥ पर्जन्याग्रेजयंतं ॥ आवाहयाम्यहंदेवंजयंतंभुवनेश्वरं ॥ रक्तवर्णंमहांतंचखङ्गखेटकधारिणं ॥ जयंताय० जयंतं० ॥ तदग्रतःकुलिशायुधं ॥ आवाहयाम्यहंदेवंमहेंद्रंचमहाप्रभुं ॥ पीतवर्णंमहाघोरंवज्रपाणिंसुरेश्वरं ॥ कुलिशायुधाय० कुलिशायुधं० ॥ तदग्रतःसूर्यं ॥ आवाहयाम्यहंदेवमादित्यंदिव्यतेजसं ॥ द्विभुजंचसहस्रांशुंपद्महस्तंवरप्रदं ॥ सूर्याय० सूर्यं० ॥ तदग्रतःसत्यं ॥ आवाहया-

म्यहंदेवंसत्यंसत्यैकदैवतं ॥ शुक्लाभंशुक्लवर्णंचशुक्लमालाविभूषितं ॥ सत्याय० सत्यं० ॥ तदग्रतोभृशं ॥ आवाहयाम्यहं देवंभृशंचपरमेश्वरं ॥ भस्मांगंनीलकंठंचचतुर्बाहुंसुरेश्वरं ॥ भृशाय० भृशं० ॥ एतेपंचद्विपदाः ॥ तदग्रतआकाशादयस्त्रयएकपदाः ॥ भृशाग्रतएकपदेआकाशं ॥ आवाहयाम्यहंदेवमाकाशंचमहाबलं ॥ शब्दब्रह्मपरंदेवंहैमंचहिमसंनिभं ॥ आकाशाय० आकाशं० ॥ तदग्रतएकपदेवायुं ॥ आवाहयाम्यहंदेवंदेवदेवंमहाबलं ॥ जगद्रूपंजगद्व्यासंस्थितिसंहारकारकं ॥ वायवे० वायुं० ॥ पूषादयःसप्तदक्षिणपंक्तौ ॥ तदग्रतएकपदेपूषाणं ॥ आवाहयाम्यहंदेवंपूषाणंमहसांपदं ॥ जगच्चक्षुर्महांतंचस्थितिसंहारकारकं ॥ पूष्णेनमःपूषाणं० ॥ वितथादयःपञ्चद्विपदाः ॥ पूष्णोग्रतोवितथं ॥ आवाहयाम्यहंदेवंवितथंदिव्यतेजसं ॥ ब्रह्मरूपंजगन्नाथंचतुर्वक्त्रंप्रजापतिं ॥ वितथाय० वितथं० ॥ तदग्रतोगृहक्षतं ॥ आवाहयाम्यहंदेवंकृष्णवर्णंगृहक्षतं ॥ कमलाक्षंचतुर्बाहुंत्रैलोक्याधिपतिंप्रभुं ॥ गृहक्षताय० गृहक्षतं० ॥ तदग्रतोयमं ॥ अहमावाहयिष्यामियमंमहिषवाहनं ॥ ऊर्ध्वकेशंविरूपाक्षंभैरवंरक्तलोचनं ॥ यमाय० यमं० ॥ तदग्रतोगंधर्वं ॥ अहमावाहयिष्यामिगंधर्वंगणशोभितं ॥ गीतनृत्यरसायुक्तंसुगंधकुसुमान्वितं ॥ गंधर्वाय० गंधर्वं० ॥ तदग्रतोभृङ्गराजं ॥ आवाहयाम्यहंदेवंभृंगंचपरमेश्वरं ॥ भस्मांगंनीलकंठंचचतुर्बाहुंमहद्द्युतिं ॥ भृंगराजाय० भृङ्गराजं० ॥ तदग्रतोमृगादयस्त्रयएकपदाः ॥ भृङ्गराजाग्रतोमृगं ॥ अहमावाहयिष्यामिमृगंचपरमेश्वरं ॥ सुवर्णाभंनीलकंठंचतुर्बाहुंसुशोभनं ॥ मृगाय० मृगं० ॥ तदग्रतोनैर्ऋत्यएकपदेपितॄन् ॥ अहमावाहयिष्यामिपितरंचसुधाकृतिं ॥ उद्दीप्यलोकेतिष्ठंतंचंद्रार्कसदृशद्युतिं ॥

पितृभ्यो० पितॄन्० ॥ ततोदौवारिकादयःसप्तपश्चिमपंक्तौ ॥ पित्रग्रतएकपदेदौवारिकं ॥ आवाहयाम्यहंदेवंविभुंदौवारि-
कंतथा ॥ जीवरूपंत्वयैकेनयदिदंधार्यतेजगत् ॥ दौवारिकाय० दौवारिकं ॥ सुग्रीवादयःपंचद्विपदाः ॥ दौवारिकाग्र-
तःसुग्रीवं ॥ अहमावाहयिष्यामिसुग्रीवंरक्तवर्णकं ॥ पिंगनेत्रंमहास्थूलंभैरवंतीक्ष्णदंष्ट्रकं ॥ सुग्रीवाय० सुग्रीवं ॥ तदग्र-
तःपुष्पदंतं ॥ अहमावाहयिष्यामिपुष्पदंतंसुशोभनं ॥ शुक्लांबरंशुक्लवर्णंचशुक्लमालाविभूषितं ॥ पुष्पदन्ताय० पुष्पदन्तं० ॥
तदग्रतोवरुणं ॥ आवाहयाम्यहंदेवंवरुणंकमलेक्षणं ॥ रक्तांबरधरंदेवंरक्तमालाविभूषितं ॥ वरुणाय० वरुणं० ॥ तदग्र-
तोऽसुरं ॥ आवाहयाम्यहंदेवमसुरंचमरुत्प्रियं ॥ धूम्रवर्णंमहारौद्रमसुरंदैत्यमंगलं ॥ असुराय० असुरं० ॥ तदग्रतःशोषं ।
अहमावाहयिष्यामिशोषंचश्वेतवर्णकं ॥ रक्तांबरंविशालाक्षंयज्ञमूर्तिंसुरेश्वरं ॥ शोषाय० शोषं० ॥ पापादयस्त्रयएक-
पादाः ॥ तदग्रतःपापं ॥ अहमावाहयिष्यामिपापंयक्ष्माणमेवच ॥ पापरूपंकृष्णवर्णंपापकर्मरतंसदा ॥ पापाय० पापं० ॥
तदग्रतोरोगं ॥ अहमावाहयिष्यामिरोगंरोगेणसंनिभं ॥ धूम्राक्षंधूम्रवर्णंचकृष्णमालाविभूषितं ॥ रोगाय० रोगं० ॥
ततएकपदेअहिं ॥ अहमावाहयिष्यामिअनंतंवासुकिंतथा ॥ कालंककर्कोटकंचैवकुंडलीकृष्णपिंगलं० ॥ अहये० अहिं० ॥
मुख्यादयःपंचद्विपदाः ॥ अह्यग्रतोमुख्यं ॥ अहमावाहयिष्यामिमुख्यंदेवंमहाबलं ॥ अरुणश्मश्रुकेशांतंत्रिनेत्रंचैवषड्भुजं ॥
मुख्याय० मुख्यं० ॥ तदग्रतोभल्लाटं ॥ अहमावाहयिष्यामिभल्लाटंधूम्रलोचनं ॥ धूम्रवर्णंविशालाक्षंयज्ञकर्तुर्वरप्रदं ॥ भल्ला-
टाय० भल्लाटं० ॥ तदग्रतःसोमं ॥ अहमावाहयिष्यामिसोमंचसौम्यदैवतं ॥ अमृतस्राविणंदेवंसर्वलोकोपकारकं ॥ सोमाय०

सोमं० ॥ तदग्रतःसर्पं ॥ आवाहयाम्यहंदेवसुरगंरत्नभूषितं ॥ सर्पाय० सर्पं० ॥ तदग्रतोऽदितिं ॥ अहमावाहयिष्या-
मिअदितिंचसुरेश्वरीं ॥ मातरंसर्वदेवानांपीतवर्णांसुशोभनां ॥ अदित्यै० अदितिं० ॥ ततएकपदेदितिं ॥ अहमावाह-
यिष्यामिदितिंचैवसुरेश्वरीं ॥ रक्तवर्णांमहाकायांसर्वदानवमातरं ॥ दित्यै० दितिं० ॥ ४५ ॥ ततोमंडलाद्बहिः ॥
ईशान्येचरकीं० ॥ आग्नेय्येविदारीं ॥ नैर्ऋत्येपूतनां० ॥ वायव्येपापराक्षसीं० ॥ पूर्वेस्कंदं० ॥ दक्षिणेअर्यमणं० ॥
पश्चिमेजृंभकं० ॥ उत्तरेपिलिपित्सं० ॥ पूर्वादिषु इंद्रं० अग्निं० यमं० निर्ऋतिं० वरुणं० वायुं० सोमं० ईशानं ॥ ईशान-
पूर्वमध्येब्रह्माणं ॥ नैर्ऋत्यवरुणमध्येअनंतं० ॥ ततःपूर्वं उग्रसेनाय० उग्रसेनं० ॥ दक्षिणे डामराय० डामरं० ॥ पश्चिमे
महाकालाय० महाकालं० ॥ उत्तरेपिलिपित्साय० पिलिपित्सं० ॥ ततोवास्तुमण्डलदेवतानांषोडशोपचारैःपूजनं ॥
इतिपौराणमण्डलदेवतास्थापनं ॥ ॥

अथवापीकूपोत्सर्गविधिः ॥ ॥ अथातोवापीकूपतडागारामदेवतायतनानांप्रतिष्ठापनंव्याख्यास्यामः ॥ तत्रादौ-
तडागस्यप्राच्यांवाप्यादीनांपश्चिमदिग्भागेतदलाभेपूर्वेशानोत्तरान्यतमेदेशेनातिदूरेनातिसमीपेषोडशहस्तंद्वादशहस्तंदशह-
स्तंवाचतुरस्रंचतुर्द्वारंमंडपंकृत्वा तन्मध्येपञ्चहस्तांचतुर्हस्तांवाहस्तोच्छ्रितांकूर्मपृष्ठोन्नतांवेदिंकृत्वा तस्याश्चतुर्दिक्षुत्रयोदशां-
गुलांतरंत्यक्त्वा कुंडानिकण्ठयुक्तानिसर्वतोहस्तमात्राणिचतुरस्राणिचत्वारिकुंडानिचतुस्त्रिद्व्यंगुलविस्तारत्रिमेखलानिवि-
तस्तिमात्रायतससांगुलविस्तृतयोनियुतानिपञ्चममेवंविधंवेद्याईशानभागेआचार्यकुंडं तस्येशानभागेहस्तमात्रांग्रहवेदिं नै-

ऋत्येवास्तुमण्डलं ग्रहमखोक्तंचसंभारंविधाय ॥ तत्रउक्तकालेशुभेमुहूर्त्तेयजमानःगृहेपूर्वाह्णेश्रीपर्ण्यादिपीठे पत्न्यासहप्राङ्मुखउपविश्य आचम्य प्राणानायम्य देशकालौसंकीर्त्य ॥ ममएकविंशतिपुरुषानुद्धर्तुंसाधारणसर्वलोकानांआत्मनश्चदानपानावगाहनार्थंश्रीपरमेश्वरप्रीत्यर्थंसग्रहमखंकूपप्रतिष्ठापनंकरिष्ये ॥ इतिसंकल्पः ॥ एवमन्यत्रतत्तत्पदोहःकार्यः ॥ गणेशपूजनादिनांदीश्राद्धांतंकृत्वा ॥ ततोब्रह्माचार्यादृत्विग्वरणं ॥ षोडशऋत्विजोअष्टौद्वारपालानष्टौचतुरोवाजापकानपिवृणुयात् ॥ मधुपर्कविधिनाब्रह्ममुखान्पूजयित्वासौवर्णकुंडलकेयूरकटकांगुलीयकवस्त्रैश्चतोषयेत् ॥ ततोवेदघोषेणतूर्यमंगलशब्देनचसर्वेयजमानान्विताऋत्विजोयजनदेशंगत्वा सभामण्डपेउपकरणजातंसंस्थाप्योपविशेयुः ॥ अथसाचार्यःसपत्नीकोयजमानःजलपूर्णकलशंफलपुष्पादियुतंगंधाद्यर्चितंगृहीत्वाभद्रंकर्णेभिरित्यादिशाकुनसूक्तान्पठन्मंडपंप्रदक्षिणीकृत्यपूर्वद्वारेणमंडपंप्रविशेत् ॥ दक्षिणद्वारेणपत्नी ॥ ततःसर्षपविकिरणादिपञ्चगव्यंकृत्वापूजोपकरणादियागभूमिंसंप्रोक्ष्य ॥ यथोक्तप्रकारेणमंडपपूजांविधायपश्चिमद्वारेणप्रविश्यवेद्याःप्रादक्षिण्येनदक्षिणतोगत्वातत्रोपविश्यप्राणानायम्यनैर्ऋत्यांवास्तुवेद्युपरिमंडलेवास्तुंपूजयेत् ॥ ॥ यथा ॥ अद्यपूर्वो० तिथौप्रारिप्सितस्यकर्मणःसांगतासिद्ध्यर्थंवास्तुमंडलदेवतास्थापनंपूजनंचकरिष्ये ॥ कारिकायां ॥ ब्रह्माणमादितःकृत्वाशिखिनंवाक्रमेणतु ॥ प्रणवाद्यैर्नाममन्त्रैर्नमोंतैःपूजयेदिमाः ॥ आवाहनादिभिःसर्वैरुपचारैःसमाहितः ॥ वास्तुमण्डलस्यआग्नेयादिकोणेषुशंकुचतुष्टयंदद्यात् ॥ तत्रमन्त्रः ॥ विशंतुभूतलेनागालोकपालाश्चसर्वतः ॥ अस्मिन्गृहेवतिष्ठंतुआयुर्बलकराःसदा ॥ अग्नौनैर्ऋत्यवायव्येईशानेच ॥ प्रतिरोपणमन्त्रा-

वृत्तिः ॥ ततोद्विगुणसूत्रेणसर्वंपावेष्टनंकुर्यात् ॥ आग्नेयादिशंकुपार्श्वेरोपणक्रमेणमापभक्तबलीन्दद्यात् ॥ तत्रमन्त्राः ॥ अग्निभ्योप्यथसर्पेभ्योयेचान्येतान्समाश्रिताः ॥ बलिंतेभ्यःप्रयच्छामिपुण्यमोदनमुत्तमं ॥ १ ॥ नैर्ऋत्याधिपतिश्चैवनैर्ऋत्यांयेचराक्षसाः ॥ बलिंतेभ्यःप्रयच्छामिपुण्यमोदनमुत्तमं ॥ २ ॥ ॐनमोवायुरक्षोभ्योयेचान्येतान्समाश्रिताः ॥ बलिंतेभ्यःप्रयच्छामिपुण्यमोदनमुत्तमं ॥ ३ ॥ रुद्रेभ्यश्चैवसर्पेभ्योयेचान्येतान्समाश्रिताः ॥ बलिंतेभ्यःप्रयच्छामिगृह्णंतुसततोत्सुकाः ॥ ४ ॥ ततोवेद्युपरिचक्रेकुंकुमादिनासुवर्णरजतादिशलाकयावा ॥ ॐकारादिनमोंतैर्नामभिःपश्चादारभ्यप्रागंताउदक्संस्थाःसमाअंगुलद्वयांतराद्वादशरेखाःकृत्वातासुदेवताआवाहयेत् ॥ यथा ॥ ॐ शांत्यैनमःशांतिमावाहयामि १ ॥ ॐ यशोवत्यैनमःयशोवतीमा० २ ॥ ॐ कांत्यैनमःकांतिमावा० ३ ॥ ॐ विशालायैनमःविशालामा० ४॥ ॐ प्राणवाहिन्यैनमःप्राणवाहिनीमा० ५ ॥ ॐ सत्यायैनमः सत्यामा० ६ ॥ ॐ सुमत्यैनमःसुमतिं० ७ ॥ ॐ नंदायैनमःनंदामा० ८ ॥ ॐ सुभद्रायैनमःशुभद्रामा० ९ ॥ ॐ सुरथायैनमःसुरथामा० १० ॥ ॐ स्थिरायैनमःस्थिरामा० ११ ॥ ॐ विरजायैनमःविरजामा० १२ ॥ नामभिस्तथैवदक्षिणारंभाउदगंताःप्राक्संस्थाःसमाःअंगुलद्वयांतराद्वादशरेखाः कृत्वावाहयेत् ॥ यथा ॥ ॐ हिरण्यायैनमःहिरण्यामा० १ ॥ ॐ सुप्रभायैनमःसुप्रभामा० २ ॥ ॐ लक्ष्म्यैनमःलक्ष्मीमा० ३ ॥ ॐ विभूत्यैनमःविभूतिमा० ४ ॥ ॐ विमलायैनमःविमलामा० ५ ॥ ॐ प्रियायैनमःप्रियामा० ६ ॥ ॐ जयायैनमःजयामा० ॥ ७ ॥ ॐ कालायैनमःकालामा० ८ ॥ ॐ शोकायैनमःशोकामा० ९ ॥ ॐ इंद्राण्यैनमःइंद्रा-

णीमा० १० ॥ ॐ विमलायैनमः विमलामा० ११ ॥ ॐ शिवायैनमःशिवामा० १२ ॥ ततःरेखादेवताःसंपूज्यमध्ये-
मंडूकादिपीठदेवताआवाहयेत् ॥ ॐ मंडूकायनमः १ ॥ ॐ मूलप्रकृत्यैनमः २ ॥ ॐ आधारशक्त्यैनमः ३ ॥ ॐ कूर्मा-
यनमः ४ ॥ ॐ अनंतायनमः ५ ॥ ॐ पृथिव्यैनमः ६ ॥ ॐ श्वेतद्वीपायनमः ७ ॥ ॐ कल्पवृक्षायनमः ८ ॥ ॐ
रत्नमंडपायनमः ९ ॥ ॐ सिंहासनायनमः १० ॥ इतिमध्ये ॥ ततःप्रागादिचतुर्दिक्षु ॥ ॐ धर्मायनमः १ ॥ ॐ ज्ञाना-
यनमः २ ॥ ॐ वैराग्यायनमः ३ ॥ ॐ ऐश्वर्यायनमः ४ ॥ ततआग्नेयादिषुचतुर्षुकोणेषु ॥ ॐ अधर्मायनमः १ ॥
ॐ अज्ञानायनमः २ ॥ ॐ अवैराग्यायनमः ३ ॥ ॐ अनैश्वर्यायनमः ४ ॥ ततःमध्ये ॥ ॐ आत्मनेनमः १ ॥ ॐ
अंतरात्मनेनमः २ ॥ ॐ ज्ञानात्मनेनमः ३ ॥ ॐ परमात्मनेनमः ४ ॥ ॐ अग्निमंडलायनमः ५ ॥ ॐ सोममंडलाय०
६ ॥ ॐ सूर्यमंडलायनमः ७ ॥ ॐ संसत्वायनमः ८ ॥ ॐ रंरजसेनमः ९ ॥ ॐ तंतमसेनमः १० ॥ ॐ सर्वशक्तिक-
लासनायनमः ११ ॥ मध्येपंचविंशतिपदेवास्तोर्हृदये ॥ ॐ ब्रह्मणेनमःब्रह्माणमावाहयामि ॥ ॥ ततपुरतःद्वादशपदो-
र्यमा ॥ ॐ अर्यम्णेनमःअर्यमाणमा० ॥ सवितादक्षिणेतद्वत् ॥ ॐ सवित्रेनमःसवितारमा० ॥ विवस्वान्पश्चिमेतथा ॥
ॐ विवस्वतेनमःविवस्वंतमा० ॥ उत्तरेद्वादशपदे ॥ ॐ विबुधाधिपतयेनमःविबुधाधिपतिं० ॥ आग्नेयएकपदे ॐ मित्रा-
यनमःमित्रमा० ॥ नैर्ऋत्यएकपदे ॥ ॐ राजयक्ष्मणेनमःराजयक्ष्माणं० ॥ वायव्यएकदे० ॐ पृथ्वीधरायनमःपृथ्वीध-
रमा० ॥ ईशान्यएकपदे ॐ आपवत्सायनमःआपवत्संमा० ॥ आपवत्सादीशानकोणएकपदे ॐ आपायनमःआपमा० ॥

मित्रादाग्नेयएकपदे सावित्रायनमः सावित्रमा० ॥ राजयक्ष्मणोनैर्ऋत्यएकपदं ॐ जयायनमः जयमा० ॥ पृथ्वीधराद्वायव्य-
एकपदे ॐ रुद्रायनमः रुद्रमा० ॥ नमोंतेःसर्वत्र ॥ ततोवाप्यपरिधौईशानकोणादारभ्यप्रदक्षिणक्रमेणशिख्यादिद्वात्रिंशद्दे-
वताआवाहयेत् ॥ तद्यथा ॥ ईशान्येत्रिपदेशिखिनेनमः शिखिनमावाहयामि ॥ तदग्रतःपर्जन्यादिसप्तएकपदे ॥ ॐ
पर्जन्यायनमः पर्जन्यं० ॥ ॐ जयंतायनमः जयंतं० ॥ ॐ कुलिशायुधायनमः कुलिशायुधं० ॥ ॐ सूर्यायनमः सूर्यं० ॥
ॐ सत्यायनमः सत्यं० ॥ ॐ भृशायनमः भृशं० ॥ ॐ आकाशायनमः आकाशं० ॥ पर्जन्यादिसप्तअंतरिक्षपर्यंताःस्थापनी-
याःपूर्वपंक्तौ ॥ ततआग्नेयेत्रिपदे ॥ ॐ वायवेनमः वायुमावाहयामि॥ पूषादिसप्तएकपदास्थानीयादक्षिणपंक्तौ ॥ यथा ॥
ॐ पूष्णेनमः पूषणं० ॥ ॐ वितथायनमः वितथं० ॥ ॐ गृहक्षतायनमः गृहक्षतं० ॥ ॐ यमायनमः यमं० ॥ ॐ गंधर्वा-
यनमः गंधर्वं० ॥ ॐ भृंगराजायनमः भृंगराजं० ॥ॐ मृगायनमः मृगं० ॥ नैर्ऋत्येत्रिपदे ॥ ॐ पितृभ्योनमः पितॄन्आ० ॥
दौवारिकादिसप्तपापपर्यंताःस्थापनीयाःपश्चिमपंक्तौ ॥ ॐ दौवारिकायनमः दौवारिकंआवा० ॥ सुग्रीवायनमः सुग्रीवं-
आवा० ॥ ॐ पुष्पदन्तायनमः पुष्पदन्तंआ० ॥ ॐ वरुणायनमः वरुणं० ॥ ॐ असुरायनमः असुरंआ० ॥ ॐ शोषाय-
नमः शोषं० ॥ ॐ पापायनमः पापं० ॥ वायव्येत्रिपदे ॥ ॐ रोगायनमः रोगमा० ॥ अह्यादिसप्तएकपदाःदितिपर्यंताः
स्थापनीयाःउत्तरपंक्तौ ॥ ॐ अहयेनमः अहिंआ० ॥ ॐ मुख्यायनमः मुख्यं० ॥ ॐ भल्लाटायनमः भल्लाटं० ॥ ॐ सोमा-
यनमः सोमं० ॥ ॐ सर्पायनमः सर्पं० ॥ ॐ अदित्यैनमः अदितिं० ॥ ॐ दित्यैनमः दितिं० ॥ ततोमंडलाद्बहिरीशान-

कोणे० ॥ ॐ चरक्यैनमः चरकीं आ० ॥ आग्नेये ॥ ॐ विदार्यैनमः विदारीं० ॥ नैर्ऋत्ये ॥ ॐ पूतनायैनमः पूतनां० ॥ वायव्ये ॥ ॐ पापराक्षस्यैनमः पापराक्षसीं० ॥ पूर्वादिदिक्षु ॥ ॐ स्कंदायनमः स्कंदं आ० ॥ दक्षिणे ॥ ॐ अर्यम्णेनमः अर्यमणं० ॥ पश्चिमे ॥ ॐ जृंभकायनमः जृंभकं० ॥ उत्तरे ॥ ॐ पिलिपित्सायनमः पिलिपित्सं० ॥ ततः पूर्वादिदिक्षु ॥ ॐ इंद्रायनमः इंद्रं० ॥ ॐ अग्नयेनमः अग्निं० ॥ ॐ यमायनमः यमं० ॥ ॐ निर्ऋतयेनमः निर्ऋतिं० ॥ ॐ वरुणायनमः वरुणं० ॥ ॐ वायवेनमः वायुं० ॥ ॐ सोमायनमः सोमं० ॥ ॐ ईशानायनमः ईशानं० ॥ पूर्वेशानयोर्मध्ये ॥ ॐ ब्रह्मणेनमः ब्रह्माणं० ॥ निर्ऋतिपश्चिमयोर्मध्ये ॥ ॐ अनंतायनमः अनंतं० ॥ ततः पूर्वे० ॥ ॐ उग्रसेनायनमः उग्रसेनं० ॥ दक्षिणे ॥ ॐ डामरायनमः डामरं० ॥ पश्चिमे ॥ ॐ महाकालायनमः महाकालं० ॥ उत्तरे ॥ ॐ पिलिपित्सायनमः पिलिपित्सं आवाहयामि ॥ ततः वास्तुमंडलस्थपूर्वोक्तदेवतानां यथोक्तप्रकारेण षोडशोपचारैः पूजनं कृत्वा पदेपु पायसभक्तबलीन्दद्यात् ॥ यथा ॥ ॐ ब्रह्मणेनमः पायसबलिं समर्पयामि १ अर्यम्णेनमः पा० २ सवित्रेनमः पा० ३ विवस्वतेनमः पा० ४ विबुधाधिपायनमः पा० ५ मित्रायनमः पा० ६ राजयक्ष्मणेनमः पा० ७ पृथ्वीधरायनमः पा० ८ आपवत्सायनमः पा० ९ आपायनमः पा० १० सावित्रायनमः पा० ११ जयायनमः पा० १२ रुद्रायनमः पा० १३ शिखिनेनमः पा० १४ पर्जन्यायनमः पा० १५ जयंतायनमः पा० १६ कुलिशायुधायनमः पा० १७ सूर्यायनमः पा० १८ सत्यायनमः पा० १९ भृशायनमः पा० २० आकाशायनमः पा० २१ वायवेनमः पा० २२ पूष्णेनमः पा० २३ वितथायनमः पा० २४

गृहक्षतायनमःपा० २५ यमायनमःपा० २६ गंधर्वायनमःपा० २७ भृंगराजायनमःपा० २८ मृगायनमःपा० २९ पितृभ्योनमःपा० ३० दौवारिकायनमःपा० ३१ सुग्रीवायनमःपा० ३२ पुष्पदन्तायनमःपा० ३३ वरुणायनमःपा० ३४ असुरायनमःपा० ३५ शोपायनमःपा० ३६ पापायनमःपा० ३७ रोगायनमःपा० ३८ अहयेनमःपा० ३९ मुख्याय नमःपायस० ४० भल्लाटायनमःपा० ४१ सोमायनमःपा० ४२ सर्पायनमःपा० ४३ अदित्यैनमःपा० ४४ दित्यैनमः पा० ४५ चरक्यैनमःपा० ४६ विदार्यैनमःपा० ४७ पूतनायैनमःपा० ४८ पापराक्षस्यैनमःपा० ४९ स्कंदायनमःपा० ५० अर्यम्णेनमःपा० ५१ जृंभकायनमःपा० ५२ पिलिपित्सायनमःपा० ५३ इंद्रायनमःपा० ५४ अग्नयेनमःपा० ५५ यमायनमःपा० ५६ निर्ऋतयेनमःपा० ५७ वरुणायनमःपा० ५८ वायवेनमःपा० ५९ सोमायनमःपा० ६० ईशानायनमःपा० ६१ ब्रह्मणेनमःपा० ६२ अनंतायनमःपा० ६३ उग्रसेनायनमःपा० ६४ डामरायनमःपा० ६५ महाकालायनमःपा० ६६ पिलिपित्सायनमःपायसबलिंसमर्पयामि ६७ ॥ इतिवास्तुपूजांकृत्वामंडपश्चेत्मंडपपूजांकुर्यात् ॥ अथाचार्यःस्वकुंडेकृतसंस्कारेऽग्निंप्रतिष्ठाप्यकुण्डस्यपूर्वादिचतुर्दिक्षुक्षीरोदकदध्युदककुशोदकगन्धोदकसंज्ञकान्कुंभान्स्थापयेत् ॥ कुंडाभावपक्षेतुस्थंडिलस्यचतुर्दिक्षुकलशान्स्थापयेत् ॥ ततोऽन्येऋत्विजआचार्यकुंडादग्निमुद्धृत्यचतुर्पुकुण्डेपुकृतसंस्कारेष्वग्निंसंस्थाप्यप्रतिकुंडंशांतिकलशान्न्यसेयुः ॥ ॥ अथयूपप्रतिष्ठांकुर्यात् ॥ यथा ॥ कादंबोवैकंकतःपालाशोबिल्वजोवाशिरःसंमितोयूपोब्राह्मणस्य ॥ नैयग्रोधःखादिरःकाश्मर्यमयोवाकंठसंमितोराजन्यस्य ॥ औदुंबरःमाधुकःआर्जुनः

प्लक्षमयोवाहृदयसंमितोवैश्यस्य ॥ विभीतकौदुंबरशाल्मलिसारदारुमयोनाभिप्रमाणःशूद्रस्य ॥ सर्वेषामविशेषेणत्रिररत्नि-
मात्रोयजमानसंमितोवायूपोभवति ॥ अथप्रधानवेदिकोपर्युत्तरदेशेगर्तंकृत्वाआपोहिष्ठेत्यद्भिरभ्युक्ष्य ॥ ॐ ऊर्ध्वऊषुण-
ऊतय० इतितस्मिन्गर्तेयूपंप्रतिष्ठाप्यकुंकुमेनसमालिप्यपुष्पैर्धूपैःसंपूज्ययुवासुवासाइतिवस्त्रयुग्मेनाच्छाद्यनैवेद्यादिनापू-
जयित्वा ऊर्ध्वऊषुण० इत्यभिमन्त्र्य ॥ तस्यदक्षिणभागेवेद्युपरिमध्येचक्राब्जविधिनावारुणमंडलंविरच्य तदुपरिसूर्यादिवारु-
णमंडलदेवताः( अग्रेवक्ष्यमाणाःसर्वाः )प्रणवादिनमोंतचतुर्थ्यंतनामभिस्तत्तल्लिंगोक्तवैदिकैर्वामन्त्रैरावाह्यसंपूज्यपायसबलिं-
दत्वाहोमसमयेतत्तन्मन्त्रैर्नाममंत्रैर्वादशदशतिलाहुतीर्जुहुयात् इति ॥ ॥ ततोमंडलमध्येमहीद्यौरित्यादिपूर्णपात्रनिधानां
तंकलशंसंस्थाप्यतत्त्वायामीतिवरुणमावाह्यषोडशोपचारैःसंपूज्यतदुपरिसुवर्णनिर्मितांवरुणमूर्तिंइमंमेइतिमन्त्रेणपूजयेत् ॥
ततोजलचराण्यधिवासयेत् ॥ तानिच ॥ सौवर्णःकूर्मः ॥ ताम्रमयोमकरःसौवर्णोवा ॥ राजतौमत्स्यदुंदुभौ ॥ सीसकमयोदुं-
दुभोवा ॥ कुलीरमंडूकौताम्रमयौ ॥ मंडूकस्त्रपुमयोवा ॥ जलूकाशिशुमारौराजतौआयसौवा ॥ हंसादयोयेशुक्लाजलचरा-
स्तेराजताः ॥ चक्रवाकादयोयेपीतास्तेसौवर्णाः ॥ येरक्तास्तेताम्रमयाः ॥ येकृष्णास्तेसैसकाः ॥ पद्मानिमरकतपद्मरागा-
दिनिर्मितानि ॥ रौप्यंनागाष्टकंअन्यजलचरजातंच ॥ तदेतत्सर्वंवंशपात्रेनिधायप्रक्षाल्यगंधैरनुलिप्यसंपूज्यताम्रपात्र्यां-
मनोजूतिरितिवेद्युपरिस्थापयित्वा तत्पार्श्वेफलानिउशीरसर्पिःक्षीरमहदंवीकाकजंघापंचरत्नगंधोदकपंकजार्घ्योदकपंचग-
व्यकुशतीर्थोदकुंभंचस्थापयेत् ॥ वापीकूपयोःप्रतिष्ठापनेऽस्मिन्नवसरेतीर्थोदकपूर्णान्रत्नगर्भान्श्वेतवस्त्रयुगमाल्यचंदन-

विभूषितान्पञ्चपल्लवोपेतान्कलशान्वाप्याःकूपस्यवाचतुर्षुकोणेषुकृतसप्तधान्यपुंजेषुआजिघ्रकलशमितिस्थापयेत् ॥ ततः आचार्यःपञ्चकुंडीपक्षेपूर्वकुंडेबह्वृचौनियोज्य दक्षिणेयजुर्वेदिनौ पश्चिमेसामगौ उत्तरेअथर्ववेदिनौउपवेशयेत् ॥ ततोवेद्या-दक्षिणतोयजमानउपविश्य होतॄनृत्विजोयजध्वमिति जापकान्जपध्वमिति द्वारपालांश्चपठध्वमितिप्रैषंदद्यात् ॥ अथ-जापकजप्यान्युच्यंते । मयूखे—रात्रिसूक्तंचरौद्रंचपावमानंसुमंगलं ॥ जपेयुःपौरुषंसूक्तं पूर्वतोबह्वृचाःपृथक् ॥ शाक्रंरौद्रं-चसौम्यंचकौष्मांडंजातवेदसं ॥ सौरसूक्तंजपेरंस्तेदक्षिणेनयजुर्विदः ॥ वैराजंपौरुषंसूक्तंसौवर्णंरुद्रसंहितां ॥ शैशवंपंच-निधनंगायत्रंज्येष्ठसामच ॥ वामदेव्यंबृहत्सौम्यंरौरवंसरथंतरम् ॥ गवांव्रतंविकर्णंचरक्षोघ्नंचयथाक्रमं ॥ गायंतिसामगा-राजन्पश्चिमद्वारमाश्रिताः ॥ आथर्वणाश्चोत्तरतःशांतिकंपौष्टिकंतथा ॥ जपेयुर्मनसादेवमाश्रितावरुणंमनुं ॥ वारुणानिच-सूक्तानिजपेयुःसर्वएवते ॥ अथद्वारपालजप्यान्युच्यंते ॥ मयूखे—श्रीसूक्तंपावमानंचसोमसूक्तंसुमंगलं ॥ शांत्यध्या-यंचैंद्रसूक्तंराक्षोघ्नंचेतिबह्वृचौ ॥ १ ॥ दक्षिणेद्वारपालौतुरुद्रान्पुरुषसूक्तकं ॥ श्लोकाध्यायंशुक्रियंचमंडलाध्यायमेवच ॥ ॥ २ ॥ वामदेव्यंबृहत्सामज्येष्ठसामरथंतरं ॥ तथापुरुषसूक्तंचरुद्रसूक्तमतःपरं ॥ ३ ॥ आज्यदोहानिसामानिशांतिकाध्याय-मेवच ॥ भारुंडानिचसामानिपश्चिमेद्वारपालकौ ॥ ४ ॥ अथर्वांगिरसंनीलरुद्रंचैवापराजितं ॥ देवीचमधुसूक्तंचरोधसं

१ मयूखेतु । एवमेवपुराणेषुतडागविधिरुच्यते । कूपवापीषुसर्वासुतथापुष्करिणीषुच ॥ एषएवविधिर्दृष्टः प्रतिष्ठासुतथैवच ॥ सर्वासुवर्तुलचतुरस्रादिषु । मंत्रतस्तु-विशेषःस्यात्प्रासादोद्यानभूमिषु ॥ प्रासादेवास्तुपुरुषः । उद्यानेवनस्पतिर्देवता । तत्तन्मंत्रतोविशेषइत्यर्थः ॥ इति ॥

शांतिकाह्वयं ॥ आथर्वणौद्वारपालौपठेतामुत्तराश्रितौ ॥ ५ ॥ ततोऽग्नेरीशान्यांग्रहवेद्यांग्रहस्थापनं ॥ ततोऽग्नेर्दक्षिणतो-ब्रह्मासनास्तरणादि । वरुणदैवत्यंयवमयंचरुंश्रपयित्वाज्यभागाविष्ट्वाज्याहुतीर्जुहोति ॥ ॐ त्वंनोअग्नेवरुणस्य० समत्स्वाहा ॥ १ ॥ यथादैवंत्यागः ॥ ॐ सत्वंनोअग्ने० चिस्वाहा ॥ २ ॥ ॐ इमंमेवरुण० केस्वाहा ॥ ३ ॥ ॐ तत्त्वायामि० पीःस्वाहा ॥ ४ ॥ ॐ येतेशतं० र्काःस्वाहा ॥ ५ ॥ ॐ अयाश्चाग्ने० जंस्वाहा ॥ ६ ॥ ॐ उदुत्तमं० मस्वाहा ॥ ७ ॥ ॐ उरुᳪंहिराजा० श्वित्स्वाहा ॥ ८ ॥ ॐ वरुणस्योत्तंभनमसि० सीदस्वाहा इदंवरुणाय० ॥ ९ ॥ ॐ अग्नेरनीकमप०ण्यस्वाहा ॥ इदमग्नयेनीकवतेनमम ॥ १० ॥ इतिदशचर्वᳪंहुत्वा ॥ ततश्चरुमभिघार्य ॥ स्रुवेणावदाय ॥ स्थालीपा-कस्यजुहोति ॥ तत्रमन्त्राः ॥ ॐ अग्नयेस्वाहा ॥ इदमग्नयेनमम ॥ १ ॥ ॐ सोमायस्वाहा ॥ इदंसोमायनमम ॥ २ ॥ ॐ वरुणायस्वाहा ॥ इदंवरुणायनमम ॥ ३ ॥ ॐ यज्ञायस्वाहा ॥ इदंयज्ञायनमम ॥ ४ ॥ ॐ भीमायस्वाहा ॥ इदंभी-मायनमम ॥५॥ ॐ उग्रायस्वाहा ॥ इदमुग्रायनमम ॥६॥ ॐ शतक्रतवेस्वाहा ॥ इदंशतक्रतवेनमम ॥७॥ ॐ व्युष्ट्यै-स्वाहा ॥ इदंव्युष्ट्यैनमम ॥ ८ ॥ ॐ स्वर्गायस्वाहा ॥ इदंस्वर्गायनमम ॥ ९ ॥ ततोग्रहयज्ञविधिनाग्रहहोमंकृत्वा ॥ ततःवारुणीभिःशमीसमिद्भिरौदुंबरीभिर्वादधिमधुघृताक्ताभिःप्रतिकुंडंप्रत्येकंअष्टोत्तरशतं प्रतिमन्त्रंद्वाविंशत्यावृत्त्याहोमं-कुर्युः ॥ तत्रमन्त्राः ॥ ॐ इमंमेवरुण० २२ ॐ तत्त्वायामि० २२ ॐ त्वंनोअग्ने० २२ ॐ सत्वंनोअग्ने० २२ ॐ उदुत्तमं० २२ ॥ आज्येनलाजैश्चमण्डलदेवतानांक्रमेणस्वस्वनामभिर्मंत्रैस्तिलैर्दशदशाहुतीर्जुहुयात् ॥ ततोवास्तुमंडल-

देवतानांदशदशतिलाहुतीरेकैकयाज्याहुत्याहोमंकृत्वाअघोरेणाष्टोत्तरशतंतिलैःशांत्यर्थंजुहुयात् ॥ ततःस्विष्टकृदादिपूर्णा-
हुत्यंतंकर्मशेषसमापनं ॥ इत्यधिवासनं ॥ रात्रौजागरणंगीतवाद्यादिनाकुर्यात् ॥ ॥ ततःप्रभातेस्नात्वाचार्यऋत्विग्युतो-
मंडलपूजांकृत्वाज्योतिःशास्त्रोक्तशुभेलग्नेशुक्लवस्त्रंकृतोष्णीषोजलचरपात्रींसोपस्करामादाय महानदीजलपूर्णकलशंगृहीत्वा
सयजमानोवेदमंगलघोषैर्जलाशयंगत्वा जलाशयआरामंदेवतायतनंवात्रिवृतासूत्रेणवाससाचवेष्टयेत् ॥ देवतायतनेध्वजं
चारोपयेत् ॥ वरुणमावाहयेत् ॥ यथा ॥ नमस्तेविश्वगुप्तायनमोविष्णोह्यपांपते ॥ सांनिध्यंकुरुदेवेशसमुद्रेयद्वदत्रवै ॥
वापीकूपयोर्मंत्रांतरंच ॥ मित्रमित्रोसिभूतानांधनदोधनकांक्षिणां ॥ वैद्योरोगाभिभूतानांशरणंशरणार्थिनां ॥ ततोनैवेद्यांतं-
पूजयित्वापुरुषप्रमाणजलेमकरमत्स्यादीन्वरुणंप्रवाहयेत्ओषध्यादिकंच ॥ ततस्तत्रपूर्वादिक्रमेणाक्षतैरावाहयेत् ॥ ॐ अनं-
तायनमः अनंतमावाहयामि १ ॥ ॐ महापद्मायनःमहापद्मं० २ ॐ तक्षकायनमः तक्षकं० ३ ॐ कुलिकायनमः कुलिकं० ४
शेषायनमः शेषं० ५ ॐ वासुकयेनमःवासुकिं० ६ ॐ पद्मायनमःपद्मं० ७ ॐ कर्कोटकायनमःकर्कोटकंआवाहयामि ८॥ इत्ये-
तान्गंधादिनासंपूज्यनिक्षिपेत् ॥ ततःपंचब्राह्मणैर्दध्युदादिकलशान्नदीजलकलशंगृहीत्वाआपोहिष्ठेतितिसृभिर्जलमध्येक्षि-
पेत् ॥ अथवीरतरोःशालवंशादिजांवृत्तांदोषरहितांप्रतिष्ठाप्यस्नपनविधिनास्नापयित्वागन्धैरालिप्यश्वेतरक्तपीतवर्णकैश्चर्च-
यित्वापुष्पाद्यैःसमर्च्यध्वजतूर्यविनादैर्मंगलनिस्वनैःपुष्करिण्यास्तडागस्यवामध्येयष्टिकांनिक्षिपेत्अनेनमंत्रेणसिद्धस्त्वंभोज-
टापविश्वात्स्थितायहुंफट्अनंतनागाधिपतयेनमइति ॥ नमोस्तुसर्पेभ्यइतितामभिमंत्र्यअस्त्रमन्त्रेणाभ्युक्ष्य मनोजूतिरिति-

प्रतिष्ठापयेत् ॥ अथयजमानःतडागस्यपुष्करिण्यावादक्षिणतउदङ्मुखःकनकालंकृतांसितवस्त्रवेष्टितांसस्रजंगांपूजयित्वात-
स्याःपुच्छमादायोत्तरति ॥ ततःछंदोगःसामगायेत् ॥ अथोत्तीर्यकर्तातांगांसदक्षिणांसामगायदत्वा ॥ आथर्वणेयसा-
म्नापुनरापोहिष्ठेतितिसृभिःपुत्रकलत्रज्ञातियुक्तोवगाहनंकुर्यात् ॥ तत्रवापीकूपयोर्गोरुत्तरणंनास्ति ॥ अथजलाभिमुखो-
यजमानस्तज्जलोत्सर्गंकुर्यात् ॥ तद्यथा ॥ अंजलिनाकुशतिलोदकंगृहीत्वा ॥ एततपुष्करिण्यादिस्थंजलंकाश्यपगोत्रोदे-
वदत्तप्रपौत्रोयज्ञदत्तपौत्रोविष्णुदत्तपुत्रोअमुकशर्माअशेषपापक्षयकामोमोक्षकामोवास्वपितॄणांस्वर्गादिकामोवा नानाभूते-
भ्यःसाधारणलोकानांधर्मार्थकाममोक्षाणांसाधनंस्यादहर्निशमितितोयमध्येनिक्षिपेत् ॥ ततोजलमातृभ्योनमःइतिजल-
मातृकाःपूजयित्वा ॥ तद्यथा ॥ मत्सीकूर्मीचवाराहीमांडूकीमकरीतथा ॥ ग्राहकीक्रौंचिकीचैवसप्तैताजलमातरः ॥
इतिजलंपूजयित्वामंडपमागच्छेत् ॥ ततआचार्यःशांतिकलशोदकेनयजमानमभिषिंचेत् ॥ अथयजमानःकुंडलादिना-
आचार्यंपूजयित्वातस्मैगोसहस्रंतदर्धंतदर्धंद्वादशषट्त्रिस्तदभावेसोपस्करांएकांगांसवत्सांसहिरण्यांदद्यात् ॥ ततःऋत्वि-
ग्भ्योजापकेभ्योऽन्यभ्योनानागोत्रेभ्योनानाशर्मभ्योब्राह्मणेभ्यश्चयथाशक्तिदक्षिणांदत्वाशिल्पिनःकर्मकरांश्चपूजयित्वाक्ष-
मापयेत् ॥ अथयजमानोदिनचतुष्टयमनिवारितमन्नंप्रयच्छेत् विप्रान्सहस्रंभोजयेत्शतंवायथाशक्तिवेति ॥ ॥ इति-
वापीकूपतडागारामदेवतायतनप्रतिष्ठापनप्रयोगःसमाप्तः ॥

अथवारुणमंडलदेवतास्थापनं ॥ आचम्य देशकालौस्मृत्वाअमुककर्मांगत्वेनवारुणमंडलदेवतास्थापनपूजनमहंकरिष्ये ॥

दिक्षुविदिक्षुआरासुपूर्वादिक्रमेणअष्टौग्रहान्स्थापयेत् ॥ पूर्वेआरायां । आकृष्णेनेत्यस्यहिरण्यस्तूपआंगिरसऋषिःत्रिष्टुप-छंदःसवितादेवतासूर्यस्थापनेविनियोगः ॥ ॐ आकृष्णेनरजसावर्तमानोनिवेशयन्नमृतंमर्त्यंच ॥ हिरण्ययेनसवितारथेना-देवोयातिभुवनानिपश्यन् ॥ सूर्यायनमः सूर्यमावाहयामिस्थापयामि ॥ १ ॥ आग्नेयेआरायां ॥ इमंदेवाइत्यस्यवरुणऋ-षिःअत्यष्टिछंदःयजमानोदेवतासोमस्थापने० ॥ ॐ इमंदेवाअसपत्नꣳसुवध्वंमहतेक्षत्रायमहतेज्यैष्ठ्यायमहतेजानराज्याये-द्रस्येंद्रियाय ॥ इममुमुष्यपुत्रममुष्यैपुत्रमस्यैविशऽएषवोमीराजासोमोऽस्माकंब्राह्मणानाꣳराजा ॥ सोमाय० सोमं० ॥२॥ दक्षिणेआरायां ॥ अग्निर्मूर्धाइत्यस्यविरूपऋषिःगायत्रीछंदःअग्निर्देवताभौमस्थापने० ॥ ॐ अग्निर्मूर्धादिवःककुत्पतिः पृथिव्याअयं ॥ अपाꣳरेताꣳसिजिन्वति ॥ भौमाय० भौमं० ॥ ३ ॥ नैर्ऋत्येआरायां ॥ उद्बुध्यस्वाग्नेइत्यस्यपरमेष्ठीऋषिःत्रिष्टु-प्छंदःअग्निर्देवताबुधस्थापने० ॥ ॐ उद्बुध्यस्वाग्नेप्रतिजागृहित्वमिष्टापूर्तेसꣳसृजेथामयंच ॥ अस्मिन्त्सधस्थेऽअध्युत्तरस्मि-न्विश्वेदेवायजमानश्चसीदत ॥ बुधाय० बुधं० ॥ ४ ॥ पश्चिमेआरायां ॥ बृहस्पतेइत्यस्यगृत्समदऋषिःत्रिष्टुप्छंदःब्रह्म-देवताबृहस्पतिस्थापनेवि० ॥ ॐ बृहस्पतेअतियदर्योअर्हाद्द्युमद्विभातिक्रतुमज्जनेषु ॥ यद्दीदयच्छवसऋतप्रजाततदस्मा-सुद्रविणंधेहिचित्रं ॥ बृहस्पतये० बृहस्पतिं० ॥ ५ ॥ वायव्येआरायां ॥ अन्नात्परिस्रुतइत्यस्यअश्विसरस्वतींद्राऋषयः अतिजगतीछंदःग्रहादेवताशुक्रस्थापने० ॥ ॐ अन्नात्परिस्रुतोरसंब्रह्मणाव्यपिबत्क्षत्रंपयःसोमंप्रजापतिः ॥ ऋतेनसत्य-मिंद्रियंविपानꣳशुक्रमंधसऽइंद्रस्येंद्रियमिदंपयोमृतंमधु ॥ शुक्राय० शुक्रं० ॥ ६ ॥ उत्तरेआरायां ॥ शन्नोदेवीरित्यस्यद-

ध्यङ्ङाथर्वणऋपिःगायत्रीछंदःआपोदेवताशनिस्था० ॥ ॐ शन्नोदेवीरभिष्टयआपोभवंतुपीतये ॥ शंयोरभिस्रवंतुनः ॥ शनै-
श्चराय० शनैश्चरं० ॥७॥ ऐशानेआरायां ॥ कयानश्चित्रइत्यस्यवामदेवऋपिगायत्रीछंदःइंद्रोदेवताराहुस्थापने०॥ ॐ कया-
नश्चित्रआभुवदूतीसदावृधःसखा ॥ कयाशचिष्ठयावृता ॥ राहवे० राहुं० ॥ ८ ॥ तत्रैव ॥ केतुंकृण्वन्नित्यस्यमधुच्छंदा-
ऋपिःगायत्रीछंदःअग्निर्देवताकेतुस्था० ॥ ॐ केतुंकृण्वन्नकेतवेपशोमर्याअपेशसे ॥ समुपद्भिरजायथाः ॥ केतुभ्यो०
केतून्० ॥ ९ ॥ ॥ पुनस्ताम्वेवारासुपूर्वादिक्रमेणअष्टौलोकपालानावाहयेत् ॥ पूर्वआरायांसूर्यस्याग्रे ॥ त्रातारमित्य-
स्यगर्गऋपिःत्रिष्टुपछंदःइंद्रोदेवताइंद्रस्था० ॥ ॐ त्रातारमिंद्रमवितारमिंद्रंहवेहवेसुहवंशूरमिंद्रं ॥ ह्वयामिशक्रंपुरुहूत-
मिंद्रंस्वस्तिनोमघवाधात्विंद्रः ॥ इंद्राय० इंद्रं० ॥ १० ॥ आग्नेयेआरायांसोमस्याग्रे ॥ त्वन्नोअग्नइत्यस्यआंगिरसहि-
रण्यस्तूपऋपिःजगतीछंदःअग्निर्देवताअग्निस्थापने० ॥ ॐ त्वन्नोअग्नेतवदेवपायुभिर्मघोनोरक्षतन्वश्चवंद्य ॥ त्रातातोकस्य
तनयेगवामस्यनिमेषंरक्षमाणस्तवव्रते ॥ अग्नये० अग्निं० ॥ ११ ॥ दक्षिणेआरायांभौमस्याग्रे ॥ यमायत्वेत्यस्यदध्यङ्ङा-
थर्वणऋपिःत्रीणियजूंपिआद्यस्ययमनामावातोदेवताअन्त्ययोर्धर्मोदेवतायमस्था०॥ॐ यमायत्वांगिरस्वतेपितृमतेस्वाहा ॥
स्वाहाघर्मायस्वाहाघर्मःपित्रे ॥ यमाय० यमं० ॥ १२ ॥ नैर्ऋत्येआरायांबुधस्याग्रे ॥ असुन्वंतमित्यस्यप्रजापतिऋपिः
त्रिष्टुपछंदःनिर्ऋतिर्देवतानिर्ऋतिस्था० ॥ ॐ असुन्वंतमयजमानमिच्छस्तेनस्येत्यामन्विहितस्करस्य ॥ अन्यमस्मदिच्छसा-

तंइत्वानमोदेविनिर्ऋतेतुभ्यमस्तु ॥ निर्ऋतये॰ निर्ऋतिं॰ ॥ १३ ॥ पश्चिमेआरायांबृहस्पतेरग्रे ॥ तत्त्वायामीत्यस्यशुनः-
शेपऋषिःत्रिष्टुप्छंदःवरुणोदेवतावरुणस्थापने॰ ॥ ॐ तत्त्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमा-
नोवरुणेहबोध्युरुशꣳसमानआयुःप्रमोषीः ॥ वरुणाय॰ वरुणं॰ ॥ १४ ॥ वायव्येआरायांशुक्रस्याग्रे ॥ आनोनियुद्भि-
रित्यस्यवसिष्ठऋषिःत्रिष्टुप्छंदःवायुर्देवतावायुस्था॰ ॥ ॐ आनोनियुद्भिःशतिनीभिरध्वरꣳसहस्रिणीभिरुपयाहियज्ञं ॥
वायोऽअस्मिन्सवनेमादयस्वयूयंपातस्वस्तिभिःसदानः ॥ वायवे॰ वायुं॰ ॥ १५ ॥ उत्तरेआरायांशनेरग्रे ॥ वयꣳसोमे-
त्यस्यबंधुऋषिःगायत्रीछंदःसोमोदेवतासोमस्था॰ ॥ ॐ वयꣳसोमव्रतेतवमनस्तनूषुबिभ्रतः ॥ प्रजावंतःसचेमहि ॥
सोमाय॰ सोमं॰ ॥ १६ ॥ ऐशानेआरायांराहुकेत्वोरग्रे ॥ तमीशानमित्यस्यगोतमऋषिःजगतीछंदःविश्वेदेवादेवता
ईशानस्था॰ ॥ तमीशानंजगतस्तस्थुषस्पतिंधियंजिन्वमवसेहूमहेवयम् ॥ पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धःस्व-
स्तये ॥ ईशानाय॰ ईशानं॰ ॥ १७ ॥ अथवायुसोमांतरालमारभ्यअंतरालारासुयथाक्रमं ॥ वायुसोममध्येआरायां ॥
सुगावोदेवाइत्यस्यप्रजापतिऋषिःत्रिष्टुप्छंदःदेवादेवताःवसुस्था॰ ॥ ॐ सुगावोदेवाःसदनाअकर्मयऽआजग्मेदꣳसवनंजु-
षाणाः ॥ भरमाणावहमानाहवीꣳष्यस्मेधत्तवसवोवसूनि ॥ वसुभ्यो॰ वसून्॰ ॥१८॥ सोमेशानांतरालेआरायां ॥ रुद्राः
सꣳसृज्येत्यस्यप्रजापतिऋषिःअनुष्टुप्छंदःरुद्रादेवतारुद्रस्था॰ ॥ ॐ रुद्राःसꣳसृज्यपृथिवींबृहज्ज्योतिःसमीधिरे ॥ तेषांभा-

नुरजंस्त्वइच्छुक्रोदेवेपुरोचते ॥ रुद्रेभ्यो० रुद्रान्० ॥ १९ ॥ ईशानेंद्रान्तरालेआरायां ॥ यज्ञोदेवानामित्यस्यकुत्सऋषिः
यजुरंतंत्रिष्टुप्छंदःआदित्यादेवताआदित्यस्था० ॥ ॐ यज्ञोदेवानांप्रत्येतिसुम्नमादित्यासोभवंतामडयंतंः ॥ आवोर्वाची-
सुमतिर्ववृत्यादंहोश्चिद्यावरिवोवित्तरासदादित्येभ्यस्त्वा ॥ आदित्येभ्यो०आदित्यान्० ॥ २० ॥ इंद्राग्न्यंतरालेआरायां ॥
यावांकशेत्यस्यमेधातिथिऋषिःयजुरंतंगायत्रीछंदः अश्विनौदेवताअश्विस्थापनेवि० ॥ ॐ यावांकशामधुमत्यश्विनासूनृता-
तावती ॥ तयायज्ञंमिमिक्षतं ॥ अश्विभ्यां० अश्विनौआ० ॥ २१ ॥ अग्नियमांतरालेआरायां ॥ ओमासश्चर्षणीधृतइ-
त्यस्यमधुछंदाऋषिःगायत्रीछंदःविश्वेदेवादेवताविश्वेदेवस्था० ॥ ॐ ओमासश्चर्षणीधृतोविश्वेदेवासआगत ॥ दाश्वांसो-
दाशुषःसुतं ॥ विश्वेभ्योदेवेभ्योनमःविश्वान्देवान्० ॥ २२ ॥ तत्रैव ॥ उदीरतामित्यस्यशंखऋषिःत्रिष्टुप्छंदःपितरोदे-
तापितृस्था० ॥ ॐ उदीरतामवरऽउत्परासउन्मध्यमाःपितरःसोम्यासः ॥ असुंयईयुरवृकाऋतज्ञास्तेनोवंतुपितरोह-
वेषु ॥ पितृभ्योन० पितृन्० ॥ २३ ॥ यमनैर्ऋत्यांतरालेआरायां ॥ अभित्यंदेवमित्यस्यप्रजापतिऋषिःअष्टिछंदःसविता-
देवतायक्षस्था० ॥ ॐ अभित्यंदेवंसवितारमोण्योःकविक्रतुमर्चामिसत्यसवंरत्नधामभिप्रियंमतिंकविं ॥ ऊर्ध्वायस्याम-
तिर्भाअदिद्युतत्सवीमनिहिरण्यपाणिरमिमीतसुक्रतुःकृपास्वः ॥ प्रजाभ्यस्त्वाप्रजास्त्वानुप्राणंतुप्रजास्त्वमनुप्राणिहि ॥
यक्षेभ्यो० यक्षान्० ॥ २४ ॥ निर्ऋतिवरुणांतरालेआरायां ॥ आयंगौरितिमन्त्रद्वयस्यप्रजापतिऋषिःगायत्रीछंदःलिंगो-

तंइत्यानमोदेविनिर्ऋतेतुभ्यमस्तु ॥ निर्ऋतये० निर्ऋतिं० ॥ १३ ॥ पश्चिमेआरायांवृहस्पतेरग्रे ॥ तत्त्वायामीत्यस्यशुनः-
शेपऋषिःत्रिष्टुप्छंदःवरुणोदेवतावरुणस्थापने० ॥ ॐ तत्त्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमा-
नोवरुणेहबोध्युरुशꣳसमानआयुःप्रमोषीः ॥ वरुणाय० वरुणं० ॥ १४ ॥ वायव्येआरायांशुक्रस्याग्रे ॥ आनोनियुद्भि-
रित्यस्यवसिष्ठऋषिःत्रिष्टुप्छंदःवायुर्देवतावायुस्था० ॥ ॐ आनोनियुद्भिःशतिनीभिरध्वरꣳसहस्रिणीभिरुपयाहियज्ञं ॥
वायोअस्मिन्सवनेमादयस्वयूयंपातस्वस्तिभिःसदानः ॥ वायवे० वायुं० ॥ १५ ॥ उत्तरेआरायांशनेरग्रे ॥ वयꣳसोम-
त्यस्यबंधुऋषिःगायत्रीछंदःसोमोदेवतासोमस्था० ॥ ॐ वयꣳसोमव्रतेतवमनस्तनूषुबिभ्रतः ॥ प्रजावंतःसचेमहि ॥
सोमाय० सोमं० ॥ १६ ॥ ऐशानेआरायांराहुकेत्वोरग्रे ॥ तमीशानमित्यस्यगोतमऋषिःजगतीछंदःविश्वेदेवादेवता
ईशानस्था० ॥ तमीशानंजगतस्तस्थुषस्पतिंधियंजिन्वमवसेहूमहेवयम् ॥ पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धःस्व-
स्तये ॥ ईशानाय० ईशानं० ॥ १७ ॥ अथवायुसोमांतरालमारभ्यअंतरालारासुयथाक्रमं ॥ वायुसोममध्येआरायां ॥
सुगावोदेवाइत्यस्यप्रजापतिऋषिःत्रिष्टुप्छंदःदेवादेवताःवसुस्था० ॥ ॐ सुगावोदेवाःसदनाअकर्मयआजग्मेदꣳसवनंजु-
षाणाः ॥ भरमाणावहमानाहवीꣳष्यस्मेधत्तवसवोवसूनि ॥ वसुभ्यो० वसून्० ॥१८॥ सोमेशानांतरालआरायां ॥ रुद्राः
सꣳसृज्येत्यस्यप्रजापतिऋषिःअनुष्टुप्छंदःरुद्रादेवतारुद्रस्था० ॥ ॐ रुद्राःसꣳसृज्यपृथिवींबृहज्ज्योतिःसमीधिरे ॥ तेषांभा-

नुरजंस्त्रइच्छुक्रोदेवेषुरोचते ॥ रुद्रेभ्यो० रुद्रान्० ॥ १९ ॥ ईशानेंद्रान्तरालेआरायां ॥ यज्ञोदेवानामित्यस्यकुत्सऋषिः
यजुरंतंत्रिष्टुप्छंदःआदित्यादेवताआदित्यस्था० ॥ ॐ यज्ञोदेवानांप्रत्येतिसुम्नमादित्यासोभवंतामडयंतः ॥ आवोर्वाची-
सुमतिर्ववृत्यादंहोश्चिद्यावरिवोवित्तरासदादित्येभ्यस्त्वा ॥ आदित्येभ्यो०आदित्यान्० ॥ २० ॥ इंद्राग्न्यंतरालेआरायां ॥
यावांकशेत्यस्यमेधातिथिऋषिःयजुरंतंगायत्रीछंदः अश्विनौदेवताअश्विस्थापनेवि० ॥ ॐ यावांकशामधुमत्यश्विनासूनृता-
वती ॥ तयायज्ञंमिमिक्षतं ॥ अश्विभ्यां० अश्विनौआ० ॥ २१ ॥ अग्नियमांतरालेआरायां ॥ ओमासश्चर्षणीधृतइ-
त्यस्यमधुछंदाऋषिःगायत्रीछंदःविश्वेदेवादेवताविश्वेदेवस्था० ॥ ॐ ओमासश्चर्षणीधृतोविश्वेदेवासआगत ॥ दाश्वांसो-
दाशुषःसुतं ॥ विश्वेभ्योदेवेभ्योनमःविश्वान्देवान्० ॥ २२ ॥ तत्रैव ॥ उदीरतामित्यस्यशंखऋषिःत्रिष्टुप्छंदःपितरोदे-
वतापितृस्था० ॥ ॐ उदीरतामवरउत्परासउन्मध्यमाःपितरःसोम्यासः ॥ असुंयईयुरवृकाऋतज्ञास्तेनोवंतुपितरोह-
वेषु ॥ पितृभ्योन० पितॄन्० ॥ २३ ॥ यमनैर्ऋत्यांतरालेआरायां ॥ अभित्यंदेवमित्यस्यप्रजापतिऋषिःअष्टिछंदःसविता-
देवतायक्षस्था० ॥ ॐ अभित्यंदेवंसवितारमोण्योःकविक्रतुमर्चामिसत्यसवंरत्नधामभिप्रियंमतिंकविं ॥ ऊर्ध्वायस्याम-
तिर्भाअदिद्युतत्सवीमनिहिरण्यपाणिरमिमीतसुक्रतुःकृपास्वः ॥ प्रजाभ्यस्त्वाप्रजास्त्वानुप्राणंतुप्रजास्त्वमनुप्राणिहि ॥
यक्षेभ्यो० यक्षान्० ॥ २४ ॥ निर्ऋतिवरुणांतरालेआरायां ॥ आयंगौरितिमन्त्रद्वयस्यप्रजापतिऋषिःगायत्रीछंदःलिंगो-

क्तादेवताभूतनागस्था० ॥ ॐ आयंगौःपृश्निरक्रमीदसदन्मातरंपुरः ॥ पितरंचप्रयन्त्स्वः ॥ अंतश्चरतिरोचनास्यप्राणादपानती ॥ व्यख्यन्महिषोदिवं ॥ भूतनागेभ्यो० भूतनागान्० ॥ २५ ॥ वरुणवाय्वंतरालेआरायां ॥ ऋतापाडित्यस्यदेवाऋषयःयजूंषिगंधर्वाप्सरोदेवताःगन्धर्वाप्सरःस्थापनं० ॥ ॐ ऋताषाडृतधामाग्निर्गंधर्वस्तस्यौषधयोप्सरसोमुदोनाम ॥ सनइदंब्रह्मक्षत्रंपातुतस्मैस्वाहावाट्ताभ्यः ॥ गंधर्वाप्सरोभ्यो० गंधर्वाप्सरसआ० ॥ २६ ॥ अथसौम्याद्यष्टाब्जपत्रेषु ॥ उत्तरदले ॥ यदक्रंदेत्यस्यजमदग्निदीर्घतमावृषीत्रिष्टुप्छंदःअश्वोदेवतास्कंदस्था० ॥ ॐ यदक्रंदःप्रथमंजायमानऽउद्यन्त्समुद्रादुतवापुरीषात् ॥ श्येनस्यपक्षाहरिणस्यबाहूउपस्तुत्यंमहिजातंतेअर्वन् ॥ स्कंदाय० स्कंदं० ॥ २७ ॥ ईशानदले ॥ अदितिर्द्यौरित्यस्यगौतमऋषिःत्रिष्टुप्छंदःविश्वेदेवादेवतादक्षस्था० ॥ ॐ अदितिर्द्यौरदितिरंतरिक्षमदितिर्मातासपितासपुत्रः ॥ विश्वेदेवाऽअदितिःपंचजनाऽअदितिर्जातमदितिर्जनित्वं ॥ दक्षाय० दक्षं० ॥ २८ ॥ पूर्वदले ॥ अंबेअंबिकइत्यस्यप्रजापतिऋषिःअनुष्टुप्छंदःअश्वोदेवतादुर्गास्था० ॥ ॐ अंबेअंबिकेंबालिकेनमानयतिकश्चन ॥ ससस्त्यश्वकःसुभद्रिकांकांपीलवासिनीम् ॥ दुर्गायै० दुर्गां० ॥ २९ ॥ तत्रैव ॥ इदंविष्णुरित्यस्यमेधातिथिऋषिःगायत्रीछंदःविष्णुर्देवताविष्णुस्था० ॥ ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदं ॥ समूढमस्यपांसुरे ॥ विष्णवे० विष्णुं० ॥ ३० ॥ आग्नेयदले ॥ पितृभ्यइत्यस्यप्रजापत्यश्विसरस्वत्यऋषयः सप्तयजूंषिपितरोदेवतास्वधास्था० ॥ ॐ पितृभ्यःस्वधायिभ्यःस्वधानमःपितामु-

हेभ्यः स्वधायिभ्यः स्वधानमः प्रपितामहेभ्यः स्वधायिभ्यः स्वधानमः ॥ अक्षन्पितरोमीमदंतपितरोतीतृपंतपितरः पि-
तरःशुंधध्वं ॥ स्वधायै० स्वधां० ॥ ३१ ॥ दक्षिणदले ॥ परंमृत्योइत्यस्यसंकुसुकऋषिःत्रिष्टुप्छंदःमृत्युर्देवतामृत्यु-
स्था० ॥ ॐ परंमृत्योअनुपरेहिपंथांयस्तेऽअन्यइतरोदेवयानात् ॥ चक्षुष्मतेशृण्वतेतेब्रवीमिमानःप्रजाᳬरीरिषोमोतवीरान् ॥
मृत्यवे० मृत्युं० ॥ ३२ ॥ नैर्ऋत्यदले ॥ गणानांत्वेत्यस्यप्रजापतिऋषिःचत्वारियजूंषिगणपतिर्देवतागणपतिस्था० ॥
ॐ गणानांत्वागणपतिᳬहवामहेप्रियाणांत्वाप्रियपतिᳬहवामहेनिधीनांत्वानिधिपतिᳬहवामहेवसोमम ॥ आहमजा
निगर्भधमात्वमजासिगर्भधं ॥ गणपतये० गणपतिं० ॥ ३३ ॥ पश्चिमदले ॥ शन्नोदेवीरित्यस्यदध्यङ्ङाथर्वणऋ-
षिःगायत्रीछंदःआपोदेवताअपांस्था० ॥ ॐ शन्नोदेवीरभिष्टयऽआपोभवंतुपीतये ॥ शंयोरभिस्रवंतुनः ॥ अद्भ्योनमः-
अपःस्था० ॥ ३४ ॥ वायव्यदले ॥ मरुतोयस्येत्यस्यगोतमऋषिःगायत्रीछंदःमरुतोदेवतामरुत्स्था० ॥ ॐ मरुतो-
यस्यहिक्षयेपाथादिवोविमहसः ॥ ससुगोपातमोजनः ॥ मरुद्भ्यो० मरुतःस्था० ॥ ३५ ॥ अथकर्णिकायां ॥
मध्ये ॥ तत्त्वायामीत्यस्यशुनःशेपऋषिःत्रिष्टुप्छंदःवरुणोदेवतावरुणस्था० ॥ ॐ तत्त्वायामिब्रह्मणावंदमानस्तदाशा-
स्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशᳬसमानऽआयुःप्रमोषीः ॥ वारुणाय० वरुणं० ॥ ३६ ॥ उत्त-
रादितःकेसरमूलेषु ॥ उत्तरेकेसरमूले ॥ ब्रह्मजज्ञानमित्यस्यप्रजापतिऋषिःत्रिष्टुप्छंदःआदित्योदेवताब्रह्मस्थापने० ॥

ॐ ब्रह्मजज्ञानंप्रथमंपुरस्ताद्विसीमतःसुरुचोवेनआवः ॥ सबुध्न्याउपमाअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ॥ ब्रह्मणे०
ब्रह्माणं० ॥ ३७ ॥ ईशान्येकेसरमूले ॥ विष्णोरराटमित्यस्यप्रजापतिर्ऋषिःयजुःविष्णुर्देवताविष्णुस्था० ॥ ॐ विष्णोर-
राटमसिविष्णोःश्नप्त्रेस्थोविष्णोःस्यूरसिविष्णोर्ध्रुवोसि ॥ वैष्णवमसिविष्णवेत्वा ॥ विष्णवे० विष्णुं० ॥ ३८ ॥ पूर्वके-
सरमूले ॥ मानस्तोकइत्यस्यकुत्सऋषिःजगतीछंदःएकरुद्रोदेवतारुद्रस्था० ॥ ॐ मानस्तोकेतनयेमानआयुषिमानोगोषु
मानोअश्वेषुरीरिषः ॥ मानोवीरान्रुद्रभामिनोवधीर्हविष्मंतःसदमित्त्वाहवामहे ॥ रुद्राय० रुद्रं० ॥ ३९ ॥ आग्नेयकेस-
रमूले ॥ श्रीश्चतइत्यस्यनारायणऋषिःत्रिष्टुप्छंदःलक्ष्मीर्देवतालक्ष्मीस्था० ॥ ॐ श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्ष-
त्राणिरूपमश्विनौव्यात्तम् ॥ इष्णन्निषाणामुंमइषाणसर्वलोकंमइषाण ॥ लक्ष्म्यै० लक्ष्मीं० ॥ ४० ॥ दक्षिणकेसरमूले ॥
अंबेअंबिकेइत्यस्यप्रजापतिर्ऋषिःत्रिष्टुप्छंदःअश्वोदेवताअंबिकास्थापनेवि० ॥ ॐ अंबेअंबिके० ॥ अंबिकायै० अंबिकां ॥
॥ ४१ ॥ नैर्ऋत्येकेसरमूले ॥ तत्सवितुरित्यस्यविश्वामित्रऋषिःगायत्रीछंदःसवितादेवतासावित्रीस्था० ॥ ॐ तत्सवि-
तुर्व० ॥ सावित्र्यै० सावित्रीं० ॥ ४२ ॥ पश्चिमेकेसरमूले ॥ पञ्चनद्यइत्यस्यआदित्ययाज्ञवल्क्यावृषीअनुष्टुप्छंदःसरस्व-
तीनदीदेवतासरित्स्था० ॥ ॐ पंचनद्यःसरस्वतीमपियंतिसस्रोतसः ॥ सरस्वतीतुपंचधासोदेशेभवत्सरित् ॥ गंगादिन-
दीभ्यो० गंगादिनदीः० ॥ ४३ ॥ वायव्येकेसरमूले ॥ इमंमइत्यस्यशुनःशेपऋषिःगायत्रीछंदःवरुणोदेवतासप्तसागरस्था०॥

ॐ इमम्मेवरुणश्रुधीहवमद्याचमृडय ॥ त्वामवस्युराचके ॥ सप्तसागरेभ्यो० सप्तसागरान्० ॥ ४४ ॥ ब्रह्मणःपादमूले ॥
ॐ भूतग्रामाय० भूतग्रामं० ॥ ४५ ॥ सतोनाम्नाकर्णिकोपरि ॥ ॐ मेरवेन० मेरुं० ॥ ४६ ॥ बाह्यपरिधौसोमादि-
समीपे ॥ ॐ गदायै० गदां० १ ॥ ईशानांतिके ॐ त्रिशूलाय० त्रिशूलं० २ ॥ इंद्रांतिके वज्राय० वज्रं० ३ ॥ अग्निस-
मीपे शक्तये० शक्तिं० ४ ॥ यमांतिके दंडाय० दंडं० ५ ॥ निर्ऋतिसमीपे खड्गाय० खड्गं० ६ ॥ वरुणांतिके पाशाय०
पाशं० ७ ॥ वायुसमीपे अंकुशाय० अंकुशं० ८ ॥ तद्बाह्योत्तरे गौतमाय० गौतमं० ९ ॥ ईशान्यां० भरद्वाजाय०
भरद्वाजं० १० ॥ पूर्वे विश्वामित्राय० विश्वामित्रं० ११ ॥ आग्नेये कश्यपाय० कश्यपं० १२ ॥ दक्षिणे जमदग्नये०
जमदग्निं० १३ ॥ निर्ऋत्यां वसिष्ठाय० वसिष्ठं० १४ ॥ पश्चिमे अत्रये० अत्रिं० १५ ॥ वायव्यां अरुन्धत्यै० अरुंधतीं०
१६ ॥ तद्बाह्ये पूर्वे ऐंद्र्यै० ऐंद्रीं० १७ ॥ आग्नेय्यां कौमार्यै० कौमारीं० १८ ॥ दक्षिणे ब्राह्म्यै० ब्राह्मीं० १९ ॥ निर्ऋत्यां
वाराह्यै० वाराहीं० २० ॥ पश्चिमे चामुंडायै० चामुंडां २१ ॥ वायव्यां वैष्णव्यै० वैष्णवीं २२ ॥ उत्तरेकौबेर्यै० कौबे-
रीं० २३ ॥ ईशान्यांवैनायक्यै० वैनायकीं० २४ ॥ इतिवारुणमंडलेप्रणवादिनमोंतैश्चतुर्थ्यंतैर्नाममंत्रैस्तत्तल्लिंगोक्तैर्वा दि-
कैर्मंत्रैर्वाआवाह्यसंपूज्यपायसबलीन्दत्वाहोमसमयेयथोक्तसंख्यतिलाहुतीराज्याहुतीर्वाजुहुयात् ॥ ॥ इतिवारुणमण्ड० ॥
नामपक्षे १ ॐ सूर्यायनमःपायसबलिंसमर्पयामि २ सोमायनमः ३ भौमायनमः ४ बुधायनमः ५ बृहस्पतयेनमः
६ शुक्रायनमः ७ शनैश्चरायनमः ८ राहवेनमः ९ केतवेनमः १० इंद्रायनमः ११ अग्नयेनमः १२ यमायनमः १३ निर्ऋ-

तयेनमः १४ वरुणायनमः १५ वायवेनमः १६ कुबेरायनमः १७ ईशानायनमः १८ अष्टवसुभ्योनमः १९ एकादश-रुद्रेभ्यो० २० द्वादशादित्येभ्यो० २१ अश्विभ्यांनमः २२ विश्वेभ्योदेवेभ्योनमः २३ पितृभ्योनमः २४ यक्षेभ्योनमः २५ भूतनागेभ्योनमः २६ गन्धर्वाप्सरोभ्योनमः २७ स्कंदायनमः २८ दक्षायनमः २९ दुर्गायैनमः ३० विष्णवेनमः ३१ स्वधायैनमः ३२ मृत्यवेनमः ३३ गणपतयेनमः ३४ अद्भ्योनमः ३५ मरुद्भ्योनमः ३६ वरुणायनमः ३७ ब्रह्मणे-नमः ३८ विष्णवेनमः ३९ रुद्रायनमः ४० लक्ष्म्यैनमः ४१ अंबिकायैनमः ४२ सावित्र्यैनमः ४३ गंगादिनदीभ्यो० ४४ सप्तसागरेभ्यो० ४५ भूतग्रामायनमः ४६ मेरवेनमः ४७ गदायैनमः ४८ त्रिशूलायनमः ४९ वज्रायनमः ५० शक्तयेनमः ५१ दण्डायनमः ५२ खड्गायनमः ५३ पाशायनमः ५४ अंकुशायनमः ५५ गौतमायनमः ५६ भरद्वाजा-यनमः ५७ विश्वामित्रायनमः ५८ कश्यपायनमः ५९ जमदग्नयेनमः ६० वसिष्ठायनमः ६१ अत्रयेनमः ६२ अरुंधत्यै-नमः ६३ ऐन्द्र्यैनमः ६४ कौमार्यैनमः ६५ ब्राह्म्यैनमः ६६ वाराह्यैनमः ६७ चामुण्डायैनमः ६८ वैष्णव्यैनमः ६९ कौबेर्यैनमः ७० वैनायक्यैनमः ॥ नाममन्त्रपक्षेऽयंसौकर्यार्थकःसंग्रहइतिज्ञेयम् ॥

वारुणमण्डलम् ॥ ॥ दानचंद्रिकायां—तत्राचार्योवेद्यांमध्येत्रिहस्तव्यासंचतुरस्रंप्रसाध्य प्रागपरदक्षिणोत्तरनवनव-रेखाभिश्चतुष्षष्टिकोष्ठंकुर्यात् ॥ तत्रकोष्ठानिप्रत्येकंनवनवांगुलानिसंपद्यंते ॥ ततोबहिरंत्यपंक्तिषुचतुर्दिक्षुमध्यकोष्ठानि चत्वारिचत्वारिमार्जयित्वा तदुपर्युपांत्यपंक्तिषुपार्श्वयोस्तत्रयंत्यक्त्वा प्रतिदिशंमध्येकोष्ठद्वयमार्जनेनचतुर्दिक्षुपट्पट्कोष्ठा-

निचत्वारिद्वाराणिसिद्ध्यंति ॥ ततोमध्यस्थितषोडशकोष्ठानिमार्जयेत् ॥ तथाचमध्यचतुरस्रपीठपादाःसिद्ध्यंति ॥ ततोम-
ध्याचत्वारिवृत्तानिकुर्यात् ॥ तत्राद्येचत्वार्यंगुलानिव्यासः । द्वितीयेष्टौ । तृतीयेचतुर्विंशतिः । चतुर्थेषड्विंशतिरिति ॥
तच्चतुरंगुलंवृत्तंकर्णिकारूपंपीतेनरजसापूरयित्वा कर्णिकावधिरेखांसितेनरजसानिर्माय तद्बहिरष्टांगुलात्मकेवृत्तेपीतरक्त-
सितरजोभिःसंपादितमूलमध्याग्राणिषोडशकेसराणिसंपाद्य तत्केसरावधिरेखांसितेनैवरजसांगुलोन्नतांसंपाद्य चतुर्विंशां
गुलात्मकेतद्बहिर्वृत्तेसितेनरजसाष्टदिक्ष्वष्टौपत्राणिरक्ताग्राणिकुर्यात् ॥ ततोदलांतररेखांसितेनरजसाविधाय दलांतराणि
कृष्णेनरजसापूरयित्वा तद्बहिरेकांगुलांतराबहिर्वृत्तरेखांसितेनरजसासंपाद्य वृत्तद्वयांतरंपरितोष्टदलाग्रतन्मध्यचिह्नैःषो-
डशधाविभज्य प्रतिभागंयवाकारान्षोडशारान् श्यामपीतारुणश्वेतरजोभिःकल्पयित्वा तदन्तरायथायोग्यंरजोभिःपूर-
यित्वा ॥ तद्बहिःसितपीतारुणश्यामहरिताःपञ्चरेखालिखेत् ॥ तद्बहिःपीठक्षेत्रंचतुरस्रंयथाशोभंरजोभिरलंकृत्य पीठाव-
धिरेखांसितेनरजसाचतुरस्रांरचयेत् ॥ द्वारक्षेत्राणिपूर्वादितःपीतश्यामसितहरितरजोभिःपूरयेत् ॥ आग्नेयादिकोष्ठचतु-
ष्टयंलोहितहरितश्यामधवलैरजोभिःपूरयेत् ॥ आग्नेयादिपीठपादचतुष्टयंपञ्चकोष्ठात्मकंतुक्रमात्सितरक्तपीतकृष्णरजोभिः
पूरयेत् ॥ ततःसितेनरजसांगुलोन्नतेनबहिश्चतुरस्ररेखांकुर्यादितिमदनरत्नादयः ॥ ठक्कुरमतेतुचतुरस्रंचतुर्हस्तं ॥ तत्रप्रत्ये-
कंद्वादशांगुलानिनवकोष्ठानि । वृत्तानितुपञ्च । तत्राद्यवृत्तेचत्वार्यंगुलव्यासः । द्वितीयेष्टौ । तृतीयेविंशतिः । चतुर्थेच-
तुर्विंशतिः । पञ्चमेंतश्चतुरस्रबहिस्तनेऽष्टात्रिंशदिति पञ्चकोष्ठात्मकंपीठपादचतुष्टयं ॥ आग्नेयादिक्रमेणरक्तहरितश्यामसि-

तैःरजोभिःपूरणीयं ॥ कोणकोष्ठचतुष्टयंप्रत्येकंत्रिभिस्त्रिभिर्वर्णैरितिविशेषः ॥ इदमेववारुणमण्डलंजलाशयोत्सर्गादौज्ञेयम् ॥ पुनस्तत्रैव—वज्रंप्रागुत्तरंभागेआग्नेय्यांशक्तिमुज्वलां ॥ आलिखेद्दक्षिणेदंडंनैर्ऋत्यांखड्गमालिखेत् ॥ पाशंतुवारुणेलेख्यंध्वजंवैवायुगोचरे ॥ कौबेर्यांतुगदालेख्याईशान्यांशूलमालिखेत् ॥ शूलस्यवामदेशेतुचक्रंपद्मंचदक्षिणे ॥ ततोमहावेद्युपरिपञ्चवर्णफलपुष्पोपशोभितंवितानंकूटमंटपेवध्नीयादितिदिवाकरविरचितायांदानचंद्रिकायांवारुणमण्डलम् ॥ ॥

अथास्यकारिकाःसंगृह्यंते—त्रिहस्तायामकंकार्यंचतुरस्रंसमन्ततः ॥ चतुःषष्टिःसुकोष्ठानितस्मिन्संपादयेद्बुधः ॥ १ ॥ बाह्यपंक्तौचतुर्दिक्षुमध्येकोष्ठचतुष्टयं ॥ तदधःपंक्तिमध्यस्थंकोष्ठद्वितयमेवच ॥ २ ॥ एकीकृत्यचचत्वारिद्वाराणिसमकल्पयेत् ॥ कोणेष्वेकैककोष्ठंतुहित्वापञ्चभिरेवच ॥ ३ ॥ कोष्ठैःपादाःप्रकर्तव्याःसंलग्नैर्मंडलस्यतु ॥ मध्येषोडशकोष्ठानिमार्जयित्वालिखेत्क्रमात् ॥ ४ ॥ चतुरंगुलकंवृत्तंप्रथमंद्विगुणंपरं ॥ चतुर्विंशांगुलंतत्रतृतीयंपरिकल्पयेत् ॥ ५ ॥ षड्विंशत्यंगुलंतद्वच्चतुर्थमुपकल्पयेत् ॥ कर्णिकाकेसरस्थानंपद्मस्थानमभूदिति ॥ ६ ॥ नामानिकथितान्येवंकुर्याद्वारुणमण्डलं ॥ कर्णिकांपीतरजसापूरयेच्छुभ्रवर्णकैः ॥ ७ ॥ केसरस्थानकंतत्रलिखेत्षोडशतानितु ॥ पीतरक्तसितैर्वर्णैर्मूलमध्याग्रकेषुच ॥ ८ ॥ पद्मस्थानंसितेनैवपूर्यपद्माष्टकंलिखेत् ॥ रक्ताग्रकंपत्रसंधिंपूरयेत्कृष्णवर्णकैः ॥ ९ ॥ पद्माद्बहिःसितेनैवरजसांगुलमानतः ॥ परिध्यावेष्टितंकार्यंपद्माष्टकमथोदितं ॥ १० ॥ तद्बहिःशिष्टभागेतुषोडशारान्प्रकल्पयेत् ॥ श्यामपीतारुणश्वेतरजोभिर्बुद्धिमत्तमः ॥ ११ ॥ अंतरालंयथाशोभंतद्बहिःपञ्चरेखकं ॥ श्वेतपीतारुणश्यामहरिद्भिर्वर्णकैःक्रमात् ॥

॥ १२ ॥ पीठक्षेत्रंयथाशोभंरजोभिःपूरयेद्बुधः ॥ द्वाराणिपूर्वतःपीतश्यामश्वेतहरिद्भवैः ॥ १३ ॥ आग्नेयादिदिशांको-
णान्रक्तनीलसितोज्ज्वलैः ॥ पीठपादचतुष्कंचश्वेतरक्तसुपीतकैः ॥ १४ ॥ कृष्णेनरजसाचैवपूरयेत्फलभाग्भवेत् ॥ आग्नेया-
दिहरिद्भिश्चपीठपादक्रमःस्मृतः ॥ १५ ॥ ततःसितेनैवसमस्तपीठाद्बहिर्विरेखांरचयेत्समासौ ॥ दिवाकरेणाशुविलेखना-
यप्रकारउक्तोविदुषांमुदेच ॥ १६ ॥ तथा ॥ वज्रंप्रागुत्तरेभागेआग्नेय्यांशक्तिमुज्ज्वलां ॥ आलिखेद्दक्षिणेदण्डंनैर्ऋत्यांखड्ग-
मालिखेत् ॥ १७ ॥ पाशंतुवारुणेलेख्यंध्वजंवायव्यगोचरे ॥ कौबेर्यांतुगदालेख्याईशान्यांशूलमालिखेत् ॥ १८ ॥
शूलस्यवामदेशेतुचक्रंपद्मंतुदक्षिणे ॥ १९ ॥ ॥ इतिवारुणमण्डलकारिकाः ॥

एकवस्त्रस्नानप्रयोगः ॥ ॥ देशकालौसंकीर्त्यशुभपुण्यतिथौममसभार्यस्यइहजन्मनिजन्मांतरेवाब्रह्महत्यादिनायज्जनि-
तंचतुर्विधंवंध्यात्वंतद्विनाशनार्थंतथाचसंततिप्रतिबन्धकदोषनिवृत्त्यर्थंआयुष्मत्सुपुत्रादिसंततिप्राप्तिद्वाराश्रीमहारुद्रप्री-
त्यर्थंएकवस्त्रस्नानमहंकरिष्ये ॥ तदंगतयागणपतिपूजनंस्वस्तिपुण्याहवाचनंमातृकापूजनंवसोर्धारांनांदीश्राद्धंचक० ॥ गणे-
शपूजनादिवृद्धिश्राद्धांतंविधायाचार्यंवृणुयात् ॥ अस्मिन्नेकवस्त्रस्नानकर्मणिआचार्यत्वांवृणे ॥ आचार्यस्तु० ॥ ब्रह्मवरणं ॥
यथाचतुर्मुखो० ॥ आचार्यप्रार्थना ॥ कर्मसाक्षीजगन्नाथयन्मयापूर्वकर्मणा ॥ पंचधापत्यदुःखाख्यंदौर्भाग्यमतुलंमहत् ॥
प्राप्तंतस्यविनाशायविधित्सुर्विधिमुत्तमं ॥ सहपत्न्याजगन्नाथतत्रसिद्धिंप्रयच्छमे ॥ ततआचार्यःदेशकालौसंकीर्त्यअस्मि-
न्नेकवस्त्रस्नानकर्मणियजमानेनवृतोहंआचार्यकर्मकरिष्येइतिसंकल्प्यदिग्रक्षणादिकर्मभूमिप्रोक्षणांतंकुर्यात् ॥ ततोयुवा-

सुवासाइतिमन्त्रेणदंपत्योरहतमंकवस्त्रंपरिधापयेत् ॥ ॐ युवासुवासाः० ॥ शिवोनामेतिमन्त्रेणतावुपवेशयेत् ॥ शिवोना-
मासि० शीः ॥ ततःस्थंडिलस्यपूर्वतःतंडुलैरष्टदलंकृत्वा तन्मध्येउक्तलक्षणांस्वर्णमयींशिवमूर्तिमग्न्युत्तारणपूर्वकंशिवोनामे-
तिमन्त्रेणस्थापयेत् ॥ तत्राग्नेयादिदलेषुइंद्रादिदेवताःक्रमेणावाहयेत् ॥ यथा ॥ इंद्रंविश्वा० पतिं ॥ आग्नेयदलेइंद्रायनमः
इंद्रमावाहयामि ॥ येचेहपितरो० पस्व ॥ दक्षिणदले ॥ ॐ दिव्यपूर्वजभ्योनमःदिव्यपूर्वजानावाहयामि ॥ ॐ येदेवा-
सोदिव्येका० पध्वं ॥ नैर्ऋत्यदलेसनकादिभ्योनमः सनकादीनावा० ॥ ॐ वरुणःप्रावि० धसः ॥ पश्चिमदलेवरुणाय-
नमःवरुणमा० ॥ ॐ गणानांत्वा० धम् ॥ वायव्यदलेगणपतयेनमः गणपतिमा० ॥ ॐ अभिगोत्रा० यत्सु ॥ उत्तर-
दले गर्भमातृभ्योनमः गर्भमातॄरावा० ॥ ततईशानदले सर्वान्ग्रहान्स्वस्वमंत्रैःस्थापयेत् ॥ ॐ आकृष्णेन० सूर्याय०
सूर्यं० ॥ इमंदेवा० सोमाय० सोमं० ॥ अग्निर्मूर्धा० भौमाय० भौमं० ॥ उद्बुध्यध्वं० बुधाय० बुधं० ॥ बृहस्पते०
बृहस्पतये० बृहस्पतिं० ॥ अन्नात्परि० शुक्राय० शुक्रं० ॥ शंनोदेवी० शनैश्चराय० शनैश्चरं० ॥ कयानश्चित्र० राहवे०
राहुं० ॥ केतुंकृण्व० केतुभ्यो० केतून्० ॥ ऋतवःस्थऋ० माणाः ॥ पूर्वदलेस्मरायनमः स्मरं आ० ॥ तत्रैवमहीद्यौरि-
त्यादिपूर्णपात्रनिधानांतंकलशस्थापनंकृत्वातत्समीपेनारिकेलंनिधायावाहितदेवतानांस्थापनक्रमेणपूजनंदंपतीभ्यांसहैव-
कर्तव्यं ॥ ततोजलप्रार्थना ॥ आपस्त्वमसिसर्वेषांदेवानामग्रणीःप्रभो ॥ जीवनंसर्वजंतूनांगर्भंधेहिममप्रभो ॥ १ ॥
त्वयैवाधिष्ठिताःसर्वेनदीनदजलाशयाः ॥ पुनंतुपापिनंसर्वेगर्भंधेहि० ॥ २ ॥ यानिकानिचपापानियेचकेचिज्जलाशयाः ॥

त्वयैवपावितास्तस्माद्गर्भंधेहि० ॥ ३ ॥ त्वमावाभ्यांप्रपन्नाभ्यांशरणंदुःखशांतये ॥ प्रार्थितःपरमेशानगर्भंधेहि० ॥ ४ ॥
आशास्महेमहाभागसंततिंलोकपावनीं ॥ प्रसन्नाद्भवतःस्वामिन्गर्भंधेहि० ॥५॥ यानिकानिचपापानिघ्नपत्यकराणिच ॥
हत्वातान्यखिलानीशगर्भंधेहि० ॥ ६ ॥ भूतप्रेतपिशाचाद्यायेनौसंततिघातकाः ॥ पाशेनायम्यतान्सर्वान्गर्भंधेहि० ॥७॥
प्रत्यगाशापतेराजन्जलानामधिपप्रभो ॥ नष्टानष्टप्रसृष्टात्वंगर्भंधेहि० ॥ ८ ॥ नदीनदतडागादिकूपाद्यायेजलाशयाः ॥
त्वयाविनानशोभंतेगर्भंधेहिजलेश्वर ॥ ९ ॥ पूर्वंजन्मनियत्पापंकुसंसर्गात्स्वयंकृतं ॥ इहापिसलिलेस्थित्वागर्भंधेहिप्रसीदमे
॥ १० ॥ अष्टषष्टिसुतीर्थानांनदीनामधिपोभवान् ॥ सप्तानामपिचाब्धीनामीशगर्भंददस्वमे ॥ ११ ॥ त्वमेवपाशपाणि-
श्चत्वमेवह्यंभसांपतिः ॥ आपस्तुप्राणिनांजीवोगर्भंधेहिदयापर ॥ १२ ॥ भूतप्रेतादिदोषाणांरोगाणामपितस्यच ॥ अंतरा-
यंप्रभोछित्त्वागर्भंधेहिदयांकुरु ॥ १३ ॥ इतिजलप्रार्थना ॥ अथौषधिप्रार्थना ॥ सर्वेषांजगतोभानांग्रहाणामधिपस्तथा ॥
तवस्वामीसदासोमोगर्भंधेहिममौषधे ॥ इत्यौषधिप्रार्थना ॥ अथाचार्यःयजमानहस्तेदूर्वाक्षतानारिकेलंदत्वातथैवपत्नी-
हस्तेऔदुंबरींफलवतींशाखांसमर्प्योपवेशयेत् ॥ वरुणोपासनंकुर्यात्स्तुतिपाठपरायणः ॥ तत्रमन्त्राः ॥ इमम्मे० तत्त्वा-
यामि० त्वन्नोअग्ने० सत्वन्नोअग्ने० मापोमौषधी० उदुत्तमं० वरुणस्योत्तं० वरुणःप्राविता० येतेशतंवरुणयेसहस्रंय-
ज्ञियाः पाशावितताम्हांतः ॥ तेभिर्नोअद्यसवितोतविष्णुर्विश्वेमुञ्चन्तुमरुतःस्वर्काः ॥ ॥ इतिवरुणोपासनं० ॥ ॥
अथवस्त्रप्रार्थना ॥ ॥ ब्रह्माविष्णुश्चसोमश्चकंदर्पोघृपवाहनः ॥ पार्वतीसुभगाभद्रासावित्रीचवस्त्रदेवता ॥ एह्येहिवस-

नेशुभेमंगलंकुरुदेवते ॥ सर्वभूतकरंदेविगर्भमेदेहिवांछितं ॥ इतिवस्त्रप्रार्थना ॥ ततआचार्यःवंशपात्रमादायतन्मध्येमुद्ग-
तंडुलगोधूमयवकंगुसुशालिराजमापादिसप्तधान्यंप्रपूर्यतत्रदीपंविन्यस्यनारिकेलनारिंगदाडिमजंबीरउत्ततीपूगफलमदनफ-
लानिनिधायसर्वौषधीश्चनिक्षिप्यप्रार्थयेत् ॥ तत्रमन्त्रः ॥ कूर्मपृष्ठनिभंपृष्ठेक्षीरनीरप्रतीरितं ॥ त्रिनेत्रंशंभुदैवत्यंनारिकेलंसु-
तप्रदं ॥ १ ॥ वृत्तंकनकवर्णाभंसुबीजंचमनोहरं ॥ तुहिनंनसमंश्वेतंनारंगंगर्भदंमम ॥ २ ॥ चंद्रबिंबसमानंतुवहुबीजसु-
पूरितं ॥ सुरंगंसोमदैवत्यंगर्भदंबीजपूरकं ॥ ३ ॥ उद्यदर्कसमंपुष्पंफलंसिंदूरसंनिभं ॥ बीजंचरत्नवद्यस्यगर्भदंदाडिमंमम
॥४॥ फलंतच्छक्रदैवत्यंगोमूत्रमदृशोपमं ॥ ज्ञानयोगप्रपूर्णंतुदेहित्वंगर्भमुत्तमं ॥ ५ ॥ पूगश्चसूर्यदैवत्योलाक्षारससमप्रभः ॥
आर्द्रःफलानांप्रवरोगर्भंदद्यात्सदामम ॥ ६ ॥ उत्सवेपुचमर्वेपुगर्भदंसर्वदैवतं ॥ गोरोचनसमाभासंगर्भदंमदनंमम ॥ ७ ॥
वद्धांवरश्चराम्नाचएलचीवचकंतथा ॥ धान्यंनिशावहुफलासर्वौपध्यइमाःस्मृताः ॥ ८ ॥ ततः ॥ धानावंतेतिमन्त्रेण
धान्यैःस्नानंतुकारयेत् ॥ ॐ धानावंतं० स्तनः ॥ याःफलिनीरितिमन्त्रेणफलैःस्नानंतुकारयेत् ॥ याःफलिनी० हसः ॥
याओषधीरितिमन्त्रेणसर्वौषध्यभिषेचनं ॥ याओषधीः० सुसर्च ॥ ततःवंशपात्रंदंपत्योःशिरसिनिधायवारुणमन्त्रैःस्नापयेत् ॥
तत्रमन्त्राः ॥ ॐ तत्त्वायामि० वरुणःप्राविता० वरुणस्योत्तं० येतेशतं० इमम्मेवरुण० इदमापः० पुनंतुमापितरः०
शिरोमेश्रीर्य० जिह्वामेभद्रं० बाहूमेबलं० पृष्ठीमेराष्ट्र० नाभिर्मेचित्तं० घृतवतीभुवनाना० पुनंतुमादेवजनाः० पवित्रेण-
पुनीहिमा० यत्तेपवित्रं० पवमानः० उभाभ्यांदेव० वैश्वदेवी० चित्पतिर्मा० पावकानःसरस्वती० शन्नोदेवी० ॥ ततोरुद्रा-

ध्यायेनस्नपनं ॥ नमस्तेइत्यध्यायः ॥ वाजश्चमइतित्रिंशदृचः ॥ इतिस्नपनविधिः ॥ ॥ अथस्वगृह्योक्तविधिनास्थंडिले-ग्निंप्रतिष्ठाप्यतत्रब्रह्मासनादिपायसचरुंश्रपयित्वाघारावाज्यभागौहुत्वाज्याहुतीर्जुहुयात् ॥ तत्रमन्त्राः ॥ ॐ अपांपृष्ठं० इदमद्भ्यो० १ इदमग्नये० २ वसुरुद्रादित्येभ्यो०३ अग्नये० ४ वाजाय० ५ अग्नये० ६ इदमग्नये० ७ इदमश्विसरस्वतींद्रेभ्यो० ८ अग्नये० ९ अदित्यै० १० । अग्नये० १ निहोताहोतृपदने० २ पुनस्त्वादित्या० ३ समितꣳसंकल्पे० ४ वाजः-पुरस्तात्० ५ अग्नेत्वन्नो० ६ आदित्यंगर्भं० ७ सरस्वतीयोन्यां० ८ तंपत्नीभिः० ९ अदित्यैरास्नासि० १० येनऋपय-स्तपसा० ११ गर्भोअस्योषधीनां १२ ॥ ततःपायसचरुमभिघार्यपूर्वोक्तैरेवमन्त्रैःप्रत्येकमवदानधर्मेणजुहुयात् ॥ ततोमं-डलेस्थापितदेवतानांनाममंत्रेणाज्येनचरुणाप्रत्येकमेकैकामाहुतिंजुहुयात् ॥ तद्यथा ॥ ॐ शिवायस्वाहा ॥ यथादेवतं-त्यागः ॥ इंद्राय० दिव्यपूर्वजेभ्यः० सनकादिभ्यः० वरुणाय० गणपतये० गर्भमातृभ्यः० सूर्याय० सोमाय० भौमाय० बुधाय० बृहस्पतये० शुक्राय० शनैश्चराय० राहवे० केतुभ्यो० स्मराय० ॐ अग्नयेस्विष्टकृते० ॥ ततोभूताद्यानवाहुतयः ॥ संस्रवप्राशनादिदक्षिणादानांतं ॥ कृतस्यैकवस्त्रस्नानकर्मणःसांगतासिद्ध्यर्थं इमंऋषभंदातुमहमुत्सृज्ये ॥ आचार्यायधेनुं दद्यात् ॥ अन्येभ्योब्राह्मणेभ्योभूयसीं ॥ ततोमंडलेस्थापितकलशोदकेनसुरास्त्वामित्यादिमन्त्रैः पवित्रैर्ब्राह्मणैरभिषेकः कार्यः ॥ ततःकामदैर्मन्त्रैराशिपःफलससकंगृह्णीयात् ॥ तत्रमन्त्रः ॥ ॐ मयीदमिंद्रियं० इंद्रियं० ॥ ततःसदीपंवंशपात्रं-शिवालयेनीत्वाशिवस्यपुरतोनिधायप्रणम्यप्रार्थयेत् ॥ देवदेवजगन्नाथगौरीनाथमहेश्वर ॥ भवेशानमहादेवनमस्तेसुत-

दोभव ॥ १ ॥ अष्टौदोपाश्रयेस्त्रीणांनवमःपुरुषस्यच ॥ तत्तद्दोषविनाशायसस्त्रीकःस्नानमाचरे ॥२॥ अथवस्त्रत्यागमन्त्रः ॥ विकृतंयच्चमेदेहेसंतानपरिपीडनं ॥ तत्सर्वंवस्त्रमाधायातुनिर्दोषास्यात्सुपुत्रिणी ॥ १ ॥ वरुणत्वंचभूतानामुच्यसेकारकःप्रभुः ॥ तत्रतीर्थप्रभावेणसंतानंदेहिमेवहु ॥ २ ॥ ततोहुतशेषंचरुंप्राशयेत् ॥ तत्रमन्त्राः ॥ ॐ आधत्तपितरोगर्भं० सथ ॥ ॐ आयंतुनःपितरः० त्वस्मान् ॥ गर्भंदेहिभगंदेहिभाग्यंदेहिसरस्वति ॥ पुत्रान्देहिधनंदेहिसर्वान्कामांश्चदेहिमे ॥ ततोब्राह्मणभोजनं ॥ यांतुदेवगणाइतिविसर्जनं ॥ ॥ इतिवीरसिंहालोकेरुद्रयामलोक्तमेकवस्त्रस्नानम् ॥ ॥ ॥

अथवृषोत्सर्गः ॥ ॥ तत्रकालःपारस्करगृह्ये—अथवृषोत्सर्गोगोयज्ञेनव्याख्यातःकार्तिक्यांपौर्णमास्यांरेवत्यांवाश्वयुजस्येति ॥ तथाचमत्स्यपुराणे—कार्तिक्यामथवैशाख्यांफाल्गुन्यामष्टकासुच ॥ आश्वयुज्यामथाषाढ्यांमाघ्यांचैत्र्यामथापिवा १ ॥ अयनेविषुवेचैवग्रहणेसूर्यचंद्रयोः ॥ वैधृतौचव्यतीपातेमन्वादिषुयुगादिषु २ ॥ दिनच्छिद्रेचसंक्रांतौतिथिसाम्येतथैवच ॥ मातृपित्रोःक्षयाहेचविशेषेणप्रशस्यते ३ ॥ यदाचित्तंचवित्तंचतीर्थंपात्रंतथैवच ॥ तदैवदानकालःस्यान्नान्यत्किंचिद्विचारयेत् ४ ॥ सचगोष्ठेगवांमध्येनदीतीरेशोभनवनेशिवालयेस्वगृहेवाकार्यः ॥ ॥ अथनीलोत्सर्गपद्धतिर्लिख्यते ॥ ततोनित्यवैश्वदेवंनिर्णेजनांतंकृत्वा तत्रश्रीपर्ण्यादिपीठेप्राङ्मुखउपविश्य ॥ आचम्यप्राणानायम्यदेशकालौस्मृत्वा ॥ आत्मनोदेहशुद्ध्यर्थंवृषोत्सर्गेऽधिकारसिद्ध्यर्थंरौप्यमुद्राम्नायत्वेनएकंप्राजापत्यमाचरिष्ये ॥ तेनपापापहमहाविष्णुःप्रीयतां ॥ आत्मनःदेहशुद्ध्यर्थंवृषोत्सर्गाधिकारसिद्ध्यर्थंविष्णुपूजनंकरिष्ये इतिसंकल्प्यषोडशोपचारैर्यथाविधि-

विष्णुंपूजयेत् ॥ ततोदेशकालौस्मृत्वाहस्तेकुशजलमादायममसमस्तपितृणांसैकोद्दिष्टानांउद्धरणार्थंश्रुतिस्मृतिपुरोणोक्तफलप्राप्त्यर्थंशाश्वतब्रह्मलोकावासयेगयाश्राद्धादिसमस्तफलप्राप्त्यर्थंपुत्रादिसंततिप्राप्त्यर्थंसकलकामनासिद्ध्यर्थंसर्वेषांगोत्रिणां श्रेयोर्थंश्रीमहारुद्रप्रीत्यर्थंवासग्रहमखंवृषोत्सर्गाख्यंकर्माहंकरिष्ये ॥ गणपतिपूजनंस्वस्तिपुण्याहवाचनंमातृकापूजनंवसोर्धारापूजनंआयुष्यमन्त्रजपंनांदीश्राद्धंचकृत्वा ब्रह्माचार्यऋत्विग्वरणंकुर्यात् ॥ दिग्रक्षणं ॥ पंचगव्यकरणं ॥ आपोहिष्ठेतित्रिभिर्मन्त्रैःकर्मभूमिंप्रोक्ष्ययज्ञसंभारांश्चसंप्रोक्ष्य ॥ ततःएकंग्रहहोमार्थमपरंवृषोत्सर्गार्थंशुद्धमृदास्थंडिलद्वयंविधाय ॥ भूमिपूजनं ॥ दक्षिणस्थंडिलेग्रहहोमार्थंपञ्चभूसंस्कारान्कृत्वाअग्निस्थापनंकुर्यात् ॥ स्थंडिलस्येशानभागेग्रहवेद्यांग्रहान्स्वस्वमन्त्रैःसंपूज्यईशान्यांरुद्रकलशंसंस्थाप्यपूर्णपात्रनिधानांतंकृत्वाषोडशोपचारैःपूजयेत् ॥ ततोब्रह्मोपवेशनादिचरुंश्रपयित्वाआज्योद्वासनाद्याज्यभागांतंकृत्वाद्रव्यत्यागंकुर्यात् ॥ ग्रहदेवताप्रीत्यर्थंपूर्वोक्तहोमद्रव्यैःअष्टोत्तरसहस्रमष्टोत्तरशतमष्टाविंशतिंवाजुहुयात् ॥ होमांतेग्रहाणांउत्तरपूजनाद्यग्निविसर्जनांतंसमानं ॥ पूजास्विष्टंनवाहुत्योबलिःपूर्णाहुतिस्तथा ॥ श्रेयःसंपाद्यदानंचअभिषेकोविसर्जनं ॥ कृतस्यवृषोत्सर्गांगग्रहहोमस्यसांगतासिद्ध्यर्थंब्राह्मणेभ्योहिरण्यादिदक्षिणांदातुमहमुत्सृज्ये ॥ तेनश्रीग्रहदेवताःप्रीयंतां ॥ ॥ ततोवृषोत्सर्गः ॥ उदक्स्थंडिले पञ्चभूसंस्कारपूर्वकंअग्निप्रतिष्ठापनं ॥ ततोवृषंवत्सतरींचयथालाभंमांगलिकस्नानादिकारयित्वावस्त्रादिभिर्भूषयेत् ॥ अग्निस्थापनदेशादीशान्यांपञ्चगोमातरःपीठवस्त्रोपरिपूज्याः ॥ ॐ नंदायैनमःनंदांआवाहयामि ॥ ॐ सुमनसायैनमःसुमनसांआ० ॥ ॐ सुभद्रायै० सुभद्रां० ॥

ॐ सुशीलायै० सुशीलां० ॥ ॐ सुरभ्यै० सुरभीं० इत्यावाह्यपूजयेत् ॥ तदग्रतोदक्षिणोत्तरायतंकलशचतुष्टयस्थापनं ॥
तदुपरिब्रह्मविष्णुरुद्रतत्पुरुषाणांप्रतिमासुपूजनं ॥ ॐ ब्रह्मजज्ञानं० विवः ॥ ॐ भूर्भुवःस्वःब्रह्मणेनमः ब्रह्माणंआवा० ॥
ॐ इदंविष्णु० सुरे ॥ ॐ भूर्भुवःस्वःविष्णवेनमःविष्णुं० ॥ ॐ त्र्यंबकंयजा० तात् ॥ ॐ भूर्भुवःस्वःरुद्रायनमःरुद्रं० ॥
ॐ तत्पुरुषाय० यात् ॥ ॐ भूर्भुवःस्वःतत्पुरुषायनमः तत्पुरुषं० ॥ मनोजूतिरितिप्रतिष्ठापूर्वकंषोडशोपचारैःसंपूज्य ॥
तासामग्रेपूर्वस्यांदिशिधान्योपरिनवंअव्रणंकलशंवस्त्रवेष्टितंपञ्चपल्लवहिरण्यादियुतं आजिघ्रकलशेत्यादिविधिनासंस्थाप्य ॥
पूर्णपात्रनिधानांतंकृत्वावरुणमावाह्यपूजयेत् ॥ तदुपरिताम्रपात्रेवंशादिमयभाजनेवायथाशक्तिसुवर्णप्रतिमायांअग्न्युत्तारणं-
प्राणप्रतिष्ठांचकृत्वा। ॐ नमस्तेरुद्रेतिरुद्रमावाह्यषोडशोपचारैःपूजयेत् ॥ तस्मिन्कलशेसांगरुद्रजपः। तदर्थंब्राह्मणवरणं ॥
ततो यदाबध्नन्नितिमन्त्रेण वृषस्यकंकणबन्धनं ॥ ततोदक्षिणतोब्रह्मासनमास्तीर्येत्यादिप्रोक्षण्युत्पवनांतं ॥ तत्रविशेषः ॥
सक्षीरप्रणीताप्रणयनं ॥ तंडुलासादनानंतरंसिद्धस्यपौष्णस्यपिष्टचरोरासादनं ॥ होतृदक्षिणार्थंधेनुर्वस्त्रयुग्मंवा सुवर्णंकां-
स्यपात्रं चोपकल्पयेत् ॥ प्रोक्षण्याःप्रत्युत्पवनांतेब्रह्मादिकलशचतुष्टयेचत्वारऋत्विजःसूक्तानिपठेयुः ॥ ब्रह्मकलशेतेजोसी-
त्यध्यायः १ ॥ विष्णुकलशेपुरुषसूक्तं २ ॥ रुद्रकलशेरुद्राध्यायः ३ ॥ तत्पुरुषकलशेविभ्राडित्यनुवाकोमण्डलब्राह्मणंच ॥
ततोवत्सतरीसहितंवृषंशुद्धोदकेनाभिषिंचेत् ॥ तत्रमंत्राः ॥ ॐ आपोहिष्ठा० १ ॥ योवःशिवत० २ ॥ तस्माअरंग० ३ ॥
कयानश्चि० ४ ॥ कस्त्वास० ५ ॥ अभीषुणः० ६ ॥ यज्ञायज्ञावो० ७॥ पाहिनोऽअग्नएकया० ८॥ ऊर्जोनपात० ९ ॥

संवत्सरोसि० १० ॥ त्रातारमिंद्र० ११ ॥ वरुणस्योत्त० १२ ॥ सद्देवादेव० १३ ॥ यदिदिवा० १४ ॥ यदिजाग्रद्यदि० १५ ॥ पुनंतुमेतिनव ९ ॥ शंनोदेवी० १ ॥ आप्यायस्व० २ ॥ पंचनद्यः०३ ॥ शंनोभवंतुवाजि० ४ ॥ देवस्यत्वा० भ्यां । सरस्व० त्रियेदधाम्यसौ ५ ॥ देवस्य० भ्यां । सरस्व० त्रेणाग्नेः० पिंचामि ६ ॥ देवस्यत्वा० अश्विनो० भिर्षिं-चामि ७ ॥ ततोवस्त्रगंधाक्षतमाल्यैरलंकृत्य ॥ ततस्त्रीभिर्विवाहवत्कृतमंगलंवृषंप्रादक्षिण्येनवेदेरुत्तरतोनीत्वाप्राङ्मुखंवृषं-स्वयमुदङ्मुखोमधुपर्केणपूजयेत् ॥ उत्सर्गार्थमागतंवृषंमधुपर्केणार्चयिष्ये ॥ ॐ साधुभवानास्तामर्चयिष्यामोभवंतं ॥ ॐ अर्चयइत्यादि ॥ ॐ उत्सृजतृणान्यत्त्विवत्यंतं ॥ ॥ ततोवृषवत्सतर्योःषोडशोपचारैःपूजनंकार्यं ॥ देशकालौस्मृत्वा-श्रीमहारुद्रप्रीत्यर्थंवृषोत्सर्गांगभूतंवृषवत्सतरीपूजनमहंकरिष्ये ॥ नमस्तेरुद्रेत्यावाहनं ॥ ॐ नमस्तेरुद्रमन्यव० नमः ॥ वृषवत्सतरीभ्यांनमःवृषवत्सतर्यौआवाहयामि ॥ चतुःस्रक्तिरित्यासनं ॥ ॐ चतुःस्रक्तिर्नाभिर्ऋतस्य० सप्रथम १ ॥ वृष० आसनं० ॥ हिरण्यशृंगइतिपाद्यं० । ॐ हिरण्यशृंगोयोअस्यपादामनोजवाऽअवरऽइंद्रऽआसीत् ॥ देवाइदस्यहवि-रद्यमायन्योऽअर्वंतंप्रथमोऽअध्यतिष्ठत् ॥ वृष० पाद्यं० ॥ आपोहिष्ठेतितिसृभिरर्घ्यं ॥ ॐ आपोहिष्ठा० चनः ३ ॥ वृष० अर्घ्यं० ॥ अध्यवोचदित्याचमनीयं ॥ ॐ अध्यवोच० सुव ॥ वृष० आचमनीयं० ॥ इदमापःप्रवहतेतिस्नानं ॥ ॐ इद-मापः० मुंचतु ॥ वृष० स्नानं० ॥ ततःपञ्चामृतस्नानं ॥ शन्नोदेवीरितिशुद्धोदकेनस्नानं ॥ आचमनीयं ॥ युवासुवासाइति-वस्त्रयुग्मं ॥ मन्त्रवद्यज्ञोपवीतं ॥ रथेतिष्ठन्नित्यनुलेपनं ॥ ॐ रथेतिष्ठन्नयतिवाजिनःपुरोयत्रयत्रकामयतेसुपारथिः ॥ अभी-

शूनांमहिमानस्यनाथनमनःपदमनुयच्छंतिरश्मयः ॥ वृष० हरिद्रानुलेपनं० ॥ नमःश्वभ्यइतिगंधान् ॥ ॐ नमःश्वभ्यःश्वप०
कंठायचनमः ॥ वृष० गंधानुस० ॥ ओषधीःप्रतिमोदध्वमितिकुंकुमं ॥ ॐ ओषधीःप्रति० पारयिष्णवः ॥ वृष० कुंकुमं ॥
अक्षन्नमीमृदंतेत्यक्षताः ॥ ॐ अक्षन्नमीमृ० हरि ॥ वृष० अक्ष० ॥ नमः पार्यायेतिपुष्पाणिपुष्पमालाश्च ॥ ॐ नमः पार्याय०॥
वृष० पुष्पा०॥ॐ नमःकपर्दिनइतिधूपं॥ ॐनमःकपर्दिने० स्वाय॥ वृष० धूपं०॥ ब्राह्मणोस्येतिदीपं॥ॐ ब्राह्मणोस्य०॥ वृष०
दीपं० ॥ हिरण्यगर्भेतिनैवेद्यं ॥ ॐ हिरण्य० धेम ॥ वृष० नैवेद्यं० ॥ स्वस्तिनइतिसुवर्णतिलकं ॥ ॐ स्वस्तिन० धातु ॥ वृष०
सुवर्णं० ॥ हिरण्यशृंगइतिशृंगाणि ॥ ॐ हिरण्यशृंगोयोअस्यपादामनोजवाअवरइंद्रआसीत् ॥ देवाइदस्यहविरद्यमायन्योऽ-
अर्वंतंप्रथमोअध्यतिष्ठत् ॥ वृषव० शृंगाणिस० ॥ पुरुदस्मेतिरौप्यखुरान् ॥ ॐ पुरुदस्मोवि० स्वाहा ॥ वृषव० रौप्यखु० ॥
इमारुद्रायेतित्रिशूलंदक्षिणे ॥ ॐ इमारुद्रा० तुरं ॥ युंजतेइत्यनुवाकेनवामेचक्रं ॥ ॐ युंजतेमनउत० तिःस्वाहा ॥ १ ॥
इदंविष्णुर्वि० रेस्वाहा ॥ २ ॥ इरावतीधेनु० मयूखैःस्वाहा ॥ ३ ॥ देवश्रुतौदेवेष्वाघोष० पृथिव्याःस्वाहा ॥ ४ ॥
विष्णोर्नुकं० वेत्वास्वाहा ॥ ५ ॥ दिवोवाविष्ण० वेत्वा० ॥ ६ ॥ प्रतद्विष्णु० निविश्वास्वाहा ॥ ७ ॥ विष्णोरराटमसि०
वेत्वा ॥ ८ ॥ श्रीश्चतेइतिमन्त्रेणअनुलेपनंवत्सतरीणां ॥ ॐ श्रीश्चतेल० वृष० अनुलेपनं ॥ हरिद्राकुंकुमादिनाअलंकृत्यअ-
स्मिन्कालेवृषस्यअंकनार्थंचिह्नंकार्यं ॥ अथवृषस्यमंत्रन्यासाः ॥ अश्विनातेजसेति जीवन्यासः ॥ ॐ अश्विनातेजसाचक्षुःप्राणे-
नसरस्वतीवीर्यं ॥ वाचेंद्रोबलेनेंद्रायदधुरिंद्रियं ॥ १ ॥ अघोरेतिमन्त्रेणशिरसि ॥ ॐ अघोरेभ्योऽथ० रूपेभ्यः ॥ यातेरुद्रेति

स्कन्धे ॥ ॐ यातेरुद्र० शीहि ॥ नमःशंभवेतिपृष्ठे ॥ ॐ नमःशंभ० यच ॥ नमोहिरण्यबाहवइतिबाह्वोः ॥ ॐ नमो-
हिरण्य० नमोनमः ॥ परितेधन्वनइतिपुच्छे ॥ ॐ परितेध० हितं ॥ त्र्यंबकमितिखुरेषु ॥ ॐ त्र्यंबकंय० तात् ॥ इमा-
रुद्रायेतिनाभौ ॥ ॐ इमारुद्राय० तुरं ॥ नमोवन्यायेतिकुक्ष्योः ॥ ॐ नमोवन्या० नमः ॥ प्रमुंचधन्वेतिशृंगयोः ॥ ॐ प्रमुंच-
धन्व० वप ॥ तमीशानमितिग्रीवायां ॥ ॐ तमीशानं० स्तये ॥ नमःशंभवायेतिसर्वांगेषु ॥ ॐ नमःशंभवा० यच ॥
ततोविशेषन्यासः ॥ इषेत्वेतिमूर्ध्नि ॥ ॐ इषेत्वोर्जे० यि ॥ इमारुद्रायेतित्रिशूलके ॥ ॐ इमारुद्रा० तुरं ॥ नमस्तइति-
वक्रे ॥ ॐ नमस्ते० नमः ॥ गोमदूपुणाललाटे ॥ ॐ गोमदूपुणासत्याश्वावद्यातमश्विना ॥ वर्तीरुद्रानृपाज्यं ॥ विभ्रा-
डित्यनुवाकेनत्र्यंबकमितिवानेत्रयोः ॥ ॐ त्र्यंबकं० तात् ॥ प्राणंमेपाह्यपानमितिनासायां ॥ प्राणंमेपाह्य० मेरय ॥ अवत-
त्येतिमुखे ॥ ॐ अवतत्य० मव ॥ नीलग्रीवाइतिद्वौकंठे ॥ ॐ नीलग्री० मसि ॥ मर्माणितेइतिबाह्वोः ॥ ॐ मर्माणि०
दंतु ॥ समिधाग्निमितिबाहुमध्यतः ॥ ॐ समिधाग्निं० तन ॥ नमोवःकिरिकेभ्यइतिहृदये ॥ ॐ नमोवः० तेभ्यः ॥
नाभिर्मेइतिनाभौ ॥ ॐ नाभिर्मेचित्तं० पसः ॥ पञ्चनद्यइतिकुक्ष्योः ॥ ॐ पञ्चनद्यः० त्सरित् ॥ कोसिकतमोसिकट्योः ॥
ॐ कोसिकतमोसि० पाम ॥ रक्षोहणमितिगुदे ॥ ॐ रक्षोहणं० शामि ॥ परितेधन्वनइत्यूर्वोः ॥ ॐ परिते० हितं ॥
उद्वयमितिजानुनोः ॥ ॐ उद्वयंतम० मम् ॥ उदुत्यमितिजंघयोः ॥ ॐ उदुत्यं० र्यं ॥ परितेदूडभइतिखुरेषु ॥ ॐ परिते-
दूडभो० शुपः ॥ इमंमेवरुणइतिपृष्ठे ॥ ॐ इमंमे० चके ॥ यथेमांवाचमितिलांगूले ॥ ॐ यथेमां० तु ॥ युंजतइत्यनु-

वाकेनसर्वांगानिस्पृशेत् ॥ ॥ एवंन्यासविधिंकृत्वारुद्ररूपोवृषोहिसः ॥ गंगाद्याःसरितःसर्वास्तस्यपुच्छेवसंतिहि ॥ ततोव-
त्सतरीणांवस्त्राद्यलंकरणं ॥ वत्सतरीणांशरीरेन्यासाः ॥ शिरसिब्रह्मणेनमः ॥ पार्श्वयोःपृथिव्यैनमः ॥ उरसिस्कंदायनमः ॥
ललाटेरुद्रायनमः ॥ कर्णयोर्दिग्भ्योनमः ॥ कर्णमध्येदेवेभ्योनमः ॥ चक्षुषोःशशिभास्कराभ्यांनमः ॥ जिह्वायांसरस्व-
त्यैनमः ॥ शृंगयोर्मेरुमन्दराभ्यांनमः ॥ अपानेसर्वतीर्थेभ्योनमः ॥ प्रस्रावेजाह्नव्यैनमः ॥ रोमकूपेपुऋषिभ्योनमः ॥
पृष्ठे यमायनमः ॥ दक्षिणकुक्षौधनदायनमः ॥ वामकुक्षौवरुणायनमः ॥ खुरमध्येगंधर्वेभ्योनमः ॥ खुराग्रेपन्नगेभ्योनमः ॥
पश्चिमपादयोःअग्नयेनमः ॥ हुंकारेचतुर्वेदेभ्योनमः ॥ स्तनेपुसमुद्रेभ्योनमः ॥ दुग्धेयमुनायैनमः ॥ शरीरेपार्वत्यैनमः ॥
तत्रैवकालिंद्यैनमः ॥ कोटयैनमः ॥ विश्वधारिण्यैनमः ॥ गंगायैनमः ॥ गौर्यैनमः ॥ जातवेदसइतिमन्त्रेणसर्वांगा-
निस्पृशेत् ॥ एवंन्यासविधिंकृत्वापार्वत्याहिसमाचसा ॥ एवंन्यासान्कृत्वाआग्नेःपश्चिमभागेवेद्यांसमानीयस्वगृह्योक्तवि-
धिनासर्वंविवाहंकुर्यात् ॥ ॥ तत्रप्रयोगः ॥ देशकालौस्मृत्वाममसर्वेषांपूर्वजानांनिरतिशयानंदब्रह्मलोकावास्या-
दिअमुककामनासिद्ध्यर्थंश्रीरुद्रस्वरूपिणेवृषवरायवत्सतरीकन्यादानमहंकरिष्ये ॥ शिवाआपःसंतु ॥ ॐ संतुशिवा-
आपः ॥ सौम० मनस्यं ॥ अक्षतंचारिष्टं० ष्टंच ॥ यत्पापंरोग० मस्तु ॥ सर्ववृषखुरेकार्यं ॥ ततःरुद्रस्वरूपायवृषा-
यगौरीस्वरूपांइमांयथाशक्त्यलंकृतांवत्सतरींतुभ्यमहंसंप्रददे ॥ अनेनवत्सतरीदानेनभगवान्वृषरूपीश्रीरुद्रःप्रीयतां ॥
अस्यनीलोद्वाहस्यप्रतिष्ठासिद्ध्यर्थंइदंयथाशक्तिहिरण्यंदक्षिणात्वेनतुभ्यमहंसंप्रददे ॥ एवंकन्यादानंयथागृह्यंकार्यम् ॥ उपय-

मनकुशानादाय तिष्ठन्समिधोभ्याधाय प्रोक्षण्युदकशेषेणसपवित्रहस्तेनाग्नेःप्रदक्षिणंपर्युक्षणं ॥ पवित्रयोःप्रणीतासुनिधानं ॥ पर्युक्षणांतेहोमः ॥ ॐ इहरतिःस्वाहा ॥ इदमग्नयेनमम ॥ अयमेवषण्णामाहुतीनांत्यागः ॥ ॐ इहरमध्वंस्वाहा ॥ इदमग्नये० ॥ ॐ इहधृतिःस्वाहा ॥ इदमग्न० ॥ ॐ इहस्वधृतिःस्वाहा ॥ इदमग्न० ॥ ॐ उपसृजंधरुणंमात्रेधरुणेमातरंधयन्स्वाहा ॥ इदमग्न० ॥ ॐ रायस्पोषमस्मासुदीधरन्स्वाहा ॥ इदमग्न० ॥ ब्रह्मान्वारब्धआघारावाज्यभागौ ॥ मनसा ॥ ॐ प्रजापतयेस्वाहा ॥ इदंप्रजापतये० ॥ ॐ इंद्रायस्वाहा ॥ इदमिंद्राय० ॥ ॐ अग्नयेस्वाहा ॥ इदमग्नये० ॥ ॐ सोमायस्वाहा ॥ इदंसोमाय० ॥ ततःपायसचरुमभिघार्यस्रुवेणावदायशूलगवदेवताभ्योजुहुयात् ॥ ॐ अग्नयेस्वाहा ॥ इदमग्नये० ॥ ॐ रुद्रायस्वाहा ॥ इदंरुद्राय० ॥ उदकोपस्पर्शः ॥ ॐ शर्वायस्वाहा ॥ इदंशर्वाय० ॥ ॐ पशुपतयेस्वाहा ॥ इदंपशुपतये० ॥ ॐ उग्रायस्वाहा ॥ इदमुग्राय० ॥ ॐ अशनयेस्वाहा ॥ इदमशनये० ॥ ॐ भवायस्वाहा ॥ इदंभवाय० ॥ ॐ महादेवायस्वाहा ॥ इदंमहादेवाय० ॥ ॐ ईशानायस्वाहा ॥ इदमीशानाय० ॥ ततःपिष्टचरुमभिघार्यस्रुवेणावदायपूष्णेजुहुयात् ॥ ॐ पूषागाअन्वेतुनःपूषारक्षत्वर्वतः ॥ पूषावाजान्त्सनोतुनःस्वाहा ॥ इदंपूष्णे० पायसपौष्णचरुभ्यांस्विष्टकृद्यागः ॥ ॐ अग्नयेस्विष्टकृतेस्वाहा ॥ इदमग्नयेस्विष्टकृते० ॥ ततोमहाव्याहृतिहोमः ॥ सर्वप्रायश्चित्तहोमः ॥ अथराष्ट्रभृद्धोमः ॥ ततोजयाहोमः ॥ ततोऽभ्यातानहोमः ॥ वस्त्रपटंतूष्णीं ॥ परंमृत्योअनुप० ॥ उदकोपस्पर्शः ॥ लाजाहुतौतिलमिश्रान्लाजान्जुहुयात् ॥ इतिनारदपद्धतौ ॥ प्रथमेरुद्रायस्वाहा ॥ इदंरुद्राय० १ ॥ द्वितीयेविष्णवेस्वाहा ॥

इदंविष्णवे॰ २ ॥ तृतीयेब्रह्मणेस्वाहा ॥ इदंब्रह्मणे॰ ३ ॥ चतुर्थंसर्वेभ्योदेवेभ्यःस्वाहा ॥ इदंसर्वेभ्योदेवेभ्यः॰ ४ ॥ ॐ आरोहेममश्मान॰ ॥ ॥ अथपरिक्रामणे देवस्यत्वेतिमन्त्रेणभ्रामयेत्त्रिः ॥ ततःप्राजापत्यहोमः ॥ ॐ प्रजापतये-स्वाहा ॥ इदंप्रजापतये॰ ॥ ततोनीलग्रीवाइतिमन्त्रेणाष्टविधंपदंवृषकंठेबध्वा ॥ ततःसप्तपदानिक्रामयति ॥ ॐ एक-मिषेविष्णुस्त्वानयतु ॥ द्वेऊर्जे॰ ॥ त्रीणिरायस्पोषाय॰ ॥ चत्वारिमायोभ॰ ॥ पंचपशुभ्यो॰ ॥ षड्ऋतुभ्यो॰ ॥ सखे-सप्तपदा॰ नयतु ॥ उदकेनप्रोक्षणं ॥ ॐ आपःशिवाः॰ पजं ॥ आपोहिष्ठेतिच ॥ वृषवत्सतर्योस्तच्चक्षुरितिसूर्यावेक्षणं ॥ ॥ ॐ तच्चक्षुर्देव॰न्तात् ॥ ततःसंस्रवप्राशनं ॥ पवित्राभ्यांमार्जनं ॥ अग्नौपवित्रप्रतिपत्तिः ॥ ब्रह्मणेपूर्णपात्रदानं ॥ अस्यनीलोद्वाहाख्यस्यकर्मणःसांगतासिद्ध्यर्थंब्रह्मन् इदंपूर्णपात्रंप्रतिगृह्यतां ॥ प्रतिगृह्णामि ॥ ब्रह्मा ॐ कोऽदादित्यादि-पठेत् ॥ प्रणीताविमोकः ॥ आपःशिवाः॰ पजं ॥ ॥ ततःप्राक्स्थापितरुद्रकलशेपूर्ववृतोब्राह्मणःसांगरुद्रजपंकुर्यात् ॥ तदनन्तरंपुरुषसूक्तकूष्मांडीजपोप्युक्तोविष्णुधर्मोत्तरे ॥ तत्ररुद्रंजपित्वातुस्थापयेद्रुद्रदेवताः ॥ तथैवपौरुषंसूक्तंकूष्मांडानि-तथैवच ॥ ततोधान्यपुंजोपरिअकालमूलानष्टौकलशान्निर्मलोदकपूर्णान्चूतपल्लवाच्छादितमुखान्स्थापयेत् ॥ महीद्यौरि-त्यादिपूर्णपात्रनिधानांतंस्थापनंपूजनंच ॥ ततःकलशचतुष्टयोदकेनवत्सतरीमध्यस्थितवृषस्यवक्ष्यमाणमन्त्रैःस्नपनंकुर्यात् ॥ तथैववत्सतरीणांकलशचतुष्टयोदकेनस्नपनं कार्यं ॥ रुद्रकलशोदकेनच ॥ तंत्रमंत्राः ॥ ॐ आपोहिष्ठा॰ ३ समुद्रज्येष्ठा॰ ४ इमंमेगंगे॰ १ कयानश्चित्रआ॰ १ कस्त्वासत्यो॰ २ अभीषुणः॰ ३ आनोभद्राइत्यनुवाकेन ॥ आनोभद्राः॰

१ देवानांभद्रा० २ तान्पूर्वया० ३ तन्नोवातो० ४ तमीशानं० ५ स्वस्तिनइंद्रो० ६ पृपदश्वा० ७ भद्रंकर्ण० ८ शतमिन्नु० ९ अदितिर्द्यौ० १० ॥ याओपधीरित्यनुवाकेन ॥ याओपधीः० १ शतंवो० २ ओपधीः० ३ अश्वत्थेवो० ४ यत्रौपधीः० ५ अश्वावती० ६ उच्छुष्मा० ७ इष्कृतिर्ना० ८ अतिविश्वा० ९ यदिमा० १० यस्यौपधीः० ११ साकंयक्ष्म० १२ अन्यावो० १३ याःफलिनी० १४ मुंचन्तुमा० १५ अवपतंती० १६ याओपधीःसोमराज्ञीर्बह्वीः० १७ याओपधीः सोमराज्ञीर्विष्ठिताः० १८ याश्चेदमुप० १९ मावोरिपत्० २० ओपधयःसमवदं० २१ नाशयित्री० २२ त्वांगंधर्वा० २३ सहस्वमे० २४ दीर्घायुस्त० २५ त्वमुत्तमास्यो० २६ ॥ सहस्राक्षंशतधारमृषिभिःपावनंस्मृतं ॥ तेनत्वामभिषिंचामि-पावमान्यःपुनंतुमां १ ॥ भगंतेवरुणोराजाभगंसूर्योबृहस्पतिः ॥ भगमिंद्रश्चवायुश्चभगंसप्तर्षयोददुः २ ॥ यत्तेकेशेषुदौर्भा-ग्यंसीमंतेयच्चमूर्धनि ॥ ललाटेकर्णयोरक्ष्णोरापस्तद्घ्नंतुसर्वदा ३ ॥ सुरास्त्वामभिषिंचंतु० इत्यादि ॥ एतेत्वामभिषिंचं-तुसर्वकामार्थसिद्धये ॥ इत्यंतं ॥ एवमभिषिच्यवृषकर्णेमन्त्रान्जपेत् ॥ ॐ धर्मस्त्वंवृषरूपेणजगदानंदकारक ॥ अष्टमूर्ते-रधिष्ठानमतःपाहिसनातन १ ॥ तीक्ष्णशृंगायविद्महेवेदपादायधीमहि ॥ तन्नोवृषःप्रचोदयात् ॥ इतिवृषगायत्र्याप्रार्थ-येत् धर्मस्त्वंवृषइतिच ॥ ततोगवांप्रार्थना ॥ ॐ गावोमेअग्रतःसंतुगावोमेसंतुपृष्ठतः ॥ गावोमेहृदयेसंतुगवांमध्येवसा-म्यहं १ ॥ पंचगावःसमुत्पन्नामथ्यमानेमहोदधौ ॥ तासांमध्येतुयानंदातस्यैधेन्वैनमोनमः २ ॥ यालक्ष्मीःसर्वदेवानां-

याचदेवेष्ववस्थिता ॥ धेनुरूपेणसादेवीममपापंव्यपोहतु ३ ॥ अयंवोहिमयादत्तःसर्वासांपतिरुत्तमः ॥ तुभ्यंचैतामयादत्ताःपत्न्यःसर्वामनोरमाः ४ ॥ ततोग्नेःपूर्वतःउदङ्मुखंवृषंकृत्वाताम्रपात्रेवृषपुच्छंवसतरीपुच्छान्येकीकृत्यसकुशयवतिलजलेनप्राङ्मुखेनवृषपुच्छेसर्वेषांतर्पणंकार्यं ॥ तद्यथा ॥ देवर्षिपितॄणांदुर्गतिगतानांचतृप्तयेआत्मनःआकल्पसन्तानाविच्छेदार्थंवृषपुच्छेतर्पणमहंकरिष्ये ॥ ब्रह्मादितर्पणंकृत्वा ॥ ततःप्राचीनावीतिनादक्षिणाभिमुखःपित्रादित्रयींमात्रादित्रयींमातामहादित्रयींइत्यादिसर्वांस्तर्पयेत् ॥ यावंतश्चस्वयंतेतांश्चसर्वांस्तर्पयेत् ॥ ततःपुराणश्लोकैस्तर्पणं ॥ तद्यथा ॥ ब्रह्माद्यादेवताःसर्वाऋषयोमुनयस्तथा ॥ असुरायातुधानाश्चमातरश्चंडिकास्तथा ॥ दिक्पालालोकपालाश्चग्रहदेवाधिदेवताः ॥ तेसर्वेतृप्तिमायांतुनीलपुच्छेसुतर्पिताः ॥ १ ॥ विश्वेदेवास्तथादित्याःसाध्याश्चैवमरुद्गणाः ॥ क्षेत्रपीठोपपीठाश्चनदानद्यश्चसागराः ॥ तेसर्वे० ॥ २ ॥ पातालेनागपत्न्यश्चनागाश्चैवसपर्वताः ॥ पिशाचागुह्यकाःप्रेतागंधर्वागणराक्षसाः ॥ तेसर्वे० ॥३॥ पृथिव्यापश्चतेजश्चवायुराकाशमेवच ॥ दिविभुव्यंतरिक्षेचयेचपातालवासिनः ॥ तेसर्वे० ॥४॥ शिवःशिवातथाविष्णुःसिद्धिर्लक्ष्मीःसरस्वती ॥ तपोधनाश्चभगवानव्यक्तःपरमेश्वरः ॥ तेसर्वे० ॥ ५ ॥ क्षेत्रौषधिलतावृक्षावनस्पत्यधिदेवताः ॥ कपिलःशेषनागश्चतक्षकोनंतएवच ॥ तेसर्वे० ॥६॥ अन्येजलचराजीवाअसंख्यातास्त्वनेकशः ॥

१ एकयावत्सतर्यासहवृषोत्सर्गेतु—अयंहितेमयादत्तःसुरभेपतिरुत्तमः ॥ तुभ्यंचेयंमयादत्तापत्नीसर्वमनोरमा ॥ इत्यूह्यं ।

चतुर्दशयमाश्चैवयेचान्येयमकिंकराः ॥ तेसर्वे० ॥ ७ ॥ येसर्वेयक्षराजानःपक्षिणःपशवस्तथा ॥ स्वेदजोद्भिज्जजीवाश्चअंड-
जाश्चजरायुजाः ॥ तेसर्वे० ॥ ८ ॥ अन्येपिवनजीवायेदिवानिशिविहारिणः ॥ तेसर्वे० ॥ ९ ॥ अजगोमहिषीरूपाये-
चान्येपशवस्तथा ॥ शांतिदाःशुभदायेस्युर्नीलपुच्छेसुतर्पिताः ॥ तेसर्वे० ॥ १० ॥ अपसव्येनयद्दत्तंपितॄणांनामगोत्रतः ॥
पितापितामहश्चैवतथैवप्रपितामहः ॥ ११ ॥ मातापितामहीचैवतथैवप्रपितामही ॥ मातामहाःपितृव्याश्चमातुलाभ्रा-
तरस्तथा ॥१२॥ पितृमात्रात्मस्वसारःश्वशुरांताश्चबांधवाः ॥ गुरवोगुरुपत्न्यश्चशिष्याआप्ताश्चसर्वशः ॥ तेसर्वे० ॥ १३ ॥
आब्रह्मस्तंबपर्यंतंयेचान्येगोत्रिणस्तथा ॥ सर्पव्याघ्रहतायेचशृंगिदंष्ट्रिजलाग्निभिः ॥ तेसर्वे० ॥ १४ ॥ अपुत्राअक्रियाये-
चअदाराधर्मवर्जिताः ॥ आमगर्भामृतायेचशस्त्रघातमृताश्चये ॥ संस्काररहितायेचरौरवादिपुगामिनः ॥ तेसर्वे० ॥१५॥
आब्रह्मस्तंबपर्यंतंदेवर्षिपितृमानवाः ॥ तृप्यंतुपितरःसर्वेमातृमातामहादयः ॥ १६ ॥ अतीतकुलकोटीनांसप्तद्वीपनिवा-
सिनां ॥ आब्रह्मभुवनाल्लोकादिदमस्तुतिलोदकं ॥ १७ ॥ पितृवंशेमृतायेचमातृवंशेतथैवच ॥ गुरुश्वशुरबन्धूनांयेचान्ये-
बांधवामृताः ॥ १८ ॥ येमेकुलेलुप्तपिंडाःपुत्रदारविवर्जिताः ॥ क्रियालोपगताश्चैवजात्यंधाःपंगवस्तथा ॥१९॥ विरूपा-
आमगर्भाश्चज्ञाताज्ञाताःकुलेमम ॥ तेपिबंतुमयादत्तंवृषपुच्छेतिलोदकम् ॥ २० ॥ येऽबांधवाबांधवावायेऽन्यजन्मनि-
बांधवाः ॥ तेसर्वेतृप्तिमायांतुवृषपुच्छतिलोदकात् ॥ २१ ॥ वृक्षत्वंचगताःकेचित्तृणगुल्मलतास्थिताः ॥ यातनासुचघो-
रासुजातीषुविविधासुच ॥ नरकेषुचघोरेषुपतितायेस्वकर्मणा ॥ देवत्वंमानुषत्वंवातिर्यक्प्रेतपिशाचताम् ॥ तेसर्वे० ॥२२॥

[illegible] ॥ [illegible] ॥ २३ ॥ तिर्यग्योनिगतायेचजामगर्भे-
पतंतिये ॥ [illegible] तृप्तिमायांतु ॥ २४ ॥ आसुरींयोनिमापन्नाःपिशाचत्वंचयेगताः ॥ जलजंतुत्वमापन्नाः
संघयोनिषुयेस्थिताः ॥ तेसर्वे० ॥ २५ ॥ तामिस्रनरकेजाताअंधकत्वंसमागताः ॥ रौरवेनरकेजाताअन्नपानविवर्जिताः ॥
तेसर्वे० ॥ २६ ॥ [illegible]जायंतेक्रिमिजंतवः ॥ [illegible]पच्यंतेतैलपक्ववत् ॥ २७ ॥ असिपत्रवनेघोरेअ-
सिभिश्छिन्नतेभृशं ॥ प[illegible]तपंतोभ्रमयेभृशं ॥ महापातकजान्घोरान्नरकान्भृशदारुणान् ॥ तेसर्वे० ॥ २८ ॥
आसुरींयोनिमापन्नाम्लेच्छयोनिषुयेगताः ॥ अग्निलोकेषुजाताश्चविष्णुलोकंचयेगताः ॥ तेसर्वे० ॥ २९ ॥ पाखंडेनमृता-
येचस्त्रग्रावाःपापयोनयः ॥ तेसर्वे० ॥ ३० ॥ रविमण्डलसंस्थायेत्रस्तादिषुचयेगताः ॥ तेसर्वे० ॥ ३१ ॥ प्रकृतेविकृते-
चैवजायंतेभुविमानवाः ॥ तेसर्वे० ॥ ३२ ॥ काकोलूकेचसंजीवेलोहकंटकसंकुले ॥ तेसर्वे० ॥ ३३ ॥ भूतप्रेतपिशाच-
त्वेसंभूतायेकुलेमम ॥ तेसर्वे० ॥ ३४ ॥ आब्रह्मस्तंबपर्यंतंजगत्तृप्यत्वितिब्रुवन् ॥ यस्तर्पयतिधर्मात्मासोऽक्षय्यांविंदते-
गतिं ॥ ३५ ॥ ॥ तर्पणांतेपुत्रकामश्चेद्यजमानस्तर्हिपत्न्यासहउपविश्य सुपुत्रावाप्त्यर्थंवृषवत्सतरीपुच्छेस्नानमहंकरिष्ये
इतिसंकल्पयेत् ॥ ऋत्विजः सप्तधान्यफलान्वितवंशपात्रेपुच्छान्येकीकृत्यतदुपर्युदकदानेनवारुणमन्त्रैः अभिषिंचेयुः ॥
वंशपात्रगततिलोदकेनतदधस्तादुपविष्टौदंपतीस्नानंकुरुतः ॥ तत्रमंत्राः ॥ इमंमेगंगे० १ तत्त्वायामि० २ त्वंनोअग्ने०
३ सत्वंनो० ४ मापोमौषधी० ५ उदुत्तमं० ६ मुंचंतुमा० ७ अवभृथनि० ८ पुनंतुमा० ९ ॥ इतिनव ॥ श्रीसूक्तं ॥

पावमानसूक्तं ॥ अन्येस्नानमन्त्राः आपोहिष्ठादयः ॥ ततोवस्त्राणिपरित्यज्य वस्त्रांतराणिपरिधाय ॥ ॥ ततःपिण्ड-दानं ॥ अग्नेःपश्चिमदिग्भागेउपवेशनं ॥ अपसव्यं ॥ नीवीबंधनं । संकल्पः । समस्तपूर्वजानांसैकोद्दिष्टानामुद्धरणार्थं-गयाश्राद्धफलप्राप्त्यर्थंवृषखुरेपिण्डदानमहंकरिष्ये ॥ आचारात्तिलोदकं ॥ पाकप्रोक्षणं ॥ अपहतेतिरेखाकरणं ॥ अवनेजनं ॥ कुशास्तरणं पिंडदानंसर्वेषां ॥ अत्रमात्रादित्रयंमातामह्यादित्रयंचपृथग्दद्यात् ॥ पिंडान्नेहोमचरुशेष-प्रक्षेपः ॥ ॥ पौराणश्लोकाः ॥ पितृवंशेमृतायेचमातृवंशेतथैवच ॥ गुरुश्वशुरबन्धूनांयेचान्येबांधवाःस्मृताः ॥ येमेकुले-लुप्तपिंडाःपुत्रदारविवर्जिताः ॥ क्रियालोपगताश्चैवजात्यंधाःपंगवस्तथा ॥ विरूपाआमगर्भाश्वज्ञाताज्ञाताःकुलेमम ॥ खुरदत्तेनतोयेनतृप्तायांतुपरांगतिं ॥१॥ वृक्षयोनिगतायेचतिर्यग्योनिगताश्चये ॥ तेषामुद्धरणार्थायइमंपिंडंददाम्यहं ॥२॥ पंगुत्वंचगतायेवैयेचमूकत्वमागताः ॥ तेषामुद्ध० ॥३॥ आब्रह्मणोयेपितृवंशजातामातुस्तथावंशभवामदीयाः ॥ वंशद्वये-स्मिन्ममदासभूताभृत्यास्तथैवाश्रितसेवकाश्च ॥ मित्राणिसख्यःपशवश्चवृक्षादृष्टाश्चपृष्टाश्चकृतोपकाराः ॥ जन्मांतरेयेममसं-गताश्चतेभ्यःस्वधापिंडमहंददामि ॥ ४ ॥ अजातदन्तायेकेचिद्येचगर्भेप्रपीडिताः ॥ तेषामुद्ध० ॥ ५ ॥ बंधुवर्गाश्चयेके-चिन्नामगोत्रविवर्जिताः ॥ स्वगोत्रेपरगोत्रेवातेभ्यःपिंडंददाम्यहं ॥ ६ ॥ उद्बंधनमृतायेचविषशस्त्रहताश्चये ॥ शृंगि-भिर्दंष्ट्रिभिर्वापितेभ्यःपिंडंददाम्यहं ॥ ७ ॥ अग्निदाहेमृतायेचसिंहव्याघ्रहताश्चये ॥ आत्मोपघातिनोयेचतेभ्यःपिंडं-ददाम्यहं ॥ ८ ॥ अग्निदग्धाश्चयेकेचिन्नाग्निदग्धास्तथापरे ॥ विद्युच्चोरहतायेचतेभ्यःपिंडंददाम्यहं ॥ ९ ॥ रौरवेचां-

धतामिस्रेकालसूत्रेचेयगताः ॥ तेषामु० ॥ १० ॥ पशुत्वान्निर्गतायेचपक्षिकीटसरीसृपाः ॥ अथवावृक्षयोनिस्थास्तेभ्यः-पिंडंददाम्यहं ॥ ११ ॥ अन्यैर्दुर्मरणैश्चैवक्षुधयाचतृषामृताः ॥ भूतप्रेतपिशाचाश्चतेभ्यःपिंडंददाम्यहं ॥ १२ ॥ दिव्यं-तरिक्षभूमिस्थाःपितरोबांधवादयः ॥ तेसर्वेतृप्तिमायांतुपिंडदानेनसर्वदा ॥ १३ ॥ जात्यंतरसहस्राणिभ्रमंतःस्वेनकर्मणा ॥ मानुष्यंदुर्लभंयेषांतेभ्यःपिंडंददाम्यहं ॥ १४ ॥ असंख्ययातनासंस्थायेनीतायमकिंकरैः ॥ तेषामु० ॥ १५ ॥ येकेचित्प्रे-तरूपेणवर्ततेपितरोमम ॥ तेसर्वेतृप्तिमायांतुपिंडेनानेनसर्वदा ॥ १६ ॥ एवंपिंडदानंकृत्वा ॥ उत्तरतःश्वासधारणंइत्या-दिएतद्वइतिपिंडोपरिसूत्रदानांतं ॥ पिंडपूजनं ॥ वृषवत्सतरीरग्नेःप्रदक्षिणमानीयअग्नेःपूर्वतःस्थाप्य ॥ वृषभंअंक-यइतिलोहकारंप्रतिब्रूयात् ॥ श्राद्धांतेतप्तलोहेननिर्दहेत्तंमहावृषं ॥ त्रिशूलंदक्षिणेकुर्याद्वामेचक्रांकनंतथा ॥ अद्येत्यादि० ममसमस्तपितॄणांसैकोद्दिष्टानामुद्धरणार्थंआकल्पब्रह्मलोकनिवासप्राप्तयेसंतानाविच्छेदायचवृषमहमुत्सृजामि ॥ प्रांचमु-त्सृजेत् ॥ एतंयुवानमितियाज्ञवल्क्यऋषिःत्रिष्टुप्छंदःगावोदेवतावृषोत्सर्गेविनियोगः ॥ वामहस्तेनवृषभस्यपुच्छमादाय-दक्षिणेनसकुशंतिलोदकंचादाय ॥ एतंयुवानंपतिंवोददामितेनक्रीडंतीश्चरथप्रियेण ॥ मानःसाप्तजनुषासुभागाराय-स्पोषेणसमिषामदेम ॥ इतिमन्त्रेणोदकंभूमौक्षिपेत् ॥ ततःपंचपदानिईशानदिशंप्रतिचालनं ॥ सर्वतोव्रजस्व ॥ ॥ अथस्तुतिमन्त्राः ॥ धर्मस्त्वंवृषरूपेणविधात्रानिर्मितःपुरा ॥ वृषोत्सर्गात्प्रसन्नस्त्वंमामुद्धरभवार्णवात् ॥ १ ॥ नमोस्तु-

विष्णुरूपायरुद्ररूपायतेनमः ॥ विश्वनाथनमस्तेस्तुधर्मभूतोजगत्रये ॥ २ ॥ [1]इमाःसुरूपाःपत्न्यश्चचतस्रस्तवगोपते ॥
कल्पिताःक्रीडनार्थायत्वयासार्द्धंव्रजंत्विमाः ॥ ३ ॥ नमोब्रह्मण्यदेवेशभूतर्षिपितृपोषक ॥ त्वयिमुक्तेऽक्षयालोकाममसं-
तुनिरामयाः ॥ ४ ॥ गावोमेअग्रतःसंतुगावोमेसंतुपृष्ठतः ॥ गावोमेहृदयेसन्तुगवांमध्येवसाम्यहम् ॥ ५ ॥ यालक्ष्मीः
सर्वभूतेषुयाचदेवेष्ववस्थिता ॥ धेनुरूपेणसादेवीममपापंव्यपोहतु ॥ ६ ॥ पञ्चगावःसमुत्पन्नामथ्यमानेमहोदधौ ॥ तासां-
मध्येतुयानन्दातस्यैधेन्वैनमोनमः ॥७॥ अदितिर्देवमातात्वंवेदमाताचधीश्वरी ॥ धेनुरूपेणसादेवीममकामदुघास्तुसा ॥८॥
वृषोहिभगवान्धर्मो[2]मुक्तयोवत्सिकाइमाः ॥ सारूप्यंचैवसायुज्यंसांनिध्यंचसलोकतां ॥ ९ ॥ वृषोहिभगवान्धर्मश्चतुष्पादः-
प्रकीर्तितः ॥ वृणोमितमहंभक्त्यासमांरक्षतुसर्वतः ॥ १० ॥ धर्मतस्तवसंभूतिःस्वाहात्वंचविभावसौ ॥ वृषरूपेणसादेवी
सर्वकामप्रदाभव ॥ ११ ॥ धर्मंदेहियशोदेहिपुत्रान्देहिसुसंपदं ॥ एकोत्तरशतंचैवकुलानांतारयस्वमे ॥ १२ ॥ रुद्रमाता-
मयादत्तापत्न्यस्तववृषोत्तम ॥ पितृणांतारणार्थायपर्यटस्वमहीमिमां ॥ १३ ॥ खुराग्रक्षेपणैःसर्वंममपापंव्यपोहतु ॥
पितरस्तृप्तिमायांतुखुराग्रजलसेचने ॥१४॥ येत्वांहिंसंतिपाप्मानोनरकेयांतुतेक्षयं ॥ येत्वांरक्षंतिधर्मिष्ठाःस्वर्गेतेनिवसन्तुवै
॥ १५ ॥ तवदर्पकृतोच्चाटैर्नदीकूलविशीरणैः ॥ अक्षयाःसन्तुमेलोकाःपौरजानांतुसौरभ ॥१६॥ धनसन्तानमारोग्यंबां-
धवानांविशेषतः ॥ मुखेवैरोचनोदेवोनासिकाग्रेश्विनौतथा ॥१७॥ पादेपुसंस्थितोब्रह्माललाटेवृषभध्वजः ॥ पुच्छेनारायणो

---

१ एकवत्सतरीपक्षे । इयंसुरूपापत्नीचएकावैतवगोपते ॥ कल्पिताक्रीडनार्थायत्वयासार्द्धव्रजत्वियं ॥ १ ॥ इत्यूह्यते । २ मुक्तिर्वैवत्सिकाइयं ॥

देवोयस्यतिष्ठतिसर्वदा ॥१८॥ सर्वेरोमास्त्रिभुवनंपृष्ठ्यासुनिगणाःस्मृताः ॥ आत्मानंवैश्वदेवोवामैत्रोभूतेष्वमानुषः ॥१९॥
धर्मस्त्वंहिप्रमन्नानांतेनसिद्धिप्रदोभव ॥ गवांवृषसहस्रेषुक्रीडांकुरुयथासुखं ॥ २० ॥ ततोवत्सतरीमध्यगतंवृषभंशं-
भूर्मयोभूरित्यनुवाकशेषेणाभिमन्त्रयेत् ॥ ॐ १ शंभूर्मयोभू० २ यास्तेअग्नेसूर्येरुचो० ३ यावोदेवाः० ४ रुचंनोधेहिब्रा०
५ तत्त्वायामि० ६ स्वर्णघर्मःस्वाहा० ७ ॥ ततःप्रदक्षिणीकृत्यवृषमभिवादयेत् ॥ तत्रमंत्राः ॥ धारणाद्धर्ममित्याहुर्धर्मेण
विधृताःप्रजाः ॥ चरत्वंधर्मरूपेणवृषवत्सतरीयुतः ॥ धर्मस्त्वंवृषरूपेणब्रह्मणानिर्मितःपुरा ॥ तवोत्सर्गप्रभावेणमासुद्धर
भवार्णवात् ॥ नमस्कृत्यमन्त्रघोषेणसीमान्तंनीत्वादक्षिणस्कन्धेनप्रेरयन्विसृजेत् ॥ नवावाह्योसौनचक्षीरंपातव्यंकेनविव-
हामीतिवचनात् ॥ ततआगत्य ॥ पादप्रक्षालनंआचमनं ॥ पूर्ववत्पुण्याहवाचनंकार्यं ॥ ततःस्थापितदेवतानामुत्तरपूजनं॥
विसर्जनं ॥ सर्वदेवताप्रतिमाद्याचार्यायदद्यात् ॥ वृषोत्सर्गपरिपूर्णतासिद्ध्यर्थंशतब्राह्मणान्यथासंपन्नेनान्नेनभोजयिष्ये ॥
अशक्तौतदर्धंयथाविभवंवा ॥ आचार्यपूजनं ॥ वस्त्रालंकरणेपयस्विनींधेनुंदद्यात् ॥ तिलपात्रघृतपात्रे ॥ दशदानानि ॥
गजाश्वरथदासीश्चहेमभूमिर्गृहंतिलाः ॥ कन्याचकपिलाधेनुर्ग्रहदानानिवैदश ॥ अष्टौमहादानानि ॥ अष्टांगंपदं ॥ शय्या ॥
आज्यपात्रदानमन्त्रः ॥ आज्यंतेजःसमुद्भूतमाज्यंपापहरंपरं ॥ आज्यंसुराणामाहारआज्येलोकाःप्रतिष्ठिताः ॥ आशिषः ॥
ब्राह्मणान्भोजयेत् ॥ स्वयंभुंजीतबंधुभिः ॥ एवंयथोक्तविधिनायस्तुनीलंसमुत्सृजेत् ॥ सयातिपरमंस्थानंयावदाभूत-
संप्लवं ॥ ॥ इतिवृषोत्सर्गपद्धतिःसमाप्ता ॥

अथत्रिपिंडीश्राद्धम् ॥ ॥ गारुडे—आद्योयवमयःपिंडोद्वितीयोव्रीहिसंभवः ॥ तृतीयश्चतिलैःकार्यएवंपिंडत्रयंखग ॥ १ ॥ इति ॥ पिशाचमोचनतीर्थेस्नात्वा ॥ तत्रनित्यक्रियांविधाय ॥ स्थलंप्रक्षाल्य ॥ तत्रप्रथमंक्रमेणतंडुलमुद्गतिलधान्योपरिनिहितेषुवस्त्रसहितेषुकलशत्रयेषुब्रह्मविष्णुरुद्राणांस्थापनं ॥ ब्राह्मणत्रयमाहूय ॥ देशकालौसंकीर्त्य ॥ अपसव्यं ॥ त्रिविधानांदिविस्थानांअंतरिक्षस्थानांभूमिस्थानांअज्ञातनामगोत्राणांसात्विकराजसतामसानांप्रेतानांमोक्षार्थंममशरीरपीडापरिहारपूर्वकंआरोग्यार्थंसंतानप्रतिबंधकनिवृत्त्यर्थंएकोद्दिष्टविधिनात्रिपिंडीश्राद्धंकरिष्येइतिसंकल्प्य ॥ सव्यं ॥ ब्राह्मणानांप्रदक्षिणात्रयंकृत्वा ॥ समस्तसंपत्० संपाद्यंमेप्रसीदत ॥ अपसव्यं ॥ ब्राह्मणान्निमंत्र्य ॥ दिविस्थानांसात्विकानांअज्ञातनामगोत्राणांप्रेतानांत्रिपिंडीश्राद्धेभोजनार्थेनिमन्त्रिताभवंतः १ ॥ अंतरिक्षस्थानांराजसानांअज्ञातनामगोत्राणांप्रेतानांत्रिपिण्डीश्राद्धेभोजनार्थेनिमन्त्रिताभवंतः २ ॥ भूमिस्थानांतामसानांअज्ञातनामगोत्राणांप्रेतानांत्रिपिंडीश्राद्धेभोजनार्थेनिमन्त्रिताभवंतः ३ ॥ सव्यं ॥ अद्यउक्तविशेषणवतिदेशेकालेचत्रिपिंडीश्राद्धाधिकारसिद्ध्यर्थंविष्णुपूजनपूर्वकंतर्पणंकरिष्ये ॥ पुरुषसूक्तन्यासान् षडंगन्यासांश्चकृत्वा ॥ आवाहनादिनमस्कारांतंपूजनंकृत्वा ॥ विष्णुतर्पणंकार्यं ॥ ॐ सहस्रशीर्षा० १६ युंजते० १ इदंविष्णु० २ इरावती० ३ देवश्रुतौ० ४ विष्णोर्नुकं० ५

---

१ अस्यकालउक्त काशीखण्डे—कार्तिकेश्रावणेमासिमार्गशीर्षेतथैवच ॥ माघफाल्गुनवैशाखेशुक्लपक्षेतथैवच ॥ चतुर्दश्याविशेषेणषण्मासाःकालउच्यते ॥ एतेकाला प्रशस्यंतेपिशाचत्वविमोचने ॥ त्रिपिण्डीश्राद्धंमध्याह्नेमुख्यकालंप्रचक्षते ॥ इति ॥

दिवोवा० ६ प्रतद्विष्णु० ७ विष्णोररा० ८ अपोदं० ९ दिविविष्णुर्व्य० १० रक्षोहणंव० ११ रक्षोहणोवो० १२ अग्ने-
स्तनू० १३ विष्णोःकर्मा० १४ तद्विष्णोः० १५ तद्विप्रासो० १६ त्रीणिपदा० १७ उपयामगृहीतोस्याग्रय० १८ ॥
विष्णूद्देशेनषोडशब्राह्मणभोजनसंकल्पः ॥ अनादिनिधनोदेवःशंखचक्रगदाधरः ॥ अक्षय्यःपुंडरीकाक्षप्रेतमोक्षप्रदोभव॥१॥
अतसीपुष्पसंकाशंपीतवाससमच्युतं ॥ येनमस्यंतिगोविंदंनतेषांविद्यतेभयं ॥२॥ कृष्णकृष्णकृपालोत्वमगतीनांगतिर्भव ॥
संसारार्णवमग्नानांप्रसीदपुरुषोत्तम ॥ ३ ॥ नारायणसुरश्रेष्ठलक्ष्मीकांतवरप्रद ॥ अनेनतर्पणेनाद्यप्रेतमोक्षप्रदोभव ॥ ४ ॥
पुनःदुग्धतिलपयोगृहीत्वा ॥ यःकश्चिदन्नलोभेनमृत्युंप्राप्तोनराधमः ॥ समेप्रीतःसुखंदद्यात्तस्मैदद्यांतिलोदकं ॥ १ ॥
धनलोभान्मृतायेचसर्वयोनिव्यवस्थिताः ॥ तेमेप्रीताःसुखंदद्युस्तेषांदद्मितिलोदकं ॥ २ ॥ यःकश्चिद्धनलोभेनमृत्युकाले
कृतेनच ॥ समेप्रीतःसुखंदद्यात्तस्मैदद्यांतिलोदकं ॥ ३ ॥ इतिविष्णुतर्पणं ॥ ॥ आचम्यप्राणानायम्य मधुवातातृचं
जप्त्वापूजोपहारान्प्रोक्षेत् ॥ अपसव्यं ॥ पिशाचमोचनतीर्थेत्रिपिंडीश्राद्धंकर्तुंममाधिकारसंपदस्त्वितिभवन्तोब्रुवंतु ॥
अस्तुत्रिपिंडीश्राद्धाधिकारसंपत् ॥ कालोयंमुख्यःकालोस्त्वितिभवंतोब्रुवंतु ॥ अयंमुख्यःकालोस्तु ॥ पाकपदार्था-
नांहविर्योग्यतास्त्वितिभवंतोब्रुवंतु ॥ हविर्योग्यतास्तु ॥ दिविस्थानांअंतरिक्षस्थानांभूमिस्थानांअज्ञातनामगोत्राणां-
प्रेतानांश्राद्धंएकोद्दिष्टविधिनाद्यकरिष्ये ॥ तत्र ॥ दिविस्थानांसात्विकानांअज्ञातनामगोत्राणांप्रेतानांआह्वानार्थेक्षणं-
दत्वाभवद्भिःप्रसादःकर्तव्यः ॥ अंतरिक्षस्थानांराजसानांअज्ञातनामगोत्राणांप्रेतानांआह्वा० ॥ भूमिस्थानांतामसानां-

अज्ञातनामगोत्राणांप्रेतानांआह्वा० ॥ बहिर्वर्तुलंमंडलत्रयंकृत्वातत्रगंधादिनिक्षिप्य ॥ सव्यं ॥ अपउपस्पृश्य ॥ अपसव्यं ॥ दिव्यंतरिक्षभूमिस्थाअज्ञातनामगोत्राःसात्विकराजसतामसाःप्रेताःइदंवःपाद्यं ॥ सुपाद्यं ॥ शंनोदेवी० नः ॥ दिव्यंतरिक्षभूमिस्थाअज्ञातनामगोत्राःसात्विकराजसतामसाःप्रेताःअमीवोगंधाः ॥ सुगंधाः ॥ अक्षताः ॥ स्वक्षताः ॥ पुष्पाणि ॥ सुपुष्पाणि ॥ अर्चनविंधेःस्वार्चितमस्तु ॥ दिव्यंतरिक्षभूमिस्थाअज्ञातनामगोत्राः सात्विकराजसतामसाः प्रेताःसमाध्वं ॥ सुसमास्महे ॥ सर्वप्राचीनावीतिना ॥ तूष्णींतिलोदककरणं ॥ गन्धपुष्पप्रक्षेपः ॥ तूष्णींनीवीबंधनं ॥ संकल्पः ॥ पिशाचमोचनतीर्थेएकोद्दिष्टविधिनात्रिपिंडीश्राद्धंकरिष्ये ॥ कुरुष्वेत्यनुज्ञातः ॥ अग्निष्वात्ताः पितृगणाः प्राचीर० ॥ यद्देवादेवेतिपाकप्रोक्षणं ॥ दिविस्थानांसात्विकानांअज्ञातनामगोत्राणांप्रेतानांभूर्भुवःस्वःइदमासनं ॥ हस्तप्रक्षा० ॥ अंतरिक्षस्थानांराजसानां अज्ञातनामगोत्राणांप्रेतानांभूर्भुवःस्वःइदमासनं ॥ भूमिस्थानांतामसानांअज्ञातनामगोत्राणांप्रेतानांभूर्भु० सनं० ॥ नात्रावाहनं ॥ अर्घ्यपात्रमासाद्य ॥ एकोर्घेएकंपवित्रं एवंपात्रत्रयंनिधाय ॥ शंनोदेवीरित्यादिपुष्पाणीत्यंतं ॥ यादिव्याआपःपयसासं० वंतु ॥ दिविस्थाःसात्विकाःआज्ञातनामगोत्राःप्रेताः इदंवोअर्घ्यं १ ॥ यादिव्या० अंतरिक्षस्थाराजसाअज्ञातनामगो० इदंवोअर्घ्यं २ ॥ यादिव्या० ॥ भूमिस्थास्तामसाअज्ञातना० इदंवोअर्घ्यं ३ ॥ आपःसर्वत्र ॥ पात्रन्युब्जीकरणंनास्ति ॥ दिव्यंतरिक्षभूमिस्थेभ्यः सात्विकराजसतामसेभ्यअज्ञातनामगोत्रेभ्यःप्रेतेभ्यः अत्रगन्धाद्याच्छादनांताःसर्वेउपचाराःसंपूर्णाः ॥ युष्मदनुज्ञयापात्रासादनंकरिष्ये ॥

कुरुष्व ॥ तूर्ष्णींभस्मनामण्डलत्रयंकृत्वा ॥ तूर्ष्णींकरशुद्धिः ॥ अग्नौकरणाभावः ॥ मूर्धानंदिवइतिपात्राभिघारणं ॥ आज्यमधुपायसमाषान्नकृसरान्नानिपरिविष्य ॥ मध्वादियुक्तंयवपिष्टंप्रथमपात्रे, मध्वादियुक्तंतंदुलपिष्टंद्वितीयपात्रे, मध्वादियुक्तंतिलपिष्टंतृतीयपात्रेदत्वा ॥ गायत्र्याभ्युक्षणं ॥ पृथ्वितेपात्रं० ॥ इदंविष्णु० ॥ एवंप्रतिपात्रमालंभः ॥ दिविस्थेभ्यःसात्विकेभ्यःअज्ञातनामगोत्रेभ्यःप्रेतेभ्यः इदंमधुपायसाद्यन्नंसोपस्करं तत्सत्पिशाचमोचनतीर्थेदत्तमक्षय्य-मस्तु ॥ अंतरिक्षस्थेभ्योराजसेभ्यःअज्ञातनामगोत्रेभ्यःप्रेतेभ्यः इदंमधुपायसाद्यन्नंसोपस्करंतत्सत्पिशाचमोचनतीर्थेदत्त०॥ भूमिस्थेभ्यस्तामसेभ्यःअज्ञातनामगोत्रेभ्यःप्रेतेभ्यःइदंमधुपायसाद्यन्नंसोपस्करंतत्सत्पिशाचमो० दत्तमक्षय्यमस्तु॥ येचेहपि-तरो० स्वधाजुषस्व ॥ सव्यं ॥ ब्रह्मार्पणं ॥ अपसव्यं ॥ आपोशनंदत्वा ॥ एकोविष्णु० ॥ अनेनब्राह्मणभोजनेनदिव्यं-तरिक्षभूमिस्थसात्विकराजसतामसअज्ञातनामगोत्रप्रेतमोक्षदोमहाविष्णुःप्रीयतांनममेतिभूमौसकुशतिलजलंप्रक्षिपेत् ॥ ईशानविष्णु० ॥ दिव्यंतरिक्षभूमिस्थाःसात्विकराजसतामसाअज्ञातनामगोत्राःप्रेताःतत्सत्पिशाचमोचनतीर्थेअमृतंजुषध्वं॥ सव्यं ॥ सकृत्रिर्वागायत्रीजपः ॥ अपसव्यं ॥ तृप्तानूज्ञात्वाअन्नंप्रकीर्य॥ विकिराभावः ॥ उत्तरापोशनंदत्वा ॥ मधुवाता-इतितृचंजप्त्वा ॥ दिव्यंतरिक्षभूमिस्थाःसात्विकराजसतामसाअज्ञातनामगोत्राःप्रेताःतृप्तास्थइतियजमानोब्रूयात् ॥ तृप्ताः-स्मइतिब्राह्मणाः ॥ शर्करामधुसर्पिरितिमधुरत्रयमिश्रितंयवव्रीहितिलपिष्टपिण्डत्रयंकृत्वा ॥ त्रिविधानां० निवृत्त्यर्थं-पिण्डदानंकरिष्ये ॥ दक्षिणाभिमुखःसव्यंजान्वाच्य॥ अपहतेतिरेखात्रयमुल्लिख्यतत्रकुशानास्तीर्यतिलोदकमादाय ॥ अस्म-

त्कुलेमृतायेचगतिर्येषांनविद्यते ॥ आवाहयिष्येतान्सर्वान्दर्भपृष्ठेतिलोदकैः १ ॥ मातामहकुलेयेचगतिर्येषांनविद्यते ॥ आवाहयिष्येतान्सर्वान्दर्भपृष्ठेतिलोदकैः २ ॥ बन्धुवर्गेमृतायेचगतिर्येषांनविद्यते ॥ तिलोदकंमयादत्तमक्षय्यमुपतिष्ठतु ३ ॥ इतिश्लोकत्रयेण रेखात्रयोपरितिलोदकंदत्वा ॥ ततःयवपिंडंस्पृष्ट्वामधुवाताइतितृचंजप्त्वापिण्डमादाय ॥ पितृवंशेमृताये० कुलेमम ॥ धर्मपिण्डोमयादत्तोह्यक्षय्यमुपतिष्ठतु ॥ एवंश्लोकत्रयंपठित्वा ॥ इमंयवमयंपिण्डंमधुरत्रयसंयुतं ॥ ददामितस्मै-प्रेताययःपीडा कुरुतेमम १ ॥ येकेचित्प्रेतरूपेणवर्ततेपितरोमम ॥ यवपिण्डप्रदानेनतृप्तिंगच्छंतुशाश्वतीं २ ॥ येकेचिद्दिवि-तिष्ठंतिप्रेताःसात्विकरूपिणः ॥ सात्विकाःपिण्डदानेनतृप्तिंगच्छंतुतेऽक्षयां ३ ॥ दिविस्थाःसात्विकाअज्ञातनामगोत्राः-प्रेताएषवःपिण्डोक्षय्यमुपतिष्ठतुइतियवमयंपिंडंदद्यात् ॥ ततोव्रीहिमयंपिंडंस्पृष्ट्वामधुवाताइतितृचंजप्त्वापिण्डमादाय ॥ पितृवंशेइत्यादिश्लोकत्रयंउक्त्वा ॥ इमंव्रीहिमयंपिण्डंमधुरत्रयसंयुतं ॥ तन्मुक्तयेप्रदास्यामिपीडांयःकुरुतेमम १ ॥ येकेचि-द्वायुरूपेणवर्ततेपितरोमम ॥ तंडुलैःपिंडदानेनव्रजंतुगतिमुत्तमां २ ॥ अंतरिक्षेचयेकेचिद्राजसावायुरूपिणः ॥ तेसर्वेपि-ण्डदानेनसंतृप्यंतुमुदान्विताः ३ ॥ अंतरिक्षस्थाराजसाअज्ञातनामगोत्राःप्रेताःएपव्रीहिमयःपिंडोक्षय्यमुपतिष्ठतुइतिव्रीहि-मयंपिंडंदद्यात् ॥ ततस्तृतीयंतिलमयंपिंडंस्पृष्ट्वामधुवाताइतितृचंजप्त्वापिण्डमादाय ॥ पितृवंशेइत्यादिश्लोकत्रयंपठित्वा ॥ इमंतिलमयंपिंडंसर्पिषामधुनायुतं ॥ तेभ्योददामियेपीडांमत्कुलेकुर्वतेसदा १ ॥ येकेचित्तामसाःप्रेताभूमौतिष्ठन्ति-सर्वदा ॥ तिलपिण्डप्रदानेनगतिंगच्छंतुतेध्रुवं २ ॥ तमोरूपाश्चयेकेचिद्वर्ततेपितरोमम ॥ पिण्याकपिंडदानेनतेतृप्य-

न्तुक्षुधार्दिताः ३ ॥ भूमिस्थास्तामसाअज्ञातनामगोत्राःप्रेताःएपतिलमयःपिंडोक्षय्यमुपतिष्ठतुइतितिलमयंपिंडंदद्यात् ॥ अत्रपितरइतिजपः ॥ उदङ्ङास्तआतमनात् ॥ विवृत्य ॥ अमीमदंतेतिजपः ॥ पितृवंशइतिश्लोत्रयेणत्रिपुपिंडेपुप्रत्येकं तिलोदकंदत्वा ॥ पितृवंशेमृ० कुलेमम ॥ तिलोदकंमयादत्तमक्षय्यमुपतिष्ठतु ॥ इतितिलोदकंदत्वा ॥ नीवीविस्रंसनं ॥ नमोवःपितरोरसायेतिपडंजलिकरणं ॥ त्रिपुपिंडेपुएतद्वःपितरोवासइतिमन्त्रावृत्त्यासूत्रंदद्यात् ॥ सव्यं ॥ कुलाभिवृद्ध्यर्थं पिंडपूजनंकरिष्ये ॥ कुरुष्व ॥ दिव्यंतरिक्षभूमिस्थेभ्यःसात्विकराजसतामसेभ्यः अज्ञातनामगोत्रेभ्यःप्रेतेभ्यः अत्रगन्ध-पुष्पधूपदीपनैवेद्यफलतांबूलदक्षिणांतंपूजनंकृत्वा ॥ अर्घ्यदानंकुर्यात् ॥ ततोवृहत्पात्रेगन्धोदकतुलसीपुष्पाणिप्रक्षिप्य तन्मध्येमातुलिंगफलत्रयंस्थापयित्वा ॥ उपवीती ॥ अर्घ्यपात्रमादाय ॥ दिविस्थाःसात्विकाअज्ञातनामगोत्राःप्रेताइद-मर्घ्यंसमर्पयामिइतियवपिण्डोपरिदद्यात् ॥ पुनरर्घ्यपात्रमादायतन्मध्येजंवीरफलत्रयंनिधायअर्घ्यंदद्यात् ॥ अंतरिक्षस्था राजसाअज्ञातनामगोत्राःप्रेताःइदमर्घ्यं० मि इतिव्रीहिपिंडोपरिदद्यात् ॥ पुनरर्घ्यपात्रेखर्जूरफलत्रयंगृहीत्वा ॥ भूमिस्था-स्तामसाअज्ञातनामगोत्राःप्रेताःइदमर्घ्यं० मि इतितिलपिंडोपरिदद्यात् ॥ अपसव्यं ॥ ब्राह्मणहस्तेशिवाआपःसंत्वि-त्यादि ॥ दिव्यंतरिक्षभूमिस्थेभ्यःसात्विकराजसतामसेभ्यःअज्ञातनामगोत्रेभ्यःप्रेतेभ्यःयद्दत्तंत्रिपिण्डीश्राद्धीयमन्नमुदकं-तदक्षय्यमस्तु ॥ सव्यं ॥ अस्मद्गोत्रंवर्धतामितियजमानः ॥ गोत्रंवोवर्धतामितिब्राह्मणाः ॥ अपसव्यं ॥ ऊर्जंवहंतीतिपि-

ण्डमूलेउदकनिषेकः ॥ उपविष्टेभ्योब्राह्मणेभ्यः दिविस्थेभ्यःसात्विकेभ्यःअज्ञातनामगोत्रेभ्यःप्रेतेभ्यःइदंवस्त्रंदक्षिणापातु ॥ अंतरिक्षस्थेभ्योराजसेभ्यअज्ञातनामगोत्रेभ्यःप्रेतेभ्यःअयंकमंडलुर्दक्षिणापातु ॥ भूमिस्थेभ्यस्तामसेभ्यअज्ञातनामगोत्रेभ्यःप्रेतेभ्यःइमौउपानहौदक्षिणापातु ॥ सव्यं ॥ पिंडेपुनमस्कारः ॥ अथयदेवप्रजामिच्छेत० ॥ गोत्रस्याभिवृद्धिरस्त्वितिब्राह्मणाब्रूयुः ॥ अपसव्यं० ॥ अयोध्याम० ॥ ॐ तद्विष्णोःपरमंपदमितिमन्त्रेणपिंडान्स्थाल्यामवधाय ॥ अवघ्राणंनभवति ॥ सव्यं ॥ पादौप्रक्षाल्यआचम्यब्राह्मणप्रार्थना ॥ दिव्यंतरिक्षभूमिस्थाःसात्विकाराजसास्तथा ॥ प्रेतावैतामसायेन्येशांतिंयच्छंतुतर्पिताः ॥ इतिप्रार्थना ॥ यजमानायाशीर्वादोदेयः ॥ स्वादुषंसद:० ॥ मयायत्कृतंदिव्यंतरिक्षभूमिस्थेभ्यःसात्विकराजसतामसेभ्यःअज्ञातनामगोत्रेभ्यः प्रेतेभ्यःपिशाचमोचनतीर्थेत्रिपिंडीश्राद्धंकालहीनंदक्षिणाहीनं ब्राह्मणानांवचनात्श्रीमहाविष्णोःप्रसादात्तत्सर्वंपरिपूर्णमस्तु ॥ अस्तुपरिपूर्णं ॥ इतित्रिपिंडीश्राद्धप्रयोगः ॥ अथत्रिपिंडीश्राद्धांगदानानि ॥ गोप्रदानं ॥ तत्प्रयोगोन्यत्रज्ञेयः ॥ तिलपात्रदानं ॥ मन्त्रः ॥ तिलाःपुण्याःपवित्राश्च तिलाःसर्वकराःस्मृताः ॥ शुक्लावायदिवाकृष्णाऋषिगोत्रसमुद्भवाः ॥ यानिकानिचपापानिब्रह्महत्यासमानिच ॥ तिलपात्रप्रदानेननश्यंतुसकलान्यपि ॥ इति ॥ घृतपात्रदानं ॥ ततःस्थापितकलशोदकेनयजमानाभिषेकः ॥ पयःपृ० ॥ ततः सर्वौषधीरनुलिप्यसचैलंस्नात्वा स्थापितदेवतानांविसर्जनं ॥ ब्राह्मणभोजनसंकल्पः ॥ भूयसींदद्यात् ॥ इतित्रिपिंडीश्राद्धं०॥

अत्रमिश्रप्रकरणेनिवेशनीयाःसन्तियद्यपिबहवोविषयाआवश्यकास्तथापिग्रंथविस्तरभियास्थलसंकोचेनास्मिन्नावर्तनेन-संगृहीतास्तान्पृथक्परिशिष्टरूपेणप्रकाशयामः श्रीशक्रपयास्याऽऽरात्पुनःसंस्कारावसरलाभेऽत्रापिसंगृह्णीमइतिविदांकुर्व-न्तुदूरदर्शिनोविद्वांस इतिशम् ॥

॥ इति शुक्लयजुःशाखीयकर्मकाण्डप्रदीपेव्रतोद्यापनप्रतिष्ठादिमिश्रप्रकरणम् ॥

# अथाऽन्त्येष्ट्याद्यन्तिमप्रकरणम् ॥ ५ ॥

श्रीगणेशायनमः ॥ प्रणम्यपरमात्मानंगणेशंकामदंशुभं ॥ सर्वेषामुपकारायतनुतेंत्येष्टिपद्धतिम् ॥ १ ॥

अथसर्वप्रायश्चित्तम् ॥ ॥ आसन्नमरणंपित्रादिकंज्ञात्वापुत्रादिभिस्तीर्थेनीत्वाप्रायश्चित्तंकारयेत् । तदीयंस्वयंवाकुर्यात् ॥ तद्यथा ॥ षडब्दंत्र्यब्दंसार्धाब्दंवायथाशक्तितदैवसुवर्णादिप्रत्याम्नायद्वाराकुर्यात् ॥ संकल्पमात्रंवाकृत्वासूतकांतेवाकुर्यात् ॥ तत्रादौसभाउपवेशनीया ॥ तल्लक्षणमाहयाज्ञवल्क्यः—चत्वारोवेदधर्मज्ञाःपर्षत्त्रैविद्यमेववा ॥ साब्रूतेयंसधर्मःस्यादेकोवाध्यात्मवित्तमः ॥ इति ॥ चतुरस्त्रीनेकंवाध्यात्मविदंपर्षत्त्वेनोपवेश्यतदग्रेवाग्यतःसचैलंस्नात्वाशक्तौसत्यांक्लिन्नवासाअभुंजानःपर्षदंप्रदक्षिणीकृत्यहृदयेनदूयमानोधरण्यांसाष्टांगंप्रणमेत् ॥ ततस्तैःकिंतेकार्यंमिथ्यामावादीःसत्यमेववदइत्यादिपृष्टेपर्षदग्रेगोवृषयोःप्रत्येकंप्रत्याम्नायत्वेनयथाशक्तिस्वर्णरौप्ययोर्निष्कंतदर्धंतदर्धंवानिधाय ॥ अमुकस्यमेजन्मप्रभृतिअद्ययावत्ज्ञानाज्ञानकामाकामसकृदसकृत्कृतकायिकवाचिकमानसिकसांसर्गिकज्ञाताज्ञातस्पृष्टास्पृष्टभुक्ताभुक्तपीतापीतसकलपातकातिपातकोपपातकलघुपातकसंकरीकरणमलिनीकरणापात्रीकरजातिभ्रंशकरप्रकीर्णकपातकानांमध्येसंभावितानांपापानांनिरासार्थंममानुग्रहंकृत्वाप्रायश्चित्तमुपदिशंतुभवंतः ॥ तथा ॥ सर्वेधर्मविवेक्तारोगोप्तारःसकलाद्विजाः ॥ ममदेहस्यसंशुद्धिंकुर्वंतुद्विजसत्तमाः ॥ मयाकृतंमहाघोरंज्ञातमज्ञातकिल्बिषं ॥ प्रसादःक्रियतांमह्यंशुभानु-

ज्ञांप्रयच्छथ ॥ पूज्यैःकृतःपवित्रोऽहंभवेयंद्विजसत्तमैः ॥ एवंप्रार्थयेत् ॥ एवंवारत्रयंसभ्यानाप्रार्थनानन्तरंमामनुगृह्णंतुभ-वन्तइतिप्रणमेत् ॥ पुत्रादिश्चेत्प्रायश्चित्तकर्तातदास्मच्छब्दस्थानेतन्नामनिर्दिशेत् ॥ ममदेहस्येत्यस्यस्थानेअस्यदेहस्येति प्रयोगः ॥ मयाकृतमित्यत्रअनेनकृतमितिप्रयोगः ॥ ततस्तेतमुत्सार्य तस्यशरीरद्रव्यादिशक्तिमुत्तममध्यमादिपक्षांश्चवि-चार्य अस्मिन्पक्षेऽयंशक्तइतिनिश्चित्य पुस्तकवाचनपूर्वकंकथयेयुः ॥ अनुवादकस्याग्रेप्रत्याम्नायांश्चशक्त्याकल्पयेयुः ॥ अस्मिन्कालेप्रायश्चित्तीचंदनपुष्पादिभिः पुस्तकपूजांसभ्यानुवादकपूजांचविधायनिबन्धपूजात्वेनचकिंचिद्यथाशक्तिद्रव्यं निधायकृतांजलिपुटोनम्रस्तिष्ठेत् ॥ अनुवादकायचस्वपापानुसारेणभृतिरूपांदक्षिणांदद्यात् ॥ ॥ ततोनुवादकःपूर्वोक्त-विशेषणविशिष्टानांपूर्वोक्तानांमहापातकव्यतिरिक्तानांपातकानांक्षयःपर्षदुपदिष्टेनसर्वप्रायश्चित्तेनामुकप्रत्याम्नायद्वाराप्रा-च्योदीच्यांगसहितेनाचीर्णेनभविष्यति तेनत्वंकृतार्थोभविष्यसीत्युपदिशेत्रिः ॥ ततोऽनुवादकोक्तंतत्सर्वप्रायश्चित्तं-शक्त्यनुसारेणषडब्दंत्र्यब्दंसार्धाब्दमन्यद्वापर्षदोऽनुमतं ॥ ॥ प्रत्याम्नायाश्च—गायत्र्ययुतजपे तिलहोमसहस्रे द्वादश-ब्राह्मणभोजने तीर्थयोजनयात्रायां एकगोदाने सुवर्णरौप्यनिष्कतदर्धतदर्धानांगोमूल्यानांशक्त्यादाने शुष्ककेशवद्द्वादश-स्नानेषुद्विगुणद्वादशामान्नदानादौचैकंप्राजापत्यमिति ॥ तत्रशक्तस्यामान्नंद्विगुणं—द्रव्यंचतुर्गुणमित्यादियोज्यं ॥ ॥ अथनिष्कलक्षणं ॥ अष्टरक्तिकोमाषः । माषदशकंसुवर्णः । सुवर्णचतुष्टयंनिष्कः । एवंचगणनायांक्रियमाणायांविंशद-धिकशतत्रयंरक्तिकाभवंतीतिलोके ॥ शास्त्रेतुपंचरक्तिर्माषः । माषदशकंसुवर्णः । सुवर्णचतुष्टयंनिष्कः ॥ अत्रापिविंशत्य-

धिकंशतत्रयंरक्तिकाभवन्ति । लोकशास्त्रयोरेकवाक्यतायामाषाः ४० । अशक्तौतदर्धं २० । तदर्धंवा १० । तत्रमुख्यं स्वर्णं । तदशक्तौरजतंग्राह्यं ॥ ॥ ततोनिवेदितंप्रायश्चित्तं भवदनुग्रहः इत्यंगीकृत्यसंमानपूर्वकंप्रणम्यपर्षदंविसर्जयेत् ॥ अस्मिन्नहनिशक्तेनोपवासःकार्यः । इतरेणहविष्याशनं ॥ मुख्यपक्षस्तु ॥ त्र्यहंप्रातस्त्र्यहंसायंत्र्यहमद्यादयाचितं ॥ त्र्यहं परंतुनाश्नीयात्प्राजापत्योयमुच्यते ॥ तदशक्तौ—एकभक्तेननक्तेनतथैवायाचितेनच ॥ उपवासेनचैकेनपादकृच्छ्रउदाहृतः ॥ त्रिरभ्यासेप्राजापत्यः ॥ ॥ ततःकस्यांचिद्रिक्तायांतिथौअथवातस्मिन्नेवदिनेकृतमाध्याह्निकःसायाह्नेगंगादौदेशकालौ संकीर्त्य अमुकशर्मणोममजन्मप्रभृतिअद्ययावत्ज्ञानाज्ञानकामाकामसकृदसकृत्कृतकायिकवाचिकमानसिकसांसर्गिकज्ञाताज्ञातस्पृष्टास्पृष्टभुक्ताभुक्तपीतापीतसकलपातकातिपातकोपपातकलघुपातकसंकरीकरणमलिनीकरणापात्रीकरजातिभ्रंशकरप्रकीर्णकपातकानांमध्येसंभावितानांपापानांनिरासेन[मरणकाले]शुद्ध्यर्थंश्रीपरमेश्वरप्रीत्यर्थंचअमुकप्रायश्चित्तंअमुकप्रत्याम्नायेनप्राच्योदीच्यांगसहितंकरिष्येइतिसंकल्प्य ॥ ततः । स्मरणात्किल्बिषंहंतीत्यादिगोदावर्यादितीर्थप्रार्थनादर्शनंसाष्टांगप्रणामश्च ॥ ततोब्रह्माद्रिशिखरोत्पन्नेइत्याद्यर्घपंचकं ॥ ततोवपनंकार्यं ॥ देशकालौसंकीर्त्यप्रायश्चित्तांगत्वेनक्षौरंकरिष्ये ॥ यानिकानिचपापानिब्रह्महत्यासमानिच ॥ केशानाश्रित्यतिष्ठन्तितस्मात्केशान्वपाम्यहं ॥ इतिमन्त्रेणशिखाकक्षोपस्थवर्जंनखरोमादिवापयित्वा ॥ प्राङ्मुखोद्वादशांगुलंदंतकाष्ठंकुर्यात् ॥ आयुर्बलंयशोवर्चःप्रजापशुवसूनिच ॥ ब्रह्मप्रज्ञांचमेधांचत्वंनोदेहिवनस्पते ॥ इतिमन्त्रेणदन्तकाष्ठंगृहीत्वादन्तान्धावयेत् ॥ तत्रमन्त्रः ॥ ॐ अन्नाद्या-

यन्यूहघ्वंधुसोमोराजायमागमत् ॥ समेसुवंप्रमाक्ष्यंतेयशसाचभगेनच ॥ द्वादशगंडूषास्त्यक्त्वा ततस्तूष्णींस्नात्वा ॥ ॥ मन्त्रतःभस्मादिदशस्नानानिकुर्यात् ॥ तत्रादौभस्मस्नानं १ ॥ हस्तेभस्मगृहीत्वा । ईशानायनमइतिशिरसि । तत्पुरुषायनमइतिमुखे । अघोरायनमइतिहृदये । वामदेवायनमइतिगुह्ये । सद्योजातायनमइतिपादयोः । प्रणवेनसर्वांगे ॥ ॥ अथगोमयस्नानं० २ ॥ गन्धद्वारां० ॥ अग्रमग्रंचरंतीनामोषधीनांवनेवने ॥ तासामृषभपत्नीनांपवित्रंकायशोधने ॥ तन्मेरोगांश्चशोकांश्चपापंचहरगोमय ॥ इतिगोमयस्नानं ॥ ॥ अथमृत्तिकास्नानं ३ ॥ भूरसीतिभूमिंप्रार्थ्य । मावोरिपत्खनितेतिखनित्वा । गायत्र्याकुशोदकेनाभ्युक्ष्य । स्योनापृथिवीतिमृदमादाय । त्रातारमिंद्रमितिपूर्वस्यांदिशिक्षिपेत् । यमायत्वेतिदक्षिणतः । तत्त्वायामीतिपश्चात् । वयꣳसोमेत्युत्तरतः । तत्सूर्यस्येत्युपरिष्टात् । इदंविष्णुरित्यधस्तात् ॥ ततोंगेषु ॥ सहस्रशीर्षेतिशिरसि । मुखꣳसदस्यसिरइतिमुखे । नीलग्रीवाइतिकंठे । आंत्राणिस्थालीतिहृदये । नाभिर्मेइतिनाभौ । बाहूमेबलमितिबाह्वोः । सोमानꣳस्वरणमितिकुक्ष्योः । पृष्ठीर्मेइत्यूर्वोः । बह्वीनांपितेतिपृष्ठदेशे । पुनःपृष्ठीर्मेइतिजानुनोः । एतावानस्येतिपादयोः । पुरुषसूक्तेनसर्वांगे ॥ एतावत्यशक्तौ ॥ अश्वक्रांतेरथक्रांतेविष्णुक्रांतेवसुंधरे ॥ शिरसाधारयिष्यामिरक्षस्वमांपदेपदे ॥ भूमिर्धेनुश्चधरणीधरित्रीलोकधारिणी ॥ उद्धृतासिवराहेणकृष्णेनशतबाहुना ॥ मृत्तिकेहरमेपापंयन्मयादुष्कृतंकृतं ॥ मृत्तिकेब्रह्मदत्तासिकाश्यपेनाभिमन्त्रिता ॥ मृत्तिकेदेहिमेपुष्टिंत्वयिसर्वंप्रतिष्ठितं ॥ मृत्तिकेयदघंसर्वंतन्मेनिर्णुदमृत्तिके ॥ त्वयाहतेनपापेनगच्छामिपरमांगतिं ॥ इतिमन्त्रैरंगोद्धर्तं-

नमात्रं ॥ ॥ आपोहिष्ठेतिशुद्धोदकस्नानं ४ ॥ अथपंचगव्यस्नानं ॥ गायत्रीमन्त्रेणगोमूत्रस्नानं ५ ॥ गन्धद्वारामितिगोमयस्नानं ६ ॥ आप्यायस्वेतिक्षीरस्नानं ७ ॥ दधिक्राव्णइतिदधिस्नानं ८ ॥ घृतंमिमिक्षेइतिघृतस्नानं ९॥ देवस्यत्वेतिकुशोदकं १० ॥ एवंदशस्नानानिविधायस्वसूत्रोक्तविधिनामन्त्रस्नानंकुर्यात् ॥ ॥ (अथस्त्रीशूद्राणांस्नानविधिर्लिख्यते ॥ स्त्रीशूद्राणाममन्त्रकानिस्नानानिपौराणमन्त्रैर्वा । तत्रब्राह्मणैर्मन्त्राःपाठनीयाःनस्वयं ॥ तथाचोक्तंभविष्ये ॥ श्रोतव्यमेवशूद्रेणनाध्येतव्यंकदाचनेति ॥ तत्रादौभस्मस्नानं ॥ ईशानायनमःशिरसि ॥ तत्पुरुषायनमःमुखे ॥ अघोरायनमःहृदये ॥ वामदेवायनमःगुह्ये ॥ अग्रमग्रंचरन्तीनामितिमन्त्रेणगोमयस्नानं ॥ ॥ अथमृत्तिकास्नानं ॥ मृत्तिकांहस्तेगृहीत्वाइंद्रायनमइतिपूर्वस्यांक्षिपेत् ॥ यमायनमइतिदक्षिणतः ॥ वरुणायनमइतिपश्चिमतः ॥ सोमायनमइत्युत्तरतः ॥ सूर्यायनमइत्युपरिष्टात् ॥ ततोंगेषु ॥ अश्वक्रांतेइतिमन्त्रेणमृदंसर्वांगेलेपयेत् ॥ ॥ शुद्धोदकस्नानं ॥ गंगेचयमुनेचैवगोदावरिसरस्वति ॥ नर्मदेसिंधुकावेरिस्नानेस्मिन्संनिधाभव ॥ अथपंचगव्यस्नानं ॥ गंगायैनमःगोमूत्रस्नानं ॥ यमुनायैनमःगोमयस्नानं ॥ सरस्वत्यैनमःक्षीरस्नानं ॥ नर्मदायैनमःदधिस्नानं ॥ वह्नयेनमइतिघृतस्नानं ॥ विरिंचिनासहोत्पन्नसर्वकर्मप्रसाधक ॥ नुदपापानिसर्वाणिदर्भस्वस्तिकरोभव ॥ इतिकुशोदकस्नानं) ॥ एवंदशस्नानानिकृत्वा ॥ स्नानांगतर्पणंकुर्यात् ॥ ॥ ततोधौतेवाससीपरिधाय ॥ भस्मनात्रिपुंड्रंधृत्वा ॥ द्विराचम्य ॥ मध्याह्नसंध्योपासनादिविधाय ॥ षोडशोपचारैर्विष्णुपूजनंकार्यं ॥ विष्णूद्देशेनत्रिभ्योधिकान्ब्राह्मणान्भोजयेत् ॥ अशक्तश्चेदामान्नंहिरण्यंवादद्यात् ॥ कृतैतत्प्राय-

श्चित्तांगविष्णुश्राद्धप्रत्याम्नायभूतंयथाशक्तिहिरण्यंदातुमहमुत्सृज्ये । तेनश्रीपापापहामहाविष्णुःप्रीयतांनमम ॥ ॥
ततोगोप्रदानंकार्यं ॥ तच्चगोरभावेनिष्क्रयद्वाराकुर्यात् ॥ ततःस्वगृह्योक्तविधिनाअग्निस्थापनाद्याज्यभागांतंविधाय-
आज्येनमहाव्याहृतीरष्टोत्तरशतमष्टाविंशतिंवास्रुवेणजुहुयात् ॥ ॥ अथपञ्चगव्यविधिः ॥ सुवर्णादिपात्रेपद्मादि-
पत्रपुटेवारक्तायागोर्गायत्र्याप्रणवेनवात्रिपलंगोमूत्रमादायांगुष्ठपरिमितंश्वेतायागन्धद्वारेतिगोमयंचादाय एवंकपिलायाः-
सप्तपलमाप्यायस्वेतिक्षीरमादाय ततोनीलायाःसप्तपलमेवदधिक्राव्णइतिदध्यादाय ततःकृष्णायाएकपलंघृतंतेजोसी-
त्यादाय एकंपलंकुशोदकमापोहिष्ठेत्यादाय प्रणवेनालोड्यप्रणवेनैवयज्ञियकाष्ठेननिर्मथ्य प्रणवेनैवाभिमन्त्र्यहरितैःसप्तपत्रै-
रच्छिन्नाग्रैःकुशैःस्रुवस्थानभूतैःपंचगव्याहुतीर्जुहुयात्वक्ष्यमाणमन्त्रैः ॥ ॐ इरावतीधेनुमतीहिभूतꣳसूयवसिनीमनवेद-
शस्या ॥ व्यस्तभ्नारोदसीविष्णवेतेदाधर्थपृथिवीमभितोमयूखैःस्वाहा इदंपृथिव्यैनमम ॥ ॐ इदंविष्णुर्वि० सुरेस्वाहा
इदंविष्णवे० ॥ ॐ मानस्तोके० सहेस्वाहा इदंरुद्राय० ॥ उदकोपस्पर्शः ॥ ॐ ब्रह्मजज्ञानं० विवःस्वाहा इदंब्रह्मणे० ॥
ॐ अग्नयेस्वाहा इदमग्नये० ॥ ॐ सोमायस्वाहा इदंसोमाय० ॥ ॐ तत्सवितु० दयात्स्वाहा इदंसवित्रेनमम ॥ ततःप्र-
णवेन ॥ ॐ स्वाहा इदंप्रजापतये० ॥ ॐ भूर्भुवःस्वःस्वाहा इदंप्रजापतये० ॥ ॐ अग्नयेस्विष्टकृतेस्वाहा इदमग्नयेस्विष्ट-
कृतेनमम ॥ एवंदशाहुतीर्हुत्वा ॥ ततोनवाहुत्यादिप्रणीताविमोकांतं ॥ व्रतग्रहणंकरिष्येइतिब्राह्मणान्पृष्ट्वाकुरुष्वेतितै-
रनुज्ञातःप्रणवेनसर्वंपिबेत् ॥ पानंपलाशमध्यपर्णेनपद्मपत्रेणसुवर्णपात्रेणब्रह्मतीर्थेनवाकुर्यात् ॥ एतच्चग्रामाद्बहिर्न-

द्यास्तीरेनक्षत्रदर्शनेकार्यं ॥ अशक्तौतु गोमूत्रादिस्वल्पंग्राह्यं सर्वस्यपेयत्वात् ॥ सवकापिलमेवेतिलैंगे ॥ अस्मिन्दिने-उपवासः । अशक्तस्यहविष्याशनं ॥ पराशरः—स्त्रीशूद्रश्चविशुद्ध्यर्थंप्राजापत्यंसमाचरेत् ॥ पञ्चगव्यंचकुर्वीतस्नात्वापीत्वाशुचिर्भवेत् इति ॥ आरंभेसर्वकृच्छ्राणांसमासौचविशेषतः ॥ आज्येनैवहिशालाग्नौजुहुयाद्व्याहृतीःपृथक् ॥ श्राद्धंकुर्याद्धुतांतेचगोहिरण्यादिदक्षिणां ॥ स्त्रीणांहोमोनकर्तव्यःपञ्चगव्यंतथैवचेतिवचनात्स्त्रीशूद्राणांपञ्चगव्यहोमप्राशनयोर्विकल्पः ॥ होमकरणपक्षेलौकिकेग्नौब्राह्मणद्वाराकार्यः ॥ प्रायश्चित्तंप्रदातव्यंजपहोमविवर्जितमितिवचनाच्छूद्रस्यब्राह्मणद्वारापिहोमोनभवत्येव ॥ ततोगृहमागत्य विष्णुंस्मरन्मौनीनिशामतिवाह्यप्रक्रांतंप्रायश्चित्तंसंकल्पानुसारेणप्रत्याम्नायद्वाराकृत्वोत्तरांगानिकुर्यात् ॥ अग्निस्थापनादिव्याहृतिभिराज्यहोमंचपूर्ववत्कृत्वाविष्णुश्राद्धमुत्तरगोदानंचपूर्ववच्चरेत् ॥ ॥

अथगोदानप्रयोगः ॥ ॥ आचम्यप्राणानायम्यदेशकालौस्मृत्वाकुशतिलसहितंजलंहस्तेगृहीत्वाआत्मनासहैकविंशतिपुरुषतारणार्थंसर्वपापक्षयद्वाराश्रीपरमेश्वरप्रीत्यर्थंब्राह्मणायगोप्रदानंकरिष्ये । तदंगत्वेनब्राह्मणवरणंगोपूजनंचकरिष्ये ॥ अमुकगोत्रःअमुकप्रवरःअमुकशर्माअहं । अमुकगोत्रंअमुकप्रवरान्वितंअमुकशर्माणंब्राह्मणंगोप्रतिगृहीतारंत्वामहंवृणे ॥ वृतोस्मीतितेनवाच्यं ॥ ततोयथाविभवंब्राह्मणंपूजयित्वा गांपूजयेत् ॥ गवामंगेपुतिष्ठंतिभुवनानिच-

---

१ पूर्वोत्तरागहोमएकस्मिन्नेवाग्नौकार्यः । यदातुपूर्वांगहोममग्नौकृत्वाप्रायश्चित्तंयात्राप्रत्याम्नायेनस्वगृगेवक्करोति तदाअग्न्यंतरेउत्तरागहोम कार्य. पूर्वाग्नेश्चिरकालधारणासभवात् ।

तुर्दश ॥ यस्मात्तस्माच्छिवंमेस्यादिहलोकेपरत्रच ॥ इतिमन्त्रेणषोडशोपचारैःसवत्सांगांसंपूज्यगोदेहेक्षतपुष्पैर्देवानावाहयेत् ॥ शृंगमूलयोर्ब्रह्मविष्णुभ्यांनमःब्रह्मविष्णूआवाहयामि ॥ एवमग्रेपि ॥ शृंगाग्रेसर्वतीर्थेभ्योनमः ॥ शिरोमध्येमहादेवाय० । ललाटेगौर्यै० । नासावंशेषण्मुखाय० । नासापुटयोःकंबलाश्वतराभ्यां० । कर्णयोरश्विभ्यां० । नेत्रयोःशशिसूर्याभ्यां० । दंतेषुवायवे० । जिह्वायांवरुणाय० । हुंकारेसरस्वत्यै० । गल्लयोर्मासपक्षाभ्यां० । ओष्ठयोः संध्याद्वयाय० । ग्रीवायामिंद्राय० । कुक्षौरक्षोभ्यो० । उरसिसाध्येभ्यो० । जंघासुचतुष्पादयुतधर्माय० । खुरमध्येषुगंधर्वेभ्यो० । खुराग्रेषुपन्नगेभ्यो० । खुरपश्चिमाग्रेषुअप्सरोभ्यो० । पृष्ठेएकादशरुद्रेभ्यो० । सर्वसंधिषुवसुभ्यो० । श्रोण्योःपितृभ्यो० । पुच्छेसोमाय० । केशेषुसूर्यरश्मिभ्यां० । मूत्रेगंगायै० । गोमयेयमुनायै० । क्षीरेसरस्वत्यै० । दध्निनर्मदायै० । घृतेवह्नये । रोमसुअष्टाविंशतिदेवकोटिभ्यो० । उदरेपृथिव्यै० । स्तनेषुचतुःसागरेभ्योनमः । इत्यावाह्यआसनाद्यैरुपचारैःसंपूज्य ॥ ततःप्राङ्मुखोदाताकांस्यपात्रेताम्रमयेवाऽऽज्यपात्रेघृतदिग्धंकुशतिलयुतंपुच्छंकुशतिलयुतमुदङ्मुखविप्रकरंपरिगृह्यतस्मिन्सजलंपुच्छंदद्यात् ॥ मन्त्राः ॥ यज्ञसाधनभूतायाविश्वस्याघप्रणाशिनी ॥ विश्वरूपधरोदेवःप्रीयतामनयागवा ॥ इतिपठित्वा ॥ ततइमांगांरुद्रदैवत्यांसवत्सांसवस्त्रांदशसुवर्णनिर्मितस्वर्णशृंगयुतांपंचपलरजतनिर्मितखुरसमेतांपंचाशत्पलनिर्मितकांस्यदोहनपात्रसहितांताम्रपृष्ठांमुक्तालांगूलसहितांतुभ्यमहंसंप्रददेइतिविप्रकरेजलंक्षिपेत् ॥ देवस्यत्वेतिप्रतिग्रहीता ॥ प्रतिगृह्यतां ॥ प्रतिगृह्णामीतिप्रतिगृहीताब्रूयात् ॥ ततोदाता । कोदात्कस्माअदादितिकामस्तुतिंपठेत् ॥ द्यौस्त्वाददातुपृ-

थिवीत्वाप्रतिगृह्णात्विति प्रतिगृहीतावदेत् ॥ कृतैतद्गोदानसांगतासिद्ध्यर्थंयथाशक्तिहिरण्यंतुभ्यमहंसंप्रददे । तेनश्रीपापापहमहाविष्णुःप्रीयतां ॥ ततःप्रार्थना ॥ घृतक्षीरप्रदागावोघृतयोन्योघृतोद्भवाः ॥ घृतनद्योघृतावर्तास्तामेसंतुसदागृहे ॥ घृतंमेहृदयेनित्यंघृतंनाभ्यांप्रतिष्ठितं ॥ घृतंमेसर्वतश्चैवघृतंमनसिवैघृतं ॥ गावोममाग्रतोनित्यंगावःपृष्ठतएवच ॥ गावोमेसर्वतश्चैवगवांमध्येवसाम्यहं ॥ इतिपठित्वा ॥ ब्राह्मणसहितांगामनुव्रज्यगोमतींजपेत् ॥ गावोमामुपतिष्ठंतुहेमशृंग्यःपयोमुचः ॥ गावःसुरभयोनित्यंगावोगुग्गुलुसंनिभाः ॥ गावःपापविनाशिन्योगावःस्वस्त्ययनंमहत् ॥ अन्नमेवपरंगावोदेवानांहविरुत्तमं ॥ पावनंसर्वभूतानांरक्षंतिचवहंतिच ॥ हविषामन्त्रपूतेनतृप्यंतित्रिदशादिवि ॥ ऋषीणामपिहोतॄणांगावोहोमेप्रतिष्ठिताः ॥ सर्वेषामपिहोतॄणांगावःशरणमुत्तमं ॥ गावःसर्वस्यलोकस्यगावोधन्याःसवाहनाः ॥ नमोगोभ्यःश्रीमतीभ्यःसौरभेयिभ्यएवच ॥ नमोब्रह्मसुताभ्यश्चपवित्राभ्योनमोनमः ॥ ब्राह्मणाश्चैवगावश्चकुलमेकंद्विधाकृतं ॥ एकत्रमन्त्रास्तिष्ठंतिहविरेकत्रतिष्ठति ॥ इतिजपित्वाभूयसींदक्षिणांदत्वाकर्मेश्वरार्पणंकुर्यात् ॥ ॥ इतिगोदानविधिः ॥ ॥

एवंप्रायश्चित्तंकृत्वावैतरणींदद्यात् ॥ देशकालौस्मृत्वाममसमस्तपापक्षयार्थंयमद्वारस्थितवैतरण्याख्यनद्युत्तारणार्थंवैतरणीधेनुदानंक० ॥ तदंगत्वेनब्राह्मणपूजनंगोःपूजनंचक० ॥ गोत्रोच्चारपूर्वकंब्राह्मणंवृत्वायथाविभवंपूजयित्वाप्रार्थयेत् ॥ विष्णुरूपद्विजश्रेष्ठभूदेवपंक्तिपावन ॥ तर्तुकामःप्रदास्यामितुभ्यंवैतरणींतुगामिति ॥ देहीतिप्रतिवचनं ॥ पुत्रःकर्ताचेत्तर्तुमस्येतिप्रयोगः ॥ ततोधेनुंसंपूज्यप्रार्थयेत् ॥ धेनुकेत्वंप्रतीक्षस्वयमद्वारेमहापथि ॥ उत्तितीर्षुरहंदेविवैतरण्यैनमोस्तुते ॥

पुत्रादौकर्तरिउत्तितीर्षुरयमितिपठेत् ॥ ततस्तिलकुशजलमादायतस्याःपुच्छंहस्तेधृत्वामन्त्रंपठेत् ॥ यमद्वारपथेघोरेकृष्णा-वैतरणीनदी ॥ तर्तुकामःप्रदास्यामितुभ्यंवैतरणींतुगां ॥ इमांवैतरणीसंज्ञिकांगांसवत्सांविष्णुदैवतांसुवर्णशृंगींरौप्यखुरां ताम्रपृष्ठींकांस्यदोहनांकृष्णवस्त्रयुगच्छन्नांसप्तधान्यसहितांपट्टवस्त्रबद्धेक्षुमयोडुपोपरिस्थितांछत्रोपानहकांस्यघंटोपवीतसंयु-क्तांकार्पासद्रोणस्थताम्रभाजनोपरिस्थितलोहदंडहस्तमहिपारूढयमसहितांगन्धाद्यर्चितांअमुकशर्मणेब्राह्मणायसंप्रददेतेन-श्रीपापापहमहाविष्णुःप्रीयतांनममेत्युक्त्वाविप्रहस्तेजलंक्षिपेत् ॥ दानसांगतासिद्ध्यर्थंयथाशक्तिसुवर्णंवस्त्रयुगंवादक्षिणां-संप्रददे ॥ प्रार्थना ॥ विष्णुरूपद्विजश्रेष्ठभूदेवपंक्तिपावन ॥ सदक्षिणामयादत्तातुभ्यंवैतरणीतुगौः ॥ धेनुकेत्वंप्रतीक्षस्व यावदागमनंमम ॥ पुत्रेकर्तरिआगमनंभवेदित्यूहः ॥ वैतरणींनदींघोरांपुच्छलग्नस्तराम्यहमिति ॥ पुत्रादिःलग्नस्तरोत्व-यमित्यूहः ॥ धेनुप्रार्थना ॥ यालक्ष्मीःसर्वभूतानांयाचदेहेव्यवस्थिता ॥ धेनुरूपेणसादेवीममपापंव्यपोहतु ॥ इतिसंप्रा-र्थ्यविसर्जयेत् ॥ महाविष्णुःप्रीयतां ॥ स्वयंदानाशक्तौपुत्रेणदत्वातस्मैश्रेयोदद्यात् ॥ कृष्णायाअभावेऽन्यवर्णापिदेया ॥ गोरभावेद्रव्यंदेयं ॥ ॥ इतिवैतरणीदानं ॥

अथदशदानानि ॥ ॥ गोभूतिलहिरण्याज्यवासोधान्यगुडानिच ॥ रौप्यंलवणमित्याहुर्दशदानान्यनुक्रमात् ॥ इत्यु-क्तानि ॥ देशकालौस्मृत्वाममजन्मप्रभृतिमरणांतंयावदनेकपापक्षयार्थंदशदानानिकरिष्ये ॥ ॥ गोप्रदानं १ ॥ प्रति-दानंब्राह्मणपूजनंगोपूजनं ॥ गवामंगेषुतिष्ठंतीत्यनेन ॥ यज्ञसाधनभूतायाविश्वस्याघप्रणाशिनी ॥ विश्वरूपधरोदेवः

प्रीयतामनयागवा ॥ दशदानांतर्गतामिमांगांरुद्रदेवतांगोनिष्क्रयद्रव्यंवातुभ्यमहंसंप्रददे ॥ सागतासिद्ध्यर्थंदक्षिणां० ॥
भूदानं २ ॥ सर्वभूताश्रयाभूमिर्वराहेणसमुद्धृता ॥ अनंतसस्यफलदाअतःशांतिंप्रयच्छमे ॥ दशदानांतर्गतामिमांभूमिं
विष्णुदेवतांनिष्क्रयंवा० संप्रददे ॥ दक्षिणां० ॥ ॥ तिलदानं ३ ॥ महर्षेर्गोत्रसंभूताःकाश्यपस्यतिलाःस्मृताः ॥ तस्मादेषां-
प्रदानेनममपापंव्यपोहतु ॥ दशदानांतर्गतंतिलदानंसोमदैवतं० दक्षिणां० ॥ ॥ हिरण्यदानं ४ ॥ हिरण्यगर्भगर्भस्थं
हेमबीजंविभावसोः ॥ अनंतपुण्यफलदमतःशांतिप्रयच्छमे ॥ दशदानांतर्गतंहिरण्यमग्निदैवतं० दक्षिणां ॥ ॥ आज्यदानं
५ ॥ कामधेनुभ्यःसंभूतंसर्वक्रतुपुसंस्थितं ॥ देवानामाज्यमहारमतःशांतिं०॥ दशदानांतर्गतमाज्यंविष्णुदैवतं० दक्षिणां० ॥
वस्त्रदानं ६ ॥ शरणंसर्वलोकानांलज्जायारक्षणंपरं ॥ सुवेषधारिवस्त्रत्वमतःशांतिं० ॥ दशदानांतर्गतंवस्त्रदानंबृहस्पतिदै-
वतंदक्षिणां० ॥ ॥ धान्यदानं ७॥ सर्वदेवमयंधान्यंसर्वोत्पत्तिकरंमहत् ॥ प्राणिनांजीवनोपायमतःशांतिं० ॥ दशदानां-
तर्गतंधान्यंप्रजापतिदैवतं० ॥ दक्षिणां ॥ ॥ गुडदानं ८ ॥ यथादेवेषुविश्वात्माप्रवरश्चजनार्दनः ॥ सामवेदस्तुवेदानां-
महादेवश्चयोगिनां ॥ प्रणवःसर्वमन्त्राणांनारीणांपार्वतीयथा ॥ तथारसानांसर्वेषांगुडःश्रेष्ठतमोमतः ॥ ममतस्मात्परां-
लक्ष्मींददस्वगुडसर्वदा ॥ गुडस्यसंप्रदानेनममपापंव्यपोहतु ॥ दशदानांतर्गतंगुडदानंविष्णुदैवतं० ॥ दक्षिणां० ॥ ॥
रौप्यदानं ९ ॥ प्रीतिर्यतःपितॄणांचविष्णुशंकरयोःसदा ॥ शिवनेत्रोद्भवंरौप्यमतःशांतिं० ॥ दशदानांतर्गतंरौप्यंरुद्रदैवतं० ॥
दक्षिणां० ॥ ॥ लवणदानं १० ॥ यस्मादन्नरसाःसर्वेनोत्कृष्टालवणंविना ॥ शंभोःप्रीतिकरंनित्यमतःशांतिंप्रयच्छमे ॥

दशदानांतर्गतंलवणंयमदैवतंयमदूतानांप्रीत्यैअमुकशर्मणेब्राह्मणायतुभ्यमहंसंप्रददे ॥ दक्षिणां० ॥ इतिदशदानानि ॥ ॥
अथतिलपात्रदानं ॥ यथाशक्तितिलान्सुवर्णंचताम्रपात्रेकृत्वासंकल्पपूर्वकंब्राह्मणायदद्यात् ॥ देशकालौसंकीर्त्यममजन्मप्र-
भृतिमरणांतंयावदनेकपापक्षयद्वाराश्रीमहाविष्णुप्रीत्यर्थंब्राह्मणायतिलपात्रदानंकरिष्ये ॥ ब्राह्मणंसंपूज्य ॥ दानमन्त्रः ॥
तिलाःपुण्याःपवित्राश्चतिलाःसर्वकराःस्मृताः ॥ शुक्लावायदिवाकृष्णाऋषिगोत्रसमुद्भवाः ॥ यानिकानिचपापानिब्रह्महत्या-
समानिच ॥ तिलपात्रदानेनतानिनश्यंतुसर्वदा ॥ पुत्रादिस्तुअस्यपापंव्यपोहत्वितिवदेत् ॥ इदंतिलपात्रंविष्णुदैवतंअमुक-
शर्मणेब्राह्मणाय० ॥ दानसांगतायैइमांदक्षिणांतुभ्यमहंसंप्रददे ॥ ॥ आज्यपात्रदानं ॥ देशकालौसंकीर्त्यममजन्मप्र-
भृतिदेहावसानपर्यंतंअनेकपापक्षयार्थंआज्यपात्रदानंक० ॥ ब्राह्मणंसंपूज्यताम्रपात्रेकांस्यपात्रेवाआज्यंगृहीत्वाब्राह्मणा-
यदद्यात् ॥ दानमन्त्रः ॥ योदेवःसर्वरूपेणहव्यकव्यभुगव्ययः ॥ आज्यपात्रप्रदानेनसमेविष्णुःप्रसीदतुइतिविप्रहस्तेदद्यात् ॥
इदंआज्यपात्रंविष्णुदैवतंअमुक० दक्षिणां० ॥ ॥ लोहदानं ॥ देशकालौस्मृत्वायमायुधानांप्रीत्यैलोहदानंक० ॥
ब्राह्मणंसंपूज्य ॥ दानमन्त्रः ॥ यस्मादायसकर्माणितवाधीनानिसर्वशः ॥ लांगलाद्यायुधादीनिततःशांतिं० ॥ इदंलोहं
यमदैवतंयमायुधानांप्रीत्यैअमुक० ॥ दक्षिणां० ॥ ॥ कार्पासदानं ॥ ब्राह्मणंसंपूज्य ॥ येनदत्तेनप्रीयंतेभूर्भुवःस्वरि-
तिक्रमात् ॥ ब्रह्माद्याऋषयःसर्वेशंकराद्यागणास्तथा ॥ इंद्राद्यादेवताःसर्वाःकार्पासेनतुतोषिताः ॥ इमंकार्पासंसर्वदैवतं
अमुक० ॥ दक्षिणां० ॥ ॥ लवणदानं ॥ यमदूतानांप्रीत्यै० ॥ ब्राह्मणंसंपूज्य ॥ यस्मादन्नरसाःसर्वेनोत्कृष्टालवणं-

विना ॥ शंभोःप्रीतिकरंनित्यमतःशांतिं० ॥ इदंलवणंयमदैवतंयमदूतानांप्रीत्यैअमुक० ॥ ॥ अथसप्तधान्यदानानि ॥ व्रीहयोयवगोधूमामुद्गामाषाःप्रियंगवः ॥ तिलाश्चऋषिभिःप्रोक्ताःसप्तधान्यमितिस्मृतं ॥ ॥ व्रीहिदानं १ ॥ सप्तधान्यांतर्गतव्रीहिदानंक० ॥ ब्राह्मणपूजनं ॥ ब्रह्मणानिर्मिताःपूर्वंव्रीहयोयज्ञसाधनाः ॥ अनेनव्रीहिदानेनममसंतुमनोरथाः ॥ इदंव्रीहिदानंप्रजापतिदैवतंअमुकशर्मणे० दक्षिणां० ॥ ॥ यवदानं २ ॥ यवाःशुद्धाःसदापूज्यायज्ञेहविषिसंस्थिताः ॥ दानेनानेनवैयस्माच्छांतिरस्तुसदामम ॥ इदंयवदानंप्रजापतिदैवतंअमुक० ॥ दक्षिणां० ॥ ॥ गोधूमदानं ३ ॥ धान्यचूडामणिर्जंबूद्वीपेगोधूमसंज्ञकाः ॥ पुष्टिवृद्धिकराःसौख्याअतःशांतिं० ॥ इदंगोधूमदानंप्रजापतिदैवतंअमुक० ॥ दक्षिणां० ॥ ॥ मुद्गदानं ४ ॥ धान्यानामुत्तमामुद्गादेवानांप्रीतिदायकाः ॥ अतस्तेषांप्रदानेनविष्णुलोकेमहीयते ॥ इदंमुद्गदानंप्रजापतिदैवतंअमुक० ॥ दक्षिणां० ॥ ॥ माषदानं ५ ॥ येचदेहहितार्थायविष्णोर्देहसमुद्भवाः ॥ पितृतृप्तिकरामाषाःप्रयच्छन्तुशुभांगतिं ॥ इदंमाषदानंपितृदैवतंअमुक० दक्षिणां० ॥ ॥ प्रियंगुदानं ६ ॥ प्रियंगवःसदाश्रेष्ठाऋषीणांप्रीतिदायकाः ॥ अतस्तेषांप्रदानेनमुनिलोकेमहीयते ॥ इदंप्रियंगुदानंऋषिदैवतंअमुक० दक्षिणां० ॥ ॥ तिलदानं ॥ तिलाःश्वेतास्तिलाकृष्णास्तिलागोमूत्रसंभवाः ॥ तेमेदहंतुपापानिशरीरादिकृतानिच ॥ इदंतिलदानंसोमदैवतंअमुक० ॥ दक्षिणां० ॥ ॥ इत्यादिदानानिकृत्वाततः यन्मयाकृतंअमुकप्रायश्चित्तंतदच्छिद्रमस्तु ॥ व्रतच्छिद्रंतपश्छिद्रंयच्छिद्रंयज्ञकर्मणि ॥ सर्वंभवतुतेऽछिद्रंयस्यचेच्छंतिवैद्विजाः ॥ इतिविप्रप्रतिवचनं ॥ एतत्प्रायश्चित्तमकृत्वैवय-

दिपित्रादिर्मृतस्तदापातकसत्तानिश्चये पुत्रादिनापीदमवश्यंकार्यंअनिश्चयेनावश्यकं ॥ पुत्रादिनाकरणेपंचगव्यप्राशनाभावः ॥ तथाचगारुडे ॥ दत्त्वादानंतुविप्रेभ्योदीनानाथेभ्यएवच ॥ बन्धौमित्रेकलत्रेचक्षेत्रधान्यधनादिषु ॥ मित्रवर्गेचसर्वत्रममत्वंविनिवर्तयेत् ॥ इति ॥

अथातुरावस्थायांकर्त्तव्यं ॥ ततोदक्षिणाशिरसंभूमौबर्हिष्मत्यांनिवेशयेदितिवाक्यात् भूमौदक्षिणशिराःशयीत ॥ ततः पुत्रादिरुच्चैःपुरुषसूक्तोपनिषदादिश्रावयेत् ॥ ॥ उत्क्रांतिधेनुदानं ॥ अथासन्नमृत्युसमयेउत्क्रांतिधेनुंदरिद्रायकुटुंबिनेश्रोत्रियायब्राह्मणायदद्यात् ॥ पुत्रादिर्देशकालौसंकीर्त्यअमुकगोत्रस्यामुकशर्मणःअस्यसुखेनप्राणोत्क्रमणप्रतिबन्धकोक्तनिष्कृत्यनुक्तनिष्कृतिसकलपातकक्षयद्वारासुखेनप्राणोत्क्रमणार्थंउत्क्रांतिधेनुदानंकरिष्ये ॥ ब्राह्मणंवृत्वासंपूज्यगांचसंपूज्य । गवामंगेष्वितिमन्त्रमुक्त्वा । इमामुत्क्रांतिधेनुंरुद्रदैवत्यांसंकल्पोक्तफलावाप्तयेअमुकशर्मणेब्राह्मणायतुभ्यमहंसंप्रददे ॥ दानसांगतासिद्ध्यर्थंयथाशक्तिदक्षिणांसंप्रददेइतिदद्यात् ॥

अथाहिताग्नेर्मरणसमयमारभ्यसपिंडीकरणांतंकर्मलिख्यते ॥ ॥ सायमग्निहोत्रहोमानंतरंयदियजमानोदुर्बलःक्षीणोभवेत् प्रातराहुतिकालपर्यंतंनजीविष्यतीतिसंभावनायदिस्यात्तदातत्कालमेवप्रातरग्निहोत्रंहोतव्यं ॥ यदिसायंहोमारंभकालएवयजमानस्यमरणशंकास्यात्तदाएकतंत्रेणहोमंकुर्यादितिवासुदेवः ॥ अकालेकृतमपिपुनःस्वकालेकर्तव्यमेव ॥ एवंपौर्णमासेष्टयनंतरंयस्मिन्दिनेअमावास्येष्टिःक्रियतेतद्दिनादारभ्यदर्शेष्टेःप्राग्यावंतःसायंप्रातर्होमास्तांस्तंत्रेणजुहुयात् ॥ ततःपिंडपितृयज्ञवर्जिताममावास्येष्टिंकुर्यात् पिंडपितृयज्ञस्यदर्शांनंग-

त्वात् ॥ एवंवैश्वदेवपर्वणिकृतेयजमानस्यमरणशंकायांवरुणप्रघाससाकमेधसुनासीरीयाणामेवमेवसमापनंकुर्यात् ॥ पूर्वपक्षेरात्रौमरणशंकायां प्रातराहुतिमेव ॥ ॥ **तथाचानुपदसूत्रं** तत्रचेदपरपक्षेप्रयाणंशंकेतयावत्योऽपरपक्षस्यातिशिष्टारात्रयःस्युस्तासांसायंप्रातराहुतीःप्रतिपत्तिरेवति ॥ **तथाचकात्यायनस्मृतौ**—पौर्णमासेकृतेयागेमुमूर्षुर्यदियाज्ञिकः ॥ दर्शयागस्तदैवस्यादपकृष्याहुतीःपृथक् ॥ सायंप्रातश्चयाःप्रोक्तादर्शाभ्यंतरएवचेति ॥ ॥ **तथाचमंडनः**—पूर्वपक्षेपुरात्रौचेन्मृतिशंकाग्निहोत्रिणः ॥ सायंहुत्वातदैवाथजुहुयात्प्रातराहुतिं ॥ यदित्वपरपक्षेस्यान्मृतिशंकाग्निहोत्रिणः ॥ हुतावशिष्टाःपक्षेस्मिन्जुहुयात्सकलाहुतीः ॥ दर्शेष्टिंचतदाकुर्यादिष्टियैदिनसंभवेत् ॥ देवतानांप्रधानानामेकैकस्यपृथक्पृथक् ॥ पुरोनुवाक्यायाज्याभ्यांचतुरात्ताघृताहुतीः ॥ जुहुयादेवमन्यत्रसर्वत्रापदिहृयते ॥ अथेष्टचयनमध्येस्यात्कर्तुर्मरणसंशयः ॥ अवशिष्टेपिदेवेभ्यस्तत्संख्यानिघृतानिच ॥ चतुर्गृहीतान्येकत्रगृहीत्वाचमसेसह ॥ पुरोनुवाक्यायाज्याभिःपूर्ववज्जुहुयात्पृथक् ॥ **चातुर्मास्यसमापनेपिविशेषमाहसएव**—चातुर्मास्यांतरालेचेत्स्वामिनोमृतिशंकनं ॥ तत्रांत्यपर्वपर्यन्तमग्निहोत्राण्यशेषतः ॥ तदैवकुरुतेदर्शान्पौर्णमासान्बहून्यपि ॥ चातुर्मास्यावशिष्टानिपर्वाण्येवंसमापयेत् ॥ पश्वलाभेपुरोडाशंनिर्वपेत्पशुदैवतं ॥ आमिक्षामथवाकुर्यात्पूर्णाहुतिमथापिवा ॥ आहिताग्निःकदाचित्तुकृष्णपक्षेमृतोयदि ॥ तदाशेषाहुतीःसर्वाजुहोतीत्याश्वलायनः ॥ अन्येतदैवदर्शेष्टिंकुर्युःकृष्णेमृतस्यतु ॥ शुक्लपक्षेनिशिप्रेतस्येच्छंतिप्रातराहुतिमिति ॥ ॥ **तथा**—यआहिताग्नेःकर्मस्यात्सऔपासनिकस्यतु ॥ अशक्त्यापत्नीयजमानकर्तृककर्मलोपेपिनदोषः ॥ अशक्त्यायजमानस्यचेत्पत्नीकर्मलुप्यते ॥ नतावताक्रतुभ्रेषःस्यादाथर्वणसूत्रतइति ॥

**अथपदार्थक्रमोलिख्यते** ॥ तत्रशुक्लपक्षेसायंहोमानंतरंरात्रौयजमानस्यमरणशंकायांतदैवाग्नीविहृत्यप्रातर्होमःकार्यः ॥ अत्रहोमद्रव्याहरणानन्तरंतस्योन्नयनात्प्राग्यजमानमरणेगार्हपत्येहोमद्रव्यंदहेत् ॥ उन्नयनादूर्ध्वंप्राग्होमादाहवनीयेदहेत् ॥ एवंकृतेयदिप्रातःकालपर्यंतं

जीवतितदास्वकालेपुनर्होमोनभवत्येव ॥ ॥ **कृष्णपक्षेरात्रौमृतिशंकाचेत्** प्रातराहुतीःपृथग्घुत्वातद्दिनादारभ्यामावास्येष्टिपर्यन्तानां सायंप्रातर्होमानांतंत्रेणानुष्ठानंकुर्यात् ॥ तत्रपिण्डपितृयज्ञवर्जितामावास्येष्टिंकुर्यात् ॥ अत्रहोमेइष्टिपश्चादौचानुष्ठीयमानेशक्त्यापत्नीयजमान-कर्तृककर्मलोपेपिनदोषः ॥ सकलेष्ट्यसंभवेआज्यंसंस्कृत्यचतुर्गृहीतेनपुरोनुवाक्यायाज्याभ्यांस्वस्वहविषा ॥ तदसंभवेचकेवलेनाज्येनचतुर्गृहीतेनप्रधानदेवतायागानुष्ठानं ॥ तस्याप्यसंभवेप्रतिप्रधानयागंपूर्णाहुतिंजुहुमात् ॥ ॐ अग्नयेस्वाहा इदमग्नयेनमम ॥ ॐ अग्नीषोमाभ्याऽस्वाहा इदमग्नीषोमाभ्यांनमम ॥ इंद्रायस्वाहेति । सान्नाय्ययाजिनस्तुअग्नयेविष्णवेइंद्राग्निभ्यामिति ॥ ततआवसथ्याग्नौसकलंपक्षादि-कर्मकार्यं ॥ सकलासंभवेप्रधानदेवतानामाज्याहुतिः ॥ एवंकृतेयश्चमावास्यापर्यन्तंजीवतितदानसायंप्रातर्होमः ॥ अमावास्यायामपराह्णे-केवलंदक्षिणाग्निमुद्धृत्यपिण्डपितृयज्ञःकार्यः । नाग्न्याधानं नव्रताशनं नामावास्येष्टिः कृतत्वात् ॥ ॥ **सकलेष्टौक्रियमाणायां** हविर्ग्रहणानन्तरंप्रागासादनान्मरणेगार्हपत्येहविषांदाहः ॥ आसादनादूर्ध्वंमरणे आहवनीयेहविर्दाहः ॥ **तत्रमन्त्रः**—याभ्योगृहीतानि ताभ्यःस्वाहेत्येवैतान्याहवनीयेसर्वाहुतिंजुहुयादित्याश्वलायनब्राह्मणे ॥ केचित्कृष्णपक्षेम्रियमाणानाममावास्येष्टिमेवकुर्वंतिनतत्पर्यन्तंपक्ष-होमं ॥ एवमेवारब्धानांचातुर्मास्यादीनांसमापनं ॥ तत्रवैश्वदेवपर्वणिकृतेअंत्यपर्वपर्यन्तंसमासहोमविधानेनयथाकालंपक्षहोमंकृत्वापक्षहो-मांतेष्टिंचकृत्वा पुनःपक्षहोमंपक्षांतेष्टिं ॥ पुनरप्येवंवरुणप्रघासपर्यन्तंकृत्वा वरुणप्रघासाःकार्याः ॥ ततोमासचतुष्टयसंबंधिपक्षहोमंपक्षांते-ष्टिंकृत्वासाकमेधाख्यपर्वकृत्वातदानीमेवशुनासीरीयंकुर्यात् ॥ सयत्रैवसाकमेधैर्यजते तच्छुनासिरीयेणयजेतेतिश्रुतेः ॥ अत्रापिपक्षहोमे-ष्ट्यादेरसंभवेवरुणप्रघासाचेकतंत्रेणकुर्यात् ॥ तादृशस्यापिअसंभवेआज्यंसंस्कृत्यपरिस्तरणसमिदाधानेकृत्वा चतुर्गृहीतैःपुरोनुवाक्यायाज्या-भ्यांसर्वान्प्रधानयागान्कुर्यात् ॥ तदसंभवेप्रतिदैवतममुष्मैस्वाहेतिपूर्णाहुतिंजुहुयात् ॥ अंतरामरणेदर्शवद्धविषांप्रतिपत्तिः ॥ ॥ **एवमेव-**

पशुसोमयागादावारब्धे अंतरामरणशंकायांयथासंभवमारब्धकर्मसमाप्तिःकार्या ॥ पश्चलाभेतद्दैवत्यंपुरोडाशमामिक्षापूर्णाहुतिंजुहुयात् ॥ असमासेकर्मणिमरणेजातेतदन्तमेवकर्मभवतिसर्वत्र ॥ इत्याहिताग्निकरणीयविधिः ॥

मृतिकालीनोविधिः ॥ ॥ ततोदुर्बलावस्थंसंभावितसंनिकृष्टमरणंयजमानंज्ञात्वामृदागोमयेनगोमूत्रेणतीर्थोदकेन शुद्धोदकेनचसंस्नाप्यशुद्धेवाससीपरिधाप्यगोमयेनोपलिप्तायांवेदौदक्षिणाग्रान्कुशानास्तीर्यबहुतिलान्विकीर्यतत्रप्राक्शिर- समुदक्शिरसंवादक्षिणशिरसंवाभूमौपुत्रोत्संगेनिवेशयेत् ॥ मुखेस्वर्णंप्रक्षिपेत्कांस्यंवामणिंवाविद्रुमंवाप्रक्षिपेत् ॥ शालिग्रा मशिलातुलसीचसंनिधौनिधेया ॥ गोपीचंदनेनलेपनंसर्वत्रतिलकांश्चकुर्यात् ॥ कंठेशिरसिसर्वेपुच्छिद्रेपूपरितनेपुनिर्मा- ल्यरूपांतुलसींक्षिपेत् ॥ दीपप्रज्वालनं । विष्णुपूजनं । ॐनमोभगवतेवासुदेवायेतिसततंजपःकार्यः । वैतरण्यादि- दानं ॥ समभ्यर्च्यहृषीकेशंपुष्पधूपादिभिस्ततः ॥ प्रणिपातैःस्तवैःपुष्पैर्ध्यानयोगेनपूजयेत् ॥ दत्वादानंचविप्रेभ्योदीना- नाथेभ्यएवच ॥ बंधौकलत्रेमित्रेचक्षेत्रेधान्यधनादिषु ॥ मित्रवर्गेचसर्वत्रममत्वंविनिवर्तयेत् ॥ अमृतत्वप्राप्तिकामन- याउपनिषद्भागानन्यानिचपुण्यसूक्तानिगीतास्तोत्राणिचसहस्रनामादीनिपुत्रशिष्यादयउच्चैःपठेयुः ॥ ततोम्रियमाणस्य मधुपर्कदानं ॥ तत्रमंत्रः ॥ समागच्छममैवदेहेमधुपर्कंसंसारमोक्षणं ॥ शरीरशवआगंतुंनिहन्मिशरीरशोधनंगृह्ण- लोकनाथप्रेतमिमंमधुपर्कंइति ॥ ततोगतप्राणंज्ञात्वापुत्रादिःस्नात्वामृतशरीरप्रक्षालनं ॥ अहतवस्त्रपरिधानंउत्तरीयंच ॥ चंदनेनसर्वांगप्रोक्षणं ॥ पुष्पैरलंकरणं ॥ इतिमरणकालीनोविधिः ॥

अथदुर्मरणनिमित्तप्रायश्चित्तानि ॥ शृंगिदंष्ट्रिनखिसर्पविपविद्युज्जलाग्निचांडालचोरमारितस्यमरणेचांद्रायणंतप्तकृच्छ्रं वा ॥ धेन्वादिदानरूपप्रत्याम्नायद्वारावापंचदशप्राजापत्यानिवा ॥ तदशक्तौगवादिप्रत्याम्नायंकृत्वादहेत् ॥ एवंऊर्ध्वोच्छिष्टाधरोच्छिष्टोभयोच्छिष्टास्नातास्पृश्यास्पृष्टखट्वास्तरणादिस्थितस्यमरणदोपनिबर्हणार्थंशक्त्यनुसारेणविप्रार्चनपूर्वकं द्वादशषट्त्रीन्वाप्राजापत्यान्विप्रानुज्ञापूर्वकंतदानीमेवकृत्वाशुद्धिंसंपाद्यदाहादिकंकुर्यात् ॥ कर्तापियदिपापीतदा पापानुसारेणस्वयंप्रायश्चित्तंस्मृत्युक्तंकृत्वामृतस्यौर्ध्वदेहिकंकुर्यात् ॥ यदिलोभादिनाप्रेतस्यात्मनश्चशुद्धिमकृत्वादाहादिकंकरोतितदातन्नोपतिष्ठते ॥ अंतरिक्षेविनश्यतिउभयोर्नरकप्राप्तिश्च ॥ ॥ अथ प्रयोगः ॥ ततःकर्तादेशकालौस्मृत्वा असुकगोत्रस्यअमुकप्रेतस्यऊर्ध्वोच्छिष्टाधरोच्छिष्टोभयोच्छिष्टाऽस्नातास्पृश्यास्पृष्टमरणखट्वामरणअंतरिक्षमरणादिजनितप्रत्यवायपरिहारार्थंविष्णुपूजनपूर्वकंपंचदशद्वादशषट्त्रीन्वाकृच्छ्रान्यथाशक्तिप्रायश्चित्तंअमुकप्रत्याम्नायेनसद्यःसूतकांतेवाकरिष्यइतिसंकल्प्य । शक्तौतदैवद्रव्यादिना अशक्तौसूतकांतेवाकुर्यात् ॥ कर्ताप्यात्मशुद्धौदेशकालस्मरणंकृत्वा आत्मशुद्धिद्वारापित्रादेरौर्ध्वदेहिकाधिकारसिद्ध्यर्थंशक्त्याएतावदेवकृच्छ्रत्रयंवाप्रायश्चित्तंकरिष्यइतिसंकल्प्यशक्तश्चेत्तदानीमेवाऽशक्तश्चेत्सूतकांतेवाकुर्यात् ॥ ततःपुत्रादिः स्नातःकृतापसव्यः सकृत्सकृत्परिसमूहनादिसंस्कारपूर्वकंदाहार्थंसंतापजाग्न्युत्पादनार्थमित्याहवनीयदक्षिणाग्नीन्विहरति ॥ संनिहितेनभ्रात्रादिनाअसंभवेअन्येनवाकेनचित् ॥ तिस्रएवस्थालीएष्टवैइतिप्रेषितःसन्कर्तागार्हपत्याहवनीयदक्षिणाग्निपुतिस्रोमृन्मयीःस्थालीःशुष्कगोमयचूर्णतृणचूर्णयुक्ताअधिश्र-

यतिदक्षिणामुखः ॥ अत्रसर्वकर्मापसव्येनदक्षिणामुखेनचकर्तव्यं ॥ सभ्यावसथ्ययोर्नोखाधिश्रयणं ॥ तौहिप्रत्यक्षावेवस्थाल्योर्मध्येनिधायनेतव्यौ ॥ सर्वासुस्थालीपुअसंसर्गार्थंनामलेखनादिचिह्नंकार्यं ॥ ततःकर्ता अन्येचपुत्राःकक्षोपस्थवर्जंकेशश्मश्रुलोमनखानिवापयेयुः ॥ भर्तरिमृतेपत्न्याआद्येदशमेह्निवायथाचारंवपनंकार्यं ॥ ततःसर्वेपुत्राःपुनःस्नात्वा अहतवस्त्रपरिधानंकुर्युः ॥ कर्तालौकिकाग्नौचरुंश्रपयित्वापट्पिंडान्दद्यात् ॥ मरणस्थानेएकोद्दिष्टविधिनाश्राद्धं ॥ तत्रसर्वममंत्रकंप्रयोगरूपं ॥ तत्रब्राह्मणाभावेएकंदर्भबटुमुपवेश्यसर्वंकुर्यात् ॥ पादप्रक्षालनं ॥ उपाहारप्रोक्षणं ॥ आचमनं ॥ आवाहनार्घ्यार्चनपात्रालंभनावगाहनानामभावः ॥ आमान्नसंकल्पः ॥ पिंडदानं ॥ विकिरावनेजनगंधाद्यर्चनानामभावः ॥ अक्षय्योदकदानाशीःस्वधावाचनापातान्निपेकाभावः ॥ दक्षिणादानंसव्येन ॥ माषान्नजलसंयुक्तकुंभदानं ॥ नस्वस्तिवाचनं ॥ कुशबटुविसर्गः ॥ एवंसर्वत्र ॥ ॥ तत्रमृतस्थानेशवनाम्नाश्राद्धं[1] ॥ कर्तादेशकालौ स्मृत्वा अपसव्यं अमुकगोत्रस्य अमुकप्रेतस्यप्रेतत्वविमुक्त्याउत्तमलोकावासयेदाहादियोग्यतावाप्तये एकोद्दिष्टविधिनामृतस्थानेशवनाम्नाश्राद्धंकरिष्ये ॥ इमंलोकंपरित्यज्यगतोसिपरमांगतिं ॥ मनसावायुरूपेणकुशेत्वांयोजयाम्यहं ॥ कुशोसित्वंपवित्रोसिब्रह्मणानिर्मितःपुरा ॥ त्वयिस्नातेससुस्नातोयस्यैतद्ग्रंथिबंधनं ॥ इतिमंत्रेणविप्रार्थेकुशबटुंकुर्यात् ॥ अमुकगोत्रस्य अमुकप्रेतस्यक्षणउपतिष्ठतु ॥ अमु० आसनमुपतिष्ठतु ॥ अमुक० पाद्यमुपतिष्ठतु ॥ अमुक० अर्घ्यमुप-

१ तंच—मृतस्थानेशवोनामद्वारेपाथ सउच्यते ॥ चत्वरेखेचरोनामविश्रामेभूतसंज्ञकः ॥ चितायाराधकोज्ञेय.शवोनामान्यनुक्रमात् ॥ इति ॥

तिष्ठतु ॥ अमुक० गंधाउपतिष्ठंतु । अमुक० धूपउपतिष्ठतु ॥ अमुक० दीपउपतिष्ठतु ॥ अमुक० नैवेद्यउपतिष्ठतु ॥ अमुक० तांबूलमुपतिष्ठतु ॥ अमुक० दक्षिणोपतिष्ठतां उपतिष्ठंतु ॥ अमुक० आमान्नमुपतिष्ठतु ॥ सर्वोपचाराउपतिष्ठंतु ॥ ॥ अमुकगोत्रस्य अमुकप्रेतस्यापिंडस्याधोदर्भासनमुपतिष्ठतु ॥ अमुक० अवनेजनमुपतिष्ठतु ॥ अमुकगोत्रस्य अमुकप्रेतस्यउत्थानश्राद्धेशवनाम्नाण्पपिंडस्तवोपतिष्ठतु ॥ अमुक० प्रत्यवनेजनमुपतिष्ठतु ॥ अमुकं० सूत्रमुप० ॥ अमुक० गंधादिसर्वोपचारा उपतिष्ठंतु ॥ अभिरम्यतां ॥ अभिरतास्मः ॥ इतिपिंडविसर्जनं ॥ अनादिनिधनोदेवः-शंखचक्रगदाधरः ॥ अक्षय्यःपुंडरीकाक्षप्रेतमोक्षप्रदोभव ॥ अतसीपुष्पसंकाशंपीतनिर्मलवाससं ॥ येनमस्यंतिगोविंदंनतेपांविद्यतेभयं ॥ अक्रंन्कर्मकर्मकृतःसहवाचामयोभुवः ॥ देवेभ्युःकर्मकृत्वाअस्तंप्रेतसचाभुवः ॥ भद्रंकर्णेभिरितिकुशवटुविसर्जनं ॥ अनेनापिंडदानेनप्रेतस्यप्रेतत्वनिवृत्तिरस्तु ॥ दाहादियोग्यताप्राप्तिरस्तु ॥ अप्रेतनद्वारदेशीयश्राद्धेयोग्यताप्राप्तिरस्तु ॥ ॥ अथद्वारदेशीयश्राद्धेदेशकालौस्मृत्वाअपसव्यं ॥ अमुकगोत्रस्यअमुकप्रेतस्यदाहादियोग्यताप्राप्त्यर्थंएकोद्दिष्टविधिनापांथनाम्नाद्वारदेशीयश्राद्धंकरिष्ये ॥ इमंलोकंपरित्यज्येतिकुशवटुंकुर्यात् ॥ अमुकगोत्रस्यअमुकप्रेतस्यद्वारदेशीयश्राद्धेक्षणउपतिष्ठतु ॥ अमुक० आसनमुप० ॥ अमुक० पाद्यमुप० ॥ अमुक० अर्घ्यमुप० ॥ अमुक० गंधाः उपतिष्ठंतु ॥ अमुक० अक्षताउप० ॥ अमुक० धूपदीपनैवेद्यादिआमान्नमुपतिष्ठतु ॥ सर्वोपचारा उपतिष्ठंतु ॥ अमुकगोत्रस्यअमुकप्रेतस्यद्वारदेशीयश्राद्धेपिंडस्याधःदर्भासनमुपतिष्ठतु ॥ अमुक० अवनेजनमुप० ॥

अमुक० प्रेतस्यदाहादियोग्यताप्राप्त्यर्थं द्वारदेशीयश्राद्धेपांथनाम्नः एषपिंडस्तवोपतिष्ठतु ॥ अमुक० प्रत्यवनेजनमुपतिष्ठतु ॥ अमुक० गंधा उपतिष्ठंतु ॥ अमुक० अक्षताउप० ॥ अमुक० धूपदीपनैवेद्यादिसर्वोपचारा उपतिष्ठंतु ॥ अनादिनिधनोदेवः ॥ अतसीपुष्प० ॥ अक्रन्कर्म० ॥ पिंडविसर्जनं ॥ भद्रंकर्णेभिरित्यादिकुशवटुविसर्जनं ॥ अनेनापिंडदाने० रस्तु ॥ दाहा० रस्तु ॥ अग्रेतनचत्वरदेशीयश्राद्धयोग्यता० ॥ ॥ देशकालौस्मृत्वा ॥ अपसव्यं ॥ गोत्रस्यअमुकप्रेतस्यप्रेतत्वविमुक्त्याउत्तमलोकावासयेदाहादियोग्यताप्राप्त्यर्थं एकोद्दिष्टविधिना चत्वरेखेचरनाम्नाश्राद्धंकरिष्ये ॥ इमंलोकंपरित्यज्येत्यादिपूर्ववत् ॥ गोत्रस्यअमुकप्रेतस्यक्षणउपतिष्ठतु ॥ अमुक० आसनमुप० ॥ अमुक० पाद्यमुप० ॥ अमुक० अर्घ्यमुप० ॥ अमुक० गंधाउप० ॥ अमुक० अक्षताधूपदीपआमान्नमुप० ॥ अमुक० सर्वोपचारा उपतिष्ठंतु ॥ अमुकगोत्रस्य० पिंडस्याधःदर्भासनमुप० ॥ अमुक० अवनेजनमुप० अमुक० चत्वरेखेचरनाम्नःएषपिंडस्तवोपतिष्ठतु ॥ अमुक० प्रत्यवनेजनमुप० ॥ गंधादिसर्वोपचारा उपतिष्ठंतु ॥ विसर्जनं ॥ अनादिनिधनो० अक्रन्कर्म० ॥ अनेनापिंडदानेनप्रेतस्यप्रेतत्वनिवृत्तिरस्तु उत्तमलोकावासिरस्तु ॥ अग्रेविश्रामश्राद्धेयोग्यतावाप्तिरस्तु ॥ ॥ ततःपुत्रादयःसर्वेऋत्विजश्चस्थालीस्थपंचाग्निसहितंहारिद्रवस्त्राच्छादितंशवंगृहीत्वासर्वाणियज्ञपात्राणिपृषदाज्यंदर्भांस्तिलान्घृतंसप्तहिरण्यशकलानिचंदनादींधनानिचगृहीत्वासर्वेसपिंडाज्येष्ठपुरःसराःश्मशानमनुगच्छंति ॥ यमसूक्तंजपंति ॥ यमगाथांगायंतीत्येके ॥ यमसूक्तं अपेताध्यायः ॥ ततग्रामश्मशानयोरर्धमार्गेभूतनाम्ना

विश्रामश्राद्धं ॥ देशकालौस्मृत्वा ॥ अपसव्यं ॥ गोत्रस्यअमुकप्रेतस्यप्रेतत्वमुक्तयेउत्तमलोकावाप्तयेअर्धमार्गेभूतनाम्ना-
विश्रामश्राद्धंकरिष्ये ॥ इमंलोकंपरित्यज्यं० ॥ अमुकगोत्रस्यअमुकप्रेतस्यविश्रामश्राद्धेक्षणउप० ॥ अमुक० आसनमुप० ॥
अमुक० पाद्यमुप० ॥ अमुक० अर्घ्यमुप० ॥ अमुक० गंधादिसर्वोपचारा उपतिष्ठंतु ॥ अमुक० पिंडस्याधःदर्भासनमुप० ॥
अमुक० प्रेतअवनेजनमुप० ॥ अमुक० विश्रामश्राद्धेभूतनाम्नःएषतेपिंडउपतिष्ठतु ॥ गोत्रप्रेतप्रत्यवनेजनमुप० ॥ गंधा-
दिसर्वोपचारा उप० ॥ विसर्जनं ॥ अनादिनिधनोदेव० ॥ अतसीपुष्प० ॥ अक्रन्कर्म० ॥ अनेनापिंडदानेनप्रेतस्यप्रे-
तत्वनिवृत्तिरस्तु उत्तमलोकावाप्तिरस्तु ॥ अग्रेदहनश्राद्धेयोग्यताप्राप्तिरस्तु ॥ ततःश्मशानसंनिधौभूमौशनैःशवस्यदक्षिण-
शिरसःस्थापनं ॥ ॥ साग्निकश्चेत्सर्वतीर्थानिमनसाध्यात्वाशवस्यस्नापनं ॥ ततःपुत्रादीनांस्नानं ॥ समेबहुलेतृणप्र-
देशेक्षीरिण्यादिकान्सूत्रोक्तानुन्मूल्यगार्हपत्यादिखरसाधनं ॥ सर्वंप्राचीनावीतीदक्षिणामुखःकुर्यात् ॥ गार्हपत्याहवनी-
यदक्षिणाग्निस्थानेपुसकृत्सकृद्धूसंस्कारान्कृत्वागार्हपत्याहवनीयदक्षिणाग्नीनांस्थापनं ॥ सभ्यावसथ्ययोरुत्तरतःसप्तसुप्रक्र-
मेषुस्थापनं । ईशान्यांवापंचसुप्रक्रमेषु ॥ ततःगार्हपत्याहवनीययोरंतरालेप्रागायतांचितिंकाष्ठैश्चिनुयात् ॥ ततस्तत्र
साधकनाम्नाश्राद्धं ॥ देशकालौस्मृत्वा ॥ अपसव्यं ॥ गोत्रस्यअमुकप्रेतस्यप्रेतत्वविमुक्तयेउत्तमलोकावाप्तयेदाहादियो-
ग्यताप्राप्त्यर्थंचितास्थानेसाधकनाम्नःश्राद्धंकरिष्ये ॥ इमंलोकं० ॥ कुशोसि० ॥ गोत्रअमुकप्रेतक्षणउप० ॥ अमुक०
आसनमुप० ॥ गोत्रप्रेतअर्घ्यमुप० ॥ गोत्रप्रेतगंधादिसर्वोपचारा उपतिष्ठंतु ॥ पिंडस्याधःदर्भासनमुप० ॥ गो-

त्रप्रेतअवनेजनमुप० ॥ गोत्रप्रेतगंधादिसर्वोपचाराउपतिष्ठंतु ॥ विसर्जनं ॥ अनादिनिधनो० ॥ अतसीपुष्प० ॥
अक्रन्कर्म० ॥ अनेनपिंडदानेनप्रेतस्यप्रेतत्वनिवृत्तिरस्तु उत्तम० ॥ अग्रेसंचरश्राद्धेयोग्यतावाप्तिरस्तु ॥ ततःप्रेतस्य
केशश्मश्रुलोम्नांवाछेदनं ॥ पुनःशवंस्नापयित्वापुष्पादिभिरलंकृत्यचितौप्राग्ग्रीवमुत्तरलोमकृष्णाजिनमास्तीर्यतस्मिन्प्राक्-
शिरसमुत्तानंप्रेतंनिदध्यात् ॥ प्रेतसंबंधिवस्त्रंद्विधाकृत्वाएकेनखंडेनप्रेतशरीरमाच्छादयेत् ॥ खंडांतरंश्मशानवास्यर्थंभू-
मौनिरस्येत् ॥ ॥ ततःप्रेतकरेप्रेतनाम्नेवपिंडदानं ॥ अद्येत्यादिदेशकालौस्मृत्वा ॥ अपसव्यं ॥ गोत्रस्यअमुकप्रेतस्य
प्रेतत्वविमुक्तयेउत्तमलोकावासयेप्रेतकरेप्रेतनाम्नाश्राद्धंकरिष्ये ॥ इमंलोकं० ॥ कुशोसि० ॥ अमुकगोत्रअमुकप्रेतक्षण
उप० ॥ अमुक० आसनमुप० ॥ गोत्रप्रेतअर्घ्यमुप० ॥ गोत्रप्रेतगंधाउप० ॥ गोत्रप्रेतआमान्नमुप० ॥ सर्वोपचारा उप० ॥
पिंडस्याधःदर्भासनमुप० ॥ गोत्रप्रेतअवनेजनमुप० ॥ गोत्रस्यप्रेतस्यदाहादियोग्यताप्राप्त्यर्थंप्रेतकरेप्रेतनाम्नःएषपिंड-
स्तवोपतिष्ठता० ॥ गोत्रप्रेतअवनेजनमुप० ॥ गंधादिसर्वोपचाराउप० ॥ विसर्जनं ॥ अनादिनिधनो० ॥ अतसी-
पुष्प० ॥ अक्रन्कर्म० ॥ अनेनपिंडदानेनप्रेतस्यप्रेतत्वनिवृत्तिरस्तु ॥ ततःशरीरेआज्येनाभ्यंजनं ॥ प्रेतस्यमुखेनासिकयो-
रक्ष्णोःकर्णयोश्चसप्तहिरण्यशकलनिधानं ॥ अथवाश्रुतिक्रमेणचितिनयनात्प्राग्वाहिरण्यशकलप्रक्षेपः ॥ ततःसर्वाणि-
यज्ञपात्राणिउत्तानानिवक्ष्यमाणविधिनाप्रेतशरीरेन्यसेत् ॥ ॥ अथपात्रप्रतिपत्तिः ॥ आहिताग्नेरपिपूर्वंस्मार्तपात्राणां-
प्रतिपत्तिंकृत्वाश्रौतपात्रप्रतिपत्तिःकर्तव्याइतिधर्मप्रदीपेशाठ्यायनिनाचोक्तमस्तितदेवयुक्ततरं ॥ जुहूंघृतेनपूरयित्वाप्रेतस्य-

दक्षिणहस्तेप्रागग्रामासादयति ॥ सव्येपाणौरिक्तांउपभृतं ॥ हृदयेरिक्तांध्रुवां ॥ दक्षिणनासिकायांवैकंकतस्रुवं ॥ कर्णयोःप्राशित्रहरणे ॥ शिरसिप्रणीतांरिक्तां ॥ कपालानिशिरसिजलेवा ॥ पार्श्वयोःशूर्पंएकंदर्शपौर्णमासिकं-द्वितीयंवारुणप्रघासिकं ॥ लौकिकमितिकेचित् ॥ एकंचेत्द्विधाकृत्वापार्श्वयोरेकैकखंडमासादयेत् ॥ उदरेपृषदा-ज्यवतीमिडांप्रागग्रां ॥ शिश्नसमीपेशम्यांप्रागग्रां ॥ अंडयोःसमीपेअरणीउदगग्रे ॥ तत्समीपेअधोमुखमुलूख-लंमुसलंच ॥ आज्यस्थालीपिष्टपात्रीउपवेषपडवत्ताश्रिश्रृतावदानपुरोडाशपात्रीहोतृपदनपूर्णपात्रकूर्चब्रह्मासनप्रमुखानि-सर्वाणियज्ञपात्राणिऊर्वोर्मध्येसादयेत् ॥ स्मार्तपात्राणामप्यरणीसहितानांऊर्वोर्मध्येसादनं ॥ वरुणप्रघासिकानां-चतत्रैवसादनं ॥ स्थालीपाकादीनांपात्राणांमृण्मयानामश्ममयानांचदृषदीनामप्सुप्रक्षेपः ॥ लोहमयानांवोवलीपट्टि-काकीलकादिनाब्राह्मणायदानमप्सुप्रक्षेपोवा ॥ ततोमृतस्यपुत्रोवाभ्रातावान्योब्राह्मणोवाकृतापसव्यः ॥ गार्हपत्ये दक्षि-णामुखः आज्यंसंस्कृत्यस्रुचंस्रुवंचसंमृज्यउद्वास्यउत्पूयअवेक्ष्य ॥ अग्निहोत्रहवण्यांसकृद्गृहीतंगृहीत्वाउपरिसमिधंधार-यन् वामहस्तेबहुलान्कुशान्गृहीत्वाआहवनीयंपरिस्तीर्य अप्रादक्षिण्येन ॥ आहवनीयेसमिधमाधायउपविश्यकृतसव्यजा-नुपातःसन् ॥ अस्मात्त्वमितिमंत्रेणआहवनीयेएकाहुतिंजुहोति ॥ अस्मात्त्वमधिजातोसित्वदयंजायतांपुनः ॥ असौ-स्वर्गाय लोकायस्वाहा ॥ इदमग्नये० ॥ असौस्थानेप्रेतनामनिर्देशः ॥ प्रथमांतं ॥ अमुकनामाप्रेतः ॥ स्त्रियामप्यस्य मंत्रस्यानूहः ॥ ॥ आज्यशेषेणप्रेतमुखेआहुतिर्देया ॥ ततोमुखेअग्निहोत्रहवणींरिक्तांप्रागग्रामासादयति ॥ ततः-

स्वादिरंस्रुवंसव्यनासिकायांप्रागग्रमुत्तानमासादयति ॥ स्फ्यंदक्षिणहस्ते ॥ पात्रत्वाविशेषादाज्यस्थाल्याऊर्वोरंतरे प्रक्षेपः ॥ मृन्मयीचेदप्सुप्रक्षेपः ॥ ततश्चितोपरिदक्षिणाग्रबर्हिरासादनं ॥ ततआहवनीयादीनालभ्यमंत्रपाठःकार्यः ॥ कृत्वासुदुष्करंकर्मजानताचाप्यजानता ॥ मृत्युकालवशंप्राप्यनरंपंचत्वमागतं ॥ धर्माधर्मसमायुक्तंलोभमोहसमावृतं ॥ दहेयंसर्वगात्राणिदिव्यांल्लोकान्सगच्छतु ॥ ततश्चंदनपुष्पाक्षतैरग्नीनांपूजनं ॥ तत्रमंत्रः ॥ त्वंभूतकृज्जगद्योनेत्वंलोकपरिपालक ॥ उक्तःसंस्कारकस्तस्मादेतंस्वर्गंमृतंनय ॥ ततोग्निभिश्चितेरादीपनं ॥ सशेषंदाहंकृत्वा ॥ दाहेजातेकिंचित्परिशेषणीयं ॥ निःशेषस्तुनदग्धव्यइतिवचनात् ॥ ततः पुत्रादयः सर्वेसपिंडाः सप्तसप्तसमिधोगृहीत्वा चितायाः सप्तप्रदक्षिणाः कुर्युः ॥ प्रतिप्रदक्षिणं एकैकसमित्प्रक्षेपंचिताग्नौकुर्युः ॥ कुठारेणोल्मुकस्योपरिसंप्रहारदानं ॥ ततः क्रव्यादायनमस्तुभ्यमिति वक्तव्यं ॥ ततः स्कंधेउदकपूर्णंकुंभंकृत्वातेनप्रेतपादप्रदेशादारभ्यचितिपरितोऽप्रदक्षिणांधारांदधात् ॥ ततोगाढंरोदनं कुर्यात् ॥ ततउदकदानं ॥ श्मशानपृष्ठभागेस्थित्वा ॥ गोत्रस्यअमुकप्रेतस्यदाहजनिततापोपशमनार्थंउदकदानंकरिष्ये ॥ ततः कृतच्छिद्रमुदकुंभंस्कंधेकृत्वा ॐ प्रजापतेत्वादेवतायामुपोदकेलोकेनिदधाम्यसौइतिमंत्रेणप्रेतपाददेशात्परितश्चितेरप्रदक्षिणं धारांदत्वाकुंभस्याश्मनिस्फोटनं ॥ ततोश्मानंगृहीत्वापृष्ठतोऽनवलोकयंतः स्नानार्थंनद्यादौगच्छंति ॥ तत्रोदकसमीपेगत्वापरिहितंवस्त्रंप्रक्षाल्यतदेवपरिधायजलसमीपंगत्वोत्तरदानाभिज्ञंकंचित्पुरुषंशालकंवा ॥ उदकंकरिष्यामहइतिमंत्रेणोदकंयाचते ॥ यदिशतवर्षादर्वाक्प्रेतोभवतितदा माचैवंकुरुध्वमितिप्रतिवचनं ॥ ऊर्ध्वंतुकुरुध्वमेतावदेव

प्रतिवचनं ॥ इत्युक्तेपुत्रादयःसपिंडाःसमानोदकाश्चयथावृद्धपूर्वमुदकंप्रविश्यैकवस्त्राआर्द्रशिखाः प्राचीनावीतिनः सव्यपाणेरनामिकयानद्यादिस्थंजलंतूष्णीमपनोद्यदक्षिणमुखाअनमंतोऽसंधावमानाश्चसकृदेवनिमज्जंति ॥ ॐ अपनःशोशुचदघमितिमंत्रेण ॥ स्नात्वासर्वमलापहंस्नानंकुर्वंति ॥ अंगोद्वर्तनस्यविहितप्रतिपिद्धत्वाद्विकल्पः ॥ ततस्तीरेआगत्यआचम्यशिखांबध्वादक्षिणाग्रानयुग्मानृजूनकुशानूहस्तयोःकृत्वासतिलमुदकंपाणिभ्यामादायदक्षिणाभिमुखावाग्यताःपितृतीर्थेनभूमौपाषाणेवाएकैकमंजलिंतिस्रस्तिस्रोवा ॥ आर्द्रवाससएवअश्मोपरि अमुकगोत्रस्यअमुकप्रेतस्यदाहजनिततापोपशमनार्थं एषतिलतोयांजलिरुपतिष्ठतु ॥ सकृत्त्रिर्वाअंजलिंत्यक्त्वापुनस्तथैवस्नानंकुर्युः ॥ जलांजलिंतुसगोत्राःस्त्रियोपिदद्युः ॥ ब्रह्मचारीनदद्यात् ॥ पितृमातृगुर्वाचार्यमातामहमातामहीभ्यःसोपिदद्यात् ॥ शववाहकैश्चदेयः ॥ अन्येसुहृदोदद्युर्नवा ॥ दानेपिनाश्मनियमः ॥ पतितव्रात्यादयोनदद्युः ॥ क्षत्रियायोदङ्मुखाः ॥ वैश्यायप्राङ्मुखाः ॥ शूद्रब्राह्मणयोर्दक्षिणाभिमुखादद्युः ॥ ततोजलादुत्तीर्यान्यानिवस्त्राणिपरिधायस्नानवस्त्राणिसकृदेवनिष्पीड्योदग्दशंवितत्यतृणवतिशुचौदेशेसर्वउपविशंति ॥ तत्रोपविष्टानामन्येसुहृदःपुराणेतिहासकथादिभिःसंसारानित्यतांख्यापयंतस्तेषांशोकमपनयेयुः ॥ तिलांजलिदानानंतरमश्रुपातंनकुर्यात् ॥ ततोब्राह्मणैरनुज्ञातास्ततउत्थायपश्चादनवलोकयंतोऽधोमुखाःकनिष्ठानग्रेकृत्वा पंक्तिभूताएवग्रामंप्रत्यायांति ॥ दिवामृतेअस्तमयादूर्ध्वंग्रामप्रवेशोरात्रौमृतेसूर्योदयानंतरं ॥ यदाब्राह्मणैरनुज्ञातास्तदा-तदानीमेवप्रविशंति ॥ ततोगृहद्वारसमीपेआगत्यत्रीणिनिंबपत्राणिदंतैर्विदश्याचम्यशमीपापंशमयत्वितिशमीमालभं-

ते ॥ अश्मेवस्थिरोभूयासमितिअश्मानं ॥ अग्निर्नःशर्मयच्छत्वितिअग्निं ॥ तूष्णींउदकंगोमयंसर्षपांस्तैलंदूर्वाप्रवालान्वृषभंचयथाक्रममालभ्यपादेनपाषाणमाक्रम्यगृहंप्रविशेयुः ॥

अथपुत्रादीनांनियमाः ॥ ब्रह्मचारिणोऽधःपृथक्शयानाअधउपवेशिनःपरस्परमसंस्पृष्टादानाध्ययनवर्जितामलिनाअधोमुखाःसर्वभोगवर्जिताःअंगसंवहनंकेशमार्जनंचाकुर्वंतोनकिंचनकर्मकुर्युःनकारयेयुः ॥ खड्गादिपाणयः शक्तावेकरात्रंत्रिरात्रंवोपवसेयुः ॥ अशक्तौवेदिविकारान्नंव्रीहियवक्षारलवणमाषान्नमपूपपायसवर्जितं पाणिषुमृन्मयेषुवापत्रपुटेषुवा एकवारंक्रीत्वाकुतश्चनताद्दशमेवलब्ध्वावादिनात्ययेदिवैवाल्पमश्नीयुर्नरात्रौ ॥ भोजनकालेभोजनान्नमुष्टिमादायप्रेतोद्देशेनभूमौनिधाय ॥ गोत्रप्रेतएषतेभक्तमुष्टिरुपतिष्ठतामितिभूमौदद्युः ॥ दशरात्रमेवंनियमाः ॥

दाहाग्निनिर्णयः ॥ ॥ वर्षादिनाचिताग्निशमनेविहितारणिपात्रादिकाष्ठेनार्धदग्धेनमंथनं ॥ तदलाभेन्येनकाष्ठेनदग्धशेषेणमंथनंकृत्वाशेषस्यदाहःकार्यः । अथवाशेषस्याप्सुप्रक्षेपः ॥ अथवालौकिकाग्नौभूर्भुवःस्वःस्वाहेतिघृताहुतिंस्रुवेणस्रुचावाहुत्वातेनलौकिकाग्निनाशेषस्यदाहःकार्यः । आपस्तंबः—तयोर्यःपूर्वोम्रियेततस्याग्नित्रेतायांपितृमेधःसंपद्यते । यःपश्चात्तस्यौपासनइति ॥ अत्रपूर्वंमृतस्यश्रौताग्निभिर्दाहउक्तःपश्चान्मृतस्यावसथ्येनच ॥ गृह्यकारिकायांत्वेवं—पत्नीयजमानयोर्मध्येयस्यपूर्वंमरणंतस्यवैदिकाग्निभिर्दाहःपश्चान्मृतस्यलौकिकाग्निनेत्येकःपक्षः ॥ अथवायजमानस्यपूर्वंमरणेगार्हपत्यस्योल्मुकंपृथक्कृत्यतदुल्मुकंलौकिकारण्योःसमारोप्यारणिस्थमाप्रयाणंधारयेतमृतेनिर्मथ्यतेनदाह्यइतिद्वितीयः ॥ अथपत्न्याःपूर्वंमरणेयदिपत्युःपुनर्विवाहाधानकरणेशक्तिस्तारुण्याद्भवति तदामृतापत्नीवैदिकाग्निभिर्दाह्यानान्यथा ॥ यदिविवाहाधानयोःशक्तिर्नभवतितदागार्हपत्यैकदेशेनदाह्यानिर्मथ्येनवा ॥ कनिष्ठातुपत्नीज्येष्ठायांजीवन्त्यांगार्हपत्यैकदेशेनवादाह्यासर्वाग्निभिर्वा ॥ तत्रयासहैवकृताधा-

नाद्वितीयापत्नीसाज्येष्ठायांजीवत्यामपिसर्वाग्निभिर्दाह्या ॥ शवाग्नयोवाएतेयेमृतायांपत्न्यांधार्यंतेइतिकठश्रुतेः ॥ आधानानंतरंपत्न्यापरिणीताः याद्वितीयायागार्हपत्यैकदेशेनेतिविवेकः ॥ द्वितीयांचैवयोभार्यामित्यादिदोषस्तुआधानानंतरंपरिणीताविषयइतिस्मृतिचंद्रिकायां ॥ ज्येष्ठाया-कनिष्ठायावामृतायागार्हपत्यैकदेशेननिर्मथ्येनवादाहपक्षेयावजीवंकुशपत्नींसुवर्णपत्नींवाकृत्वानित्येष्ट्याग्निहोत्राग्रयणानिकुर्यान्नान्यत्किंचिदित्या-पस्तंबः ॥ पुनःपरिणयसंभवेपिविकल्पेनपत्न्याःश्रौताग्निभिर्दाहः ॥ केवलेनावसथ्येनपत्नीदाहः तस्मिन्पक्षेकेवलस्यावसथ्यस्यपुनराधानं ॥ श्रौ-ताग्नयस्तुतएव ॥ [एवमनेकपत्नीकस्यावसथ्याग्निमतोयदाज्येष्ठापत्नीम्रियतेतदाआवसथ्योल्मुकेनतस्यादाहःकार्यः ॥ द्वितीयाभार्यासहाधिकारिणी चेत्तयासहनपुनराधानंकर्तव्यं किंतुप्रथमाग्निधारणमेव ॥ साचेत्पूर्वमनधिकृतातदातयासहपुनराधानं ॥ यदाकनिष्ठापत्नीअधिकृताअनधिकृता वापूर्वंमृतातदातस्याआवसथ्येनतदुल्मुकेनवानदाहः ॥ तत्राधिकृताचेन्मृतातदाश्वत्थकाष्ठैरग्निंनिर्मथ्यमंत्रवद्दाहःकर्तव्यइति**गंगाधरभाष्यप-द्धतौस्मार्तप्रायश्चित्ते** ॥ ] पुनर्विवाहासंभवे **आत्मार्थमग्न्याधानंकार्यं** ॥ **तदुक्तमापस्तंबेन**—दारकर्मणियद्यशक्तआत्मार्थमग्न्या-धेयंदर्शपूर्णमासाग्निहोत्राग्रयणार्थंशेपाणिकर्माणिनभवंतीति ॥ अन्यंकुशमयींपत्नींकृत्वातुगृहमेधिनः ॥ अग्निहोत्रमुपासंतेयावज्जीवमतंद्रिताः ॥ यदातुयुगपदेवजायापत्योर्मरणंतदातयोःसहैवदाहः ॥ **तदुक्तमापस्तंबेन**—सहैवपितृमेधोद्विवचनलिंगान्मंत्रात्संनमतीति ॥ **आश्वला-यनब्राह्मणे**पिअपत्नीकस्याधानमुक्तंअपत्नीकोप्यग्निमाहरेदिति ॥ तदेतद्**आपस्तंबोक्तं** पूर्वाग्निष्वेवाग्निहोत्रादिपरं नत्वपत्नीकस्याधानार्थं । क्रतुविधीनामाधानाप्रयोजकत्वात् अपत्नीकस्याधानप्रवृत्तिरितिमानवपरिशिष्टाच्च ॥ **भारद्वाजापस्तंबसूत्रार्थो**पिपुनर्विवाहाशक्तौय-दग्न्याधेयंपूर्वंकृतमस्तितदात्मार्थमेवनपत्न्यैदद्यादित्येवेति **ब्राह्मणभाष्यापरार्काशार्करामांडारादीनां**तत्वमप्येवमेव ॥ **कातीयप्रा-यश्चित्तसूत्रेभाष्येश्रीमदनंतदेवाः**—यथाग्निस्थापनेछायांमृतभार्योददातिन ॥ भार्यायैदाहसिद्ध्यर्थमुल्मुकंचप्रयच्छति ॥ नतेननयेहा-

निर्वानोपपातोस्तिकश्चन ॥ एकदेशउपात्तेपिशेषस्यादुष्टतातथेति ॥ एतेन–शवाग्नयोवाएतेयेमृतायांपत्न्यांधार्यंतइतिकाठकश्रुतिर्नवाजसनेयिविषयेति ॥ इत्याहिताग्नीनांदाहाग्निनिर्णयः ॥

अथ मृताधानं ॥ ॥ एवमप्याधानासंभवेउत्सन्नाग्नेर्दाहार्थंमृताधानंकार्यं ॥ तत्रापसव्येनदक्षिणाभिमुखेनचसर्वं कार्यं ॥ आचमनं । प्राणायामः ॥ देशकालौसंकीर्त्य । अपसव्यं ॥ गोत्रस्यअमुकमृतस्यउच्छिन्नाग्नेर्दाहार्थंमृताधानंकरिष्ये ॥ अग्न्यगारकरणं ॥ खरत्रयसंस्कारःसकृत् ॥ गार्हपत्यस्यपश्चात् यस्याग्नयोजुह्वतइतिमंत्रेणमथित्वागार्हपत्यस्यस्थापनं ॥ यस्याग्नयोजुह्वतोमांसकामाःसंकल्पयंतेयजमानमांसं ॥ जायंतुतेहविषेसादितायस्वर्गंलोकमिमंप्रेतंनयंतु ॥ इतिमंथनमंत्रः ॥ गार्हपत्यादाहवनीयदक्षिणाग्न्योरुद्धरणं ॥ गार्हपत्येआज्यंसंस्कृत्यस्रुचिद्वादशगृहीतंगृहीत्वासमित्पूर्वकमाहवनीयेतूष्णींहुत्वाउपाधिश्रयणादिकंकुर्यात् ॥ एवंपत्न्याःपश्चान्मरणेपिज्ञेयं ॥ उच्छिन्नाग्नेररणिसद्भावेएवं ॥ अरण्योरभावेचान्येअरणीआनीयअरण्योरुपरिदक्षिणंपाणिंकृत्वाअयंतइतिसमारोपमंत्रंपुत्रादिर्जपेत् ॥ यस्याग्नयइतिमंत्रेणाग्निमंथनं ॥ गार्हपत्यस्थापनं ॥ आहवनीयदक्षिणाग्न्योरुद्धरणं ॥ तिस्रएवस्थालीरेष्टवैइतिप्रैषः ॥ ततउखाधिश्रयणादिदाहं कुर्यात् ॥ इत्यग्निहोत्रिणांमृताधानं ॥

अत्राहापस्तंबः—यद्याहिताग्निरुत्सृष्टाग्निर्विधुराग्निर्विच्छिन्नाग्निर्वाप्रमीयेततमन्येनत्रेताग्निभ्योदहंतितस्याप्राचीनावीतिनाग्न्यायतनान्युद्धृत्यावेक्ष्ययजमानायतनेप्रेतंनिधायगार्हपत्यायतनेऽरणीसंनिधायमथितस्याग्नेः यस्याग्नयो०प्रेतंनयंत्वितितूष्णींविहृत्य द्वादशगृहीतेनस्रुचंपूरयि-

त्वाप्रेतमात्याइत्येतद्दाहादिकर्मप्रतिपद्यतइति ॥ **अथाग्नौसमारूढेयजमानमृतेअरण्योः**प्रेतस्यशकृच्चोपावहरणमंत्रंचपठित्वाग्निंमथित्वातूष्णी-माहवनीयमुद्धृत्याज्यंसंस्कृत्यद्वादशगृहीतंतूष्णीमाहवनीयेहुत्वोखाधिश्रयणादिकुर्यात् ॥ उपावरोहजातवेदइमंप्रेतंस्वर्गायलोकायनय ॥ प्रेता-हुतिंचास्यजुषस्वस्वाहेत्यवहरणमंत्रः ॥ ॥ **अथाग्निपुशांतेष्वरण्योर्नाशे** स्वामिनोमरणेअन्येअरणीआनीयतयोरुपरिप्रेतहस्तंनिधायस-मारोपमंत्रपठित्वामृताधानंकृत्वोखाधिश्रयणादिकुर्यात् ॥ संतापजाग्निनाशेगार्हपत्यमथित्वाआहवनीयदक्षिणाग्नीविहृत्यप्रायश्चित्तंहुत्वापुनरुद्धृ-त्योखाधिश्रयणंकुर्यात् ॥ स्थालीस्थाग्न्यनुगमेस्थालीस्थएवदक्षिणाग्न्यादौनैमित्तिकहोमोभूमौनिधायच । एकस्यगार्हपत्यस्यनाशेतंमथित्वाना-दिष्टंहुत्वोखांपूर्ववदधिश्रित्योत्पादयेत् ॥ आहवनीयदक्षिणाग्न्योरेकैकनाशेद्वयोर्वानाशेऽनादिष्टहोमार्थमुद्धृत्यतद्धुत्वापुनरुद्धरेत् नपुनरुखामधि-श्रित्यसंतापेनोपशांतमुत्पादयेत् ॥ ॥ **छंदोगानांस्त्रीमरणेविशेषः** अनयैवावृतानारीदग्धव्यायाव्यवस्थिता ॥ अग्निप्रदानमस्यापिन-प्रयोज्यमितिस्थितिः ॥ अनयापूर्वोक्तदाहप्रक्रियया अग्निनापात्रैश्च ॥ व्यवस्थिताशास्त्रोक्तव्याचारयुक्ता । सदाचारयुक्तेत्यर्थः ॥ ॥ **अथाव्यवस्थितायाविशेषमाहसएव** ॥ अग्निनैवदहेद्भार्यांस्वतंत्रापतितानचेत् ॥ तदुत्तरेणपात्राणिदाहयेत्पृथगंतिके ॥ स्वतं-त्राअव्यवस्थिता स्वेच्छाचारिणी नचेत्पतितातस्यास्त्वग्निनापिदाहोनकार्यइत्यर्थः ॥ पातित्यरहितायाअव्यवस्थितायाःकेवलेनाग्निनादाहः ॥ पात्राणामुत्तरतःपृथगग्न्यैकदेशेनदाहः ॥ व्यवस्थितायास्तुपात्रैरग्निनाचदाहइति ॥ एतत्केवलावसथ्यविषयं ॥ **श्रौतेपितेनैवोक्तं**— दाहयित्वाग्निभिर्भार्यांसदृशींपूर्वसंस्थितां ॥ पात्रैश्चाप्यग्निमादध्यात्कृतदारोऽविलंबतः ॥ **तथा**—एवंवृत्तांसवर्णांस्त्रींद्विजातिःपूर्वमारिणीं ॥ दाहयेदग्निहोत्रेणयज्ञपात्रैश्चधर्मवित् ॥ **कंडिकायां**—दाहयित्वाग्निहोत्रेणस्त्रियंवृत्तवतींपतिः । आहरेद्विधिवद्दारानग्नींश्चैवाविलंबयन् ॥ वृत्तवतींसदाचारां ॥ **कात्यायनोपि**—स्त्रीधर्मचारिणीसाध्वीमृतादाह्यातथाग्निभिः ॥ विपरीतानदाह्यातुपुनर्दारक्रियातथेति ॥

**अस्थिसंचयनं** ॥ ततोदाहाच्चतुर्थदिनेऽस्थिसंचयनसंज्ञकंकर्मभवति ॥ तत्रस्नात्वाप्रेतदाहभूमौएकोद्दिष्टंश्राद्धंकृत्वाश्राद्धव्यतिरिक्तान-युग्मांस्त्रिप्रभृतिब्राह्मणान्भोजयित्वापलाशवटादिपर्णस्यवृंतेनभस्मगुप्तान्यस्थीनिप्रगटानिकृत्वांगुष्ठकनिष्ठिकाभ्यांतान्यस्थीनिगृहीत्वावटपलाशा-दिपर्णपुटेप्रक्षिपति ॥ शम्यवकांकर्दमंचभस्मराशौप्रक्षिपति ॥ शमीशब्देनशमीशाखोच्यतेतत्पर्णानिवा । अवका शैवालः । कर्दमः कु-त्सितामृत्तिका ॥ यक्षकर्दमइतिकेचित् ॥ ततःपत्रपुटेभस्मन्यस्थीन्याज्येनाक्त्वा कर्पूरागरुचंदनकस्तूरीकेशरादिसुरभिद्रव्यैर्मिश्रयेत् ॥ ततआग्नेयदिगभिमुखकोणेकर्षूंखात्वातस्यांकुशास्तरणं हारिद्रंवस्त्रखंडंचतत्रास्तीर्य वाकइत्यनेनमंत्रेणतस्मिन्हारिद्रेवस्त्रेऽस्थीनिप्रक्षिपति ॥ एतद्वाजसनेयिनां वाजसनेयिशाखिनामित्यर्थः ॥

अथशाखांतरीयत्वान्मनसातैंनवाचाब्रह्मणात्रय्याविद्ययापृथिव्यामक्षितायामपा२ रसेननिवपाम्यसुकसगोत्रअसुकशर्मन्नित्यनेनवामंत्रेण क-र्षामस्थिप्रक्षेपः । पितृमेधंकरिष्यन्कुंभेस्थिसंचयनंकुर्युः ॥ कुंभेपिकुशानास्तीर्यहारिद्रंवस्त्रखंडंवास्तीर्यास्थीनितत्रप्रक्षिपेत्पूर्वोक्तमंत्रेण ॥ तस्य-कुंभस्यतूष्णींसुगुप्तेप्रदेशेनिधानं ॥ एतत्सर्वंस्त्रियाअपिसमानंअविशेषात् ॥ प्रोषितस्ययजमानस्यमरणेसंनिकृष्टदेशेचेच्छरीरमेवतैलद्रोण्यामवधाय-शकटेनाहरेयुः ॥ विप्रकृष्टदेशेयजमानोमृतश्चेत्तदायत्रमृतस्तत्रैवलौकिककाष्ठाभ्यामग्निंनिर्मथ्यकाष्ठवत्तंदग्ध्वाकृष्णाजिनेस्थीन्युपनह्यअहतेनवास-साच्छाद्यदीर्घवंशेप्रबध्यभूमौनिधानमकुर्वंतःप्रेतग्रामेआहरंति ॥ ततोग्रामसमीपमागत्यसीमायामेवमृतस्यशरीरंअस्थीनिवास्थापेययुः नग्राममध्ये-अग्निसमीपेआनयेयुः ॥ तत्रविदेशमरणश्रवणानन्तरं मृतशरीरस्यास्त्रांवाग्निभिर्विधिवद्दाहपर्यंतंप्रतिदिनंगृहेसायंप्रातर्होमाःपुत्रादिभिःकर्तव्याः ॥ **तथाहापस्तंबः**—ततःपथिकृतीजनेप्रमीतस्यनिवान्यवत्सायाःपयसाग्निहोत्रंजुहुयादाशरीरस्याग्निभिःसंस्पर्शनंतत्रसर्वंतूष्णींक्रियते प्राचीना-वीतीदोहयति येपुरोदंचोदर्भास्तान्दक्षिणाग्रान्कृत्वादक्षिणागार्हपत्यस्यशीतेभस्मन्यधिश्रित्यदक्षिणोद्वास्यसकृदेवसर्वंतूष्णीमुन्नीयाधस्तात्समि-

धंधारयन्दक्षिणेनविहारमुद्द्रवन्त्युपरिहिदेवेभ्योधारयतीतिविज्ञायते ॥ उपसाद्यसमिधमाधायसकृदेवसर्वतूष्णींजुहुयादपिवासोमंपितृमंतंपूर्वस्या- माहुत्यासुपलक्षयेदग्निंकव्यवाहनमुत्तमस्यांप्रादेशेनोत्सेचनपरिषेचनिनावेदितइति ॥ **तथाचत्रिकांडमंडनः**—देशांतरमृतंप्रेतंदहेयुर्लौकिकाग्निभिः ॥ तत्पत्नीकारयेत्तावदग्निहोत्राद्युपस्थितिमिति ॥ **आश्वलायनब्राह्मणे**—तदाहुर्यआहिताग्निःप्रवसन्म्रियेतकथमस्याग्निहोत्रं स्यादित्यभिवान्यवत्सायाःपयसाजुहुयुरन्यंवैतत्पयोयदभिवान्यवत्सायादन्यदिवैतदग्निहोत्रंयत्प्रेतस्यापिवायतएवकृतश्चपयसाजुहुयुरथाप्याहुरेवमेवैनानजस्रानजुह्वतइंधीरन्नाशरीराणामाहर्तोरिति ॥ **आश्वलायनसूत्रे**—यदिव्यध्वेप्रमीयेतेष्टिरग्नयेपथिकृते तथाअध्वप्रमीतस्याभिवान्यवत्सायाःपयसाग्निहोत्रंसर्वतूष्णींजुहुयादासमवायादिति ॥ **आपस्तंबसूत्रव्याख्यानंचैवं**—एतामेवपथिकृतींप्रमीतस्यदेशांतरेविप्रयुक्तस्याग्निभिस्तस्यमृतइतिश्रुतेगृहेपाथिकृतीपत्नीप्रेरितैर्ऋत्विग्भिःकार्या ॥ तस्यांसमाप्तायां तद्विहारएवाभिवान्यवत्साया यामृतवत्सापरवत्सेनदुह्यते तस्याःक्षीरेणहोमः सायंप्रातर्यावदाशरीरमग्निभिर्दह्यते तैलद्रोण्यामाधायशकटेनाहरतिनिर्मथ्येनवादग्ध्वाकृष्णाजिनेस्थीन्युपनह्याहतेनवाससाप्रच्छाद्यदीर्घवंशेप्रबध्यानिधानाःप्रयतामृन्मयभाजनेआहरंतीति ॥ तानिग्राममर्यादायांप्रतिष्ठाप्य पाथिकृतोविहारमेवतत्समीपंनीत्वासर्वंकार्यमिति **धूर्तस्वामिनः** । विदेशमरणनिमित्तंपराकद्वयमष्टौकृच्छ्रान्वास्मृत्युक्तमपिप्रायश्चित्तं । पर्युषितदोषनिवृत्त्यर्थंकृच्छ्रत्रयंच पुत्रादिभिर्दाहाधिकारप्राप्त्यर्थंपूर्वंकर्तव्यं ॥

**अथमृताग्निहोत्रस्यकर्तव्यतालिख्यते** ॥ तत्रतूष्णीमपसव्येनसर्वंकर्तव्यंदक्षिणामुखेनच । सकृत्सकृद्भूसंस्काराआहवनीयखरएव ॥ आहवनीयस्योद्धरणं ॥ नदक्षिणाग्नेः ॥ अत्रपदार्थक्रमोलिख्यते ॥ तत्रतूष्णींकूर्चस्थापनं । आहवनीयस्यैवपूर्वतआरभ्यदक्षिणासंस्थंपरिस्तरणं ॥ तत्रपूर्वापरदिशोर्दक्षिणाग्राणिदर्भतृणानि ॥ दक्षिणोत्तरयोःप्रागग्राण्येव । आहवनीयस्यैवाप्रदक्षिणंपर्युक्षणं ॥ निवान्यवत्सामे-

ष्टवैइतिप्रैषः तस्यादोहनं ॥ गार्हपत्यादुष्णंभस्मदक्षिणतोनिरुह्यपूर्वेणाहवनीयंदुग्धमाहृत्यतस्मिन्नुष्णेभस्मन्यधिश्रयेत् ॥ अवज्योतनासे-कौनभवतः ॥ भूमिसंलग्नमेवदक्षिणतोहृत्वादक्षिणतएवसकृदुद्वासनंनत्रिः ॥ स्रुक्स्रुवप्रतपनं । पाणिनासंमार्गः । पुनःप्रतपनं ॥ नोन्नेष्यामीति प्रैषः ॥ सकृदुन्नयनं ॥ अधोमुखेनस्रुवेणस्रुचिप्रक्षेपः । स्रुग्दंडस्याधःप्रदेशेसमिधंधारयन्दक्षिणतोगार्हपत्यस्याहवनीयंप्रतिहरति । आह-वनीयसमीपेउत्तरतोदक्षिणाभिमुखउपविश्याहवनीयेतूष्णींदक्षिणाग्रांसमिधमाधायपितृतीर्थेनन्युब्जयास्रुचातूष्णींसकृदेवसर्वंस्रुक्स्थंपयःसमिध-उपरिप्रक्षिपति ॥ अतऊर्ध्वंद्विप्रकंपेत्यादिकंकिमपिनभवति ॥ समासमेतत्कर्म ॥ ॥ एवंमृतशरीरस्यास्थ्नां वा आगमनपर्यंतंसायंप्रातर्होमः-पुत्रादिभिःकर्तव्यः ॥ अग्निहोत्रस्यैवकर्तव्यतोपदेशादन्यत्स्मार्तहोमपिंडपितृयज्ञदर्शपूर्णमासेष्टिपक्षाद्यादिकिमपिनभवति ॥ धारणमात्रमेव-भवति ॥ तथाचास्थियज्ञप्रकरणे **अनुपदसूत्रे उक्तं**—नोग्निहोत्रदर्शपौर्णमासंजरामर्यंवत्स्यात्वाग्निहोत्रगुप्त्यर्थंमाग्नेर्वैगुप्त्याइतिह्यभिवान्यवत्सा-यादुग्ध्वाजुहुयादिति ॥ अतएवसर्वशाखास्वग्निहोत्रमेवमुक्तंनान्यत् ॥ **मंडनः**—देशांतरमृतंयावद्दहेयुर्वैदिकाग्निभिः ॥ तत्पत्नीकारयेत्ताव-दग्निहोत्राद्युपस्थितिं ॥ अत्राग्निहोत्रादिकंसर्वंकर्तव्यमुक्तंतत्केनाभिप्रायेणेतिसएववेद ॥ ततःशरीरेआगतेगृहादग्नीन्पात्राणिचसीमायांस्थापि-तस्यशरीरस्यसमीपेअस्थिसमीपेवानीत्वासंतापजानग्नीनुत्पाद्योक्तानिश्राद्धानिकृत्वापूर्ववद्दाहंकुर्यात् ॥ अस्थ्नांतुविशेषः—अस्थीन्याहृत्यकृष्णा-जिनस्योपरिपुरुपाकारेणस्थापयित्वामेपरोमभिस्तान्याच्छाद्यअन्येनाज्येनतान्यस्थीन्यभिघार्याग्निविहरणादिःस्नानांतःपूर्ववद्दाहःकार्यः ॥ ततः-प्रभृतिसर्वेपांदशरात्रंसूतकं ॥

**आहिताग्नेर्दुर्मरणेविशेषमाह** ॥ **अंगिराः**—वैतानंप्रक्षिपेदप्सुआवसथ्यंचतुष्पथे ॥ पात्राणितुदहेदग्नौयजमानेवृथामृते ॥ वृथामृते अविहितमार्गेणमृतेइत्यर्थः ॥ साग्निकेपापकर्मणीतिचतुर्थपादस्यक्वचित्पाठः ॥ **ब्राह्मणस्याहिताग्नेर्विशेषमाहपराशरः**—चांडालेनश्वपा-

केनगोभिर्विप्रैर्हतोयदि ॥ विप्रवैद्युतचांडालशृंगिदंष्ट्रिजलाग्निभिः ॥ नखिसर्पादिभिर्बुद्ध्याऽनर्थक्रोधादिनामृताः ॥ नकुर्याद्दहनाशौचोदकमेषां-मृतायदि ॥ नोपतिष्ठतितत्सर्वमंतरिक्षेविनश्यति ॥ गंगायांप्रक्षिपेद्देहंसरित्स्वन्यासुवाततः ॥ प्रेताग्निंप्रक्षिपेदप्सुगृह्याग्निंचचतुष्पथे ॥ यज्ञपात्रा-णिसर्वाणिलौकिकेनाग्निनादहेत् ॥ एतेषांशवानांस्पर्शनस्नापनालंकरणलक्षणादिरज्जुच्छेदाश्रुपातादीनांज्ञानात्करणेमहासांतपनं । एकैककरणे-अज्ञानादुपवासः ॥ मत्याकृच्छ्रातिकृच्छ्रः ॥ अभ्यासेऐंदवं ॥ आहिताग्निर्मृतोयस्तुविशेषेणात्मघातकः ॥ दहेत्तंब्राह्मणंलौकिकाग्नौमंत्रविवर्जितं ॥ अस्थीनितुपुनर्गृह्यक्षीरेणक्षालयेत्ततः ॥ तेनाग्निनास्वमंत्रेणपृथगेवपुनर्दहेत् ॥ **प्रमादान्मृतानांतुप्रायश्चित्तपूर्वकंसर्वकार्यं** ॥ **तदुक्तं**—अथकश्चित्प्रमादेनम्रियेतेतूदकादिभिः ॥ तस्याशौचंविधातव्यंकर्तव्याचोदकक्रियेति ॥ आहिताग्निस्तुयोविप्रोमहापातकवान्भवेत् ॥ प्रायश्चित्तैर्नशुद्ध्येततदग्नीनांतुकागतिः ॥ वैतानंप्रक्षिपेत्तोयेशालाग्निंशमयेद्बुध **इत्युशना** ॥ **कर्मप्रदीपे**—महापातकसंयुक्तोदैवात्स्याद-ग्निमान्यदि ॥ पुत्रादिःपालयेदग्नीन्युक्तआदोषसंक्षयात् ॥ पुत्रादिरित्यादिशब्दाद्भ्रात्रादिः ॥ पालनंचहोमेष्टिकरणादिना ॥ युक्तःत्वमग्निहोत्रहो-मादिकंकुर्वित्येवंयजमानेननियुक्तः त्यागादिकमपिकुर्यात् ॥ आपापक्षयात् तन्निमित्तप्रायश्चित्ताचरणपर्यंतं ॥ प्रायश्चित्तंनकुर्याद्यस्तथैवम्रियते-यदि ॥ गृह्यंनिर्वापयेच्छ्रौतमप्स्वस्येत्सपरिच्छद ॥ सादयेदुभयंवाप्स्वग्नोग्निरभ्यभवद्यतः ॥ पात्राणिदद्याद्विप्रायदहेदप्स्वेववाक्षिपेत् ॥

**मृतस्यास्थ्यामलाभे**तत्कर्तव्यमुच्यते ॥ मृतस्यास्थ्यामलाभेपलाशवृंतानिषष्ट्यधिकानित्रीणिशतान्यानीयतैःपुरुषाकारंकृष्णाजिनेकृत्वोर्णाभिः प्रच्छाद्यगव्येनाज्येनाभिघार्यपूर्ववद्दाहःकार्यः ॥ अत्रवृंतानिईषद्दग्धान्येवकृत्वातेषामेवसंचयनं । पितृमेधश्चैतैरेवभवति ॥ इदंचकृष्णाजिनमन्यत् ॥ दार्शपौर्णमासिकस्यपूर्ववच्छब्देनदाहकालेविनियोगात् ॥ नास्मिन्पक्षेसंचयनंपाक्षिकत्वादर्थलोपाच्चेतिवासुदेवः ॥ अत्रवृंतशब्दःपत्रपरः ॥ अस्थ्यलाभेपलाशोत्थैःपत्रैःकार्यःपुमानपीतिब्रह्मपुराणात् ॥ एवंपर्णनरंदग्ध्वात्रिरात्रमशुचिर्वसेदित्यस्माच्च ॥ तेनसघृतानिपत्राणिग्राह्याणी-

तिनिबंधकारः ॥ केचित्पलाशवृंतान्येवग्राह्याणीत्याहुः ॥ **ब्रह्मपुराणे**—तदभावेपलाशोत्थैः पत्रैःकार्यःपुमानपि ॥ शतैस्त्रिभिस्तथापष्ठ्या-
शरवृंतैर्विधानतः ॥ वेष्टितव्यंतथायत्नात्कृष्णसारस्यचर्मणा ॥ ऊर्णासूत्रेणबद्धाचप्रलेप्तव्यंतथायवैः ॥ सुपिष्टैर्जलमिश्रैश्चदग्धव्यश्चतथाग्निना ॥
असौस्वर्गायलोकायस्वाहेत्युक्त्वास्वबांधवैः ॥ एवंपर्णतरंदग्ध्वात्रिरात्रमशुचिर्भवेत् ॥ ॥ **पर्णशरदाहोत्तरं शरीरलाभेकर्तव्यं** ॥
एवंकृतेमृतभ्रांत्यायद्यागच्छेत्पुमान्कचित् ॥ कुर्यादायुष्मतीमिष्टिंपुनराधायपावकं ॥ अथपर्णनरेदग्धेपात्रन्यासेकृतेसति ॥ तेष्वग्निपुतदादग्धे-
यद्यूर्ध्वंलभ्यतेक्वचित् ॥ तदार्धदग्धकाष्ठानितानिनिर्मथ्यतंदहेत् ॥ यद्यर्धदग्धकाष्ठं च तदयं नोपलभ्यते ॥ तदातदस्थिखंडंचप्रक्षेप्तव्यंमहा-
जले ॥ इति ॥ **आपस्तंबः**—यद्याहिताग्निःप्रोषितःप्रमीतोनप्रज्ञायेतयांदिशमभिप्रस्थितःस्याभस्यास्याग्निभिःकर्पूदहेयुरपिवात्रीणिपष्टिशतानि-
पलाशवृंतानितैःकृष्णाजिनेपुरुषाकृतिंकृत्वातामस्याग्निभिर्दहेयुरितिवाजसनेयकंपलाशवल्कलैःकुशैर्वासंधिपुसंवेष्ट्यंत्यशीत्यर्धशिरोदद्यादित्यादि ॥
**अत्रैवंबंधनविभागः** ॥ **यज्ञपार्श्वे**—मूर्ध्निदद्यादशीत्यर्द्धंग्रीवायांचदशैवतु ॥ बाह्वोश्चैवशतंदद्याद्दशहस्तांगुलीषुच ॥ उरसिविंशतिंदद्यात्त्रिं-
शतिंजठरोदरे ॥ शिश्नेचत्वारिंसंदद्यात्पदंचैववृषणद्वये ॥ ऊर्वोश्चैवशतंदद्यात्त्रिंशतिर्जानुजंघयोः ॥ पादांगुलीषुदशकमेतद्देहोपकल्पनं ॥ इति ॥
संचयःपितृमेधश्चस्मृतस्तत्रापिपाक्षिकः ॥ तथा ॥ अस्थीनिचेन्नलभ्यतेप्रोषितस्याग्निहोत्रिणः ॥ पलाशपत्रवृंतानांपष्ट्याधिकशतत्रयं ॥ कृष्णा-
जिनेनराकारंकृत्वावेष्ट्याजिनेनतं ॥ ऊर्णासूत्रेणबध्वैवयवपिष्टैःप्रलेपयेत् ॥ निर्दिश्यदेवदत्तोथंनामेत्याहाश्वलायनः ॥ अंक्त्वाज्येनदहे-
त्कृत्वामृद्दिग्धंसंचयार्थतः ॥ इतित्रिरग्निचित्सम्राट्स्थपतिमहायाज्ञिकश्रीदेवकृतायांकातीयसूत्रपद्धतौसविशेषोदहनविधिः ॥

**पालाशविधिः** ॥ स्नात्वाअहतंवासःपरिधायआचम्यप्राणानायम्यदेशकालौसंकीर्त्य ॥ अपसव्यं ॥ गोत्रस्यप्रेतस्यप्रेतत्व-
विमुक्त्याउत्तमलोकप्राप्तयेअस्थ्यभावेपालाशविधिनाऔर्ध्वदेहिकंकर्माहंकरिष्ये ॥ सव्यं ॥ उदकोपस्पर्शः ॥ देवागातु

विदइतिप्राक्शिरःकृष्णाजिनमास्तीर्य ॥ ॐ देवागातुविदोगातुंवित्वागातुमित ॥ मनसस्पतइमंदेवयज्ञꣳस्वाहावातेधाः॥
तदुपरिअक्रन्कर्मेतिमंत्रेणउदक्शिरसंपुत्तलंनिधाय॥ ॐ अक्रन्कर्मकर्मकृतःसहवाचामयोभुवा ॥ देवेभ्यःकर्मकृत्वास्तंप्रे-
तसचाभुवः ॥ सद्योजातमितिपंचभिर्मंत्रैःसर्वांगानिप्रकल्पयेत् ॥ ॐ सद्योजातंप्रपद्यामि० ॥१॥ वामदेवायनमो० ॥२॥
अघोरेभ्योथ० ॥३॥ तत्पुरुषायविद्महे० ॥४॥ ईशानःसर्वविद्यानां० ॥५॥ पुरुषसूक्तेनाभिमंत्रयेत् ॥ ॐ सहस्रशीर्षा०
साध्याःसंतिदेवाः ॥१६॥ ततःपष्ठ्यधिकशतत्रयपालाशवृंतानिसर्वांगेषुविन्यसेत् ॥ तद्यथा ॥ आयुष्यंवर्चस्यमितिशिर-
सिचत्वारिंशत्४० ॥ ॐ आयुष्यंवर्चस्यꣳरायस्पोषमौद्भिदं ॥ इदꣳहिरण्यंवर्चस्वज्जैत्रायाविशतादुमां ॥ वायुष्ट्वापचतेति-
ग्रीवायांदश १०॥ ॐ वायुष्ट्वापचतैरवत्वसितग्रीवश्छागैर्न्यग्रोधश्चमसैःशल्मलिर्वृद्ध्या ॥ एषस्यराथ्योवृषापड्भिश्चतुर्भि-
रेदंगन्ब्रह्माकृष्णश्चनोवतुनमोग्नये ॥ नमस्तेरुद्रेतिबाह्वोःप्रत्येकंपंचाशदेवंशतं १०० ॥ ॐ नमस्तेरुद्रमन्यवऽउतोतइषवे-
नमः ॥ बाहुभ्यामुततेनमः ॥ देवस्यत्वेतिसर्वासुकरांगुलिषुदश १० ॥ ॐ देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णो-
हस्ताभ्यां ॥ नमोवःकिरिकेभ्यइत्युरसिविंशतिः २० ॥ नमोवःकिरिकेभ्योदेवानाꣳहृदयेभ्योनमोविचिन्वत्केभ्यो-
नमोविक्षिणत्केभ्योनमऽआनिर्हतेभ्यः ॥ इंद्रस्यक्रोडइतिजठरेत्रिंशत् ३० ॥ ॐ इंद्रस्यक्रोडोदित्यैपाजस्यंदिशांजत्रवो-
दित्यैभसज्जीमूतान्हृदयौपशेनांतरिक्षंपुरीततानभऽउदर्येणचक्रवाकौमतस्नाभ्यांदिवंवृक्काभ्यांगिरीन्प्लाशिभिरुपलान्प्लीह्नाव-

ल्मीकान्क्लोमभिर्ग्लौभिर्गुल्मान्हिराभिः स्रवंतीर्ह्रदान्कुक्षिभ्याᳪं समुद्रमुदरेण वैश्वानरं भस्मना ॥ ततो देवीरापो अपान्नपा-
दितिशिश्नेचत्वारि ४ ॥ ॐ देवीरापोअपान्नपाद्योर्वऽऊर्मिर्हविष्यऽइंद्रियावान्मदिंतमः ॥ तंदेवेभ्योदेवत्रादत्तशुक्रपेभ्यो-
येषांभागस्थस्वाहा ॥ एवेदिंद्रमितित्रपणयोस्त्रयंत्रयमितिपद्र ६ ॥ एवेदिंद्रंवृषणंवज्रबाहुंवसिष्ठासोअभ्यर्चंत्यर्कैः ॥
सनस्तुतोवीरवद्धातुगोमद्यूयंपातस्वस्तिभिःसदानः ॥ स्त्रीविषयेभगप्रणेतरितिभगस्थानेदश १० ॥ ॐ भगप्रणेतर्भग-
सत्यराधोभगेमांधियमुदवाददन्नः ॥ भगप्रणोजनयगोभिरश्वैर्भगप्रनृभिर्नृवंतःस्याम ॥ अंतरामित्रावरुणाचरंतीतिऊर्वोः-
प्रत्येकं ५० पंचाशदेवंशतं ॥ १०० ॥ ॐ अंतरामित्रावरुणाचरंतीमुखंयज्ञानामभिसंविदाने ॥ उपासावाᳪंसुहिरण्येसु-
शिल्पेऽऋतस्ययोनाविहसादयामि ॥ पृष्ठीर्मेराष्ट्रमितिजानुनोःपंचदश १५ ॥ ॐ पृष्ठीर्मेराष्ट्रमुदरमᳪंसौग्रीवाश्चश्रोणी ॥
ऊरूऽअरत्नीजानुनीविशोमेऽगानिसर्वतः ॥ नाभिर्मेचित्तमितिजंघयोःपंचदश १५ ॥ इत्येवंत्रिंशज्जानुजंघयोः ३० ॥
ॐ नाभिर्मेचित्तंविज्ञानंपायुर्मेपचितिर्भसत् ॥ आनंदनंदावाण्डौमेभगःसौभाग्यंपसः ॥ जंघाभ्यांपद्भ्यांधर्म्मोस्मिविशिरा-
जाप्रतिष्ठितः ॥ देवस्यत्वेतिसर्वासुपादांगुलीषुदश १० ॥ देवस्यत्वा० भ्याम् ॥ एवंषष्ठ्यधिकशतत्रयमितैःपर्णशरैः-
शरीरनिर्माणंपरिकल्प्यऊर्णासूत्रेणवेष्टयेत् ॥ यज्ञेनयज्ञमितियवपिष्टंजलेनालोड्यसर्वांगंलेपयेत् ॥ ॐ यज्ञेनयज्ञम० संति-
देवाः ॥ लोमानिप्रयतिरितिमांसस्थानेमाषपिष्टंपूर्ववत् ॥ ॐ लोमानिप्रयतिर्ममत्वङ्मऽआनतिरागतिः ॥ माᳪंसंमऽ-

उपनतिर्वैस्वास्थिमज्जामआनतिः ॥ घृतवतीतिमंत्रेणघृतेनाभ्यंजनं ॥ ॐ घृतवतीभुवनानामभिश्रियोर्वीपृथ्वीमधुदुघेसुपे-
शसा ॥ द्यावापृथिवीवरुणस्यधर्मणाविष्कभितेअजरेभूरिरेतसा ॥ मूर्धानंदिवइतिशिरसिनारिकेलं ॥ ॐ मूर्धानंदिवोऽ-
अरतिंपृथिव्यावैश्वानरमृतआजातमग्निं ॥ कविᳫँसम्राजमतिथिंजनानामासन्नापात्रंजनयंतदेवाः ॥ अग्नयेगायत्रेतिकपाल-
स्थानेअलाबूः। तुंबिका ॥ ॐ अग्नयेगायत्रायत्रिवृतेराथंतरायाष्टाकपालइंद्रायत्रैष्टुभायपंचदशायबार्हतायैकादशकपालोवि-
श्वेभ्योदेवेभ्योजागतेभ्यःसप्तदशेभ्योवैरूपेभ्योद्वादशकपालोमित्रावरुणाभ्यामानुष्टुभाभ्यामेकविᳫँशाभ्यांवैराजाभ्यांपय-
स्याबृहस्पतयेपांक्तायत्रिणवायशाक्वरायचरुःसवित्रऔष्णिहायत्रयस्त्रिᳫँशायरैवतायद्वादशकपालःप्राजापत्यश्चरुरदित्यैवि-
ष्णुपत्न्यैचरुरग्नयेवैश्वानरायद्वादशकपालोनुमत्याअष्टाकपालः ॥ आत्मन्नुपस्थेतिकेशश्मश्रुस्थानेसूकरकेशाः ॥ ॐ आत्म-
न्नुपस्थेनवृकस्यलोममुखेश्मश्रूणिनव्याघ्रलोम ॥ केशानशीर्षन्यशसेश्रियैशिखासिᳫँहस्यलोमत्विषिरिंद्रियाणि ॥ विश्वतश्च-
क्षुरितिनेत्रस्थानेकपर्दिकाद्वयं ॥ ॐ विश्वतश्चक्षुरुतविश्वतोमुखोविश्वतोबाहुरुतविश्वतस्पात् ॥ संबाहुभ्यांधमतिसंपतत्रै-
र्द्यावाभूमीजनयन्देवएकः ॥ अश्विभ्यांचक्षुरितिनेत्रकनीनिकास्थानेगुंजाद्वयं ॥ ॐ अश्विभ्यांचक्षुरमृतंग्रहाभ्यांछागे-
नतेजोहविषाशृतेन ॥ पक्ष्माणिगोधूमैःकुवलैरुतानिपेशोनशुक्रमसितंवसाते ॥ आनोनियुद्भिरितिनासिकास्थानेसबीजः-
कार्पासः ॥ आनोनियुद्भिःशतिनीभिरध्वरᳫँसहस्रिणीभिरुपयाहियज्ञं ॥ वायोऽअस्मिन्सवनेमादयस्वयूयंपातस्वस्तिभिः-

सदानः ॥ प्राणदाइतिप्राणस्थानेकर्पूरः ॥ ॐ प्राणदाअपानदाव्यानदावर्चोदावरिवोदाः ॥ अन्यांस्तेअस्मत्तपंतुहेतयः-
पावकोअस्मभ्यᳬंशिवोभव ॥ इंद्रस्यरूपमितिकर्णस्थानेशुक्तिकाद्वयं ॥ ॐ इंद्रस्यरूपमृषभोबलायकर्णाभ्यांᳬश्रोत्रममृ-
तंग्रहाभ्यां ॥ यवानबर्हिर्भ्रुविकेसराणिकर्कंधुजज्ञेमधुसारघंमुखात् ॥ मुखᳬंसदइतिजिह्वास्थानेताडपत्रं ॥ मुखᳬंसदस्य-
शिरइत्सतेनजिह्वापवित्रमश्विनासंत्सरस्वती ॥ चप्पन्नपायुर्भिषगस्यवालोवस्तिर्नशेपोहरसातरस्वी ॥ परिवाजपतिरिति-
मुखेपंचरत्नं ॥ ॐ परिवाजपतिःकविरग्निर्हव्यान्यक्रमीत् ॥ दधद्रत्नानिदाशुषे ॥ नाभ्याआसीदितिदंतस्थानेदाडिम-
बीजानि ३२ ॥ ॐ नाभ्याआसी० यन् ॥ एषस्यवाजीइतिग्रीवायांसूत्रवेष्टनं ॥ ॐ एषस्यवाजीक्षिपणिंतुरण्यतिग्री-
वायांबद्धोअपिकक्षआसनि ॥ क्रतुंदधिक्राअनुसᳬंसनिष्यदत्पथामंकाᳬंस्यन्वापनीफणत्स्वाहा ॥ इंद्रःसुत्रामाइतिहृदये-
हरितालकं ॥ ॐ इंद्रःसुत्रामास्ववाँ ॥ अवोभिःसुमृडीकोभवतुविश्ववेदाः ॥ बाधतांद्वेषोअभयंकृणोतुसुवीर्यस्यपतयः-
स्याम ॥ देव्यावध्वर्यूइतिगात्रेमनःशिलां ॥ ॐ देव्यावध्वर्यूआगतᳬंरथेनसूर्यत्वचा ॥ मध्वायज्ञᳬंसमंजाथे ॥ तंप्रत्नथा-
यंवेनश्चित्रंदेवानां ॥ त्रातारमिंद्रमितिधातुस्थानेगंधकं ॥ ॐ त्रातारमिंद्रमवितारमिंद्रᳬंहवेहवेसुहवᳬंशूरमिंद्रं ॥ ह्वया-
मिशक्रंपुरुहूतमिंद्रᳬंस्वस्तिनोमघवाधात्विंद्रः ॥ लोमभ्यइतिरोमस्थानेऊर्णा॥ॐलोमभ्यःस्वाहालोमभ्यःस्वाहात्वचेस्वाहा-
त्वचेस्वाहालोहितायस्वाहालोहितायस्वाहामेदोभ्यःस्वाहामेदोभ्यःस्वाहा ॥ माᳬंसेभ्यःस्वाहामाᳬंसेभ्यःस्वाहास्नावभ्यः-

स्वाहास्नावभ्यः स्वाहास्थभ्यः स्वाहास्थभ्यः स्वाहामज्जभ्यः स्वाहामज्जभ्यः स्वाहा ॥ रेतसे स्वाहा पायवे स्वाहा ॥ नाभिमिंइतिना-
भिस्थानेमूलकं ॥ ॐ नाभिर्मेचित्तंविज्ञानंपायुर्मेपचितिर्भसत् ॥ आनंदनंदावांडौमेभगःसौभाग्यंपसः ॥ जंघाभ्यांपद्भ्यां-
धर्मोस्मिविशिराजाप्रतिष्ठितः ॥ संधयेजारमितिसंधिस्थानेलाक्षा ॥ ॐ संधयेजारंगेहायोपपतिमार्त्यैपरिवित्तंनिर्ऋत्यैप-
रिविविदानमराध्याऽएदिधिपुःपतिंनिर्ऋत्यैपेशस्कारीᳬसंज्ञानायस्मरकारींप्रकमोद्यायोपमदंवर्णायानुरुधंबलायोपदां ॥
अग्निᳬहृदयेनेतिहृदयस्थानेमांजिष्ठं ॥ ॐ अग्निᳬहृदयेनाशनिᳬहृदयाग्रेणपशुपतिंकृत्स्नहृदयेनभवंयक्ना ॥ शर्वंमतस्ना-
भ्यामीशानंमन्युनामहादेवमंतःपर्शव्येनोग्रंदेवंवनिष्ठुनावसिष्ठहनुःशिंगीनिकोश्याभ्यां ॥ इमᳬस्तनमितिस्तनयोःजंबीरफ-
लद्वयं ॥ ॐ इमᳬस्तनमूर्जस्वंतंधयापांप्रपीनमग्नेसरिरस्यमध्ये ॥ उत्संजुषस्वमधुमंतमर्वन्त्समुद्रियᳬसदनमाविशस्व ॥
भूर्भुवःस्वःइतिललाटेअभ्रकं ॥ ॐ भूर्भुवःस्वःसुप्रजाःप्रजाभिःस्याᳬसुवीरोवीरैःसुपोषःपोषैः ॥ नर्यप्रजांमेपाहिशᳬस्यप-
शून्मेपाह्यथर्यपितुंमेपाहि ॥ अᳬशुनाइतिनखस्थानेउशीरं ( वाळा ) ॥ ॐ अᳬशुनातेअᳬशुःपृच्यतांपरुषापरुः ॥ गंधस्ते-
सोममवतुमदायरसोअच्युतः ॥ ओषधयःसमवदंतइतिसर्वांगेपुसर्वौषधीः ॥ ॐ ओषधयःसमवदंतसोमेनसहराज्ञा ॥
यस्मैकृणोतिब्राह्मणस्तᳬराजन्पारयामसि ॥ आंत्राणिस्थालीइतिआंतेकमलाक्षाः ( कमलकांकडी ) ॥ ॐ आंत्राणि-
स्थालीर्मधुपिन्वमानागुदाःपात्राणिसुदुघानधेनुः ॥ श्येनस्यपत्रंनप्लीहाशचीभिरासंदीनाभिरुदरंनमाता ॥ प्रजापतिश्च-

रतीतिशिश्नेगृंजनं ( गाजर ) ॥ ॐ प्रजापति॰ विश्वा ॥ स्त्रीविषयेसरस्वतीयोन्यामितिअश्वत्थपत्रं ॥ अग्नेर्जनित्रमिति-
वृषणस्थानेवृंताकद्वयं ॥ ॐ अग्नेर्जनित्रमसिवृषणौस्थउर्वश्यस्यायुरसिपुरूरवाअसि ॥ गायत्रेणत्वाछंदसामंथामित्रैष्टुभे-
नत्वाछंदसामंथामिजागतेनत्वाछंदसामंथामि ॥ अविर्नमेपइतिवीर्यस्थानेपारदं ॥ ॐ अविर्नमेपोनसिवीर्यायप्राणस्यपं-
थाअमृतोग्रहाभ्यां ॥ सरस्वत्युपवाकैर्व्यानंनस्यानिबर्हिर्देदरैर्जजान ॥ पृष्ठीर्मेइतिहरिद्रवस्त्राच्छादनं ॥ ॐ पृष्ठीर्मेराष्ट्रमु-
दरमंसौग्रीवाश्चश्रोणी ॥ ऊरूअरत्नीजानुनीविशोमेंगानिसर्वतः ॥ शिरसितूष्णींपट्टवस्त्रं ॥ त्वामग्नेअंगिरसइतिपुरीपे-
पित्तलं ॥ ॐ त्वामग्नेअंगिरसोगुहाहितमन्वविंदच्छिश्रियाणंवनेवने ॥ सजायसेमथ्यमानःसहोमहत्त्वामाहुःसहसस्पु-
त्रमंगिरः ॥ गंधद्वारामितिगुह्येटंकणक्षारं ॥ गंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीं ॥ ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियं ॥
अश्वक्रान्तेइतिगुदेमृत्तिकां ॥ ॐ अश्वक्रांतेरथक्रांतेविष्णुक्रांतेवसुंधरे ॥ उद्धृतासिवराहेणकृष्णेनशतबाहुना ॥ मृत्तिकेह-
रमेपापंयन्मयादुष्कृतंकृतं ॥ त्वयाहतेनपापेनगच्छामिपरमांगतिं ॥ रेतोमूत्रमितिमूत्रस्थानेगोमूत्रं ॥ ॐ रेतोमूत्रंविजहाति-
योनिंप्रविशदिंद्रियं ॥ गर्भोजरायुणावृतउल्बंजहातिजन्मना ॥ अग्निर्वृत्राणीतिजंघास्थानेमूलकद्वयं ॥ ॐ अग्निर्वृत्राणिजं-
घनद्द्रविणस्युर्विपन्यया ॥ समिद्धःशुक्रआहुतः ॥ बाहूमेबलमितिबाहुस्थानेकदलीफलद्वयं ॥ ॐ बाहूमेबलमिंद्रियंहस्तौ-
मेकर्मवीर्यं ॥ आत्माक्षत्रमुरोमम ॥ त्रीणिपदाइतिनलिकास्थानेइक्षुदंडः ॥ ॐ त्रीणिपदाविचक्रमेविष्णुर्गोपाअदा-

भ्यः ॥ अतोधर्माणिधारयन् ॥ एतावानस्येतिचरणेतंदुलाः ॥ ॐ एतावानस्य० दिवि ॥ मधुवाताइतिरुधिरस्थानेमधु ॥ ॐ मधुवाता० भवंतुनः ॥ यज्ञाग्रतइतिस्कंधेदंडः ॥ ॐ यज्ञाग्रतो० मस्तु ॥ तेजःपशूनामितितालुदेशेकाचं ॥ ॐ तेजःपशूनाᳩंहविरिंद्रियावत्परिस्रुतापयसासारघंमधु ॥ अश्विभ्यांदुग्धंभिषजासरस्वत्यासुतासुताभ्याममृतःसोम-इंदुः ॥ पुनंतुमेतिफल्ग्वोःपूगफलद्वयम् ॥ ॐ पुनंतुमादेवजनाःपुनंतुमनसाधियः ॥ पुनंतुविश्वाभूतानिजातवेदःपुनीहि-मा ॥ जिह्वामेइतिपादांगुलीषुउतती ॥ ॐ जिह्वामेभद्रंवाङ्महोमनोमन्युःस्वराड्भामः ॥ मोदाःप्रमोदाअंगुलीरंगानि-मित्रंमेसहः ॥ योदेवेभ्यइतिपादपृष्ठेआम्रफलद्वयं ॥ ॐ योदेवेभ्य० ह्मये ॥ आशुःशिशानइतिघंटिकास्थानेबिल्वफल-द्वयं ॥ ॐ आशुःशिशानो० मिंद्रः ॥ इमंजीवेभ्यइतिजीवस्थानेमोहः ॥ ॐ इमंजीवेभ्यःपरिधिंदधामिमैषांनुगादपरो-अर्थमेतम् ॥ शतंजीवंतुशरदःपुरूचीरंतर्मृत्युंदधतांपर्वतेन ॥ वरुणःप्राविताइतिपित्तस्थानेपिप्पली ॥ ॐ वरुणःप्रावि-ताभुवन्मित्रोविश्वाभिरूतिभिः ॥ करतांनःसुराधसः ॥ वायोयेतेइतिवातस्थानेउशीरः ॥ ॐ वायोयेतेसहस्रिणोरथासस्तेभिरागहि ॥ नियुत्वान्सोमपीतये॥ दधिक्राव्णइतिश्लेष्मस्थानेदधि ॥ ॐदधिक्राव्णो० रिपत् ॥ तूष्णींकुंकुमेनप्रोक्षणं ॥ घृतंघृतेतिमंत्रेणघृतेनत्रिवारंप्रोक्ष्य ॥ घृतंघृतपावानःपिबतवसांवसापावानःपिबतांतरिक्षस्यहविरसिस्वाहा ॥ दिशःप्र-दिशआदिशोविदिशउद्दिशोदिग्भ्यःस्वाहा ॥ ॥ अथपंचगव्येनप्रेतस्नानं ॥ गायत्र्यागोमूत्रस्नानं गंधद्वारामितिगो-

मयस्नानं ॥ आप्यायस्वेतिक्षीरस्नानं ॥ दधिक्राव्णइतिदधिस्नानं ॥ तेजोसिशुक्रमसीत्याज्यस्नानं ॥ ततःपयःपृथिव्यामि-
त्यादिपूर्ववन्मंत्रैःपंचामृतस्नानं ॥ श्वेतवस्त्रेणवेष्टनं ॥ चंदनेनसर्वांगंप्रोक्ष्य ॥ कंठेतुलसीमालांप्रमुच्य ॥ दधिमधुलेपनं ॥
गुग्गुलेन धूपः ॥ आज्यदीपः ॥ पुनर्मइतिप्राणप्रवेशनं ॥ ॐ पुनर्मनःपुनरायुर्मआगन्पुनःप्राणःपुनरात्मामआगन्पुनश्च-
क्षुःपुनःश्रोत्रंमआगन् ॥ वैश्वानरोअदब्धस्तनूपाअग्निर्नःपातुदुरितादवद्यात् ॥ शिरोमेइत्यनुवाकेनसर्वांगेपुनियोजयेत् ॥
ॐ शिरोमेश्रीः० प्रतिष्ठितः ॥ ततःशिरःप्रदेशेजलघटस्थापनं ॥ तूष्णींफलमुद्राप्रक्षेपः ॥ अपेताध्यायेनकलशाभिमं-
त्रणं ॥ इमंमेवरुणेतिवरुणावाहनं ॥ कलशोदकेनपुत्तलकस्याभिषेकः ॥ तत्रमंत्राः ॥ ॐ अग्निमीळेपुरोहितंयज्ञस्यदेव-
मृत्विजं ॥ होतारंरत्नधातमं ॥ ॐ इषेत्वोर्जेत्वा० पाहि ॥ ॐ अग्नआयाहि० हिषि ॥ ॐ शंनोदेवी० तुनः ॥
वाचंतेशुंधामि प्राणंतेशुंधामिचक्षुस्तेशुंधामिश्रोत्रंतेशुंधामिनाभिंतेशुंधामिमेढ्रंतेशुंधामिपायुंतेशुंधामिचरित्रांस्तेशुंधामि ॥
मनस्तआप्यायतामितिआप्यायनंकुर्यात् ॥ ॐ मनस्तआप्यायतांवाक्तआप्यायतांप्राणस्तआप्यायतांचक्षुस्तआप्या-
यतां‌ श्रोत्रंतआप्यायतां ॥ यत्तेक्रूरंयदास्थितंतत्तआप्यायतांनिष्ठ्यायतांतत्तेशुध्यतुशमहोभ्यः ॥ ॐ ओषधेत्रायस्व-
स्वधितेमैनंहिंसीः ॥ सप्तऋषीतिमंत्रेणपुत्तलस्यनामगोत्रंप्रतिष्ठापयेत् ॥ अथगर्भाधानादिसंस्काराः ॥ ॐ
अग्निर्ऋषिरितिमंत्रेणअमुकस्यगर्भाधानंपरिकल्पयामि ॥ ॐ अग्निर्ऋषिःपवमानःपांचजन्यःपुरोहितः ॥ तमीमहेमहा-

गुयं ॥ उपयामगृहीतोस्यग्नयेत्वावर्चसएषतेयोनिरग्नयेत्वावर्चसे ॥ॐ वयꣳसोम० महि ॥ स्वस्तिनइतिसीमंतः ॥ॐ स्व-
स्तिनइंद्रो० धातु ॥ यातेरुद्रेतिजातकर्म ॥ ॐ यातेरुद्रशि० शीहि ॥ अग्नयेगायत्रायेतिनामधेयं ॥ ॐ अग्नयेगाय-
त्रा० कपालः ॥ तच्चक्षुरितिसूर्यावेक्षणं ॥ ॐ तच्चक्षुर्देवहितं० तात् ॥ अन्नपतेइत्यन्नप्राशनं ॐ अन्नपते० पदे ॥
शिवोनामेतिचूडाकरणं ॥ ॐ शिवोनामा० हिꣳसीः ॥ भद्रंकर्णेभिरितिकर्णवेधः ॥ ॐ भद्रंकर्णेभिः० यदायुः ॥ ब्र-
ह्मजज्ञानमितिव्रतबंधः ॥ ॐ ब्रह्मजज्ञानं० विवः ॥ युवासुवासाइतिवस्त्रपरिधापनं ॥ ॐ युवासुवासा० यंतः ॥
यज्ञोपवीतमितियज्ञोपवीतपरिधापनं ॥ ॐ यज्ञोपवीतं० तेजः ॥ आब्रह्मन्नितिव्रतविसर्गः ॥ ॐ आब्रह्मन्० ताम् ॥
ध्रुवासीतिविवाहः ॥ ध्रुवासिध्रुवोयं० छाया ॥ प्रजापतेनेतिचतुर्थीकर्म ॥ ॐ प्रजापते न० रयीणां ॥ एवंयथोक्तंस्त्रीपुरुषो
वा ॥ ॥ ततःपुत्तलन्यासः ॥ ॐकारःसर्वत्र ॥ ॐ केशवायनमःशिखायां ॥ नारायणायनमःमूर्ध्नि ॥ माधवायनमः
ललाटे ॥ गोविंदायनमःचक्षुषोः ॥ विष्णवेनमःभ्रुवोर्मध्ये ॥ मधुसूदनायनमःकर्णयोः ॥ त्रिविक्रमायनमःकपोलयोः ॥
वामनायनमःकर्णमूले ॥ हृषीकेशायनमःउत्तरोष्ठे ॥ पद्मनाभायनमःअधरे ॥ दामोदरायनमःदंतपंक्तौ ॥ विष्णवेनमःजि-
ह्वायां ॥ वैकुंठायनमःकंठमध्ये ॥ अनंतायनमः नासिकायां ॥ पुरुषोत्तमायनमः स्तनयोः ॥ पीतवाससेनमः बाह्वोः ॥
संकर्षणायनमः दक्षिणकरे ॥ योगेंद्रायनमः वामकरे ॥ राघवायनमः हृदये ॥ क्षितिधरायनमः पृष्ठे ॥ माधवायनमः

पार्श्वयोः ॥ जगन्नाथायनमः चक्षुर्मध्ये ॥ योगशायिनेनमः उदरे ॥ स्वयंभुवेनमः गुह्ये ॥ गदाधरायनमः ऊर्वोः ॥ नारसिंहायनमः गुल्फयोः ॥ तेजसेनमः पादयोः ॥ श्रीधरायनमः पादांगुलीषु ॥ पुंडरीकाक्षायनमः सर्वांगेषु ॥ इति न्यासाः ॥ ततःप्राणोत्क्रमणसमयेवैतरण्यादिदानं ॥ अष्टौमहादानानि ॥ तिलपात्रदानं ॥ घृतपात्रदानं ॥ यथाशक्तिअन्यान्यपिदानानिकार्याणि ॥ अतःपरंनाभौस्वल्पमात्रंदीपस्थापनं ॥ ततःपुत्तलस्यईशावास्यमित्यादिब्रह्मविद्यांश्रावयेत् ॥ दीपशमनं ॥ उत्क्रांतिसमयेतुलसीमालांगृहीत्वा ॥ असियमोइतिमंत्रेणपुत्तलकोपरिप्रक्षेपः ॥ ॐ असियमोअस्यादित्योअर्वन्नसित्रितोगुह्येनव्रतेन ॥ असिसोमेनसमयाविपृक्तआहुस्तेत्रीणिदिविबंधनानि ॥ अत्रपुत्रःकर्ताचेत्वपनंकुर्यात् ॥ अथषट्पिंडाः ॥ अहतवस्त्रपरिधानं ॥ लौकिकाग्नौचरुंश्रपयित्वाषट्पिंडान्दद्यात् शेषंसमानं ॥ इतिपालाशविधिः ॥

अथस्मार्तमृताधानं ॥ आचमनं ॥ प्राणायामः ॥ देशकालौसंकीर्त्य ॥ अपसव्यं ॥ गोत्रस्यामुकप्रेतस्यउच्छिन्नाग्नेर्दाहार्थंस्मार्तमृताधानंकरिष्ये ॥ अरण्योर्दक्षिणंप्रेतपाणिंकृत्वा अयंतइतिसमारोपमंत्रंपुत्रादिर्जपेत् ॥ ॐ अयंतेयोनि० रयिं ॥ खरसंस्कारःसकृत् ॥ आवसथ्याग्नेःपश्चात् यस्याग्नयोजुह्वतइतिमंत्रेणमथित्वाआवसथ्याग्नेःस्थापनं ॥ सचमंथनमंत्रः ॥ यस्याग्नयोजुह्वतोमांसकामाःसंकल्पयंतेयजमानमांसं ॥ जायंतुतेहविषेसादितायस्वर्गंलोकमसुंप्रेतंनयंतु ॥ इति ॥ आवसथ्याग्नौआज्यंसंस्कृत्यस्रुवेणस्रुचिद्वादशगृहीतंगृहीत्वाउपरिसमित्पूर्वकंजुहोति ॥ तत्रमंत्रः ॥ ॐ उपावरोह-

जातवेदःइदंप्रेतायस्वर्गायलोकायप्रेताहुतिंचास्यजुषस्वस्वाहा ॥ इदमग्नयेनमम ॥ इत्यापस्तंबशाखीयमंत्रः ॥ इतिस्मार्तमृताधानं ॥ त्यागेमासद्वयेकृच्छ्रः । मासचतुष्टयेऽतिकृच्छ्रः । षष्ठमासोर्ध्वंचांद्रादिकं । संवत्सरोर्ध्वंत्रैमासिकं । आलस्यादानाग्नित्यागेद्वादशाहातिक्रमेत्र्यहमुपवासः । मासातिक्रमेद्वादशाहमुपवासः । संवत्सरातिक्रमेमासोपवासः पयोभक्षणं वा ॥ प्रमादादग्नित्यागेअतिरात्राद्द्वादशलघुप्राणायामाः । आषडहाच्चतुर्विंशतिः । आद्वादशाहात्पंचाशत् । आविंशाहाच्छतं । आमासादुपवासः । आषष्टिरात्रात्त्रिरात्रं । आवत्सरात्कार्यं । अतःपरंप्रत्यब्दंकार्यं । संवत्सरोर्ध्वमग्नित्यागेचांद्रं । द्विवर्षत्यागेचांद्रंसोमपानंच । चांद्रद्वयंवा । त्रिवर्षत्यागेकृच्छ्राब्दंगोदानंचेत्यादयोत्रप्रत्याम्नायाःकल्प्याः ॥ यावत्कालविच्छेदस्तावदाहुतिपरिमितंहोम्यद्रव्यंदद्यात् ॥ ततःप्राणायामोऽमंत्रकः ॥ सर्वंप्रेतकृत्यंप्राचीनावीतिनाकार्यंदक्षिणापवर्गंच ॥

अथनिरग्निकस्यमरणविधिः ॥ पूर्ववल्लौकिकाग्नौचरुंश्रपयित्वातत्रउत्क्रांतश्राद्धादिचितौप्रेतनिधानपर्यंतंपूर्ववत् ॥ प्रेतेनसहलौकिकाग्नेर्नयनं ॥ श्मशानदेशेप्रेतस्यदक्षिणतःसकृत्संस्कारपूर्वकंलौकिकाग्नेःस्थापनं ॥ पूर्णाहुतिवदाज्यंसंस्कृत्यउद्वास्यउत्पूयअवेक्ष्यजुहुयात् ॥ ॐ अग्नयेदहनपतयेस्वाहा ॥ इदमग्नयेदहनपतयेनमम ॥ कालायदहनपतयेस्वाहा ॥ इदंकालायदहनपतयेनमम ॥ अनिलायदहनपतयेस्वाहा ॥ इदमनिलायदहनपतयेनमम ॥ अनलायदहनपतयेस्वाहा ॥ इदमनलायदहनपतयेनमम ॥ मृत्यवेदहनपतयेस्वाहा ॥ इदंमृत्यवेदहनपतयेनमम ॥ अस्मात्त्वमधिजातोसित्वदयंजायतांपुनः असौस्वर्गायलोकायस्वाहा ॥ अनेनमंत्रेणशवमुखेएकामाहुतिंहुत्वासप्तहिरण्यशकलप्रक्षेपः ॥ ततः गोत्रप्रेतक-

व्यादोग्निरुपतिष्ठतु ॥ क्रव्यादमग्निंप्रहिणोमिदूरंयमराज्ञोगच्छतुरिप्रवाहः ॥ इहैवायमितरोजातवेदादेवेभ्योहव्यंवहतुप्र-
जानन् ॥ ततोगाढंरोदनंकुर्यात् ॥ ततउदकदानं ॥ श्मशानपृष्ठभागेस्थित्वा ॥ गोत्रस्यअमुकप्रेतस्यदाहजनिततापोप-
शमनार्थंउदकदानंकरिष्ये ॥ ततःकृतच्छिद्रमुदकुंभंस्कंधेकृत्वा ॥ ॐ प्रजापतौत्वादेवतायामुदोदकेलोकेनिदधाम्यसौइति-
मंत्रेणप्रेतपादप्रदेशात्परितश्चितेरप्रदक्षिणंधारांदत्वाकुंभमश्मनास्फोटयेत् ॥ ततोश्मानंगृहीत्वापृष्ठतोनवलोकयंतःस्ना-
नार्थंनद्यादौगच्छंति ॥ तत्रोदकसमीपेगत्वापरिहितंवस्त्रंप्रक्षाल्यतदेवपरिधायसमीपस्थंगत्वोत्तरदानाभिज्ञंकंचित्पुरुषंशा-
लकंवा उदकंकरिष्यामहइतिमंत्रेणोदकंयाचते ॥ यदिशतवर्षादर्वाक्प्रेतोभवतितदामाचैवंकुरुध्वमितिप्रतिवचनं ॥ ऊ-
र्ध्वंतुकुरुध्वमेतावदेवप्रतिवचनं ॥ इत्युक्तेपुत्रादयःसपिंडाःसमानोदकाश्चयथावृद्धपूर्वमुदकंप्रविश्यैकवस्त्राआर्द्रशिखाःप्रा-
चीनावीतिनःसव्यपाणेरनामिकयानद्यादिस्थंजलंतूष्णीमपनोद्यदक्षिणामुखाअनमंतोऽसंधावमानाश्चसकृदेवनिमज्जंति ।
ॐ अपनःशोशुचदघमितिमंत्रेणस्नात्वासर्वमलापहंस्नानंकुर्वंति ॥ अंगोद्वर्तनस्यविहितप्रतिषिद्धत्वाद्विकल्पः ॥ ततस्तीरे
आगत्याचम्यशिखांबध्वादक्षिणाग्रानयुग्मानृजूनकुशान्हस्तयोःकृत्वासतिलमुदकंपाणिभ्यामादायदक्षिणामुखावाग्यताः-
पितृतीर्थेनभूमौपाषाणेवाएकैकमंजलिंतिस्त्रस्तिस्रोवाआर्द्रवाससएवगोत्रस्यअमुकप्रेतस्यदाहजनिततापोपशमनार्थंअश्मोप-
रितिलतोयांजलिरुपतिष्ठतु ॥ इतिसकृत्त्रिर्वाअंजलिंत्यक्त्वापुनस्तथैवस्नानंकुर्युः ॥ जलांजलिंतुसगोत्राःस्त्रियोपिदद्युः ॥

अथसंक्षेपतःसहगमनविधिः ॥ तत्रविशेषोलिख्यते ॥ भर्तुर्मरणसमयेआत्मनःप्राणान्संकल्प्यइदंवदति ॥ देवैःसपादितोमह्यंपतिस्त्वंसर्वदैवतं ॥ त्वयासहगमिष्यामिभर्तात्वंचाग्रजन्मनि ॥ इतिमनसासंकल्प्यस्नानंकुर्यात् ॥ शक्त्यातिलधेन्वादिदानं ॥ देशकालौस्मृत्वाभर्त्रासहगमनाधिकारासिद्ध्यर्थंतिलधेनुदानंकरिष्ये ॥ तदंगंब्राह्मणवरणं ॥ द्रोणपरिमितान्तिलान्वंशपात्रेकृत्वाब्राह्मणायदद्यात् ॥ तत्रमंत्रः ॥ तिलाःश्वेतास्तिलाकृष्णास्तिलागोमूत्रसंभवाः ॥ तिलधेनुस्वरूपेणसत्वमार्गप्रदायकाः ॥ अतस्तेषांप्रदानेनगाढंसत्वंममास्तुवै ॥ इमांतिलधेनुंअमुकशर्मणेब्राह्मणायतुभ्यमहंसंप्रददे ॥ दानसांगतासिद्ध्यर्थंदक्षिणां० ॥ ततोबंधून्समस्तान्प्रणम्यहस्तेजलमादायदेशकालौस्मृत्वाआत्मनोभर्तुश्चैतज्जन्मजन्मांतरपरंपराजितसर्वपापक्षयद्वाराश्रीलक्ष्मीनारायणप्रीतयेपुराणोक्तानेकफलप्राप्तयेमृतेभर्तरिचान्वारोहणंकरिष्ये ॥ तदंगतयाविहितंहरिद्राकुंकुमांजनादिसौभाग्ययुतवंशपात्रदानंकरिष्येइतिसंकल्प्यसुवासिनीभ्यःसोपस्कराणिशूर्पाणिदद्यात् ॥ तत्रमंत्रः ॥ लक्ष्मीनारायणोदेवोबलसत्वगुणाश्रयः ॥ गाढंसत्वंचमेदेयाद्वायनैःपरितोषितः ॥ सोपस्काराणिशूर्पाणिवायनैःसंयुतानिच ॥ लक्ष्मीनारायणप्रीत्यैसत्वकामाददाम्यहं ॥ अनेनसोपस्करेणशूर्पदानेनलक्ष्मीनारायणौप्रीयेतां ॥ ततःकुंकुमांजननूतनवस्त्रालंकाराद्यैरलंकरणं ॥ पायसभाजनमाचारतः ॥ ततोबंधून्सर्वान्विसृज्यशवमग्रतःकृत्वागृहान्निर्गच्छेत् ॥ वैधव्यतामेनकदापिभूयात्पत्यावियोगोनकदापिभूयात् ॥ वंध्यात्वमेवंनकदापिचास्तुदौर्भाग्यमेवंनकदापिचास्तु ॥ इतिपठित्वानिर्गच्छेत् ॥ हस्तेनशवान्वारंभंकृत्वाश्रीरामस्मरणपूर्वकंश्मशानभूमौगच्छेत् ॥ श्मशानंनीयमानंवैभर्तारमुपयातिया ॥ पदेपदेयज्ञफलंलभतेनात्रसंशयः ॥ ततस्तीर्थेगत्वास्नानं ॥ भर्त्रासहगमनार्थंस्नानमहंकरिष्ये ॥ वस्त्रपरिधानं । अलंकरणं ॥ पुत्राद्यभावेस्वयंप्रतिनिधिनावापिंडान्दद्यात् ॥ अग्नेःसमीपमागत्यपंचरत्नानिपल्लवे ॥ नीलांजनंतथावध्वामुखेमुक्ताफलंन्यसेत् ॥ ततोग्निप्रार्थनांकृत्वामंत्रेणानेननिश्चितं ॥ स्वाहासंश्लेषनिर्विण्णसर्वगात्रहुताशन ॥ सत्वमार्गप्रदानेननयमांपत्युरंतिकं ॥ इत्यग्निप्रार्थना ॥

पतिराहिताग्निश्चेद्गार्हपत्येआज्यंसंस्कृत्यआहवनीयेआज्याहुतीर्जुहुयात्पत्नी ॥ गृह्याग्निमांश्चेद्गृह्याग्नौ ॥ अनग्निकानांलौकिकाग्नौ ॥ ततःसहग-
मनकर्त्रीवामहस्तेकुशोपग्रहंकृत्वास्रुवेणाज्याहुतीर्जुहुयात् ॥ अग्नयेतेजोधिपतयेस्वाहा १ विष्णवेसत्वाधिपतयेस्वाहा २ कालायधर्माधिपत-
येस्वाहा ३ पृथिव्यैलोकाधिष्ठात्र्यैस्वाहा ४ अद्भ्योरसाधिष्ठात्रीभ्यःस्वाहा ५ वायवेबलाधिपतयेस्वाहा ६ आकाशायसर्वाधिपतयेस्वाहा ७
कालायधर्माधिष्ठात्रेस्वाहा ८ अद्भ्यःसर्वसाक्षिणीभ्यःस्वाहा ९ ब्रह्मणेवेदाधिपतयेस्वाहा १० रुद्रायश्मशानाधिपतयेस्वाहा ११ इत्येका-
दशाहुतीर्हुत्वाकुर्यादग्नेःप्रदक्षिणां ॥ ततःशिलांसोपस्करांसंपूज्यतामारुह्य फलपुष्पांजलिंगृहीत्वाग्निंप्रार्थयेत् ॥ त्वमग्नेसर्वभूतानामंतश्चरसिसा-
क्षिवत् ॥ त्वमेवदेवजानीषेनविदुर्यानिमानुषाः ॥ अनुगच्छामिभर्तारंवैधव्यभयपीडिता ॥ सत्वमार्गप्रदानेननयमांभर्तुरंतिकं ॥ मंत्रमुच्चार्य
शनकैःप्रविशेच्चहुताशनं ॥ तांप्रेतस्योत्तरतःस्थितांदेवरःशिष्योवानमस्कृत्यकरेधृत्वासत्वरहितामुत्थापयेत् ॥ सत्वाधिकांतुसुहृद्दद्यात् ॥ चिति-
स्थोभगवानग्निर्विष्णुरूपीसनातनः ॥ पतिलोकप्रापणार्थंगृहाणार्घ्यंनमोस्तुते ॥ ॥अथस्तुतिः॥ त्वंब्रह्मात्वंचवैविष्णुस्त्वंरुद्रस्त्वंप्रजापतिः ॥ त्वं
सूर्योवसवश्चाष्टौपरमात्मात्वमेवहि ॥ त्वमेवशरणंविष्णोशरणंतुपतिर्मम ॥ स्वर्गेवानरकेत्वंहियत्रयत्रगमिष्यसि ॥ तत्रतत्रह्यहंपृष्ठलग्नाभ्येष्यामि-
माशुचः ॥ ब्रह्महत्यादिभिःपापैस्त्वांरक्षामियमालयात् ॥ अहंब्रह्माअहंविष्णुरहंवैसूर्यदिक्पतिः ॥ आदित्यचंद्रावनिलोनलश्चद्यौर्भूमिरापोहृद-
यंयमश्च ॥ एतेचसर्वेममसाहसेनतुष्यंतुतेदेववराश्चसर्वे ॥ सप्तप्रदक्षिणाःकृत्वाततश्चितारोहणं ॥ प्रवेशमंत्रः ॥ इदंशरीरंसकलंमदीयंदग्ध्वाकृ-
शानोकुरुभव्यमाशु ॥ तथाचभर्तुःकुरुदिव्यदेहंभर्तुःसमीपंभगवन्व्रजामि ॥ किंमयानकृतंसाधुभवेद्यादितवानघ ॥ इदंशरीरमालिंग्यप्रविशा-
मिहुताशनं ॥ इत्यग्निंप्रविशेत् ॥ इतिसहगमनप्रयोगः ॥

सूतिकामरणेविशेषः ॥ सूतिकायांमृतायांकुंभेउदकंकृत्वातत्रपंचगव्यंप्रक्षिप्यआपोहिष्ठाइदमापइत्यादिपुण्यैर्भिरभिमंत्र्यब्राह्मणानुज्ञया

पंचदशप्राजापत्यान्कृत्वा तेनकुंभोदकेनशतकृत्वस्तांस्नापयित्वा वस्त्रांतरेणसर्वांवेष्टयित्वादाहःकार्यः ॥ **रजस्वलामरणेप्येवं** ॥ उदक्या-सूतिकावापियंप्रेतंस्पृशंतितस्याप्येषएवविधिः ॥ सूतिकायारजस्वलायाश्चविदेशमरणेतत्रप्रायश्चित्तस्नानादिकंविनैवदाहेकृते तदस्थांप्रायश्चित्तपूर्विकांपंचगव्यस्नापनादिभिःशुद्धिंविधायकृष्णाजिनेनिधानादियथोक्तोदाहःकार्यः ॥ बुद्धिपूर्वांगृहनृणांक्रियालोपोविधीयते ॥ तेषामेवचसंस्कर्तुर्दोंपश्रुतिरुदाहृता ॥ दाहयित्वाशवंतेषांशूद्रैरेवविधर्मकं ॥ इतिदेवयाज्ञिकोक्तःसूतिकारजस्वलामरणविधिः ॥ ॥ **रजस्वलायास्तुवृद्धशातातपः** ॥ रजस्वलायाःप्रेतायाःसंस्कारादीनिनाचरेत् ॥ ऊर्ध्वंत्रिरात्रात्स्नातायांशवधर्मेणदाहयेत् ॥ अतःप्रक्षाल्यकाष्ठवद्दग्ध्वात्यहोर्ध्वंमंत्रवद्दहेत् ॥ **संकटेतुमदनरत्नेस्मृत्यंतरे**—उदक्यासूतिकावापिमृतास्याद्यदितांतदा ॥ आशौचेत्वनतिक्रांतेदाहयेदंतरायदि ॥ उद्धृतेनतुतोयेनस्नापयित्वातुमंत्रतः ॥ आपोहिष्ठेतितिसृभिर्हिरण्यवर्णाश्चतसृभिः ॥ पवमानानुवाकेनयदंतीतिचसप्तभिः ॥ ततोयज्ञपवित्रेणगोमूत्रेणाथतांद्विजाः ॥ स्नापयित्वान्यवसनेनाच्छाद्यशवधर्मतः ॥ दाहादिकंततःकुर्यात्प्रजापतिवचोयथा ॥ यज्ञपवित्रमापोअस्मानिति ॥ **मिताक्षरायां**—पंचभिःस्नापयित्वातुगव्यैःप्रेतांरजस्वलां ॥ वस्त्रांतरावृतांकृत्वादाहयेद्विधिपूर्वकं ॥ **प्रमादेनमृतानां गृह्यकारिकायां**—अंतरिक्षमृतायेचवह्नावप्सुप्रमादतः ॥ उदक्यासूतिकादीनांचरेच्चांद्रायणत्रयं ॥ ततोयवपिष्टेनानुलिप्याष्टोत्तरशतशूर्पोदकैःसंस्नाप्यभस्मगोमयमृत्कुशोदकपंचगव्यशुद्धोदकैरापोहिष्ठापावमानीभिःसंस्नाप्यान्यवस्त्रेधृतेदहेदितिभट्टाः ॥ **अत्रप्रायश्चित्तमाहबौधायनः**—उदक्यासूतिकामृत्यौचरेच्चांद्रायणत्रयमिति ॥ **सूतिकायास्तुमिताक्षरायां**—सूतिकायांमृतायांतुकथंकुर्वंतियाज्ञिकाः ॥ कुंभेसलिलमादायपंचगव्यंक्षिपेत्ततः ॥ पुण्यर्ग्भिरभिमंत्र्यापोवाचाशुद्धिंलभेत्ततः ॥ तेनैवस्नापयित्वातुदाहंकुर्याद्यथाविधि ॥ अब्लिंगाभिर्मंत्रियाभिर्वामदेव्याभिरेवच ॥ अन्यैश्चवारुणैर्मंत्रैःसंस्नाप्यविधिनादहेत् ॥ **गृह्यकारिकायां**—सूतिकामरणेप्राप्तेसर्वौषध्यनुलेपनं ॥ असूतकीतुसंस्पृष्ट्वाशूर्पाणांचशतांक्षि-

पेत् ॥ **प्रायश्चित्तेविशेषस्तत्रैव**—सूतिकातुयदासाध्वीविस्नातामरणंगता ॥ त्रिवर्षपूर्तिपर्यंतंशुद्ध्येत्कृच्छ्रेणसर्वदा ॥ इदंचाद्यत्र्यहे ॥ सूतिकातुयदानारीरजसाचपरिप्लुता ॥ म्रियतेचेत्तुसानारीद्विवर्षंकृच्छ्रमाचरेत् ॥ इदंद्वितीयत्र्यहे ॥ सूतिकातुयदासाध्वीविस्नातामरणंगता ॥ त्रिषण्णवदिनादर्वागेकाब्देनविशुध्यति ॥ **ऊर्ध्वंतु**—सूतिकातुयदानारीप्राणांश्चैवपरित्यजेत् ॥ मासमेकावधिंयावत्त्रिभिःकृच्छ्रैर्विशुध्यति ॥

**गर्भिणीमृतौतुमदनरत्नेशौनकः**—गर्भिण्युदक्यासंस्कारंशिशुसंस्कारमेवच ॥ प्रवक्ष्यामिसमासेनशौनकोहंद्विजन्मनां ॥ गर्भिणीमरणेप्राप्तेगोमूत्रेणजलैःसह ॥ आपोहिष्ठादिभिर्मंत्रैःप्रोक्ष्यभर्तासमाश्रितः ॥ प्रेतंश्मशानेनीत्वाथोल्लिख्यसव्योदरंततः ॥ पुत्रमादायजीवंश्चेत्स्तनंदत्वासुतायहि ॥ यस्तेस्तनःशशयइत्यृचाग्रामेनिधायच ॥ उदरंचाव्रणंकुर्यात्पृषदाज्येनपूर्यच ॥ मृद्भस्मकुशगोमूत्रैरापोहिष्ठादिभिस्त्रिभिः ॥ स्नाप्यचाच्छाद्यवासोभिःशवधर्मेणदाहयेत् ॥ **तत्रैवषडशीतिमतेगद्यानि**—गर्भिण्यांमृतायांदक्षिणाशिरसंनिधायतस्यानाभिरंध्रात्सव्यमुदरंचतुरंगुलंहिरण्यगर्भःसमवर्ततेतिछित्वा गर्भश्चेदप्राणस्तंप्रक्षाल्यनिखनेत् । सयदिजीवन् । जीवत्वंममपुत्रकेत्युक्त्वाक्षेत्रियैत्वेतिपंचभिः स्नापयित्वाहिरण्यमंतर्धायभूमौनिधायव्याहृतिभिरभिमंत्र्य यस्तेस्तनःशशयइतिस्तनंपाययित्वा शिशुंग्रामंप्रापयेत् । गर्भच्छेदस्थलेशतायुधायेतिपंचाहुतीर्हुत्वाप्राणायस्वाहापूर्णेइत्यनुवाकाभ्यांव्याहृत्याचाज्यंहुत्वाभिन्नमुदरंसूत्रेणसंग्रथ्यघृतेनानुलिप्यब्राह्मणायतिलान्गांभूमिंसुवर्णंदद्यादथयथोक्तेनकल्पेनदहेत् ॥ **बौधायनेनतु**—शतायुधायेतिपंचहोमानंतरंप्रयासायायासायवियासायसंयासायोद्यासायावयासाय ॥ शुचेशोकायतपतेतपत्यैब्रह्महत्यायैसर्वस्मैइतिस्वाहांतैराहुतयोप्यधिकाउक्ताः ॥ **गृह्यकारिकायां**—यदागर्भवतीनारीसशल्यासंस्थिताभवेत् ॥ कुक्षिंभित्त्वाततःशल्यंनिर्हरेद्यदिजीवति ॥ प्रमीतंनिखनेत्तंतुप्रायश्चित्तमतःपरं ॥ सात्रयस्त्रिंशताकृच्छ्रैःशुद्ध्यतेशल्यदोषतः ॥ सगर्भदहनेतस्यागर्भजंवधपातकं ॥ प्रायश्चित्तंचरित्वातुशुध्यंतिपापकारिणः । दग्ध्वातुगर्भसंयुक्तांत्रिरब्दंकृच्छ्रमाचरेत् ॥ इतिगर्भिणीमरणविधिः ॥

अथब्रह्मचारिमरणविधिः ॥ **तत्रविधानमालायांविशेषः**—येषांकुलेब्रह्मचारीनिधनंप्राप्नुयाद्यदि ॥ तत्कुलंक्षयमाप्नोति सोपिदुर्गतिमाप्नुयात् ॥ ग्रहत्वंप्राप्नुयाद्वोपिद्रुमेऽनवरतंवसेत् ॥ तस्यापिस्वस्यवंशस्यगतिमिच्छन्महीयसीं ॥ विधानंचविधायाशुऔर्ध्वदेहिकमाचरेत् ॥ मृतस्यम्रियमाणस्यपडब्दंव्रतमाचरेत् ॥ त्रिंशद्भ्योब्रह्मचारिभ्योदद्यात्कौपीनकान्नवान् ॥ हस्तमात्राःकर्णमात्राद्दद्यात्कृष्णाजिनानिच ॥ पादुकाछत्रमाल्यादिगोपीचंदनमेवच ॥ मणिप्रवालमालाश्चब्रह्मसूत्राणिचार्पयेत् ॥ मंत्रैस्तत्तल्लिंगकैश्चब्रह्मसायुज्यसिद्धये ॥ अभावेव्रतिनःपूज्यागृहस्थाःसाधवःशुभाः ॥ एवंकृतेविधानेचविघ्नस्तस्यनजायते ॥ ॥ **ब्रह्मचारिमरणेअर्कविवाहःशौनकेनोक्तः**—ब्रह्मचारिमृतौरीतिंकथयामिसमासतः ॥ तत्रावकीर्णदेहस्यप्रायश्चित्तंप्रशांतये ॥ द्वादशाब्दंषडब्दंवाप्यब्दंशक्त्याथवाचरेत् ॥ ततोव्रतविसर्गाख्यंविधिंसम्यक्समाचरेत् ॥ अथाग्निमुपसमाधायदेशकालौस्मृत्वाअमुकगोत्रस्यामुकनाम्नोमृतस्यब्रह्मचारिणोव्रतविसर्गंकरिष्येतदंगंहिरण्येननांदीश्राद्धंकरिष्येइतिसंकल्प्यतत्कृत्वा आघाराज्यभागांतंकृत्वाआज्यंजुहुयात् ॥ पूर्वव्याहृतयश्चतस्रः ॥ ततः ॐ अग्नयेव्रतपतयेस्वाहा ॥ अग्नयेव्रतानुष्ठानफलसंपादनायस्वाहा ॥ विश्वेभ्योदेवेभ्यःस्वाहा ॥ ततःस्विष्टकृदादिसमाप्यपश्चादर्कसमीपेगत्वाअथवार्कशाखामानीयार्कविवाहःकार्यः ॥ अर्कंब्रह्मचारिणौहरिद्रयानुलिप्यपीतसूत्रेणावेष्ट्यवस्त्रयुग्मेनाच्छाद्याग्निमुपसमाधाय ॥ देशकालौस्मृत्वाअमुकगोत्रस्येत्यादिऔर्ध्वदेहिकाधिकारार्थमर्कविवाहंकरिष्ये ॥ तदंगंहिरण्येननांदीश्राद्धंकरिष्येइत्याद्याघारांतंकृत्वाज्यहोमः ॥ ॐ अग्नयेस्वाहा ॥ बृहस्पतयेस्वाहा ॥ विवाहविधियोजकायस्वाहा ॥ यस्यैत्वाकामकामायवयंसम्राड्यजामहे ॥ तमस्मभ्यंकामंदत्वाथेदंघृतंपिबस्वाहा ॥ इदंकामाय० ॥ चतस्रोव्याहृतयःततःस्विष्टकृदादि ॥ अर्कशाखांब्रह्मचारिशवंचतुषाग्निनाविधिवद्दहेत् ॥ शाखांप्रवाहयेदित्यन्ये ॥ इतिब्रह्मचारिविधिः ॥ ॥ **अथकुष्टिमरणेविधिः** ॥ शृणुकुष्टगणंविप्रउत्तरोत्तरतोगुरुं ॥ विवर्णिकातुदुश्चर्मांचर्चरीयस्तृतीयकः ॥ विकर्चुर्व्रणताम्रौचकृष्णश्वेतस्तथाष्टकं ॥

इत्युक्त्वा ॥ मृतेतुप्रापयेत्तीर्थंमथवातरुमूलकं ॥ नपिंडंनोदकंकार्यंनचदानक्रियांचरेत् ॥ षण्मासीयस्त्रिमासीयोमृतःकुष्ठीकदाचन ॥ यदि-स्नेहाच्चरेद्दाहंयतिचांद्रायणंचरेत् ॥ अकृतप्रायश्चित्तकुष्ठ्यादिदाहेत्र्यब्दंप्रायश्चित्तं ॥ अतएवकुनख्यादिवत्कुष्ठिनोपिद्वादशरात्रंशूलपाणिनोक्तं एवमेवान्यकुष्ठिनांमरणांतमाशौचमुक्तं ॥ **कौर्मे**—क्रियाहीनस्यमूर्खस्यमहारोगिणएवच ॥ यथेष्टाचरणस्याहुर्मरणांतमशौचकं ॥ **महारोगास्तु**—यक्ष्मवानश्मरीकुष्ठमेहोदरभगंदराः ॥ अर्शांसिग्रहणीत्यष्टौमहारोगाःप्रकीर्तिताःइति ॥ इतिकुष्ठिमरणविधिः ॥

**अथपंचकमरणविधिः** ॥ आदौकृत्वाधनिष्ठार्धमेतन्नक्षत्रपंचकं ॥ रेवत्यंतंसदापुष्यमशुभंसर्वदाभवेत् ॥ बालस्यवाथवृद्धस्यपंचकेषुमृतस्यच ॥ विधानंयोनकुर्वीततस्यविघ्नंप्रजायते ॥ दाहस्तत्रनकर्तव्योविषादःसर्वजातिषु ॥ नजलंदीयतेतेषुत्वशुभंसर्वदाभवेत् ॥ पंचकानंतरंकार्यंकर्तव्यंसर्वमन्यथा ॥ पुत्राणांगोत्रिणांतस्यसंतापोह्युपजायते ॥ गृहेहानिर्भवेत्पृष्टेऋक्षेष्वेपुमृतस्तुयः ॥ पंचकानंतरंकार्यंप्रेतदाहादिकंखलु ॥ अथवातद्दिनेकार्योदाहस्तुविधिपूर्वकं ॥ **ब्रह्मपुराणे**—धनिष्ठापंचकेजीवोमृतोयदिकथंचन ॥ पुष्करेयाम्यभेजीवोकुलजंमारयेद्ध्रुवं ॥ तत्रारिष्टविनाशार्थविधानंससुदीर्यते ॥ दाहदेशंशवंनीत्वास्नापयेत्प्रयतःशुचिः ॥ दर्भैस्तुप्रतिमाःकार्याःपंचवैसूत्रवेष्टिताः ॥ यवपिष्टेनातुलिप्तास्ताभिःसहशवंदहेत् ॥ प्रेतवाहःप्रेतसखःप्रेतपःप्रेतभूमिपः ॥ प्रेतहर्तापंचमस्तुनामान्येतानिचक्रमात् ॥

**तत्रप्रयोगः ॥ देशकालौस्मृत्वा गोत्रस्यामुकप्रेतस्यधनिष्ठापंचकमरणजनितवंशारिष्टपरिहारार्थंपंचकमरणविधिंकरिष्ये इतिसंकल्प्य । प्रतिमाःगंधाद्यैरलंकृत्य दाहसमयेप्रेतस्योपरिन्यसेत् ॥ प्रथमांशिरसि । द्वितीयांदक्षिणकुक्षौ । तृतीयांवाम-**

कुक्षौ । चतुर्थीं नाभौ । पंचमीं पादयोर्मध्ये । तेभ्यो घृताहुतीर्दद्यात् ॥ ॐ प्रेतायस्वाहा । प्रेतसखायस्वाहा । प्रेतपायस्वाहा । प्रेतभूमिपायस्वाहा । प्रेतहर्त्रेस्वाहा ॥ ततोविधिनाशवंदहेत् ॥

अथपंचकशांतिः । सूतकांतेततःकुर्याद्विधिनाशांतिकंतथा ॥ अन्यथानगतिस्तस्यप्रेतपुत्रस्यशोभनं ॥ स्वगृह्योक्तविधानेनकृत्वाग्निस्थापनंततः ॥ अभिध्यानंनिर्वपणंदेवतानांतथाशृणु ॥ वसवोवरुणश्चैवअजैकपात्तृतीयकं ॥ अहिर्बुध्नश्चतुर्थंचपूषणंपंचमंतथा ॥ यमायधर्मराजायमृत्यवेचांतकायच ॥ वैवस्वतायकालायसर्वभूतक्षयायच ॥ औदुंबरायदध्नायनीलायपरमेष्ठिने ॥ वृकोदरायचित्रायचित्रगुप्तायवैनमः ॥ अघोरोरुद्रमंत्रंचनिर्वापयेत्क्रमेणच ॥ विधिनाश्रपणंकृत्वाएकैकामाहुतिंहुनेत् ॥ कुंडादीशानदिग्भागेस्थंडिलंहस्तमात्रकं ॥ तत्रवस्त्रंसमास्तीर्यस्थाप्यवस्त्रादिपंचकं ॥ चतुर्दशयमांश्चैवअघोरंस्थापयेत्पुनः ॥ अव्रणान्कलशांस्तत्रदिक्षुचत्वारिविन्यसेत् ॥ कलशःपंचमोमध्येस्थापयेद्विधिपूर्वकं ॥ उच्चार्यवारुणंमंत्रंपूरयेत्तीर्थवारिणा ॥ मध्येसर्वौषधीःक्षिप्त्वामृद्दूर्वापल्लवांस्तथा ॥ हिरण्यफलसंयुक्तंवस्त्रेणावेष्टयेत्ततः ॥ अभिषेकोत्तरंतत्रकुर्यादाज्यावलोकनं ॥ वस्त्रंचैवपरित्यज्यरुद्रभक्तिविशेषतः ॥ ब्राह्मणान्भोजयेत्पश्चात्पायसंमधुसर्पिषा ॥ एवंयःकुरुतेपुत्रशुभंतस्यप्रजायते ॥ विधानंयोनकुर्वीतविघ्नस्तस्यभवेत्सदा ॥ तस्मात्सर्वप्रयत्नेनशांतिंकुर्याद्यथाविधि ॥ कृत्वातुगोत्रजाःसर्वेसुखिनःस्युर्निरामयाः ॥ भवंतिनात्रसंदेहोनात्रकार्याविचारणा ॥ इतिब्रह्मपुराणोक्तापंचकशांतिः ॥

अथप्रयोगः ॥ तीर्थेगत्वा स्नानं । शुद्धवस्त्रपरिधानं । देशकालौस्मृत्वा । अपसव्यं । गोत्रस्यअमुकप्रेतस्यपंचकमरणजनितदोषोपशांत्यर्थंसव्यंममगृहेसपरिवारस्यआयुरारोग्यसुखश्रीप्राप्त्यर्थंविष्णुपूजनपूर्वकंपंचकविधानंकरिष्ये ॥ विष्णोःषोडशोपचा-

रैः पूजनं॥स्थंडिलेपंचभूसंस्कारान्कृत्वाऽग्निस्थापनं॥स्थंडिलादीशान्येपंचकलशस्थापनं ॥ तेषामुपरिपंचनक्षत्रदेवतानांस्वर्णमयमूर्तीनांअग्न्युत्तारणपूर्वकंस्थापनं॥वसोःपवित्रमसि०वसुभ्योनमःवसूनावाहयामीतिवसुस्थापनं ॥ वरुणस्योत्तंभनं०वरुणस्थापनं॥उतनोहिर्बुध्न्य०इतिअजैकपादं॥शिवोनामासि०अहिर्बुध्न्यं ॥ पूषतवव्रते०पूषणंआवाहयेत्॥आवाहनमंत्रैःषोडशोपचारपूजाकार्या ॥ तत्पार्श्वेऽक्षतपुंजोपरियमादिचतुर्दशदेवतास्थापनं ॥ यमायनमः यमंआवाहयामि १ धर्मराजाय० २ मृत्यवे० ३ अंतकाय० ४ वैवस्वताय० ५ कालाय० ६ सर्वभूतक्षयाय० ७ औदुंबराय० ८ दध्नाय० ९ नीलाय० १० परमेष्ठिने० ११ वृकोदराय० १२ चित्राय० १३ चित्रगुप्ताय० १४। ईशान्येअघोरमंत्रेणाघोरस्थापनं ॥ सर्वेषांप्रत्येकंसहवापूजनं ॥ पंचकलशेषुपंचसूक्तजपः। प्रथमकलशेराक्षोघ्नं। द्वितीयेविभ्राट्। तृतीये अप्रतिरथं। चतुर्थेरुद्राध्यायः। पंचमेऋचंवाचं। षडंगरुद्रजपोवा ॥ दक्षिणतोब्रह्मासनमास्तीर्येत्यादिचरुंश्रपयित्वा आज्यभागांतंकृत्वावस्वादिपंचदेवतानांप्रत्येकंसमिच्चरुतिलाज्यद्रव्यैरष्टोत्तरशतमष्टाविंशतिरष्टौवाजुहुयात्॥ ततःस्थापितदेवतानामुत्तरपूजनंकार्यं ॥ ततःस्विष्टकृदादिप्रणीताविमोकांतंकृत्वाआचार्यायमूर्तीनांदानं। षड्ब्राह्मणभोजनसंकल्पः। पंचकलशोदकेनयजमानाभिषेकःस्नानंच। मंत्राः ॥ शन्नोमित्रः० अहानिशं० शन्नइंद्राग्नी० शन्नोदेवी० इति ॥ स्नानवस्त्रत्यागः ॥ अथपंचकदानानि ॥ पयस्विनीगौः। महिषीसप्तधान्यसहिता। सहिरण्यंतिलसहितंकृष्णवस्त्रं। सहिरण्यंघृतं। कांस्यपात्रस्थेआज्येमुखावलोकनं। भूयसीदानं। पंचामृतेनशिवपूजनं ॥ अष्टोत्तरशतमृत्युंजयमंत्रजपः ॥ परिपूर्णता ॥ अनेनकृतेनपंचकविधानेनअपसव्यंगोत्रस्यप्रेतस्य-

पंचकमरणजनितदोपनिवृत्तिरस्तु ॥ सव्यं । ममगृहेसकलदुरितोपशांतिरस्तु ॥ यस्यस्मृत्येतिविष्णुंसंस्मरेत् ॥ इतिपंचकविधानं ॥ अस्मिन्पंचकविधानेदशसहस्रतिलाहुतीर्जुहुयाद्व्याहृतिमंत्रेणेतिब्रह्मपुराणेउक्तं । तच्चशक्तिश्चेत्कर्तव्यं अकृतेनदोषः ॥

त्रिपादस्मृतिशांतिः ॥ त्रिपादर्क्षेमृतेतद्वद्धिरण्यशकलंमुखे ॥ न्यस्यपिष्टमयंकुर्यात्पुत्तलत्रितयंततः ॥ होमप्रतिमुखंतत्रभवेद्वहवपामिति ॥ ततोनिर्हरणंकुर्यादेवंसाग्नेर्विधिःस्मृतः ॥ कुर्याच्चत्रितयंपिष्टमयंसाग्नेर्मृतांस्त्रियं ॥ हरिद्रांबरसंछन्नांनिर्हरेयुःसुतादयः ॥ इतरेनिखनेदेवंजलेवाप्रतिपादयेत् ॥ त्रिपादभद्राभौमेज्यत्रियोगःस्यात्त्रिपुष्करः ॥

अथप्रयोगः ॥ देशकालौसंकीर्त्य अपसव्यं गोत्रस्यअमुकप्रेतस्यत्रिपादर्क्षमरणजनितदोषोपशांत्यर्थंत्रिपादर्क्षमरणविधिं करिष्ये ॥ इतिसंकल्प्ययवपिष्टेनपुत्तलत्रयंकृत्वा गंधमाल्यैःप्रतिमाअलंकृत्य दाहसमयेप्रेतोपरिन्यसेत् ॥ प्रथमांशिरसि । द्वितीयांहृदये । तृतीयांनाभौ ॥ तदुपरिघृताहुतीर्जुहुयात् ॥ प्रेतवाहायस्वाहा ॥ प्रेतसखायस्वाहा ॥ प्रेतपायस्वाहा ॥ एकादशेहनितीर्थेगत्वास्नानं ॥ अपसव्यं ॥ गोत्रस्यअमुकप्रेतस्यत्रिपादर्क्षजनितदुर्मरणदोषोपशांत्यर्थंसव्यंममसपरिवारस्यआयुरारोग्यसुखश्रीप्राप्त्यर्थंविष्णुपूजनपूर्वकंत्रिपादर्क्षशांतिंकरिष्ये ॥ विष्णोःषोडशोपचारैःपूजा ॥ स्थंडिलेपंचभूसंस्कारान्कृत्वाऽग्निस्थापनं ॥ ईशान्येकलशत्रयस्थापनं ॥ तेषामुपरिसुवर्णमूर्तयस्तिस्रःस्थाप्याः ॥ वसोःपवित्रमसि०वसुभ्यो नमःवसूनावाहयामि ॥ वरुणस्योत्तंभनं० वरुणाय० वरुणं ॥ उतनोहिर्बुध्न्यः० अहिर्बुध्न्याय० अहिर्बुध्न्यं० ॥ षोडशोपचारैःपूजयेत् ॥ कलशत्रयेषुत्रीणिसूक्तानिजपेत् ॥ प्रथमकलशेकृणुष्वपाजः० ॥ द्वितीयेविभ्राट्० ॥ तृतीये आशुः

शिशानः० ॥ ततोदक्षिणतोब्रह्मासनमास्तीर्येत्यादिचरुंआज्यभागांतंप्रकृतिवत् ॥ ततःसमिच्चरुतिलाज्यद्रव्यैःस्थापितदेवतानांप्रत्येकमष्टोत्तरशतमष्टाविंशतिरष्टौवाजुहुयात् ॥ होमांतेस्थापितदेवतानांउत्तरपूजनं ॥ स्विष्टकृदादिअभिषेकांतंपूर्ववत् ॥ ब्राह्मणभोजनसंकल्पः ॥ देवताविसर्जनं ॥ ततोदानादिदद्यात् ॥ त्रिपादनक्षत्रमृतस्यहिरण्यंदद्यात् ॥ रव्यंगारकगुरुवाराणामेकस्मिन्वारेमृतस्यवस्त्रंदद्यात् ॥ इतित्रिपादविधिः ॥ प्रेतदीपिकायां । दाहोत्तरंउदकदानात्प्राक्प्रेतस्यदाहजनिततापोपशमनार्थं दहनश्राद्धं अमुष्यलोकात्प्रेतलोकंगच्छतःपथपरिव्ययार्थं नग्नप्रच्छादनश्राद्धं तथापथिक्षुधोपशमनार्थंपाथेयश्राद्धंकुर्यादित्युक्तं । हरिहरमिश्रपद्धत्यादिपुतुनोक्तमेतदितिज्ञेयं ॥

अथमृतस्यप्रथमदिनकृत्यं ॥ तत्रादौक्षौरनिर्णयः ॥ तच्चसर्वैःपुत्रैःकार्यं । गंगायांभास्करक्षेत्रेमातापित्रोर्गुरोर्मृतौ ॥ आधानेसोमयागेचवपनंसप्तसुस्मृतमितिमिताक्षरायांस्मृतेः ॥ गंगायांभास्करक्षेत्रइतितीर्थमात्रोपलक्षणं । उभयोपादानंतुतीर्थेषुमुख्यत्वात् । मातृशब्दोजनन्यामेवमुख्यइतिमातृगोत्रनिर्णयेप्रागेवोक्तं । सपत्नीपुत्रस्यमुख्यगौणपुत्रेष्वनंतर्भावः । श्राद्धाद्यधिकारिनिर्णयेद्वादशविधपुत्राभावेमनुनासपत्नीपुत्रस्यपाठात् । तथा जीवत्पितृकनिर्णये ।मुंडनपिंडदानप्रेतकर्माणिजीवत्पितृकस्यान्यत्रापिभवंति । यथाअपुत्रपितृव्यमरणेअपुत्रसापत्नमातृमरणेअपुत्रमातामहमरणेच । भ्रातृणामेकजातानां० पुत्रिणोमनुरब्रवीत् ॥ सर्वासामेकपत्नीनां० पुत्रिण्योमनुरब्रवीदितिमनुवचनेभ्रातृपुत्रसपत्नीपुत्रयोःपुत्रत्वातिदेशात् । यथाव्रतस्थोपिसुतःपितुःकुर्यात्क्रियांनृप ॥ उदकाद्यांमहाबाहोदौहित्रोपितथार्हतीतिमत्स्यपुराणेदौहित्रस्यसाक्षादुपदेशात् । अपुत्रपितृव्यमरणेभ्रातृपुत्रस्य अपुत्रसापत्नमातृमरणेसपत्नीपुत्रस्य अपुत्रमातामहमरणेदौहित्रस्यचमुंडनंनभवति ।

क्रियामात्रविधानात्इति ॥ **धर्माब्धौ**—दत्तकस्यपूर्वापरयोर्मात्रोःपित्रोर्मृतौक्षौरं ॥ **सिंधौ**—देशांतरगतानांचपुत्राणांतुकथंभवेत् ॥ श्रुत्वा-तुवपनंकार्यंदशाहांतंतिलोदकं ॥ ततःसपिंडीकरणंकुर्यादेकादशेऽहनि ॥ द्वादशेऽहनिकर्तव्यमितिशातातपोऽब्रवीदिति ॥ **भर्तुर्मरणेरेणुः**—पत्नीचवपनंकुर्यादितिव्यासेनभाषितमिति ॥ रात्रौमरणेतु**संग्रहे**—रात्रौदग्ध्वातुपिंडांतंकृत्वावपनवर्जितं । वपनंनेष्यतेरात्रौश्वस्तनीवपनक्रियेति । क्षौरनिर्णयः ॥

**अथ नव(विषम)श्राद्धनिर्णयः** । तत्रप्रथमंनवश्राद्धविधिरुच्यते **गदाधरभाष्ये**—प्रथमेऽह्नितृतीयेचपंचमेसप्तमेतथा । नवमैकादशेचैवतन्नवश्राद्धमुच्यते । **शिवस्वामी**—नवश्राद्धानिपंचाहुराश्वलायनशाखिनः । आपस्तंबाःषडित्याहुर्विभाषात्वैतरेयिणां । पंचपक्षेएकादशाहेनवश्राद्धंनकार्यं । नवश्राद्धान्येवविषमश्राद्धानीत्युच्यंते । **पारस्करः**—एकादश्यामयुग्मान्ब्राह्मणान्भोजयित्वामांसवत्प्रेतायोद्दिश्यगामप्येकेघ्नंतीति । नद्यंतरेनावंकुर्यान्नवेतिच । एकादश्यांएकादशेऽहनि । मांसवन्मांसेनसहितं । नावंनवश्राद्धार्थं । नद्यंतरइतिगोपशोःप्रदेशविधानं । नवेतिनवश्राद्धार्थोगोपशुर्वैकल्पिकइतिसूत्रार्थः । **रेणुः**—अमंत्रकाणिपंचस्युर्नवश्राद्धानियानिवै । षष्ठंसमंत्रकंतत्रकलिकातोब्रवीत्स्फुटं ॥ नवश्राद्धानिसर्वाणिकुप्रेतत्वविमुक्तये । इतिवृद्धवसिष्ठोक्तेरेकोद्दिष्टविधानतः । पिंडनिर्वपणार्थंवैचरुश्रपणमत्रतु । अनूदकमधूपंचगंधमाल्यविवर्जितं । नवश्राद्धममंत्रंचस्वधाकारविवर्जितं । अन्नान्नविकिरंभूमौगृह्णीयान्नाशिषोत्रतु । पात्रालंभोनचाक्षय्यंपिंडोदकविवर्जितं । रहितंप्रेतशब्दवत् । नवश्राद्धंगृहेकार्यंभार्यायत्राग्रयोपिवा । प्रथमाहादिषुप्रोक्तमितिपैठीनसेर्वचइति । उदकमर्घः । पिंडोदकमवनेजनप्रत्यवनेजनोदकं । अधूपंचगंधमाल्यविवर्जितमिति पिंडपूजनंनेत्यर्थः । चरुश्रपणमत्रतु इदंसंभवे । अन्यथाआमेन । प्रेतकर्मणि सपिंडीकरणात्प्राक् नीवीबंधविसर्गौनभवतः । नीविःपितॄणामितिश्रुतेःप्रेतस्यापितृत्वात् । नावाहनमितिसूत्रादा-

वाहनाभावः । अनूदकमितिअर्घेनिषिद्धेपिएकोऽर्घइतिसूत्रादर्घोभवत्येव । सचामंत्रमितिनिषेधात्अमंत्रोभवति । एकंपवित्रमितिसूत्रादेकंपवित्रं । नाग्नौकरणमितिसूत्रादग्नौकरणंन । स्वदितमितितृप्तिप्रश्नइतिसूत्रात्तृप्तिप्रश्नः । उपतिष्ठतामित्यक्षय्यस्थानेइतिसूत्रादक्षय्योदकदानं । अभिरम्यतामितिविसर्गइतिसूत्राद्विसर्जनंचभवति । प्रथमंनवश्राद्धंपश्चादवयवपिंडदानं । प्रथममवयवपिंडदानंपश्चान्नवश्राद्धंवा । **विघ्नेतुकण्वः**—नवश्राद्धंमासिकंचयद्यदंतरितंभवेत् । तत्तदुत्तरसातंत्र्यादनुष्ठेयंप्रचक्षते । **रेणुः**—उत्कृष्यतेनवश्राद्धंयदितत्प्रथमाह्निकं । एकादशेऽह्निकुर्वीतसर्ववर्णेष्वयंविधिः । **शावेआशौचांतरप्राप्तौहेमाद्रौमाधवः**—शावेतुसूतकंचेत्स्यान्निशायांचमृतौतथा । नंवश्राद्धानिदेयानियथाकालंयथाक्रमं ॥ सहगमनेतु—नवश्राद्धानिसर्वाणिसपिंडीकरणंपृथक् । एकएववृषोत्सर्गोगौरेकातत्रदीयते ॥

**अथावयवपिंडदानं।पारस्करः**—अमाश्संप्रेतायपिंडंदत्वाऽवनेजनदानप्रत्यवनेजनेपुनामग्राहमिति । प्रेतायपिंडमवयवपूरकंदत्वेतिहरिहरमिश्राः । **रेणुः**—दातव्योनुदिनंपिंडःशरीरावयवार्थतः । तूष्णींप्रसेकंगंधंचपुष्पंधूपंसदीपकं । तिलैःसर्पिर्मधुक्षीरैःफलमूलैर्गुडैरपि । अर्घैरूर्णामयैःशुद्धैर्वासोभिःपिंडमर्चयेत् । गृहेपिंडाःप्रदातव्यानदीकूलेऽथवाध्रुवं । वृक्षमूलेतडागेवायत्रवारोचतेमनः । शालिनासक्तुभिर्वापिगुडमूलफलादिभिः । प्रथमेऽहनियद्द्रव्यंतदेवस्यादृशाहिकं । यत्रैकोदीयतेपिंडस्तत्रसर्वंसमाप्यते । **रेणुः**—अन्यगोत्रोह्यसंबंधःप्रेतस्याग्निंददातियः । पिंडंचोदकदानंचसदशाहंसमापयेत् । **सिंधौ**—सपिंडेनदशपिंडेप्रक्रांतेपुत्रागमेपिसनदद्यात् । असगोत्रःसगोत्रोवायदिस्त्रीयदिवापुमान् । यश्चाग्निदाताप्रेतस्यपिंडंदद्यात्सएवहिइतिप्रागुक्तेः । क्रियाकर्तुर्नाशेअन्येनशेषःसमापनीयः । एवंक्रियाप्रवृत्तानांयदिकश्चिद्विपद्यते । तद्बंधुनाक्रियाकार्यासर्वैर्वासहकारिभिरितिशुद्धितत्त्वेबृहस्पतिस्मृतेः । पत्न्याःकर्तृत्वेरजोदर्शनेचतदंतेकुर्यात् । शावाद्विगुणमार्तवमित्युक्तेः । आशौचांतेआर्तवेकर्तुरस्वास्थ्येचान्येनक्रियासर्वावर्तनीया । कर्तुर्विपर्ययात्कालातिक्रमयोगाच्चेति । उत्तरीयशिलापात्रकर्तृ-

द्रव्यविपर्यये । पूर्वंदत्तांजलीन्दद्यात्पूर्वांपिंडांस्तथैवचेति । एतदन्यतमव्यत्ययेयतोव्यत्ययस्ततःपुनरावृत्तिः । शिलाविपर्ययेपिघटस्फोटादेर्नावृत्तिरित्युक्तेलौकिकःशिलाग्रहणं । तेनपिंडदानतिलांजल्यादिकस्यैवावृत्तिर्नदाहस्येतिधर्मसिंधुः । उत्तरीयंतुअंत्यकर्मणिकातीयनिबंधेपुकुत्रापिनोपलब्धं । **सिंधौ**—आशौचस्यचह्रासेपिपिंडान्दद्याद्दशैवतु । **रेणुः**—यत्रत्रिरात्रमाशौचंतत्राद्येत्रीन्प्रदापयेत् । चतुरस्तुतृतीयेह्निद्वितीयेत्रींस्तथैवतु । **सिंधौ**—सद्यःशौचेप्रदातव्याःसर्वेपियुगपत्तथा । इतिअवयवपिंडदानं ॥

**दशाहमध्येदर्शपातेनिर्णयः** ॥ धर्माब्धौपिंडदानादौप्रारब्धेयदिमध्येदर्शप्राप्तिस्तदामातापितृव्यतिरिक्तानांसर्वंदशाहकृत्यमाकृष्यदर्शएवसमापनीयं । मातापितृविपयेतुत्र्यहमध्येदर्शपातेनापकर्षः । त्रिरात्रात्परंदर्शपातेतुपित्रोरपिसर्वंदर्शएवसमापनीयमितिकेचित् । अन्येतुत्रिरात्रोर्ध्वमपिदर्शपातेऔरसपुत्रेणपित्रोस्तंत्रसमाप्तिर्नकार्येत्याहुः । अत्रदेशाचाराद्व्यवस्थाइतिसिंध्वादयः । यदिदैवाद्दर्शात्पूर्वंपिंडदानादितंत्रंनारब्धंतदादाहमात्रेसमंत्रकेजातेपिनदर्शेतंत्रसमाप्तिनियमइतिभाति । दर्शोत्तरमेवतंत्रारंभसमाप्तिसंभवेनद्विरैंदवेतुकुर्वाणःपुनःशावंसमश्नुतइत्युक्तदोषाप्रसक्तेः । एवंदर्शेऽपकृष्यतंत्रसमाप्तावपिअग्निपिंडदातुर्दशाहमाशौचमस्त्येव । पुत्रादेःसपिंडस्यतुसुतरामितिदशाहमध्येदर्शपातेनिर्णयः ।

**अथांजलिदानं** ॥ दश १० पंचपंचाशत् ५५ शतं १०० अंजलयः । इतिपक्षत्रयं । रेणुः—तोयपूर्णांजलीन्दद्यात्पाषाणेपितथादश ॥ यद्वाशौचदिनेष्वत्रप्रत्यहंदिनसंख्यया । शतांजलयएवस्युरथवादिपुराणतः । एकस्तोयांजलिस्त्वाद्येयत्रएकंचदीयते । द्वितीयेद्वौतृतीयेत्रींश्चतुर्थेचतुरस्तथा । पंचमेपंचषट्षष्ठेसप्तमेसप्तचैवहि । अष्टमेष्टौचनवमेनवैवनवमेदश । एवंस्युःपंचपंचाशत्तोयस्यांजलयःक्रमात् । तोयपात्राणितावंतिसंयुक्तानितिलादिभिः । एकंत्रीन्पंचसप्तापिनवैकादशचक्रमात् । त्रयोदशतथापंचदशसप्तदशांजलीन् । एकोनविंशतिस्पष्टान्क्रमाद्दध्याकृतांजलीन् । यत्रत्रिरात्रमाशौचंतत्राद्येत्रीन्प्रदापयेत् । चतुरस्तुतृतीयेऽह्निद्वितीयेत्रींस्तथैवतान् । दशांजलयएवस्युःश-

तांजलय एववा । तत्राद्येंजलयस्त्रिंशत्तृतीयेत्रिंशदेवतु । चत्वारिंशद्द्वितीयेऽह्निशतांजलिविधिःक्रमात् । सद्यःशौचेपिसद्यःस्युःपिंडदानोदकानि चेति । इत्यंजलिदानम् ॥

अथप्रयोगः । स्नानं । अहतार्द्रवासोद्वयपरिधानं । आचमनं । तूष्णींप्राणायामः । पवित्रधारणं । देशकालसंकीर्तनं । अपसव्यं । अमुकगोत्रस्यअमुकनाम्नःप्रेतस्यकुप्रेतत्वविमुक्त्यर्थंप्रथमेऽहनिविषमश्राद्धंकरिष्ये । इहलोकंपरित्यज्येतिकुशबटुग्रंथिबंधनं । कुशोसीतिकुशबटुस्थापनं । कुशबटोरुपरि । अमुकगोत्रअमुकनामन्प्रेतअयंतेक्षणउपतिष्ठतु । एवमग्रेसर्वत्र । इदंतेपाद्यमुपति० । इदंतेआसनमु० । अयंतेऽर्घउप० । इदंतेऽन्नमुप० । इदंतेआमंवोप० । प्रेतस्वदितं इतितृप्तिप्रश्नः । सुस्वदितमितीतरे । पिंडस्याधोदर्भासनमु० । प्रथमेऽहनिविषमश्राद्धेअयंपिंडस्तवोप० । इदंतेसूत्रमुप० । तिलजलकुशानादाय । इदंतेदत्तंनवश्राद्धमुपतिष्ठतां । इतिकुशबटोरुपरिअक्षय्योदकदानं । इयंतेदक्षिणा उप० । इतिकुशबटोर्दक्षिणादानं । अभिरम्यतामितिकुशबटुविसर्जनं । अभिरताःस्मइतीतरेब्रूयुः । अनादिनि० प्रदोभव ॥ अतसीपु० विद्यतेभयं ॥ अनेनपिंडदानेनप्रेतस्यकुप्रेतत्वनिवृत्तिरस्तु । अग्रेअवयवपिंडदानेयोग्यताप्राप्तिरस्तु । पिंडंजलेक्षिप्त्वास्नायात् । इतिप्रथमेऽहनिविषमश्राद्धं ॥ ॥ अथावयवपिंडदानं । आचम्य । तूष्णींप्राणानायम्य । पवित्रधा० । देशकालौसंकीर्त्य । अपसव्यं । अमुकगोत्रस्यअमुकनाम्नःप्रेतस्यप्रेतत्वनिवृत्तयेउत्तमलोकावाप्तयेक्षुत्तृषानिवृत्त्यर्थं शिरोऽवयवनिष्पत्त्यर्थंप्रथमेऽहनिअवयवपूरकपिंडदानंअंजलिदानंचाहंकरिष्ये । तूष्णींलेखाकरणं । गोत्रनामन्प्रेतअवनेज-

नमु०। गोत्रनामन्प्रेतअद्यप्रथमेऽहनिक्षुत्पिपासानिवृत्त्यर्थंशिरोवयवनिष्पत्त्यर्थंएपतेपिंडउप०। प्रत्यवनेजनमु०। सूत्रमु०। गंधाउपतिष्ठंतां०। पुष्पमु०। धूपउ०। दीपउ०। नैवेद्यमु०। तांबूलमु०। दक्षिणाउ०। ततअश्मोपरिअंजलिदानं। गोत्रनामन्प्रेतदाहजनिततापोपशमनार्थंएपतेतिलतोयांजलिरुपतिष्ठतां। इदंतेकुशतिलतोयांजलिपात्रमुप०। इत्यंजलिदानं। प्रथमेऽहनिदशपक्षेपंचपंचाशत्पक्षेशतपक्षेचएकोंऽजलिः। एकंतोयपात्रंच। पिंडस्योत्तरतोदक्षिणसंस्थमवटत्रयकरणं। गोत्रनामन्प्रेतअध्वश्रमपरिहारार्थंप्रथमगर्तेतैलेनस्नाहि। एवमग्रे। द्वितीयगर्तेकल्कोदकेनस्नाहि। तृतीयगर्तेउष्णोदकेनस्नाहि। एभिस्तैलकल्कोष्णोदकैःप्रेतस्याध्वश्रमनिवृत्तिरस्तु। अस्यांरात्रौएकस्मिन्मृण्मयेपात्रेउदकंद्वितीयेक्षीरंकृत्वायष्ट्यादाववलंब्याकाशेधारयेत्। गोत्रप्रेतात्रस्नाहि। इदंक्षीरंपिब। इतिप्रथमदिनकृत्यं ॥

अथास्थिसंचयनं। रेणुः—प्रथमेह्नितृतीयेवासप्तमेनवमेतथा। अस्थिसंचयनंकुर्याद्दिवातद्गोत्रजैःसह। चतुर्थेवातृतीयेवादाहादित्याश्वलायनः। एकाहेसंचयेऽस्थ्नांतुत्र्यहंतत्सूतकंभवेत्। सद्यःशौचेतथैकाहेसद्यःसंचयनंभवेत्। त्र्यहाशौचेद्वितीयेह्निचतुर्थेत्वग्निहोत्रिणां। काठकश्रुतिरित्याहव्यवस्थामस्थिसंचयइति। छंदोगपरिशिष्टे—अपरेद्युस्तृतीयेवाअस्थिसंचयनंभवेदिति। अपरेद्युर्मृताहात्। द्वितीयेऽह्नीत्यर्थः। कात्यायनः—संचयनंचतुर्थ्यामिति। तत्रादावस्थिसंचयनश्राद्धं। कात्यायनः। अयुग्मान्ब्राह्मणान्भोजयित्वापलाशवृंतेनास्थीनिपरिवर्त्यपरिवर्त्यांगुष्ठकनिष्ठिकाभ्यामादायपलाशपुटेप्रास्यतीति। रेणुः—यथोक्तकालेपूर्वाह्णेएकोद्दिष्टविधानतः। सकुर्यात्संचयश्राद्धमित्याहहरिणीसुतइति ॥

अथप्रयोगः। दाहदेशंगत्वा। आच०। तूष्णींप्राणा०। पवित्रधा०। देशकालौ सं०। अपसव्यं। अमुकगोत्रस्य

अमुकनाम्नः प्रेतस्यप्रेतत्वविमुक्तयेउत्तमलोकावासयेअस्थिसंचयनश्राद्धंकरिष्ये । इहलोकमितिकुशबटुग्रंथिबंधनं । कुशोसीतिकुशबटुस्थापनं । कुशबटोरुपरि । अमुकगोत्रअमुकनामन्प्रेतअयंतेक्षणउप० । एवमग्रे । पाद्यमु० । आसनमुप० । अयंतेऽर्घउप० । इदंतेऽन्नमु० । इदमामंवोप० । पिंडस्याधोदर्भासनमु० । अस्थिसंचयनश्राद्धेअयंपिंडस्तवोप० । इदंतेसूत्रमुप० । तिलजलकुशानादाय । इदंतेदत्तंअस्थिसंचयनश्राद्धमुपतिष्ठतां । इतिकुशबटोरुपरिअक्षय्योदकदानं । इयंतेदक्षिणाउप० । इतिकुशबटोर्दक्षिणादानं । अभिरम्यतामितिकुशबटुविस० । अभिरम्यतां० । अभिरताःस्मः । अनादि० अतसीपु० । अनेनास्थिसंचयनश्राद्धपिंडदानेनप्रेतस्यप्रेतत्वनिवृत्तिरस्तु । अग्रेश्मशानवासिदेवताबलौयोग्यताप्राप्तिरस्तु । इत्यस्थिसंचयनश्राद्धं ॥ ॥ अथश्मशानवासिदेवताबलिदानं । देशकालै सं० । अपस० । गोत्रस्य अमुकनाम्नःप्रेतस्यप्रेतत्वनिवृत्तयेउत्तमलोकावासयेश्मशानवासिदेवताबलिदानंकरिष्ये । ततःकर्त्रासहसर्वेगोत्रजाः । प्राचीनावीतिनःश्मशानाग्नेरासमंतात् । क्रव्याददेवताभ्योनमः । अर्घउ० । गंधाउ० । पुष्पाण्युप० । धूपउ० । दीपउ० । नानाविधपक्वभक्ष्यभोज्यपायसवन्यफलमूलपरिपूर्णानिस्वानिस्वानिआहृतानिपात्राणिउदकपूर्णान्मृण्मयान्नवान्कुंभांश्चनिधाय । इदंसजलंनैवेद्यमु० । इतिसंपूज्य । नमःक्रव्याद । श्मशानबलिकर्मकर्त्रासहअन्येगोत्रजाअपिकुर्युः ॥ ॥ अथश्मशानवासिदेवताबलिः । देशकालौस्मृत्वा । अप० । गोत्रस्यप्रेत० प्रेतत्वनि० उत्तम० श्मशानवासिदेवताभ्योबलिदानंकरिष्ये । श्मशानाग्नेरासमंतात्भूमावेवश्मशानवासिदेवतापूजनं । तत्रमंत्रः । नमःक्रव्यादमुख्येभ्योदेवेभ्यः ।

आसनान्युपतिष्ठंतु । पाद्यान्युप० । अर्घाउप० । गंधाउप० । पुष्पाण्युप० । धूपाउ० । दीपाउ० । नैवेद्यान्युप० । तांबूलान्युप० । दक्षिणाउ० । ततोनानाविधपक्कभक्ष्यभोज्यपायसवन्यफलमूलपूरितानिमृण्मयपात्राणिसोदकुंभानितत्र-तत्रनिधाय ॥ येऽस्मिन्श्मशानेदेवाःस्युर्भगवंतःसनातनाः । तेऽस्मत्सकाशाद्गृह्णंतुबलिमष्टांगमक्षयं । प्रेतस्यास्यशुभां-ल्लोकान्प्रयच्छंत्वपिशाश्वतान् । अस्माकमायुरारोग्यंसुखंचददतांचिरं । श्मशानवासिनोदेवाःशरणंपरमागतिः । सर्वे-भ्यस्त्वन्नमुदकमक्षय्यमुपतिष्ठतु । एभिर्मंत्रैस्तदुपरिजलंक्षिपेत् । ततोबलीनांक्षीरेणाभ्युक्षणं ॥ ततोगोमयेनश्मशान-देशमुपलिप्य । त्रिकोणवेदिकांकृत्वा । तत्रोदकपूर्णांश्चतुरःकुंभान्स्थापयित्वा । तेषामुपरिचतस्रःपोलिकाः । तदुपरि-चतुरःपिंडान्संस्थाप्य । प्रतिकुंभंद्वेद्वेपादुके । एकैकंछत्रं । पीतवर्णमेकैकंध्वजंचसंस्थाप्य । देशकालौस्मृत्वा । अप० । गो० प्रे० प्रे० उ० श्मशानवासिदेवताभ्यःपिंडदानंकरिष्ये । दक्षिणकोणस्थकुंभेहस्तंदत्वाश्मशानवासिभ्योदेवेभ्यः अयमष्टांगबलिश्छत्रध्वजपताकापोलिकापादुकासहितोमयादत्तस्तवोपतिष्ठतु । ततोवायव्यकोणस्थकुंभेहस्तंदत्वा । प्रेतसखिभ्यःअयमष्टां० ष्ठतु । तत्पश्चिममध्यकुंभेहस्तंदत्वाप्रेतायायमष्टां० तु । ततईशानकोणस्थकुंभेहस्तंदत्वायमा-यायमष्टां० तु । इतिप्रत्येकंजलमुत्सृजेत् । पिंडोपरिसूत्राण्युप० । अनादि० अतसीपु० । अनेनश्मशानबलिदा-नेनप्रेतस्यप्रेतत्वनिवृत्तिरस्तु । अग्रेअस्थिसंचयनेयोग्यताप्राप्तिरस्तु । इतिश्मशानवासिदेवताबलिः ॥ ॥ अथास्थिसंच-यनं । चितिसमीपेगत्वा । देशकालौसं० । अप० । गोत्र० प्रेत० प्रेत० उत्त० अस्थिसंचयनंकरिष्येइतिसंकल्प्य ।

क्षीरेणाज्येनचचितेःप्रोक्षणं । ततःपलाशवृंतेनअस्थीनिअप्रादक्षिण्येनपरिवर्त्यपरिवर्त्य । तदभावेशमीशाखयायज्ञियवृ-क्षशाखयावा । भस्मगुप्तानिप्रकटानिकृत्वाइत्यर्थः । अंगुष्ठोपकनिष्ठिकाभ्यामादायनवकुंभेप्रास्यति । ग्रहणक्रमः । शिर-सोवक्षसःपाण्योःपार्श्वाभ्यांचैवपादतः । अप्रदक्षिणमस्थीनिगृह्णातीत्याहगोभिलः । इति । शाखायाःस्मशानेप्रक्षेपः । शम्यवकाःकर्दमंचस्मशानेप्रास्यति । शमीशाखापर्णानिवा । अवकाःशैवालं । कर्दमःपंकः । स्मशानःअस्थिसंचयोभस्म-कूटोवा । ततःपंचगव्येनस्नपनं घृतेनाभ्यंजनंच । ततोस्थ्नांचंदनागरुकर्पूरकेशरकस्तूरीप्रभृतिसुगंधिद्रव्यैर्मिश्रणं । क्षौ-मवस्त्रेणकुंभवेष्टनं । ततोवृक्षसमीपेदेवालयेआरामेवाअग्नेशिन्यांभूमौदक्षिणापूर्वायतांकर्षूंखात्वा । तत्रकुशानास्तीर्य । मुख्येभ्योदेवेभ्यः । इतिसर्वैरुच्चार्य । प्रार्थयेयुः । येऽत्रस्मशानेदेवाःस्युर्भगवंतःसनातनाः । तेस्मत्सकाशाद्गृह्णंतुब-लिमष्टांगमक्षयं । प्रेतस्यास्यशुभांल्लोकान्प्रयच्छंतुचशाश्वतान् । अस्माकमायुरारोग्यंसुखंचददतांचिरं । एवमुक्त्वाबलिं दत्वादद्यात्पिंडत्रयंततः । ततःकर्ता । गोमयेनश्मशानदेशमुपलिप्य । त्रिकोणवेदिकांकृत्वातत्रोदकपूर्णांश्चतुरःकुंभा-न्स्थापयित्वा । तेषामुपरिचतस्रःपोलिकाःकृत्वा । तदुपरिचतुरःपिंडान्संस्थाप्य । प्रतिकुंभंद्वेद्वेपादुके । एकैकंछत्रं । पीतवर्णमेकैकंध्वजंसंस्थाप्य । देशकालौस्मृ० । अपसव्यं । अमुकगोत्रस्यअमुकनाम्नःप्रेतस्यप्रेतत्वनिवृत्तयेउत्तमलोका-वाप्तयेस्मशानवासिदेवतापिंडदानंकरिष्ये । दक्षिणकोणस्थकुंभेहस्तंदत्वास्मशानवासिभ्योदेवेभ्यःअयंअष्टांगबलिःछत्र-ध्वजपताकापोलिकापादुकासहितःमयादत्तउप० । ततोवायव्यकोणस्थकुंभेहस्तंदत्वाप्रेतसखिभ्यअयमष्टांगबलिःछ-

त्रध्वजपादुकापोलिकासहितस्तवोपतिष्ठतां ॥ तत्पश्चिममध्यमकुंभेहस्तंदत्वाप्रेतायअयमष्टांगबलिः छत्र० दत्तस्तवोप० । ततईशानकोणस्थकुंभेहस्तंदत्वा यमायायमष्टांगबलिः छत्र० स्तवोप० ॥ इतिजलमुत्सृजेत् । ततः स्मशानवासिनांप्रार्थना ॥ स्मशानवासिनोदेवाभगवंतः सनातनाः ॥ तेऽस्मत्सकाशाद्गृह्णंतुबलिमष्टांगमुत्तमं ॥ प्रेतस्यास्यशुभांल्लोकान्प्रायच्छंत्विह-शाश्वतान् ॥ अस्माकमायुरारोग्यंसुखंचददतांचिरं । इति । अनेनस्मशानबलिदानेनप्रेतस्यप्रेतत्वनिवृत्तिरस्तुउत्तमलोकावासिरस्तु ॥ तदुपरिहरिद्रारंजितंवस्त्रखंडंचास्तीर्य । ततः वाग्० इतिमंत्रेणतत्रास्थिकुंभंनिधाय । तदुपरिपाषाणंनिधाय । ततोयथाकुंभोनदृश्यतेतथातदुपरिमृदंनिक्षिप्यसमीकरणं । ततः शेषास्थिभस्मनांजलेप्रक्षेपः । पूजासंबंधिनोऽन्नस्य-जले प्रक्षेपः । तद्वासिभ्योवादानं । स्मशानभूमिंगोमयोदकेनसंप्रोक्ष्य । तत्रैकपिंडस्थापनं । तदुपरिगंधपुष्पधूपदीपउदकुंभस्थापनं । स्मशानभूमेर्दक्षिणतः बाहुमात्रींशमीशाखांनिखनेत् । पश्चादनवेक्ष्यमाणोऽन्यत्रागत्यस्नायात् । यद्वातस्मिन्नेवसमयेतमस्थिकुंभंगृहीत्वातीर्थ[1]समीपेगत्वाअस्थीनिनिष्कास्यगंगादिमहानदीजलेक्षिपेत् । अस्मिन्पक्षेगर्तकरणाभावः । इत्यस्थिसंचयनं ॥

१ अथतीर्थेअस्थिनिक्षेपफलं । सेत्वादौ—गंगातोयेषुयस्यास्थिक्षिप्यतेशुभकर्मणः । नतस्यपुनरावृत्तिर्ब्रह्मलोकात्सनातनात् । अस्तंगतेगुरौशुक्रेतथामासेमलिम्लुचे । गंगायामस्थिनिक्षेपंनकुर्यादितिगौतम । दशाहातरस्थिक्षेपेतुनास्तादिदोषः । दशाहाभ्यंतरेयस्यगंगातोयेऽस्थिमज्जति । गंगायांमरणंयादृक्तादृक्फलमवाप्नुयात् । गांहरीशाघ्रिकात्प्राप्तागंगाइतिहिकीर्तिता । गांपृथ्वी । हरिर्विष्णुः । ईशः शंकरः । अंघ्रिश्चरणः । कंशिरः । आद्यासागौतमीगंगाद्वितीयाजाह्नवीस्मृता ॥ सिंधौअस्तादेरपवादः काशीखंडे—नग्रहास्तोदयकृतोदोषोविश्वेश्वरालये । त्रिस्थलीसेतौवायवीये—गोदावर्यांगयायांचश्रीशैलेग्रहणद्वये । सुरासुरगुरूणांचमौढ्यदोषोनविद्यते । तथा—गुरुभार्गवयोर्मौढ्येपौषेमासिमलिम्लुचे । नातीतः पितृमेधः स्याद्गयांगोदावरीविनेति । तीर्थेअस्थिनिक्षेपविधिस्तुसिंध्वादौज्ञेयः ॥

अथतीर्थेऽस्थिक्षेपविधिः ॥ तत्रपूर्वांगविधिः । यत्रास्थीनिनिखातानितं भूमिंसचैलस्नानपूर्वकंपृथग्गोमूत्रादिभिःप्रोक्षेत् । तत्रगायत्र्यागोमूत्रेण । गंधद्वारामितिगोमयेन । आप्यायस्वेतिक्षीरेण । दधिक्राव्णइतिदध्ना । घृतंमिमिक्षइतिघृतेन । उपक्षपतिचतसृणांशंखःपितरस्त्रिष्टुपूभूप्रार्थनखननमृदुद्धारणास्थिग्रहणेषुविनियोगः । आभिर्ऋग्भिःक्रमेणास्थिग्रहणांतानिकर्माणिकृत्वा स्वयंजलाशयेगृह्योक्तविधिनास्नायात् । ततोऽस्थिशुद्धिंकुर्यात् । सायथा । अस्थीनिस्पृष्ट्वैतोन्विंद्रमितितृचावृत्त्यापंचगव्यैःस्नात्वास्पृष्ट्वैवदशस्नानानिकुर्यात् । तत्रगायत्र्यादिपंचमंत्रैर्गोमूत्रगोमयक्षीरदधिसर्पिःस्नानानिकृत्वा देवस्यत्वेतिकुशोदकेन मानस्तोकइतिभस्मना अश्वक्रांतेरथक्रांतेइतिमृदा मधुवाताइतिमधुना आपोदिष्टेति शुद्धोदकेनचस्नायात् । एवंदशस्नानातिकृत्वाअस्थ्यांकुशैर्मार्जनंकुर्यात् । तत्रमंत्रः । अतोदेवाइत्यृक् । अथसप्तसूक्तानि । एतोन्विंद्रं० ३ शचीवो० ३ नतमंहोन० ८ इतिवाइति० १३ स्वादिष्ठयेति० १० ममाग्नेवर्चो० १० कद्रुद्राय० ९ ॥ ततोयदीयान्यस्थीनितस्यकृतसपिंडीकरणस्यपार्वणविधिनाश्राद्धमस्थिप्रक्षेपांगभूतंहिरण्येनकुर्यात् । सक्तुनाचपिंडदानं । दशाहांतरस्थिक्षेपकरणेएकोद्दिष्टविधिनाश्राद्धम् । ततस्तिलतर्पणंकृत्वा पंचगव्यपंचामृतशुद्धोदकैरस्थीनिप्रक्षाल्ययक्षकर्दमेनालिप्यपुष्पैःप्रपूज्य अजिनकंबलदर्भभूर्जपत्रशाणपट्टवस्त्रताडपत्राणांक्रमेणसप्तधासंवेष्ट्यताम्रसंपुटेस्थापयेत् । यक्षकर्दमलक्षणम्—द्वादशकर्षचंदनंकुंकुमंचषट्कर्षंकर्पूरश्चतुःकर्षाकस्तूरीचैतेषांमेलनाद्यक्षकर्दमः । ततोऽस्थिपुहेमरौप्यखंडानिमौक्तिकप्रवालनीलमणींश्चप्रक्षिप्य स्वसूत्रोक्तविधिनास्थंडिलाग्निप्रतिष्ठादिकृत्वाष्टोत्तरशतंतिलाज्याहुतीर्जुहुयात् ।

उदीरतांशंखः पितरस्त्रिष्टुप्अस्थिप्रक्षेपांगतिलाज्यहोमेविनियोगः । उदीरतामितिसूक्तस्यचतुर्दशऋग्भिःप्रत्यृचमाहुतिरित्येवंसूक्तस्यसप्तावृत्तिभिरवशिष्टदशाहुतीःप्रथमऋगावृत्त्यत्येवमष्टोत्तरशतंतिलाहुतीरष्टोत्तरशतमाज्याहुतीश्चजुहुयात् । सवेष्टनास्थिसमुच्चययुतंताम्रसंपुटमादायतीर्थंगच्छेत् । तत्रनियमाः—मूत्रपुरीषोत्सर्गकालेआचमनकालेचनास्थीनिधारयेत् । शूद्रयवनांत्यजादिकांस्त्वहीनजातिमस्थिधारणकालेनस्पृशेदितिकाशीखंडे । ततस्तीर्थंप्राप्यअस्थीनिस्नापयित्वा अमुकगोत्रस्यामुकशर्मणोब्रह्मलोकादिप्राप्तयेऽमुकतीर्थेऽस्थिप्रक्षेपमहंकरिष्येइतिसंकल्प्य पलाशपर्णपुटेपंचगव्येनास्थीन्यासिच्यहिरण्यशकलमाल्यघृततिलमिश्रितास्थीनिमृत्पिंडेनिधायदक्षिणांदिशमवेक्षमाणोनमोस्तुधर्मायेतिवदन्तीर्थेप्रविश्यनाभिमात्रजलेस्थित्वा समेप्रीतोस्त्वित्युक्त्वातीर्थेक्षिपेत् । ततःस्नात्वाजलाद्बहिरागत्यसूर्यंदृष्ट्वाहरिंस्मृत्वाविप्राययथाशक्तिरजतंदक्षिणांदद्यात् । अमुकस्यास्थिक्षेपःकृतस्तत्सांगतार्थंरजतमिदंतुभ्यंसंप्रददेइति । इत्यस्थिप्रक्षेपप्रकारः ॥ आदौतीर्थेअस्थिप्रक्षेपः । पश्चात्तीर्थविधिरितिदिवोदासः । आदौतीर्थविधिः । पश्चादस्थिनिक्षेपइतिकेचित् । न्यायविदस्तु । अस्थिप्रक्षेपजन्यफलोद्देशेनगतेनादावस्थिप्रक्षेपस्ततस्तीर्थविधिःकार्यइति । यस्तुतीर्थफलोद्देशेनगच्छन्ननुषंगादस्थीनिनयतिसचादौसकलंतीर्थविधिंकृत्वापश्चादस्थिनिक्षेपंकुर्यादित्याहुरिति ॥

अथद्वितीयदिनकृत्यं ॥ देश० । अप० । गोत्र० प्रे० प्रे० उ० क्षु० चक्षुःश्रोत्रनासावयवनिष्पत्त्यर्थंद्वितीयेहनिअवयवपूरकपिंडदानंक० । इतिसं० । गो० प्रे० अद्यद्वितीयेऽहनिचक्षुःश्रोत्रनासावयवनिष्पत्त्यर्थंएषतेपिंडउप० । द्वि-

तीयेहनिएको १ द्वौवा २ त्रयोवा ३ अंजलयस्तोयपात्राणिच । इतिविशेषः । अन्यत्सर्वंप्रथमदिनवत् ॥ अथतृतीयदि-
नकृत्यं ॥ तृतीयेऽहनिविषमश्राद्धंकरिष्ये । तृतीयेऽहनिविषमश्राद्धेअयंपिंडस्तवोप० । शेषंपूर्ववत् । ततोऽवयवपिंड-
दानं ॥ तृतीयेऽहनिभुजवक्षःस्तनग्रीवावयवनिष्पत्त्यर्थंअवय० चाहंकरिष्ये । अद्यतृतीयेऽहनिभुजवक्षःस्तनग्रीवावयवनि-
ष्पत्त्यर्थंएषतेपिंडउप० । तृतीयेऽहनिएकोवा १ त्रयोवा ३ पंचवा ५ अंजलयस्तोयपात्राणिच । अन्यत्सर्वंपूर्ववत् ॥
अथचतुर्थदिनकृत्यं ॥ नाभिगुदलिंगावयवा निष्पत्त्यर्थंचतुर्थेहनिअवय० चाहंकरिष्ये । चतुर्थेहनिनाभिगुदलिंगावयव-
निष्पत्त्यर्थंएषतेपिंडउप० । चतुर्थेहनिएकोवा १ चत्वारोवा ४ सप्तवाअंजलयस्तोयपात्राणिच । अन्यत्सर्वंपूर्ववत् ॥
अथपंचमदिनकृत्यं ॥ पंचमेहनिविषमश्राद्धंक० । पंचमेहनिविषमश्राद्धेअयंपिंडस्तवोप० । शेषंपूर्ववत् । ततोऽवयव-
पिंडदानं । ऊरुद्वयजानुद्वयपादद्वयावयवनिष्पत्त्यर्थंपंचमेहनिअवय० चाहंकरिष्ये । पंचमेहनिऊरुद्वयजानुद्वयपादद्व-
यावयवनिष्पत्त्यर्थंएषतेपिंडउप० । पंचमेहनिएकोवा १ पंचवा ५ नववा ९ अंजलयस्तोयपात्राणिच । अन्यत्सर्वं
पूर्ववत् ॥ अथषष्ठदिनकृत्यं ॥ मर्मावयवनिष्पत्त्यर्थंषष्ठेहनिअवय० चाहंकरि० । षष्ठेहनिमर्मावयवनिष्पत्त्यर्थंएषतेपिंड-
उप० । षष्ठेहनिएकोवा १ षट्वा ६ एकादशवा ११ अंजलयस्तोयपात्राणिच ॥ अन्यत्सर्वंपूर्ववत् ॥ अथसप्तमदिनकृत्यं ॥
सप्तमेहनिविषमश्राद्धंकरिष्ये । सप्तमेहनिविषमश्राद्धेपिंडस्तवोप० । शेषपूर्ववत् । ततोऽवयवपिंडदानं । मज्जामेदो-
मांसशिराजालावयवनिष्पत्त्यर्थंसप्तमेहनिअवयवपिं० चाहंकरिष्ये । सप्तमेहनिमज्जामेदोमांसशिराजालावयवनिष्पत्त्य-

र्थंएपतेपिंडउप० । सप्तमेऽहनिएकोवा १ सप्तवा ७ त्रयोदशवा १३ अंजलयस्तोयपात्राणिच । अन्यत्सर्वंपूर्ववत् ॥ अथाष्टमदिनकृत्यं ॥ दंतनखलोमस्थ्यवयवनिष्पत्त्यर्थंअष्टमेहनिअवयवपिंड० चाहंकरि० ॥ अष्टमेहनिदंतनखलोमास्थ्यवयवनिष्पत्त्यर्थंएपतेपिंडउ० । अष्टमेहनिएकोवा १ अष्टौवा ८ पंचदशवा १५ अंजलयस्तोयपात्राणिच । अन्यत्सर्वंपूर्ववत् ॥ अथनवमदिनकृत्यं ॥ नवमेहनिविषमश्राद्धंकरिष्ये । नवमेहनिविषमश्राद्धेअयंपिंडस्तवोप० । शेषंपूर्ववत् । ततोऽवयवपिंडदानं । बलवीर्यावयवनिष्पत्त्यर्थंनवमेह्निअवय० चाहंकरि० । नवमेहविबलवीर्यावयवनिष्पत्त्यर्थंएषतेपिंडउप० । नवमेऽहनिएकोवा १ नववा ९ सप्तदशवा १७ अंजलयस्तोयपात्राणिच । अन्यत्सर्वंपूर्ववत् ॥

अथदशमदिनकृत्यं ॥ सर्वावयवपूर्णत्वनिष्पत्त्यर्थंदशमेऽहनिअवयवपिंडदा० चाहंक० । दशमेऽहनिसर्वावयवपूर्णत्वनिष्पत्त्यर्थंएषतेपिंडउप० । दशमेहनिएकोवा० । दशवा० १० एकोनविंशतिवा १९ वाअंजलयस्तोयपात्राणिच । अन्यत्सर्वंपूर्ववत् ॥ ॥ अथदशाहबलयः ॥ देशकालौसंकीर्त्य । अपसव्यं ॥ गोत्रस्यप्रे० प्रेत० उत्त० वासये० । दशाहबलिदानंकरिष्ये ॥ इतिसंकल्प्य ॥ पिंडत्रयंकृत्वातानादाय । किंचिद्दूरंनिर्ऋत्यांदिशिगत्वा । त्रिकोणंस्थंडिलंकृत्वा । तत्रोदकुंभत्रयं निधाय । तदुपरिपिंडान्निधायजलंक्षिपेत् । गोत्रस्यकप्रेतस्यप्रेत० सये प्रेतायएषसोदकुंभोबलिरुपतिष्ठतां । गोत्र० सये यमायएषसोदकुंभोबलिरुपतिष्ठतां । गोत्रस्यप्रेत० सये प्रेतसखिभ्यएषसोदकुंभोबलिरुपतिष्ठतां । अनेनदशाहबलिदानेनप्रेतस्यप्रेतत्वनिवृत्तिरस्तु । उत्तमलोकावाप्तिरस्तु । अग्रे एकादशाहादिकर्मयोग्यताप्राप्तिरस्तु ।

इतिदशाहवलयः ॥ ततोऽश्मत्यागः ॥ ततःसर्वेसपिंडाःस्नात्वाप्राचीनावीतिनोदक्षिणामुखाअश्मोपरिस्तिलतोयां-जलिंदद्युः । गोत्रस्यप्रेतस्यप्रेतत्वनिवृत्तयेउत्तमलोकावाप्तयेदाहजनिततापोपशमनार्थंएपतिलतोयांजलिस्तवोपतिष्ठतां । ततःकर्ताजलेअश्मत्यागंकुर्यात् ॥ तत्रमंत्रः ॥ अस्मात्त्वमधिजातोसित्वदयंजायतांपुनः । असौस्वर्गायलोकाय-स्वाहा ॥ इति ॥ असौस्थानेप्रेतनामादेशः । सव्यंकृत्वा । स्नात्वा । गृहंगच्छेयुः ॥ ॥ प्रेतदीपकायां ॥ अश्मत्यागानंतरंअष्टांगवायसबलिंदद्यादित्येके । तद्यथा ॥ वेदिकाभांडतोयानि पताकाछत्रपादुकाः । पोलिकाचान्न-पिंडश्चबलिरष्टांगईरितः । देशकालौसं० । अप० ॥ अमुकगो० मये दशाहेवायसबलिदानंकरिष्येसंकल्प्य । त्रिकोणवेदिकायांउदकुंभंनिधाय । तदुपरिपोलिकांतदुपरिपिंडंनिधाय । तत्रपताकांछत्रंपादुकांचनिधाय ॥ ॥ अमुकगोत्रअमुकप्रेतप्रेतत्वनिवृत्तयेउत्तमलोकावाप्तयेएपतेवायसबलिर्मयादत्तस्तवोपतिष्ठतु । इतितदुपरिजलंक्षिपेत् । अनादि० अतसी० ॥ ॥ सूतकांतेबलिंतुष्टाभुंजंतियस्यवायसाः । सर्वप्रेतत्वनिर्मुक्तःशाश्वतंमोक्षमाप्नुयादिति । ततःसर्वेपांतैलाभ्यंगोद्वर्तनं । स्नानं । वस्त्रपरिधानं । मंगलद्रव्यालंभनपूर्वकंगृहेगमनं । इत्युक्तं ॥ ॥ त्र्यहाशौचे-प्रथमेहनित्रयोऽवयवपिंडाःत्रयोंऽजलयस्त्रिंशद्वा । द्वितीयेहनिप्रथमदिनवत् । तृतीयेहनिचत्वारोऽवयवपिंडाः । चत्वारोंऽजलयश्चत्वारिंशद्वा । एकाहाशौचेसद्यःशौचेचसर्वेऽवयवपिंडाःपक्षांतरेणांजलयश्चयुगपदेवदातव्याः । इति-त्र्यहाशौचादौअवयवपिंडदानंअंजलिदानप्रयोगः ॥

अथैकादशाहेकर्तव्यम् ॥ तत्रसाग्नेर्दाहदिनादारभ्यैकादशाहे ॥ निरग्निकस्यतुमरणादारभ्यैकादशाहेविधिः ॥ तीर्थे-
गत्वाविधिवत्स्नायात् प्रयोगः ॥ देशकालौस्मृत्वाअद्यैकादशाहेविष्णुपूजनेऽधिकारसिद्ध्यर्थंअमुकप्रत्याम्नायेनएकंप्राजा-
पत्यमाचरिष्ये ॥ अपसव्यंगोत्रस्यअमुकनाम्नःप्रेतस्यप्रेतत्वनिवृत्तयेउत्तमलोकावाप्तयेअद्यएकादशाहेवृषोत्सर्गाद्यौर्ध्वदेहिक-
कर्मयोग्यताप्राप्त्यर्थंसव्यंविष्णुपूजनपूर्वकंविष्णुतर्पणंकरिष्ये ॥ तत्रादौपुरुषसूक्तन्यासपूर्वकंश्रीविष्णुंषोडशोपचारैःसंपूज्य ॥
विष्णुतर्पणं ॥ ताम्रपात्रेजलदुग्धसर्वौषध्यक्षतैर्मिश्रैर्विष्णुमुद्दिश्यशंखेनतर्पयेत् ॥ यथा ॥ ॐ सहस्रशीर्षा० अपसव्यं ॥
गोत्रंप्रेतंप्रेतमोक्षार्थंविष्णुंतर्पयामि १ ॥ एवंसर्वत्र ॥ सव्यं ॐ पुरुषएवेदं० अपसव्यंगोत्रंप्रेतंप्रेतमोक्षार्थंविष्णुंत० २ ॥
सव्यं ॐ एतावानस्य० अपसव्यंगोत्रंप्रेतं० ३ ॥ सव्यं ॐ त्रिपादूर्ध्व० अपसव्यं० गोत्रंप्रेतं० ४ ॥ सव्यं ॐ ततोविराड०
अपसव्यं गोत्रंप्रेतं० ५ ॥ सव्यं ॐ तस्माद्यज्ञात्सर्व० अपसव्यंगोत्रंप्रेतं० ६ ॥ सव्यं ॐ तस्माद्यज्ञात्सर्वहुतऋ० अपसव्यं-
गोत्रंप्रेतं० ७ ॥ सव्यं ॐ तस्मादश्वा० अपसव्यंगोत्रंप्रेतं० ८ ॥ सव्यं ॐ तंयज्ञंब० अपसव्यंगोत्रंप्रेतं० ९ ॥ सव्यं
ॐ यत्पुरुषंव्य० अपसव्यंगोत्रंप्रेतं० १० ॥ सव्यं ॐ ब्राह्मणोस्य० अपसव्यंगोत्रंप्रेतं० ११ ॥ सव्यं ॐ चंद्रमामनसो०
अपसव्यंगोत्रंप्रेतं० १२॥ सव्यं ॐ नाभ्याआसी० अपसव्यंगोत्रंप्रेतं० १३॥ सव्यं ॐ यत्पुरुषेणह० अपसव्यंगोत्रंप्रेतं० १४॥
सव्यं ॐ सप्तास्यासन्० अपसव्यंगोत्रंप्रेतं० १५॥ सव्यं ॐ यज्ञेनयज्ञ० अपसव्यंगोत्रंप्रेतं० १६ ॥ सव्यं ॐ युंजतेमन०
अपसव्यंगोत्रंप्रेतं० १७ ॥ सव्यंइदंविष्णु० अपसव्यंगोत्रंप्रेतं० १८ ॥ सव्यंइरावती० अपसव्यंगोत्रंप्रेतं० १९ ॥

॥४२०॥

सव्यं देवश्रुतौ० अपसव्यंगोत्रंप्रेतं० २० ॥ सव्यं विष्णोर्नुकं० अपसव्यं गोत्रंप्रेतं० २१ ॥ सव्यं दिवोवाविं० अपसव्यं गोत्रंप्रेतं० २२ ॥ सव्यं प्रतद्विष्णु० अपसव्यं गोत्रंप्रेतं० २३ ॥ सव्यं विष्णोरराटं० अपसव्यं गोत्रंप्रेतं० २४ ॥ सव्यं तद्विप्रासो० अपसव्यं गोत्रंप्रेतं० २५ ॥ सव्यं ॥ अनादिनिधनोदेव०नतेषांविद्यतेभयं ॥ अनेनविष्णुतर्पणेनप्रेतस्यप्रेतत्वनिवृत्तिरस्तु ॥ विष्णुलोकावासिरस्तु ॥ अग्रेवृषोत्सर्गादिकर्मयोग्यतावासिरस्तु ॥

अथवृषोत्सर्गकालः । सिंधौ—एकादशेह्निमर्त्यस्ययस्यनोत्सज्यतेवृषः । प्रेतत्वंसुस्थिरंतस्यदत्तैःश्राद्धशतैरपि । अयंद्वादशाहे उक्तोभविष्ये—चैत्र्यांवापितृतीयायांवैशाख्यांद्वादशेह्निवेति । विष्णुधर्मेतुमृताहेप्युक्तः—विषुवद्वितयेचैवमृताहेबांधवस्यचेति । अयंगृहेनकार्यः । नगृहेमोचयेन्नीलंकामयन्पुष्कलंफलमितिकालिकापुराणात् । कामधेनौ—वत्सराभ्यंतरेपित्रोर्वृषस्योत्सर्गकर्मणि । वृद्धिश्राद्धंनकुर्वीततदन्यत्रसमाचरेत् । तथा—पतिपुत्रवतीनारीभर्तुरग्रेमृतायदि । वृषोत्सर्गंनकुर्वीतगामेकांतुप्रदापयेत् । पाणिग्रहंविनानारीव्रतबंधाद्विनाद्विजः । वृषोत्सर्गःप्रकर्तव्यःसपिंडीकरणंविना । अत्राधिकारिणः—पुत्राभावेतुपत्नीस्याद्दौहित्रोदुहितापिवा । गोत्रिणश्चार्थभागीचमृतेकुर्याद्वृषोत्सवमिति ॥ ॥

अथवृषोत्सर्गप्रयोगः ॥ देशकालौस्मृत्वा ॥ अपसव्यं ॥ गोत्रस्यअमुकनाम्नःप्रेतस्यप्रेतत्वनिवृत्तयेउत्तमलोकावासयेवृषोत्सर्गं करिष्ये ॥ सव्यं ॥ तत्रस्थंडिलेपंचभूसंस्कारान्कृत्वालौकिकाग्निस्थापनं ॥ ततईशान्येरुद्रकलशस्थापनं ॥ तत्परितोष्टकलशानांस्थापनं ॥ महीद्यौरित्यादिपूर्णपात्रनिधानांतंकृत्वा ॥ इमेकलशाःसुप्रतिष्ठितावरदाभवंतु ॥ ततोरुद्रादिमूर्तीनां-

अभ्युत्तारणपूर्वकंप्राणप्रतिष्ठांकृत्वामध्यकलशोपरिरुद्रप्रतिमास्थापनं ॥ तद्दक्षिणतःप्रेतमातृस्थापनं ॥ ॐ काल्यैनमःका-
लीमावाहयामि १ ॥ भीषणायैनमःभीषणां० २ ॥ भद्रायैनमःभद्रां० ३ ॥ भयोत्कटायैनमःभयोत्कटां० ४ ॥ बभ्रु-
केश्यैनमःबभ्रुकेशीं० ५ ॥ क्षयायैनमःक्षयां० ६ ॥ चंड्यैनमःचंडीं० ७ ॥ प्रेताजयतानरइतिमंत्रेणपूजयेत् ॥ ॐ प्रे-
ताजयतानरइंद्रोवःशर्मयच्छतु ॥ उग्रावःसंतुबाहवोनाधृष्यायथासथ ॥ अनयापूजयाप्रेतमातरःप्रीयंतां ॥ ततोदक्षिणतो-
ब्रह्मासनमास्तीर्येत्यादि ॥ पवित्रयोःप्रणीतासुनिधानांतं ॥ तत्रविशेषः । सक्षीरप्रणीताप्रणयनं ॥ तंडुलाः ॥ श्रवणानु-
पदेशात्सिद्धएवपिष्टमयःपौष्णश्चरुः ॥ षडाहुतीर्जुहुयात् ॥ ॐ इहरतिःस्वाहा इदमग्नयेनमम १ ॥ ॐ इहरमध्वंस्वाहा ॥
इदमग्नयेनमम २ ॥ ॐ इहधृतिःस्वाहा इदमग्नयेनमम ३ ॥ ॐ इहस्वधृतिःस्वाहा इदमग्नये० ४ ॥ ॐ उपसृजंधरुणं-
मात्रेधरुणोमातरंधयन्स्वाहाइदमग्नये० ५ ॥ ॐ रायस्पोषमस्मासुदीधरत्स्वाहाइदमग्नये० ६ ॥ ततःआघारावाज्यभागौ ॥
ॐ प्रजापतयेस्वाहा इदंप्रजापतये० १ ॥ इंद्रायस्वाहा इदमिंद्राय० २ ॥ अग्नयेस्वाहा इदमग्नये० ३ ॥ सोमायस्वाहा
इदंसोमाय० ४ ॥ ततःपायसचरुमभिघार्य ॥ ॐ अग्नयेस्वाहा इदमग्नये० १ ॥ ॐ रुद्रायस्वाहा इदंरुद्राय० २ ॥
ॐ शर्वायस्वाहा इदंशर्वाय० ३ ॥ ॐ पशुपतयेस्वाहा इदंपशुपतये० ४ ॥ ॐ उग्रायस्वाहा इदमुग्राय० ५ ॥
ॐ अशनयेस्वाहा इदमशनये० ६ ॥ ॐ भवायस्वाहा इदंभवाय० ७ ॥ ॐ महादेवायस्वाहा इदंमहादेवाय० ८ ॥
ॐ ईशानायस्वाहा इदमीशानाय० ९ ॥ ततःपिष्टचरुमभिघार्यस्रुवेणादायहोमः ॥ ॐ पूषागाअन्वेतुनःपूषारक्षत्वर्वतः ॥

पूषावाजान्सनोतुनःस्वाहा इदंपूष्णेनमम ॥ ततःपायसपौष्णाभ्यांस्विष्टकृत् ॥ ॐ अग्नयेस्विष्टकृतेस्वाहा इदमग्नयेस्विष्ट-
कृते० ॥ प्रणीताविमोकांतंप्रकृतिवत् ॥ ततोरुद्रकलशेरुद्रप्रतिमांस्पृष्ट्वानमस्तेरुद्रेतिषोडशर्चंपठेत् ॥ ॐ नमस्ते० १६ ॥
ततएकवर्णादिगुणविशिष्टंवृषभंचतसृभिर्वत्सतरीभिःसहितं अलाभेद्वाभ्यांवत्सतरीभ्यांसहितंवावस्त्रमाल्यहेमादिभिरलं-
कृत्यप्रादक्षिण्येनाग्नेरुत्तरतोनीत्वाप्राङ्मुखमवस्थाप्यस्वयमुदङ्मुखउपविश्य ॥ देशकालौस्मृत्वा ॥ अपसव्यं ॥ गोत्रस्यअमुक-
प्रेतस्यप्रेतत्वनिवृत्त्यर्थंउत्तमलोकप्राप्त्यर्थंअद्यैकादशाहेवृषवत्सतरीपूजनंकरिष्ये ॥ सव्यं ॥ ततोवृषवत्सतरीणांन्यासाः ॥
ॐ इषेत्वाइतिमूर्ध्नि ॥ इषेत्वोर्जेत्वा० १ ॥ ॐ असंख्याता० इतिललाटे २ ॥ ॐ नमस्तेरुद्र० इतिचक्रांके ३ ॥
ॐ सहस्राणि० इतिलांगूले ४ ॥ ॐ विभ्राड्० त्र्यंबकं० नेत्रयोः ५ ॥ ॐ मानस्तोके० इतिनासिकायां ६ ॥
अवतत्य० इतिमुखे ७ ॥ नीलग्रीवाःशितिकंठे ८ ॥ ॐ मर्माणिते० इतिबाह्वोः ९ ॥ ॐ समिधाग्निं० इतिबाहुमध्यतः १० ॥
ॐ नमोवःकिरिकेभ्यो० इतिहृदये ॥ ११ ॥ ॐ हिरण्यगर्भः० इतिनाभौ १२ ॥ ॐ मीढुष्टम० इतिकट्यां १३ ॥
ॐ मानोमहांतं० इत्यूर्वोः १४ ॥ ॐ उदुत्तमं० इतिजंघयोः १५ ॥ ॐ इमारुद्राय० इतिजान्वोः १६ ॥ ॐ रक्षोहणं०
इतिगुदे १७ ॥ ॐ मधुमांवाचं० इतिलांगूले १८ ॥ ॐ पंचनद्यः० इतिपृष्ठे १९ ॥ ॐ कृणुष्वपाजः० इत्याद्याः
पंचपुच्छे २० ॥ युंजते० इत्यनुवाकेनसर्वांगेन्यसेत् ॥ ॐ युंजतेमनः० २१ इदंविष्णुः० २२ इरावती० २३ देवश्रुतौ० २४
विष्णोर्नुकं० २५ दिवोवा० २६ प्रतद्विष्णुः० २७ विष्णोरराटं० २८ तद्विप्रासो० २९ ॥ एवंन्यासविधिंकृत्वारुद्ररूपो-

भवेद्विसः ॥ गंगाद्याःसरितःसर्वास्तस्यपुच्छेवसंतिहि ॥ ततोवत्सतरीणांशरीरेन्यासाः ॥ ॐ पार्वत्यैनमःमूर्ध्नि १ कालिंद्यै-
नमःललाटे २ कोट्यैनमःनेत्रयोः ३ विश्वधारिण्यैनमःश्रोत्रयोः ४ गंगादेव्यैनमःनासिकायां ५ गौर्यैनमःलांगूले ६
जातवेदसे० सर्वांगे ७ ॥ ॥ ततोवृषस्यवामेचक्रं ॐ इदंविष्णु० इति ॥ दक्षिणेत्रिशूलं ॐ इमारुद्राय० इति ॥
ततोवृषस्यपुरुषसूक्तंश्रावयेत् १६ ॥ ततोवृषवत्सतरीणांषोडशोपचारैःपूजनं ॥ वृषवत्सतरीणांवस्त्रालंकारान्दद्यात् ॥
ततश्चतुर्भिःकलशैर्वृषस्यस्नपनं ॥ तत्रमंत्राः ॥ ॐ आपोहिष्ठा० ३ ॥ शंनोदेवी० ४ ॥ समुद्राद्दूर्मिः० ५ ॥ ततश्चतसृभिः
कलशैर्वत्सतरीणांस्नापनं ॥ तत्रमंत्राः ॥ यत्तेकेशेषुदौर्भाग्यंसीमंतेयच्चमूर्धनि ॥ ललाटेकर्णयोरक्ष्णोरापस्तद्घ्नंतुसर्वदा ॥
भगंतेवरुणोराजाभगंसूर्योबृहस्पतिः ॥ भगमिंद्रश्चवायुश्चभगंसप्तर्षयोददुः ॥ इत्यभिषिच्य ॥ ततोवृषप्रार्थना ॥ धर्मस्त्वं
वृषरूपेणजगदानंदकारक ॥ अष्टमूर्तेरधिष्ठानमतःपाहिसनातन ॥ इतिवृषप्रार्थना । ततोगवांप्रार्थना ॥ गावोममाग्रतः
संतुगावोमेसंतुपृष्ठतः ॥ गावोमेहृदयेसंतुगवांमध्येवसाम्यहं ॥ पंचगावःसमुत्पन्नामथ्यमानेमहोदधौ ॥ तासांमध्येतुयानं
दातस्यैधेन्वैनमोनमः ॥ यालक्ष्मीःसर्वदेवानांयाचदेवेष्ववस्थिता ॥ धेनुरूपेणसादेवीपितुःपापंव्यपोहतु ॥ ततःपुष्पांजलिं-
गृहीत्वावृषंत्रिःप्रदक्षिणीकृत्यनमेत् ॥ अयंहिवोमयादत्तःसर्वासांपतिरुत्तमः ॥ तुभ्यंचैतामयादत्ताःपत्न्यश्चसुमनोरमाः ॥
[ एकवत्सतरीपक्षेतु—अयंहितेमयादत्तस्तरुणःपतिरुत्तमः ॥ तुभ्यंचेयंमयादत्तापत्नीचसुमनोरमा ॥ ] ततोऽग्नेस्त्रिःप्रदक्षिणं-
कारयित्वाततपुच्छेतर्पणंकुर्यात् ॥ ततःकुशतिलजलान्यादाय ॥ देशकालौस्मृत्वा ॥ अपसव्यं ॥ गोत्रस्यअमुकप्रेतस्यवृषवत्सतरी-

पुच्छेतर्पणंकरिष्ये ॥ सव्यं ॥ पुरुषसूक्तेनप्रेतनाम्नातर्पणंकार्यं ॥ ॐ सहस्रशीर्षा० ॥ अपसव्यं ॥ गोत्रंप्रेतंवृषवत्सतरी-पुच्छेतर्पयामि १ ॥ सव्यं ॥ ॐ पुरुषएवे० अपसव्यंगोत्रंप्रेतंवृष० २ ॥ सव्यं ॐ एतावानस्य० अप० गोत्रंप्रेतंवृष० ३ ॥ सव्यं ॐ त्रिपादूर्ध्वं० अपसव्यंगोत्रंप्रेतंवृष० ४ ॥ सव्यं ॐ ततोविराडजा० अपसव्यंगोत्रंप्रेतंवृष० ५ ॥ सव्यं ॐ तस्माद्यज्ञात्सर्वहुतःसंभृतं० अप० गोत्रंप्रेतंवृष० ६ ॥ सव्यं ॐ तस्माद्यज्ञात्सर्वहुतऋचः० अप० गोत्रंप्रेतंवृष० ७ ॥ सव्यं ॐ तस्मादश्वाअजायं० अप० गोत्रंप्रेतंवृष० ८ ॥ सव्यं० तंयज्ञं० अप० गोत्रंप्रेतंवृष० ९ ॥ सव्यं ॐ यत्पुरुषं-व्यदधुः० अप० गोत्रंप्रेतंवृष० १० ॥ सव्यं ॐ ब्राह्मणोस्य० अप० गोत्रंप्रेतंवृष० ११ ॥ सव्यं ॐ चंद्रमामनसो० अप० गोत्रंप्रेतंवृष० १२ ॥ सव्यं ॐ नाभ्याआसी० अप० गोत्रंप्रेतं वृष० १३ ॥ सव्यं ॐ यत्पुरुषेणहविषा० अप० गोत्रंप्रेतंवृष० १४ ॥ सव्यं ॐ सप्तास्यासन्० अप० गोत्रंप्रेतंवृष० १५ ॥ सव्यं ॐ यज्ञेनयज्ञ० अप० गोत्रंप्रेतंवृष० १६ ॥ सव्यं ॐ मनोमेतर्पयत० अपसव्यंगोत्रंप्रेतंवृषवत्सतरीपुच्छे० १७ ॥ अपउपस्पृश्य ॥ ततःकर्ताउदङ्मुखउपविश्य ॥ देशकालौसंकीर्त्य ॥ वामहस्तेनवृषपुच्छमादायएनंवृषभंरुद्रदैवतं यथाशक्त्यलंकृतंगंधादिनार्चितं त्रिशूलचक्रांकितंचतुर्व-त्सतरीयुतंएकवत्सतरीयुतंवाअपसव्यंगोत्रस्यअमुकप्रेतस्यप्रेतत्वविमुक्तये उत्तमलोकप्राप्तयेउत्स्रक्ष्ये॥ ॐ एतंयुवानंपतिंवो-ददामितेनक्रीडंतीश्चरथप्रियेण ॥ मानःसाप्तजनुषासुभागारायस्पोषेणसमिषामदेम ॥ इतिमंत्रेणोत्सृजेत् ॥ वृषपुच्छ-सहितंहिरण्यकुशतिलजलंगोत्रायप्रेतायएषमयादत्तस्त्वांतारयतुइत्युक्त्वाभूमौजलंक्षिपेत् ॥ ततःपंचपदानिईशानदिशंप्रति-

चालनं ॥ सर्वतोव्रजस्व ॥ स्तुतिमंत्रः—धर्मस्त्वंवृषरूपेणब्रह्मणानिर्मितःपुरा ॥ तवोत्सर्गप्रभावेणप्रेतोद्धारोमहार्णवात् ॥ ततोवत्सतरीमध्यगतंवृषमंवक्ष्यमाणमंत्रैरभिमंत्रयेत् ॥ तेचमंत्राः ॥ समुद्रोसिनभस्वानार्द्रदानुःशंभूर्मयोभूरभिमावाहिस्वाहामारुतोसिमरुतांगणः शंभूर्मयोभूरभिमावाहिस्वाहावस्यूरसिदुवस्वाञ्छंभूर्मयोभूरभिमावाहिस्वाहा ॥ १ ॥ यास्तेअग्नेसूर्येरुचोदिवमातन्वंतिरश्मिभिः ॥ ताभिर्नोअद्यसर्वाभीरुचेजनायनस्कृधि ॥ २ ॥ यावोदेवाःसूर्येरुचोगोष्वश्वेषुयारुचः ॥ इंद्राग्नीताभिःसर्वाभीरुचंनोधत्तबृहस्पते ॥३॥ रुचंनोधेहिब्राह्मणेषुरुचंराजसुनस्कृधि ॥ रुचंविश्येषुशूद्रेषुमयिधेहिरुचारुचं ॥४॥ तत्त्वायामिब्रह्मणा ॥५॥ स्वर्णघर्मःस्वाहास्वर्णार्कःस्वाहास्वर्णशुक्रःस्वाहास्वर्णज्योतिःस्वाहास्वर्णसूर्यःस्वाहा ॥६॥ ततःप्रदक्षिणीकृत्यवृषवत्सतरीयुतं ॥ धर्मस्त्वंवृषरूपेण० इतिविसर्गमंत्रः ॥ ततस्तृणंभक्षजलंपिबयथेष्टंपर्यटइतिवृषस्यईशानींप्राचींवाप्रेरणं ॥ अनेनवृषोत्सर्गेणप्रेतस्यप्रेतत्वनिवृत्तिरस्तु ॥ एकादशाहश्राद्धेयोग्यताप्राप्तिरस्तु ॥ इतिवृषोत्सर्गः ॥

अथैकादशाहे श्राद्धानि ॥ तत्रैकमंत्यषष्ठंनवश्राद्धंसमंत्रकं । अपरंतुसर्वैकोद्दिष्टप्रकृतिभूतंषोडशश्राद्धेभ्योभिन्नंस्वतंत्रैकोद्दिष्टंमहैकोद्दिष्टापरनामकं । याज्ञवल्क्यः—आद्यमेकादशेऽहनि । अत्रविज्ञानेश्वरः—आद्यंसर्वैकोद्दिष्टप्रकृतिभूतमेकोद्दिष्टमेकादशेहनीति । अत्रसिंधुः—महैकोद्दिष्टंषोडशश्राद्धेभ्योभिन्नमेवेति । तत्रैकोद्दिष्टमाहकात्यायनः—अथैकोद्दिष्टमेकोऽर्घएकंपवित्रमेकःपिंडोनावाहनंनाग्नौकरणंनात्रविश्वेदेवाः स्वादितमितितृप्तिप्रश्नः सुस्वदितमितीतरेब्रूयुरुपतिष्ठतामित्यक्षय्यस्थानेऽभिरम्यतामितिविसर्गोऽभिरताःस्म इतीतरइति । तृतीयमाद्यंमासिकं । तथाचरेणुः—मासिकानियथाकालमेकोद्दिष्टानिषोडश । प्रतिमासंमृताहेस्युर्द्वादशैतानिवत्सरं । उत्कृष्यतेहितत्राद्यंकुर्या-

देकादशेऽहनि । ऊनाब्देऽप्यूनषण्मासे त्रिपक्षे द्वादशेऽहनि । प्रोक्तानि मुनिभिः सर्वैरेकोद्दिष्टानि षोडशेति । अत्राद्यमासिकस्यैकादशाहे उत्कर्षविधानात् । एतेषां तंत्रेणानुष्ठानं पृथग्वा । तंत्रेणानुष्ठाने देशकालद्रव्यदेवताकर्त्रैक्यात् महैकोद्दिष्टे क्रियमाणे उभयोरंत्यनवश्राद्धाद्यमासिकयोस्तंत्रेण सिद्धिः । पृथगनुष्ठानपक्षे तु आदौ महैकोद्दिष्टं ॥ ततोऽत्यंनवश्राद्धं ॥ ततः परमाद्यमासिकं ॥ इति स्मृत्यर्थसार इति गदाधरभाष्ये ॥ ॥ **प्रेतदीपिकायां** एकादशेऽहनि महैकोद्दिष्टश्राद्धे द्विजाभावे । ब्राह्मणं भोजयेदाद्ये होतव्यमनले पि वेति **गोभिलवचनात्** अग्नौ एकोद्दिष्टविधिमुक्त्वा । यन्नाम्नातं-स्वशाखायां पारक्यमविरोधि यत् । विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवदिति वाक्यात्परकीयोऽभावे कोद्दिष्टविधिरुक्त इत्युक्तं । तत्तु स्वीयभाष्याद्यनवलोकनमूलमेव बोध्यं । तथा च **काशिकायां कात्यायनः**—अशुद्धेषु च श्राद्धेषु विप्रो भोक्ता न जायते । विप्रं कुशमयं कृत्वा पात्रे कव्यं निवेदयेत् । प्रेतोक्तं पिंडदानं च कर्तव्यमिति नान्यथेति द्विजाभावे कुशबटोरेव विधानात् नान्यथेत्यनेन एतद्भिन्नविधानांतरस्य निषेधाच्च । गोभिलीयस्य कातीयेन साकं स्पष्टतरविरोधित्वेनाविरोधित्वाभावाच्च ॥ ॥ **महैकोद्दिष्टस्य विघ्ने गौणकालमाह बौधायनः**—एकोद्दिष्टं श्व एव स्याद्द्वादशेऽहनि वा पुनः । अत ऊर्ध्वमयुग्मेषु कुर्वीताहःस्वशक्तितः । अर्धमासे थवा मासि ऋतौ संवत्सरेऽपि वेति ॥ ॥ एकादशाहे आशौचांतरेऽपि वृषोत्सर्गमासिकशय्यादि दद्यादेवेत्युक्तं **क्रियानिबंधे स्मृत्यंतरे**—सूतके मृतके चैव द्वितीयं सूतकं यदि । पिंडदानं प्रकुर्वीत वृषोत्सर्गं तथैव च । न हन्यात्सूतके कर्म द्वादशैकादशाहिकं । शुद्धो वा यदि वाशुद्धः कुर्यादेवाविचारयन्निति ॥

**ततः सपिंड्यधिकारार्थं षोडशमासिकानि । रेणुः**—एकादशे द्वादशेऽह्नि द्विमासे च त्रिपक्षके । तृतीये च चतुर्थे च पंचमे षष्ठमासि च । न्यूनषष्ठे सप्तमे स्यादष्टमे नवमे तथा । दशमैकादशे मासि द्वादशे न्यूनवत्सरे । ततः परेद्युरब्दांते सपिंडीकरणं भवेत् । ततः परेद्युर्द्वितीये वत्सरादौ तथाब्दिकं । तृतीये वत्सरादौ स्यात्प्रत्याब्दिकमिति क्रमः । अयं स्मृत्यर्थसाराख्ये ग्रंथेऽध्याये तृतीयके । अभाणि श्रीधरार्येण श्रुतिस्मृत्युदितक्रमात् ।

मासिकानियथाकालंकुर्यादेकादशेऽहनि । आनंत्यात्कुलधर्माणांपुंसांचैवायुषःक्षयात् । अस्थितेश्चशरीरस्यद्वादशाहःप्रशस्यते । तथैवैकादशाहोपिमासिकानांविशिष्यते । मासिकानिद्वादशाहेसपिंडनंत्रयोदशे । इतिबौधायनःप्राहनैकस्मिन्दिवसेद्वयं । सपिंडीकरणादूर्ध्वंयदिस्युर्मासिकानिवै । प्रत्यब्दंयोयथाकुर्यात्तथाकुर्वीतितान्यपीति ।

**अथोदकुंभः** । **कात्यायनः**—अहरहरन्नमस्मैब्राह्मणायोदकुंभंचदद्यात् । पिंडमप्येकेनिपृणंतीतिच । **रेणुः**—यस्यसंवत्सरादर्वाक्सपिंडीकरणंभवेत् । मासिकंचोदकुंभंचदेयंतस्यापिवत्सरं । **गौतमः**—अदैवंपार्वणश्राद्धंसोदकुंभमधर्मकं । कुर्यादाब्दिकाच्छ्राद्धात्सांकल्पविधिनाऽन्वहमिति । अधर्मकंनियमरहितं । इत्युदकुंभः ॥

**अथसपिंडीकरणं** । **तत्रकात्यायनः**—ततःसंवत्सरेपूर्णेत्रिपक्षेद्वादशाहेवायदहर्वावृद्धिरापद्येतेति । **रेणुः**—पूर्णेसंवत्सरेवापिसपिंडीकरणंभवेत् । यजमानोऽग्निमांस्तत्रप्रेतश्चाप्यग्निमान्भवेत् । द्वादशाहेस्मृतंतस्यसपिंडीकरणंबुधैः । अनग्निमान्यदाकर्ताप्रेतश्चेदग्निमान्भवेत् । सपिंडनंत्रिपक्षेस्यादित्युक्तंहिसुमंतुना । यजमानोनिरग्निश्चेत्प्रमीतश्चाप्यनग्निमान् । सपिंडीकरणंतस्यवृद्धिर्वायदहर्भवेत् । निरग्निश्चेद्यदाकर्ताप्रेतऔपासनाग्निमान् । सपिंडीकरणंतस्यपूर्णेब्देनात्रसंशयः । भविष्यसंज्ञकेत्वेवंव्यवस्थितंसुमंतुना । श्राद्धानिषोडशाप्यादौविदधीतसपिंडनं । तान्यदत्वानकुर्वीतवसिष्ठोवृद्धआहतदिति । **कालादर्शे**—एकादशेद्वादशेऽह्नित्रिपक्षेवात्रिमासिवा । षष्ठेवैकादशेवाब्देसंपूर्णेवाशुभागमे । सपिंडीकरणस्यैवमष्टौकालाःप्रकीर्तिताः । साग्नौकर्तर्युभावाद्यौप्रेतेसाग्नौतृतीयकः । अनग्नेस्तुद्वितीयाद्याःसप्तकालाःसमीरिताः । **ऋष्यशृंगः**—सपिंडीकरणंश्राद्धमुक्तकालेनचेत्कृतं । रौद्रेहस्तेचरोहिण्यांमैत्रेवासमाचरेत् । रौद्रंआर्द्रा । मैत्रमनुराधा । **धर्माब्धौ**—द्वादशाहपदेनाशौचसमाप्त्युत्तरदिनंग्राह्यं । तेनत्रिदिनाशौचेपंचमदिने सपिंडीकरणमिति ॥ त्रिपक्षेत्रिमासीत्यादौपूरणप्रत्ययार्थाविवक्षया तृतीयेपक्षेतृतीयेमासिइत्यादिरर्थः ।

वाक्यांतरेषुस्पष्टंतथोपादानात् । तेनच तृतीयपक्षतृतीयमासादीनामधिकरणत्वात्समस्तानामेवांगत्वंनतुतदुत्तरम् तत्तिथेःपूर्णइति अश्रवणात् । क्वचित्संवत्सरान्वयित्वेनश्रुतस्यवाअनुषंगेप्रमाणाभावादिति कालतत्त्वविवेचने । इतिसपिंडीकरणकालः ॥ ॥ **अथसपिंडीकरणप्रयोगेदेवताक्रमः** ॥ **कात्यायनः**—चत्वारिपात्राणिसतिलगंधोदकानिपूरयित्वात्रीणिपितॄणामेकंप्रेतस्य एतेनैवपिंडोव्याख्यातइतिच ॥

**अत्रगदाधरदीक्षिताः**—वाजसनेयिभिस्तुपूर्वंपितृभ्योदेयं पश्चात्प्रेतायदानमिति । प्रयोगोप्येवमेव । **काशिकावृत्तिः**—त्रीणि पितॄणामेकंप्रेतस्येतिक्रमः । तेनवैश्वदेवकृत्यानंतरंपितृकृत्यं ततःप्रेतकृत्यमित्यर्थः । **अत्रैकेवर्णयंति**—वैश्वदेवकृत्यानंतरंप्रेतकृत्यंततःपितृकृत्यमिति । एकोद्दिष्टस्यसपिंडीकरणांतर्भावात् । तथाच**बैजवापः**—चत्वार्युदकपात्राणिप्रयुनक्तितत्रैकंप्रेतायत्रीणिपितृभ्यइति । तदयुक्तं । सूत्रोक्तक्रमस्यवैयर्थ्यात् । नच बैजवापवचनंवाजसनेयिविषयं । बह्वृचविषयत्वात् । **तथाचतत्सूत्रं** । चत्वार्युदकपात्राण्येकंमृतस्य त्रीणीतरेषामिति । अतोऽत्रविषयानवबोधादयुक्तमित्युक्तम् । तथाच**कठश्रुतिः**—दत्वापिंडान्पितृभ्यस्तुपश्चात्प्रेतायपार्श्वतः । तंतुपिंडं त्रिधाकृत्वाआनुपूर्व्याच्चसंततं । निदध्यात्रिषुपिंडेषुएपसंसर्जनेविधिः । चतुर्थंपिंडमुत्सृज्यत्रिधाकृत्वापिंडेषुनिदध्यादितिलौगाक्षिवचनेपि चतुर्थपिंडस्यपश्चाद्दानप्रतीतेः । नचैकोद्दिष्टस्यदैवपूर्वत्वंयुक्तं । तथाच**शातातपः**—सपिंडीकरणंश्राद्धंदैवपूर्वंनियोजयेत् । पितॄनेवाशयेत्तत्र पुनःप्रेतंचनिर्दिशेदिति । यत्तुप्रेतपूर्वकंपितृश्राद्धमाचरंतितद्भ्रांतिनिबंधनमित्युपेक्षणीयं । तथाच**मार्कंडेयपुराणं**—तिलगंधोदकैर्युक्तमर्घपात्रचतुष्टयं । कुर्यात्पितॄणांत्रितयमेकंप्रेतस्यपुत्रकः । **धर्मप्रदीपेपि**—श्राद्धद्वयमुपक्रम्यकुर्वीतसहपिंडनं । तयोस्त्रिपुरुषंपूर्वमेकोद्दिष्टंततःपरमिति । **यत्पुनः**—पूर्वंकृत्वातुतंप्रेतमुत्तरांस्तुपितामहान् । चतुर्भिःपितृभिर्युक्तंपार्वणंतुविधीयतइतिचतुर्विंशतिमतमुक्तं तद्वैश्वदेवात्पूर्वंप्रेतश्राद्धानुष्ठानविषयं । क्वचित्तथाचरणात् । बह्वृचविषयंच । तस्मात्पूर्वोक्तएवक्रमइतिसिद्धं ॥ सपिंडीकरणंमासिकानिचान्नेनैव । नत्वामादिना ॥ ॥

तच्चपुत्रेसतिनान्यःकुर्यात्। श्राद्धानिषोडशादत्वानतुकुर्यात्सपिंडतां । प्रोषितावसितेपुत्रेकालादपिचिरादपीतिवायवीयोक्तेः । षोडशश्राद्धानां वर्षादूर्ध्वंकालाभावेपितान्यदत्वानकुर्यात् । किंतुदत्वैव । तानियदाकनिष्ठभ्रात्रादिनाकृतानितदासपिंडनमेवकुर्यादित्याहापरार्कः । सपिंडनेतुकनिष्ठानांनैवाधिकारइत्यर्थः । तेष्वपिज्येष्ठस्यैवाधिकारः । आहिताग्निःकनिष्ठोपिकुर्यादेव अन्यथापितृयज्ञासिद्धेः । एवमावश्यकवृद्धावपिकनिष्ठोन्यःसपिंडोवाकुर्यात् इतिसिंधुः । रेणुः—भ्राताबाभ्रातृपुत्रोवासपिंडःशिष्यएववा । सपिंडीकरणंकुर्यात्पुत्रहीनेमृतेसति । सर्वबंधुविहीनस्यपत्नीकुर्यात्सपिंडनं । ऋत्विजंकारयेद्वापिपुरोहितमथापिवा ॥ अपुत्रायांमृतायांतुपतिःकुर्यात्सपिंडनमिति । अन्योविशेषस्त्वन्यत्रावगंतव्यः ॥ ॥ इतिसपिंडीकरणं ॥ ॥ धर्मसिंधौ—प्रेतःसपिंडनादूर्ध्वंपितृलोकंसगच्छति । कुर्यात्तस्यचपाथेयंद्वितीयेऽह्नि सपिंडनादितिवचनात् त्रयोदशेह्निपाथेयश्राद्धंकृत्वापुण्याहवाचनादिकंकृत्वा वर्षपर्यंतंप्रत्यहमुदकुंभश्राद्धंकुर्यात् । अशक्तौमासिकश्राद्धेष्वेक उदकुंभोदेयः । सपिंडनोत्तरानुमासिकानांपार्वणविधिनानुष्ठानं । वृद्धिप्राप्तौतेषामप्यपकर्षः । सचचतुःपुरुषसपिंडेष्वेव । एवंवर्षपर्यंतंकृत्वावर्षांत्यदिनेसंवत्सरविमोक्षश्राद्धंपार्वणविधिनाकार्यं । इदमेवाब्दपूर्तिश्राद्धमित्युच्यते । इदमूनाब्दिकांतषोडशश्राद्धेभ्योभिन्नमेव । अतएवास्य प्रेतश्राद्धत्वाभावात् वृद्धिप्राप्तावपिनापकर्षः इति ॥ ॥

अथमहैकोद्दिष्टं । देशकालौसंकीर्त्य । अपसव्यं । गोत्रस्यप्रेतस्यप्रेतत्वनिवृ० उत्तमलो० येअद्यएकादशेहनिमहैकोद्दिष्टश्राद्धंकरिष्ये । इहलोकंपरित्यज्येतिकुशबटुग्रंथिबंधनं । कुशोसीतिकुशबटुस्थापनं । कुशबटोरुपरिगोत्रप्रेतअयंतेक्षणउप० । एवमग्रेसर्वत्र । इदंतेपाद्यमुप० । इदंतेआसनमुप० । आवाहनाभावः । अर्घपात्रपूरणं । एकस्मिन्नर्घपात्रेएकंपवित्रं निधायअपआसिंचेत् शन्नोदेवी० । तूष्णींतिलानावपति । तूष्णींगंधपुष्पप्रक्षेपः । पवित्रं प्रेतकरेनिधाय । यादिव्याआ०

भवंतु । गोत्रप्रेतअयंतेऽर्घंउप० । प्रथमपात्राभावात् नसंस्रवसमवलयनं । नपात्रन्युब्जतातस्यगंधाउप० । पुष्पमु० । धूपउ० । दीपउ० । आच्छादनसुप० । ब्राह्मणाग्रेत्रिकोणमंडलकरणं । तदुपरिपात्रनिधानं । पात्रसमंतात् भस्मनापंक्तिवारणं । अभिघार्य परिवेषणं । अग्नौकरणाभावः । अपो० दत्वागोत्रप्रेतसोपस्करमिदंतेन्नमुपतिष्ठतु । अपोशनदानं । स्वदितं । सुस्वदितमितितृप्तिप्रश्नः । पिंडस्याधोदर्भासनमुप० । अवनेजनमुप० । अद्यएकादशेहनिमहैकोद्दिष्टश्राद्धेअयंपिंडस्तवोपति० । प्रत्यवनेजनमुप० । इदंतेसूत्रमुप० । पिंडपूजनं । गंधाउ० पुष्पमु० । धूपउ० । दीपउ० । नैवेद्यमु० । तांबूलमु० । दक्षिणाउप० । तिलजलकुशानादाय । इदंतेदत्तंमहैकोद्दिष्टश्राद्धमुपतिष्ठतां । इतिकुशवटोरुपरिअक्षय्योदकदानं । इयंतेदक्षिणाउप० । इतिकुशवटोर्दक्षिणादानं[1] । अभिरम्यतामितिकुशवटुविसर्जनं । अभिरताःस्मइतिप्रतिवचनं । अनादिनि० । अतसीपु० । अनेनपिंडदानेनप्रेतस्यप्रेतत्वनिवृत्तिरस्तु । अग्रेद्वादशाहादिकर्मयोग्यताप्राप्तिरस्तु । इतिमहैकोद्दिष्टं ॥ ततःपृथग्पक्षेएवमेवअंत्यंविषमश्राद्धं । ततःएवमेवाद्यमासिकंच तंत्रपक्षेतु महैकोद्दिष्टेनैवतत्सिद्धिः ॥

अथषोडशमासिकानि ॥ यद्येकस्मिन्नहनिमासिकानितदा—अमुकगोत्रस्यअमुकमाससंबंधिश्राद्धंएकोद्दिष्टविधिनाकरिष्यइतिसंकल्प्यसर्वंकुर्यात् ॥ ततोद्वितीयादिएवंक्रमेण ॥ अथवासमुच्चयेन ॥ तत्रदेशकालौस्मृत्वा अपसव्यं अमुकगोत्रस्यामुकप्रेतस्यप्रेतत्वनिवृत्त्याउत्तमलोकावाप्त्यर्थं आद्यमासिक १ ऊनमासिक २ द्वितीयमासिक ३ त्रैपक्षिक ४ तृतीयमासिक ५ चतुर्थमासिक ६ पंचममासिक ७ ऊन-

---

१ अत्रावश्यकं दानकाण्ड तु पूर्व प्रायश्चित्तप्रयोगान्ते क्वचित्संगृहीतं तत्रालोचनीयम् ।

षाण्मासिक ८ षष्ठमासिक ९ सप्तममासिक १० अष्टममासिक ११ नवममासिक १२ दशममासिक १३ एकादशमासिक १४ द्वादशमासिक १५ ऊनाब्दिकानि १६ षोडशश्राद्धानिसपिंडीकरणाधिकारसिद्ध्यर्थं अपकृष्यएकोद्दिष्टविधिनाएकतंत्रेणाहंकरिष्येइतिसंकल्प्य ॥ यदिमरणादारभ्यद्वादशमासमध्येकश्चिदधिकस्तदातन्मासिकंद्विवारंकार्यं ॥ एवंसप्तदशश्राद्धानिभवंति ॥ एकोद्दिष्टवत्सर्वाणिकारयेत् ॥ ततः-षोडशब्राह्मणानाहूयतेषांश्मश्रुकर्माभ्यंगादिकारयित्वाकृतमाध्याह्निकः षोडशपाकान्निष्पाद्यअशक्तौओदनभेदंकृत्वाश्राद्धमुपक्रमेत् ॥ ब्राह्मणाभावेकुशबटवःस्थाप्याः ॥ अमुकगोत्रस्यामुकप्रेतस्यप्रेतत्वविमुक्तयेउत्तमलोकप्राप्तयेआद्यमासिकेद्वितीयमासिकेइत्यादिषोडशस्थानेषुक्षणंदत्वा अथवासर्वेषांसहैवएकतंत्रेणक्षणंदद्यात् ॥

तत्रप्रयोगः ॥ गोत्रस्यअमुकप्रेतस्य० प्राप्तयेआद्यमासिकादिऊनाब्दिकांतश्राद्धेषुक्षणाःउपतिष्ठंतु ॥ गोत्रस्यअमु० पाद्यान्युपतिष्ठंतु ॥ गोत्रस्य० आसनान्युपतिष्ठंतु गोत्रस्य० अर्घ्याःउप० ॥ गोत्र० गंधाःउप० ॥ गोत्र० तिलाक्षता उप० ॥ गोत्र० धूपदीपादिसर्वोपचाराउपतिष्ठंतां ॥ गोत्रस्य० अवनेजनान्युप० ॥ गोत्रप्रेतआद्यमासिकश्राद्धेएषपिंडस्तवोपतिष्ठतु ॥ १ ॥ गोत्रप्रेत० ऊनमासिकश्राद्धेएषपिंडस्तवोपतिष्ठतु २ ॥ द्वितीयमासिकश्राद्धेएषपिंडस्त० ३ ॥ त्रैपक्षिकश्राद्धेएषपिंडस्त० ४ ॥ तृतीयमासिकश्राद्धेएषपिंडस्त० ५ ॥ चतुर्थमासिकश्राद्धेएषपिंडस्तवो० ६ ॥ पंचममासिकश्राद्धेएषपिंडस्तवो० ७ ॥ ऊनषाण्मासिकश्राद्धेएषपिंडस्त० ८ ॥ षाण्मासिकश्राद्धेएषपिंडस्तवो० ९ ॥ सप्तममासिकश्राद्धेएषपिंडस्त० १० ॥ अष्टममासिकश्राद्धेएषपिंडस्त० ११ ॥ नवममासिकश्राद्धेएषपिंडस्त० १२ ॥ दशममासिकश्राद्धेएषपिंडस्त० १३ ॥ एकादशमासिकश्राद्धेएषपिंडस्तवो० १४ ॥ द्वादशमासिकश्राद्धेएषपिंडस्त० १५ ॥

॥४२६॥

ऊनाब्दिकश्राद्धेएपपिंडस्तवोपतिष्ठतु १६ ॥ गोत्रप्रेतआद्यमासिकादिऊनाब्दिकांतेपुप्रत्यवनेजनान्युप० ॥ गोत्रप्रेतआद्य-मासिकादिऊनाब्दिकांतेपुगंधपुष्पधूपदीपनैवेद्यादिसर्वोपचाराउपतिष्ठंतु ॥ अनेनषोडशपिंडदानेनप्रेतस्यप्रेतत्वनिवृत्तिरस्तु ॥ पिंडविसर्जनं ॥ अनादिनिधनो० ॥ इतिषोडशमासिकानि ॥ इत्येकादशाहकृत्यं ॥ ॥ ॥

अथद्वादशाहेसपिंडनप्रयोगः ॥ ॥ पूर्वेद्युःकामकालसंज्ञकविश्वेदेवार्थंद्वौविप्रौ ॥ यैःसपिंडनंतेषांत्रयः ॥ प्रेतस्यैकः ॥ अत्यशक्तौसर्वत्रएकैकइतित्रयः ॥ निमन्त्रणादिकर्तुस्तेषांचब्रह्मचर्यं ॥ अपरेद्युर्ब्राह्मणानांश्मश्रुकर्माभ्यंगादिकारयित्वा कृत-माध्याह्निकादिःकर्ता देशकालौसंकीर्त्य ॥ प्राचीनावीती ॥ अमुकगोत्रस्यअमुकप्रेतस्यप्रेतत्वनिवृत्त्यापितृलोकप्राप्त्यर्थं अमुकगोत्रैरमुकशर्मभिर्वसुरुद्रादित्यस्वरूपैस्तातपितृपितामहप्रपितामहैःसह सपिंडीकरणंमृताहाद्द्वादशाहेपार्वणैकोद्दिष्टवि-धिनाकरिष्ये ॥ मातुःसपिंडीकरणेअमुकगोत्रायाअमुकप्रेतायाअस्मन्मातुः अस्मत्पितामहीप्रपितामहीवृद्धप्रपितामहीभिः सहेतिविशेषः ॥ एवं भ्रात्रादिसपिंडनेज्ञेयं ॥ सव्यं ॥ कामकालसंज्ञकविश्वेदेवस्थानेक्षणंदत्वाभवद्भिःप्रसादःकर्तव्यः ॥ अपसव्यं ॥ प्रेतपितृस्थानेक्षणंदत्वा० ॥ प्रेतपितामहस्थानेक्षणंदत्वा० ॥ प्रेतप्रपितामहस्थानेक्षणंदत्वा० ॥ प्रेतस्थाने-क्षणउप० ॥ सव्यं ॥ प्रार्थना ॥ समस्तसंपत्सम० ॥ दतु ॥ सपिंडीश्राद्धांगभूतंमंडलपूजनंकरिष्ये ॥ मंडलत्रयंकुर्यात् ॥ उत्तरेवैश्वदेवमण्डलंचतुष्कोणं ॥ दक्षिणेतत्पित्रादिमंडलंवर्तुलं ॥ तद्दक्षिणेप्रेतमण्डलंत्रिकोणं ॥ मण्डलदेवताभ्योनमः ॥ इतिगंधपुष्पतिलयवैःमंडलत्रयंसव्यापसव्याभ्यांसंपूज्य ॥ सव्यं ॥ कालकामसंज्ञकाविश्वेदेवाःस्वागतं सुस्वागतं ॥ देवाः

भूर्भुवःस्वःइदंवपाद्यंसुपाद्यं ॥ शन्नोदेवी० तुनः ॥ गंधाःसुगंधाः । अक्षताःपुष्पं ॥ सहस्रशीर्षा० गुलं ॥ कालकाम० देवाःएपवःपादार्घःसंपद्यतां ॥ अपसव्यं ॥ प्रेतपितृपितामहप्रपितामहाःस्वागतं सुस्वागतं ॥ पितरःभूर्भुवःस्वः इदंवःपाद्यं सुपाद्यं ॥ शन्नोदेवी० तुनः ॥ गंधाःसुगंधाः ॥ अक्षताःपुष्पं० ॥ पितृभ्यःस्वधायिभ्यः० शुंधध्वं ॥ अमुकगोत्राः प्रेत-पितृपितामहप्रपितामहाः एपवःपादार्घःसंपद्यतां अस्तुपादार्घः ॥ गोत्रप्रेतस्वागतं ॥ सुस्वागतं ॥ पाद्यसु० ॥ गंधाउ० ॥ पुष्पसु० ॥ पादार्घउप० ॥ सव्यंवंदनं ॥ आपःशिवाः० पजं ॥ पवित्रत्यागः ॥ आचम्य ॥ पवित्रधा० ॥ कामकाल-संज्ञकाविश्वेदेवाःभूर्भुवःस्वःसमाध्वंसुसमास्महे ॥ अपसव्यं ॥ प्रेतपितृपितामहप्रपितामहाःसमाध्वं सुसमास्महे ॥ प्रेतसमास्व ॥ सुसमास्से ॥ सव्यं ॥ तिलोदककरणं पुनंतुमेतिनश्रमिः ॥ कुशमूलेस्थितोब्रह्मा० तिलोसिसोम० यवो-सियवया० गंधपुष्पंतूष्णीं० ॥ पुष्कराद्यानितीर्थानि० अपवित्रः० शुचिः ॥ तिलारक्षंत्वसुरान् ॥ दर्भारक्षंतुराक्षसान् ॥ पंक्तिंवैश्रोत्रियोरक्षे० ॥ प्राचीनावीती नीवीबंधनं ॥ सव्यं ॥ उद० ॥ देशकालौ० ॥ अपसव्यं ॥ गोत्रस्यअमुकप्रेतस्य प्रेतत्वनिवृत्त्यापितृलोकप्राप्त्यर्थंअमुकगोत्रैरमुकशर्मभिःवसुरुद्रादित्यस्वरूपैस्ततपितृपितामहप्रपितामहैःसह सापिंडीकरणं मृताहाद्द्वादशाहे विश्वेदेवपूर्वकंअर्घ्यपिंडसहितंयुष्मदनुज्ञयापार्वणैकोद्दिष्टविधिनाहंकरिष्ये ॥ कुरुष्व ॥ श्राद्धभूमौगयां ध्यात्वा० ॥ सव्यं ॥ देवताभ्यःपितृभ्यश्चमहायोगिभ्यएवच ॥ नमःस्वाहायैस्वधायैनित्यमेवनमोनमः ॥ दिग्बंधः ॥ अग्निष्वात्ताःपितृगणाः० ॥ अस्तुकालपाक० ॥ सव्यं ॥ शन्नोदेवी० इतिजलंगृहीत्वा ॥ यद्देवा० यदिदिवा० यदिजाग्र०

इत्यभिमंत्रणं ॥ क्षुद्रद्रु० ॥ सव्यंगायत्रीमन्त्रपाठः ॥ अप० ॥ पाकप्रोक्षणं ॥ सव्यं ॥ कालकामसं० देवानांभूर्भुवःस्वःइदमासनं स्वासनं ॥ अत्रास्यतां धर्मोसि ॥ आपः ॥ दैवेक्षणःक्रियतां ॥ ॐ तथा ॥ प्राप्नोतुभवान् ॥ प्राप्नवानि ॥ हस्तप्रक्षालनंदत्वा विष्टरार्थेकुशानादाय० ॥ अपसव्यं ॥ गोत्रस्यप्रेतस्यपितुःशर्मणः वसुरूपस्यइदमासनंस्वासनंआस्यतां ॥ पित्रेक्षणःक्रियतां ॥ तथा ॥ प्रा० विष्टरः ॥ गोत्रस्यप्रेतपितामहस्यशर्मणःरुद्ररूपस्यइदमासनं ॥ सुस्वासनं आस्यतां० विष्टरः ॥ गोत्रस्यप्रेतप्रपितामहस्यशर्मणःआदित्यरूपस्यइदमासनं स्वासनंआस्यतांविष्टरः ॥ गोत्रस्यप्रेतस्यासनमुप० ॥ सव्यं ॥ कालकामसंज्ञकान्विश्वान्देवान्भवत्सुआवाहयिष्ये ॥ आवाहय ॥ ॐ विश्वेदेवासआगत० पीदत ॥ विश्वेदेवाःशृणुतेमं० दयध्वं ॥ आगच्छंतु० भवंतुते ॥ ॐ भवामः ॥ अपसव्यं ॥ गोत्रंप्रेतपितरंशर्माणंवसुरूपंभवत्सुआवाहयिष्ये ॥ आवाहय ॥ गोत्रंप्रेतपितामहंशर्माणंरुद्ररूपंभवत्सु० ॥ ॐ आवाहय ॥ गोत्रंप्रेतप्रपितामहंशर्माणंआदित्यरूपंभवत्सु० ॥ ॐ आवाहय ॥ उशंतस्त्वा० तवे ॥ आयंतु० त्वस्मान् ॥ सव्यं ॥ देवपात्राणांपितृपात्राणांअर्घ्यंविधिवत् ॥ अस्तु विधिवत् ॥ पवित्रांतर्हितेष्वेकैकस्मिन्नपआसिंचति ॥ शन्नोदेवी० ॥ तूष्णींप्रेतपात्रेएकंपवित्रंनिधायतूष्णींजलेनपूरणं ॥ गंधपुष्पैःप्रच्छाद्य । सव्यं ॥ देवपात्रेसंपन्ने । सुसंपन्ने ॥ अपसव्यं ॥ प्रेतपितृपितामहप्रपितामहपात्राणिसंपन्नानिसुसंपन्नानि ॥ ततःसंयोजनं ॥ प्रेतार्घ्यपात्रंदक्षिणहस्तेगृहीत्वापितुरर्घ्यपात्रेणसंयोजयेत् ॥ गोत्रस्यअमुकप्रेतस्यार्घ्यपात्रस्थंतृतीयांशंजलं गोत्रस्यप्रेतपितुःशर्मणःअर्घ्यपात्रेणसहसंयोजयिष्ये ॥ संयोजयेतिप्रतिवचनं ॥ येसमानाःसमनसःपितरोयमराज्ये ॥

तेषांलोकःस्वधानमोयज्ञोयज्ञेपुकल्पतां ॥ येसजाताःसमनसोजीवाजीवेषुमामकाः ॥ तेषाᳬश्रीर्मयिकल्पतामस्मिँल्लोके-शतᳬसमाः ॥ अनेनसंयोजनेनप्रेतस्यप्रेतत्वनिवृत्तिरस्तु ॥ पुनःप्रेतपितामहार्घ्यपात्रंहस्तेगृहीत्वा गोत्रस्यप्रेतस्यार्घ्यपात्रस्थं-द्वितीयांशंजलंगोत्रस्यप्रेतपितामहस्यअमुकशर्मणःअर्घ्यपात्रेणसंयोजयिष्ये ॥ संयोजय ॥ येसमानाः० येसजाताः० ॥ अनेनसंयोजनेनप्रेतस्यप्रेतत्वनिवृत्तिरस्तु ॥ पुनःगोत्रस्यप्रेतस्यार्घ्यपात्रस्थंतृतीयांशंजलंगोत्रस्यप्रेतप्रपितामहस्यअमुकशर्मणः अर्घ्यपात्रेणसंयोजयिष्ये ॥ संयोजय ॥ येसमानाःसमनसः० ॥ येसजाताः० अनेनसंयोजनेनप्रेतस्यप्रेतत्वनिवृत्तिरस्तु ॥ उत्तमलोकावासिरस्तु ॥ सव्यं ॥ ततोदेवेभ्योऽर्घ्यंदद्यात् ॥ ॐ देवेभ्योनमः ॥ ॐ यादिव्याआपः०वंतु ॥ कालकाम-संज्ञकाविश्वेदेवाःएषवोर्घःसंपद्यतां ॥ अस्त्वर्घः ॥ अपसव्यं ॥ प्रेतपितृपितामहप्रपितामहेभ्योनमः ॥ ॐ यादिव्या० ॥ गोत्रप्रेतपितःअमुकशर्मन्वसुरूपएषतेर्घः ॥ अस्त्वर्घः ॥ यादिव्या० ॥ गोत्रप्रेतपितामहअमुकशर्मन्रुद्ररूपएषतेर्घः ॥ अस्त्वर्घः ॥ यादिव्या० ॥ गोत्रप्रेतप्रपितामहअमुकशर्मन्आदित्यरूपएषतेर्घः ॥ अस्त्वर्घः ॥ ततःप्रेतार्घ्यपात्रंदक्षिण-हस्तेगृहीत्वा प्रेतब्राह्मणदक्षिणहस्तेपवित्रंनिधायतूष्णीं गोत्रप्रेतएषोर्घस्तेवोपतिष्ठतु ॥ इतिसर्वंजलंनिक्षिपेत् ॥ प्रथमपात्रे-संस्रवान्समवनीयपितृभ्यःस्थानमसीतिन्युब्जंपात्रंनिदधाति ॥ ॐ पितृभ्यःस्थानमसि ॥ सव्यं ॥ वंदनं ॥ आपःशिवाः० पजं ॥ अत्रावसरेगन्धादिदानं ॥ कालकाम० देवाःइमेवोगंधाः ॥ यवाः ॥ इदंवःपुष्पं ॥ एषवोधूपः ॥ एषवोदीपः ॥ इदमाच्छादनं । पूगफलंयज्ञोपवीतं हिरण्यंसर्वोपचारार्थेकुशौ ॥ कालकामसंज्ञकेभ्योदेवेभ्यः इत्यादि ॥ प्रेतपित्राद्यर्चनं

करिष्ये कुरुष्व ॥ अपसव्यं ॥ प्रेतपितृपितामहप्रपितामहाः इमेगंधाः तिलाः पुष्पं । धूपः । दीपः । आच्छादनं पूगफलं अनुलेपनार्थेचंदनं यज्ञोपवीतं हिरण्यं सर्वोपचारार्थे कुशाः ॥ प्रेतपितृपितामहप्रपितामहेभ्यः इत्यादि ॥ गोत्रप्रेतगंधा- उप० । तिलाउ० । पुष्पसु० । धूपउ० । दीपउ० । आच्छादनसु० । पूगफलमुप० । यज्ञोपवीतमु० । हिरण्यमु० । गंगोदकेनसर्वोपचाराउप० ॥ सव्यं ॥ यस्यस्मृत्या० ॥ तिलकोद्धारणंपात्रासादनंकरिष्ये ॥ देवपितृमंडलानिचतुरस्राणि । प्रेतमंडलंत्रिकोणं । पात्रासादनं ॥ पंक्तिवारणं ॥ करशुद्धिः ॥ पितृपात्रेअग्नौकरणं ॥ उद्धृत्यघृताक्तमन्नंप्रयच्छत्यग्नौ- करिष्येइति ॥ कुरुष्व ॥ गायत्र्याप्रोक्षणं ॥ मधुवाताइतित्र्यचंजपित्वा मधुमधुमधु ॥ भवदनुज्ञयाविप्रपाणावग्नौकरणं- करिष्ये ॥ कुरुष्व ॥ ॐ अग्नयेकव्यवाहनायस्वाहा इदमग्नयेकव्यवाहनायनमम ॥ ॐ सोमायपितृमतेस्वाहा इदंसोमाय- पितृमतेनमम ॥ सव्यं ॥ मूर्धानमितिपात्राभिघारणं ॥ ॐ मूर्धानंदिवो० देवाः ॥ हुतशेषंदत्वापात्रमालभ्यजपति ॥ शेषंदेवायदातव्यंपितृभ्यस्तदनंतरं ॥ ॐ पृथिवीतेपात्रंद्यौ० स्वाहा ॥ इदंविष्णु० सुरे ॥ अंगुष्ठमन्नेवगाह्य ॥ अपसव्यं ॥ पृथिवीतेपात्रंद्यौ० स्वाहा ॥ इदंविष्णु० सुरे ॥ अंगुष्ठमन्नेवगाह्य ॥ अपहताइतितिलान्विकीर्य ॥ सव्यं ॥ उदकोपस्पर्शः ॥ उष्णंस्विष्टमन्नंदद्यात् ॥ कालकामसंज्ञकेभ्योविश्वेभ्योदेवेभ्यः एतद्वोन्नंदत्तंदास्यमानंचब्राह्मणस्यमुखेआतृप्तेःअमृत- रूपेणस्वाहासंपद्यतां ॥ अपसव्यं ॥ गोत्रेभ्यःप्रेतपितृपितामहप्रपितामहेभ्यःएतद्वोन्नं० स्वधासंपद्यंतां ॥ गोत्रायप्रेताय- एतत्तेन्नंदत्तंदास्यमानंचोपतिष्ठतु ॥ सव्यं ॥ येदेवासोदिव्ये० यध्वं ॥ नमोदेवेभ्यः ॥ अपसव्यं ॥ येचेहपितरो०

पस्व ॥ स्वधापितृभ्यः ॥ सव्यं ॥ ब्रह्मार्पणंब्रह्महविः० तत्सद्ब्रह्मार्पणमस्तु ॥ अपसव्यं ॥ गोत्रायप्रेतायइदमन्नंसोपस्करंउपतिष्ठतु ॥ पितृपूर्वंआपोशनंदत्वा ॥ एकोविष्णु० ॥ अनेनब्राह्मणभोजनेनप्रेतपित्रादिस्वरूपीजनार्दनोवासुदेवः-प्रीयतां ॥ सव्यंप्रार्थना॥ ईशानविष्णु० हेतोः ॥ कालकामसंज्ञकाविश्वेदेवाःअमृतंकुरुत॥ अपसव्यं ॥ प्रेतपितृपितामहप्रपितामहाःअमृतंजुषध्वं ॥ श्रद्धायांप्राणेनजुहोमिस्वाहाइत्यादि० ॥ सव्यं ॥ अपेक्षितं याचितव्यं० ॥ तृप्तान्ज्ञात्वान्नंप्रकीर्यसकृत्सकृदपोदत्वापूर्ववद्गायत्रींमधुवाताइतितृचंजपित्वामधुमधुमधु ॥ कालकामसंज्ञकाविश्वेदेवाःतृप्ताःस्थ ॥ तृप्ताःस्मः ॥ अपसव्यं ॥ प्रेतपितृपितामहप्रपितामहाःतृप्ताःस्थ ॥ तृप्ताःस्मः ॥ प्रेत स्वदितं ॥ सुस्वदितं ॥ शेषमन्नंकिंक्रियतां ॥ पिंडैःसहयुज्यतां ॥ अपहताइतिरेखाकरणं ॥ रेखायांअवनेज्य ॥ गोत्रप्रेतपितःशर्मन् अवनेनिक्ष्व ॥ गोत्रप्रेतपितामहशर्मन् अवनेनिक्ष्व ॥ गोत्रप्रेतप्रपितामहशर्मन्अवनेनिक्ष्व ॥ ततोदेवपितृपात्रेपरिविष्टशेषान्नेननारिकेलप्रमाणंपिंडत्रयंकृत्वा॥ ततएकंपिंडमादायगोत्रप्रेतपितःशर्मन्वसुरूपएतत्तेन्नँस्वधा॥ इदंगोत्रायप्रेतपित्रेशर्मणेवसुरूपायनमम॥ गोत्रप्रेतपितामहशर्मन्रुद्ररूपएतत्तेन्नँस्वधा ॥ इदंगोत्रायप्रेतपितामहायशर्मणेरुद्ररूपायनमम ॥ गोत्रप्रेतप्रपितामहशर्मन्आदित्यरूपएतत्तेन्नँस्वधा ॥ इदंगोत्रायप्रेतपितामहायशर्मणेआदित्यरूपायनमम ॥ गोत्रस्यप्रेतस्यसपिंडीकरणश्राद्धेपिंडस्याधःदर्भासनमुपतिष्ठतु ॥ गोत्रप्रेतअवनेजनमुप०॥ ततःप्रेतपरिविष्टशेषान्नेनजंबीराकारंप्रेतपिंडंकृत्वा ॥ गोत्रप्रेतसपिंडीकरणश्राद्धेएषपिंडस्तवोपतिष्ठतु ॥ ततोदर्भमयींरज्जुंहस्तद्वयेनगृहीत्वामधुनाआर्द्रीकृत्यविष्णुस्मरणपूर्वकंतयारज्वा

प्रेतपिंडंत्रिधाछेदयेत् ॥ ततःप्रेतपिंडप्रथमशकलंदक्षिणहस्तेगृहीत्वावामहस्तेनिधायप्रेतपितृपिंडंदक्षिणहस्तेगृहीत्वाअमुक-
गोत्रस्यअमुकप्रेतस्यपिंडप्रथमशकलं अमुकशर्मणःप्रेतपितुःपिंडेनसहसंयोजयिष्ये ॥ संयोजय ॥ ॐ येसमानाःसमनसः
पितरोयमराज्ये ॥ तेषांलोकःस्वधानमोयज्ञोयज्ञेपुकल्पतां ॥ येसजाताःसमनसोजीवाजीवेपुमामकाः ॥ तेषाᳫंश्रीर्मयि-
कल्पतामस्मिंल्लोकेशतᳫंसमाः ॥ अनेनसंयोजनेनप्रेतस्यप्रेतत्वनिवृत्तिरस्तु ॥ वसुलोकावासिरस्तु ॥ पुनस्तथैवद्वितीय-
शकलंगृहीत्वा गोत्रस्यप्रेतस्यपिंडद्वितीयशकलंगोत्रस्यप्रेतपितामहस्यशर्मणःपिंडेनसहसंयोजयिष्ये ॥ संयोजय ॥ येस-
मानाःसमनसः० येसजाताःसमनसो० ॥ अनेनसंयोजनेनप्रेतस्यप्रेतत्वनिवृत्तिरस्तु ॥ रुद्रलोकावासिरस्तु ॥ पुनस्तथैव-
तृतीयशकलंगृहीत्वागोत्रस्यप्रेतस्यपिंडतृतीयशकलं प्रेतप्रपितामहस्यशर्मणःपिंडेनसहसंयोजयिष्ये ॥ संयोजय ॥ येसमानाः
समनसः येसजाताःसमनसो० ॥ अनेनसंयोजनेनप्रेतत्वनिवृत्तिरस्तु ॥ आदित्यलोकावासिरस्तु ॥ एषवोनुगतःप्रेतः
पितृत्वंप्राप्तवानसौ ॥ शुभंभवतुशेषाणांजायंतांचिरजीविनः ॥ अतःपरंप्रेतशब्दनिवृत्तिः ॥ तदनंतरंपुनःसकृदाच्छिन्नान्
दर्भान्गृहीत्वा अपहताइतिरेखाकरणं ॥ ॐ अपहताअसुरारक्षाᳫंसिवेदिषदः ॥ सव्यं ॥ उदकोपस्पर्शः ॥ अपसव्यं ॥
रेखायांअवनेज्य ॥ गोत्रअस्मत्पितःअमुकशर्मन्वसुरूपअवनेनिक्ष्व ॥ गोत्रअस्मत्पितामहअमुकशर्मन्रुद्ररूपअवनेनिक्ष्व ॥
गोत्रअस्मत्प्रपितामहअमुकशर्मन्आदित्यरूपअवनेनिक्ष्व ॥ सकृदाच्छिन्नानिरेखायांकृत्वायथावनिक्तं ॥ गोत्रपितःअमुकश-
र्मन्वसुरूपएतत्तेन्नᳫंस्वधा॥इदंगोत्रायपित्रेअमुकशर्मणेवसुरूपायनमम ॥ गोत्रपितामहअमुकशर्मन्रुद्ररूपएतत्तेᳫंस्वधा॥

र्दनो० ॥ यस्यस्मृत्या० अच्युतायनमः ॥ गयायैनमः ॥ गदाधरायनमः ॥ पुंडरीकाक्षायनमः ॥ गयाकृतश्राद्धफलमस्तु ॥ इतिसपिंडीकरणश्राद्धप्रयोगः ॥ ॥

अथपाथेयश्राद्धम् ॥ ॥ ततोयजमानेनस्नानं ॥ ग्रंथांतरे—प्रेतःसपिंडनादूर्ध्वंपितृलोकंसगच्छति ॥ कुर्यात्तुस्वर्गपाथेयंद्वितीयेह्निसपिंडनात् ॥ इति ॥ सपिंडनात्परदिनेतद्दिनेवापिण्डपितृयज्ञवत्पाथेयश्राद्धंकार्यं ॥ प्रातःस्नात्वाआचम्यप्राणानायम्यदेशकालौस्मृत्वा ॥ अपसव्यं ॥ अमुकगोत्रस्यअमुकःशर्मणःप्रेतलोकात्पितृलोकगमनेसुखसिद्ध्यर्थंअमुकगोत्राणांअस्मत्पितृपितामहप्रपितामहानांअमुकामुकशर्मणांवसुरुद्रादित्यस्वरूपाणांपाथेयश्राद्धंकरिष्ये ॥ नीवीत्रंधनं ॥ रेखाकरणं ॥ अवनेजनं ॥ पिण्डदानं ॥ हस्तलेपभा० उत्तरतःश्वासधारणं ॥ अत्रपित० विसृज्य ॥ अमीम० प्रत्यवनेजनं ॥ नीवीविस्रंसनं ॥ षडंजलिकरणं ॥ सूत्रदानं ॥ पिंडपूजनं ॥ पिण्डमूलेउदकनिषेकः ॥ ऊर्जंवहंती० पितॄन् ॥ स्थाल्यांपिण्डोद्धारणं ॥ सव्यं ॥ अपउपस्पृश्य ॥ इतिपाथेयश्राद्धं ॥ इदंपक्वान्नासंभवेआमेनकार्यं ॥ ॥

त्रयोदशाहे मृत्यूपशमनशांतिः ॥ ॥ त्रयोदशेद्वादशेवाह्निकृतांतैलाभ्यंगपूर्वंस्नात्वादेशकालकीर्तनांतेममास्मिन्गृहेऽस्मिन्कुलेऽमुकनिधनोत्पन्नानिष्टाशुचित्वनिरासेनास्यवास्तोःशुभतासिद्ध्यनंतरंअस्मद्गोत्रीयसकुल्यानांवृद्धबालसमेतानांमंगलाभ्युदयाशेषनित्यनैमित्तिककर्माधिकारपुरस्कारेणमृत्यूपशमनपूर्वकदीर्घायुरारोग्यतावाप्तयेश्रीमृत्युरूपीपरमेश्वरप्रीत्यर्थं स्वस्तिवाचनपुरःसरांब्राह्मणद्वाराघोषशांतिपाठवास्तुसूक्तादिपाठरूपांमृत्यूपशमनशांतिंकरिष्ये ॥ निर्विघ्नतासिद्ध्यर्थंगणप-

तिपूजनंकरिष्ये ॥ अत्रस्वस्तिवाचनेएकएवकलशः ॥ तदुक्तंसंग्रहेसंस्कारमालायां—शुभेकर्मणिपुण्याहवाचनेकलशद्वयं ॥ अशुभेत्वेकएवस्यादितियज्ञविदांमतं इति ॥ स्वस्तिवाचनोत्तरंतंकलशंवामहस्तेधृत्वापूर्णपात्रमपसार्यकलशमुखेदक्षिणपाणिंनिधायवास्तोष्पतइतिपात्रेधारांपातयेत् ॥ तेनोदकेनयजमानमभिषिच्यसर्वतोगेहंप्रोक्षेत् ॥ इदमशक्तौ ॥ शक्तौतुस्वस्तिवाचनकलशोत्तरतोविधिनाकलशांतरंसंस्थाप्यतत्रस्वर्णप्रतिमायांयमायेतियममावाह्यसंपूज्यकलशमभिमृश्यघोषशांतिंमुंचामित्वेतिअक्षीभ्यामितिचवास्तोष्पतइतिईळेद्यावेतिवर्गपंचकंमृत्युंजयजपंयमसूक्तंचजपन्तेनोदकेनयजमानाभिषेकः गृहप्रोक्षणंचेतिशिवं ॥ ततआचारात्देहल्यांचंदनकाष्ठेनपूगफलंस्फोटयित्वातथैवनिष्क्रम्यगत्वानद्यादौस्नात्वागृहंगच्छेत्॥

अथमासिकनिवृत्तिः ॥ ॥ आचमनं ॥ प्राणायामः ॥ पवित्रधारणं ॥ देशकालौस्मृत्वा गोत्राणांअस्मत्पितृपितामहप्रपितामहानांअमुकामुकशर्मणांवसुरुद्रादित्यस्वरूपाणां ऊनमासिक १ द्वितीयमासिक २ त्रैपक्षिक ३ तृतीयमासिक ४ चतुर्थमासिक ५ पंचममासिक ६ ऊनषाण्मासिक ७ षष्ठमासिक ८ सप्तममासिक ९ अष्टममासिक १० नवममासिक ११ दशममासिक १२ एकादशमासिक १३ द्वादशमासिक १४ ऊनाब्दिका १५ ख्यानिपंचदशमासिकश्राद्धानिस्वस्वकालादपकृष्यसदैवानिसपिंडानिपार्वणेनविधिनाअन्नेनहविषातन्त्रेणकरिष्ये इतिसंकल्पः ॥ यदिमरणादारभ्यद्वादशमासमध्येकश्चिदधिकस्तदातन्मासिकंद्विवारंकार्यं तेनषोडशश्राद्धानिभवंति ॥ पंचदशश्राद्धेषुपिंडाः ४५ षोडशश्राद्धेषु ४८ ॥ ॥ येतुद्वादशाहेसपिण्डनंकृत्वा त्रयोदशाहादौआद्यमासिकसहितानांषोडशानांपुनरावृत्तिं

